# अभिनंदनपूर्वकं धन्यवादः ।

एतस्य श्रीवृद्धसूर्यारुणकर्मविपाकग्रन्थस्यादर्श (प्रति) पुस्तके ययोर्महोदययोरुदारचरितयोः प्राचीनसरस्वतीभाण्डागारादुपलब्धे तयोरभिनन्दनं महताऽऽनन्देन प्रकाशयितुमुत्सहतेऽस्मदीयं मानसम् ।

१ पञ्जाबदेशीयलाहोरराजधानीनिवासिनां राजासाहिबदयालुरौनश्रीठाकुरमहानचन्द्राभिधेयानां प्राचीनपुस्तकालयादेकं प्राचीनपुस्तकमुपलब्धम्,

२ अन्यच्च-पर्वतप्रदेशस्थितातिमहत्तरप्राचीनपुस्तकभाण्डागारात्तदधिपतेः सकाशात्समागतम् ।

एताभ्यामत्युदारचरिताभ्यां सज्जनाभ्यां श्रीवृद्धसूर्यारुणकर्मविपाकस्य प्राचीने प्रति (आदर्श) पुस्तके मुद्रणोपयोगिसंशोधनार्थं मिलिते । तद्वारा पुस्तकपाठक्रमं समुपगृह्यास्माभिरेतत्पुस्तकं संयत्नं परिष्कृत्य मुद्रितम् । प्रोक्तमहाभ्युदयाभ्यां प्राचीनपुस्तकप्रदानसाहाय्येन यथेष्टमुपकृताः स्म । अतस्तयोः सशिरःकम्पमभिनन्दनपूर्वकमनन्तान्धन्यवादान्समर्पयामहे । एतादृशपरोपकारिणोर्विमला कीर्तिर्जगत्पुनातु इति शम् ।

श्रीमतामुपकारस्मर्ता-

खेमराज श्रीकृष्णदासश्रेष्ठी

"श्रीवेङ्कटेश्वर" मुद्रणालयाध्यक्ष -मुंबई.



श्रीः ।

# अथ वृद्धसूर्यारुणकर्मविपाकविषयानुक्रमणिका प्रारभ्यते।



॥ इति श्रीवृद्धसूर्यारुण—कर्मविपाकविषयानुक्रमणिका समाप्ता ॥

ॐ

अथ

# ॥ बृहत्सूर्यारुणकर्मविपाकः ॥

पूर्वे सूर्यादिभक्तानां धर्मशास्त्रानुवर्तिनाम् । वेदाभ्यासाद्युक्तपुण्याज्जातिस्मृतिवतां नृणाम् ॥ २७ ॥
अत्र जन्मपरिज्ञानमन्येषां भ्रान्तिरेव च । शैशवे यूनि वार्द्धक्ये यत्र पुण्यबलादिह ॥ २८ ॥
लक्षितो लक्षणैश्चोक्तैर्जीवस्तत्रैव पृच्छति । कम्पन्ति त्रिविधाः पापाः पूर्वजन्मसमार्जिताः ॥२९॥
धर्माः समुदयन्त्यत्र श्रुते सूर्यारुणेऽण्डज । यः शृणोति नरश्चास्मिन् स्वाध्यायं विधिनाण्डज॥३०॥
सोऽत्र जन्मजपापेभ्यो मुच्यते नात्र संशयः । श्रुत्वैनं पुस्तकं यः प्राक् प्रायश्चित्तं समाचरेत्॥३१॥
तस्य सर्वाणि कार्याणि प्रसिद्ध्यन्ति ममाज्ञया । पुत्रार्थी लभते पुत्रं दारार्थी लभते स्त्रियम्॥३२॥
राज्यभ्रष्टो लभेद्राज्यं क्षीणायुर्म्रियते न च । मुच्यतेऽत्र महारोगी कुष्ठादिभ्यः प्रपीडितः ॥३३॥
प्रायश्चित्ते कृते सूत यथोक्तेऽत्रैव जन्मनि । यथोक्तपापोपशमात्सर्वान् कामानिहाप्नुयात् ॥३४॥
मध्यान्मध्यफलं सूत कनिष्ठात्पापशोधनम् । सर्वस्वं च महापापे तदर्धमुपपातके ॥ ३५ ॥
तूर्यांशं सर्ववित्तस्य पातके पापशोधनम् । द्रव्याशुद्धौ महाभाग विधिपात्रविवर्जिते ॥ ३६ ॥
कृतेऽत्र फलं तदाप्नोति द्विजं शिष्टं नियोजयेत् । (अकृत्वेऽत्र यथाशक्त्या प्रायश्चित्तं करोति यत्)॥३७॥
कर्मण्यं कर्म च तत्सर्वं भस्मीभवति दारुवत् । तस्मात्पूर्वं प्रयत्नेन कुर्यात्पापविशोधनम् ॥ ३८ ॥
पापनाशे तथा जाते पश्चात्काम्यं प्रसिद्ध्यति । प्रायश्चित्तं तु यः कुर्याद्द्विजं नित्यं चतुर्गुणम् ॥३९॥
सोऽचिरेणैव कालेन सर्वान् कामानिहाप्नुयात् । श्रुतेऽपि पापबाहुल्यादवस्थान्तरभेदतः ॥ ४० ॥
कार्यसिद्धिर्न चेदत्र शृणुयाद्विधिवत्पुनः । वारत्रयं महाभाग भावः पापविशोधनात् ॥ ४१ ॥
कार्यसिद्धिरवश्यं स्यादिति मे परमं वचः । तत्ते सर्वं प्रवक्ष्यामि पूर्वपापविशोधनम् ॥ ४२ ॥
नातः परतरं तज्ज्ञैः प्रायश्चित्तमुदाहृतम् । नैवं शृणोति यो मोहादाधिव्याधिप्रपीडितः ॥ ४३ ॥
तमवेहि महापापैराक्रान्तं दैवघातितम् । न यस्य कस्यचिद्देयं ज्ञानं क्षुद्रे च दुर्जने ॥ ४४ ॥
हीनसत्त्वे दुराचारे दत्तं चेन्निष्फलं भवेत् । पाखण्डारक्तधूर्तेषु यः श्रावयति मूढधीः ॥ ४५ ॥
स याति नरकं घोरं यः शृणोत्येवमेव वा । न चास्यालोकनं कार्यमकार्यं विनतासुत ॥ ४६ ॥
अकार्यं दृष्टवान् सूत प्रायश्चित्ती भवेत्ततः । सूर्यारुणोक्तं विख्यातं त्रिषु लोकेषु चाद्भुतम् ॥ ४७ ॥
अध्यायैः शतसाहस्रैर्युक्तं स्वर्गे प्रतिष्ठितम् । प्रमाणमस्य ग्रन्थस्य चतुर्लक्षं चतुर्गुणम् ॥ ४८ ॥
लक्षमेकं तु मानुष्ये जीवावर्ते मयोदितम् । तस्मिन् पुण्यकृतां जन्म लक्ष्यं पापात्मनामपि॥४९॥
तत्राष्टादशसाहस्रं होराशास्त्रमनुत्तमम् । गर्भाधानादिदेहान्तं शुभाशुभनिरूपणम् ॥ ५० ॥
पञ्चविंशतिसाहस्रं स्वर्गारोहणसंज्ञकम् । जातिस्मरं तु लक्षार्धं जीवानामण्डजोत्तम ॥ ५१ ॥
गुह्यं कर्मविपाकाख्यं वक्ष्येऽहं शृणु तत्त्वतः । पुरा कृतयुगस्यान्ते मयो नाम महासुरः ॥ ५२ ॥
भक्त्या पप्रच्छ मान्नो मां त्रिस्कन्धं गणिताधिकम् । सहस्रप्रमितं सर्वं द्विधा गणितसंयुतम् ॥५३॥
तस्मै ददावहं प्रीत्या चैतत्स्कन्धत्रयं मुदा । विदित्वा ब्रह्मादिपुरुषात्स्वर्णगर्भः सनातनः ॥ ५४ ॥
ज्योतिःशास्त्रं समग्रं मां प्रादान्मय्येव संस्थितः । ब्रह्मणे चाप्यहं वेदा ऋषिभ्योऽयमेव च ॥५५॥
सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः । च्यवनो जामदग्न्यश्च भृगुर्गर्गोऽङ्गिरा मुनिः ॥५६॥
शातातपो मनुर्दक्षः कश्यपो नारदस्तथा । यवनो भार्गुरश्चैव भारद्वाजो यतस्त्वमी ॥ ५७ ॥
ऋषयोऽन्येऽपि कादंशा ज्योतिःशास्त्रप्रवर्तकाः । न तिथिर्न च नक्षत्रं न वारः करणं तथा ॥५८॥
नापेक्षितं क्वचित्सूत यदातः परिपृच्छति । न चेज्यो भृगुसिंहस्थो वृद्धो बालस्तथास्तगः ॥५९॥
शुक्रो बाल्यविचारस्थो मलमासोऽप्यदोषदः । तथैव पापोपशमे देशं कालं न चिन्तयेत् ॥ ६० ॥
रात्रौ निमन्त्रणं कुर्यात्पुस्तकं सूर्यदैवतम् । रजन्यां त्वर्चिते तस्मिन् दिवा कुर्यात्तथोक्तवान्॥६१॥

१ नास्ति-ख पु०। २ ण्डारकं-ख पु०। ३ ब्रह्मणो चाऽप्यहं वेदान्-इति ख पु०। ४ सत्कृते-ख पु०।

गन्धपुष्पाक्षतफलैर्नैवेद्यैर्विविधैस्ततः । दीपैर्विचित्रविधिना धूपैर्नानाविधैस्तथा ॥ ६२ ॥
ॐ सूर्यारुणाभ्यामिति नमोऽन्तेन प्रपूजयेत् । वेष्टयेच्छुभवस्त्रेण रुक्मं तत्र निधापयेत् ॥ ६३ ॥
दैवज्ञं पूजयेत्पश्चाद्गन्धपुष्पफलाक्षतैः । वस्त्रयुग्माङ्गुलीयाद्यैर्भूषणैर्विविधैः शुभैः ॥ ६४ ॥
पश्चात्प्रदापयेन्मन्त्रमाचार्यः पृच्छकाय वै ।
ॐ नमः सूर्याय मम कर्म प्रकाशय प्रकाशय सत्यं ब्रूहि ब्रूहि स्वाहा ॥
स्त्रीशूद्रौ पृच्छकौ सूत त्विदं मन्त्रमुदीरयेत् ॥ ६५ ॥
सर्वसाक्षिन् नमस्तुभ्यं जगदानन्दवर्धन । विश्वरूप त्रिलोकेश भगवन्नुष्णदीधिते ॥ ६६ ॥
विमुक्तं पुण्यपापानां सर्वं कर्म प्रकाशय । साक्षी त्वं सर्वभूतानां धर्माधर्मानुवर्तिनाम् ॥ ६७ ॥
एवं निमन्त्र्य विधिना परेऽहनि खगेश्वर । दैवज्ञमन्दिरं प्राप्य निजं कार्यं निवेदयेत् ॥ ६८ ॥
तद्दिने प्रातरुत्थाय स्नात्वा प्रयतमानसः । फलाक्षततिलैः पुष्पैर्दधिदूर्वाङ्कुरैः शुभैः ॥ ६९ ॥
सरत्नचन्दनैरम्भिः सूर्यायार्घ्यं प्रदापयेत् । तल्लिङ्गमन्त्रैर्विधिवन्नमस्कृत्य च भास्करम् ॥ ७० ॥
देयं पापघटं तत्र घृतपूर्णं सदक्षिणम् । आहूय मनसा कुम्भे पातकान् पूर्वजन्मजान् ॥ ७१ ॥
स्थापयेच्च गणेशादीन् कलशं चैव पूरयेत् । पात्रं ताम्रमयं श्रेष्ठं पलैः शतमितैः शुभम् ॥ ७२ ॥
तस्यार्धं च तदर्धं वा शक्त्या वार्धं प्रकल्पयेत् । वेष्टयेत् पट्टवस्त्रेण कुशवारिसमन्वितम् ॥ ७३ ॥
अर्चयेद्गन्धपुष्पाद्यैर्मन्त्रैश्चापि विशेषतः । रवेस्तु प्रतिमा कार्या पलेनार्धपलेन वा ॥ ७४ ॥
माषैर्द्वादशभिर्वापि तदर्धार्धेन वा पुनः । हिरण्मयी यथाकारा लेख्या पद्मोपमापि वा ॥ ७५ ॥
पूजनीया च विधिवदुपचारैश्च षोडशैः । अथोत्तरेण मन्त्रेण स्थाप्या वै कलशोपरि ॥ ७६ ॥
मन्त्रः—ॐ नमो नारायणाय ।
तदग्रे वाचयेद्यत्नात्पुस्तकं सूर्यदैवतम् । वाचकाय प्रदेया सा श्रवणान्ते विधानतः ॥ ७७ ॥
गां दद्याद्विधिवत्तस्मै वस्त्राण्याभरणानि च । भूशय्याश्वासनादीनि शक्त्या च प्रतिपादयेत् ॥ ७८ ॥
अत्र जन्मजपापेभ्यो मुक्तः स्यान्नात्र संशयः । श्रुत्वानेन विधानेन विधिज्ञं तं विसर्जयेत् ॥ ७९ ॥
अत्रं चाधाहयेद्विद्वान् वेदशास्त्रसमन्वितान् । दैवज्ञांश्चार्चयेद्द्रव्यैर्विविधैर्भोजनैः शुभैः ॥ ८० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शान्त्युपासनाध्यायः प्रथमः ॥ १ ॥

लब्धं नियोजयेत्पङ्क्तौ शेषोऽर्को बीजसंस्कृतः । द्विस्था वेदगुणा भक्त्या ह्यष्टोत्तरशतेन सः ॥ ६ ॥
लब्धान्विता पुनः शेषे चन्द्रो ज्ञेयो मनीषिभिः । द्विस्था साष्टखचन्द्रैः१०८सा लब्धा युक्तावशेषके ॥७
भौमो ज्ञेयस्तु तत्काले स्फुटो बीजान्वितः सदा।पङ्क्तिर्द्विधा द्विगुणिता गजपूर्णेन्दु१०८भाजिता ॥८
लब्धेन सा पुनर्योज्या शेषे तद्वद् बुधः स्फुटः।श्रेण्यधः स्थापनीया तु साङ्काष्टाभ्रनिशाकरैः१०८॥९॥
लब्धान्विता ततः शेषे गुरुर्बीजेन संयुतः । द्विधा खेन्दुहता श्रेणी रसोनाष्टाधिकेन तु ॥ १० ॥
शतेनाप्तयुता शेषे शुक्रो बीजान्वितोनितं । द्विस्था पङ्क्तिः शनैर्निघ्ना विहृता साष्टखेन्दुभिः॥११॥
लब्धान्वितावशेषे तु शनिर्बीजान्वितः स्फुटः । सा द्विधा सप्तगुणिता गजपूर्णेन्दुभाजिता ॥ १२ ॥
लब्धान्विता पुनर्भक्ता तैरेव विहगेश्वर । स्वबीजसंस्कृतौ शेषौ राहुकेतू स्फुटौ स्मृतौ ॥ १३ ॥
राशेर्नवांशकाद्वापि बीजान्युक्तानि तद्बलात् । नवांशकानां संख्याऽमष्टोत्तरशतं त्विह ॥ १४ ॥
विचार्य स्वमृणं कृत्वा साधयेत् खेचरान् स्फुटान्।सूर्यादितस्य विज्ञानं चन्द्राज्जातेस्तथैव च ॥१५॥
भौमाद्य वयसो ज्ञानं बुधात्स्त्रीपुंनपुंसकम् । जीवात्सहाया विज्ञेयाः शुक्रात्माग्धर्मनिर्णयः ॥ १६॥
मन्दादायुस्त्वगोः पापं केतोरिष्टं च सूचितम् । ग्रहशेषैस्त्र्यमर्कांढ्यं चन्द्रहीनं कुजान्वितम् ॥१७॥
बुधघ्नं गुरुशुक्राभ्यां युक्तं मन्दोनितं तथा । दशघ्नं चन्द्रसंयुक्तं पूर्णनेत्रहृतं सुत ॥ १८ ॥
तत्त्वावशेषं कादिघ्नं स्वबीजोनयुतं च यत् । अध्याये तन्मिते वत्स दैवज्ञो हि प्रकाशयेत् ॥ १९ ॥
स्नानं दानं जपं होमं स्वाध्यायं देवतार्चनम । गोविप्रगुरुवृद्धानामतिथीनां च पूजनम् ॥ २० ॥
गयाश्राद्धं व्रतं चैव पुण्यतीर्थाधिवासनम् । पापघ्नं सर्वमित्याद्यं स्वाध्यायोक्तं य आचरेत् ॥ २१॥
तत्कार्यं तस्य जीवस्य सर्वं सिध्यति नान्यथा ।
सूर्यारुणोक्तमिति यः शृणुयान्मनुष्यः स्वाध्यायजं निखिलमत्र पुराभवोत्थम् ।
सर्वश्रुताध्ययनजन्यफलान्यवाप्य सक्रीडयत्यमरवत्तिमिरारिलोके ॥ २२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गणिताध्यायो द्वितीयः ॥ २ ॥

---

श्रीसूर्य उवाच ।

वर्णस्वरांकान् क्षेपांश्चानाधिव्याधिसरूपजान् । वक्ष्येऽहं मन्त्ररूपांस्तान् सर्वं तैरेव सिद्ध्यति ॥१॥
कराश्विनागाष्टनवाष्टदस्रा रामाब्धिचन्द्राद्रिरसाः स्वरांकाः ।
नगांगपातारऋतुदस्त्रदस्त्रा बाणाष्टपञ्चांकहगग्निवेदाः ॥ २ ॥
भुमद्रतर्का भगतर्कवेदाः कुनन्ददस्रा शरनागबाणाः ।
अष्टाग्निरामाब्धिऋतुपर्वताश्च वर्णांकसंख्या क्रमशश्च कार्या ॥ ३ ॥

अथ व्याध्याधिक्षेपकाः ।

श्रीसूर्य उवाच ।

मद्भुक्तिसमा योज्या क्षेपा व्याध्याधिजाः सुतः।प्रश्ने द्वित्रिचतुर्थोक्ति योज्याः क्षेपाश्च तन्मिताः॥ ४॥
क्रमशो वक्ष्यमाणाश्च नामसंकीर्तनादिह । आयुर्भये राजयक्ष्मकासश्वासभगंदराः ॥ ५ ॥
शूलशोफव्रणं गण्डमालाऽर्धशिरसंज्ञकाः । क्षेपास्तेषां मया प्रोक्ताः शृणु पुत्र प्रयत्नतः ॥ ६ ॥
विंशोत्तरं शतं पञ्च वेदाविश्वसुरैर्मिताः । नगाष्टमनुदिग्रुद्राविंत्याश्च क्षेपका मताः ॥ ७ ॥
ततः पाण्डुग्रपस्मारपित्तवातकफानिलाः । मन्दाग्न्यजीर्णमदराः कार्श्यमेहाश्मरीयुताः ॥ ८ ॥
क्षेपा नृपेन्द्रतिथयश्चतुरशीतिसंमिताः । जिनधृतिकृतित्रिंशदश्याः पञ्चदिक्कुरगाः ॥ ९ ॥

१ राहु—पापु०। २ मन—ग्पु०। ३ द्वाश्चाग्नि—ग्पु०।

पुनर्विसर्पिग्रहणीकृच्छ्रवल्मीकसंज्ञकाः । शिरोमुखनसाचक्षुःकर्णकण्ठभुजांघ्रिजाः ॥ १० ॥
तत्क्षेपकाश्चाष्टमिता द्व्याद्यैर्विश्वान्तकैर्हताः । वातरक्तोदरव्याध्योः क्षेपकौ नवदिङ्मितौ ॥ ११ ॥
गुदलिङ्गरुजोरत्र क्षेपकाः षष्टिसंमिताः । दुस्त्वग्दुश्चर्मदद्रूणां क्षेपः षड्द्व्यष्टषड्गुणः ॥ १२ ॥
सर्वकुष्ठे महाभाग क्षेपास्त्वष्टादश स्मृताः । सर्वाङ्गरोगजश्चात्र षडष्टमितिसंगुणः ॥ १३ ॥
तदर्धोन्मादजः सूत तस्यार्धः सर्वदुःखजः । भूतावेशादिकश्चिन्नः स एव क्षेपकः स्मृतः ॥ १४ ॥
कार्यसिद्धेस्तथा पञ्चैकादशघ्नः प्रकीर्तितः । एकादशमितर्निघ्नास्त्वेकादशमिताः सुत ॥ १५ ॥
महत्पदाप्त्यै क्षेपोऽयं पूर्वपुण्यैः प्रसिद्ध्यति । एकादशमिता द्विघ्ना लक्ष्मीक्षेपस्तथैव च ॥ १६ ॥
स त्रिघ्नः पक्षिशार्दूल क्षेपः सर्वसुखावहः । तथा नवगुणाः पञ्च क्षेपाः पुत्र सुखार्थकाः ॥ १७ ॥
एवं सप्तगुणाः सप्त स्त्रीसुखक्षेपकाः स्मृताः । सप्ताष्टगुणितक्षेपो विचारे भर्तृजेऽण्डज ॥ १८ ॥
स्त्रीदोषानप्यहं वक्ष्ये विशेषाद्गरुडाग्रज । अपुष्पसंभवा वन्ध्या गर्भरक्तस्रवा तथा ॥ १९ ॥
कन्याप्रसूर्मृतवत्सा च वंध्या त्वेकसुता[1] तथा । बालवत्सा मृतोत्पन्ना सप्तदोषैरपुत्रिणी ॥ २० ॥
दोषक्षेपाः क्रमात्पंच हतास्त्वेकादिसप्तकैः । एषा ते कथिता सूत क्षेपकोत्पत्तिरुत्तमा ॥ २१ ॥[2]

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके क्षेपकाध्यायस्तृतीयः ॥ ३ ॥

---

अरुण उवाच ।

जन्मदेशपरिज्ञानं प्राप्स्यते त्वत्र जन्मनि । तदाचक्ष्व त्रिलोकेश कथं सूर्यस्फुटास्फुटम् ॥ १ ॥

श्रीसूर्य उवाच ।

किराता यस्य पूर्वेऽन्त्ये पश्चिमे यवनाः स्मृताः । उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम ॥ २ ॥
वर्षं तद्भारतं नाम कर्मक्षेत्रं भुवि स्थितम । शुभाशुभानि कर्माणि तस्मिन् बीजानि चाण्डज ॥ ३ ॥
सुखस्वर्गापवर्गाणां प्राप्तिः पुण्यफलं स्मृतम् । तिर्यङ्नरकदुःखानां भोगः पापफलं तथा ॥ ४ ॥
पूर्वादिदिक्क्रमादैन्द्रं ताम्रपर्णं गभस्तिमान् । वारुणं खण्डकं तस्मिन् गान्धर्वमथ नागकम् ॥ ५ ॥
सौम्यं कशेरुखण्डं स्यादेषु सर्वेऽन्त्यजाः स्थिताः । मध्ये कुमारिकाखण्डमत्र वर्णव्यवस्थितिः ॥ ६ ॥
जातिस्मराणां सततं प्रसूतिरिह जायते । पूर्वपुण्यवशेनैव कदाचिद्गरुडाग्रज ॥ ७ ॥
एतत्ते सर्वमाख्यातं कर्मक्षेत्रं हि भारतम् । प्रागत्र क स्थितिश्चास्मिञ्जन्तूनामन्यथोच्यते ॥ ८ ॥

---

१ "त्वेकादिजा तथा" इति ग्रसंज्ञकपुस्तकस्थपाठः। २ अत्रेदं स्पष्टम्—आयुः १२०, भय ९, राजयक्ष्म ४, कासश्वास १२, भगन्दर ३३, शूल ९, शोफ ८, व्रण १४, छर्दि ११, अर्शः १२, पाण्डु १६, अपस्मार १४, पित्त १५, वात ८४, कफ ४, मंदाग्नि १८, अजीर्ण २०, प्रदर ३०, कार्श्य ९०, प्रमेह १००, अश्मरी ७०, विसर्पि १६, संग्रहणी २४, मूत्रकृच्छ्र ३२, वल्मीक ४०, आस्यपाकतालुव्रणजिह्वास्तम्भ-जिह्वाव्रणदन्तरोगस्वरभङ्गाणीत्यादिसंग्रहः । क्षेपक एकविध एव । नासारोग ६४, नेत्ररोग ७२, कर्णरोग ८०, कण्ठरोग ८८, भुजस्तम्भ ९६, पादरोग १०४, वातरक्त ९९, उदररोग १०, गुदलिङ्गरोग ६०, त्वग्रोग ३६, दुश्चर्म १२, दद्रुरोग ४८, सर्वकुष्ठ १८, सर्वाङ्गरोग ४८, उन्माद २४, सर्वदुःखभत्र १२, भूतावेशादि ३६, कार्यसिद्धि ५५, महत्पदाप्ति १२१, लक्ष्मीसुख १२२, सर्वसुख ६६, पुत्रसुख ४५, स्त्रीसुख ४२, भर्तृसुखादिविचारक्षेपः ९६, अपुष्पसंभवक्षेपः ९, वन्ध्या १०, गर्भरक्तस्राव १९, कन्याप्रसूति २०, मृतवत्सा २९, एकादिवन्ध्या ३०, बालवत्समृतोत्पन्नादिः ३९, इति रोगसप्तक्षेपाः । कार्यसप्तक्षेपाश्च द्विविप्रश्नगुणितक्षेपाः ।

मानुषीं तनुमाश्रित्य यस्मिन् देशेऽजनि स्वयम् । जीवोऽयं प्राग्भवे तत्र नानाकर्मफलैर्वृतः ॥ ९ ॥
तद्देशजन्मकर्मादिव्यवस्था क्रमतो भृशम् । सूर्यादिभ्यो मया प्रोक्ता विनतानन्दवर्धन ॥ १० ॥
सूर्याभिधे तु प्रथमे रवौ हि गरुडाग्रज । प्राग्भवेऽयं प्रयागेऽभूत्काश्यां जातोऽत्र जन्मनि ॥ ११ ॥
अर्यमाख्ये द्वितीये तु देशे पञ्चनदेऽजनि । स्वयं प्राक्संभवे सूत मथुरायां तु संमतम् ॥ १२ ॥
तृतीये तु भवे नाम्नि पूर्वजन्मन्यभूत्सुत । प्रादुर्भूतस्त्वयोध्यायां कामरूपेऽत्र जन्मनि ॥ १३ ॥
हरितश्चान्ये पुरा जातो ह्यभवत्त्वाष्ट्रसंज्ञके । कोसलाख्येऽत्र जनुषि प्रादुर्भूतश्चतुर्थके ॥ १४ ॥
स्वयं प्राङ् मिथिलाजातो जातश्चात्र भवेऽण्डज । वनवासाभिधे देशे पञ्चमे पूषसंज्ञके ॥ १५ ॥
षष्ठेऽर्कसंज्ञके ह्यासीत्प्राग्भवे जनितस्त्वसौ । भृचक्रदेशेऽत्र भवे सार्णवेऽन्तिके तथा ॥ १६ ॥
किरातदेशे प्रागासीत्सवितर्यत्र जन्मनि । प्रादुर्भूतो विदर्भेऽसौ सप्तसंख्ये च पुनर्नक ॥ १७ ॥
पूर्वेऽजनि स्वयं जन्तुर्देशे खेटपुराभिधे । जन्मन्यत्राष्टमे जात सिंहले रविसंज्ञके ॥ १८ ॥
गभस्तिहस्ते नवमे मलयाचलमाश्रिते । देशे जातः पुरा सूत कान्यकुब्जेऽत्र जन्मनि ॥ १९ ॥
ताम्र्याश्रिते महादेशे प्रागभूदत्र जन्मनि । गौडे जातोऽण्डजसंज्ञे दशसंख्ये खगेश्वर ॥ २० ॥
कालाख्ये प्राग्भवे सूत त्वेकादशमिते ह्यसौ । प्रकाशसंज्ञके देशे मागधे चात्र जन्मनि ॥ २१ ॥
मृत्युनाम्न्यभवत्पूर्वे भवे द्वादशसंज्ञके । वङ्गदेशेऽत्र जनुषि कोङ्कणे गुर्जरे तथा ॥ २२ ॥
नासिकाख्ये महादेशे पुराभूद्धात्रिसंज्ञके । प्रादुर्भूतस्त्वसौ देशे मालवाख्ये त्रयोदशे ॥ २३ ॥
अथो प्रभाकरे नाम्नि चतुर्दशमितेऽण्डज । स्त्रीराज्ये प्रागसौ जातश्चोडिपाणाभिधेऽधुना ॥ २४ ॥
ततः पञ्चदशे सूत पृथिव्याख्ये पुराभवे । पुलिन्दसंज्ञके जात इदानीं यमुनाश्रिते ॥ २५ ॥
प्राङ् मद्रदेशे ह्यभवज्जातो लाटाभिधे त्वसौ । जनुरत्र भवे चाप्सुसंज्ञके षोडशेऽण्डज ॥ २६ ॥
ततस्तेजसि सञ्ज्ञे प्रागभूत्सप्तदशे सुत । पाण्डुदेशेऽथ कामाख्ये चात्र ब्रह्मर्षिसंज्ञके ॥ २७ ॥
नेपालसंज्ञके सूत सोऽयमत्र जन्मनि । ऊनविंशन्मिते वत्स वाय्वाख्ये पूर्वसंभवे ॥ २८ ॥
खेनाम्न्यष्टादशे जातो जलदेशे पुराभवे । जातः सिंहलसंज्ञेऽसाविदानीं खसंज्ञके ॥ २९ ॥
परायणाभिधे विंशन्मिते प्राग्गरुडाग्रज । संभूतो भृगुदेशे तु किष्किन्धायामिहाण्डज ॥ ३० ॥
ततः सोमाख्यकेऽप्येकविंशत्संख्येऽजनि स्वयम् । श्रीकण्ठेऽत्र भवे देशे गज्जने चामराटके ॥ ३१ ॥
द्वाविंशन्मितके जातः प्राक्पारेताभिधेऽधुना । सुगंधरेऽथ वा देशे कच्छसंज्ञे बृहस्पतौ ॥ ३२ ॥
शुक्राख्ये प्राक् त्रयोविंशन्मिते जन्माभवत्सुत । देशे भोजाभिधे गङ्गाश्रितेऽत्र जनुषि ध्रुवम् ॥ ३३ ॥
केरलाख्ये पुरा देशे प्रादुर्भूतोऽत्र जन्मनि । स्त्रीराज्ये बुधसंज्ञे तु चतुर्विंशन्मितेऽण्डज ॥ ३४ ॥
प्रागासीन्मलये सूत नाठिके चात्र जन्मनि । पञ्चविंशन्मिते जन्तुरंगारे विनतात्मज ॥ ३५ ॥
षड्विंशन्मितके त्विन्द्रनाम्नि जातः पुराभवे । कल्हाटाभिधे देशे जन्मन्यत्र च पर्वते ॥ ३६ ॥
कुन्तराख्ये महाभाग प्रादुर्भूतो भवत्यसौ । रेवातटेऽत्र जनुषि सप्तविंशे विवस्वति ॥ ३७ ॥
अष्टाविंशन्मिते जातो देशेऽसौ बर्बरे पुरा । चिरेन्द्रचामत्र जनुषि जीवोऽसौ कश्यपात्मज ॥ ३८ ॥
पाञ्चाले प्राग्भवे जीवः सूतश्चात्र भवेऽण्डज । वङ्गसंज्ञे महादेशे ऊनत्रिंशन्मिते शुचौ ॥ ३९ ॥
त्रिंशन्मिते मारिसंज्ञे ह्यासीत्पूर्वभवे सुत । संभूतः पाण्डुदेशेऽसौ सौराष्ट्रे चात्र जन्मनि ॥ ४० ॥
एकत्रिंशन्मिते जन्माभवद्देशे किरातजे । शनैश्चरेऽत्र जनुषि सिद्धपीठे खगाधिप ॥ ४१ ॥

---

१ शत्राख्ये–ग्पु०। २ तटे–खपु०। ३ त्रिनेत्याम्–खपु०। ४ किरातने–गपु०।

द्वात्रिंशन्मितके जातः पूर्वजन्मनि गुर्जरे । ब्रह्मसंज्ञोऽत्र जन्तुपि देशे सारस्वते ह्यसौ ॥ ४२ ॥
त्रित्रिंशन्मितके विष्णो माळवे पूर्वजन्मनि । संभूतः सांप्रतं सूत काश्मीरे जनितः स्वयम् ॥४३॥
नेपालसंज्ञके जातः प्राग्भवे त्वत्र जन्मनि । देशे शतद्रुके रुद्रे चतुस्त्रिंशन्मितेऽण्डज ॥ ४४ ॥
पञ्चत्रिंशन्मिते स्कन्दनाम्नि पूर्वभवे त्वसौ । ततः कर्णाटके देशे प्रयागे सांप्रतं सुत ॥ ४५ ॥
जालंधरे महापीठे जातो वैश्रवणे पुरा । ऐरावतीमदेशे तु षट्त्रिंशत्प्रमितेऽधुना ॥ ४६ ॥
यमाख्ये प्राग्भवे सप्तत्रिंशत्संख्ये पुरा सुत । जननं खुरसाणाख्ये देशे मत्स्याभिधेऽधुना ॥ ४७ ॥
अष्टात्रिंशन्मिते नाम्नि वैद्रुते जनितस्त्वसौ । प्राग्भवे त्वङ्गदेशेऽभूदत्र पञ्चनदे सुत ॥ ४८ ॥
चत्वारिंशन्मिते ऊने कामदेशेऽजनि स्वयम् । प्राग्भवे गुर्जराख्ये तु सांप्रतं जठराभिधे ॥ ४९ ॥
ततोऽग्निसंज्ञके सूत चत्वारिंशन्मिते पुरा । प्रादुर्भूतस्त्वसौ तापत्यामिदानीं जङ्गलाभिधे ॥ ५० ॥
गौडदेशे पुरोत्पन्नस्त्वत्र केदारमण्डले । चत्वारिंशन्मिते काढ्ये त्विन्धनाख्ये खगेश्वर ॥ ५१ ॥
चत्वारिंशन्मिते द्व्याढ्ये तेजसां पितृसंज्ञके । प्राग्जातः सार्णवे भोजे चात्र वेत्रवतीतटे ॥ ५२ ॥
काश्यां पूर्वभवे ह्यासीज्जननं यामुनेऽधुना । चत्वारिंशन्मिते त्र्याढ्ये नाम्नि धर्मध्वजेऽण्डज ॥ ५३ ॥
चत्वारिंशच्चतुर्युक्ते वेदकर्मारिसंज्ञके[1] । भूचक्रदेशे प्राग्जातश्चान्तर्वेद्यां तु सांप्रतम् ॥ ५४ ॥
पंचहीनेऽपि पंचाशन्मिते वेदाङ्गसंज्ञके । वल्मीके प्रागसौ सूत पीठे जालंधरेऽधुना ॥ ५५ ॥
चत्वारिंशन्मिते सूत षड्युक्ते वेदवाहने । वंगदेशे पुरोत्पन्नो मरुत्संज्ञेऽत्र जन्मनि ॥ ५६ ॥
पंचाशन्मितके त्र्यूने कृतसंज्ञे पुराभवे । संभूतः कोङ्कणे देशे सांप्रतं हस्तिबंधने ॥ ५७ ॥
प्रादुर्भूतो विदेहेऽसौ देशेऽयोध्याभिधेऽधुना । पंचाशन्मितके द्व्यूने त्रेतासंज्ञे च पुत्रक ॥ ५८ ॥
द्वापरे चोनपंचाशन्मिते प्रारंभवत् खगे । गङ्गायमुनयोर्मध्ये देशे जातस्तु सांप्रतम् ॥ ५९ ॥
आसीत्पूर्वभवे सूत पंचाशन्मितके कलौ । दण्डकारण्यकेऽत्रैव जातोऽसौ सिन्धुमण्डले ॥ ६० ॥
कलाभिदेकपंचाशन्मितकेऽभूत्पुराभवे । स्त्रीराज्यदेशे जनितस्त्वत्रावन्त्याभिधेऽण्डज[2] ॥ ६१ ॥
द्विपंचाशन्मिते जातः सौराष्ट्रे प्राग्भवे ह्यसौ । मिथलायां महाभाग काष्ठाख्ये चात्र जन्मनि ॥ ६२ ॥
प्राङ्मुहूर्तेऽजनि त्र्याढ्ये पंचाशन्मितके गुरौ । सरस्वतीसूर्यपुत्र्योरन्तर्देशेऽत्र जन्मनि ॥ ६३ ॥
चतुराढ्येऽथ पंचाशत्संख्ये प्रागजनि स्वयम् । भोजदेशे क्षपाख्येऽत्र पाण्डुसंज्ञेऽथ कक्षपे ॥ ६४ ॥
यामाख्ये पंचपंचाशत्संख्ये सूत पुराभवे । शूरपुरेऽत्र भवे जातो देशे त्वैरावतेऽण्डज ॥ ६५ ॥
क्षणाभिधे तु षड्युक्ते पंचाशत्संख्यकेऽभवत् । कुन्तले प्राग्विदेहाख्ये देशे जातोऽधुना सुत ॥ ६६ ॥
संवत्सरके त्र्यूने षष्टिसंख्ये ह्यभूत् खग । गौडदेशेऽत्र जननं देशे सूकरसंज्ञके ॥ ६७ ॥
अश्वत्थसंज्ञके द्व्यूने षष्टिसंख्येऽजनि स्वयम् । देशे नासिकसंज्ञे प्राङ्मद्रदेशेऽत्र जन्मनि ॥ ६८ ॥
कालचक्रे तथा ऊने षष्टिसंख्ये पुराऽजनि । बर्बरे यावने देशे कर्मनाशातटेऽत्र च[3] ॥ ६९ ॥
प्राग्जातः कोङ्कणे देशे जन्मन्यत्र च बर्बरे । जीवोऽयं चाङ्गदेशे वा षष्टिसंख्ये विभावसो ॥ ७० ॥
एकषष्टिमिते त्वासीत्पुरुषाख्ये पुराभवे । जनितो गुर्जरे देशे शूरसेनाभिधेऽधुना ॥ ७१ ॥
प्रभूवः केरले देशे प्राग्जनुष्यत्र जन्मनि । पाञ्चाले जननं द्व्याढ्ये शाश्वते षष्टिसंमिते[4] ॥ ७२ ॥
योगिसंज्ञे त्रियुक्तेऽभूत् षष्टिसंख्ये पुराजनि । गान्धारदेशे संभूतो गयायामत्र जन्मनि ॥ ७३ ॥

१ गर्भारिसंज्ञके—ख पु० । २ ण्डज—ख पु० । ३ तथा—ख पु० । ४ प्रथमाख्ये—ख पु० ।

व्यक्ताव्यक्ते चतुर्युक्त षष्टिसंख्ये पुराजनि । देशेऽर्बुदे पुनः सिन्धौ जातो मध्याभिधेऽधुना ॥७४॥
पञ्चाढ्ये षष्टिसंख्ये प्राग्जीवोऽयं जनितोऽण्डज । देशे द्रविडसंज्ञे तु द्वारावत्यां तु सांप्रतम् ॥७५॥
षड्युक्ते षष्टिसंख्ये तु कालाध्यक्षे पुराऽभवत् । प्रादुर्भूतो गिरौ रम्ये विपाशाख्येऽत्र जन्मनि ॥७६॥
न्यूने सप्ततिसंख्ये प्राक् प्रजाध्यक्षेऽजनि स्वयम् । पाण्डुदेशे पुनः काश्यामार्यावर्तेऽथवाण्डज ॥७७॥
अष्टषष्टिमिते जातः प्राग्भवे विश्वकर्मणि । पाञ्चाले त्वान्ध्रदेशे तु कलिङ्गे वात्र जन्मनि ॥७८॥
नवषष्टिमिते ह्यासीत्प्रयागे प्राक्तमोनुदे । ताप्यामत्र भवेज्जन्म दृषद्वत्यामथापि वा ॥ ७९ ॥
अथ सप्ततिसंख्ये प्राग्वरुणे जननं ह्यभूत् । देशे मालवसंज्ञे तु सरयूनिकटेऽधुना ॥ ८० ॥
गंगायां प्राक् सागरांशे ह्येकसप्ततिमितेऽजनि । शतद्रुकसरस्वत्योरन्तरे चात्र जन्मनि ॥ ८१ ॥
द्विसप्ततिमिते ह्यासीज्जामूते जननं पुरा । सौराष्ट्रे केरले त्वत्र काञ्चिकायामथापि वा ॥ ८२ ॥
त्रिसप्ततिमिते जातो जीवने प्राग्भवे त्वसौ । भूचरे चोलदेशे वा चर्मण्वत्यां तु सांप्रतम् ॥ ८३ ॥
चतुःसप्ततिसंख्ये प्रागरिहाख्ये पुराभवत् । कोशले कौरिहाटेऽत्र देशे खेटपरेऽथवा ॥ ८४ ॥
भूताश्रये तु पञ्चोनेऽशीतिसंख्ये पुराऽभवत् । प्रादुर्भूतो जले देशे ब्रह्मावर्तेऽत्र जन्मनि ॥ ८५ ॥
षट्सप्ततिमिते जातः पुरा सूतपतौ सुत । गन्धारदेशे जननं सांप्रतं सिन्धुमण्डले ॥ ८६ ॥
सप्तसप्ततिसंख्ये प्राक् सर्वदेवनमस्कृते । सूत केकयदेशे तु चन्द्रभागाश्रितेऽधुना ॥ ८७ ॥
द्व्यूनेऽशीतिमिते चासीत्स्वर्णाख्ये पूर्वसंभवे । जातो नेपालदेशेऽसौ जन्तुरत्र विराटके ॥ ८८ ॥
नवसप्ततिसंख्ये तु संवर्ते प्रागभूदयम् । जन्तुः पुलिन्ददेशेऽत्र कीरे वा कौशिकीतटे ॥ ८९ ॥
अथाऽशीतिमिते वह्निसंज्ञकेऽभूत्पुरा जनुः । यामुने जनितो देशेऽत्र भवे च हिमाश्रये ॥ ९० ॥
ह्यशीतिमितिके सर्वस्यादिसंज्ञे पुराऽभवत् । कीरदेशे समुत्पन्नः कुरुक्षेत्रेऽत्र जन्मनि ॥ ९१ ॥
कालिङ्गे लोलपे जातो द्व्यशीतिमितके पुरा । शतद्रुकविपाशान्ते देशे चात्रैव जन्मनि ॥ ९२॥
ततो मनसिसंज्ञे प्राक् त्र्यशीतिमितकेऽजनि । सिंहलाख्येऽत्र जनुषि देशे ब्रह्मर्षिसंज्ञके॥९३ ॥
सुपर्णाख्ये चतुर्युक्तेऽशीतिसंख्ये पुराभवत् । काश्मीरे कामदेशेऽत्र कावेर्यां जनितोऽथवा ॥ ९४॥
भूताद्रिसंज्ञके जातः पञ्चाशीतिमिते पुरा । देशे पंचालसंज्ञेऽसौ जन्तुर्वर्पाशिकेऽधुना ॥ ९५ ॥
षडशीतिमिते त्वासीच्छीघ्रगे जननं पुरा । पुंलिङ्गे गण्डकीतीरे कर्णाटे चात्र जन्मनि ॥ ९६ ॥
न्यूने नवतिसंख्ये प्राक् प्राणाधारेऽजनि स्वयम् । खसदेशे महाभाग द्रविडे सांप्रतं ह्यसौ ॥९७॥
धन्वन्तरौ पुरा जातस्त्वष्टाशीतिमितेऽण्डज । देशे नेपालसंज्ञेऽत्र जाङ्गले कुन्तलेऽथवा ॥ ९८ ॥
नवाशीतिमिते सूत धूमकेतौ पुराभवत् । देशे पुलिन्दसंज्ञे तु पुष्कराश्रितजेऽधुना ॥ ९९ ॥
प्राग्गान्धारेऽजनि स्वादिदेवे नवतिसंमिते । ऐरावतीचन्द्रभागामध्यदेशेऽत्र जन्मनि ॥ १०० ॥
पुरादितिसुते सूत काढ्ये नवतिसंमिते । कान्यकुब्जेऽत्र वाहीकदेशे वामरकण्टके ॥ १०१ ॥
द्व्याढ्ये नवतिसंख्ये प्राग् द्वादशात्मन्यभूज्जनुः । आन्ध्रे वर्नरदेशे वा गोदावर्यां तु सांप्रतम् १०२॥
आन्विते त्वरविन्दाक्षे जातो नवतिसंमिते । प्राक् पर्वते किरातेऽत्र वितस्ताश्रितजेऽथवा ॥ १०३॥
चतुर्नवतिसंख्ये प्राक् पितृनाम्न्यजनि स्वयम् । केदारे टङ्कणे देशे त्वत्र वा हस्तिनापुरे॥१०४ ॥
पंचोने शतके लाटदेशेऽभून्मातृसंज्ञके । जननं त्वत्र भूचके मायापुर्यामथापि वा ॥ १०५ ॥

---

१ पुराण्डज—ख्पु०।२ जनि स्वयम्—ग्पु०।३ पारिहाटे—ग्पु०।४ मण्डारथे—ग्पु०। ५ जात०—खपु०।
६ पैयासके—खपु०। ७ कलिंगे खपु०। ८ ग्रामांके—ग्पु०।

पितामहे चतुर्न्यूने शतसंख्ये पुराऽजनि । देशे द्रविडसंज्ञे च गान्धारे चात्र केरले ॥ १०६ ॥
न्यूने शतमिते तस्य स्वर्गद्वारे पुराभवत् । स्वर्गभूमिजनुर्जात आर्यावर्तेऽत्र जन्मनि ॥ १०७ ॥
प्रजाद्वारे पुरा जातो द्व्यूने शतमिते सुत । नासिकाख्येऽत्र जनुषि कुरुक्षेत्रप्रदेशके ॥ १०८ ॥
कूने शतमिते चासीन्मोक्षद्वारे पुराभवे । च्युतोपवर्गादधुना मध्यदेशेऽजनि स्वयम् ॥ १०९ ॥
त्रिविष्टपाख्यके सूत शतसंज्ञेऽभवत्पुरा । संभूतः कच्छदेशेऽसौ पुष्कराख्येऽत्र जन्मनि॥ ११० ॥
कयुक्ते शतसंख्ये मागदेहे केतरिसंज्ञके । जनितो बर्बरे देशे नैमिषारण्यकेऽधुना ॥ १११ ॥
द्व्याढ्ये शतमिते सूत प्रशान्तात्मनि वै पुरा । देशे मागधसंज्ञेऽभूदत्र गङ्गाश्रिते खग ॥ ११२ ॥
विश्वात्मनि पुरा जातस्त्र्यन्विते शतसंज्ञके । देशे भूचक्रसंज्ञे तु जलाधीशाश्रितेऽधुना ॥ ११३ ॥
चतुर्युक्ते शते पूर्वसंभवे विश्वतोमुखे । रेवातटेऽधुना जातो मध्यदेशेऽथवा खग ॥ ११४ ॥
चराचरात्मन्यभवद्गौडे पञ्चोत्तरे शते । विपाशैरावतीमध्यदेशे जातोऽत्र जन्मनि ॥ ११५ ॥
षडुत्तरशते त्वासीत्सूक्ष्मात्मनि पुराभवे । अङ्गदेशे समुत्पन्नः सांप्रतं यमुनाश्रिते ॥ ११६ ॥
मन्त्रेण मलये सूत सप्तोत्तरशते पुरा । चन्द्रभागावितस्तान्ते देशेऽसौ चात्र जन्मनि ॥ ११७ ॥
कुन्तले प्राग्भवे जातः शतद्रुनिकटेऽधुना । अष्टोत्तरशते सूत करुणान्वितसंज्ञके ॥ ११८ ॥
एष ते कथितो वत्स देशभागविनिर्णयः । जातिस्मराणां जन्तूनां भूयः किं परिपृच्छसि ॥११९॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके जन्मदेशनिर्णयोऽध्यायश्चतुर्थः ॥ ४ ॥

---

अरुण उवाच ।

चन्द्राज्जातिपरिज्ञानं यत्त्वयोक्तं पुरा विभो । तन्मे ब्रूहि महाभाग श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

श्रीसूर्य उवाच ।

यस्यां जातौ बभूव प्राक्संभवे चात्र जन्मनि । यस्यां व्यवस्थितः सूत जीवोऽयंते पृथक्पृथक् ॥ २ ॥
हिमांशुपूर्वे विज्ञेये वक्ष्यामि त्वां पतत्रिण । हिमांशुसंज्ञके ह्याद्ये जीवोऽसौ ब्राह्मणोऽभवत् ॥ ३ ॥
प्राक्संभवे जनुष्यत्र जातो वै ब्राह्मणोऽण्डज । चंद्राख्यके द्वितीये प्रागासीद्वैश्यकुलोद्भवः ॥ ४ ॥
जन्मन्यत्र महाबाहो बाहुजः कथितस्त्वसौ । ततस्तृतीयके सूत शूद्रः पूर्वभवेऽभवत् ॥ ५ ॥
जन्मन्यत्र पुनर्वैश्यो जातश्चंद्रमसि त्वसौ । प्रागिन्दुसंज्ञके शूद्रो बभूव विनतात्मज ॥ ६ ॥
तथा चतुर्थके जातः सांप्रतं पादजोऽण्डज । ततः कुमुदबंधौ प्रागभवद्यवनेश्वरः ॥ ७ ॥
पंचमे त्वत्र संभूतो यवनानां महाकुले । विधुसंज्ञे ततः षष्ठे बाहुजः पूर्वसंभवे ॥ ८ ॥
ह्यभवदत्र जनुषि जातो मूर्धाभिषिक्तकः । सुधांशौ सप्तमे सूत शूद्रोऽभूत्पूर्वजन्मनि ॥ ९ ॥
सांप्रतं जनितोऽम्बष्ठो विनतानन्दवर्धन । ओषधीशेऽष्टमे जातः पूर्वजन्मनि वै द्विजः ॥ १० ॥
जन्मन्यत्र महीपालः संभूतो महतां कुले । अथो नवमिते ह्यासीच्छुभ्रांशौ पादजोऽण्डज ॥११॥
निषादश्चात्र जनुषि जीवोऽयं जनितस्त्वयम् । निशापतौ द्विजश्चासीत् प्राग्भवे गरुडाग्रज ॥ १२ ॥
दशसंख्ये पुनर्वैश्यो जातोऽसौ चात्र जन्मनि । अब्जाख्यकेऽभवच्छूद्रस्त्वेकादशमितेऽण्डज ॥१३॥
यवनानां कुले जात इदानीं कश्यपात्मज । द्वादशे पक्षिशार्दूल नाम्नि जैवातृकेऽभवत् ॥ १४ ॥
प्राग्भवे मागधश्चात्र संभवे मागधः स्मृतः । सोमनाम्नि बभूव प्राक्संभवे ब्राह्मणस्त्वसौ ॥ १५ ॥
त्रयोदशमिते शूद्रकुले जातस्तु सांप्रतम् । मृगाङ्कसंज्ञके सूत चतुर्दशमिते पुरा ॥ १६ ॥

१ शार्तारि—ख पु०। २ सूतात्मनि—ख पु०। ३ प्राक्सिद्धानां तु कुशोद्भवः—ख पु०। ४ जनितः [illegible]—ख पु०। ५ दशसंख्ये—ख पु०।

क्षात्रे कुलेऽभवज्जन्म चोग्रसंज्ञोऽत्र जन्मनि । ग्लौनाम्नि पञ्चदशके बाहुजः पूर्वसंभवे ॥ १७ ॥
द्विजवंशे वरे जात इदानीं कश्यपात्मज । अथो कलानिधौ नाम्नि षोडशे प्राग्भवेऽभवत् ॥ १८ ॥
वैश्यश्चात्र भवे जातः करणो विनतात्मज । न्यूने विंशन्मिते सूत द्विजराजेऽभूत्पुरा ॥ १९ ॥
क्षत्रियश्चात्र जनुषि पादजः परिकीर्तितः । ततोऽष्टदशके विप्रः प्रागासीदण्डजोत्तम ॥ २० ॥
यवनश्चात्र संभूतो द्विजराजाभिधेऽधुना । ऊनविंशन्मिते सूत द्विजः प्राक्संभवे पुरा ॥ २१ ॥
क्षपाकरेऽत्र जनुषि सूतपुत्रः प्रकीर्तितः । ततो विंशन्मिते ह्यासीच्छीतांशौ पूर्वजन्मनि ॥ २२ ॥
पादजश्चात्र जनुषि संभूतः क्षत्रियोऽण्डज । काद्ये विंशन्मिते शीतरश्मिसंज्ञे बभूव तु ॥ २३ ॥
वैश्यः प्राक्संभवे जातो वैदेहश्चात्र जन्मनि । ततो हिमकरे नाम्नि द्वाविंशन्मितके पुरा ॥ २४ ॥
शूद्रोऽभूदत्र जनुषि चण्डालः कथितस्त्वसौ । तुहिनांशौ त्रयोविंशन्मिते प्राग्गरुडाग्रज ॥ २५ ॥
वैश्योऽभवदिदानीं तु पादजः परिकीर्तितः । तमोग्रासे चतुर्विंशन्मितकेऽभूत्पुराभवे ॥ २६ ॥
क्षत्रियो मागधश्चात्र संभवे संभवः सुत । ततस्तुहिनरश्मौ तु पञ्चविंशन्मितेऽभवत् ॥ २७ ॥
वैश्यः पूर्वभवे विप्रो भवेदत्र पतत्रिप । जैवातृकेऽथ षड्विंशन्मिते शूद्रः पुराभवत् ॥ २८ ॥
वन्दीजन इति ख्यातः संभूतश्चात्र जन्मनि । न्यूने त्रिंशन्मिते सूत निर्मलांशौ पुराभवे ॥ २९ ॥
बभूव बाहुजो जातश्चात्र जन्मनि वै वणिक् । द्व्यूने त्रिंशन्मिते ह्यासीच्छ्वेतांशौ प्राग्भवेऽभवत् ॥ ३० ॥
शूद्रः क्षत्तार इत्येव संभूतश्चात्र जन्मनि । ऊनत्रिंशन्मिते सूत रात्रिपे प्राग्वणिक्सुतः ॥ ३१ ॥
बभूव यवनस्त्वत्र संभवे विनतात्मज । क्षपेशसंज्ञके त्रिंशन्मिते त्वासीत्पुराभवे ॥ ३२ ॥
क्षत्रियो यवनश्चात्र संभूतो गरुडाग्रज । क्षपापतौ महाभाग त्वेकत्रिंशन्मिते पुरा ॥ ३३ ॥
बभूव पादजश्चासौ जीवः संप्रति वै द्विजः । द्वात्रिंशन्मितके त्वासीत्कलानाथे पुराभवे ॥ ३४ ॥
वैश्यश्चात्र भवे सूत संभूतो रथकारकः । तारापतौ पुरा जीवस्त्रित्रिंशन्मितके ह्यभूत् ॥ ३५ ॥
बाहुजश्चात्र जनुषि संकरः कथितस्त्वसौ । उडुपे प्राक्चतुस्त्रिंशन्मिते तु गरुडाग्रज ॥ ३६ ॥
ब्राह्मणोऽभूदिदानीं तु जातो वन्दीजनस्त्वसौ । द्विजाधिपतिसंज्ञे प्राक्पंचत्रिंशन्मितेऽण्डज ॥ ३७ ॥
पादजोऽभूदथो जन्मन्यत्रैव मुखजः स्मृतः । षट्त्रिंशन्मितके ह्यासीच्छशाङ्के पूर्वजन्मनि ॥ ३८ ॥
वैश्योऽथ पादजो जातः सांप्रतं विनतात्मज । चत्वारिंशन्मिते त्र्यूने द्विजपे प्राक् खगाधिप ॥ ३९ ॥
वैश्यो बभूव जीवोऽसौ जन्मन्यत्र वणिक्सुतः । चत्वारिंशन्मिते द्व्यूने पुत्र पूर्वभवेऽभवत् ॥ ४० ॥
मूर्धाभिषिक्तो जीवोऽसौ जन्मन्यत्र खगाधिप । नवत्रिंशन्मिते वत्स द्विजेशे पूर्वजन्मनि ॥ ४१ ॥
ब्राह्मणो ह्यभवदत्र जातो वैश्यस्तथाण्डज । चत्वारिंशन्मिते सूत तारेशे प्राग्भवेऽभवत् ॥ ४२ ॥
अम्बष्ठश्चात्र जनुषि पादजः कथितोऽण्डज । क्षंता तु प्राग्भवे ह्यासीदत्र जन्मनि चोरुजः ॥ ४३ ॥
द्विजनाथे कयुक्ते तु चत्वारिंशन्मिते सुत । तथोडुपतिसंज्ञे प्राक् चत्वारिंशे पुराभवे ॥ ४४ ॥
द्वियुक्ते त्वभवच्छूद्रो निषादश्चात्र जन्मनि । चत्वारिंशन्मिते त्र्याढ्ये क्षपाध्यक्षे खगेश्वर ॥ ४५ ॥
पूर्वजन्मन्यसौ क्षत्री ह्यभवद्ब्राह्मणोऽधुना । चत्वारिंशच्चतुर्युक्ते ताराध्यक्षे बभूव तु ॥ ४६ ॥
वैश्यः पूर्वभवे चात्र संभवे मागधोऽण्डज । पंचहीनेऽथ पंचाशन्मितके भपतौ पुरा ॥ ४७ ॥
ह्यासीच्छूद्रोऽत्र जनुषि पादजः कथितो भृशम् । चत्वारिंशन्मिते सूत षड्युक्ते रात्रिपेऽभवत् ॥ ४८ ॥
बाहुजः पूर्वजनुषि जन्मन्यत्रोग्रकः सुतः । पंचाशन्मितके त्र्यूने ब्राह्मणेशे पुराभवत् ॥ ४९ ॥
ब्राह्मणश्चात्र जनुषि बाहुजः कथितो ह्यसौ । पंचाशन्मितके द्व्यूने भूदेवेशे बभूव तु ॥ ५० ॥

१. स जातो गरुडाग्रज—पाठः ।

नागश्चासीत् पुरा चात्र ब्राह्मणः कथितोऽण्डज। चत्वारिंशन्मिते सूत नवाढ्ये पूर्वजन्मनि॥५१॥
जातोऽसौ यवनश्चात्र यामिनीशे तु संकरः। अथो ब्राह्मणेपि सूत पञ्चाशन्मितकेऽभवत् ॥५२॥
करणः प्राग्भवे जन्तुरत्र जन्मनि बाहुजः। कुपञ्चाशन्मिते सूत भूदेवपतिसंज्ञके ॥ ५३ ॥
प्रागासीदुरुजो वैश्यश्चात्र जन्मनि काश्यप। रजनींद्रे पुरा सूत द्विपञ्चाशन्मितेऽभवत् ॥ ५४ ॥
क्षत्रियो बाहुजश्चात्र संभवे तु खगेश्वर। रात्रीशे त्र्यधिके पञ्चाशन्मिते पूर्वजन्मनि ॥ ५५ ॥
वैश्यश्चासीन्महाभाग जातः शूद्रोत्रसंभवे। चतुर्युक्तेऽथ पञ्चाशन्मिते प्रागगरुडाग्रज ॥ ५६ ॥
क्षणदेशे भवे विप्रः प्रागत्रोरुजवंशजः। बाहुजः प्राग्भवे जन्तुर्यवनश्चात्र संभवे ॥ ५७ ॥
क्षपानाथेऽत्र पञ्चाढ्ये पञ्चाशन्मितकेऽण्डज। षट्पञ्चाशन्मिते सूत रात्रिनाथे पुराभवत्॥ ५८ ॥
पादजो ब्राह्मणश्चैव जातोऽसावत्र जन्मनि। विभावरीशे प्राक् न्यूने सूत षष्टिमितेऽण्डज॥ ५९ ॥
वैश्योऽभवत्पुनश्चैव चण्डालश्चात्र संभवे। तमीपतौ महाभाग द्व्यूने षष्टिमितेऽभवत् ॥ ६० ॥
क्षत्रियः प्राग्भवे त्वत्र संभवे पादजः स्मृतः। तमिस्रेशे महाभाग एकूने षष्टिमितेऽभवत् ॥ ६१ ॥
द्विव्योऽयं पूर्वजनुषि जनुष्यत्र च बाहुजः। अथ षष्टिमिते वत्स तमीशेऽभूद्द्विजोत्तमः ॥ ६२ ॥
प्राग्भवेऽत्र भवे चायं संकरः कथितो भृशम्। काढ्ये षष्टिमिते सूत तमीनाथेऽभवत्पुरा॥ ६३ ॥
यवनः प्राग्भवे जन्तुर्यवनश्चात्र जन्मनि। पद्मबान्धवसौ पूर्वे द्व्याढ्ये षष्टिमिते ह्यभूत् ॥ ६४ ॥
ब्राह्मणश्चाण्डजश्रेष्ठ जातो वन्दीजनोऽधुना। त्रिषष्टिसंज्ञके पूर्वभवे भुवशिवन्दिते[1] ॥ ६५ ॥
वैश्यश्चात्र भवे जातो मागधः कश्यपात्मजः। तुषारांशौ चतुःषष्टिसंमिते विनतात्मज॥ ६६ ॥
बभूव बाहुजः पूर्वं ब्राह्मणश्चात्र जन्मनि। वारिजे प्राङ् महाभाग पञ्चषष्टिमिते ह्यभूत् ॥ ६७ ॥
वैश्यश्चात्र भवे जन्तुर्जातो वैश्यकुलोद्भवः। षट्षष्टिसंमिते ह्यासीत्प्राक् समुद्रसुतेऽण्डज ॥ ६८ ॥
बाहुजश्चात्र जनुषि बाहुजः कथितोऽधुना। सप्तषष्टिमिते वत्स पीयूषांशौ पुराभवे ॥ ६९ ॥
ब्राह्मणोऽभूदिदानीं तु संभूतो ब्राह्मणस्त्वसौ। सुधाकरे पुरा ह्यासीदष्टषष्टिमितेऽण्डज ॥ ७० ॥
शूद्रः पूर्वभवे चात्र संभवे यवनो महान्। ऊनसप्ततिसंख्ये तु सुधांशौ पूर्वजन्मनि ॥ ७१ ॥
मागधोऽभूत्तथा जातः श्वपचोऽत्र जन्मनि। अथो सप्ततिसंख्ये प्रागभूद्वैश्योऽत्र संभवे ॥७२॥
रथकारस्त्विह जातस्त्वमृतांशौ खगाधिप। कुसप्ततिमिते सूत सुधारश्मौ पुराभवे ॥ ७३ ॥
बाहुजश्चाभवत्सूत ब्राह्मणस्त्वत्र संभवे। द्विसप्ततिमिते सूत रोहिणीशे तु पादजः ॥ ७४ ॥
प्रागासीद्यवनश्चायं संभूतश्चात्र जन्मनि। त्रिसप्ततिमिते चन्द्रे नाम्नि प्राक्संभवे ह्यभूत् ॥७५॥
वैश्योऽसौ जन्तुरत्रेह बाहुजः कथितोऽण्डज। चतुःसप्ततिसंख्ये तु हरिणाङ्काभिधेऽभवत् ॥७६॥
ब्राह्मणः प्राग्भवे जन्तुरिह जन्मनि वै द्विजः। अब्जिजे प्राग्भवे ह्यासीत्पञ्चसप्ततिसंमिते ॥७७॥
पादजश्चारणश्चात्र संभवे गरुडाग्रज। वैश्यः पूर्वभवे सूत संभूतो ब्राह्मणोऽधुना ॥ ७८ ॥
षट्सप्ततिमिते जन्तुरत्रिसूनो पतत्रिणा। सप्तसप्ततिसंख्ये प्राग्रोहिणीशे बभूव तु ॥ ७९ ॥
संभूतश्चारणो जीवो बाहुजश्चात्र जन्मनि। अष्टसप्ततिसंख्ये तु प्रागभूदत्रिजे द्विजः[2] ॥८०॥
जन्मन्यत्र महाभाग ब्राह्मणः कथितस्त्वसौ। जलांशौ प्राग्भवे चासीन्नवसप्ततिसंमिते ॥ ८१ ॥
जातो वैश्यो महाभाग इदानीं रथकारकः। क्षत्रियः पूर्वसंभूतो यवनश्चात्र जन्मनि ॥ ८२ ॥
अशीतिमितके जन्तुरत्रिपुत्रे च पुत्रक। कशीतिमितके नाम्नि शिशिरांशौ पुराभवे ॥ ८३ ॥
बभूव दिव्यजातोऽसावत्र जन्मनि चोरुजः। द्व्यशीतिमितके नाम्नि तारकेशे पुराऽभवत् ॥ ८४ ॥

१ तुर्येशिवन्दिते—पु०। २ त्रिभे नाथा—पु०।

वैश्योऽत्र संभवे सूत मंकरः कथितस्त्वसौ । सुवातम्नि महाभाग ऽयशीतिमितकेऽभवत् ॥ ८६ ॥
शूद्रः प्राक्संभवे वैश्यो जातोऽसावत्र जन्मनि । चतुरशीतिके शीघ्रपूर्णा सूत्प्राग्भवे सुत ॥ ८६ ॥
स सूतो ब्राह्मणश्चासावम्बष्ठश्चात्रसंभवे । सुधामये महाबाहो पचाशीतिमितेऽभवत् ॥ ८७ ॥
पादजः प्राग्भवे त्वत्र बाहुजः कथितस्त्वसौ । षडशीतिमिते नाम्नि सुघोमे प्राग्भवे ह्यभूत् ॥८८॥
ब्राह्मणो बाहुजः पश्चाद्वैश्योऽसावत्र जन्मनि । बाहुजः प्राग्भवे ह्यासीत् क्षत्रियश्चात्र जन्मनि॥८९॥
सुधाम्यूरवसंज्ञे तु सप्ताशीतिमितेऽण्डज । जडाशुसंज्ञकेऽत्यष्टाशीतिसंख्ये बभूव तु ॥ ९० ॥
शूद्रः प्राक्संभवे त्वत्र संभवे सकरस्त्वसौ । नराशीतिमिते सूत जडरम्यभिधेऽभवत् ॥ ९१ ॥
वैश्यः प्राग्जनुषि त्वत्र जातो बन्दिजनस्त्वसौ । जडोत्साख्ये नवतिके प्रागासीदुरजोऽण्डज॥९२॥
जन्मन्यत्र महाबाहो ब्राह्मणः कथितस्त्वसौ । काढ्ये नवतिसंख्ये प्रागासीत् क्षात्रकुलोद्भवः॥९३॥
पुनर्जन्मनि वै विप्रः शूद्रश्चात्र जडाशुजे । क्षत्री पूर्वभवे सूतश्चारणश्चात्र जन्मनि ॥ ९४ ॥
केतुप्राप्ताभिधे ह्याढ्ये नवत्याख्ये च पुत्रक । ज्याढ्ये नवतिसंख्ये प्राक्संभवेऽभूत् खगाधिप॥९५॥
तुपाराशो वणिग्विप्रो जातोऽसावत्र जन्मनि । चतुर्युक्ते नवत्याख्ये केतुभुक्ते पुराभवत् ॥ ९६ ॥
संसूतो ब्राह्मणश्चायमत्र जन्मनि वै द्विजः । पंचोने शतसंख्ये तु तुषारांशे पुराभवे ॥ ९७ ॥
आसीत् क्षात्रकुलोत्पन्नो जन्मन्यत्र वणिक्सुतः । पण्णवतिमिते शूद्रस्त्वभवत्पूर्वजन्मनि ॥ ९८ ॥
शीतभानौ महाभाग सूतश्चात्रैव जन्मनि । क्षत्री पूर्वभवे सूत ह्यनवत्रात्र बाहुजः ॥ ९९ ॥
लक्ष्मीनन्द्यौ खगश्रेष्ठ न्यूने शतमिते ह्यसौ । द्व्यूने शतमिते ह्यासीत्सिन्धुजे प्राग्भवेऽण्डज॥१००॥
शूद्रः क्षत्री पुनर्जातो जन्मन्यत्र भवेद्विज । न्यूने शतमिते वत्स श्वेतभानौ पुराभवे ॥ १०१ ॥
बभूव बाहुजो जातश्चात्र मूर्धाभिषिक्तकः । शतसंख्येऽभवद्वैश्य प्राग्भवे विनतात्मज ॥ १०२ ॥

## वयोनिर्णयः ।

जडभानावसावत्र पादजः परिकीर्तितः । एकोत्तरशते सूत पादजश्चाभवत्पुरा ॥ १०३ ॥
शुद्धमानौ तथा चात्र संभवे बाहुजस्त्वसौ । द्व्याढ्ये शतमिते पूर्वजन्मन्यासीच्च बाहुजः ॥१०४॥
ब्राह्मणः कथितस्त्वत्र संभवेऽसौ समुद्भवे । हिमभानौ महाभाग त्र्याढ्ये शतमिते ह्यभूत् ॥ १०५ ॥
द्विजः पूर्वभवे चासावत्र जन्मनि पादजः । शूद्रः प्राक्संभवे चासीच्छूद्रोऽप्यत्रैव जन्मनि ॥१०६॥
चतुर्युतशते त्वत्र नाम्नि सागरजे त्वसौ । पंचोत्तरशते सूत श्रीनन्द्यौ पूर्वजन्मनि ॥ १०७ ॥
बभूव वैश्योऽसौ जीवो बाहुजश्चात्र जन्मनि । षड्युक्ते शतसंख्ये प्राग्बाहुजः पूर्वसंभवे ॥१०८॥
पुनरासीद्द्विजः सूत बाहुजश्चात्र जन्मनि । सप्तोत्तरशते नाम्नि मासगर्भे पुराभवत् ॥ १०९ ॥
बाहुजः कथितो जन्तुरत्र जन्मनि पादजः । अष्टोत्तरशते सूत कुमुदेशेऽभवत्पुरा ॥ ११० ॥
ब्राह्मणश्चात्र जनुषि बाहुजः परिकीर्तितः । एतत्सर्वमुपाख्यातमुत्तमाधममध्यमम् ॥ १११ ॥
जातिस्वरूपं जीवानां पश्चात्किं कथयामि ते ॥ ११२ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाके जातिस्मरणवयोनिर्णयाध्यायः पञ्चमः ॥ ५ ॥

---

अरुण उवाच ।

सर्वसाक्षिन्खिलेकेश देवदेवनमस्कृत । जीवात्म वयसो ज्ञानं कथं ज्ञेयं मयाऽधुना ॥ १ ॥

---

१ जडाशुभे–ख्पु०। २ च नै द्विज –ख्पु०। ३ श्रीनिधौ–ख्पु०।

श्रीसूर्य उवाच।

बाल्यावस्थां संप्राप्य जीवोऽयं प्राग्भवेऽण्डज। चक्रे शुभाशुभं यत्र योः प्राप्तोऽत्र प्रयच्छति॥२॥
ताः सर्वा भूमिजेभ्यस्तु वक्ष्यामि त्वां पतत्रिण। पूर्वजन्मनि जीवोऽसौ चक्राख्ये प्रथमे कुजे॥३॥
बाल्ये शुभाशुभं चक्रे बाल्ये चात्र प्रयच्छति। प्रागारसंज्ञके भौमे द्वितीये कृतवानयम्॥ ४॥
शुभाद्यं खलु कौमारे यून्यत्र पृच्छति स्वयम्। सदाद्यं प्राकृतं सूत बाल्ये क्रूरदृगभिधे॥ ५॥
कौमारेऽत्रैव वयसि पृच्छति स्वं मनोरथम्। आवनेये चतुर्थे प्राग् यूनि सर्वं यदर्जितम्॥६॥
जीवेन स्वेच्छया सूत मध्ये पृच्छति सांप्रतम्। अथो क्षितिसुते बाल्येऽकारि सर्वं परे भवे॥७॥
स्वयं पृच्छति वार्द्धक्ये पूर्वकर्मविचेष्टितम्। षष्ठे पृथ्वीसुते नाम्नि मध्ये प्रागर्जितं च यत्॥ ८॥
स्वेच्छया विहिताद्यं तु यून्यत्रापि प्रपृच्छति। कुसुते पूर्वजनुषि सदाद्यं कृतवानसौ॥ ९॥
कैशोर्ये त्वत्र कैशोर्ये स्वयं पृच्छति यत्नतः। भूम्यात्मजे महाभाग प्रागकारि शुभाशुभम्॥१०॥
मध्ये वयसि जीवोऽयं मध्ये प्रष्टाऽत्र जन्मनि। पूर्वकर्माश्रितं सर्वं तत्र पृच्छति सांप्रतम्॥ ११॥
कौमारे भूमिजे यच्च यून्ययं कृतवान् पुरा। क्रूराक्षसंज्ञके भौमे दशमे विनतात्मज॥ १२॥
वृद्धो यदर्जितं कर्म बाल्येऽत्र प्रष्टुमुद्यतः। धरासुते पुरा सूत कौमारे कृतवानसौ॥ १३॥
वार्द्धक्येऽत्रैव जनुषि परिपृच्छति वाञ्छितम्। पूर्वजन्मनि जीवोऽसौ यच्चक्रे यौवनेऽण्डज॥ १४॥
यौवनेऽर्कमिते त्वत्र धरासूनौ प्रपृच्छति। जीवेनानेन यत्पूर्वं कृतं यूनि शुभाशुभम्॥ १५॥
क्रूरलोचननाम्न्यत्र बाल्ये प्रष्टुं समुद्यतः। चतुर्दशे धराजे प्रागकारि गरुडाग्रज॥ १६॥
यत्कर्म वृद्धो जीवोऽयं वृद्धो पृच्छति जन्मनि। धरात्मजे तु प्राग्यूनि कृतवान् यच्छुभाशुभम्॥१७॥
यौवने सांप्रतं सर्वं जीवः पृच्छति च स्वयम्। क्रूरनेत्रे पुरा वृद्धो यदकारि शुभाशुभम्॥ १८॥
मध्ये प्रष्टाऽत्र जनुषि जीवोऽयं स्वेच्छयाऽनिशम्। भूजाभिधे सप्तदशे चकार प्राक्शुभाशुभम्॥ १९॥
कौमारे मध्यवयसि जीवः पृच्छां करोत्यसौ। क्रूरचक्षुषि यच्चक्रे सदाद्यं शैशवे पुरा॥ २०॥
तन्मध्यमे स्वचरितं सांप्रतं परिपृच्छति। पृथ्वीजनाम्नि भौमे प्राग्यदकारि शुभाशुभम्॥ २१॥
कौमारे बालभावेऽत्र तत्सर्वं प्रष्टुमुद्यतः। रुधिराख्ये पुरा भौमे मध्येऽकारि यदिच्छया॥ २२॥
बाल्ये पृच्छति यत्सर्वमत्र विंशन्मितेऽण्डज। भूपुत्रेऽकारि यद्वृद्धावेकविंशन्मिते पुरा॥ २३॥
यूनि च पृच्छको यूनि सांप्रतं प्रष्टुमुद्यतः। प्राक्संभवे कुजाख्ये तु मध्यभावे यदर्जितम्॥ २४॥
प्रश्नं करोति यत्प्रष्टा कौमारेऽत्र पतत्रिण। मङ्गले मङ्गलाद्यं तु जरायां प्राकृतं च यत्॥ २५॥
यौवने चात्र जनुषि तत्सर्वं परिपृच्छति। चतुर्विंशन्मिते सूत क्षितिसूनौ पुरा कृतम्॥ २६॥
मध्येऽत्र जनुषि प्राप्ते जरसि प्रष्टुमुद्यतः। पूर्वजन्मनि यच्चक्रे प्राप्ते स्वङ्गारके ह्ययम्॥ २७॥
यूनि वृद्धो पुनर्यूनि प्रष्टात्र कृतकर्मणाम्। कुसंभवे पुरा सूत शुभाद्यं यदि यत्कृतम्॥ २८॥
परिपृच्छति जीवोऽयं वार्द्धक्ये चात्र जन्मनि। प्राग्भवे भूमिजाते यत्कृतवान् यौवने पुनः॥२९॥
कौमारे वयसि प्राप्ते वार्धक्ये पृच्छकोऽधुना। रक्ताङ्गसंज्ञके त्वष्टा विंशत्संख्ये पतत्रिण॥ ३०॥
यच्चक्रे बालभावे प्राग् बाल्ये प्रष्टात्र जन्मनि। कूनात्रिंशन्मिते ह्यारे कौमारे पूर्वजन्मनि॥३१॥
कृतवानत्र तत्सर्वं यौवने परिपृच्छति। उग्राभिधे तु बाल्यायामवस्थायां परे भवे॥ ३२॥
यदर्जितं तु कौमारे पृष्टवानत्र सांप्रतम्। क्षोणीजेऽत्रैव जनुषि मध्येऽसौ पृच्छति स्वयम्॥ ३३॥
यच्चक्रे यौवने सूत सदाद्यं परसंभवे। ज्यासूनौ बालभावे प्राक् शुभाशुभमुपार्जितम्॥ ३४॥

---

१ कर्म चात्र प्रयच्छति—म्पु०। २ चक्राख्ये—स्पु०। ३ चात्र प्रष्टुं समुद्यतः—म्पु०।

तस्य सर्वस्य प्रष्टायमत्र जन्मनि यौवने । इलापुत्रे पुरा चक्रे मध्ये वयसि चाण्डज ॥ ३५ ॥
तत्सर्वं यौवने प्राप्ते सांप्रतं प्रष्टुमुद्यतः । चतुस्त्रिंशन्मिते कर्म यच्च क्षितिभवे पुरा ॥ ३६ ॥
कैशोर्ये कृतवानत्र कौमारे परिपृच्छति । भूसूनौ मध्यवयसि पंचत्रिंशन्मितेऽण्डज ॥ ३७ ॥
प्रागर्जितं मध्यभावे तस्य प्रष्टाऽत्र जन्मनि । षट्त्रिंशन्मितके क्रूरनयने यौवने पुरा ॥ ३८ ॥
यदर्जितं शुभाद्यं तत्कौमारे परिपृच्छति । उर्वीजाख्ये जरायां प्राक् शुभाद्यं कृतवानसौ ॥ ३९ ॥
बालभावे च तत्सर्वं पृच्छति स्वमनोगतम् । कुपुत्रे पूर्वजनुषि कौमारे प्रश्नमर्जितम् ॥ ४० ॥
वृद्धौ शुभाद्यं तत्सर्वं पृष्टवानस्ति सांप्रतम् । चत्वारिंशन्मिते क्रूने प्राक् पृथ्वीसुतसंज्ञके ॥ ४१ ॥
यत्सदाद्यमसौ चक्रे यूनि यून्यत्र पृच्छति । क्षमासुते युवभावे पूर्वजन्मार्जितं सुत ॥ ४२ ॥
शैशवे तत्समस्तस्य प्रष्टाऽस्य गरुडाग्रज । रसात्मजे पुरा सर्वं सदाद्यं कृतवानसौ ॥ ४३ ॥
वार्द्धक्ये जरसि प्राप्ते सर्वं प्रश्नं करोत्यसौ । प्राग्भावे त्वचलाजेऽयं बाल्ये चक्रे यदिच्छया ॥ ४४ ॥
शुभाशुभं यदत्रैव यौवने परिपृच्छति । लोहिताङ्गे पुरा सूतं यत्कृतं सदसत्पुरा ॥ ४५ ॥
वार्द्धक्ये मध्यभावेऽत्र सर्वं प्रश्नं करोत्यसौ । चत्वारिंशन्मिते भूव चतुर्युक्ते महीभवे ॥ ४६ ॥
कौमारे कृतवान् य प्राङ् मध्ये संप्रति पृच्छति । पिङ्गलाख्ये पुरा वत्स बालभावे शुभाशुभम् ४७
यत्कृतं तस्य प्रष्टाऽयं मध्यभावेऽत्र जन्मनि । रसापुत्रेऽत्र जनुषि बाल्ये पृच्छति च स्वयम् ॥ ४८ ॥
कुमारवयसि प्राप्ते यच्चक्रेऽसौ शुभाशुभम् । चत्वारिंशन्मिते पूर्वे सप्तयुक्ते च मध्यके ॥ ४९ ॥
मेदिनीजे कृतं कर्म बाल्येऽयं प्रष्टुमुद्यतः । पृथ्वीसूनौ पुरा वृद्धौ कृतवान् सदसत्सुत ॥ ५० ॥
स्वयं यून्यत्र जनुषि परिपृच्छति यत्नतः । पञ्चाशत्संख्यके क्रूने क्ष्माजे मध्ये पुरा कृतम् ॥ ५१ ॥
शुभाद्यं पृष्टवानस्ति जन्मन्यत्र कुमारके । महीभवे पुरा वृद्धो पुनर्यूनि शुभाशुभम् ॥ ५२ ॥
यच्चक्रे यौवने स्वत्र प्रष्टाऽयं गरुडाग्रज । क्षोणीसुतेऽकुपञ्चाशत्संख्यके पूर्वजन्मनि ॥ ५३ ॥
मध्यभावेऽर्जितं वृद्धौ चात्र प्रश्नं करोत्यसौ । द्विपञ्चाशन्मिते भौमे वृद्धौ प्रागर्जितं च यत् ॥ ५४ ॥
सदाद्यमधुना सूत कौमारे परिपृच्छति । ज्यासुते भौमने सर्वं सदाद्यं कृतवानसौ ॥ ५५ ॥
पृष्टवानस्ति तत्सर्वं जरायामत्र जन्मनि । इलाजनाम्नि प्राग्यूनि कौमारे पुनरप्ययम् ॥ ५६ ॥
यच्चक्रे सदसत्कर्म वृद्धौ प्रष्टाऽत्र जन्मनि । कुभवे बालभावे प्राक् कृतं यच्च शुभाशुभम् ॥ ५७ ॥
बालभावेऽधुना सूत परिपृच्छति चेच्छया । क्ष्मानन्दने पुरा सर्वमर्जितं यत्कुमारके ॥ ५८ ॥
तदत्र जनुषि प्राप्ते युवभावे प्रपृच्छति । कुसूनुसंज्ञके सप्तपञ्चाशन्मितके पुरा ॥ ५९ ॥
बालभावे कृतं चात्र यूनि प्रश्नं करोत्यसौ । पञ्चाशदष्टमितके पृथ्वीपुत्रे शुभप्रदे ॥ ६० ॥
यौवने कृतवान् यच्च मध्येऽसौ प्रष्टुमुद्यतः । एकोनषष्टिसंख्ये प्राग्बालभावे रसाभवे ॥ ६१ ॥
चक्रे सदाद्यं यत्सर्वं जरायां पृष्टवानिह । क्षौणेये षष्टिसंख्ये प्राङ् मध्यभावे यदर्जितम् ॥ ६२ ॥
युवभावेऽत्र जनुषि परिपृच्छति चाण्डज । क्रूरेक्षणे ह्युपचितं पुरा सर्वं शुभाशुभम् ॥ ६३ ॥
तारुण्येऽप्यत्र कैशोर्ये प्रष्टाऽसौ गरुडाग्रज । द्विषष्टिमितके भूमिसूनौ प्राक् समयेऽत्र च ॥ ६४ ॥
मध्ये यदर्जितं सर्वं मध्यमे पृच्छको ह्यसौ । क्षित्यात्मजे पुरा यूनि शुभं वाशुभमर्जितम् ॥ ६५ ॥
यत्तत्पृच्छत्यसौ जीवः कौमारेऽत्र जन्मनि । चतुःषष्टिमिते वृद्धौ यत्कृतं प्राग् धराभवे ॥ ६६ ॥
पृष्टवानस्ति तस्यात्र कर्मणः शैशवे फलम् । भूसुते प्राग्भवे सूत कौमारे कृतवानसौ ॥ ६७ ॥

१ इलानाम्ये–म॰पु॰। २ प्रागेऽयम्–म॰पु॰। ३ स्वय पृच्छति–म॰पु॰।

यत्कर्म तस्य प्रष्टाऽयं जरायामत्र जन्मनि । ज्ञापुत्रसंज्ञके पूर्वे यच्चक्रे यौवने शुभम् ॥ ६८ ॥
पापं वा काश्यपेयात्र यौवने परिपृच्छति । महीसूनौ पुरा सर्वमार्जितं यौवनेऽधुना ॥ ६९ ॥
बालभावे महाभाग तस्य पृच्छां करोत्यसौ । कुनन्दने पूर्वभवे शुभाद्यं यच्च सूचितम् ॥ ७० ॥
जरायामत्र जनुषि वार्द्धक्ये पृच्छको ह्ययम् । कूनसप्ततिमे पूर्वे माहेये कृतवानसौ ॥ ७१ ॥
बाल्येऽत्र यूनि वयसि स्वेच्छया परिपृच्छति । प्राग्भूमितनये सर्वं जरायां समुपार्जितम् ॥ ७२ ॥
मध्यमे वयसि प्राप्ते पृष्टवानस्ति सांप्रतम् । उर्वीसूनौ पुरा सर्वं शुभाद्यं यदुपार्जितम् ॥ ७३ ॥
कौमारेऽथैव वयसि मध्ये प्रश्नं करोत्यसौ । स्थिरात्मजे पूर्वजन्मन्यशुभं वा शुभं च यत् ॥ ७४ ॥
बालभावेऽर्जितं त्वथ मध्यमे प्रष्टुमुद्यतः । महीसुते यत्कौमारे कृतवानिच्छया पुरा ॥ ७५ ॥
बालभावे च तत्सर्वं परिपृच्छति चाण्डज । चतुःसप्ततिमे मध्ये यच्चक्रे क्ष्मासुते पुरा ॥ ७६ ॥
पृष्टवानस्ति तत्सर्वं बालभावेऽत्र जन्मनि । स्थिराभवे पुरा सूत पंचसप्ततिसंख्यके ॥ ७७ ॥
यत्कर्म कृतवान् वृद्धो यूऽयत्र प्रष्टुमुद्यतः । रसासुते प्राङ्मध्ये यत्कृतं कर्म सदादिकम् ॥ ७८ ॥
कौमारे स्वेच्छया तस्य पृच्छकः सांप्रतं ह्यसौ । सप्तसप्ततिमे वृद्धायुर्वीपुत्रे पुराभवे ॥ ७९ ॥
पुनर्यूनि कृतं कर्म यौवनेऽत्र प्रपृच्छति । इलाभवे पुरा सर्वं मध्यमे यत्समर्जितम् ॥ ८० ॥
जरायामत्र जनुषि सर्वं प्रश्नं करोत्यसौ । कूने भूतनयेऽशीतिमिते जरसि यत्कृतम् ॥ ८१ ॥
कौमारे वयसि प्राप्ते प्रष्टाऽयं चात्र जन्मनि । ज्यात्मजेऽशीतिसंख्ये प्राग्युवभावे यदर्जितम् ॥ ८२ ॥
सर्वं तत्कर्मणः पाकं वृद्धो पृच्छां करोत्यसौ । ततो भूमिसुते पूर्वभवे सर्वमुपार्जितम् ॥ ८३ ॥
कौमारे सदसत्सूत वृद्धो पृच्छति सांप्रतम् । बालभावेऽर्जितं कर्म स्वेच्छया विनतात्मज ॥ ८४ ॥
प्राग्भवे शैशवे चात्र कुभवे परिपृच्छति । द्व्यशीतिमितके नाम्नि क्षितिपुत्रे पुराऽण्डज ॥ ८५ ॥
कौमारे कृतवान् कर्म यौवने प्रष्टुमुद्यतः । इलात्मजे पुरा सूत यच्चक्रे शुभमन्यथा ॥ ८६ ॥
शैशवे चात्र कौमारे सर्वं प्रश्नं करोत्यसौ । पंचाशीतिमिते सूत भूमिपुत्रे पुरार्जितम् ॥ ८७ ॥
यौवने सदसत्कर्म मध्ये प्रष्टाऽत्र जन्मनि । क्षोणीसूनौ पुरा बाल्ये शुभं वाशुभमार्जितम् ॥ ८८ ॥
युवभावे च तत्सर्वमत्र प्रष्टुं समुद्यतः । सप्ताशीतिमिते नाम्नि रसाजे प्राग्भवेऽण्डज ॥ ८९ ॥
यच्चक्रे सदसन्मध्ये यूनि प्रष्टाऽत्र जन्मनि । क्ष्मापुत्रे प्राग्भवे सर्वं कौमारे यदुपार्जितम् ॥ ९० ॥
कैशोर्ये चात्र जनुषि परिपृच्छति चेच्छया । कूने नवतिसंख्ये प्रागर्जितं यत्पुराण्डज ॥ ९१ ॥
मध्ये प्राप्ते स्थिरासूनौ मध्ये प्रश्नं करोत्यसौ । रसासूनौ कृतं यच्च यौवने पूर्वजन्मनि ॥ ९२ ॥
सदाद्यं तस्य प्रष्टाऽयं कौमारे गरुडाग्रज । उर्वीसुनौ कुनवतिमिते प्राग्जरसि कृतम् ॥ ९३ ॥
यच्छुभाद्यं च तत्सर्वं शैशवे प्रष्टुमुद्यतः । अथो भूमिसुते पूर्वं कौमारे कृतवांश्च यत् ॥ ९४ ॥
वार्द्धक्ये पृच्छकश्चासौ जन्मन्यत्र पतत्रिण । यच्चक्रे यौवने कर्म प्राग्भवे च शुभाशुभम् ॥ ९५ ॥
क्षोण्यात्मजेऽत्र नवतित्रियुते यूनि पृच्छति । ज्याभवे यत्पुरा यूनि कृतवान् पृच्छको ह्यसौ ॥ ९६ ॥
सदाद्यं तत्समस्तं तु बाल्येऽत्र प्रष्टुमुद्यतः । क्षितिजे पंचनवतिमिते प्राग्जरसि कृतम् ॥ ९७ ॥
यद्यच्छुभाशुभं सूत वृद्धो प्रष्टात्र जन्मनि । षण्णवत्या मिते पूर्वं महीपुत्रे यदर्जितम् ॥ ९८ ॥
बाल्ये शुभाशुभं यूनि स्वेच्छया परिपृच्छति । ऊने शतमिते यत्प्राक् क्ष्मासुते कृतवानसौ ॥ ९९ ॥
वृद्धभावेऽत्र जरसि स्वेच्छया पृच्छतेऽण्डज । नवत्यष्टयुते पूर्वं चक्रे चोर्व्यात्मजे शुभम् ॥ १०० ॥
पापं वा सूत कौमारे मध्येऽत्र प्रष्टुमुद्यतः । नवत्यष्टयुते भूजे त्वर्जितं शुभमन्यथा ॥ १०१ ॥

१ जनुषि-खपु०।

मध्यमे वयसि प्राप्ते प्रष्टायं चात्र जन्मनि। मद्यात्मजे प्राक्कौमारे शतसंख्ये कृतं च यत् ॥१०२॥
शुभाय शैशवेऽत्रैव पृष्टवानस्ति काश्यप । उर्वीभवे कुयुक्ते प्राग्यौवने शतसंख्यके॥ १०३॥
यच्चक्रे सदसत्तस्य यूनि प्रष्टाऽयमण्डज । वृद्धो यदर्जितं कर्म द्वियुक्ते शतसंख्यके ॥ १०४ ॥
प्राग्भवे पृच्छकश्चात्र यूनि भूमिभवेऽण्डज । अरुणाह्वे पुरा सर्वं शुभार्थं कृतवांश्च यत् ॥ १०५ ॥
मध्ये वयसि संप्राप्ते कौमारे पृच्छति स्वयम् । चतुष्काढ्यशते ज्याजे प्राक्कृतं जरसि ध्रुवम् १०६
पुनर्यूनि शुभार्थं च यदसौ पृच्छकोऽधुना । क्षोणीजाते पुरा सूत मध्ये यदत्रसमर्जितम् ॥ १०७॥
प्रष्टायं कर्मणस्तस्य वृद्धो संमते चाण्डज । षड्युते शतसंख्ये प्राग् यच्चक्रे शुभमन्यथा॥१०८॥
रक्ताक्षे जनुषि प्राप्ते कौमारेऽत्र प्रपृच्छति । अरुणाक्षे पुरा यूनि यत्कृतं स्वेच्छयाण्डज ॥१०९॥
युवभावेऽत्र जनुषि पृच्छकः पूर्वकर्मणाम् । अष्टयुक्ते शते रक्तचक्षुःसंज्ञे पुराभवे ॥ ११० ॥
यच्चक्रे यूनि कौमारे त्वत्र वृद्धो प्रपृच्छति । बाल्ये द्वादशवर्षान्तः किशोरो द्विगुणस्तथा ॥१११॥

अथ बाल्याद्यवस्थामाह-

द्व्यूनपञ्चाशदब्दान्तस्तरुणः परिकीर्तितः। पञ्चषष्टिमिताब्दान्तो मध्यमः कथितोऽण्डज॥११२॥
तत्परो जीवनान्तस्तु वृद्धो ज्ञेयो मनीषिभिः । एतत्ते कथितं सर्वं वयोमानं नृणां सुत ॥११३॥
रक्षणीयं सदा विज्ञैः पुनः किं परिपृच्छसि ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाके वयोनिर्णयाध्यायः षष्ठः ॥ ६ ॥

---

अरुण उवाच ।

नामभिर्बहुभिर्भद्रा बुधाद्य दिवसेश्वर । नाम्ना केनात्र विज्ञेयास्त्रियाः स्त्रीपुंनपुंसकाः ॥ १ ॥

श्रीसूर्य उवाच-

स्त्रीपुंनपुंसके भावे संभूतः प्राग्यथाचरन् । जीवोऽयमत्र जनुषि यत्र रूपे व्यवस्थितः ॥ २ ॥
तत्स्वरूपान्महाबाहो पापपुण्यसमुद्भवान् । वक्ष्येऽहं क्रमतो यत्नाद् बुधादिभ्योऽत्र जन्मनि॥ ३ ॥
पूर्वजन्मनि जीवोऽसौ प्रथमे बुधसंज्ञके । बभूव पुरुषः सूत जन्मन्यत्रास्ति वै नरः ॥ ४ ॥
ज्ञसंज्ञके द्वितीये प्राग्जन्मनि स्त्री पतत्रिण । स्त्री बभूव पुनर्जन्मन्यत्र नारी च जन्मनि ॥ ५ ॥
आसीत्प्राक्तत्संभवे नारी तृतीये रजनीशजे । सर्वसाधनतत्त्वज्ञः पुरुषश्चात्र जन्मनि ॥ ६ ॥
विन्नाम्नि पूर्वजनुषि ह्यभूत् षण्ढश्चतुर्थके । नररूपधरः पश्चादस्त्यत्रापि नपुंसकः ॥ ७ ॥
चान्द्रिरूपाते पुरा षण्ढो बभूव विनतात्मज । पूर्वपापादयं चास्ति सांप्रतं वै नपुंसकः ॥ ८ ॥
षष्ठे हिमांशुजे सूत प्राग्भवे ना ह्यभूदयम् । पुनर्जन्मनि वै षण्ढे वनितात्रैव जन्मनि ॥ ९ ॥
सप्तमे बोधनाख्ये तु पूर्वजन्मन्यभूत्पुमान् । वनितात्र जनुषि जीवोऽयमास्ति चाण्डज ॥ १० ॥
पूर्वं चन्द्रसुते सूत बभूव वनिताष्टमे । पूर्वजन्मनि वै नारी पुरुषोऽस्त्यत्र जन्मनि ॥ ११ ॥
सोमाख्ये नवमे जीवः पुरुषोऽभूत्तथाण्डज । जनुष्यत्राप्यसौ षण्ढो जातः पापविशेषतः ॥ १२ ॥
अथेन्दुभवसंज्ञे प्राग्दशमे वनिता पुनः । सभवे योषिता सूत सांप्रतं च नपुंसकः ॥ १३ ॥
सुधांशुजे रुद्रांके षण्ढः पूर्वभवेऽभवत् । अत्र जन्मन्यसौ जीवः पुरुषोऽस्ति पतत्रिण ॥ १४ ॥
वत्स सोमात्मजे नाम्नि द्वादशे प्राङ् नरो ह्यभूत् । पुनर्जन्मन्यसौ नारी पुरुषश्चात्र जन्मनि॥१५॥
शशाङ्कपुत्रे नार्यासीत् प्राग्भवे तु त्रयोदशे । नपुंसकोऽत्र जनुषि विनतानन्दवर्धन ॥ १६ ॥

---

१क्षमाजे-स्पु०। २ अ ाग्ज-स्पु० ।

नपुंसकः पुरा सूत ग्लौसुते च चतुर्दशे । पुनर्योषा पुनर्नारी जन्मन्यत्र विनिर्णयात् ॥ १७ ॥
पंचयुक्ते दशमितेऽब्जभवे पूर्वजन्मनि । योषिदासीत्पुनर्नारी जन्मन्यत्र पतत्रिण ॥ १८ ॥
शुभ्रांशुपुत्रे ह्यभवत्प्राङ्नारी पुनरप्यसौ । पुरुषश्चात्र जनुषि वनिता विनतात्मज ॥ १९ ॥
पण्ढः प्राक्संभवे सूत सुधांशुसुतसंज्ञके । दशसप्तमिते नारी जाताऽसौ चात्र जन्मनि ॥ २० ॥
इंदुजेऽष्टादशे पण्ढः पूर्वजन्मन्ययं पुनः । नपुंसकोऽत्र जनुषि पुरुषश्चास्ति काश्यप ॥ २१ ॥
सोमपुत्रे नरोऽभूत्प्राक्पुरुषश्च पुनर्भवे । एकोनविंशतिमिते पण्ढश्चात्रैव जन्मनि ॥ २२ ॥
ग्लौभवे पूर्वजन्मन्यसौ पण्ढो ह्यभवत्सुधीः । विंशन्मिते महाभाग पुरुषस्त्वत्र जन्मनि ॥ २३ ॥
शुभ्रांशुसूनौ वनिता प्राग्भवे ना पुनर्भवे । तृतीये संभवे नास्ति काढ्ये विंशन्मितेऽण्डज ॥ २४ ॥
द्वाविंशन्मितके पालपीतजे पूर्वजन्मनि । पुरुषोऽयमभूत्पुत्री वनिता चात्र जन्मनि ॥ २५ ॥
विधुपुत्रे त्रयोविंशे पूर्वजन्मनि मानद । पुरुषोऽयं पुनः पण्ढश्चासीदत्रैव संभवे ॥ २६ ॥
चतुर्विंशन्मिते चेन्दुसंभवे परजन्मनि । नपुंसकोऽयमभवद्वनितात्रैव संभवे ॥ २७ ॥
अब्जपुत्रे महाभाग पञ्चविंशतिसंमिते । प्राङ् नारी क्लीवसंज्ञश्च बभूवात्र पुनर्नरः ॥ २८ ॥
शशाङ्कसूनौ षड्विंशन्मिते प्राक्पुरुषोऽभवत् । जन्मन्यत्र पुमानस्ति विनतानन्दवर्धन ॥ २९ ॥
रौहिणेये पुरा पण्ढः सप्तविंशात्मके पुनः । बभूव पण्ढो जीवोऽयमिदानीं वनिताण्डज ॥ ३० ॥
अष्टाविंशन्मिते ग्लाहन्यसंभवे गरुडाग्रज । पूर्वजन्मन्यभून्नारी पुरुषश्चात्र जन्मनि ॥ ३१ ॥
ततः शशाङ्कजे ह्यासीत्कूने त्रिंशन्मिते पुरा । पुरुषो नर एव प्राक्संभवे सांप्रतं नरः ॥ ३२ ॥
रात्रीशपुत्रे प्राक् त्रिंशन्मितके गरुडाग्रज । वनितासीत्पुरा नारी जातासौ भर्तृवल्लभा ॥ ३३ ॥
शीतरश्मिभवे पुत्र बभूव प्राङ् नपुंसकः । नारी परभवे विज्ञा पुरुषोस्त्यत्र जन्मनि ॥ ३४ ॥
क्षपेशपुत्रे प्रागासीत्पुरुषोऽप्यत्र जन्मनि । नपुंसको महापापात्पूर्वजन्मकृतात्सुत ॥ ३५ ॥
त्रित्रिंशन्मितके पूर्वभवे सूत द्विजेशजे । ना बभूव पुनर्नारी पुनः पण्ढोऽत्र जन्मनि ॥ ३६ ॥
क्षपाकरसुते पण्ढश्चतुस्त्रिंशन्मिते ह्यभूत् । पूर्वजन्मनि पक्षीन्द्र जन्मन्यत्र नपुंसकः ॥ ३७ ॥
वत्स चन्द्रभवे ह्यासीत्पुरुषः पूर्वसंभवे । स्त्री पुनः संभवे चैव वनिताप्यत्र संभवे ॥ ३८ ॥
पुनरैन्दवसंज्ञे प्राक् षट्त्रिंशन्मितकेऽण्डज । वनिता प्राग्भवे जन्मन्यत्रैवास्ति नपुंसकः ॥ ३९ ॥
पूर्वजन्मनि पक्षीन्द्र पण्ढो विधुसुते ह्यभूत् । नारी पुनर्भवे क्लीवः सर्वधर्मबहिष्कृतः ॥ ४० ॥
सुधांशुसंभवे द्व्यूने चत्वारिंशन्मिते पुरा । बभूव पुरुषः सूत सांप्रतं पुरुषस्त्वसौ ॥ ४१ ॥
कूने शुभ्रांशुजे चत्वारिंशत्संख्ये पतत्रिण । वनिता प्राग्भवे क्लीवः पुनरस्ति नपुंसकः ॥ ४२ ॥
पण्ढोऽब्जसूनौ प्राक्सूत चत्वारिंशन्मितेऽभवत् । वनितावेषधृक्चास्ति जीवोऽयं त्वत्र जन्मनि॥४३॥
सोमजे पक्षिशार्दूल कुचत्वारिंशके पुरा । पुमान् पण्ढः पुनर्जन्मन्यस्त्यसौ पुरुषोऽत्र च ॥ ४४ ॥
चत्वारिंशन्मिते द्व्याढ्ये ग्लौपुत्रे प्राङ् नपुंसकः । जन्मन्यत्र महाभाग पुरुषोऽस्ति पतत्रिण॥४५॥
शशाङ्कपुत्रे त्रियुते चत्वारिंशन्मितेऽण्डज । प्राग्योषाभूत्पुनः पण्ढश्चात्र जन्मनि वै नरः ॥ ४६ ॥
रोहिणीजे महाभाग पूर्वजन्मन्यसौ भवेत् । पुरुषो वनितावेषी जन्मन्यत्र परिस्फुटः ॥ ४७ ॥
ग्लासूनौ पुरा ह्यासीज्जीवोऽयं च नपुंसकः । पुरुषश्च परे जन्मन्यत्र जन्मनि योषिता ॥ ४८ ॥
हिमांशुसूनौ षड्युक्ते चत्वारिंशन्मितेऽण्डज । वनिता प्राग्भवे ह्यासीदत्र जन्मनि योषिता ॥४९॥

१ पण्ढो जातश्चात्रैव—खपु० ।

श्वेतांशुपुत्रे सप्ताढ्ये चत्वारिंशन्मिते पुरा । पुरुषः पुरुषश्चासीद्वनिता चात्र जन्मनि ॥ ५० ॥
शशाङ्कसूनौ द्व्यूने प्राक् पञ्चाशन्मितकेऽण्डज । पूर्वजन्मन्यसौ षण्ढश्चासीत्क्लीबोऽत्र जन्मनि ५१॥
पञ्चाशत्संख्यके द्व्यूने ह्यभूच्छीतांशुजे पुरा । वनिता पुरुष पश्चात् क्लीबोप्यस्त्यत्र जन्मनि ॥५२॥
रात्रीशसंभवे सूत पञ्चाशन्मितकेऽभवत् । पूर्वजन्मन्ययं जीवः पुरुषोऽत्र नपुंसकः ॥ ५३ ॥
क्षपेशसूनौ प्रागासीत् षण्ढश्चापि परे भवे । पुरुषः पुरुषोऽप्यस्ति जन्मन्यत्र पतत्रिण ॥ ५४ ॥
पञ्चाशद्भ्यान्विते पूर्वभवे योषाऽभवत्सुत । द्विजेशपुत्रे नास्त्यत्र विनतानन्दवर्धन ॥ ५५ ॥
चन्द्रजे प्राग्भवे ह्यासीत्रिपञ्चाशन्मितेऽण्डज । पुरुषः पुरुषोऽप्यस्ति जीवोऽयं चात्र जन्मनि॥५६॥
क्षपाकरजसंज्ञे प्राग्वनिताभूत्पतत्त्रिण । चतुराढ्ये तु पञ्चाशन्मितकेऽत्रनपुंसकः ॥ ५७ ॥
पञ्चाशत्पञ्चयुक्ते प्रागभूव पुरुषोऽण्डज । चन्द्रसूनौ जनुष्यत्र नररूपधरोऽस्त्वसौ ॥ ५८ ॥
षट्पञ्चाशन्मिते सुतेन्द्वात्मजे वनिताऽभवत् । प्राग्जन्मन्यथ योषासीदत्र जन्मनि योषिता ॥५९॥
त्र्यूने षष्टिमिते जन्मन्यभूद्योषा पुराण्डज । विधुसूनावसावत्र जीवोयं नररूपधृक् ॥ ६० ॥
द्व्यूने षष्टिमिते षण्ढः पूर्वजन्मन्यभूत्पुनः । सुधांशुपुत्रे पुरुषः क्लीवश्चात्रैव जन्मनि ॥ ६१ ॥
कूनेऽब्जजे षष्टिमिते प्राग्भवेऽभूत्रपुंसकः । जन्मन्यत्र पुनः षण्ढो जातोऽसौ विनतात्मज ॥६२॥
सोमसूनौ पुरा सूत षष्टिसंख्ये भवेन्नरः । क्लीबः परभवे नारी जन्मन्यत्रास्ति सुन्दरी ॥ ६३ ॥
ग्लौजे कुषष्टिमितके पुरुषः पूर्वजन्मनि । जन्मन्यत्र महाभाग जीवोयं स्त्रीस्वरूपधृक् ॥ ६४ ॥
शशांकसुतसंज्ञे प्राग्द्विषष्टिमितके पुरा । बभूव वनिता नारी पुनरत्र च वै नरः ॥ ६५ ॥
रोहिणीपुत्रसंज्ञे प्राक् त्रिषष्टिमितके ह्यभूत् । नररूपधरो जीवः पश्चादत्र नपुंसकः ॥ ६६ ॥
ब्राह्मजे वनिता ह्यासीत्पूर्वे जन्मनि मानदः । पूर्वजन्मनि योषाभूत् क्लीवश्चात्रैव जन्मनि ॥ ६७ ॥
हिमांशुसंभवे सूत पंचषष्टिमितेऽभवत् । षण्ढः प्राक्संभवे चात्र संभवे पुरुषोऽस्त्ययम् ॥ ६८ ॥
श्वेतांशुसूनौ षट्षष्टिमिते क्लीबः पुराभवे । बभूव वनिता चापि पुरुषश्चात्र संभवे ॥ ६९ ॥
शशाङ्कात्मजसंज्ञे प्राक् सप्तषष्टिमितेऽभवत् । नारी तथात्र जनुषि षण्ढरूपधरस्त्वसौ ॥ ७० ॥
अष्टषष्टिमिते पूर्वभवे शीतांशुपुत्रके । षण्ढोऽभूद्वनिता पश्चान्नारी चात्रैव जन्मनि ॥ ७१ ॥
कूने सप्ततिसंख्ये प्राग्वनिता विनतात्मज । जन्मन्यत्रास्त्यसौ जीवः स्त्रीस्वरूपधरो भृशम् ॥७२॥
शीतरश्मिभवे पूर्वभवे सप्ततिसंमिते । बभूव नारी ना पश्चान्नारी चात्रैव जन्मनि ॥ ७३ ॥
अमृतांशुसुते सूत कुसप्ततिमिते पुरा । नपुंसको भवेज्जीवो वनिता त्वत्र जन्मनि ॥ ७४ ॥
द्विजेशसूनौ षण्ढः प्राक् द्विसप्ततिमितेऽण्डज । पुनर्जन्मन्यभूत्षण्ढः पुरुषश्चात्र संभवे ॥ ७५ ॥
द्विजराजात्मजे नाभूत् प्राक् त्रिसप्ततिसंख्यके । ना परे जनुषि प्राप्ते षण्ढश्चात्रैव जन्मनि ॥ ७६ ॥
चन्द्रपुत्रे पुरा सूत चतुःसप्ततिसंख्यके । षण्ढो बभूव जीवोऽयमत्र जन्मनि वै नरः ॥ ७७ ॥
पञ्चसप्ततिसंख्याके वनितेन्दुसुते पुरा । नरो ह्यासीत्पुमान्पश्चाज्जन्मन्यत्र पतत्रिण ॥ ७८ ॥
विधुजेऽभूत्पुमान्पूर्वं षट्सप्ततिमितेऽण्डज । वनितारूपधृक्चासावत्र जन्मनि निश्चयात् ॥ ७९ ॥
सुधांशुसूनौ प्रागासीत्र्यूनेऽशीतिमिते पुमान् । पश्चात्षण्ढोऽत्र जनुषि क्लीबोऽसौ चास्ति मानद८०॥
शुभ्रांशुसंभवे द्व्यूनेऽशीतिसंख्ये पुराभवे । नपुंसकोऽभवच्चात्र योषिता विनतात्मज ॥ ८१ ॥
अब्जात्मजे पुरा योषा कूनेऽशीतिमितेऽभवत् । नपुंसकस्तथा पश्चात्पुमानत्रैव जन्मनि ॥ ८२ ॥

---

१पापाद्य–पापु०। २ अपि–सपु०।

अथाऽशीतिमिते पूर्वभवे सोमभवेऽण्डज। बभूव पुरुषो जन्मन्यत्रायं नररूपधृक् ॥ ८३ ॥
एकाशीतिमिते सूत ग्लौसूनौ प्राग्भवेऽभवत्। नपुंसकः पुनः पण्ढो वनिता त्वत्र जन्मनि ॥ ८४ ॥
शशांकभवसंज्ञे प्राग् बभूव वनिता ह्यसौ। नररूपधरो जीवश्चात्र जन्मनि सुव्रत ॥ ८५ ॥
अथो द्व्यशीतिमितके रोहिणीसुतसंज्ञके। प्रागासीत्पुरुषः पश्चान्नरः प्रतिभवे नरः ॥ ८६ ॥
ब्राह्मात्मजे चतुर्युक्तेऽशीतिसंख्ये पुराभवे। बभूव वनिता सूत जन्मन्यत्रास्ति योषिता ॥ ८७ ॥
हिमांशुपुत्रे प्रागासीत्पश्चाशीतिमितेऽण्डज। नपुंसकः पुनर्नारी पुरुषश्चात्र जन्मनि ॥ ८८ ॥
षडशीतिमिते पूर्वभवे शीतांशुसंभवे। पुरुषोऽभूदसौ जीवो जन्मन्यत्र नपुंसकः ॥ ८९ ॥
रात्रीशसूनौ सप्ताढ्येऽशीतिसंख्ये नरोऽभवत्। पुनर्जन्मनि नारी च पण्ढः संप्रति पुत्रक ॥ ९० ॥
शीतरश्म्यात्मजे चासीदष्टाशीतिमिते पुरा। नपुंसकोऽत्र जनुषि नपुंसोऽस्ति पतत्रिण ॥ ९१ ॥
नवाशीतिमिते वत्स द्विजराजसुतेऽभवत्। पुरुषः प्राग्भवे नारी पश्चान्नार्यत्र जन्मनि ॥ ९२ ॥
चन्द्रात्मजे महाभाग नार्यभूत् प्राग्भवे पुनः। नपुंसकोऽत्र जनुषि जीवोऽयं गरुडाग्रज ॥ ९३ ॥
कुयुक्तनवतिप्रासे चन्द्रपुत्रे पुराभवे। पण्डोऽभवत्पुरा नारी पण्ढश्चात्रैव जन्मनि ॥ ९४ ॥
ग्लावात्मजेऽथ नवतिद्वियुक्ते पूर्वजन्मनि। बभूव पुरुषः सूत जन्मन्यत्र नरोऽस्त्यसौ ॥ ९५ ॥
रोहिणीसंभवे नारी पूर्वजन्मन्यभूदसौ। नपुंसकः पुनः क्लीवो जन्मन्यत्र च पुत्रक ॥ ९६ ॥
ब्राह्मपुत्रे पुरा पण्ढः षड्ूने शतसंख्यके। बभूव वनिता त्वत्र विनतानन्दवर्धन ॥ ९७ ॥
श्वेतांशुजे महाबाहो पंचोने शतसंमिते। प्राग्भवे पुरुषो ह्यासीत् पण्डो नाप्यत्र जन्मनि ॥ ९८ ॥
शीतांशुसूनौ प्रागासीच्चतुर्हीने शतेऽण्डज। पण्ढः प्राक्संभवे ह्यत्र संभवे पुरुषोऽस्त्यसौ ॥ ९९ ॥
त्र्यूने शते महाभाग शशाङ्कात्मजसंज्ञके। प्राङ्नारी त्वपरे पण्ढो बभूव स्त्र्यस्ति सांप्रतम्॥१००॥
द्व्यूने शतमिते सूत चन्द्रसूनौ पुराभवे। आसीन्नरः पुनर्नारी जन्मन्यत्र पतत्रिण ॥ १०१ ॥
रोहिण्यात्मजसंज्ञे प्रागूने शतमितेऽण्डज। पण्डोऽभवन्नरः पश्चाद्वनिता त्वत्र जन्मनि ॥ १०२ ॥
शतसंख्येऽभवत्सूत पुरा श्वेतांशुसंभवे। वनिता वनिता पश्चाज्जीवोऽयं चात्र जन्मनि ॥ १०३ ॥
शशाङ्कसंज्ञके सूत कुयुक्तेः शतसम्मिते। बभूव पुरुषः पूर्वं ना पुनर्वनिताऽधुना ॥ १०४ ॥
ततो ब्राह्मभवे ह्यासीत्प्राग्भवे द्वियुते शते। नपुंसको महाभाग सांप्रतं च नपुंसकः ॥ १०५ ॥
तमीनाथभवे वत्स त्रियुक्ते शतसंख्यके। प्राग्योषा ना भवेत्पश्चात्पुनः क्लीवोऽत्र जन्मनि॥१०६॥
चतुर्युक्ते शते सूत पुरा ब्राह्मसुतेऽभवत्। पुरुषः पण्ढ एवास्ति जन्मन्यत्र पतत्रिण ॥ १०७ ॥
पंचोत्तरशते ह्यासीदमृतांशुजसंज्ञके। पण्ढः प्राक् पुरुषः पश्चादत्र जन्मनि वै नरः ॥ १०८ ॥
षडुत्तरशते सूत कलानाथजसंज्ञके। वनिता प्राग्भवे ह्यासीत्पुरुषश्चात्र जन्मनि ॥ १०९ ॥
अमृतांशुसुते पूर्वं सप्तोत्तरशतेऽभवत्। जीवोऽयं पुरुषो जन्मन्यत्रास्ति पुरुषोऽण्डज ॥ ११० ॥
कलानाथसुते त्वष्टयुक्शतेऽसौ पुरा भवे। वनिताऽभूदथो सूत पण्ढश्चात्रैव जन्मनि ॥ १११ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके स्त्रीपुंनपुंसकस्वरूपनिर्णयाध्यायः सप्तमः ॥ ७ ॥

---

अरुण उवाच।

जीवास्सहायाः कथिताः प्राग्भवे त्वत्र जन्मनि। सव्ययस्याः कथं देव नियोज्या वक्तुमर्हसि ॥ १ ॥

---

१ संप्रति वै नरः—खपु०।

पंचषष्टिमिते वत्स सुपर्वेज्ये चकार यत् । प्राग्भवे चोरसंगाच्च तद्वचवस्या वृणोम्यहम् ॥ ६८ ॥
षडयुक्ते षष्टिसंख्ये यत्सदायं प्राक् समर्जितम् । सहायैस्त्रिभिरप्यत्र वृषामात्ये त्वंरेहि तत्॥६९॥
सप्तषष्टिमिते सूत शक्रामात्ये पुराभवे । सहायाद्गजजात्सर्वं यदकारि च तच्छृणु ॥ ७० ॥
वृन्दारकार्हे प्राग्जन्मन्यष्टषष्टिमितेऽण्डज । सहायरहितश्चासौ चक्रे सर्वं शुभाशुभम् ॥ ७१ ॥
कूने सप्ततिसंख्ये प्राङ् मघवार्हे यदर्जितम् । तद्वचवस्थां शृणुष्वाथ यतश्चात्रैव जन्मनि ॥७२॥
अथ सप्ततिसंख्ये प्राक् त्रिदशेज्ये चकार यत् । सदायमत्र जनुषि शृणु मत्तो व्यवस्थितिम्॥७३॥
कुसप्ततिमिते वत्स प्रागस्वर्भार्चिते च यत् । कृतवान् वैष्णवाना तु प्रसङ्गादत्र तत्स्फुटम् ॥७४॥
न च सङ्गात्पुरा सूत यदकारि शुभाशुभम् । द्विसप्ततिमितेऽस्वर्गामात्ये त्वत्र व्यवस्थितिम् ॥७५॥
योगीश्वराणा सङ्गाच्च शुभं सर्वमकारि वै । त्रिसप्ततिमिते त्वत्र सुरराजपुरोधसि ॥ ७६ ॥
चतुःसप्ततिमे सूत देवेशेज्ये पुरा कृतम् । व्यवस्थितिं पुनस्त्वत्र धर्मिष्ठाना च सङ्गमात् ॥ ७७ ॥
पंचसप्ततिमे सर्वमर्जित यत्पुराभवे । देवेशपूज्ये सफलं विबुधाना प्रसङ्गतः ॥ ७८ ॥
शैवाना खलु संगात्प्रागर्जितं सदसत्पुरा । षडयुक्त सप्ततिमिते देवेशार्हे परिस्फुटम् ॥ ७९ ॥
स्त्रीपुंसोः संगमात्सूत सप्तसप्ततिमेऽर्जितम् । सर्वं सुरपतीज्ये तद्वक्ष्येऽहं चात्र जन्मनि ॥ ८० ॥
सूर्यभक्तिपराणा यत्सङ्गमात्समुपार्जितम् । द्व्यूनेऽशीतिमिते सूत ज्ञेयं त्रिदशमंत्रिणि ॥ ८१ ॥
पुरुहूतार्चिते कूने प्राग्भवेऽशीतिसमिते । कुटिलात्संगमात्सर्वं यदकार्यत्र जन्मनि ॥ ८२ ॥
अशीतिमितके सूत मरुत्पूज्ये पुराभवे । शाक्ताना सहयोगात्तु यत्कृतं तद्वृणोम्यहम् ॥ ८३ ॥
वारस्त्रीयोगत पापं यच्चक्रे पितृसङ्गमात् । शुभं कशीतिमितके मरुदीज्ये परिस्फुटम् ॥ ८४ ॥
पुंस्त्रीसङ्गान्महाभाग यदकारि पुराभवे । द्व्याढ्येऽशीतिमितेऽत्रैहि पुरुहूतप्रियेऽधुना ॥ ८५ ॥
साहाय्याद्देवभक्ताना यत्पुण्यं समुपार्जितम् । तान् सहायानहं वक्ष्ये शक्राचार्ये त्र्यशीतिके ॥८६॥
संक्रन्दनेज्ये प्राक् सूत चतुराढ्ये त्वशीतिके । रजकासंगतश्चक्रे यदत्र शृणु पुनक ॥ ८७ ॥
मातृसङ्गात्सदा सर्वमर्जितं पूर्वजन्मनि । आखण्डलार्हे निखिलं पञ्चाशीतिमिते शृणु ॥ ८८ ॥
राजपत्नीप्रसङ्गाद्यच्चक्रे शुभमथाशुभम् । षडशीतिमिते त्वत्रावेहि वृद्धश्रवार्हके ॥ ८९ ॥
सप्ताशीतिमिते पूर्वभवे नाकेशवन्दिते । म्लेच्छसङ्गात्कृतं यद्यच्छुभाद्यं शृणु पुनक ॥ ९० ॥
परस्त्रीसङ्गमात्पूर्वभवे सर्वं यदर्जितम् । तत्सर्वं पुरुहूतस्यामात्येऽत्रैहि पतत्रिण ॥ ९१ ॥
दूतीसङ्गात्पुरा चक्रे पाप पुण्य द्विजन्मनः । वज्रिवन्द्ये नवाशीतिमिते सर्वं विवेचितम् ॥ ९२ ॥
अथो नवतिसंख्ये प्राग्वर्णधारसहायतः । यत्पाप कृतवानत्र मरुद्वन्द्येऽप्यवेहि तत् ॥ ९३ ॥
ब्राह्मणस्य साहाय्या प्राग्यच्छुभ समुपार्जितम् । निर्जरेज्ये स्फुटं ज्ञेयं कुनवत्या मितेऽण्डज॥९४॥
अथो वह्निमुखार्हे तु द्विनवत्या मितेऽण्डज । नटीसाहाय्याद्यत्किंचिदर्जितं प्राग्वदाम्यहम्॥ ९५ ॥
अन्त्यजासङ्गतश्चक्रे यत्पाप भ्रातृतः शुभम् । त्रिनवत्या मिते जिष्णुमान्ये तच्छृणु पुनक॥९६॥
स्वैरिणीसङ्गमाद्वत्स कृतवान् पूर्वजन्मनि । जिष्णुवन्द्ये तु सर्वं तत् षड्डूने शतके स्फुटम् ॥ ९७ ॥
दिवस्पतीज्ये पञ्चोन शतसंख्ये पुराभवे । सवर्णस्त्रीसाहाय्याच्च यत्कृतं शृणु तत्खग ॥ ९८ ॥
स्त्रीपण्डयोगात्सततं साहाय्यात्पूर्वजन्मनि । सुपर्वाणार्चिते वक्ष्ये षण्णवत्या मितेऽण्डज ॥ ९९ ॥
पितृमातृसाहाय्यात्प्राक् शुभं वाप्यशुभं कृतम् । लेखाचार्ये त्रिहीनेऽत्र शते सर्वं मयोदितम्॥१००॥
अमर्त्यपूज्ये निखिलं शुभाशुभमुपार्जितम् । राजपत्नीसाहाय्यात्प्राग् द्व्यूने शतमिते स्फुटम्॥१०१॥

१ सुरपूज्ये–रापु० ।

कूने शतमिते सूत प्राग्भवे यत्समर्जितम्। अमृतान्धसमान्ये तत्सहायाभ्यां प्रदर्शितम्॥ १०२॥
ततोऽमर्त्यार्चिते सूत शतसंख्ये पुराभवे। सहायैर्द्वभिर्युक्तश्चासीद्दक्षे व्यवस्थितिम्॥ १०३॥
ऋभुपूज्ये कुयुक्ते प्राक् शतसंख्ये पतत्रिण। सहायैः शतशोयुक्तः प्रागभूत्पृच्छकस्त्वसौ॥ १०४॥
द्वियुक्ते शतसंख्ये यद्गुरुसंगाच्च पुत्रक। कृतं शृणु पुरा सर्वमत्रास्त्वमार्द्दके स्फुटम्॥ १०५॥
गुर्वङ्गनासाहाय्याच्च चक्रे पापं शुभं च यत्। ऋभवैः पूज्यजीवे प्रागत्र सर्वं प्रतिष्ठितम्॥ १०६॥
सहायान्मित्रसंबन्धादर्जितं प्राग्भवेऽण्डज। चतुर्युतशते ज्ञेयं सर्वं गीर्वाणपूजिते॥ १०७॥
पंचोत्तरशते पूर्वभवे तु ऋभवार्चिते। गुर्विण्यास्तु साहाय्याद्दि यत्कृतं शृणु पुत्रक॥ १०८॥
षडुत्तरशते सूत वृषपूज्ये पुराभवे। महापातकिनां संगाद्यज्जातं शृणु सांप्रतम्॥ १०९॥
सप्तोत्तरशतेऽङ्कारि यत्पूर्वं सद्सत्सुत। विषदात्सहायाद्दि संगाद्धरिहरार्चनम्॥ ११०॥
अष्टोत्तरशते पुत्र लेखेज्ये यत्कृतं पुरा। परवंचनसंगाद्दि जन्मन्यत्र प्रवच्म्यथ॥ १११॥
स्वाध्याये लक्षणीयेयं सहायानां व्यवस्थितिः। येषांते कथिता यत्नात्पुनः किं श्रोतुमर्हसि ११२॥

इति श्रीब्रह्मसूर्यारुणसंवादे कर्मविपाके सहायानिर्णयाध्यायोऽष्टमः॥ ८॥

---

अरुण उवाच।

दृढकर्मार्जितो धर्मः प्रागानूके दिवाकर। शुक्राज्ज्ञेयः कथं सर्वविवेकाद्वद सांप्रतम्॥ १॥

श्रीसूर्य उवाच।

धर्मो बहुविधः सूक्ष्मो दुर्विज्ञेयो नरैर्यतः। तथापि धर्मतत्त्वज्ञैर्निर्णीतश्च यथा शृणु॥ २॥
यस्तर्केणानुसन्धाने श्रुतिस्मृत्यविरोधतः। स धर्मः परमो ज्ञेयो ह्यधर्मस्तद्विपर्ययात्॥ ३॥
वेदेषु बहुधा गीतं धर्म एव सतां गतिः। ज्ञात्वेत्थं विविधाँल्लोकान्प्राप्नुयादविचारतः॥ ४॥
धर्मादायुस्तथा राज्यं धर्मात्पुत्राभिवर्धनम्। धर्मादर्थस्तथा कामो धर्मादरिष्टनाशनम्॥ ५॥
धर्माद्यशोभिवृद्धिः स्याद्धर्मात्पापक्षयस्तथा। धर्मात्स्वर्गोपवर्गश्च धर्माद्रोगविनाशनम्॥ ६॥
धर्मात्सुखं महाबाहो तस्माद्धर्मं समाचरेत्। मानुषीं तनुमाश्रित्य देहभृत्कृतवानसौ॥ ७॥
यद्धर्मांश्रद्धया युक्तः प्राग्भवे गरुडाग्रज। तत्त्वमेकमना भूत्वा मत्तो धर्मभृतां व॥ ८॥
शृणुष्वावहितः सर्वं शुक्रेभ्यश्च पृथक्पृथक्। शुक्रे दानं कुरुक्षेत्रे कृतवान् प्रथमेऽण्डज॥ ९॥
हिरण्यभूतिलानि प्राग्जीवोऽयमयनद्वये। भार्गवे त्वपरे पूर्वभवे प्रादात्कुटुम्बिने॥ १०॥
वस्त्रान्नपानगोभूमिफलानि विविधानि च। तृतीये प्रददौ जन्तुः सर्वस्वं च पुराभवे॥ ११॥
गङ्गायां मकरे प्राप्ते सूर्ये दैत्यगुरावसौ। काव्ये चतुर्थसंज्ञे प्रागदद्गोसहस्रकम्॥ १२॥
दानं ब्रह्माण्डसंज्ञं च विश्वचक्रं तथा सुत। कामरत्नाभिधे धेनुमहाभूतघटाभिधम्॥ १३॥
कल्पवृक्षमसौ जीवो नर्मदायां खगेश्वर। तथोशनासि संज्ञे प्राक् पंचमे प्राणधारकः॥ १४॥
ददौ सोपस्करं रम्यं ददौ वेदविदेऽण्डज। कविसंज्ञे पुरा षष्ठे कन्योद्वाहे विधानतः॥ १५॥
चकार विविधैर्द्रव्यैर्ब्राह्मपुण्यविवर्धनम्। सिद्धान्नदानं बहुधा भिक्षुकेभ्यश्च शक्तितः॥ १६॥
ततो ददावसौ दासीदासदानं च केवलम्। घृतपकं च पात्राणि वस्त्राण्याभरणानि च॥ १७॥
रविसंक्रमणे पुण्ये व्यतीपातेऽन्यपर्वसु। सप्तसंख्ये भृगौ जन्तुः पूर्वजन्मनि मानद॥ १८॥
आस्फुजित्संज्ञके चाष्टमिते प्रादात्पुराभवे। गोयूथं धनधान्यानि यानशय्यासनानि च॥ १९॥

---

१ सूर—स्पु०। २ णानुसन्धश्च—स्पु०।

सप्तसागरकं दानं हिरण्याम्बरयादिकम् । संनिहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ॥ २० ॥
नवमे भृगुपुत्रे प्राक् चक्रेऽसौ गरुडाग्रज । गयाश्राद्धं च विधिवत् पितॄणां प्रीतिकारकम्॥ २१ ॥
तत्र काम्यानि श्राद्धानि विविधानि फलाप्तये । दानान्यपि च विप्रेभ्यो यथावित्तानुसारतः॥२२॥
ततो दशमिते प्रादादसुरेज्ये पुराभवे । रथं वृषयुगोपेतमन्नपूर्णं तुरंगमम् ॥ २३ ॥
सासन चामरोपेतं सुवर्णाभरणैर्युतम् । सांकुशं मत्तमातङ्गं करटीपश्चभिर्युतम् ॥ २४ ॥
प्राप्ते मृगमुखे भानौ प्रयागे गरुडाग्रज । विप्राय वेदविदुषे दरिद्राय कुटुम्बिने ॥ २५ ॥
अथैकादशके दैत्याधिपतौ पूर्वजन्मनि । पञ्चपर्वसु विप्रेभ्यो गोभ्यश्चैवाशनादिकम् ॥ २६ ॥
साहिरण्यान्नवस्त्राणि विचित्राण्यददत्पुरा । फलैश्चेक्षुरसोपेतैर्भक्ष्यैश्च द्विजभोजनम् ॥ २७ ॥
ततो द्वादशके चक्रे ब्रह्माराधनकं परम् । तीर्थाटनं प्रकुर्वन् स व्रती भृगुसुते पुरा ॥ २८ ॥
दनुजाधिपतौ प्रादात्त्रयोदशमितेऽण्डज । दानं कल्पलतासंज्ञं सहस्रद्विजभोजनम् ॥ २९ ॥
तुलापुरुषदानं च प्राग्जन्मनि खगेश्वर । ततश्चतुर्दशे वत्स भृगुनन्दनसंज्ञके ॥ ३० ॥
ब्राह्मणस्य विवाहेन कन्यायाश्च पुराभवे । जीवेनानेन सततं प्रपादानमनुत्तमम् ॥ ३१ ॥
लेखारीज्ये पुरा चक्रे विप्राणां प्रतिपालनम् । पूजनं पथिकानां च रुद्राणां श्रद्धया तथा॥३२॥
जन्तुः पञ्चदशे चासौ विधिवत्कश्यपात्मज । षोडशे भृगुजे सूत चकारासौ प्रयत्नतः ॥ ३३ ॥
गोरोगभञ्जनं दिव्यैरौषधैः पूर्वजन्मनि । सत्पात्रेषु तथा दानमन्नवस्त्राश्वकाञ्चनम् ॥ ३४ ॥
ततः सप्तदशे प्रादाद्दानवेज्ये पुराभवे । कार्तिक्यां पूर्णिमायां तु शशाङ्कग्रहणेऽण्डज ॥ ३५ ॥
भक्ष्यभोज्यानि वस्त्राणि सुवर्णाभरणानि च । ददावष्टादशे सूत दैत्यपूज्ये विधानतः ॥ ३६ ॥
कल्पवृक्षं च सिद्धान्नं भिक्षुकेषु पुराभवे । गोप्रदानं सुविप्राय हेमवस्त्रसमन्वितम् ॥ ३७ ॥
तुलाराशिगते सूर्ये जीवोऽसौ श्रद्धयान्वितः । ऊनविंशन्मिते वत्स दानवाधिपतौ पुरा ॥ ३८ ॥
कृतवान् पुण्यतीर्थादौ स्नानं दानं च शक्तितः । ततो विंशन्मिते सूत भृगुसंभवसंज्ञके ॥ ३९ ॥
गोदानं विधिवच्चक्रे तथा प्राक् पितृपूजनम् । विंशन्मिते कुयुक्ते प्राग्दैत्यामात्ये विधानतः ॥४०॥
धर्मोपदेशं प्रददौ शक्त्या ब्राह्मणभोजनम् । पुराणश्रवणं चापि चकारासौ पुराभवे ॥ ४१ ॥
अथो सुरेज्ये द्वाविंशन्मिते पूर्वभवेऽण्डज । प्राददाद्विधिवच्छ्राद्धं गयायां च पुनःपुनः ॥ ४२ ॥
भोजनं चापि विप्राणां दानं हव्यं च शक्तितः । देवारिवन्द्ये विधिवत्त्रयोविंशन्मिते पुरा ॥ ४३ ॥
प्रददौ कपिलादानं पूर्वजन्मनि मानद । कार्तिके च तथा स्वर्णं विप्रेभ्यः श्रद्धयान्वितः ॥ ४४ ॥
दीपांश्च मथुरायां वा घृतेनापूर्य बोधितान् । चतुर्विंशन्मिते प्रादाद्दैत्यमन्त्रिणि पुत्रक ॥ ४५ ॥
सत्पात्रेषु पुरा दानमन्नवस्त्रधनादिकम् । परोपकारकरणं तथा धर्मोपदेशनम् ॥ ४६ ॥
कृतवान् विष्णुभक्तिं च जीवोऽसौ कश्यपात्मज । पञ्चविंशन्मिते सूत शक्रारीज्ये पुराभवे ॥ ४७ ॥
घटशय्यासनादीनि पक्वान्नानि च शक्तितः । दत्तवान् भोजनं विप्रान् गोदानं च पतत्त्रिण ॥४८॥
षड्विंशे प्राग्भवे प्रादाद्धेमं हस्तिरथं शुभम् । कुङ्कुमागुरुकर्पूरचन्दनानि फलानि च ॥ ४९ ॥
द्राक्षादीन्यपि चाम्भूनि पुष्पाणि सुरभीणि च । दैत्याचार्ये च रत्नानि गङ्गासागरसङ्गमे ॥ ५० ॥
दनुजेज्येऽददत्पूर्वभवेऽसौ श्रद्धयान्वितः । धान्याचलं विधानेन ब्राह्मणाय तपस्विने ॥ ५१ ॥
सप्तविंशन्मिते चापि सुवर्णाश्वं गजं तथा । शक्रार्यमात्ये प्रददावष्टाविंशन्मिते पुरा ॥ ५२ ॥

१ पुरा-प्रपु०।

वस्त्रभूषणभक्ष्याणि फलानि विविधानि च। सत्पात्रेषु तथा दानं पर्वस्वप्यण्डजोत्तम ॥ ५३ ॥
त्रिंशन्मिते तथैकोने सिताख्ये कृतवानसौ। कृष्णाजिनमहादानं स्वर्णगर्भं तथा पुरा ॥ ५४ ॥
सुरारिवन्द्ये ह्यददत्पूर्वजन्मन्यसौ सुत। विविधान्नानि विप्रेभ्यस्त्रिंशत्संख्ये च पर्वसु ॥ ५५ ॥
चक्रे शिवार्चनं तद्वच्छिवभक्तिपरायणः। एकत्रिंशन्मिते वत्स दानवार्हे च दत्तवान् ॥ ५६ ॥
मधुधेनुमसौ तद्वच्चकार हरिपूजनम्। द्वात्रिंशन्मितके प्रादाद्दानवाचार्यसंज्ञके ॥ ५७ ॥
रत्नाचलं पुरा दानं सिद्धान्नानि द्विजेष्वपि। खेखार्यमात्ये त्रित्रिंशन्मिते प्रागददात्स्वयम् ॥ ५८ ॥
घृतधेनुहिरण्याश्वगोभूम्यन्नानि शक्तितः। देवारीज्ये चतुस्त्रिंशन्मिते प्राक्कृतवानसौ ॥ ५९ ॥
घृतमिष्टान्नभक्ष्यादिदानान्यपि हरेर्मतम्। नासाविन्द्रार्यमात्ये प्राग्दानं चक्रेऽण्डजाधिप ॥ ६० ॥
हरभक्तिरतश्चासीत्पञ्चत्रिंशन्मिते तदा। दैत्यवन्द्येऽथ षट्त्रिंशन्मितेऽसावददात्पुरा ॥ ६१ ॥
तिलधेन्वन्नभाण्डानि तथा चोभयतोमुखीम्। सप्तत्रिंशन्मिते प्रादात्तदा भृगुभवे पुरा ॥ ६२ ॥
रत्नरूप्याचले तद्वद्गुडाचलतिलाचले। दशधेन्वाभिधं दानं विप्रेभ्यः श्रद्धयान्वितः ॥ ६३ ॥
अयने विषुवे चैव व्यतिपातादिपर्वसु। देवार्यमात्ये ह्यूने प्राक् चत्वारिंशन्मिते ह्यदात् ६४ ॥
सस्वर्णं गोप्रदानं च वस्त्राण्याभरणानि च। लवणाज्येक्षुजातानि पर्वस्वपि च शक्तितः ॥ ६५ ॥
नवत्रिंशन्मिते वत्स दनुजार्हे पुराभवे। शतधेनुप्रदानं प्रागददावन्नं चतुर्विधम् ॥ ६६ ॥
सूक्ष्माणि पट्टवस्त्राणि विप्रेभ्यश्चायनद्वये। ततो भृगुवारमजे चक्रे चत्वारिंशन्मिते पुरा ॥ ६७ ॥
गोशय्याघटपक्वान्नवस्त्रोपानहोऽण्डज। छत्रं दण्डं च विधिवद्दानं वै विप्रतर्पणम् ॥ ६८ ॥
चत्वारिंशन्मिते काव्ये सुराचार्ये प्रदत्तवान्। प्राग्भवे पुस्तकं सान्नं चामरं व्यजनं पुरा ॥ ६९ ॥
ददावसौ महाभाग सस्वर्णं धेनुपंचकम्। भृगुसूनौ तथा द्व्याढ्ये चत्वारिंशन्मिते पुरा ॥ ७० ॥
त्रियुक्ते प्रागसौ प्रादाच्चत्वारिंशन्मितेऽण्डज। विविधान्नानि गोदानं चक्रे च शिवपूजनम् ॥ ७१ ॥
पूजनं चातिथीनां च वत्स दैत्यपुरोधसि। चत्वारिंशन्मिते सूत चतुर्युक्ते पुराभवे ॥ ७२ ॥
विद्यादानं च विप्रेभ्यो प्रादाल्लेखारिवन्दिते। पञ्चहीने चकारासौ पञ्चाशन्मितके पुरा ॥ ७३ ॥
विधिवत्कपिलादानं तथा सूर्यप्रपूजनम्। तद्व्रताचरणं पुण्यममरारिप्रपूजिते ॥ ७४ ॥
ततो देवगृहं चक्रे प्रतिमास्थापनादिकम्। पक्वान्नदानं विप्रेभ्यस्तथा श्रद्धासमन्वितः ॥ ७५ ॥
षट्चत्वारिंशके मर्त्यारीज्ये पूर्वभवेऽण्डज। पञ्चाशन्मितके त्र्यूने दैत्यामात्ये शिवालये ॥७६ ॥
स्थितिं चकारासौ सूत रुद्रभक्तिपरायणः। ददौ द्विजानामशनं स्वेच्छया याचितं तथा ॥ ७७ ॥
विविधान्नानि चान्येभ्यः पूर्वजन्मनि निश्चयात्। पञ्चाशन्मितके द्व्यूने मर्त्यारिविभुसंज्ञके ॥७८॥
शालग्रामशिलादानं चक्रे सोपस्करं तथा। अस्त्रप्रशस्त्रवन्द्ये प्रागददान्महिषीं युवाम् ॥ ७९ ॥
वस्त्राभरणैर्युक्तां तथा शय्यासनादिकम्। जीवोऽसौ कूनपञ्चाशत्संमिते विनतात्मज ॥ ८० ॥
पञ्चाशन्मितके वत्स तथेन्द्रारिप्रपूजिते। संन्यासग्रहणं तत्र ब्रह्मचर्यादिधारणम् ॥ ८१ ॥
तीर्थाटनं चकारासौ प्राग्भवे कश्यपात्मज। कुपञ्चाशन्मिते प्रादाल्लेखाचार्यरिपौ पुरा ॥ ८२ ॥
बहुपुस्तकदानं च कृतवांश्च शिवालयम्। स्थापनं शिवलिङ्गस्य ब्राह्मणानां च तर्पणम् ॥ ८३ ॥
द्विपञ्चाशन्मिते चासौ स्वधर्मपरिपालकः। बभूव प्राग्भवे जन्तुरतिथीनां तथैव च ॥ ८४ ॥
सुरारिपूज्ये विधिवद्दानप्रस्थे समाश्रितः। त्रिपञ्चाशन्मिते प्रादाद्दानवार्ये पुराभवे ॥ ८५ ॥
शर्करापर्वतं साङ्गमिष्टदानानि चाण्डज। खेटयज्ञादिके यानि ऋत्विग्भ्यः कथितानि च ॥ ८६ ॥

१ तीर्थानां च तथैव च–स्पु०।

ततो वृषारिवर्न्ध्ये प्रागददात्प्राणधारकः । नानाफलानि द्रव्याणि सुगन्धीनि च पर्वसु ॥ ८७ ॥
भक्ष्याण्यन्यानि सुमहत्पुष्पाणि सुरभीणि च । चतुराढ्ये तु पञ्चाशन्मितेऽसौ कश्यपात्मज॥८८॥
इन्द्रार्येहे तु पंचाशन्मिते पंचाधिके पुरा । रुद्रभक्तिं चकारासौ श्रद्धया द्विजपूजनम् ॥ ८९ ॥
सोपस्करं गृहं दानं चान्ते तीर्थाधिवासनम् । षट्पंचाशन्मिते सूत कृतवान् पूर्वजन्मनि ॥ ९० ॥
गोदानं विप्रमुख्याय विधिवच्चण्डिकार्चनम् । गणेशपूजनं चापि पुण्यं शक्रारिवन्दिते ॥ ९१ ॥
देवारिमान्ये सप्ताढ्ये पंचाशन्मितके पुरा । विधिना कन्यकोद्वाहमकरोन्मनुजोऽण्डज ॥ ९२ ॥
वैवाहिकानि द्रव्याणि ददौ तत्र प्रयत्नतः । वृषारिमंत्रिणि द्व्यूने षष्टिसंख्ये पुराददात् ॥ ९३ ॥
वस्त्रान्नपानसुष्णीषमुपवीतं च वेधृतौ । रुद्रवीर्ये तथा कूने षष्टिसंख्ये ददावसौ ॥ ९४ ॥
विष्णुपूजोपकरणं तथैवातिथिपूजनम् । सावित्र्याश्च जपं चक्रे विधिवत्कुरुमण्डले ॥ ९५ ॥
ततो दानववन्द्ये प्राक् षष्टिसंख्ये पुराभवे । प्रादात् षोडश दानानि विप्रेभ्यः श्रद्धयान्वितः॥९६॥
सर्वपर्वसु जीवोऽसौ वस्तूनि विविधानि च । चन्द्रसूर्योपरागेषु विधिवद्विनतात्मज ॥ ९७ ॥
अमरारीज्यसंज्ञे प्राक् कुषष्टिमितकेऽण्डज । चकार पंचदेवानां पूजनं पूर्वजन्मनि ॥ ९८ ॥
वस्त्रान्नपानभक्ष्यैश्च विविधैर्द्विजपूजनम् । दीपदानं च कार्तिक्यां नानास्थानेष्वयं ददौ ॥ ९९ ॥
वृषारिमान्ये प्रददौ द्विषष्टिमितके पुरा । विविधानि च वस्त्राणि गजोपकरणानि च ॥ १०० ॥
नानामृगाश्वाजाद्यानि विविधानि फलानि च । त्रिषष्टिमितके वत्स सुरारीज्ये च दत्तवान्॥१०१॥
सूर्यग्रहेऽतिदानानि पितृतृप्तिकराणि च । हव्यानि च यथाशक्त्या जीवोऽसौ पूर्वजन्मनि ॥ १०२ ॥
चतुःषष्टिमिते प्रादाच्छुभां शय्यां सतूलिकाम् । इन्द्रारिमान्ये प्रागन्नपात्रभक्ष्यासनानि च ॥१०३॥
वृषारिपूज्ये ह्यददत्पंचषष्टिमिते ह्यसौ । पुरा तैजसपात्राणि सुवर्णाभरणानि च ॥ १०४ ॥
राजतानि च विप्रेषु नानापर्वसु चाण्डज । षट्षष्टिमितके प्राक्तत्रासनार्थं सतूणकम् ॥ १०५ ॥
सन्नाहं कृषिभूमिं च शस्त्राणि विविधानि च । पुरादनुजमान्येऽसौ जीवश्चन्द्रग्रहे सुत ॥ १०६ ॥
सप्तषष्टिमिते दानं कृतवान्सर्वरेतसि । प्राग्भवे चान्नवस्त्राणि पुनर्जन्मनि मानद ॥ १०७ ॥
ददावसौ गयाश्राद्धं पितृणां तुष्टिहेतवे । अथाष्टषष्टिसंख्ये प्रागददद्गृहसंभवे ॥ १०८ ॥
दानं रसैरसोपेतमन्नं विविधसंस्कृतम् । सुगन्धीनि च द्रव्याणि तथा दनुजपजिते ॥ १०९ ॥
कुनसप्ततिमे प्रादादिन्द्रारीज्ये पुराभवे । सोपस्करं गृहं रम्यं शालग्रामं सकाञ्चनम् ॥ ११० ॥
ततः सप्ततिमे सूत दत्तवान् पूर्वजन्मनि । नानाधातुमयाँल्लिङ्गान् जीवोऽसौ श्रद्धयान्वितः ॥ १११ ॥
विधिवल्लिङ्गपूजान्ते विप्रेभ्यो भोजनं तथा । शिवयागसमारंभे चान्ते वृन्दारिमान्यके ॥ ११२ ॥
कुसप्ततिमिते चक्रे दानमात्मप्रियं शुभम् । दिवौकसश्च सौवर्णान् ददौ पूर्वभवेऽण्डज ॥ ११३ ॥
शक्रारिपूज्ये विधिवद्दानं चोभयतो मुखीम् । द्विसप्ततिमिते वत्स शिववीर्ये पुराभवे ॥ ११४ ॥
नित्यदानमसौ चक्रे श्राद्धं च द्विजतर्पणम् । सप्तोनेऽशीतिसंख्ये तु कृतवाञ्श्रद्धयान्वितः ॥ ११५॥
लक्षधेनुप्रदानं प्राग्जन्तुर्जीवारिमंत्रिणि । ततो देवारिवन्द्ये प्रागददात्पूर्वजन्मनि ॥ ११६ ॥
मधुधेनुं तथा दानं धेनुं कार्पाससंभवाम् । विद्यापुस्तकदानं च चतुःसप्ततिमेऽण्डज ॥ ११७ ॥
वृषार्यमात्ये प्राग्जन्म पंचोनेऽशीतिसंमिते । नानावाहनदानं च शकटान्दोलनादिकम् ॥ ११८ ॥
भक्ष्यं चतुर्विधं चान्नं भूशय्यासनमद्भुतम् । गोवस्त्रं भूषणादीनि बहुमूल्यानि पर्वसु ॥ ११९ ॥
सत्पात्रेषु च विप्रेषु सुगन्धान्यददात्पुरा । ततो लेखार्यमात्ये प्राक् षट्सप्ततिमिते सुत ॥ १२०॥

आषाढ्यां पौर्णमास्यां वै दत्तवान् श्रद्धयान्वितः । घृतयुक्तानि पात्राणि रत्नानि च धनानि च॥१२१॥
मद्दैदौ भर्तृदानं च जीवोऽसौ कुरुजाङ्गले । मघवेज्यरिपौ द्व्यूनेऽशीतिसंख्ये पुराभवे ॥ १२२ ॥
विप्रः प्रार्थितवस्तूनि तथैवात्महितानि च । दत्तवान् शिबिकादीनि भक्ष्याणि विविधानि च॥१२३॥
तीर्थस्नानादिपुण्यानि देवतायतनानि च । चक्रे स्वशक्तितश्चासौ जन्तुः श्रद्धासमन्वितः ॥१२४॥
कूनेऽशीतिमिते प्रादात्प्राग्भवे कश्यपात्मज ।सर्वरत्नानि विविधौषधानि च यत्नतः ॥ १२५ ॥
विद्यापुस्तकभाराणि तथैवान्नानि पर्वसु । इन्द्रारिकन्ये विप्रेभ्यश्चातिथिभ्यश्च संक्रमे ॥ १२६ ॥
अथाऽशीतिमिते सूत वृषारीज्ये पुराभवे । सूक्ष्माणि पट्टवस्त्राणि सस्वर्णानि ददावसौ ॥ १२७ ॥
विप्राणामौषधैश्चापि कृतवान् रोगभञ्जनम् । कुयुक्तेऽशीतिसंख्ये प्राग्दानवेन्द्रे प्रदत्तवान् ॥१२८॥
सोमपाने महायागे नानावस्तूनि शक्तितः । विप्रेभ्यः संस्कृतं चान्नं वस्त्रादीन्यपि शक्तितः॥१२९॥
बलिपूज्ये महाभाग द्व्याढ्येऽशीतिमिते पुरा । अनाथब्राह्मणोद्वाहं कृतवान् पृच्छकस्त्वसौ॥१३०॥
तस्मै प्रादान्महाभाग शय्यान्नोपस्कराणि च। त्रियुक्तेऽशीतिसंख्ये प्राक् शम्भुरेतसि शक्तितः१३१
कृतवान्पितृभक्तिं च गयाश्राद्धं विधानतः । बहूनि तत्र दानानि पितृतृप्तिकराणि च ॥ १३२ ॥
भृगुद्वये चतुर्युक्तेऽशीतिसंख्ये पतत्रिण । विप्रेभ्यः श्रद्धयोपेतः प्रादाच्चासौ पुराभवे ॥ १३३ ॥
वृषभान् स्वर्णशृङ्गाढ्यान् वस्त्रोपेतांश्च पर्वसु । तथा तिलमयीं धेनुं बहुकाञ्चनसंयुताम् ॥१३४॥
मासे चंद्रग्रहे सूत विप्रायैव कुटुम्बिने । लेखारिपूज्ये पञ्चाढ्येऽशीतिसंख्ये पुरा ददौ ॥ १३५ ॥
पक्षिणामभयं दानं भूस्वर्णाम्बरवाहनम् । षडशीतिमिते चासौ कृतवान् पूर्वजन्मनि ॥ १३६ ॥
परिक्रमणकं सुमेरुस्तीर्थानां दर्शनं तथा । स्नानान्ते तु महाभाग जपं होमं विधानतः ॥ १३७ ॥
सुरारिमान्ये च तथा ब्रह्मचर्यस्य धारणम् । बलिध्वन्येऽण्डजश्रेष्ठ सप्ताशीतिमिते पुरा ॥ १३८ ॥
चक्रे गङ्गादितीर्थेषु वसतिं प्राददात्तथा । धनानि विविधान्येव वस्त्राण्याभरणानि च ॥ १३९ ॥
भक्ष्यान्सर्वरसोपेतान् ब्राह्मणेभ्यः स्वशक्तितः । पूर्वदेवाधिपेऽष्टाढ्येऽशीतिसंख्ये शिवार्चनम् १४०
कारयां चक्रे यथा शम्भोर्दानानि प्राग्भवे ह्यसौ । कूने नवतिसंख्ये प्राङ् मघवारीज्यकेऽण्डज१४१
सर्वस्वमददात्पूर्वं विप्रेभ्यः कृतवानसौ । प्रारब्धयोगकर्मणां साधनं गुरुपूजनम् ॥ १४२ ॥
ततो नवतिसंख्येऽसौ ग्रहेज्यारिपुसंज्ञके । शुश्रूषां मातपित्रोश्च चकार प्राग्भवेऽण्डज ॥ १४३ ॥
करुणां सर्वभूतेषु तथा दानं स्वशक्तितः । काढ्ये नवतिसंख्ये प्रावचक्रे चासुरपूजिते ॥ १४४ ॥
रुद्रस्याराधनं तद्वद्वतियीनां च पूजनम् । स्त्रीदानं भूषणोपेतं जीवो वेदविदेऽण्डज ॥ १४५ ॥
ऋभुपूज्यरिपौ सूत द्व्याढ्ये नवतिसंख्यके । स्वधर्मसाधनं तद्वत्पुण्यतीर्थाधिवासनम् ॥ १४६ ॥
जपहोमादिकं चासौ कृतवान्प्राग्भवे ह्ययम् । ततोऽमर्त्यार्यमान्ये प्राक्कृतवानिष्टसाधनम्॥१४७॥
नानोपकरणैर्वस्त्र स्वधर्मपरिपालनम् । धर्मोपदेशनं चापि त्र्याढ्ये नवतिसंख्यके ॥ १४८ ॥
स्मृतिधर्मानुचरणमादितेयारिवंदिते । स्नानं गङ्गादितीर्थेषु दानं तत्र स्वशक्तितः ॥ १४९ ॥
चतुर्नवतिसंख्ये प्राग्चकारासौ महातपः । विबुधेज्यरिपौ तद्वत्पञ्चोने शतसंख्यके ॥ १५० ॥
दानं विप्रवरेभ्यः प्रागदत्तवांश्च स्वशक्तितः । वेदस्य श्रवणं चापि चक्रे भूदेवपूजनम् ॥ १५१ ॥
धारणं ब्रह्मचर्यस्य व्रतमाचरणं तथा । तीर्थस्नानं च विधिवत्कृतवान् प्राग्भवे ह्यसौ ॥ १५२ ॥

---

१ ह्यसौ—खपु० । २ कार्तिक्यां वनितादानं यथोपस्करसंयुतम् । त्र्यूनेऽशीतिमिते पूर्वदेवेज्ये प्राग्भवे ऽण्डज । कृतवान् कन्यकोद्वाहं ब्राह्मणस्य विधानतः । नानादिव्यानि वस्त्राणि भक्ष्याण्याभरणानि च । इति श्लोकद्वयमधिकम्—खपु० । ३ काश्यप—खपु० । ४ पूर्वे—खपु० ५ कृतवांस्तथा—खपु०।

पण्णवत्या मिते जीवे बौलमान्ये पतत्रिण । त्र्यूने शतमिते सूत लेखार्यहं पुराभवे ॥ १५३ ॥
विष्णोः सन्तोषणं दानैर्ब्रह्मचर्यादिधारणैः । पुनर्जन्मनि पक्षीन्द्र संन्यासग्रहणं तथा ॥ १५४ ॥
चकार विधिवत्तत्र सर्वधर्ममहोत्कटम् । सुरार्यमात्ये प्राक्सूत द्व्यूने शतमितेऽददत् ॥ १५५ ॥
रथाश्वगजभूदानं गोकन्यागृहमद्भुतम् । दास्यारामसुवर्णाद्यं ग्रहणे चन्द्रसूर्ययोः ॥ १५६ ॥
कूने शतमिते प्रादात् प्राग्भवे वलिमात्रिणे । सूर्यग्रहे कुरुक्षेत्रे शक्त्या दानं पतत्रिण ॥ १५७ ॥
स्नानं च विधिवच्छ्राद्धं दानं पुण्यविवर्धनम् । ततः शतमिते सूत शक्रार्यहं पुराभवे ॥ १५८ ॥
दत्तवान्वनितादानं सर्वस्वं च स्वशक्तितः । सोमग्रहे महापुण्ये विधिवत्कश्यपात्मज ॥ १५९ ॥
एकोत्तरशते सूत दानवेन्द्रगुरौ पुरा । दुष्टानां दण्डनं चक्रे प्रजायाः परिपालनम् ॥ १६० ॥
न्यायेन कोशशुद्धिं च पापिनां घातनं तथा । द्व्याढ्ये शतमिते वत्स पुरा बलिपुरोधसि ॥ १६१ ॥
चकार विधिवज्जीवः संन्यासग्रहणं पुरा । वृषोत्सर्गं तथा चक्रे सुरमन्त्रिणि संज्ञके ॥ १६२ ॥
त्र्याढ्ये शतमिते सूत पितॄणां तृप्तिकारकम् । दानवामात्यसंज्ञे प्राक्चतुर्युतशते पुरा ॥ १६३ ॥
धारणं ब्रह्मचर्यस्य कृतवान्पृच्छको ह्यसौ । अमर्त्यारिगुरौ सूत पंचोत्तरशते पुरा ॥ १६४ ॥
नानादेवव्रतानां तु चक्रे ह्याचरणं सुधीः । अस्वप्नेज्यारिपौ पूर्वं षडुत्तरशतेऽण्डज ॥ १६५ ॥
वानप्रस्थमसौ जीवः कृतवान् विधिपूर्वकम् । ऋभवारिज्यसंज्ञे तु गृहस्थपदनिश्चयम् ॥ १६६ ॥
चकार वनितादानं सर्वोपकरणैर्युतम् । सप्तोत्तरशते वत्स तथैवातिथिपूजनम् ॥ १६७ ॥
अष्टोत्तरशते तद्वन्निर्जरारिगुरावसौ । तीर्थाटनं विधानेन कृतवान्धर्मसाधनम् ॥ १६८ ॥
एतत्ते कथितं सर्वं विविधं प्राणिना पुरा । धर्मस्याचरणं सूत पश्चात्किं श्रोतुमिच्छसि ॥ १६९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके धर्मनिर्णयाध्यायो नवमः ॥ ९ ॥

---

अरुण उवाच ।

आयुर्ज्ञाने यतः सर्वे लोका भ्रान्ता दिवस्पते । तस्मान्मन्दात्कथं ह्यायुर्ज्ञातुं शक्नोमि यत्नतः ॥ १ ॥

श्रीसूर्य उवाच ।

देहेऽस्मिन्नण्डजश्रेष्ठ यावत्प्राणपरिस्थितिः । तदुक्तं जीवनं विज्ञैस्तावत्तस्य शुभाशुभम् ॥ २ ॥
सौरमानेन जीवाना वर्षपर्यायवन्मिनेरिह । भोगः शुभाशुभानां च कर्मणां श्रोतुमर्हसि ॥ ३ ॥
आद्ये शनैश्चरे नाम्नि विनतानन्दवर्धन । आयुर्वर्षशतं प्रोक्तमेकादशसमन्वितम् ॥ ४ ॥
सूर्यपुत्रे द्वितीये च चतुःपंचाशदब्दकम् । जीवनं प्रोक्तमथवाष्टादशाढ्यं शतं त्विह ॥ ५ ॥
कुषष्टिमितवर्षान्तं कथितं प्राणधारणम् । तृतीये शनिसंज्ञे तु प्रसुरेव जन्मनि ॥ ६ ॥
सूर्यसूनाविनिख्याते चतुर्थे गरुडाग्रज । आयुर्नलं मया प्रोक्तं ततः पंचाशदब्दकम् ॥ ७ ॥
पंचमे त्वसिते नाम्नि द्विपंचाशत्समान्तकम् । जीवनं कथितं जन्तोः स्फुटमत्र पुरातनैः ॥ ८ ॥
सूर्यात्मजे पुनः षष्ठे ह्यायुरेव जन्मनि । कूनषष्टिमिताब्दान्तं कथितं तत्त्वदर्शिभिः ॥ ९ ॥
त्वाष्ट्रे सप्तमिते सूत वर्षैः पंचदशान्वितम् । शतमत्र स्फुटं प्रोक्तं प्राणिना प्राणधारणम् ॥ १० ॥
ततोऽष्टसंख्यके प्रोक्तमायुः सूर्यसुतेऽण्डज । त्रिपञ्चाशन्मिताब्दान्तं भोगाय विनतात्मज ॥ ११ ॥
पातङ्गिसंज्ञके त्वत्र नवसंख्ये खगाधिप । नवोत्तरशताब्दान्तं जीवनं त्वत्र जन्मनि ॥ १२ ॥
ततो दशमिते सर्वमायुः प्रोक्तं मनीषिभिः । सूर्यजे पक्षिशार्दूल षोडशाढ्यं शताब्दकम् ॥ १३ ॥
सौरनाम्नि महाबाहो त्वेकादशमितेऽधुना । हायनानां शतं सैकं जीवनं कथितं मया ॥ १४ ॥

पौषे द्वादशसंख्ये तु स्थितिरत्रैव जन्मनि। जन्तोः षष्टिमिताब्दान्तं नियतं विनतात्मज ॥ १५ ॥
अथार्किसंज्ञके सूत त्रयोदशमितेऽधुना। भोगः प्रोक्तस्तु संसारे वर्षाणां विंशतिं ध्रुवम् ॥ १६ ॥
चतुर्दशेऽर्कजे नाम्नि जीवोऽयं कश्यपात्मज। त्रिंशन्मितानि वर्षाणि जन्मन्यत्र च तिष्ठति॥१७॥
ततः पञ्चदशे प्रोक्तमजपुत्रे खगाधिप। चत्वारिंशन्मिताब्दान्तमायुरत्रैव जन्मनि ॥ १८ ॥
षोडशेऽर्कसुते ह्यायुर्दायमुक्तं मनीषिभिः। चतुःसप्ततिवर्षान्तमखिलं तत्र संभवे ॥ १९ ॥
सावित्रसंज्ञके वत्स दशसप्तमिते स्फुटम्। षड्डुत्तरं शतं त्वायुः पञ्चपञ्चाशदब्दकम् ॥ २० ॥
ततोऽष्टादशसंख्ये तु ह्यूनं शतमितं स्थितिः। वर्षाणां रविजे नाम्नि जनुष्यत्र स्फुटं स्मृतम्॥२१॥
अथार्कसूनौ सततमायुर्दायं चिरंतनैः। कूने विंशन्मिते प्रोक्तं कूनं शतमितं त्विह ॥ २२ ॥
ततोऽर्कसंभवे विंशन्मितेऽत्रैव पतत्रिण। जीवनं कथितं स्पष्टं पञ्चोनं शरदां शतम् ॥ २३ ॥
रविपुत्रे महाभाग त्वेकविंशन्मिते ध्रुवम्। पञ्चसप्ततिवर्षान्तमायुरत्र प्रकीर्तितम् ॥ २४ ॥
ततोऽजजे स्थितिर्जन्तोरत्रोक्ता शरदां शतम्। षड्डूनमखिलं सूत द्वाविंशन्मितके ध्रुवम् ॥ २५ ॥
त्रयोविंशन्मितेऽत्रैव कालजे गरुडाग्रज। ह्यूनं सप्ततिवर्षान्तमायुरुक्तं मनीषिभिः ॥ २६ ॥
अजात्मके चतुर्विंशन्मिते त्वत्र पतत्रिण। षडशीतिमितिः प्रोक्ता स्थितिर्जन्तोर्न संशयः ॥२७॥
पञ्चविंशतिसंख्ये तु जन्तुरत्रैव तिष्ठति। काशीतिमितवर्षान्तं भोगाय रविसंभवे ॥ २८ ॥
ततोऽजसुतसंज्ञे तु षड्विंशे विनतात्मज। त्रिसप्ततिरिहायुः स्याच्छरदामत्रजन्मनि ॥ २९ ॥
सप्तविंशन्मितेऽत्रैव रविसूनौ पतत्रिण। त्रिषष्टिवत्सरान्तं हि स्फुटमायुः प्रकीर्तितम् ॥ ३० ॥
अष्टविंशन्मिते प्रोक्तं कालपुत्रे च पुत्रक। कुपञ्चाशन्मिताब्दान्तं जीवनं त्वत्र जन्मनि ॥ ३१ ॥
ततो रविसुते सूत कूने त्रिंशन्मितेऽखिलम्। प्रोक्तमायुस्त्रिवर्षान्तं त्रियुक्तं वासरं स्फुटम् ॥३२॥
त्रिंशत्संख्येऽजसूनौ तु प्राणिनां प्राणसंस्थितिः। चतुरशीतिरब्दान्तं भोगायात्रैव संभवे॥ ३३ ॥
काढ्ये त्रिंशन्मिते वत्स मृत्युपुत्रेऽत्र पुत्रक। जीवनं त्वष्टवर्षान्तमथ विंशोत्तरं शतम् ॥ ३४ ॥
कालात्मजे महाभाग द्वात्रिंशन्मितके ध्रुवम्।हायनानां नवाशीतिः स्थितिः प्रोक्ता ऽत्र जन्मनि३५
त्रित्रिंशत्संमिते प्रोक्तमायुर्दायं पुरातनैः। मृत्युसूनौ शताब्दान्तं द्व्यूनमत्रैव जन्मनि ॥ ३६ ॥
ततो मृत्युसुते नाम्नि चतुस्त्रिंशन्मितेऽण्डज। षट्षष्टिमितवर्षाणि कथितं प्राणधारणम् ॥ ३७ ॥
कालसूनौ महाभाग पञ्चत्रिंशन्मितेऽधुना। द्वादशाब्दान्तमखिलमायुर्जन्तोः प्रतिष्ठितम्॥ ३८ ॥
षट्त्रिंशन्मितके सूत नाम्नि मृत्युभवे त्विह। जीवनं कथितं सर्वं षडब्दान्तं मनीषिभिः॥ ३९ ॥
अथो कालसुते ह्यूने चत्वारिंशन्मिते सुत। अष्टादशमिताब्दान्तमायुरुक्तं मयाऽधुना ॥ ४० ॥
अष्टत्रिंशन्मिते धाम्नो भवे तु प्राणसंस्थितिः। त्रयोदशमिताब्दान्तं त्र्युतं वा शतं त्विह ॥ ४१ ॥
चत्वारिंशन्मिते कूने मृत्युजेऽब्दद्वयान्तकम्। प्राणस्थितिरमितकरब्दवात्रैव जन्मनि ॥ ४२ ॥
धातृपुत्रे महाभाग चत्वारिंशन्मितेऽधुना। आयुः पञ्चमिताब्दान्तमथ पञ्चोत्तरं शतम् ॥ ४३ ॥
प्रभाकरसुते प्रोक्तं जीवनं त्वत्र संभवे। चत्वारिंशन्मिते काढ्ये नववर्षाण्यसंशयम् ॥ ४४ ॥
धातृसूनौ द्वियुक्ते च चत्वारिंशे पतत्रिण। चतुर्दशमिताब्दान्तमथवा त्र्युतं शतम् ॥ ४५ ॥
आयुर्वेदमिताब्दान्तमथवाष्टोत्तरं शतम्। दीप्तांशुजे त्रियुक्ते तु चत्वारिंशन्मितेऽण्डज ॥ ४६ ॥
धातृजेऽत्र चतुर्युक्ते चत्वारिंशन्मिते सुत। पञ्चविंशतिवर्षाणि प्रोक्तमायुर्बलं त्विह ॥ ४७ ॥
शुचिपुत्रे दशाब्दान्तं वा दशाढ्यं शतं स्थितिः। चत्वारिंशन्मिते युक्ते पञ्चभिः परमायुन४८ ॥

१ संक्षेपे–ख० पु०। २ प्रोक्तो वर्षोऽत्र जन्मनि–ख० पु०।३ त्र्युतं वासरं त्विह–ख० पु०।

चत्वारिंशन्मिते ज्ञेन षड्युक्ते धातृसंभवे । पञ्चत्रिंशन्मिताब्दान्तं प्रोक्तमायुः पुरातनैः ॥ ४९ ॥
प्राभाकरौ तथा न्यूने पञ्चाशत्संख्यके स्थितिः। सप्तवर्षमिताब्दान्तं शतं सप्तोत्तरं तथा ॥ ५० ॥
ब्रह्मपुत्रे महाभाग जीवनं कथितं त्विह । षोडशाब्दमितं द्व्यूने पंचाशत्संख्यकेऽखिलम् ॥ ५१ ॥
शुचिजे कूनपंचाशत्संख्यके विनतात्मज । हायनैस्त्र्यूनविंशद्भिरायुरत्र प्रतिष्ठितम् ॥ ५२ ॥
विष्णुपुत्रे स्थितिर्जन्तोरत्रोक्ता शतवत्सरम् । चतुर्वर्षयुतं सूत पञ्चाशत्संमितेऽखिलम् ॥ ५३ ॥
शुचिसूनौ तथा प्रोक्तं जीवनं प्रथमाब्दकम् । द्व्याढ्यं शतमितं वापि कुपंचाशन्मितेऽखिलम् ५४
द्विपञ्चाशन्मिते ह्यायुर्वर्षैरेकादशैरिह । ब्रह्मजे वेदेयुतं वापि शतमत्र प्रकीर्तितम् ॥ ५५ ॥
त्रिपञ्चाशन्मितेऽप्युक्ता स्थितिरत्र संभवे । कूनविंशत्समान्तं हि मुनिभिः शुचिसंभवे ॥ ५६ ॥
दशपञ्चमिताब्दान्तं जीवो देहेऽत्र तिष्ठति । चतुर्युक्ते हि पञ्चाशत्संमिते ब्रह्मसंभवे ॥ ५७ ॥
ब्रह्मसूनौ मया प्रोक्तमायुर्वलमशीतिकम् । पञ्चवर्षयुतं पञ्च पञ्चाशत्संमितेऽधुना ॥ ५८ ॥
षट्पञ्चाशन्मिते वत्स ब्रह्मसूनौ हि जीवनम् । जन्तोरेकयुतं विंशत्समान्तं चात्र जन्मनि ॥५९॥
न्यूने षष्टिमिते त्वत्र रौद्राख्ये गरुडाग्रज । कूनविंशत्समान्तं हि निर्याणं प्राणिनामिह ॥ ६०॥
पञ्चाशदष्टयुक्ते तु मन्दगे विनतात्मज । त्रिचत्वारिंशदब्दान्तमायुरत्र प्रकीर्तितम् ॥ ६१ ॥
कूने षष्टिमिते रुद्रसंभवे गरुडाग्रज । द्वियुक्तं विंशदब्दान्तमिह लोके स्थितिर्मता ॥ ६२ ॥
अथो षष्टिमिते सूत विष्णुजे जीवनं मतम् । द्व्यूनषष्टिमिताब्दान्तं ध्रुवमत्र परिस्फुटम् ॥ ६३ ॥
रुद्रपुत्रे महाभाग कुषष्टिमितके तथा । त्रयोविंशतिवर्षाणि ह्यायुर्वलमुदाहृतम् ॥ ६४ ॥
आयुर्दायं इदं प्रोक्तं कूनपञ्चाशदब्दकम् । मन्दाख्येऽत्र महाभाग द्विषष्टिप्रमितेऽखिलम् ॥६५॥
त्रिषष्टिसंख्यके सूत कथितं रुद्रजेऽधुना । ह्यष्टाविंशतिवर्षान्ते मरणं प्राणिनामिह ॥ ६६ ॥
कोणसंज्ञे मया प्रोक्तं चतुःषष्टिमितेऽण्डज । निधनं सप्तपञ्चाशदब्दान्ते नात्र संशयः ॥ ६७ ॥
पञ्चषष्टिमिते सूत रुद्रसूनौ च जीवनम् । सप्तविंशतिवर्षाणि नात्र कार्या विचारणा ॥ ६८ ॥
रुद्रात्मजेऽथ षट्षष्टिमिते ह्यायुरुदीरितम् । द्व्यूनपञ्चाशदब्दान्तं जन्मन्यत्र परिस्फुटम् ॥ ६९ ॥
सप्तषष्टिमिते त्वत्र यमजे कश्यपात्मज । षड्विंशतिवर्षाणि ह्यायुर्दायमुदीरितम् ॥ ७० ॥
द्व्यूने सप्ततिसंख्ये तु नाम्नि रुद्रसुतेऽण्डज । चत्वारिंशन्मिते काष्ठे वर्षान्ते निधनं स्मृतम् ७१॥
यमात्मजे महाभाग कूने सप्ततिसंमिते । प्रोक्तमायुश्चतुर्विंशदब्दान्तं प्राणिनामिह ॥ ७२ ॥
अश्वत्थजे तथा चोक्ता स्थितिरत्र संभवे । प्राणिनां तु नवत्रिंशत्समान्तं पूर्वसूरिभिः ॥ ७३ ॥
कृतात्मजे महाभाग कुसप्ततिमितेऽधुना । त्रित्रिंशन्मितवर्षाणि जीवनं कथितं मया ॥ ७४ ॥
द्विसप्ततिमितेऽश्वत्थसूनावत्रैव संस्थितिः । षड्युक्त्रिंशत्समान्तं हि प्राणिनां विनतात्मज ॥ ७५ ॥
कृतसूनौ तथा प्रोक्तं जीवनं प्राणधारिणाम् । सप्तत्रिंशन्मिताब्दान्तं त्रिसप्ततिमितेऽधुना ॥ ७६ ॥
आयुर्बलं मया प्रोक्तं षड्नेऽशीतिसंमिते । न्यूनपञ्चाशदब्दान्तं कृतजे त्वत्र संभवे ॥ ७७ ॥
पञ्चसप्ततिसंख्येऽत्र यमसूनौ च पुत्रक । जीवनं प्राणिनां प्रोक्तं द्वित्रिंशद्धायनान्तकम् ॥ ७८ ॥
षट्चत्वारिंशदब्दान्तं कथितं प्राणधारणम् । षट्सप्ततिमिते त्वत्र कृतपुत्रे च पुत्रक ॥ ७९ ॥
यमपुत्रे महाभाग न्यूनेऽशीतिमितेऽधुना । त्रिंशत्कुयुक्तवर्षान्ते निर्याणं परिकीर्तितम् ॥ ८० ॥
द्व्यूनेऽशीतिमितेऽश्वत्थपुत्रेऽत्र कथितं ध्रुवम् । द्विचत्वारिंशदब्दान्तमखिलं प्राणधारणम् ॥ ८१ ॥
कूनेऽशीतिमिते त्रेतासुतेऽत्र जनुषि ध्रुवम् । अष्टत्रिंशत्समान्तं हि जीवनं कथितं स्फुटम् ॥ ८२ ॥

---

१ हायनै कूनविंशद्भि -खपु०।२ त्र-खपु०।

कृतवीर्ये महाभाग त्वायुर्दीर्घमुदीरितम्। चतुर्विंशन्मिताब्दान्तमशीतिमितके ध्रुवम्॥ ८३॥
कशीतिमितके त्रेतासूनावत्र च पुत्रक। चत्वारिंशच्चतुर्युक्तमब्दान्तं प्राणधारणम्॥ ८४॥
त्रेताजे तु मया प्रोक्तमायुर्बलमिह स्फुटम्। एकोनविंशदब्दाढ्यं शतसंख्यं द्व्यशीतिके॥८५॥
त्र्यशीतिमितके सूत कालजे जीवनं स्मृतम्। पञ्चोनमत्र पञ्चाशदब्दान्तं त्वखिलं ध्रुवम्॥८६॥
चतुर्युक्तेऽशीतिमिते त्रेतापुत्रे पतत्त्रिण। दशसप्तान्वितं चायुर्बलं हि शरदां शतम्॥ ८७॥
कलिसूनौ महाभाग पञ्चाशीतिमितेऽण्डज। द्विषष्टिमितवर्षाणि प्राणिनां देहधारणम्॥ ८८॥
ततस्त्रेताभवे नाम्नि षडशीतिमिते खग। द्वादशाब्दाधिकं प्रोक्तमायुर्दीर्घं शतं स्फुटम्॥ ८९॥
सप्तान्वितेऽशीतिमिते द्वापरात्मजसंज्ञके। षट्पञ्चाशन्मिताब्दान्तं निर्याणं कीर्तितं त्विह॥ ९०॥
अथ त्रेतात्मजे सूत ह्यष्टाशीतिमितेऽधुना। हायनानां शतं युक्तं चतुर्भिर्जीवनं स्फुटम्॥ ९१॥
कूने नवतिसंख्येऽत्र त्रेताजाते परिस्फुटे। द्व्यशीतिमितवर्षाणि देहिनां देहधारणम्॥ ९२॥
चतुःषष्टिमिताब्दान्तं जीवनं कथितं त्विह। तथा नवतिसंख्ये तु कलिपुत्रेऽत्र पुत्रक॥ ९३॥
मित्रसूनौ कुयुक्ते नवति संख्येऽत्र काश्यप। अशीतिमितवर्षाणि प्रोक्तमायुः पुरातनैः॥ ९४॥
ततो नवतिसंख्येऽत्र द्व्याढ्ये मित्रात्मजेऽण्डज। प्रोक्तं सप्ततिवर्षान्तं निधनं देहधारिणाम्॥९५॥
भूतादिसूनौ कथितं त्र्याढ्ये नवतिसंमिते। प्रोक्तमायुर्महाभाग सप्तोनं शरदां शतम्॥ ९६॥
पञ्चूने शतसंख्ये तु मित्रपुत्रेऽत्र पुत्रक। त्र्यूनं नवतिवर्षान्तं कथितं देहधारणम्॥ ९७॥
भूतादिपुत्रे कथितं पञ्चोने शतसंख्यके। पञ्चषष्टिमिताब्दान्तं स्फुटमायुर्मनीषिभिः॥ ९८॥
षण्णवत्या मिते सूत नियतं मित्रसंभवे। कुसप्ततिमिताब्दान्तं जीवनं कथितं त्विह॥ ९९॥
त्र्यूने भूतात्मजे त्वत्र शतसंख्ये पुरातनैः। प्रोक्तमायुर्बलं सूत कूनाशीतिमिताब्दकम्॥ १००॥
द्व्यूने शतमिते वत्स मित्रजे जीवनं स्मृतम्। अष्टषष्टिमितान्यत्र वर्षाणि परमं स्फुटम्॥१०१॥
भूतादिजे महाबाहो कूने शतमितेऽधुना। प्रोक्तमायुर्बलं मध्वष्टोनं शरदां शतम्॥ १०२॥
त्रेताजसंज्ञके प्रोक्तं शतसंख्ये खगेश्वर। ह्यष्टाशीतिमिताब्दान्तं प्राणिनां प्राणधारणम्॥१०३॥
कुयुक्ते शतसंख्येऽत्र मैत्राख्ये शरदां शतम। चतुर्भिरूनं कथितमायुर्दीर्घं परिस्फुटम्॥ १०४॥
दीप्तांशुजेऽण्डजश्रेष्ठ द्वियुक्ते शतसंख्यके। सप्तसप्ततिवर्षान्तं जीवनं चात्र जन्मनि॥ १०५॥
मित्रजाते त्रियुक्ते तु शतसंख्येऽत्र संभवे। कूनसप्ततिवर्षान्तमायुर्बलमुदाहृतम्॥ १०६॥
अशीतिमितवर्षाणि कथितं देहधारणम्। चतुर्युक्ते शतमिते नाम्नि धर्मांशुजेऽण्डज॥ १०७॥
दीप्तांशुसूनौ सततं पञ्चाढ्ये शतसंख्यके। द्व्यूनाशीतिमिताब्दान्तमायुर्बलमुदाहृतम्॥१०८॥
ततो नवतिवर्षान्तं देहिनां देहधारणम्। धर्मांशुसूनौ षड्युक्ते शतसंख्येऽत्र जन्मनि॥ १०९॥
सप्तयुक्ते शतमिते नाम्नि तीक्ष्णांशुजेऽण्डज। षट्सप्ततिमिताब्दान्तं कथितं जीवनं त्विह॥ ११०॥
तीक्ष्णांशुसूनावष्टाढ्ये शतसंख्ये खगाधिप। काढ्यं नवतिवर्षान्तमायुर्बलमुदाहृतम्॥ १११॥
एतदायुर्बलं प्रोक्तं मनुजानां परिस्फुटम्। वद्धत्वं पुण्यपापाभ्यां भूयः किं प्रष्टुमर्हसि॥ ११२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके आयुर्निर्णयाध्यायो दशमः॥ १०॥

अरुण उवाच।

तमसोद्भवपापानि कृतवान् पृच्छकस्त्वसौ। तानि मे ब्रूहि भगवन्पूर्वजन्मनि निश्चयात्॥ १॥

श्रीसूर्य उवाच।

स्वर्गादेः पतनं पापात्पापाद्दुःखप्रणाशनम्। तिर्यक्त्वं प्राप्नुयात्पापात्पापाच्च नरकं व्रजेत्॥ २॥

पापाद्रिपुं भयं पापात्पापात्संततिनाशनम् । राज्यभङ्गस्तथा पापात्पापाद्रोगविवर्धनम् ॥ ३ ॥
धनरूपाद्यशुभं पापात्पापान्द्धनसङ्कटे । पापाद्दुःखं महाभाग तस्मात्पापं न वाचरेत् ॥ ४ ॥
अर्वाग्द्वादशवर्षेभ्यः पापान्यज्ञानवस्तथा । प्राक्पापानि वान्यसौ जन्तुस्तान्यल्पान्यल्पशोऽर्जनः ॥ ५ ॥
तीर्थस्नानादिकैश्चात्र दग्धधान्यवदण्डज । नश्यन्त्येव प्ररोहन्ति न पुनर्जन्मनि ध्रुवम् ॥ ६ ॥
व्याध्यादिरूपं यत्पापं गणितेन दृढोदितम् । मत्कृतैः शोधनैरेव नाशमायाति नान्यथा ॥ ७ ॥
भोगाद्वापि महाभाग नात्र कार्या विचारणा । तान्यहं यत्नतो वक्ष्ये राह्वादिभ्यः पतत्रिण ॥ ८ ॥
राह्वाख्ये प्रथमे वत्स जीवोऽसौ कृतवान्पुरा । राजघातं छलैर्दुष्टैरतिलोभसमन्वितः ॥ ९ ॥
गते तमासे संज्ञे प्राग्द्वितीये विनतात्मज । अभक्ष्यभक्षकश्चासौ परदारविमर्दकः ॥ १० ॥
सूचकः पररन्ध्रस्य बभूव विनतात्मज । अगुसंज्ञे तृतीये तु मार्गलुण्ठनतत्परः ॥ ११ ॥
परद्रव्यापहारी च पूर्वजन्मनि चाभवत् । चतुर्थे ह्यसुराख्ये प्राग्देवद्रव्यापहारकः ॥ १२ ॥
परस्वहारको वत्स त्वासीत्स्वामिद्रुहान्वितः । पञ्चमे स्वाननाख्ये तु परपुंसि रता ह्यसौ ॥ १३ ॥
पूर्वजन्मनि पक्षीन्द्र बभूव वनिता सती । तथा सिंहीसुते षष्ठे महापातकसंयुतः ॥ १४ ॥
स्वभावात्पूर्वजनुषि विनतानन्दवर्धन । सप्तमे चन्द्रहाख्ये तु चक्रे पूर्वभवेऽण्डज ॥ १५ ॥
अदण्ड्यदण्डनं पापं गवां पीडाप्रदायकम् । वक्राख्ये त्वष्टमे वत्स जीवोऽसौ स्थापितं धनम् ॥ १६ ॥
परेण नाददात्पूर्वं तथा घातितवान्नरम् । ततो नवमिते सूत नाम्नि सूर्यान्तके पुरा ॥ १७ ॥
आततायी बभूवासौ प्राणवान् कश्यपात्मज । अथो दशमिते राहौ सुखसंज्ञे खगाधिप ॥ १८ ॥
त्यक्त्वा पूर्वभवे योनिं मुखे मैथुनवानसौ । सोमहाख्ये पुरा जीव एकादशमितेऽण्डज ॥ १९ ॥
चक्रे ब्रह्मवधं घोरमपराधविवर्जितम् । जीवोऽसौ प्राग्भवे दुष्टो गृहीत्वा लोभतो धनम् ॥ २० ॥
शास्त्रार्थमन्यथा चक्रे द्वादशे रविमर्दने । चन्द्रान्तके तथा पूर्वभवे विश्वमितेऽण्डज ॥ २१ ॥
जीवोऽयं शूद्रमवधीच्छलेन गरुडाग्रज । संकल्पितापदानं च बलादाकृष्य भक्षणम् ॥ २२ ॥
निक्षेपहरणं चापि पापं मिश्रसमुद्भवम् । कृतवान्पृच्छकश्चासौ सिंहीजे मनुसंमिते ॥ २३ ॥
ब्राह्मणस्याद्द् दुःखं पूर्वजन्मनि निर्भयः । वत्सासौ प्राणवान् पञ्चदशसंख्ये विधुंतुदे ॥ २४ ॥
चकार स्त्रीवधं घोरं महापापं च पुनरु । सोमान्तके प्राणधरः षोडशे पूर्वजन्मनि ॥ २५ ॥
ततः सप्तदशे वत्स धूम्रलोचनसंज्ञके । महोग्रं कृतवान्पापं व्यभिचारसमुद्भवम् ॥ २६ ॥
शीर्षभारसमुत्पन्नं पापमाचरितं पुरा । जीवेनानेन सततं शीर्षाख्येऽष्टादशेऽण्डज ॥ २७ ॥
श्वमार्जारादिसंस्पर्शे कृतवान्भोजनं त्वसौ । गुरोर्वाक्यविरोधं च पूर्वजन्मनि निश्चयात् ॥ २८ ॥
कूने विंशन्मिते सिंहीसूनुनाम्नि पतत्रिण । परान्नहारी जीवोऽसावभवत्पूर्वजन्मनि ॥ २९ ॥
सूर्यारिसंज्ञके विंशन्मिते तु गरुडाग्रज । एकविंशन्मिते भानुरिपुसंज्ञे पुराभवे ॥ ३० ॥
दानविघ्नकरश्चासौ बभूव विनतात्मज । परस्त्री दृष्टवानेषां चोदयास्तगतं रविम् ॥ ३१ ॥
गृध्रकः प्राग्भवे वत्स द्वाविंशे वदनानिधे । गर्भघातकरी चासावभवत्पूर्वजन्मनि ॥ ३२ ॥
अर्कान्तके त्रयोविंशन्मिते प्राणी पतत्रिण । स्वामिद्रोहं महापापं चकार मदसंयुतः ॥ ३३ ॥
प्राग्भवे तु चतुर्विंशन्मिते दैत्येन्द्रसंज्ञके । पञ्चविंशन्मिते सूत सूर्यहाख्ये पुरा भवे ॥ ३४ ॥
निजघ्निवानसौ वैश्यमपराधविवर्जितम् । भान्वन्तके महाभाग षड्विंशन्मितके ह्यसौ ॥ ३५ ॥
विषप्रदोऽभवत्पूर्वभवे पापविमोहितः । सप्तविंशन्मिते सूत मित्रहानौ पुराभवे ॥ ३६ ॥

१ प्राणघ —खपु० । २ पृच्छक —खपु० ।

जीवोऽसावुक्तवान् वाक्यं निष्ठुरं दुष्टसंमतम् । अष्टविंशन्मिते ह्यासीत्तथा त्वष्टान्तसंज्ञके ॥ ३७ ॥
स्वगोत्रविघ्नकर्तासौ पूर्वजन्मनि मानवः । अजच्छादनसंज्ञोऽसौ कूनत्रिंशन्मिते पुरा ॥ ३८ ॥
कृतवानोहिदाहं प्रागाततायिकसंज्ञकः । त्रिंशन्मितेऽथ हंसारिसंज्ञके पूर्वजन्मनि ॥ ३९ ॥
वृक्षच्छेद्यभवच्चापि परवासविनाशकः । अयोनिगामी जीवोऽसौ बभूव परसंभवे ॥ ४० ॥
कुत्रिंशत्संमिते शुक्लाङ्गारिसंज्ञे पतत्रिणं । अथ छात्रवधं चक्रे पूर्वजन्मनि मानद ॥ ४१ ॥
द्व्याढ्ये त्रिंशन्मिते चासावजशत्रो भयानकः । छायान्तके पुरा चक्रे त्रित्रिंशन्मितकेऽण्डज ॥ ४२ ॥
बालविक्रयजं पापं ह्यपरं बालघातजम् । पिङ्गारिसंज्ञके चासीच्चतुस्त्रिंशन्मितेऽण्डज ॥ ४३ ॥
परान्नहरणे दक्षोऽदक्षैः पापविमोचने[2] । पञ्चत्रिंशन्मिते वत्स मित्रच्छादकसंज्ञके ॥ ४४ ॥
स्त्रीत्यागं कृतवान् पापं जीवोऽसौ परसंभवे । षट्त्रिंशन्मितके सूत सिंहिकात्मजसंज्ञके ॥ ४५ ॥
शंखमुक्ताफलादीनां हारकश्चाभवत्पुरा । परद्रव्यापहरणं कृतवान् प्राणधारकः ॥ ४६ ॥
सप्तत्रिंशन्मिते पूर्वं शशाङ्कारी प्रयत्नतः । भगान्तके सवर्णास्त्रीगामी चाभूत्पुराभवे ॥ ४७ ॥
अष्टत्रिंशन्मिते कामलोभाद्धि गरुडाग्रज । चत्वारिंशन्मिते कूने चोत्तमाङ्गे पतत्रिण ॥ ४८ ॥
हृतवान् प्राक् परस्वर्णं पुनर्जन्मनि चार्भकः । कृतवान् गोवधं घोरं पूर्वजन्मनि पृच्छकः ॥ ४९ ॥
कालरूपे महाघोरे चत्वारिंशन्मितेऽण्डज । भगारिसंज्ञके काढ्ये चत्वारिंशन्मिते पुरा ॥ ५० ॥
स्वात्मलोभादसौ चक्रे परपुण्यविनाशनम् । ऋणाप्रदायी ह्यभवत्पूर्वजन्मनि निश्चयात् ॥ ५१ ॥
सूर्यशत्रो द्वियुक्ते तु चत्वारिंशन्मितेऽण्डज । चन्द्रघातकः संज्ञे प्राक् पशुघातनतत्परः ॥ ५२ ॥
जीवो रामाऽन्विते चत्वारिंशत्संख्ये बभूव यः । सहस्रांशुरिपौ मादार्दोपधं प्राक् परस्य च ॥ ५३ ॥
निधनार्थं चतुर्युक्ते चत्वारिंशन्मिते सुत । पञ्चहीनेऽथ पञ्चाशन्मितेऽपग्रहसंज्ञके ॥ ५४ ॥
कृतवान् मिश्रितं पापं बहुदुःखप्रदायकम् । स्वधर्मत्यागवांश्चासौ जीवः पूर्वभवेऽण्डज ॥ ५५ ॥
चतुर्भिरूने पञ्चाशन्मितकेऽर्कप्रच्छादके । पञ्चाशन्मितके न्यूने प्रभाकररिपौ पुरा ॥ ५६ ॥
कृतवान् घोरपापानि दुष्टो दुष्टफलानि च । द्व्यूने जातकसंज्ञे प्राक् मृगशावकभक्षणम् ॥ ५७ ॥
निःशङ्कजीवघातं चान्वष्टिकाश्राद्धवर्जनम् । प्राणिक्षेपकं चक्रे पञ्चाशन्मितके ह्यसौ ॥ ५८ ॥
पञ्चाशत्संख्यके कूने सुपर्णार्यभिधेऽण्डज । ब्रह्मस्वहारकश्चासावभवत्पूर्वसंभवे ॥ ५९ ॥
क्षेत्रमारी[4] बभूवासौ पञ्चाशन्मितके पुरा । पतङ्गशत्रौ सततं जलापाध्यादिनाण्डज ॥ ६० ॥
कुपञ्चाशन्मिते सूत सोमच्छादकसंज्ञके । परजन्मनि जीवोऽसावभवद्बालविक्रयी ॥ ६१ ॥
द्विपञ्चाशन्मिते चासौ शिरःसंज्ञे पुराभवे । योपापण्योपजीव्योऽसावभवत्कश्यपात्मज ॥ ६२ ॥
त्रिपञ्चाशन्मिते नाम्नि शीतभान्वन्तकेऽण्डज । घोरं कन्यावधं चक्रे प्राण्यसौ पूर्वजन्मनि ६३॥
अज्ञात्वा धर्मशास्त्रं तु प्रायश्चित्तप्रदायकः । प्राग्बभूव विलोमाख्ये षडूने षष्टिसंमिते ॥ ६४ ॥
पञ्चयुक्तेऽथ पञ्चाशन्मिते पूर्वभवे खग । सदा चक्रे च गुरवे दृष्टवान् वैरभावतः ॥ ६५ ॥
षट्पंचाशन्मिते वत्स सूर्यघातिनि चाभवत् । जीवोऽसौ बहुसत्त्वानां घातकः परसंभवे ॥ ६६ ॥
न्यूने षष्टिमिते जन्तुः शशिसूर्यविमर्दने । कुरुक्षेत्रादितीर्थेषु कालेषु ग्रहणादिषु ॥ ६७ ॥
प्रतिग्राही बभूवासौ प्राग्भवे गरुडाग्रज । द्व्यूने षष्टिमिते सूर्यारिपौ पूर्वभवे सुत ॥ ६८ ॥
अभक्ष्यभक्षकश्चासीत्पृच्छकः कश्यपात्मज । शशांकशत्रुसंज्ञे प्रागूनषष्टिमितेऽण्डज ॥ ६९ ॥
मार्गदाह्यभयश्चासौ लोकानां भयदायकः । अथ षष्टिमिते वत्स शशिग्राहकसंज्ञके ॥ ७० ॥

१ त्वपरं–खपु० । २ परपापविमोचने–खपु० । ३ कृतवान्–खपु० । ४ क्षेत्रमारी–खपु० ।

अगम्यागमनं जन्तुः कृतवान् पूर्वजन्मनि । शुक्रान्तके कुयुक्ते प्राग्जीवोऽसौ पष्टिसंज्ञके ॥७१॥
चक्रे ब्रह्मवधं घोरं ब्रह्मस्वहरणं तथा । शस्त्रघातेन हननं शास्त्रबाह्योपजीवनम् ॥ ७२ ॥
द्विपष्टिमितके चक्रे भास्करच्छादकेऽण्डज । प्राक् परेषां फलानां च हरणं लोभसंयुतः ॥ ७३ ॥
सुवर्णहरणं सूत कृतवान् पृच्छकस्त्वसौ । त्रिपष्टिमितके पूर्वं प्रभाकरविमर्दने ॥ ७४ ॥
चतुःपष्टिमिते सूत नद्यादौ कृतवान् पुरा । ष्ठीवनं च शकृन्मार्गे विघ्नं परकृतौ तथा ॥ ७५ ॥
जीवोऽसौ पापवान्मोहाद्भानुशत्रौ पतत्त्रिण । ततः शशिरिपौ वत्स पञ्चषष्टिमिते पुरा ॥ ७६ ॥
मातृपितृगुरूणां च विप्राणां भक्तिवर्जितः । निन्दाश्रावी बभूवासौ जीवो विप्रियकारकः ॥ ७७॥
ततः सोमारिपौ पूर्वभवे षट्षष्टिसंमिते । नित्यानुष्ठानरहितश्चासीद्रत्नापहारकः ॥ ७८ ॥
न्यूने सप्ततिसंख्ये तु प्राग्भवे शुचिघातिनि । पितृघाती महाभाग जीवोऽसौ चाभवत्सुधीः ॥७९॥
बालघाती तथा वत्स जन्तुर्वै मित्रघातिनि । द्व्यूने सप्ततिसंख्ये तु बभूव परसंभवे ॥ ८० ॥
कूने सप्ततिमे चक्रे शुचिमर्दनसंज्ञके । धातूनां हरणं मोहात्प्राण्यसौ प्राग्भवेऽण्डज ॥ ८१ ॥
अथ सप्ततिमे वत्स मित्रद्विट्संज्ञके पुरा । चकार स्वेच्छया दुष्टो गुरोर्विप्रस्य घातनम् ॥ ८२ ॥
कुसप्ततितमे चक्रे शाकादिहरणं पुरा । नाम्नि स्कन्दरिपौ मोहाद्विनतानन्दवर्धन ॥ ८३ ॥
पक्षपातं सभायां वै चकाराधर्मतः पुरा । द्विसप्ततितमे तत्र पाताख्ये च पतत्त्रिण ॥ ८४ ॥
ततो यमरिपौ सूत त्रिसप्ततिमिते पुरा । बहुविप्रविरोधं च कृतवान् पृच्छकस्त्वसौ ॥ ८५ ॥
जीवोऽसौ रसहारी प्राग्बभूव विनतात्मज । चतुःसप्ततिसंख्ये तु धूमकेतौ प्रयत्नतः ॥ ८६ ॥
पञ्चसप्ततिसंख्ये तु दानवाख्ये पुराभवे । चक्रे भ्रातृवधं गेहोत्पापं मोहाच्छलादसौ ॥८७॥
विप्ररत्नापहरणं कृतवान् पूर्वजन्मनि । सूर्यचन्द्रारिपौ सूत षट्सप्ततिमे छलात् ॥ ८८ ॥
सप्तसप्ततिसंख्ये प्राग्वत्पापसमुद्भवः । निशाचरो बभूवासौ पूतनाग्रहविग्रहः ॥ ८९ ॥
हंसान्तके तथा द्व्यूनेऽशीतिसंख्ये पुराभवे । पक्षिघातनयुक्तोऽसौ बभूव विनतात्मज ॥ ९० ॥
खेचराख्ये तथा कूनेऽशीतिसंख्ये चकार वै । दत्तापहरणं पूर्वं तथा वेदस्य विक्रयम् ॥ ९१ ॥
अदृष्टेऽशीतिसंख्ये प्रागदृष्टवान् कामतः स्त्रियम् । परदृष्टिविनाशं च कृतवान् पृच्छकस्त्वसौ॥९२॥
प्रदीप्तारौ कुयुक्ते चाशीतिसंख्ये पतत्त्रिण । प्रारब्धस्य व्रतस्यापि त्यागी पूर्वभवेऽभवत् ॥ ९३ ॥
धूम्रवर्णाभिधे द्व्याढ्येऽशीतिसंख्ये पुराभवे । दुष्टमतिग्रहं जीवः कृतवान् कश्यपात्मज ॥ ९४ ॥
परसन्तानहरणं चक्रे पूर्वभवेऽप्यसौ । अग्निभिवे किले त्र्याढ्येऽशीतिसंख्ये च पुत्रक ॥ ९५ ॥
घनरूपे चतुर्युक्तेऽशीतिसंख्ये ततोऽण्डज । अविक्रयाणां सततं विक्रयी चाभवत्पुरा ॥ ९६ ॥
पञ्चाशीतिमिते वत्स तिलाङ्गाख्ये पुराभवे । पापकर्मरतश्चासौ बभूव प्राणघातकः ॥ ९७ ॥
अमेध्यदानं सततं सर्पघाती तथाभवत् । षडशीतितमे प्राणी सर्पाख्ये पूर्वजन्मनि ॥ ९८ ॥
न्यूने नवतिसंख्ये प्राग्बभूवाङ्ग प्राणघातकः । धूर्तो बभूव सततं कन्यकाविक्रयी तथा ॥ ९९ ॥
चन्द्रारिसंज्ञके चासीत्पिशुनः पूर्वजन्मनि । अष्टाशीतिमिते प्राणी विनतानन्दवर्धन ॥ १०० ॥
हिमांशुः शत्रुसंज्ञे प्राङ् नवाशीतिमिते पुरा । परवस्त्रापहरणं कृतवान् पृच्छकस्त्वसौ ॥ १०१ ॥
ततो नवतिसंख्येऽसौ घनान्ते परसंभवे । अनिवेद्य सुरादिभ्यो भोक्तासीच्च पतत्त्रिण ॥ १०२ ॥
शीतदीधितिशत्रौ प्राकाढ्ये नवतिसंमिते । निर्वाणं कृतवांश्चाशावयं मृत्युवदेन वै ॥ १०३ ॥
क्राढ्ये नवतिसंख्ये तु जयाशौ पुराभवे । जीवोऽयं चाभवत्सूत देवद्रव्यापहारकः ॥ १०४ ॥

---

१ मोहात्–ख पु०।

धर्मध्वजार्पी पूर्वांशे सप्तोनिते सति । पतिघातकरश्चासौ बभूव प्राणधारकः ॥ १०५ ॥
यज्ञविघ्नकरः प्राणी प्रागासीद्बुद्धिवर्जितः । शुक्राङ्कशतसंख्ये तु चतुर्नवतिसंमिते ॥ १०६ ॥
भाग्दुःखदायी ह्यभवत्पूर्वजन्मनि चाण्डज । अजारिसंज्ञके जन्तुः पञ्चोने शतसंख्यके ॥ १०७ ॥
कृष्णाङ्के च चतुर्हीने शतसंख्ये पतत्रिण । नीचस्त्रीसंगमाज्जीविश्वके पापं पुराभवे ॥ १०८ ॥
परदुःखप्रदानं च तथैवानृतभाषणम् । छेदनं परजिह्वायाः कृतवान् पृच्छकस्त्वयम् ॥ १०९ ॥
ह्यूने सप्तमिते सूत जिह्वाख्ये पूर्वजन्मनि । ह्यूने शतमिते पुत्र नीलवर्णे पुराभवे ॥ ११० ॥
मद्यपानरतश्चासौ जीवोऽभूत्पापमोहितः । तथा शुक्राङ्के कूने शतसंख्येऽभवत्कुधीः ॥ १११ ॥
देवद्विजोपाधिकारी प्राण्यसौ परसंभवे । ततः शतमिते सूत महीरूपे विधानतः ॥ ११२ ॥
सुगन्धिहरणं पापं कृतवान् पूर्वजन्मनि । महापातकसंयुक्तोऽसावभूत्पूर्वसंभवे ॥ ११३ ॥
आकाशसंज्ञके वत्स त्वेकोत्तरशते तथा । द्वियुक्ते शतसंख्ये भाग्यूत्राक्षे कृतवानसौ ॥ ११४ ॥
कूटसाक्ष्यजपापं च परमर्मप्रकाशनम् । देवशायी महाभाग बभूव परसंभवे ॥ ११५ ॥
त्रियुक्ते शतसंख्ये तु देवशत्रो च पृच्छकः । मातृहासौ पुरा जीवो भगच्छादकसंज्ञके ॥ ११६ ॥
शतसंख्ये चतुर्युक्ते महापातकसंयुतः । पञ्चाढ्ये शतसंख्ये तु ग्रहेन्द्रे पूर्वजन्मनि ॥ ११७ ॥
नानामिश्रितपापेभ्यो महाग्रहसमाकुलः । जात्युत्तमस्त्रीगमनं चक्रेऽसौ प्राणधारकः ॥ ११८ ॥
प्राक्संभवे तथोत्पाते षड्युक्ते शतसंख्यके । सप्तोत्तरशते त्वासीद्ब्रह्मरूपे पतत्रिण ॥ ११९ ॥
जीवघातकरश्चासावभवत्पूर्वजन्मनि । अष्टोत्तरशते पूर्वभवे तु खमसंज्ञके ॥ १२० ॥
पशुचोरोऽभवच्चासौ जीवोऽयं गरुडाग्रज । एतत्सर्वमुपाख्यातं पापमाचरणं सुत ॥ १२१ ॥
यत्कृते परमं दुःखं जीवो यात्यकृते सुखम् ॥ १२२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पापनिर्णयाध्याय एकादशः ॥ ११ ॥

---

अरुण उवाच ।

केतो रिष्टं त्वया प्रोक्तं तद्वदस्व दिवस्पते । मत्यायुषि महाभाग कथं मृत्युः प्रजायते ॥ १ ॥

श्रीसूर्य उवाच ।

ज्ञानाज्ञानकृतं पापं दृष्टं मानदृष्टं तथा । रिष्टं तद्विविधं ज्ञेयं दृष्टमप्यदृष्टं पुनः ॥ २ ॥
उभयोः काश्यपेयात्र प्रायश्चित्तैः क्षयो भवेत् । प्रायश्चित्ते कृते सूत रिष्टं नैव प्रशाम्यति ॥ ३ ॥
नश्येदायुर्बलं तत्तु दीपो वाय्वादिना यथा । रिष्टयोगे समुत्पन्ने चतुर्धा मुनिभिः स्मृतम् ॥ ४ ॥
स्वनाशः पुत्रनाशो वा स्त्रीनाशश्चार्थनाशनम् । अष्टोत्तरशतानां तु केतूनां गरुडाग्रज ॥ ५ ॥
नामतुल्यान्यरिष्टानि खड्गादिषु यथाक्रमम् । वक्ष्ये यथायथाकाले तानि त्वं श्रोतुमर्हसि ॥ ६ ॥
खड्गाभिधे महाकेतौ प्रथमे विनतात्मज । चत्वारिंशन्मिते वर्षे रिष्टमत्रातिदारुणम् ॥ ७ ॥
क्षुरसंज्ञे द्वितीये च काश्यपेयात्र जन्मनि । रिष्टं षट्त्रिंशदब्दे तु क्षुरसत्त्वात्र संशयः ॥ ८ ॥
धनाभिधे तृतीये तु रिष्टमत्र प्रकीर्तितम् । पञ्चविंशन्मिते वर्षे धनगर्जसमं सुत ॥ ९ ॥
श्यामनाम्नि महाबाहो चतुर्थेऽत्रैव जन्मनि । द्वाविंशन्मितके वर्षे रिष्टं प्रोक्तं खगाधिप ॥ १० ॥
पीताभिधे पञ्चमेऽत्र केतौ तु विनतात्मज । चतुस्त्रिंशन्मिते रिष्टं हायने चात्र जन्मनि ॥ ११ ॥
पाठेमते कृष्णवर्णाख्ये कालरूपेऽत्र संभवे । षडेकविंशन्मिते सूत हायने रिष्टमद्भुतम् ॥ १२ ॥

---

१ शुक्राङ्के–ख्पु० । २ षडभिधे–ख्पु० ।

यमाभिधे महारिष्टं यमरूपं षडब्दके । सप्तसंख्येऽत्र कथितं विनतानन्दवर्धन ॥ १३ ॥
मुद्गराख्ये महाघोरमष्टमेऽब्देव जन्मनि । यमस्य मुद्गरं घोरमष्टमे कश्यपात्मज ॥ १४ ॥
[1]शासनाख्ये महाकेतौ नवसंख्ये पतत्रिण । पञ्चिशन्मितके वर्षे रिष्टमत्र प्रकीर्तितम् ॥ १५ ॥
उल्काख्ये दशमे चापि चत्वारिंशदब्दके । रिष्टं तद्वोरवाकारमत्र जन्मनि मानद ॥ १६ ॥
ततो वज्राभिधेऽत्रैव रौद्रे रुद्रमितेऽण्डज । ह्येकोनविंशदब्दे तु रिष्टमुक्तं मनीषिभिः ॥ १७ ॥
आयुधाख्ये तथा ज्ञेयं द्वादशे गरुडाग्रज । ऋयूने त्रिशन्मिते रिष्टं हायनेऽत्रैव जन्मनि ॥ १८ ॥
केत्वभिधे तथा प्रोक्तं त्रयोदशमितेऽण्डज । अष्टादशमिते सूत हायने रिष्टमद्भुतम् ॥ १९ ॥
शीर्षसंज्ञे मनुमिते प्रोक्तमत्र खगाधिप । षोडशाब्दमिते रिष्टं शीर्षपातनवद्दृढम् ॥ २० ॥
पुच्छसंज्ञे ततः केतौ तृतीयेऽब्दे त्वारिष्टकम् । सर्पाख्ये पञ्चदि[2]मपं ह्युत्पातोऽत्र महान् सुत ॥ २१ ॥
गुदाभिधे ततोरिष्टं वर्षे द्वादशसंमिते । अष्टादशमिते सूत रिष्टं मनुमितेऽब्दके ॥ २२ ॥
चापाख्ये प्रथमे वर्षे रिष्टं प्रोक्तं मयाऽधुना । केतौ विंशन्मिते सूत बाणसंज्ञेऽत्र जन्मनि ॥ २३ ॥
द्विचत्वारिंशदब्दे तु रिष्टं देहान्तकृद्भवेत् । कुन्ताभिधे महाबाहो कालरूपं नवाब्दके ॥ २४ ॥
लग्नके रिष्टमप्रोक्तं द्वितीयेऽब्दे न संशयः । घटसंज्ञे त्रयोविंशे केतावेव जन्मनि ॥ २५ ॥
वेदवेदमिते वर्षे रिष्टं हि गरुडाग्रज । ततो गुह्याभिधे सूत मृत्युर्वर्षे चतुर्मिते ॥ २६ ॥
विषगर्भेऽण्डजश्रेष्ठ पञ्चविंशन्मिते ध्रुवम् । चत्वारिंशन्मिते वर्षे त्र्यधिके मरणं स्मृतम् ॥ २७ ॥
ततः कालाभिधे सूत रिष्टं प्रोक्तं मयाऽधुना । चत्वारिंशन्मिते वर्षे पञ्चयुक्तेऽत्र पुनरक ॥ २८ ॥
ग्रहान्तके महाबाहो ऋक्षसंख्ये त्वरिष्टकम् । पञ्चाशदेकहीनेऽब्दे जन्मन्यत्रोदितं ध्रुवम् ॥ २९ ॥
ध्वजसंज्ञेऽधुना प्रोक्तमष्टाविंशन्मितेऽण्डज । रिष्टमष्टाधिके चत्वारिंशदब्दे भयानकम् ॥ ३० ॥
कूर्मनिशन्मिते त्वत्र क्षत्राख्ये गरुडाग्रज । द्विपञ्चाशन्मिते वर्षे रिष्टं सर्वहरं स्मृतम् ॥ ३१ ॥
वृक्षसंज्ञे तथा केतौ त्रिंशत्संख्येऽण्डजाधिप । पञ्चाधिके तु पञ्चाशदब्दे प्रोक्तमरिष्टकम् ॥ ३२ ॥
ग्रहावेध तथा त्वत्र नाशः प्रोक्तो मनीषिभिः । पञ्चाशदेकयुक्तेऽब्दे चतुर्धा तत्त्वदर्शिभिः ॥ ३३ ॥
वीणाख्येऽत्र महोत्पाते द्वात्रिंशन्मितसंख्यके । रिष्टं च दारुणं प्रोक्तं त्रिपञ्चाशन्मितेऽब्दके ॥ ३४ ॥
त्र्यादये निशन्मिते केतौ नर्तनाख्येऽत्र पुनरक । द्व्यूने षष्टिमिते वर्षे रिष्टं स्यान्नर्तनोपमम् ॥ ३५ ॥
मृदङ्गसंज्ञके जन्मन्यत्रैव ध्रुवमद्भुतम् । चतुःपञ्चाशदब्दे तु पुनारिष्टं मयोदितम् ॥ ३६ ॥
पाशसंज्ञेऽत्र जनुषि पञ्चत्रिंशन्मितेऽण्डज । रिष्टं पाशसमं प्रोक्तं पञ्चाशत्सप्तवत्सरे ॥ ३७ ॥
पुष्पनाम्नि महाबाहो केतौ षट्त्रिंशसंख्यके । षडन्विते तु पञ्चाशदब्दे प्रोक्तमरिष्टकम् ॥ ३८ ॥
फलाभिधे महापुच्छे रिष्टमुक्तं मया चलम् । एकोनषष्टिवर्षे तु जन्मन्यत्रैव दारुणम् ॥ ३९ ॥
यष्ट्याभिधेऽत्र ध्वजके त्वष्टत्रिंशन्मितेऽण्डज । एकाधिके तु षष्ट्यब्दे जन्मन्यत्र भयानकम् ॥ ४० ॥
ईनाङ्के काश्यपेयात्र महारिष्टं मयोदितम् । द्विषष्टिमितके वर्षे बन्धनाद्यैर्भयानकम् ॥ ४१ ॥
मुरजे तु गहोत्पाते चत्वारिंशन्मिते ध्रुवम् । चत्वारिंशन्मिते वर्षे सप्तयुक्ते त्वरिष्टकम् ॥ ४२ ॥
अन्तकाख्ये तथा केतौ त्रिषष्टिमितवत्सरे । महारिष्टं मया प्रोक्तं पतत्रिण यमोपमम् ॥ ४३ ॥
केतौ खेचरसंज्ञे तु रिष्टं वर्षेऽष्टषष्टिके । यथाकाशात्प्रपतने तथा रिष्टमिहाण्डज ॥ ४४ ॥
चत्वारिंशन्मिते त्र्याढ्येऽनन्ताख्ये कथितं त्विह । चतुःषष्टिमिते वर्षे पुनानन्तभयप्रदम् ॥ ४५ ॥
शय्याभिधे ततः प्रोक्तं रिष्टमत्र खगाधिप । चत्वारिंशन्मिते वर्षे त्वेकाढ्ये नात्र संशयः ॥ ४६ ॥

---

१ शासनाख्ये-ख०। २ पञ्चदशके-खपु०। ३ सर्पे त्रिंशे चतुर्युते-खपु०।

पञ्चवेदमिते त्वत्र पत्रसंज्ञे त्वरिष्टकम्। चतुर्विंशन्मिते वर्षे जायते विनतात्मज ॥ ४७ ॥
केतौ भूचरसंज्ञे तु ह्येकहीने पतत्रिण। वर्षे त्रिंशन्मिते रिष्टं दारुणं कथितं मया ॥ ४८ ॥
अन्तरिक्षाभिधे तद्वद्वर्षे त्रिंशन्मिते ध्रुवम्। रिष्टं स्यादत्र जनुषि विनतानन्दवर्धन ॥ ४९ ॥
केतौ रज्ज्वभिधे सूत द्वात्रिंशन्मितवत्सरे। रज्जुबन्धादिकं रिष्टं जायतेऽत्रैव जन्मनि ॥ ५० ॥
हरिताख्ये महाकेतौ रिष्टमत्र मयोदितम्। पञ्चाशन्मितके नूनं ह्यष्टत्रिंशन्मितेऽब्दके ॥ ५१ ॥
नीलसंज्ञे महोत्पाते रिष्टमुक्तं तु काश्यप। पञ्चत्रिंशन्मिते वर्षे चात्र जन्मनि निश्चयात् ॥ ५२ ॥
नीलाङ्गाख्ये महाकेतौ सूत रिष्टं प्रकीर्तितम्। चत्वारिंशन्मिते वर्षे ह्येकहीनेऽत्र जन्मनि ॥ ५३ ॥
द्विपञ्चाशन्मिते वर्षे मुसलाख्ये पतत्रिण। रिष्टं मुसलवत्प्रोक्तं वर्षे षष्टिमितेऽण्डज ॥ ५४ ॥
त्रिपञ्चाशन्मिते केतौ बन्धनाख्ये त्वरिष्टकम्। विंशन्मितेऽब्दे बन्धाद्यैर्व्याढ्ये षष्टिमिते मृतिः ॥ ५५ ॥
पीताङ्गसंज्ञके सूत ततश्चोक्तमरिष्टकम्। चत्वारिंशन्मिते वर्षे षड्युक्तेऽत्रैव जन्मनि ॥ ५६ ॥
कृष्णाङ्गसंज्ञके केतावत्रारिष्टं प्रकीर्तितम्। एकादशमिते वर्षे काश्यपेयमहाद्भुते ॥ ५७ ॥
श्यामाङ्गसंज्ञके सूत महाकेतौ महाद्भुतम्। रिष्टं निगदितं वर्षे दशसप्तमितेऽण्डज ॥ ५८ ॥
गौराभिधे ततश्चूने[1] षष्टिसंख्ये त्वरिष्टकम्। त्र्याढ्ये त्रिंशन्मिते वर्षे जन्मन्यत्र खगाधिप ॥ ५९ ॥
गौराङ्गनाम्नि सुमहदरिष्टमुदितं मया। सप्तत्रिंशन्मिते वर्षे चात्र जन्मनि काश्यप ॥ ६० ॥
धूम्रवर्णे महाकेतौ पञ्चाशन्मितवत्सरे। रिष्टमुक्तं मया चात्र विनतानन्दवर्धन ॥ ६१ ॥
नीलवर्णाभिधे सूत प्रोक्तं षष्टिमिते ध्रुवम्। पञ्चषष्टिमिते रिष्टं हायनेऽत्रैव जन्मनि ॥ ६२ ॥
त्रिशूलसंज्ञके केतौ जन्मन्यत्र पतत्रिण। सप्तसप्तषष्टिमिते त्रिधा रिष्टं त्रिशूलवत् ॥ ६३ ॥
चतुःशूलाभिधे सूत द्व्याढ्ये षष्टिमिते ध्रुवम्। षट्षष्टिमितकेऽब्दे तु रिष्टमत्र चतुर्विधम् ॥ ६४ ॥
पञ्चशूले तु पञ्चाब्दे रिष्टमुक्तं मनीषिभिः। धूमध्वजे तु विश्वाब्दमिते मृत्युः खगाधिप ॥ ६५ ॥
चन्द्रारिसंज्ञके वर्षे त्रयोविंशे त्वरिष्टकम्। अर्कान्तके सप्तमेऽब्दे रिष्टं चार्कग्रहोपमम् ॥ ६६ ॥
धूम्राक्षेऽब्दे दशमिते कालरिष्टं प्रकीर्तितम्। सोमहाख्ये तथा केतावष्टषष्टिमिते ध्रुवम् ॥ ६७ ॥
रिष्टं तु त्रिंशदब्दे तु सोमग्रहसमं सुत। शूलाङ्गनाम्नि केतौ तु वेददिङ्मितवत्सरे ॥ ६८ ॥
महाशूलोद्भवं रिष्टमत्र जन्मनि कीर्तितम्। शूलाभिधे तथा केतौ रिष्टमत्रैव जन्मनि ॥ ६९ ॥
वर्षे सप्ततिसंख्ये च एकसप्ततिसंख्यके। द्विसप्ततिमिते वर्षे रिष्टमुक्तं भयानकम् ॥ ७० ॥
सोमपाख्ये ध्वजे सूत कुसप्ततिमितेऽधुना। सप्तायुधाख्ये सततं रिष्टं प्रोक्तं खगाधिप ॥ ७१ ॥
एकोनसप्ततिमिते वत्सरे चात्र जन्मनि। सप्तशूलाभिधे केतौ रिष्टं शूलवदद्भुतम् ॥ ७२ ॥
चतुःसप्ततिमे वर्षे त्रिसप्ततिमितेऽधुना। वज्रासने हि ध्वजके रिष्टं वज्रप्रपातवत् ॥ ७३ ॥
वर्षे सप्ततिमे सूत कुयुक्ते नात्र संशयः। मुद्गराख्ये महाकेतौ रिष्टं मुद्गरपातवत् ॥ ७४ ॥
सप्तसप्ततिमेऽब्दे तु कालरूपे पतत्रिण। षट्सप्ततिमिते सूत मुद्गराङ्गे त्वरिष्टकम् ॥ ७५ ॥
त्रिसप्ततिमिते चात्र हायने गरुडाग्रज। रक्ताङ्गसंज्ञके पुच्छे सप्तसप्तमितेऽधुना ॥ ७६ ॥
पञ्चसप्तमिते वर्षे रिष्टं रक्तप्रवर्षणम्। भौमाङ्गसंज्ञके केतावष्टसप्ततिसंमिते ॥ ७७ ॥
तस्मिन्वर्षे तदाप्नोति रिष्टमत्रैव दारुणम्। तमोरूपाभिधे सर्पे वर्षेऽशीतिमिते सुत ॥ ७८ ॥
जायतेऽत्र महारिष्टं ध्रुवं पापसमुद्भवम्। तमोव्यापकजे नाम्नि पुच्छे वेदाष्टकेऽब्दके ॥ ७९ ॥
दुष्टरिष्टं मया प्रोक्तमशीतिमितकेऽण्डज[2]। नवसप्ततिवर्षान्ते रिष्टं षष्टिमितेऽथवा ॥ ८० ॥

---

१ द्व्यूने–खपु०। २ ऽण्टज–खपु०।

एकाशीतिमिते केतौ चन्दनाङ्काभिधे सुत । उपग्रहे महारिष्टं षट्सप्ततिमितेऽब्दके ॥ ८१ ॥
वायुरूपे तथा प्रोक्तं पंचाढ्येऽशीतिवत्सरे । वेदाशीतिमिते केतावनिलाष्टकसंज्ञके ॥ ८२ ॥
सप्ताशीतिमिते वर्षे रिष्टं प्रोक्तमिहाण्डज । नभोगसंज्ञके रिष्टमेकाशीतिमितेऽब्दके ॥ ८३ ॥
पञ्चाशन्मितके वापि पञ्चाशीतिमितेऽधुना । ग्रहारिसंज्ञकेऽशीतिवर्षे नवमितेऽण्डज ॥ ८४ ॥
सप्तत्रिंशन्मिते वापि रिष्टमत्र खगाधिप । भ्रमाभिधाने चारिष्टं वर्षे नवतिसंमिते ॥ ८५ ॥
देवारिसंज्ञकेऽशीतिद्वियुक्ते हायने मयम् । नवाशीतिमिते केतौ कालरूपाभिधानके ॥ ८६ ॥
वर्षे ह्यशीतिमितके कालरूपं न संशय । संहारसंज्ञके पुच्छे महारिष्टं मयोदितम् ॥ ८७ ॥
वर्षे नवतिसप्ताढ्ये संहारोऽत्र यथा तथा । मृत्युनाम्नि महोत्पाते रिष्टं मृत्युसमं सुत ॥ ८८ ॥
षडशीतिमिते वर्षे षट्त्रिंशत्संमितेऽथवा । भ्रमसंज्ञे ततो रिष्टं प्रोक्तमत्रैव जन्मनि ॥ ८९ ॥
द्वयोत्तरशते वर्षे चतुस्त्रिंशन्मितेऽथवा । अदृष्टसंज्ञके पुच्छे चतुर्नवतिसंमिते ॥ ९० ॥
त्र्यधिके शतवर्षेऽत्र त्वदृष्टादृष्टमद्भुतम् । ध्वजके घोररूपेऽत्र रिष्टं घोरं प्रकीर्तितम् ॥ ९१ ॥
कुयुक्ते तु नवत्यब्दे त्रिपञ्चाशन्मितेऽथवा । अदृश्ये तु तथा सूत रिष्टमत्रैव जन्मनि ॥ ९२ ॥
पञ्चपञ्चाशदब्दे वा वर्षे नवतिषट्युते । मणिवर्णे शते न्यूने केतौ सप्तोत्तरे शते ॥ ९३ ॥
चतुःपञ्चाशदब्दे वा रिष्टमत्रैव जन्मनि । जलाभिधे ध्वजे सूत वर्षे नवतिसंमिते ॥ ९४ ॥
द्वियुक्तेऽत्र तरो रिष्टं चतुर्विंशत्समे तथा । भयानके कुलशते रिष्टमत्र भयानकम् ॥ ९५ ॥
चतुर्नवतिसंख्येऽब्दे ह्यष्टविंशतिमेऽपि वा । पालसंज्ञे शतमिते रिष्टं प्रोक्तं मयाऽधुना ॥ ९६ ॥
षडुत्तरशते वर्षे त्रिचत्वारिंशकेऽथवा । काढ्ये शते घोररूपे रिष्टं नवतिवत्सरे ॥ ९७ ॥
त्रिसंयुक्ते महाभाग न्यूने वा षष्टिसंमिते । वामनाख्ये शते त्र्याढ्ये द्वाभ्यामूने शतेऽब्दके ॥ ९८ ॥
द्व्याढ्ये पञ्चाशदब्दे वा रिष्टमत्रातिदारुणम् । घोरकाले महाकेतौ वर्षे शतमिते ध्रुवम् ॥ ९९ ॥
रिष्टं घोरं महाबाहो षड्विंशेऽब्दे तथाऽधुना । दाहसंज्ञे शते द्व्याढ्ये रिष्टं दाहोपमं स्मृतम् ॥ १०० ॥
पञ्चाधिके नवत्यब्दे ह्यष्टत्रिंशन्मितेऽथवा । पञ्चोत्तरशते केतौ मलयाख्ये पतत्त्रिण ॥ १०१ ॥
द्व्यूने शतमिते वर्षे रिष्टं त्रिंशन्मितेऽपि च । दिग्दाहः षडुत्तरशते वर्षे चैकोत्तरे शते ॥ १०२ ॥
द्व्यूने त्रिंशन्मिते वापि रिष्टमुक्तं खगाधिप । संहाराख्ये सप्तशते रिष्टं संहारवत्सुत ॥ १०३ ॥
पञ्चोत्तरशते वर्षे पञ्चाशत्यधिकेऽपि वा । अष्टोत्तरशते केतौ महाप्रलयसंज्ञके ॥ १०४ ॥
प्रलयान्तोपमं रिष्टं त्वष्टोत्तरशतेऽब्दके । शिशूनां रिष्टजं ज्ञानं पित्रोः प्रश्नविलग्नतः ॥ १०५ ॥
ज्ञेयं द्वादशवर्षान्तं स्वाधिकारस्ततः परम् । मातृरिष्टैर्मृताः केचित्पितृरिष्टैस्तथा परे ॥ १०६ ॥
केचित्पुत्राद्यरिष्टैस्तु म्रियन्ते नात्र संशयः ॥ १०७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके रिष्टनिर्णयाध्यायो द्वादश ॥ १२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि देवरूपविनिर्णयम् । यत्राधाराश्रिता देवा दाने पूर्णफलप्रदाः ॥ १ ॥
विघ्नराजः प्रकर्तव्यो गजवक्त्रश्चतुर्भुजः । शूलं तथाक्षमाला च तस्य दक्षिणहस्तयोः ॥ २ ॥
जलपूर्णं तथा पात्रं परशुश्चैव वामतः । दन्तश्चास्य प्रकर्तव्यो गर्भाऽरिष्टनिषूदनः ॥ ३ ॥
जलपूर्णं पुनः पात्रं कराग्रे तस्य कारयेत् । लम्बोदरस्तथा कार्यो मूषकोपरिसंस्थितः ॥ ४ ॥

१ त्र्यशीतिमितके—खपु० । २ —त्रिंशन्मितेऽथवा—खपु० । ३ क्रूरे—खपु० । ४ संभूतारिष्टज ज्ञानम्—खपु० । ५ यत्राधारा—खपु० । ६ जलपूर्णं पुन पात्र कराग्रे तस्य कारयेत्—खपु० ।

व्याघ्रचर्माम्बरधरो व्यालयज्ञोपवीतवान् । उपविष्टोऽथवा कार्यः पद्मासनसमन्वितः ॥ ५ ॥
कृत्वैवं विधिवद्द्याद्गणनाथाधीशं प्रयत्नतः । नापमृत्युभयं चापि सर्वविघ्नविनाशनम् ॥ ६ ॥
वातगुल्मविनाशार्थं यो दद्याद्गणनायकम् । विमुच्यते महारोगाद्वातरोगात्पतत्रिण ॥ ७ ॥
अथापस्मारयुक्तस्तु प्रदद्याच्छिवनन्दनम् । चतूरत्नैः समायुक्तं मन्त्रैरभ्यर्च्य यत्नतः ॥ ८ ॥
सोऽपस्मारान्महारोगान्मुच्यते नात्र संशयः । अथ भाद्रपदे शुक्ले चतुर्थ्यां गणनायकम् ॥ ९ ॥
पूजयेन्मोदकाहारैः कृत्वा रूपं हिरण्मयम् । देयस्तत्र विधिज्ञाय भयेभ्यो मुच्यतेऽधुना ॥ १० ॥
नित्यं पूज्यो गणाध्यक्षः कामेष्वपि विशेषतः । अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गणेशनिरूपणाध्यायस्त्रयोदशः ॥ १३ ॥

श्रीसूर्य उवाच ।

चतुर्भुजा तथा कार्या सर्वाभरणभूषिता । देवी सरस्वती सूत सुमुखी सा समुच्छ्रिता[1] ॥ १ ॥
पुस्तकं चाक्षमालां च तस्या दक्षिणहस्तयोः । वामयोश्च तथा कार्या वैणवी च कमण्डलुः ॥ २ ॥
समपादप्रतिष्ठा च कार्या सर्वाङ्गशोभना । पूजयित्वा शुभैर्गन्धैर्वस्त्रैर्मन्त्रविधानतः ॥ ३ ॥
( सा देया वेदविदुषे शुभबुद्धिविवृद्धये । अथवा शक्तितो दद्याद्धैमीं वा राजतीं शुभाम् ॥ ४ ॥
प्रतिमां पक्षिशार्दूल सरस्वत्या विधानतः । जपेल्लक्षं च तन्मन्त्रमर्धं वायुतसंख्यकम् ॥ ५ ॥
विद्याहरणजात्पापान्मुच्यते पूर्वसंभवात् । मूकत्वहरणं प्रोक्तं दानमेतत्पतत्रिण ॥ ६ ॥)[2]
नित्यं यः पूजयेद्भक्त्या विधिना भारतीं नरः । धनविद्यान्वितश्चात्र ज्ञानवानपि जायते ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके सरस्वतीरूपनिर्णयाध्यायश्चतुर्दशः ॥ १४ ॥

श्रीसूर्य उवाच ।

हरेः समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा ततः । दिव्यरूपाम्बुजकरा सर्वाभरणभूषिता ॥ १ ॥
श्वेताम्बरधरा देवी रूपेणाप्रतिमा भुवि । पृथक् चतुर्भुजा कार्या देवी सिंहासने स्थिता ॥ २ ॥
सिंहासनेऽस्याः कर्तव्यं कमलं चारुकर्णिकम् । अष्टपत्रं महाभाग कर्णिकायां तु सा स्थिता ॥ ३ ॥
लिखित्वा शोभने पत्रे[3] हिरण्याढ्ये प्रयत्नतः । पूजयित्वा तु विविधैस्तन्मन्त्रैश्चोपचारकैः ॥ ४ ॥
जपित्वा विधिवत्तत्र लक्षार्धं होमयेत्ततः । ब्राह्मणाय विधिज्ञाय सा देया शक्तितोऽण्डज ॥ ५ ॥
लक्ष्मीहरणजात्पापात्पूर्वजन्मसमर्जितात् । मुच्यतेऽत्र महाभाग दरिद्रत्वहरं परम् ॥ ६ ॥
नित्यं यः पूजयेल्लक्ष्मीं दीपावल्यां तथा निशि । लक्ष्मीवृद्धिर्भवेत्तस्य जन्मन्यत्रापरे तथा ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके लक्ष्मीरूपनिरूपणाध्यायः पञ्चदशः ॥ १५ ॥

श्रीसूर्य उवाच ।

सूर्यः कार्यः शुभाकारः सर्वाभरणभूषितः । चतुर्बाहुर्महातेजाः कवचेनापि संवृतः ॥ १ ॥
रत्नमयस्तस्य कर्तव्या वामदक्षिणहस्तयोः । एकचक्रेऽथ सप्ताश्वे षडारे वा रथोत्तमे ॥ २ ॥
उपविष्टस्तु कर्तव्यो देवोऽर्कोऽरुणसारथिः । यथोक्तेन विधानेन कृत्वा धातुमयं रविम् ॥ ३ ॥
संपूज्य रक्तपुष्पैस्तु सूर्यमन्त्रेण मन्त्रवित् । ब्राह्मणाय प्रदद्यात्तु भ्रमदोषोपशान्तये ॥ ४ ॥

१ समुद्गजा–खपु०। २ ( ) नास्ति–खपु०। ३ पात्रे–खपु०।

## सूर्यमन्त्रः ।

"ॐ नमो भगवते भास्कराय सर्वलोकप्रकाशकाय मम हृदि प्रकाशं कुरुकुरु स्वाहा ॥"
यो जप्त्वा विधिना मन्त्रं कोट्यर्धार्धार्धसंमितम् । होमयेत्तिलमध्वाज्यैः शक्त्यां संपूज्य भास्करम्५
स प्राप्नोति परां सिद्धिं मन्त्रतन्त्रसमुद्भवाम् । सप्तम्यां माघशुक्लायां विशेषात्पूजयेद्रविम् ॥ ६ ॥
वाञ्छितार्थो भवेच्छीघ्रं मम मन्त्रप्रभावतः । अथार्चयेन्नरो नित्यं भक्तिमान्मामिहाण्डज ॥ ७ ॥
रूपारोग्यसुखैश्वर्यगुणः स्यान्नात्र संशयः । अष्टपद्मदलाकारं लिखित्वा च प्रपूजयेत् ॥ ८ ॥
ब्राह्मणाय प्रदद्याच्च सर्वरोगापनुत्तये । यस्य पञ्चमभावस्थो रविः पुत्रविनाशकृत् ॥ ९ ॥
स्त्रीभयं सप्तमावस्थः स्त्रीणां पतिभयंकरः । पित्रोश्चतुर्थदशमे सहजे चाग्रजे भयम् ॥ १० ॥
तेनाराध्यो महाभक्त्या जपहोमार्चनादिभिः । हिरण्मयस्तथा देवो विधिज्ञाय विधानतः ॥ ११ ॥
तस्य पुत्रविवृद्धिः स्यादवश्यं विनतात्मज । नार्चयेद्यस्तु मां नित्यं द्विजो ज्ञानविवर्जितः ॥ १२ ॥
जन्मजन्मन्यसौ रोगी शोकभाग्जायते नरः ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके सूर्यरूपनिर्णयाध्यायः षोडशः ॥ १६ ॥

---

## श्रीसूर्य उवाच ।

चन्द्रः श्वेतवपुः कार्यस्तथा श्वेताम्बरो विभुः । चतुर्बाहुर्महातेजाः सर्वाभरणवांस्तथा ॥ १ ॥
कुमुदौ द्वौ तथा कार्यौ तस्य देवस्य हस्तयोः । चिह्नं तथास्य सिंहाङ्कं वामपार्श्वेऽर्कवद्भवेत् ॥२॥
केयूरमुकुटाढ्यं च दिव्यरुक्मरथे स्थितम् । यः कृत्वा विधिवत्सोमं सौवर्णं राजतं तथा ॥ ३ ॥
पूजयित्वा शुभैर्गन्धैर्धूपैर्दव्यैर्विशेषतः । विप्राय दद्याद्विधिवत्पातकेभ्यः प्रमुच्यते ॥ ४ ॥
विप्रपीडादिजं पापं पूर्वजन्मसमुद्भवम् । तत्क्षणान्मुच्यते चापि दानस्यास्य प्रभावतः ॥ ५ ॥
नित्यं यश्चार्चयेच्चन्द्रं द्विजराजं महाबलम् । न तस्य ग्रहजा पीडा भविष्यति कदाचन ॥ ६ ॥
पौर्णमास्यां च यो दद्याद्धिमांशुं प्रयतः शुचिः । सोपवासान्वितो भक्त्या सर्वारिष्टविनाशनम् ॥७॥
क्रूरयुक्तस्तथा चन्द्रो जन्मन्यत्र यदा भवेत् । मनोजातसमुद्भूताचिन्ताशङ्कातुरो भवेत् ॥ ८ ॥
तद्दोषशमनायैव दद्यादेनं निशाकरम् । संपूज्य मन्त्रैर्विविधैर्जप्त्वा हुत्वाऽयुतादिकम् ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके चन्द्ररूपनिर्णयाध्यायः सप्तदशः ॥ १७ ॥

---

## श्रीसूर्य उवाच ।

भौमोऽग्निरूपः कर्तव्यः संस्थितः काञ्चने रथे । किरीटी द्विभुजः कान्तस्त्रिकोणे वा रथे स्थितः॥१॥
तन्मूर्तिं पूजयेद्यस्तु रक्तपुष्पैर्विशेषतः । धूपैर्नैवेद्यनैर्दिव्यैः कुंकुमाक्षतचन्दनैः ॥ २ ॥
न जायते ऋणग्रस्तश्चात्र जन्मनि सुव्रतः । भौमवारे च यो दद्याद्ब्राह्मणाय विधानतः ॥ ३ ॥
न च भौमग्रहात्पीडापीडितश्चात्र जन्मनि । सोपवासी नरो यस्तु कृत्वा भौमं हिरण्मयम्॥४॥
पूजयित्वा विधानेन ब्राह्मणाय निवेदयेत् । स रक्तजान्महादोषान्मुच्यते नात्र संशयः ॥ ५ ॥
अथ पञ्चमभावस्थो भौमः पुत्रविनाशकः । आलोकयति वक्षावमपि दुष्टप्रदो भृशम् ॥ ६ ॥
सप्तमस्थः स्त्रियं हन्ति स्त्रीणां पतिविनाशकः । उग्रान्तिमान्त्यतुर्यस्थो द्वयोर्दूषणकारकः ॥ ७ ॥
ज्ञात्वा भौमं महाभाग कृत्वा शुद्धं हिरण्मयम् । पूर्वोक्तविधिना रूपं तथा जप्त्वायुतादिकम्॥८॥
हुत्वा संपूज्य तन्मन्त्रै रक्तगन्धाम्बरान्वितैः । तं च दद्याद्विधिज्ञाय सर्वारिष्टविनाशनम् ॥ ९ ॥
अनेन विधिना भौमं योऽर्चयेद् बुद्धिमान्नरः । सर्वं भौमफलं दुष्टं तत्क्षणादेव नश्यति ॥ १० ॥

अथ भौममहादानं वक्ष्यामि त्वां खगेश्वर । तरुणं वृषभं रक्तं ससुवर्णमलंकृतम् ॥ ११ ॥
प्रवाललताम्रसद्रत्नैर्मणिभिर्दुद्रुभिर्युतम् । रक्तपुष्पैश्च तद्रोर्णीं कृत्वा चोभयपार्श्वयोः ॥ १२ ॥
गोधूमान्नमसूराभ्यां पूरितां सगुडां सुत । तं दद्याद्वेदविदुषे भौमरूपसमन्वितम् ॥ १३ ॥
भौमारिष्टविनाशाय भवत्येव न संशयः ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके भौमरूपनिर्णयाध्यायोऽष्टादशः ॥ १८ ॥

## श्रीसूर्य उवाच ।

विष्णुतुल्यो बुधः कार्यः सौवर्णः स्यन्दने स्थितः । भौमवद्वा प्रकर्तव्यो वस्त्रः पीताम्बराश्रुतः॥१॥
दद्याच्च विप्रमुख्याय कृत्वा रूपं विधानतः । सर्वरोगहरः सौम्यः सर्वकार्यार्थसिद्धिदः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके बुधरूपनिर्णयाध्याय एकोनविंशः ॥ १९ ॥

## श्रीसूर्य उवाच ।

तप्तजाम्बूनदाकारो द्विभुजश्च बृहस्पतिः । पुस्तकं चाक्षमालां च करयोस्तस्य कारयेत् ॥ १ ॥
सर्वाभरणयुक्तश्च तथा पीताम्बरैर्वृतः । अश्वाश्वे काञ्चने दिव्ये रथे ह्यतिमनोहरे ॥ २ ॥
महापर्वसु यो दद्याद्गुरुं हेममयं शुभम् । विप्राय वेदविदुषे विधिज्ञाय प्रयत्नतः ॥ ३ ॥
गुरुवादादिजातपापात्पूर्वजन्मसमार्जितात् । मुच्यते नात्र संदेहो धारस्नुभत्वं च जायते ॥ ४ ॥
सर्वरोगहरं चैतद्दानमुक्तं गुरोः परम् । यः कृत्वा विधिना सूत पूजयेच्च बृहस्पतिम् ॥ ५ ॥
नित्यं शुभमना भूत्वा गुरुपीडां न पश्यति । चापमीनौ सुतस्थौ च जीवो वा सुतगो बली ॥ ६ ॥
पुत्रविघ्नप्रदः प्रोक्तो महद्भिस्तत्त्वदर्शिभिः । तद्दोषशमनायैव दद्याद्धेममयं गुरुम् ॥ ७ ॥
विधिज्ञाय सुसंपूज्य जपहोमायुतादिभिः । प्रयोगोऽयं महाभाग पुत्रपौत्रसुखप्रदः ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गुरुरूपनिर्णयाध्यायो विंशः ॥ २० ॥

## श्रीसूर्य उवाच ।

शुक्रः श्वेतवपुः कार्यः श्वेताम्बरधरस्तथा । द्वौ करौ कथितौ तस्य विधिपुस्तकसंयुतौ ॥ १ ॥
दशाश्वे च रथे कार्यो राजतो भृगुनन्दनः । संपूज्य विधिना मन्त्रैर्वैदिकैश्चोपचारकैः ॥ २ ॥
देयो विप्राय शक्तयात्र प्रमेहान्मुच्यते गदात् । संस्थाप्य कलशे शुक्रं राजतं च स्वशक्तितः॥३॥
संपूज्य गन्धपुष्पाद्यैर्जपहोमैर्विशेषतः । क्षीराज्यवस्त्रान्नयुतं ब्राह्मणाय प्रदापयेत् ॥ ४ ॥
न चाशुभफलं पश्येन्नारीसंमुखशुक्रजम् । दक्षिणस्थात्तथा चास्तगताद्दो पाच्च यत् फलम्॥ ५ ॥
अथवा पूजयेद्भक्त्या राजतं भृगुनन्दनम् । नित्यं नाशुभमाप्नोति शुक्रदोषसमुद्भवम् ॥ ६ ॥
तावत्प्रपूजयेद्देवं यावन्नोदयते पुनः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शुक्ररूपनिर्णयाध्याय एकविंशः ॥ २१ ॥

## श्रीसूर्य उवाच ।

पादहीनस्तथा कृष्णः शनिः कार्यः शिराततः । दण्डाक्षमालासंयुक्तः करद्वितयभूषितः ॥ १ ॥
कार्ष्णोपस्थे रथे लोहमये चाष्टतुरङ्गमे । पूजयित्वा शनिं देवं नित्यं गन्धादिभिः सुत ॥ २ ॥
प्रदद्याद्वेदविदुषे सर्वदोषापनुत्तये । अधोमुखं शनेरूपं कृत्वा स्वर्णमितं शुभम् ॥ ३ ॥
वरयेद् ब्राह्मणांस्त्विज्ञान्वस्त्राभरणकाञ्चनैः । संपूज्य गन्धपुष्पाद्यैः षोडशोपचारकैः ॥ ४ ॥

१ पीताम्बरैर्वृतः--खपु० ।

संस्थाप्य कलशे पूर्णे नीलचैलसमावृते । कोटिलक्षायुतं जप्त्वा शनिमन्त्रं प्रयत्नतः ॥ ५ ॥
तदग्रे होमयेद्यत्नात्स्वगृह्योक्तविधानतः । माषैस्तिलैः सर्षपैश्च घृतेनापि शमीफलैः ॥ ६ ॥
जपोपकल्पितां दद्याद्दक्षिणां च हिरण्मयीम् । पूर्णाहुतिं ततः कुर्यात्कर्ता शुचिरलंकृतः ॥ ७ ॥
पलालैस्तिलैः कृष्णैः शतपुष्पघनाञ्जनैः । सलाजं स्नपनं कुर्याल्लोहपात्रसुसंस्थितैः ॥ ८ ॥
शनिदोषोपशान्त्यर्थं यजमानः प्रयत्नतः । कृष्णां गां विधिवद्दद्यात्कपिलां च पयस्विनीम् ॥ ९ ॥
सालंकारां सुवर्णाढ्यां शनेः प्रीतिकरीं पराम् । ब्राह्मणान्भोजयेत्पश्चाद्भक्त्या दद्याच्च दक्षिणाम् ॥ १० ॥
ना य एवं प्रकुरुते शनिशान्तिं विधानतः । न तस्य दुरितं किंचिन्न शनैश्चरजं भयम् ॥ ११ ॥
जन्माष्टद्वादशे तुर्ये द्वितीये गोचराश्रितः । महाविघ्नकरः सौरो दुष्टाङ्गस्थोऽपि भावितः ॥ १२ ॥
क्षेत्रे सिंहासने दुर्गे देशे कर्माश्रितेऽपि च । राज्यभङ्गप्रदो लग्नात्पञ्चमे पुत्रविघ्नकृत् ॥ १३ ॥
सर्वमेतत्फलाद् दुष्टाद् दुष्टाच्चापि चलाद्विधात् । न किंचिद्भयमाप्नोति शनियागप्रभावतः ॥ १४ ॥
राज्यभ्रष्टो लभेद्राज्यं सुखी स्यात्सर्वतो नृपम् । अथ लोहमयं सर्वमष्टाङ्गुलमितं सुत ॥ १५ ॥
लिखित्वा तु नराकारं पादहीनमधोमुखम् । स्नापयित्वा तु तैलेन नीलचैलसमावृतम् ॥ १६ ॥
श्यामपुष्पैस्तिलाद्यैश्च गन्धैर्नैवेद्यैः शुभैः । संस्थाप्य तैलपात्रे तु शनिमन्त्रेण धीमता ॥ १७ ॥
एवं प्रपूजयेन्नित्यं शनिवारे विशेषतः । जप्त्वा हुत्वा प्रयोगान्ते ब्राह्मणाय समर्पयेत् ॥ १८ ॥
अनेन विधिना यस्तु सूर्यपुत्रं प्रपूजयेत् । तुष्टिं याति न संदेहः पीडां मुक्त्वा शनैश्चरः ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शनिस्थानिर्णयाध्यायो द्वाविंशः ॥ २० ॥

श्रीसूर्य उवाच ।

राहुर्धूम्रवपुः कार्यो रथेऽश्वे तु राजते । सस्थितो द्विभुजः क्रूरश्चोर्ध्वकेशो भयानकः ॥ १ ॥
दक्षिणे तु करे शूलं वामे पुस्तकसंयुतम् । संपूज्य राहुमन्त्रेण ब्राह्मणाय निवेदयेत् ॥ २ ॥
अष्टाङ्गुलाधिकं कांस्यपात्रं शर्करया युतम् । पञ्चरत्नान्वितं दद्याद्राहोः प्रीतिकरं परम् ॥ ३ ॥
नृपजन्मर्क्षगो राहुः केतुर्वा यदि चाण्डज । दुर्गनामर्क्षगो वापि जन्माष्टद्वादशेऽपि वा ॥ ४ ॥
राज्यभङ्गप्रदो ज्ञेयो देशविप्लवकरस्तथा । ज्वरव्याध्यादिरोगाश्च दुष्टारिष्टं करोत्यसौ ॥ ५ ॥
तद्दोषशमनायैव दद्याद्धेममयं वपुः । पूजयित्वा तु गन्धाद्यैर्मन्त्रैश्चापि विशेषतः ॥ ६ ॥
कोटिलक्षायुतं जप्त्वा हुत्वा च तिलसर्षपैः । जापकेभ्यः प्रदद्याच्च दक्षिणां च हिरण्मयीम् ॥ ७ ॥
यथा ग्रहस्तथाचार्यः पूजनीयः प्रयत्नतः । पट्टवस्त्राश्वरत्नाद्यैर्भूषणैर्धेनुभिर्युतैः ॥ ८ ॥
य एवं कुरुते शक्त्या राहुपूजां नृपोत्तमः । राहुरिष्टमय घोरं न पश्यति ममाज्ञया ॥ ९ ॥
न तस्य देशभङ्गः स्यान्न च दुःखमवाप्नुयात् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके राहुस्थानिर्णयाध्यायस्त्रयोविंशः ॥ २३ ॥

श्रीसूर्य उवाच ।

उल्कासंस्थः[१] कर्तव्यः केतुर्मूर्धा विवर्जितः । द्विभुजो दक्षिणः शूल्यः करो वामः सपुस्तकः ॥ १ ॥
अथाश्वे वा रथे दिव्ये संस्थितो भीमवत्तथा । वातव्याधिविनाशाय यो दद्यात्काञ्चनं ध्वजम् ॥ २ ॥
वातव्याधिभयान्मुक्तस्तत्क्षणाज्जायते नरः । तथा केतुकृते रिष्टे दद्याद्धेमं तथा कृतम् ॥ ३ ॥
राजतं वा यथाशक्त्या जप्त्वा हुत्वा विधानतः । भोजयेद्ब्राह्मणांस्तत्र शक्त्या दद्याच्च दक्षिणाम् ॥ ४ ॥

१ पश्चाच्छाया—स्पु०।

दृष्ट्वाद्सुतं नृपो मोहात्र कुर्यात्केतुपूजनम् । नृपविघ्नकरं ज्ञेयं षण्मासान्ते न संशयः ॥ ५ ॥
राज्ञां रिष्टकरं ज्ञेयं प्रयोगेष्विदमद्भुतम् । यस्मिन् कृते महाभाग शमवेत्केतुजाद्भुतम् ॥६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके केतुस्वरूपनिर्णयाध्यायश्चतुर्विंशः ॥ २४ ॥

श्रीसूर्य उवाच ।

सुरेश्वरस्तु कर्तव्यो गजराजोपरिस्थितः । सर्वाभरणसंयुक्तः सुवर्णाभश्चतुर्भुजः ॥ १ ॥
नीलपट्टाम्बरधरस्तथा तिर्यग्दृशः प्रभुः । किरीटी दक्षहस्तौ तु पद्माङ्कुशविभूषितौ ॥ २ ॥
शचीपृष्ठगतं वाममपरं वज्रभूषितम् । वामभागे शची दिव्या सर्वाभरणभूषिता ॥ ३ ॥
पार्श्वयोरुभयोर्द्वे तु दिव्यव्यजनसंयुते । यो दद्यात्स्वर्गकामस्तु महेन्द्रं विनतात्मज ॥ ४ ॥
हैमं कृत्वा पलमयं स नरः स्वर्गभाग्भवेत् । पुत्रकामस्तु यो दद्याद्देवेशं पलसंमितम् ॥ ५ ॥
संपूज्य विधिना सूत जप्त्वा हुत्वा विशेषतः । सप्तम्यामुपवासी तु लभेत्पुत्रं न संशयः ॥ ६ ॥

मन्त्रः ।

ॐनमो विश्वरूपाय शचीपतये स्वर्गकामफलप्रदाय मम कामफलं कुरुकुरु स्वाहा ॥
इन्द्रर्क्षे रोगमापन्ने कृत्वेन्द्रं हेमजं सुत । संपूज्य गन्धपुष्पाद्यैरिन्द्रमन्त्रेण मन्त्रवित् ॥ ७ ॥
दद्याद्वेदविदे विप्राय सर्वरोगापनुत्तये । जनितश्चेन्द्रभे बालः स दुःखाय न संशयः ॥ ८ ॥
तद्दोषशमनायैव हैमं कुर्यात्सुरेश्वरम् । जपित्वा शक्रमन्त्रेण शक्त्या हुत्वा विधानतः ॥ ९ ॥
तदग्रे पूजयित्वा तु गन्धपुष्पाक्षतैरलम् । स्नात्वा च दैवतैर्मन्त्रैः सर्वौषधिसमन्वितैः ॥ १० ॥
दद्याद्वेदविदे विप्राय नरस्माद्दोषात्प्रमुच्यते । इन्द्रर्क्षशान्तिं मनुजो यो न कुर्याद्विधानतः ॥ ११ ॥
चतुर्थपादजातस्य पितृरिष्टकरं भवेत् । कुले ज्येष्ठस्य रिष्टं वा सहजानामथापि वा ॥ १२ ॥
तृतीये मातृपक्षस्य द्वितीये धननाशनम् । प्रथमे शुभदं प्रोक्तं शान्त्या च गरुडाग्रज ॥ १३ ॥
ज्येष्ठान्त्ये षट् कला निन्द्या नान्या रिष्टकराः स्मृताः ॥ १४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके इन्द्रमूर्तिनिर्णयाध्यायः पञ्चविंशः ॥ २५ ॥

श्रीसूर्य उवाच ।

कुर्याज्जटाधरं वह्निं रक्ताङ्गं धूम्रवाससम् । ज्वालाकुलं महासौम्यं नेत्रत्रयविभूषितम् ॥ १ ॥
चतुर्भुजं श्मश्रुयुक्तं चतुर्दंष्ट्रं महाबलम् । चतुर्भिश्च शुकैर्युक्ते रथे धूमाङ्किते शुभे ॥ २ ॥
वायुसारथिसंयुक्ते संस्थितं विनतात्मज । अग्नेर्वामगता स्वाहा रत्नपात्रकरान्विता ॥ ३ ॥
नित्यं यः पूजयेदग्निं कृत्वा हैमस्वरूपकम् । गन्धाद्यैरग्निमन्त्रेण दत्त्वा विप्राय धीमते ॥ ४ ॥
निर्धनो धनमाप्नोति प्रयोगस्य प्रभावतः । अथवाग्नेर्महामूर्तिं सौवर्णीं यः प्रयच्छति ॥ ५ ॥
स चाग्निदाहजात्पापान्मुच्यते नात्र संशयः ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अग्निस्वरूपनिर्णयाध्यायः षड्विंशः ॥ २६ ॥

श्रीसूर्य उवाच ।

नीलाम्बुदाभः कीनाशस्तप्तचामीकराम्बरः । महिषस्थस्तु कर्तव्यः सर्वाभरणभूषितः ॥ १ ॥
दण्डखड्गावुभौ हस्तौ ज्वालामालाविभूषितौ । वामोत्सङ्गगता कार्या धूम्रोर्णा दिव्यरूपिणी॥२॥
तस्य दक्षिणभागे तु चित्रगुप्तं निधापयेत् । द्विभुजं सौम्यवदनं लेखनीपत्रसंयुतम् ॥ ३ ॥
वामे पाशधरः कार्यः कालो विकटदर्शनः । सौवर्णीं प्रतिमां यस्तु धर्मराजस्य चाण्डज ॥ ४ ॥

दशम्या च चतुर्थ्यां वा पूजयित्वा विधानतः । दद्यात्तां वेदविदुषे यथा रिष्टोपशान्तये ॥ ५ ॥
महापर्वसु यो दद्याद्यमरूपं हिरण्मयम् । संपूज्य गन्धपुष्पाद्यैस्तन्मन्त्रेरर्चनैः शुभम् ॥ ६ ॥
न पश्यति महाघोरा विविधां यमशासनाम् । भुक्त्वा भोगान्महाभाग स्वर्गस्थो नात्र संशयः॥७॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके यमस्वरूपनिर्णयाध्याय सप्तविंश ॥ २७ ॥

## श्रीसूर्य उवाच ।

ऊर्ध्वकेशः श्मश्रुयुक्तो द्विबाहुर्भीषणाननः । विवृतास्यो विरूपाक्षः भ्रमद्दंष्ट्रोज्ज्वलाननः ॥ १ ॥
कृष्णरक्ताङ्गवर्णश्च कृष्णाम्बरधरस्तथा । सर्वाभरणभूषाढ्यो दण्डपाशधरस्तथा ॥ २ ॥
भार्या च तस्य कर्तव्या देवी निर्ऋतिवामगा । अपमृत्युभयं घोरं नैव पश्यति मानवः ॥ ३ ॥
रोगार्तो मुच्यते रोगाद्दानाद्वा पूजनाच्छुभम् । मूलजातस्य बालस्य सर्वदोषोपशान्तये ॥ ४ ॥
जपित्वा निर्ऋतेर्मन्त्रमयुतार्धं विधानतः । हुत्वा निर्ऋतिमन्त्रेण स्नात्वा मन्त्रैस्तु वारुणैः ॥५॥
प्रतिमा या प्रयत्नेन निर्ऋतेर्गरुडाग्रज । ब्राह्मणाय च तां दद्यान्मूलदोषाऽपनुत्तये ॥ ६ ॥
मूलारिष्टहरं सूत परं दानं मयोदितम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके निर्ऋतिरूपनिर्णयाध्यायोऽष्टाविंश ॥ २८ ॥

## श्रीसूर्य उवाच ।

ईषत्प्रलंबजठरो मुक्ताहारविभूषितः । सर्वाभरणवान्राजा महाकायश्चतुर्भुजः ॥ १ ॥
सप्तहंसे रथे कार्यो वरुणो यादसांपतिः । वैडूर्यमणिसंकाशः श्वेताम्बरधरः प्रभुः ॥ २ ॥
पद्मपाशौ तथा कार्यौ देवदक्षिणहस्तयोः । शंखं च रत्नपात्रं च वामयोस्तस्य कारयेत् ॥३॥
वामभागे तथा कार्या तद्भार्या वारुणी शुभा । वामदक्षिणयोर्भागे यमुना जाह्नवी तथा ॥ ४ ॥
जलराजं महाभाग यो दद्याद्धेमजं शुभम् । राजतं वा शुभं रूपं ब्राह्मणाय कुटुम्बिने ॥ ५ ॥
जलजातकृतात्पापात्पूर्वजान्मुच्यतेऽधुना । यो नित्यं पूजयेद्देवं वरुणं श्रद्धयान्वितः ॥ ६ ॥
पूर्वपापविशुद्धात्मा स गच्छेद्वारुणं पदम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके वरुणस्वरूपनिर्णयाध्याय एकोनत्रिंशः ॥ २९ ॥

## श्रीसूर्य उवाच ।

वायुर्महाबलः कार्यो द्विभुजो मृगवाहनः । नीलाम्बरधरो देवस्तथाकारस्तु शीघ्रगः ॥ १ ॥
चतुश्चक्रे रथे सूत सप्ताश्वे वा स्थितः प्रभुः । मुद्गरं चादिमे हस्ते द्वितीये चापसंयुतः ॥ २ ॥
वायुपीडान्वितो यस्तु ददाति पवनं सुत । हैमं शक्त्या यथाकारं ब्राह्मणाय विधानतः ॥ ३ ॥
स वायुजान्महारोगान्मुच्यते नात्र संशयः । अथवा कारयेद्धेम हरिणं वायुवाहनम् ॥ ४ ॥
शृङ्गे च राजते कार्ये पर्वत्रयसमन्विते । पत्रे लेख्यं प्रयत्नेन सर्वरत्नविभूषितम् ॥ ५ ॥
कांस्यपात्रे स्थितं चैव तण्डुलोपरि संस्थितम् । भूषितं पट्टवस्त्रेण पलार्धार्धेन संमितम् ॥ ६ ॥
संपूज्य गन्धपुष्पाद्यैर्वायुमन्त्रेण धीमता । हुत्वा तेनैव मंत्रेण जप्त्वा पूर्वविधानतः ॥ ७ ॥
दद्याद्द्विजवरायैव महावातोपशान्तये ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके वायुरूपनिर्णयाध्यायस्त्रिंश ॥ ३० ॥

---

१ अनयो ( ३० । ३१ ) अध्याययोर्विपर्यय —म्पु० । २ सयुगे ग्पु० ।

श्रीसूर्य उवाच।

चामीकराभो वरदः कर्तव्यो नरवाहनः। लम्बोदरश्चतुर्बाहुर्वामपिङ्गललोचनः ॥ १ ॥
गदाशक्ती च कर्तव्ये वामदक्षिणहस्तयोः। शङ्खपद्मनिधी कार्यौ वामे च धनदस्य च ॥ २ ॥
उदीच्यवेषः कवची हारी च विनतात्मज। द्वे च दंष्ट्रे मुखे तस्य कर्तव्ये श्मश्रुसंयुतः ॥ ३ ॥
योऽर्चयेत्सततं सूत निधिनाथं प्रयत्नतः। गन्धपुष्पोपचारैश्च स दारिद्र्यं न पश्यति ॥ ४ ॥
स्वरूपवांश्च धनवाञ्जायते बहुजन्मनि। दरिद्रो लभते लक्ष्मीं धनदस्य च पूजनात् ॥ ५ ॥
धनापहारमस्तत्तनुर्यो दद्यान्नरवाहनम्। सौवर्णं सर्वरत्नाढ्यं लक्ष्मीं प्राप्नोत्यसंशयः ॥ ६ ॥
धनेश्वरं महाभाग सौवर्णं रत्नसंयुतम्। यो दद्यादत्र संपूज्य मन्त्रैर्विप्रवराय च ॥ ७ ॥
स पूर्ववित्तहरणात्पापाज्झटिति मुच्यते ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके कुबेरस्वरूपनिर्णयाध्याय एकत्रिंशः ॥ ३१ ॥

श्रीसूर्य उवाच।

शिवः कार्यस्त्रिनेत्रस्तु जटामुकुटमण्डितः। चतुर्भुजो वृषारूढश्चन्द्रशेखरः प्रभुः ॥ १ ॥
वामो भागो युतो देव्या चापरो वरदस्तथा। गङ्गाधरोऽतिभस्माङ्गो गजचर्माम्बरान्वितः ॥ २ ॥
वामोत्सङ्गगता कार्या शिवा परमसुन्दरी। स्त्रीपुत्रैः सहितो वापि रहितो वापि कुत्रचित् ॥ ३ ॥
उक्तस्वरूपं यः कृत्वा हैमं वा राजतं शिवम्। संपूज्य गन्धपुष्पाद्यैः शिवमन्त्रेण धीमता ॥ ४ ॥
जप्त्वा हुत्वा विधानेन देयो विप्रवराय च। घोराज्जीववधात्पापात्प्रमादजातान्मुच्यतेऽधुना ॥ ५ ॥
स्त्रीपुत्रकामो यो दद्याच्छिवं स्त्रीपुत्रसंयुतम्। संपूज्य पूर्वविधिना चतुर्दश्यामुपोषितः ॥ ६ ॥
हैमं पलमितं कृत्वा तदर्धार्धमितं तथा। स्त्रीपुत्रपौत्रवृद्धिः स्याज्जन्मन्यत्र पतत्रिण ॥ ७ ॥
अथोमयान्वितं देवं सौवर्णं च स्वशक्तितः। यो दद्याद्देवविदुषे गन्धपुष्पैः प्रपूजितम् ॥ ८ ॥
विप्राङ्गहिंसनात्पापात्पूर्वजन्मसमार्जितात्। नाशमायाति स क्षिप्रं दद्रुरोगश्च दारुणः ॥ ९ ॥
कुशात्वहरणं चापि दानमेतत्परं त्विह ॥ १० ॥
'ॐ नमः शिवाय' इत्यखिलशिवस्वरूपपूजने मन्त्रः ॥
'ॐ जूं सः' इति जपादौ महारिष्टहरमृत्युञ्जयमन्त्रः ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शिवस्वरूपनिर्णयाध्यायो द्वात्रिंशः ॥ ३२ ॥

श्रीसूर्य उवाच।

देवदेवं महादेवं वृषारूढं तु कारयेत्। तस्य वक्त्राणि कार्याणि पञ्च भो गरुडाग्रज ॥ १ ॥
सर्वाणि सौम्यरूपाणि दक्षिणं विकटं मुखम्। कपालमालिनं भीमं जगत्संहारकारकम् ॥ २ ॥
त्रिनेत्राणि च सर्वाणि वदनं तूत्तरं विना। जटाकलापे महति तस्य चन्द्रकला भवेत् ॥ ३ ॥
तस्योपरिष्टाद्वदनं पञ्चमं तु विधीयते। यज्ञोपवीतं च तथा वासुकिं तत्र कारयेत् ॥ ४ ॥
दशबाहुस्तथा कार्यो देवदेवो महेश्वरः। अक्षमाला त्रिशूलं च चर्म दण्डमथोत्पलम् ॥ ५ ॥
तस्य दक्षिणहस्तेषु कर्तव्यानि महाभुज। वामेषु मातुलिङ्गं च चापादर्शौ कमण्डलुः ॥ ६ ॥
तथा चर्म च कर्तव्यं देवदेवस्य शूलिनः। कुण्डलश्चास्य कर्तव्यश्चन्द्रांशुसदृशप्रभः ॥ ७ ॥
सर्वपापप्रतिनिधिं पञ्चवक्त्रं महेश्वरम्। यो दद्याद्विधिना सूत तस्य सर्वं प्रसिद्ध्यति ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पञ्चवक्त्रशिवस्वरूपनिर्णयाध्यायस्त्रयस्त्रिंशः ॥ ३३ ॥

श्रीसूर्य उवाच।

अथातो रूपनिर्माणं वक्ष्येऽहं गगनस्य तु। नीलोत्पलाभं कर्तव्यं तद्वदम्बरधारि तत् ॥ १ ॥
द्विभुजं सौम्यवदनं चन्द्रसूर्यविभूषितम्। चतुरस्रं भवेत्सूत्रं ततो वृत्तं खगेश्वर ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके आकाशस्वरूपनिर्णयाध्यायश्चतुस्त्रिंशः ॥ ३४ ॥

श्रीसूर्य उवाच।

शुभवर्णा मही कार्या दिव्याभरणभूषिता। चतुर्भुजा सौम्यमुखा चन्द्रार्कांशुसमाकृता ॥ १ ॥
रत्नपात्रं सस्यपात्रं पात्रमौषधसंयुतम्। पद्मं करेऽथ कर्तव्यं पृथिव्या विनतात्मज ॥ २ ॥
दिङ्नागानां चतुर्णां च भूमिं पृष्ठे ततो न्यसेत्। सर्वौषधियुता देवी शुक्लवर्णा ततः स्मृता ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पृथिवीरूपनिर्णयाध्यायः पञ्चत्रिंशः ॥ ३५ ॥

श्रीसूर्य उवाच।

गौरी कार्या दिव्यरूपा श्वेतवस्त्रधरा शुभा। द्विभुजा दिव्यपीठस्था सर्वाङ्गाभरणान्विता ॥ १ ॥
रत्नहारधरा देवी कौशेयवसना तथा। पद्मप्रकाशसंकाशा कुमुदोत्पललोचना ॥ २ ॥
स्त्रीपुत्रसुखवृद्ध्यर्थं सा देया कार्यसाधनी ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गौरीस्वरूपनिर्णयाध्याय षट्त्रिंशः ॥ ३६ ॥

श्रीसूर्य उवाच।

महात्मनो भैरवस्य रूपं शृणु हि पुत्रक। लम्बोदरं च कर्तव्यं कृष्णपिङ्गललोचनम् ॥ १ ॥
दंष्ट्राकरालवदनं फुल्लनासापुटं तथा। कपालमालिनं वै रौद्रं सर्वतः सर्पभूषणम् ॥ २ ॥
व्यालेन त्रासयन्तं च देवीं पर्वतनन्दिनीम्। सजलाम्बुदसंकाशं गजचर्मोत्तरच्छदम् ॥ ३ ॥
बाहुभिर्बहुभिर्व्याप्तं सर्वायुधविभूषणम्। बृहच्छालप्रतीकाशं तथा तीक्ष्णमुखैः शुभम् ॥ ४ ॥
साचीकृतमिदं रूपं भैरवस्य प्रकीर्तितम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके भैरवस्वरूपनिर्णयाध्यायः सप्तत्रिंशः ॥ ३७ ॥

श्रीसूर्य उवाच।

कुमारः षण्मुखः कार्यः सर्वाभरणभूषितः। चतुर्बाहुर्महातेजाः कवचेनाभिसंवृतः ॥ १ ॥
रक्ताम्बरधरो रम्यो मयूरवरवाहनः। कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः ॥ २ ॥
पताका वैजयन्ती च शक्तिः कार्या च वामयोः। कृत्वा हिरण्मयं स्कन्दं राजतं वा स्वशक्तितः ॥ ३ ॥
संपूज्य विधिवद्द्रव्यैः स्कन्दमन्त्रेण धीमता। हुत्वाग्नेऽष्टोत्तरशतं तिलैर्वा गौरसर्षपैः ॥ ४ ॥
जप्त्वा पूर्वविधानेन देयोऽसौ विजयप्रदः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके स्कन्दरूपनिर्णयाध्यायोऽष्टत्रिंशः ॥ ३८ ॥

श्रीसूर्य उवाच।

नन्दी कार्यस्त्रिनेत्रस्तु चतुर्बाहुर्महाभुजः। सिन्दूरारुणसंकाशो व्यालयज्ञोपवीतकः ॥ १ ॥
त्रिशूलभिन्दिपाले च करयोस्तस्य कारयेत्। शिरगतं तृतीयं तु वर्जयन्तं तथाऽपरम् ॥ २ ॥
आलोकयानं कर्तव्यं दूरादावागतं जनम्। अनेनैव तु रूपेण वीरभद्रं विदुर्बुधाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके वीरभद्रगणस्वरूपनिर्णयाध्याय एकोनचत्वारिंशः ॥ ३९ ॥

---

१ युक्तगर्भा—पु० ।

श्रीसूर्य उवाच ।

कालः करालवदनो वृहत्कर्णो द्विपाद्विभुः । दीर्घदंष्ट्रो विरूपाक्षो दिग्भुजश्च त्रिलोचनः ॥ १ ॥
कृशोदरो विरूपाढ्यः सर्पयज्ञोपवीतवान् । सर्पवृश्चिकरोमाढ्यः कर्णे स्वर्णविभूषितः ॥ २ ॥
मुक्ताहारधरः कण्ठे तथा चोन्नतनासिकः । नीलपट्टधरो देवो नरमानोच्चसंमितः ॥ ३ ॥
द्विहस्तो हस्तमात्रो वा सहस्रपलसंमितः । मध्यः श्रेष्ठो द्विगुणितः कनिष्ठश्च तदर्धकः ॥ ४ ॥
धनुस्तस्यादिमे हस्ते द्वितीये लोष्टभेदनम् । चर्मसूत्रं तृतीये तु तुर्ये बाणं मनोहरम् ॥ ५ ॥
पञ्चमे शृङ्खला लौही दक्षहस्ते तु वामके । मुद्गरं चादिमे खड्गं द्वितीयं च तृतीयके ॥ ६ ॥
पाशं चतुर्थे मुसलं पञ्चमे स्वर्णकुम्भकम् । कुर्याच्चास्य नखाग्राणि तीक्ष्णानि च खगेश्वर॥ ७ ॥
माणिक्यानि च नेत्रेषु स्थापनीयानि यत्नतः । दन्ताश्च राजताः कार्या जिह्वा कार्या हिरण्मयी८
लिङ्गे वज्रं प्रदातव्यं पुष्परागं तथाण्डयोः । नीलं च निर्मलं सूत गुदरन्ध्रे प्रदापयेत् ॥ ९ ॥
एवं लक्षणसंयुक्तं कुर्यात्कालनरं तथा । तस्य संबन्धजाः सर्वाः प्रतिमा ब्राह्मणादिकाः ॥१०॥
धातुजास्तास्तथा कार्याः स्वस्वमानसमन्विताः । स्वर्णादिधातुजाश्चोक्ता योज्याः कालनरे सुत११
संपूज्य गन्धपुष्पाद्यैः कालमन्त्रेण धीमता । बलिदाने पशुः कार्यः स्वदेहरुधिरं तथा ॥ १२ ॥
उभे ते प्रतिमे देये कालाख्यनरयात्तुजे । ब्राह्मणाय विधिज्ञाय ह्यकर्मे च कुटुम्बिने ॥ १३ ॥
सूर्यभक्ताय शान्ताय कर्मपाकाशिकाय च । तत्र दाता पठेन्मन्त्रमुक्तवच्छ्रद्धयान्वितः ॥ १४ ॥
प्रतिग्राही पठेच्चेनं मन्त्रं कालस्य कालवित् ।
ॐ नमः कालपुरुषाय सर्वभूतभयंकराय यजमानोपकाराय मां रक्षरक्ष स्वाहा ॥
गृहीत्वा प्रतिमे द्वे तु मन्त्रेणानेन यो द्विजः ॥ १५ ॥
तेनैव च्छेदयेद् दृष्टी द्वयोरपसरन्सुत । स्वर्णशूर्पैश्चतुर्थांशं विप्रेभ्यः प्रतिपादयेत् ॥ १६ ॥
जप्त्वा शतपाठथ गायत्रीं शुद्धो भवति तत्क्षणात् । स्वर्णमूर्तियुते कालदाने त्वेष विधिः स्मृतः॥१७॥
स्वर्णादन्यस्वरूपाढ्ये केवले वा समन्विते । स्वस्वमानामिते स्वर्णपलैः कार्ये न कुत्रचित् ॥१८॥
ऊने तत्त्वमिते स्वर्णपलैर्देये खगेश्वर । नैवं विधानं यः कुर्याल्लोभान्मोहाद्विशेषतः ॥ १९ ॥
अपि दातृप्रतिग्राह्योर्वर्षान्ते मरणं भवेत् । पूजयित्वा तु गन्धाद्यैर्वस्त्राभरणकाञ्चनैः ॥ २० ॥
गजाश्वशस्त्रैर्विविधैर्ब्राह्मणं तं विसर्जयेत् । नालोकयेन्मुखं तस्य सर्पिष्यात्मानमीक्षयेत् ॥ २१ ॥
तन्मुखालोकने रिष्टं भवत्येव न संशयः । एवं कालनरं दद्यात्सर्वारिष्टप्रशान्तये ॥ २२ ॥
दिव्यभौमान्तरिक्षेषु चोत्पातेषु च यत्फलम् । रिष्टं तन्नाशमायाति दत्ते कालनरे सुत ॥ २३ ॥
महादानमिदं चैतद्दानानां मस्तके स्थितम् । नहीदृशं मया प्रोक्तं दानं रिष्टहरं परम् ॥ २४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके कालपुरुषस्वरूपनिर्णयो नामाध्यायश्चत्वारिंशः ॥ ४० ॥

---

श्रीसूर्य उवाच ।

अथ ते सांप्रतं सूत कालचक्रविनिर्णयम् । वक्ष्ये चक्राकृतिं सूत सौवर्णं राजतं तथा ॥ १ ॥
सुवर्णदशकं श्रेष्ठं मध्यं पलमितं सुत । तदर्धं च कनिष्ठं स्यादपकृष्टं तदर्धकम् ॥ २ ॥
रश्मियुक्तं शुभाकारं भद्ररूपसमन्वितम् । सूर्यरूपं च तन्मध्ये माणिक्यादि यथाक्रमम् ॥ ३ ॥
संपूज्य कालमन्त्रेण गन्धपुष्पोपचारकैः । तच्च दद्याद्विधिज्ञाय सर्वरोगापनुत्तये ॥ ४ ॥
यजमानो महाभाग मन्त्रमेतमुदीरयन् । "इदं ते हेमजं चक्रं रत्नजालसमाकुलम् ॥ ५ ॥
अपमृत्युविनाशाय ददामीति शुभं कुरु । " स्वगृह्योक्तविधानेन स्थाप्यस्तत्र हुताशनः ॥ ६ ॥

जुहुयात्कालमन्त्रेण मितमष्टोत्तरं शतम् । सहस्रं वा तथा जप्त्वा मन्त्रं मृत्युंजयाभिधम् ॥ ७ ॥
ब्राह्मणान्भोजयेच्छक्त्या पश्चाद्दद्याच्च दक्षिणाम् । देयमेतन्महाभाग सर्वरोगभयापहम् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके कालचक्ररूपदाननिर्णयाध्याय एकचत्वारिंश ॥ ४१ ॥

---

## श्रीसूर्य उवाच ।

रोगराजस्य यत्नेन रूपं शृणु हि पुत्रक । यत्स्वरूपं नरा दृष्ट्वा नाशमायान्ति तत्क्षणात् ॥ १ ॥
ज्वरस्त्रिपादः कर्त्तव्यो दीर्घरूपो भयानकः । बृहद्भिर्नेत्रैर्वदनैस्त्रिभिश्च दशनैर्दृढः ॥ २ ॥
भस्मप्रहरणो रौद्रस्त्रिबाहुर्व्याकुलेक्षणः । ऊर्ध्वकेशो महाकायो ज्वलत्कान्तिर्यमोपमः ॥ ३ ॥
पलार्धार्धमिते हेमपत्रे लेख्यः स वै बुधैः । प्रोक्तश्चोष्णज्वरो रौद्रः शीतलो वैष्णवज्वरः ॥ ४ ॥
ज्वरमूर्तिं च यो दद्यात्सौवर्णीं शक्तितोऽण्डज । महापर्वसु संपूज्य गन्धपुष्पाक्षतैरलम् ॥ ५ ॥
स मुच्यते महारौद्राज्ज्वररोगान्न संशयः । शिवोऽपि पूजनीयोऽत्र ज्वरदेवः प्रयत्नतः ॥ ६ ॥
अथाष्टम्यां चतुर्दश्यामेकादश्यां विशेषतः । संपूज्य वैष्णवैर्मन्त्रैर्गन्धाद्यैर्विष्णुमव्ययम् ॥ ७ ॥
ज्वरं हैमं तथा सूत स्वमन्त्रेणोपचारकैः ।

मन्त्रः—ॐ नमो महाज्वराय विष्णुरुद्रगणाय भीममूर्तये सर्वलोकभयंकराय मम तापं हरहर स्वाहा॥

संपूज्य जप्त्वा हुत्वा च तिलैर्वा गौरसर्षपैः ॥ ८ ॥

भोजयित्वा द्विजाञ्शक्त्या दद्याद्धैमीं च दक्षिणाम् । एवं कृत्वा च यो दद्याद्रोगराजमिहाण्डज ॥९॥
विप्राय वेदविदुषे ज्वराच्छीतात्प्रमुच्यते । अथ ताम्रमयं कुम्भं पञ्चरत्नसमन्वितम् ॥ १० ॥
कुर्याच्छतपलैर्वापि तदर्धार्धमितं तथा । अशक्तो मृन्मयं वापि रक्तवर्णं सुशोभनम् ॥ ११ ॥
घृतेन मधुना वापि गुडशर्करयापि च । पूरयित्वा च तं तत्र विन्यसेत्तण्डुलोपरि ॥ १२ ॥
प्रमाणं तण्डुलानां तु पञ्चद्रोणमुदाहृतम् । वेष्टयेत्पट्टवस्त्रेण गन्धाद्यैश्च प्रपूजयेत् ॥ १३ ॥
ज्वरमूर्तिं तथा हैमीं ज्वरमन्त्रेण बुद्धिमान् । संपूज्य गन्धपुष्पाद्यैः स्थापयेत्तद्घटोपरि ॥ १४ ॥
ज्वरदेवौ तथा पूज्यौ विष्णुः स्मरहरश्च तौ । स्वस्वमन्त्रविधानेन धूपगन्धादिभिस्ततः ॥ १५ ॥
पूर्वं जप्त्वा च तन्मन्त्रान्ज्वरमन्त्रं च यत्नतः । होमयेद्विधिवत्कुण्डे स्थण्डिले वा विधानतः ॥१६॥
दत्त्वा स्वर्णं जापकेभ्यो भोजयित्वा द्विजांस्तथा ।

ज्वरदानमन्त्रः—"भस्मप्रहरणो रौद्रस्त्रिशिरास्त्र्यूर्ध्वलोचनः ॥ १७ ॥

दानेनानेन सुप्रीतो ज्वरः पातु सदा मम । एकान्तरं सन्निपातं तार्तीयिकचातुर्थिकौ ॥ १८ ॥
पाक्षिकं मासिकं वापि सांवत्सरिकमेव च । नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ" ॥ १९ ॥
इत्युच्चार्य ज्वरौ दद्याज्ज्वरमूर्तिं खगेश्वर । न तस्य ज्वरजा पीडा भवत्येव ममाज्ञया ॥ २० ॥
चातुर्थिकेऽतिविषमे कृत्वा प्राक् पापशोधनम् । पश्चाद्विधिरयं यस्मात्पापजो मृत्युकृज्ज्वरः ॥२१॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ज्वरस्वरूपनिर्णयाध्यायो द्विचत्वारिंश ॥ ४२ ॥

---

## श्रीसूर्य उवाच ।

ब्रह्माणं कारयेद्विद्वान्देवं सौम्यं चतुर्मुखम् । बद्धपद्मासनं तुष्टं तथा कृष्णाजिनाम्बरम् ॥ १ ॥
जटाधरं चतुर्बाहुं चतुर्हंसे रथे स्थितम् । वामे न्यस्तेतरकरं तस्यैकं दोर्युगं भवेत् ॥ २ ॥
एकस्मिन्दक्षिणे पाणावक्षमाला शुभा तथा । कमण्डलुर्द्वितीये च सर्वाभरणधारिणम् ॥ ३ ॥

सर्वास्यं श्मश्रुयुक्तं च शान्तिरूपं तथाण्डज। पद्मपत्रदलाभं ध्यानसंमीलितेक्षणम् ॥ ४ ॥
अर्चायां कारयेद्देवं दाने वा शान्तिकर्मणि।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अलक्ष्मस्वरूपनिर्णयाध्यायस्त्रिचत्वारिंशः ॥ ४३ ॥

श्रीसूर्य उवाच।

अथ ब्राह्मी चतुर्वक्त्रा षड्भुजा हंससंस्थिता। पिङ्गाभा भूषणोपेता मृगचर्मोत्तरीयिका ॥ १ ॥
चरुं सूत्रं स्रुवं धत्ते दक्षबाहुत्रये क्रमात्। वामे च पुस्तकं कुण्डं बिभ्रती चाक्षमालिकाम्॥ २ ॥
यः कृत्वा ब्रह्मणो रूपं सौवर्णं राजतं तथा। सस्त्रीकं शक्तितोऽभ्यर्च्य पर्वस्वपि च पक्षतौ ॥३॥
दद्याद्वेदविधिज्ञाय लभेत्पुत्राञ्छुभानिह। अनेन विधिना दद्यात्स्त्रीकामो वा स्त्रियं लभेत् ॥ ४ ॥
स्त्रीनाशे च महोत्पाते पुत्रनाशे च दारुणे। यो दद्याद्ब्रह्मणो रूपं सभार्यं विनतात्मज ॥ ५ ॥
न तस्य पुत्रजं रिष्टं न च भार्योद्भवं तथा। भविष्यति महाबाहो नात्र कार्या विचारणा ॥ ६ ॥
स्त्रीघाती प्राग्भवे यस्तु बालघाती तथैव च। शक्त्या दद्याच्च विप्रेशं हेममभ्यर्च्य यत्नतः ॥
स्त्रीबालघातजात्पापान्मुच्यते पूर्वजन्मजात् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ब्रह्माणीस्वरूपनिर्णयाध्यायश्चतुश्चत्वारिंशः ॥ ४४ ॥

श्रीसूर्य उवाच।

अथ प्रजापतेर्मूर्तिं वक्ष्यामि त्वां पतत्रिण। हंसयानश्च कर्तव्यो न च कार्यश्चतुर्भुजः[1] ॥ १ ॥
ब्रह्मोक्तं परमं रूपं सर्वं कार्यं प्रजापतेः। स्त्रीत्यागी पुरुषो यस्तु भ्रूणहा च परे भवे ॥ २ ॥
कृत्वा प्रजापतेर्मूर्तिं सौवर्णीं रत्नसंयुताम्। संपूज्य गन्धपुष्पाद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ३ ॥
दद्याद्विप्राय विदुषे प्राक्पापान्मुच्यतेऽधुना। ब्रह्मरूपमथाश्वत्थं रविवारेऽथ पर्वसु ॥ ४ ॥
योऽर्चयेन्मासिमास्यत्र वर्षमेकं पतत्रिण। फलैरष्टोत्तरशतैरष्टाविंशतिभिरथ ॥ ५ ॥
अष्टभिर्वा प्रयत्नेन परिक्रम्य प्रपूजयेत्। गन्धैः पुष्पैर्धूपदीपैः फलैर्दिव्यैर्विशेषतः ॥ ६ ॥
घृतपक्वैस्तथा विप्रान्भोजयेच्च स्वशक्तितः। जपित्वा ब्रह्ममन्त्रेण वर्षान्ते होमयेत्ततः ॥ ७ ॥
दक्षिणां शक्तितो दद्यात्सर्वकार्यप्रसाधिनीम्। अनेन विधिना यस्तु प्रजेशं पूजयेत्सुत ॥ ८ ॥
प्रजाविवृद्धिस्तस्य स्यात्प्रजेशस्य प्रसादतः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके प्रजापतिस्वरूपनिर्णयाध्यायः पञ्चचत्वारिंशः ॥ ४५ ॥

श्रीसूर्य उवाच।

देवदेवं तथा विष्णुं कारयेद्गरुडध्वजम्। कौस्तुभोद्भासितोरस्कं सर्वाभरणधारिणम् ॥ १ ॥
सजलाम्बुदवच्छयामं पीतादिव्याम्बरं तथा। मुखाश्च कार्याश्चत्वारो बाहवो द्विगुणाः स्मृताः॥२॥
सौम्येन्दुवदनं पूर्वं नारसिंहं तु दक्षिणम्। कापिलं पश्चिमं वक्त्रं तथा वाराहमुत्तरम् ॥ ३ ॥
तस्य दक्षिणहस्तेषु बाणार्कमुसलादयः। पद्मेन्दुचापचर्माणि वामेषु वनमालिनः ॥ ४ ॥
कृत्वा हिरण्मयं विष्णुं शंखचक्रगदाधरम्। योऽर्चयेद्विष्णुमन्त्रेण षोडशोपचारकैः ॥ ५ ॥
स याति परमं स्थानं यद्गत्वा न निवर्तते। अथ विष्णोर्महामूर्तिं हैमीं कृत्वा सुशोभनाम् ॥ ६ ॥
द्वादश्यां श्रवणर्क्षे वा महापर्वसु वा तथा। संपूज्य गन्धपुष्पाद्यैस्तन्मन्त्रेण खगाधिप ॥ ७ ॥

1 चतुर्मुखः–ख पु०।

मृन्मये कलशे स्थाप्य गन्धपुष्पैरलंकृते । गर्भस्य रक्षणार्थं तां ब्राह्मणाय निवेदयेत् ॥ ८ ॥
न तस्य गर्भपतनं जायतेऽस्य प्रसादतः । कृत्वा तु वैष्णवीं सूत प्रतिमां राजतीं शुभाम् ॥ ९ ॥
हेमीं वा शक्तितोऽभ्यर्च्य गन्धाद्यैस्तंडुले स्थितम् । दद्यात्स मुच्यते नेत्ररोगात्कान्यनादिह ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके विष्णुस्वरूपनिर्णयाध्यायः षट्चत्वारिंशः ॥ ४६ ॥

## श्रीसूर्य उवाच ।

तार्क्ष्यो मारकतः प्रोक्तः कौशिकाकारनासिकः । चतुर्भुजस्तु कर्तव्यो वृत्तनेत्रमुखस्तथा ॥ १ ॥
गृध्रोरुजानुचरणः पक्षद्वयविभूषितः । पक्षौ स्वर्णमयौ सूत कलापेन विवर्जितः ॥ २ ॥
छत्रं च पूर्णं कुम्भं च करयोस्तस्य कारयेत् । करद्वयं तु कर्तव्यं तथा विरचिताञ्जलिः ॥ ३ ॥
यदास्य भगवान्पृष्ठे छत्रकुम्भधरा करौ । न कर्तव्यौ च कर्तव्यौ देवपादधरावुभौ ॥ ४ ॥
किंचिल्लम्बोदरः कार्यः सर्वाभरणभूषितः । कृत्वा तार्क्ष्यं महाभाग पलेनार्धपलेन वा ॥ ५ ॥
तदर्धपद्या तु संपूज्य गन्धपुष्पाक्षतैः शुभैः । तं दद्याद्दानमन्त्रेण नेत्ररोगात्प्रमुच्यते ॥ ६ ॥

### दानमन्त्रः ।

श्रीकृष्ण परमानन्द जगतः परिपालक । तव वाहनदानेन नेत्ररोगः स कामलः ॥ ७ ॥
नाशमायातु वत्क्षिप्रं पूर्वपापसमुद्भवम् ।

### गरुडगायत्री ।

ॐ गरुडाय विद्महे पक्षिराजाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गरुडस्वरूपनिर्णयाध्यायः सप्तचत्वारिंशः ॥ ४७ ॥

## श्रीसूर्य उवाच ।

लक्ष्मीनारायणौ कार्यौ संयुक्तौ दिव्यरूपिणौ । दक्षिणस्था विभोर्मूर्तिर्लक्ष्मीमूर्तिस्तु वामगा ॥ १ ॥
दक्षिणः कण्ठलग्नोऽस्य वामो हस्तः सरोजधृक् । विभोर्वामकरो लक्ष्म्याः कुक्षिभागस्थितः सदा ॥ २ ॥
सर्वावयवसंपूर्णा सर्वालंकारशोभिता । सिद्धिः कार्या समीपस्था चामरग्राहिणी शुभा ॥ ३ ॥
उक्तप्रकारा कर्तव्या पलेनार्धार्धमानतः । सौवर्णी प्रतिमा सूत राजती वा यथोक्तवत् ॥ ४ ॥
तन्मन्त्रेण च संपूज्य षोडशोपचारकः । देया वेदविधिज्ञाय सर्वकार्यप्रसाधिनी ॥ ५ ॥
योऽर्चयेन्नित्यमव्यक्तं लक्ष्मीनारायणं विभुम् । मन्त्रैः पुरुषसूक्तैश्च स याति परमां गतिम् ॥ ६ ॥
हिरण्मयं च यो दद्याल्लक्ष्मीनारायणं त्विह । संपूज्य विधिवद्देवं मन्त्रैस्तल्लिङ्गजैरलम् ॥ ७ ॥
वातपित्तोद्भवाद्रोगान्मुच्यते नात्र संशयः । सौवर्णं राजतं वापि दद्यात्पलमितं त्विह ॥ ८ ॥
नारायणं विधानेन विद्धि रोगविनाशकृत् । स्वाध्यायोक्तप्रमाणेन सौवर्णं राजतं तथा ॥ ९ ॥
लक्ष्मीनारायणं देवं यः कुर्यात्पापशोधनम् । संपूज्य विधिवत्तत्र जप्त्वा हुत्वा विशेषतः ॥
स्तुत्वा नारायणं देवं मन्त्रेणानेन बुद्धिमान् ॥ ११ ॥
"देवदेव जगन्नाथ जगदानन्दकारक । ददेऽहं त्वां त्रिलोकेश सर्वकामप्रदो भव ॥" १२ ॥
इत्युच्चार्य नरो दद्यात्पूर्वपापात्प्रमुच्यते । सर्वान्कामानिहाप्नोति दानस्यास्य प्रभावतः ॥ १३ ॥
लक्ष्मीनारायणं दानं पुत्रपौत्रविवर्धनम् । सर्वारिष्टहरं पुण्यमेतदुक्तं मनीषिभिः ॥ १४ ॥
ॐ लक्ष्मीनारायणाय सर्वकामफलप्रदाय मम दुःखं भञ्जय भञ्जय ॐ लक्ष्मीनारायणाभ्यां नमः ॥ ( इति मूलमन्त्रः । )

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके लक्ष्मीनारायणस्वरूपनिर्णयाध्यायोऽष्टचत्वारिंशः ॥ ४८ ॥

श्रीसूर्य उवाच।

प्रयोगं शृणु सावित्र्याः सर्वकामफलप्रदम्। रहस्यं परमं पुण्यं महापातकनाशनम् ॥ १ ॥
ब्रह्महा कोटिमेकं तु जप्त्वा शुद्धिं समाचरेत्। तथैव पक्षिशार्दूल पितृमातृवधो यतः ॥ २ ॥
सुवर्णहारी सततं मद्यपश्च विशेषतः। गुरुतल्पगतो यस्तु लक्षं जप्त्वा विशुद्ध्यति ॥ ३ ॥
महापातकिनां सङ्गी सोऽपि लक्षात्प्रमुच्यते। गोघ्नः कृतघ्नो बालघ्नः स्त्रीघाती द्विजद्रव्यहृत्॥४॥
ब्राह्मण्यां च स्वगोत्रायां व्यभिचारपरो नरः। जप्यमानस्तु सावित्र्या लक्षार्धं शुद्धिमाप्नुयात्॥५॥
व्यभिचारी स्वगोत्रघ्नो कन्याघातनतत्परः। स्वामिद्रोहादिपापेभ्यस्तदर्धान्मुच्यते ध्रुवम् ॥ ६ ॥
परस्वभूमिहरणात्परपीडाप्रदानतः। जीवघातान्महापापादग्निदाहकृतात्तथा ॥ ७ ॥
दुष्प्रतिग्रहात्पापाद्देवभङ्गात्प्रमादतः। कूटसाक्ष्यप्रदानाच्च नित्यलोपादिपापतः ॥ ८ ॥
गायत्र्यष्टसहस्रं तु जप्त्वा शुद्धिं लभेदिह ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गायत्रीजपनिर्णयाध्यायः एकोनपञ्चाशः ॥ ४९ ॥

---

श्रीसूर्य उवाच।

अथ काम्यं प्रवक्ष्यामि गायत्रीजपमुत्तमम्। मोक्षकामो जपेत्कोटिं लक्षं वा स्वर्गकामतः ॥ १ ॥
लक्षार्धं धनकामश्च पुत्रस्त्रीकामुकस्तथा। जपेत्कोटिं प्रयत्नेन राज्यकामस्तथाण्डज ॥ २ ॥
श्रीकामः शान्तिकामो वा पुष्ट्यायुर्वृष्टिकामुकः। जपेद्विंशतिसाहस्रमधिकारोदयेषु च ॥ ३ ॥
महाधिकारकृत्यादौ लक्षं वार्द्धं जपेत्सुधीः। पञ्चविंशतिसाहस्रं सर्वरोगोपशान्तये ॥ ४ ॥
नानारिष्टोपशमने जपेत्त्रिंशत्सहस्रकम्। लक्षमर्धं तदर्धं वा जपेद्बन्धनपीडितः ॥ ५ ॥
सर्वार्थसाधने तद्वद्धोमयेच्च दशांशतः। शक्त्या वा होमयेत्कुण्डे तिलाज्ययवतण्डुलैः ॥ ६ ॥
भोजयेच्च द्विजाञ्शक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गायत्रीविध्यध्यायः पञ्चाशः ॥ ५० ॥

---

श्रीसूर्य उवाच।

अशक्तो ब्राह्मणद्वारा जपं कुर्याद्विधानतः। आसनैर्भूषणैर्वस्त्रैः पात्रै रत्नैश्च पूजयेत् ॥ १ ॥
स्वशक्त्या दक्षिणां दद्याद्यथोक्तां कार्यसाधिनीम्। अयुतस्य जपस्यात्र सुवर्णमितिसंयुताम् ॥२॥
प्राङ्मुखश्चोदङ्मुखो वा द्विवासाः[1] शुद्धमानसः। प्रशस्तमालया विद्वाञ्जपं कुर्याद्विधानतः ॥ ३ ॥
तर्जन्या न स्पृशेन्मालां करभ्रष्टां न कारयेत् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गायत्रीविधिकथननामाध्यायः एकपञ्चाशः ॥ ५१ ॥

---

श्रीसूर्य उवाच।

न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत्। उपलिप्ते शुचौ देशे निराहारो जितेन्द्रियः ॥ १ ॥
एवं जप्त्वा तु सावित्रीं सर्वकामान्प्रसाधयेत्। अकामतो जपेद्यस्तु सूर्यलोकमवाप्नुयात् ॥ २ ॥
कामतः साधयेत्सर्वान्कार्यान्नात्र विचारणा। न सावित्र्याः परो मन्त्रो मुनिभिः समुदाहृतः ॥३॥
यो जप्त्वा विधिना मन्त्रं गायत्र्यास्तु विधानतः[2]। कोटिलक्षं तदर्धं वा होमयेत्स्वदशांशतः ॥ ४ ॥
गामेकां कपिलां दद्यात्सर्वस्वार्धं तदर्धकम् ॥ दक्षिणां ब्राह्मणेभ्यश्च स याति परमां गतिम्॥५॥
आजन्मोपार्जितं पापं त्रिविधं नाशमाप्नुयात् ॥ ६ ॥

---

१. सुवासाः—ख पु० । २ गायत्र्यत्र विधानतः—ख पु० ।

शोधनं सर्वपापानां प्रयोगमिदमद्भुतम् । अकृत्वा शोधनं चैतत्पङ्के गौरिव सीदति ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके गायत्रीविध्यध्यायो द्विपञ्चाशः ॥५२॥

श्रीसूर्य उवाच ।

एवमष्टोत्तरं मन्त्रं जपेद्विष्णोर्विधानतः । होमयेदुक्तविधिना तथा दद्याच्च दक्षिणाम् ॥ १ ॥
विप्रेभ्यश्चाण्डजश्रेष्ठ सर्वपापान्विशोधयेत् । प्रयोगं वैष्णवं चैतत्सर्वपापप्रणोदनम् ॥ २ ॥
स्वर्गमोक्षप्रदं चैतत्सर्वं विष्णोः प्रसादतः ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके विष्णुमन्त्रजपनिर्णयाध्यायस्त्रिपञ्चाशः ॥ ५३ ॥

अरुण उवाच ।

नश्यन्त्यखिलरिष्टानि पापमूलानि भास्कर । यत्कृते तदहं त्वत्तः श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

श्रीसूर्य उवाच ।

महारिष्टहरं पुण्यं मृत्युंजयविधानकम् । शृणु सूत प्रवक्ष्यामि सर्वदुःखविनाशनम् ॥ २ ॥
वरयेद्ब्राह्मणान्भक्त्या फलवस्त्रविभूषणैः । कारयेन्मण्डलं तत्र शुचिदेशे विधानतः ॥ ३ ॥
चतुरस्रं चतुर्द्वारं त्रिरेखं पद्मगर्भितम् । हस्तत्रयप्रमाणं तु तण्डुलैर्मण्डलं लिखेत् ॥ ४ ॥
भैरवीभैरवान्सिद्धिदिशानागानुग्रहान् । पीठोपपीठसंयुक्तादिक्पालादिसमन्वितान् ॥ ५ ॥
देवतानां चतुःषष्टिं लिखेत्पद्मे सुशोभने । एकैकपद्मपत्रेषु वसुसंख्या दले दले ॥ ६ ॥
प्रणवादिनमोन्तैस्तु नाममन्त्रैः प्रपूजयेत् । गन्धपुष्पाक्षतैर्धूपदीपनैवेद्यनादिकैः ॥ ७ ॥
अर्चयेत्पद्मपत्रेषु सर्वकार्यप्रसाधकान् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके मृत्युंजयपूजाध्यायश्चतुःपञ्चाशः ॥ ५४ ॥

श्रीसूर्य उवाच ।

सौवर्णं त्र्यम्बकं कुर्यात्पलेनार्धपलेन वा । गोमयेन गुडेनापि यथा वित्तानुसारतः ॥ १ ॥
मृत्युंजयेन मन्त्रेण पूजयेदुपचारकैः । सौम्यद्वारे महाभाग देवदेवं घटे न्यसेत् ॥ २ ॥
जपेन्मृत्युंजयं मन्त्रं तदग्रेऽष्टसहस्रकम् । देवीसूक्तं जपेच्चापि रुद्राध्यायं विशेषतः ॥ ३ ॥
अथवा बहुभिर्विप्रैः कोटिलक्षायुतादिकम् । जप्त्वा पूर्वं विघ्नराजं सर्वकार्यप्रसाधनम् ॥ ४ ॥
षण्मासं राज्यकामस्तु पुत्रकामस्तथैव च । शत्रुनाशनकामश्च वर्षान्तमपि कारयेत् ॥ ५ ॥
षण्मासं पूजयेद्विद्वान्महारोगैः प्रपीडितः । मासमेकं तु मासार्धं कुर्याद्रोगाकुलीकृतः ॥ ६ ॥
वन्दिवेश्मनि दुर्गे वा बद्धो मुच्येत बन्धनात् । षाण्मासिकप्रयोगाच्च द्विगुणान्नात्र संशयः ॥ ७ ॥
महारिष्टभयग्रस्तः प्रयोगमिममाचरेत् । न चारिष्टभयं घोरं प्राप्नुयादिति मे वचः ॥ ८ ॥
महापापसमुद्भूतं दुष्कर्मसमर्जितम् । चतुर्विधं महारिष्टं मदुक्तं गरुडाग्रज ॥ ९ ॥
स्वाध्यायोक्तेन विधिना कृत्वा तच्छोधनं त्विह । प्रयोगाञ्जपसंख्याच्च न चारिष्टभयं क्वचित् १०
एतन्मण्डलमध्यस्थोऽभिषिक्तः पुरुषो यदा । ततः प्रभृतियुद्धेषु शत्रूञ्जयति निश्चितम् ॥ ११ ॥
राज्यभ्रष्टो लभेद्राज्यं क्षीणायुर्म्रियते न च । मुक्त्वा पीडां ग्रहाः सर्वे शान्तिं कुर्वन्ति नित्यशः १२
प्रयोगस्य प्रभावेण नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके मृत्युंजयप्रयोगाध्यायः पञ्चपञ्चाशः ॥ ५५ ॥

१ प्रेतपीडा ०५७० ।

श्रीसूर्य उवाच ।

प्रयोगं परमं वक्ष्ये रहस्यं त्र्यम्बकाभिधम् । सर्वार्थसाधकं पुण्यं सर्वोपद्रवनाशनम् ॥ १ ॥
यत्कृते सर्वराजानो राजपुत्राश्च मन्त्रिणः । राष्ट्रस्थाः सर्वलोकाश्च तत्क्षणात्तद्वशेऽनुगाः ॥ २ ॥
अवश्या वश्यतां यान्ति दुष्टस्त्रीक्षुद्रजन्तवः । वैरिणो वशगास्तस्य प्रयोगस्य प्रभावतः ॥ ३ ॥
सिद्धचन्त्यखिलकार्याणि दुर्लभान्यपि तस्य तु । तदादौ पूजयेद्देवं गणेशं विधिवत्सुधीः ॥ ४ ॥
लिङ्गानेकाङ्गशमितान्पूजयेद् गुडसंभवान्[1] । पार्थिवान्वा प्रयत्नेन तदलाभे प्रपूजयेत् ॥ ५ ॥
रक्तवस्त्रैस्तथा गन्धैरुपचारैः समन्त्रकैः । पूजयेच्च तथा देवीं पठेद्वर्णा विधानतः ॥ ६ ॥
कोटिलक्षार्धकं जप्त्वा मन्त्रं मृत्युञ्जयाभिधम् । ॐ जूं स इति वै मन्त्रस्त्र्यम्बकाख्यः सनातनः ॥७॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके त्र्यम्बकप्रयोगाध्यायः षट्पञ्चाशः ॥ १६ ॥

श्रीसूर्य उवाच ।

कुण्डे षडस्रसंयुक्ते ऽथवा वा विधिवत्कृते । स्वगृह्योक्तविधानेन स्थाप्य तत्र हुताशनम् ॥ १ ॥
होमयेत्तद्दशांशेन मधुराज्यतिलसर्षपैः । आलिखेन्मण्डलं तत्र तण्डुलैः शोभनं सुधीः ॥ २ ॥
चतुरस्रं चतुर्द्वारं त्रिरेखं पद्मगर्भितम् । साधकस्य त्रिभिर्हस्तैर्मितं हीनाधिकं न तत् ॥ ३ ॥
तन्मध्ये शोभनं पद्मं कृत्वा चाष्टदलान्वितम् । एकैकपद्मपत्रे तु वसुसंख्या दलेदले ॥ ४ ॥
भैरवीभैरवान्सिद्धिग्रहान्नागानुपग्रहान् । पीठोपपीठसंयुक्तान्दिक्पालैरष्टभिर्युतान् ॥ ५ ॥
चतुःषष्टिमितान् देवान्विधिना स्थाप्य तण्डुलैः । गन्धपुष्पोपचारैश्च नैवेद्यैर्विविधैस्तथा ॥ ६ ॥
प्रणवादिनमोन्तैश्च नाममन्त्रैश्च पूजयेत् ॥ ७ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके त्र्यम्बकप्रयोगाध्यायः सप्तपञ्चाशः ॥ १७ ॥

श्रीसूर्य उवाच ।

पूर्वद्वारे गणेशेन्द्रौ शिवमुत्तरतस्तथा । वरुणं पश्चिमे देवं यमं याम्ये विभुं तथा ॥ १ ॥
ऐशान्यां कलशं स्थाप्य तीर्थवारिसमन्वितम् ॥ २ ॥
मृत्युंजयेन मन्त्रेण शतवाराभिमन्त्रितम्[2] । संपूज्य विधिवद्राजा विसर्जनमथाचरेत् ॥ ३ ॥
यान्तु देवगणाः सर्वे पूजामादाय मामकीम् । इष्टकामफलार्थाय पुनरागमनाय च ॥ ४ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके त्र्यम्बकप्रयोगाध्यायोऽष्टपञ्चाशः ॥ १८ ॥

श्रीसूर्य उवाच ।

अभिषिञ्चेत्ततो वीरं संग्रामे विजयी भवेत् । एतन्मण्डलमध्यस्थोऽभिषिक्तः पुरुषो यदा ॥ १ ॥
ततः प्रवर्तिते युद्धे शत्रूञ्जयति निश्चितम् । राज्यभ्रष्टो लभेद्राज्यं क्षीणायुर्म्रियते न च ॥ २ ॥
मुक्त्वा पीडां ग्रहाः सर्वे शान्तिं कुर्वन्ति नित्यशः ।श्रद्धयापि कृते ह्यस्मिन्प्रयोगे त्र्यम्बकाभिधे॥३॥
यथेप्सितमवाप्नोति फलं रुद्रप्रभावतः । अश्रद्धयाल्पकरणात्फलमल्पं प्रजायते ॥ ४ ॥
यथाविभवतश्चापि महदैश्वर्यमाप्नुयात् । ऋत्विग्भ्यो दक्षिणां दद्यात्प्रयोगस्य प्रसिद्धये ॥ ५ ॥
यथाशक्तिस्तया दद्यादाचार्याय विशेषतः । ब्राह्मणान्भोजयेच्छक्त्या स्वयं भुञ्जीत मानवः ॥ ६ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके त्र्यम्बकप्रयोगाध्याय एकोनषष्टितमः ॥ ५९ ॥

---

१ गुडसंभवान्-खपु० । २ मन्त्रितः-खपु० ।

अरुण उवाच।

पापशोधनकं सर्वं ब्रूहि मे परमेश्वर । दानस्याक्षयकृच्चैव विधानं वदतांवर ॥ १ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग दानस्याक्षयकारकम् । द्रव्यमानं च द्रव्याणि तद्देवांश्चापि पूजनम् ॥ २ ॥
विधानं स्नानदानाद्यं वक्ष्यथो पापशोधनम् । यवद्वयस्य गुञ्जास्यान्माषो गुञ्जा ष्टकस्य च ॥ ३ ॥
सुवर्णो दशमाषः स्यात्ते चत्वारः पलं स्मृतम् । सुवर्णकर्षौ तुल्यौ स्तो माने रजतकाञ्चने ॥ ४ ॥
तुला पलशतैर्ज्ञेया भारः स्याद्विंशतिस्तुलाः । एवं ताम्रादिधातूनां मानं प्रोक्तं मनीषिभिः ॥ ५ ॥
वक्ष्यामि सर्वधान्यानां मानमत्र खगेश्वर । पलद्वयं तु प्रसृतं द्विगुणं कुडवं स्मृतम् ॥ ६ ॥
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः । आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः ॥७ ॥
कुम्भो द्रोणद्वयं प्रोक्तः खारी द्रोणास्तु षोडश । मापट्ङ्काक्षबिल्वानि कुडवप्रस्थमाढकम् ॥ ८ ॥
राशिगोणी तथा खारी यथोत्तरचतुर्गुणाः । पलमेकं तथा मुष्टिः कुञ्चिरष्टौ तु मुष्टिकम् ॥ ९ ॥
तेऽष्टौ पुष्कलसंज्ञं तैश्चतुर्भिः पूर्णपात्रकम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके द्रव्यमाननिर्णयाध्यायः षष्टितमः ॥ ६० ॥

---

## सप्त धान्यानि।

श्रीसूर्य उवाच।

यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च । श्यामाकं चणकं चैव सप्तधान्यमुदाहृतम् ॥ १ ॥

## अथाष्टादश धान्यानि।

यवगोधूमधान्यानि तिलाः कंगुलिकस्तका । माषमुद्गमसूराश्च निष्पावाश्च सुसर्षपाः ॥ २ ॥
गवेधुकाश्च नीवारा आढकाश्च सतीनकाः । चणकस्थान्द्रुगदका धान्यान्यष्टादशैव तु ॥ ३ ॥
यवाभावे तु गोधूमा व्रीहिणामपि शालयः । आज्यद्रव्यमनादेशे जुहोतिषु विधीयते ॥ ४ ॥

## सप्तौषधयः।

व्रीहयः शालयो मुद्गा गोधूमा अणवस्तिलाः । यवाश्चौषधयः सप्त विपदो घ्नन्ति काश्यप ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकषष्टितमः ॥ ६१ ॥

## सर्वौषधिगणः।

श्रीसूर्य उवाच।

मुरा मांसी वचा कुष्टं शैलेयं रजनीद्वयम् । साठी चम्पकमुस्तं च सर्वौषधिगणः स्मृतः ॥ १ ॥

## रसषट्कम्।

मधुरोऽम्लश्च लवण कषायस्तिक्त एव च । कटुकश्चेति पक्षीन्द्र रसषट्कमुदाहृतम् ॥ २ ॥

## सप्त धातवः।

सुवर्णं रजतं मुक्ता आरकूटं तथैव च । लोहं त्रपु तथा सीसं धातवः सप्त कीर्तिताः ॥ ३ ॥

## पञ्च रत्नानि।

सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् । रत्नपञ्चकमाख्यातं शेषं वस्तु ब्रवीम्यहम् ॥ ४ ॥

---

१ शोधनकं-खपु० । २ चमाकं-खपु० ।

## सर्वधातवः।

मौलकं च शिला वज्रमञ्जनं श्याममेव च। काशी कासीसमाक्षीकं गैरिकं सर्वधातवः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विषष्टितमः ॥ ६२ ॥

---

## द्रव्यदेवताः।

### श्रीसूर्य उवाच।

वक्ष्यमाणोक्तद्रव्याणां सांप्रतं देवताः शृणु। प्राजापत्यो गजः प्रोक्तस्तुरगश्चार्कदैवतः ॥ १ ॥
महिषश्च तथा याम्यश्चोष्ट्रो वै यमदैवतः। रौद्री धेनुर्विनिर्दिष्टा छागो वै चाग्निदैवतः ॥ २ ॥
एडकं वारुणं विद्याद्वराहो विष्णुदैवतः। आरण्याः कथिताः सर्वे पशवो वायुदेवताः ॥ ३ ॥
जलाश्रयाणि सर्वाणि वारिधारा कमण्डलुः। कुम्भं च करकं चैव वारुणानि विनिर्दिशेत् ॥ ४ ॥
समुद्रजातरत्नानि सामुद्राणि तथाण्डज। आग्नेय्यं कनकं प्रोक्तं सर्वलोहानि वा पुनः ॥ ५ ॥
प्राजापत्यानि शस्यानि पक्वान्नानि विशेषतः। ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः ॥ ६ ॥
बार्हस्पत्यं स्मृतं वासः सौम्यान्यत्र रसानि च। पक्षिणश्च तथा सर्वे वायव्याः परिकीर्तिताः ॥ ७ ॥
विद्या ब्राह्मी विनिर्दिष्टा विद्योपस्करणानि च। सारस्वतानि रागाणि पुस्तकाद्यानि वै खग ॥ ८ ॥
सर्वेषां शिल्पिनां जाने विश्वकर्माधिदैवतम्। द्रुमाणामथ पुष्पाणां शाकानां हरितां स ह ॥ ९ ॥
फलानामपि सर्वेषां देवो यत्र वनस्पतिः। मत्स्यमांसं विनिर्दिष्टं प्राजापत्यं तथैव च ॥ १० ॥
अभयं सर्वदैवत्यं पृथिवी विष्णुदेवता। दासी दासस्तथा कन्या प्राजापत्याः प्रकीर्तिताः ॥ ११ ॥
छत्रं कृष्णाजिनं शय्या रथमासनमेव च। उपानहौ तथा यानं यच्चान्यत्प्राणवर्जितम् ॥ १२ ॥
उत्तानाश्चांगिरसस्त्वेतत्प्रतिगृह्णीत मानवः। पर्जन्या ये तथा नीरैः शस्त्रचर्मध्वजादिकम् ॥ १३ ॥
रणोपकरणं सर्वं कथितं शक्रदैवतम्। गृह्णन्तु सर्वदैवत्यं ताम्बूलं नागदैवतम् ॥ १४ ॥
यदनुक्तं महाभाग तज्ज्ञेयं विष्णुदैवतम्। यस्य द्रव्यस्य यद्रूपं प्रतिमासु खगेश्वर ॥ १५ ॥
सा ह्येव देवता तस्य दानकाले समुच्चरेत् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिषष्टितमः ॥ ६३ ॥

---

### श्रीसूर्य उवाच।

यवोदरैरष्टसंख्यैरंगुलं परिकीर्तितम्। षडंगुलं पदं प्राहुर्वितस्तिर्द्विगुणा स्मृता ॥ १ ॥
वितस्तिमितो हस्तो ब्रह्मतीर्थादिवेष्टनैः। चतुर्हस्तो भवेद्दण्डो मानकाले खगेश्वर ॥ २ ॥
क्रोशो धनुःसहस्रे द्वे गव्यूतिर्द्विगुणा स्मृता। योजनं द्विगुणं तस्मात्प्रोक्तं मानं खगाधिप ॥ ३ ॥
दशहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्तनम्। दश तान्येव गोचर्म भूमिमानमितीरितम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःषष्टितमः ॥ ६४ ॥

---

### श्रीसूर्य उवाच।

प्रमाणं सर्वदेवानां मूर्तीनां शृणु चाण्डज। मुनिनागासुराणां च मनुष्यपशुपक्षिणाम् ॥ १ ॥
गजोन्माना गणेशस्य नरमाना शिवस्य च। लक्ष्मीनारायणौ तद्वत्समानोच्चसंमितौ ॥ २ ॥
प्रासादस्थास्तु ताः सर्वास्त्रिहस्तामितिकाः सुत। द्विहस्तमितिकाः केचित्कोचिद्धस्तमिताः शुभाः ३॥

---

१ शालकम्-खपु०। २ कासी-खपु०। ३ त्यक्तान्यानि-खपु०।

प्रासादस्था महाभाग गृहस्था न च शोभनाः। सप्तांगुलात्समारभ्य यावच्च द्वादशांगुलम् ॥ ४ ॥
गृहेष्वर्चाः समाख्याताः प्रासादे चाधिकाः शुभाः। स्थापनेऽप्यत्र लिङ्गानां व्यवस्थितिरियं स्मृता ५
नहि लिङ्गार्चनात्सूत पुण्यमभ्यधिकं क्वचित्। शालग्रामशिला चैव नर्मदोत्या विशेषतः ॥ ६ ॥
यथा लभस्तथा ग्राह्या मानहीनाधिका हि सा। सर्वकामप्रदा कर्तुरन्ते स्वर्गफलप्रदा ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चषष्टितमः ॥ ६५॥

## श्रीसूर्य उवाच।

प्रतिमाष्टविधा सूत सौवर्णी राजती तथा। ताम्री रत्नमयी कार्या रीतया धात्वन्विता तथा ॥१॥
ताम्रकांस्यमयी चैव शुभदारुमयी शुभा। वितस्तिप्रमानं यावत्स्यादङ्गुष्ठात्पर्वसंमिता ॥ २ ॥
गृहेष्वर्चा शुभा प्रोक्ता नाधिका गरुडाग्रज। गोब्राह्मणेषु वाय्वग्नौ हृदि स्वे प्रतिमासु च ॥ ३ ॥
शालग्रामे रवौ वापि पूजनं शुभदं पटे। दाने स्वभावजा लेख्या घटितेति त्रिधाण्डज ॥ ४ ॥
सर्वपापहरा ज्ञेयाः सर्वकामफलप्रदाः। लेख्या चतुर्विधा प्रोक्ता श्रेष्ठा मध्या कनिष्ठिका ॥ ५ ॥
अपकृष्टा तु फलदा तत्क्रमान्नात्र संशयः। दैर्घ्ये त्वेकाङ्गुला श्रेष्ठा विस्तारेऽष्टांगुला मता ॥ ६ ॥
मध्याष्टांगुलिका दैर्घ्ये विस्तारे च षडङ्गुला। षडङ्गुला तदा दैर्घ्ये हीना वेदाङ्गुलायते ॥७॥
चतुरङ्गुलिका दैर्घ्ये चायामे चापकृष्टिका ॥ ८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्षष्टितमः ॥ ६६ ॥

## श्रीसूर्य उवाच।

अङ्गुष्ठपर्वप्रमितितो हीना दानेन शोभनाःफलाभ्यां प्रतिमा न्यूना श्रेष्ठा कार्याल्पिकापि चेत् ॥१॥
वक्ष्यमाणस्वरूपा वा देवादीनां विधानतः। एवं सर्वा द्विजातीनां कार्याः स्वर्णादिधातुजाः ॥ २॥
नराकाराः समालेख्याः सर्वावयवसंयुताः। श्रेष्ठामध्याकनिष्ठाश्च तथा चैवापकृष्टिकाः ॥ ३ ॥
सर्वा वितस्तिमानोना विस्तारे तास्त्रयः स्मृताः। स्त्रीपुत्रसहिता कार्या रहिता वाथ कुत्रचित् ॥४॥
चतुष्कोणा सुघटिता मन्त्रैरावर्तनादिकैः। अनाज्ञया द्विजानां वै न तासां घटनं स्मृतम् ॥ ५ ॥
एवमश्वगजोष्ट्राणां गवादीनां च पक्षिणाम्। स्वाकाराङ्कस्याश्च सततं कार्याश्चार्चाविधानतः ॥६॥
पत्रे लेख्या सुवर्णाद्ये वेदाङ्गुलिमिताधिके। सुगन्धैर्विविधैर्वापि लेख्या कार्या प्रयत्नतः ॥ ७ ॥
प्रणवादिनमोऽन्तेन नाममन्त्रेण चाण्डज। आवर्तनं च घटनं प्रतिष्ठाऽऽवाहनादिकम् ॥ ८ ॥
पूजनं प्रतिमानां च स्वैस्वैर्मन्त्रैश्च कारयेत्। प्रासादे चातिफलदा पूजनीया प्रतिष्ठिता ॥ ९ ॥
देवताः सफलाः सूत पूजने च प्रतिष्ठिताः ॥ १० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायःसप्तषष्टितमः ॥ ६७ ॥

## अरुण उवाच।

प्रतिष्ठां सर्वदेवानां ब्रूहि मेऽत्र दिवाकर। यां कृत्वा विधिना पूर्णं देवपूजाफलं लभेत् ॥ १ ॥

## श्रीसूर्य उवाच।

प्रतिष्ठां सर्वदेवानां कारयेत्क्रमतो नरः। नारायणादयो देवा निवसन्ति सुरालये ॥ २ ॥
भक्तानुग्रहतो मर्त्यं समायान्ति च भूतले। सौम्यायने सिते पक्षे गुरुशुक्रोदिते दिने ॥ ३ ॥
सुमुहूर्ते यजेद्देवान्नानाविभवविस्तरैः। वरयेद्ब्राह्मणान्पूर्वं वस्त्रासनविभूषणैः ॥ ४ ॥

१ ते—ख पु०। २ कार्योल्पिकापि चेत्—ख पु०। ३ पठनं—ख पु०। ४ देवाः स्वरूपदाः सूत—ख पु०। ५ पूर्वं—ख पु।

जप्त्वा तद्देवमन्त्रांश्च कोटिलक्षायुतादिकान्। स्नात्वा पञ्चामृतेनैव दिव्यैस्तीर्थोदकैस्तथा ॥ ५ ॥
लिप्त्वा सुगन्धैर्विविधैर्माल्यैर्वस्त्रैश्च दीपकैः । धूपैर्नैवेद्यैर्भक्ष्यैः फलैस्तदनुसंभवैः ॥ ६ ॥
तथा मङ्गलदीपैश्च व्यजनैश्चामरैः शुभैः । नानावाद्यैर्मनोज्ञैश्च प्रीतिमुत्पादयेत्सुरान् ॥ ७ ॥
देवाग्रे च स्वपेद्भूमावशक्तो जागरे निशि । ततः प्रातः समुत्थाय स्नातः शुचिरलंकृतः ॥ ८ ॥
देवमावाहयेन्मन्त्रैस्तल्लिङ्गैः प्राग्वदर्चयेत्। षोडशोपचारैस्तु नान्यथा देवतां विशेत् ॥ ९ ॥
ज्ञात्वा देवांश्च घटितान्सुवर्णाद्यैर्विनिर्मितान् । शालग्रामशिलादौ वा जीवमन्त्रसमावृतान् ॥१०॥
पत्रे लेख्यांस्तथारूपाञ्शास्त्रलक्षणलक्षितान् । स्वकीयासनसंस्थांश्च स्वस्वोपस्करसंयुतान् ॥११॥
एतत्ते स्वेद वै चेति मन्त्राभ्यां सुप्रतिष्ठितान् । कुर्याद्देवान्विधानेन ततः कामफलप्रदाः ॥१२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टषष्टितमः ॥ ६८ ॥

## श्रीसूर्य उवाच ।

देवाग्रे होमयेन्मन्त्रैर्दशांशेन प्रयत्नतः । तर्पयेच्छ्रद्धया चानुशक्तया विप्रांश्च भोजयेत् ॥ १ ॥
जापकेभ्यः प्रदद्यात्तु सुवर्णमयुतस्य च । तत्र दानानि देयानि देवप्रीतिकराणि च ॥ २ ॥
गावो वस्त्राणि चान्नानि रत्नानि विविधानि च । यथा देवं द्विजं तद्वद्विधिज्ञं वेदपारगम् ॥ ३ ॥
तोषयेन्मुद्रिकावस्त्रैर्गोभूशय्यासनादिकैः । विविधैर्भूषणैर्दिव्यैर्ब्राह्मणं तं विसर्जयेत् ॥ ४ ॥
प्रार्थयेच्च तदग्रेऽत्र मन्त्रमेनमुदीरयेत् ॥ ५ ॥
देवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः । ते मन्त्रा ब्राह्मणाधीनास्तस्माद् भूदेवता द्विजाः ॥६ ॥
तत्प्रसादादिमे देवास्तिष्ठन्तु मम मन्दिरे । पूजां गृह्णन्तु मे नित्यं कुर्वन्तो मन्मनोरथान् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनसप्ततितमः ॥ ६९ ॥

## श्रीसूर्य उवाच ।

शक्तियुक्तं महादेवं प्रतिष्ठेदेवमेव हि । लक्ष्मीनारायणं चापि मन्त्रमेवात्तयैव च ॥ १ ॥
वक्ष्ये मन्त्रांस्तु वेदोक्तान्सुराणां भावितात्मनाम् । मन्त्रो विष्णोरिदं विष्णुर्नमस्त इति शाम्भवः२
ब्रह्मणो ब्रह्मजज्ञानमन्वेऽम्बायाः प्रकीर्तितः । आकृष्णेति सहस्रांशोर्मन्त्रः प्रोक्तो मनीषिभिः॥३॥
श्रीश्चत इति लक्ष्म्यास्तु पार्वत्याः शचिपाणिकम् । गणानां त्वेति मन्त्रस्तु विघ्नराजस्य कीर्तितः ४
विष्णोरराडिति वा मन्त्रः प्रोक्तः सनातनः । समुद्रायेति शंखस्य रुद्राक्षस्य च त्र्यम्बकम् ॥ ५ ॥
दिक्पालानां तथा मन्त्रास्त्रातारेत्यादिकाःस्मृताः नवग्रहाणां मन्त्राश्च श्रुतौ देवाधिदेवताः ॥६ ॥
बहुविस्तरतः प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः । लक्ष्मीनारायणाभ्यां च नमोन्त इति कीर्तितः ॥ ७ ॥
सरस्वत्यादिकानां च मन्त्राः प्रोक्ताः सविस्तराः । मन्त्राः पुरुषसूक्तेत्यास्तथा नरहरेः प्रभोः ८॥
यन्त्रोद्धारे प्रतिष्ठायां मन्त्रास्तल्लिङ्गदैवजाः । अथवाष्टाक्षरो मन्त्रो द्वादशाक्षर एव च ॥ ९ ॥
नारायणप्रतिष्ठायां योज्यौ धर्मार्थकामदौ । प्रणवादिनमोन्तैश्च नाममन्त्रैर्यथोदितैः ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्ततितमः ॥ ७० ॥

## श्रीसूर्य उवाच ।

प्रतिष्ठातो हि देवानां सर्वकामफलं स्मृतम् । अथवाऽऽगमजैर्मन्त्रैः प्रतिष्ठेत्सर्वकामदैः ॥ १ ॥
तैर्मन्त्रैश्च जपं कुर्यात्पूजान्ते धर्मवित्सदा । अनेन विधिना मन्त्रैर्यस्तु देवान्प्रतिष्ठयेत् ॥ २ ॥

१ देवाग्निमर्चयेत्–खपु० । २ ब्रह्मणे ब्रह्मजज्ञानमेत्यायाः प्रकीर्तितः–खपु० । ३ प्रतिष्ठे सर्वदेवानां–खपु० ।

प्रासादस्था महाभाग गृहस्था न च शोभनाः। सप्तांगुलात्समारभ्य यावच्च द्वादशांगुलम् ॥ ४ ॥
गृहेष्वर्च्याः समाख्याताः प्रासादे चाधिकाः शुभाः। स्थापनेऽयत्र लिङ्गानां व्यवस्थितिरियं स्मृता ५
नहि लिङ्गार्चनात्सूत पुण्यमभ्यधिकं क्वचित्। शालग्रामशिला चैव नर्मदोत्था विशेषतः ॥ ६ ॥
यथा लाभस्तथा ग्राह्या मानहीनाधिका हि सा। सर्वकामप्रदा कर्तुरन्ते स्वर्गफलप्रदा ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चषष्टितम ॥ ६५॥

श्रीसूर्य उवाच।

प्रतिमाष्टविधा सूत सौवर्णी राजती तथा। ताम्री रत्नमयी कार्या रीत्या धात्वन्विता तथा ॥१॥
ताम्रकांस्यमयी चैव शुभदारुमयी शुभा। वितस्तिप्रमानं यावत्स्यादङ्गुष्ठात्पर्वसंमिता ॥ २ ॥
गृहेष्वर्च्या शुभा प्रोक्ता नाधिका गरुडाग्रज। गोब्राह्मणेषु वाय्वग्नौ हृदि स्वे प्रतिमासु च ॥ ३ ॥
शालग्रामे खौ वापि पूजनं शुभदं पटे। दाने स्वनावजा लेख्या घटितेति त्रिधाण्डज ॥ ४ ॥
सर्वपापहरा ज्ञेयाः सर्वकामफलप्रदाः। लेख्या चतुर्विधा प्रोक्ता श्रेष्ठा मध्या कनिष्ठिका ॥ ५ ॥
अपकृष्टा तु फलदा तत्क्रमान्नात्र संशयः। दैर्घ्ये त्वकाङ्गुला श्रेष्ठा विस्तारेऽष्टांगुला मता ॥ ६ ॥
मध्याष्टाङ्गुलिका दैर्घ्य विस्तारे च षडङ्गुला। षडङ्गुला तदा दैर्घ्ये हीना वेदाङ्गुलायते ॥७॥
चतुरङ्गुलिका दैर्घ्ये चायामे चापकृष्टिका ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्षष्टितम ॥ ६६ ॥

श्रीसूर्य उवाच।

अङ्गुष्ठपर्वतोन्मितितो हीना दानेन शोभना।पलाभ्यां प्रतिमा न्यूना श्रेष्ठा कार्याल्पिकापि चेत् ॥१॥
वक्ष्यमाणस्वरूपा वा देवादीना विधानतः। एवं सर्वा द्विजातीनां कार्याः स्वर्णादिधातुजाः ॥ २॥
नराकाराः प्रमाले्रजाः सर्वावयवसंयुताः। श्रेष्ठामध्याकनिष्ठाश्च तथा चैवापकृष्टिकाः ॥ ३ ॥
सर्वा वितस्तिमानोना विस्तारे तास्त्रयः स्मृताः। स्त्रीपुत्रसहिता कार्या रहिता वाथ कुत्रचित् ॥४॥
चतुष्कोणा सुघटिता मन्त्रैरावतनादिकैः। अनान्यया द्विजाना वै न तासां घटनं स्मृतम् ॥ ५ ॥
एवमश्वगजोष्ट्राणां गवादीना च पक्षिणाम्। स्वाकाराङ्कस्याश्च सततं कार्याश्चार्चाविधानतः ॥६॥
पत्रे लेख्या सुवर्णाद्ये वेदाङ्गुलिमिताधिके। सुगन्धैर्विविधैर्वापि लेख्या कार्या प्रयत्नतः ॥ ७ ॥
प्रणवादिनमोऽन्तेन नाममन्त्रेण चाण्डज। आवर्तनं च घटनं प्रतिष्ठाऽऽवाहनादिकम् ॥ ८ ॥
पूजनं प्रतिमानां च स्वैर्स्वैर्मन्त्रैश्च कारयेत्। प्रासादे चातिफलदा पूजनीया प्रतिष्ठिता ॥ ९ ॥
देवताः सफलाः सूत पूजने च प्रतिष्ठिताः ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तषष्टितम ॥ ६७ ॥

अरुण उवाच।

प्रतिष्ठा सर्वदेवाना ब्रूहि मेऽत्र दिवाकर। यां कृत्वा विधिना पूर्णं देवपूजाफलं लभेत् ॥ १ ॥

श्रीसूर्य उवाच।

प्रतिष्ठा सर्वदेवाना कारयेत्क्रमतो नरः। नारायणादयो देवा निवसन्ति सुरालये ॥ २ ॥
भक्तानुग्रहतो मर्त्यं समायान्ति च भूतले। सौम्यायने सिते पक्षे गुरुशुक्रोदिते दिने ॥ ३ ॥
सुमुहूर्ते यजेद्देवान्नानाविभवविस्तरैः। वरयेद्ब्राह्मणान्पूर्वं वस्त्रासनविभूषणैः ॥ ४ ॥

१ खे—प्रपु०। २ कार्याल्पिकास्ति चेत्—प्रपु०। ३ पठन—प्रपु०। ४ देवा ,५ सफला सूत—प्रपु०।
५ पूर्वे—प्रपु।

जप्त्वा तदेवमन्त्रांश्च कोटिलक्षायुतादिकान्। स्नात्वा पञ्चामृतेनैव दिव्यैस्तीर्थोदकैस्तथा ॥ ५ ॥
लिप्त्वा सुगन्धैर्विविधैर्माल्यैर्वस्त्रैश्च दीपकैः। धूपैर्नैवेद्यैर्भक्ष्यैः फलैस्तदनुसंभवैः ॥ ६ ॥
तथा मङ्गलदीपैश्च व्यजनैश्चामरैः शुभैः। नानावाद्यैर्मनोज्ञैश्च प्रीतिमुत्पादयेत्सुरान् ॥ ७ ॥
देवाग्रे च स्वपेद्भूमावशक्तो जागरे निशि। ततः प्रातः समुत्थाय स्नातः शुचिरलंकृतः ॥ ८ ॥
देवमावाहयेन्मन्त्रैस्तल्लिङ्गैः प्राग्वदर्चयेत्। षोडशोरूपचारैस्तु नान्यथा देवता विशेत् ॥ ९ ॥
ज्ञात्वा देवांश्च घटितान्सुवर्णाद्यैर्विनिर्मितान्। शालग्रामशिलादौ वा जीवमन्त्रसमावृतान् ॥१०॥
पत्रे लेख्यांस्तथारूपान्शास्त्रलक्षणलक्षितान्। स्वकीयासनसंस्थांश्च स्वस्वोपस्करसंयुतान् ॥११॥
एतन्ते त्वेष वै चेति मन्त्राभ्यां सुप्रतिष्ठितान्। कुर्याद्देवान्विधानेन ततः कामफलप्रदाः ॥१२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टषष्टितमः ॥ ६८ ॥

## श्रीसूर्य उवाच।

देवाग्रे होमयेन्मन्त्रैर्दशांशेन प्रयत्नतः। तर्पयेच्छ्रद्धया चानुशक्तया विप्रांश्च भोजयेत् ॥ १ ॥
जापकेभ्यः प्रदद्यात्तु सुवर्णमयुतस्य च। तत्र दानानि देयानि देवप्रीतिकराणि च ॥ २ ॥
गावो वस्त्राणि चान्नानि रत्नानि विविधानि च। यथा देवं द्विजं तद्वद्विधिज्ञं वेदपारगम् ॥ ३ ॥
तोषयेन्मृदुभिर्वस्त्रैर्गोभूम्यश्वासनादिकैः। विविधैर्भूषणैर्द्रव्यैर्ब्राह्मणं तं विसर्जयेत् ॥ ४ ॥
प्रार्थयेच्च तदग्रेऽत्र मन्त्रमेनमुदीरयेत् ॥ ५ ॥
देवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः। ते मन्त्रा ब्राह्मणाधीनास्तस्माद् भूदेवता द्विजाः ॥६ ॥
तत्प्रसादादिमे देवास्तिष्ठन्तु मम मन्दिरे। पूजां गृह्णन्तु मे नित्यं कुर्वन्तो मन्मनोरथान् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनसप्ततितमः ॥ ६९ ॥

## श्रीसूर्य उवाच।

शक्तियुक्तं महादेवं प्रतिष्ठेदेवमेव हि। लक्ष्मीनारायणं वापि मन्त्रभेदास्तथैव च ॥ १ ॥
वक्ष्ये मन्त्रांस्तु वेदोक्तान्सुराणां भावितात्मनाम्। मन्त्रो विष्णोरिदं विष्णुर्नमस्त इति शाम्भवः२
ब्रह्मणो ब्रह्मजज्ञानमन्वेऽत्र्यायाः प्रकीर्तितः। आकृष्णेति सहस्रांशोर्मन्त्रः प्रोक्तो मनीषिभिः॥३॥
श्रीश्चत इति लक्ष्म्यास्तु पार्वत्याः शचिपार्षिकाम्। गणानां त्वेति मन्त्रस्तु विघ्नराजस्य कीर्तितः ४
विष्णोरराटिति वा मन्त्रः प्रोक्तः सनातनः। समुद्रायेति शंखस्य रुद्राक्षस्य च त्र्यम्बकम् ॥ ५ ॥
दिक्पालानां तथा मन्त्रास्त्रातारेत्यादिकाःस्मृताः नवग्रहाणां मन्त्राश्च श्रुतौ देवाधिदेवताः ॥६ ॥
बहुविस्तरतः प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः। लक्ष्मीनारायणाभ्यां च नमोऽन्त इति कीर्तितः ॥ ७ ॥
सरस्वत्यादिकानां च मन्त्राः प्रोक्ताः सविस्तराः। मन्त्राः पुरुषसूक्तोत्थास्तथा नरहरेः प्रभोः८॥
यन्त्रोद्धारे प्रतिष्ठायां मन्त्रास्तल्लिङ्गदेवजाः। अथवाष्टाक्षरो मन्त्रो द्वादशाक्षर एव च ॥ ९ ॥
नारायणप्रतिष्ठायां योज्यो धर्मार्थकामदो। प्रणवादिनमोन्तैश्च नाममन्त्रैर्यथोदितैः ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्ततितमः ॥ ७० ॥

## श्रीसूर्य उवाच।

प्रतिष्ठातो हि देवानां सर्वकामफलं स्मृतम्। अथवाऽऽगमजैर्मन्त्रैः प्रतिष्ठेत्सर्वकामदैः ॥ १ ॥
तैर्मन्त्रैश्च जपं कुर्यात्पूजान्ते धर्मवित्सदा। अनेन विधिना मन्त्रैर्यस्तु देवान्प्रतिष्ठयेत् ॥ २ ॥

१ देवाग्निमर्चयेत्—ख पु०। २ ब्रह्मणे ब्रह्मजज्ञानमेवायाः प्रकीर्तितः—ख पु०। ३ प्रतिष्ठेत् सर्वदेवानां—ख पु०।

स याति परमं स्थानं यद्गत्वा न निवर्तते । इह लोके परे चापि नाशुभं तस्य विद्यते ॥ ३ ॥
अप्रतिष्ठितदेवांश्च पूजयेद्यस्तु मूढधीः । न तत्फलमवाप्नोति स नरो देवदूषकः ॥ ४ ॥
अप्रतिष्ठितदेवानां दानेऽप्यल्पफलं भवेत् । दाने बहुफला देवा मन्त्रमात्रप्रतिष्ठिताः ॥ ५ ॥
पूजारम्भेऽत्र देवानां पादस्पर्शे तथाद्रुते । विकारे प्रतिमायां च स्पृष्टे म्लेच्छजनैस्तथा ॥ ६ ॥
महापातकिभिः स्त्रीभी रजोयुक्ताभिरेव च । अपूज्ये वा चिरं देवे होवमेव गृहे स्थिते ॥ ७ ॥
कुर्याद्देवप्रतिष्ठां च न कुर्यान्निरयं व्रजेत् । सर्वदुःखान्यवाप्नोति नात्र कार्या विचारणा ॥ ८ ॥
विवाहोत्सवयज्ञेषु महादाने तथैव च । देवतायाः प्रतिष्ठायां ग्रहपूजां च कारयेत् ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकसप्ततितमः ॥ ७१ ॥

श्रीसूर्य उवाच ।

उपलिप्ते शुचौ देशे कर्ता शुचिरलंकृतः । आचामेत्पञ्चगव्येन ततः शुद्धेन वारिणा ॥ १ ॥

पञ्चगव्यम्[1] ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पञ्चगव्यमिति प्रोक्तं पवित्रं कायशोधनम् ॥ २ ॥
विष्णुवह्नीन्द्रवाय्वर्का देवतानि यथाक्रमम् । कुशोदकस्य पक्षीन्द्र पितरो देवताः स्मृताः ॥ ३ ॥

पञ्चामृतम् ।

दधि क्षीरं मधु घृतं सिता च गरुडाग्रज । पञ्चामृतमिदं प्रोक्तं पवित्रं पापनाशनम् ॥ ४ ॥
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितम् । (स्नाने पलशतं दद्यादभ्यङ्गे पञ्चविंशतिः ॥ ५ ॥
यथाशक्त्याथवा सूत स्नापयेच्छ्रद्धयान्वितः ।) षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम् ॥ ६ ॥
चतुर्विंशतिकं मध्यं कनिष्ठं द्वादशाङ्गुलम् । वस्वङ्गुलं विहीनं तु न पात्रं कारयेत्क्वचित् ॥ ७ ॥
सौवर्णं राजतं ताम्रं पात्रं मणिमयादिकम् । प्रशस्तपुटकाद्यं तु शुभदं देवपूजने ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विसप्ततितमः ॥ ७२ ॥

## अथ पुष्पाणि ।

श्रीसूर्य उवाच ।

निर्गन्धीन्युग्रगन्धीनि कुसुमानि विवर्जयेत् । गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ॥ १ ॥
पुष्पैरारण्यसंभूतैः पत्रैर्वा पर्वतोद्भवैः । अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥ २ ॥
आत्मारामोद्भवैः पुष्पैः पूजयेत्प्रतिमां सुधीः । दत्त्वा दश सुवर्णस्य निष्काणां लभते फलम् ॥ ३ ॥
सदैककरवीरेण सूर्याय विनिवेदयेत् । रक्तैश्च करवीरैश्च यस्तु पूजयते रविम् ॥ ४ ॥
कल्पकोटिसहस्राणि सूर्यलोके वसेन्नरः । करवीरशतेनैव यो मे मालां प्रयच्छति ॥ ५ ॥
स याति शिवलोकं तु मोदते तत्र देववत् ॥ ६ ॥

अथ गन्धः ।

चत्वारः कौङ्कुमा भागाश्चन्दनस्य च षोडश ॥ ६ ॥
कस्तूरिकाया द्वौ भागौ कर्पूरस्य चतुष्टयम् । सर्वगन्धमिदं सूत देवाङ्गे लेपयेत्सुधीः ॥ ७ ॥

अथ धूपः ।

कर्पूरमगुरुं चैव चन्दनं गुग्गुलं तथा । गुग्गुलं सर्वदेवानां साज्यं चैव सितागुरुम् ॥ ८ ॥
समभागयुतैरेतैः धूपो देवप्रियः सुत ।

---

१ श्लोकोऽयं नास्ति—खपु० ।

अथ दीपः ।

दद्याद्दीपांश्च देवाग्रे गोघृतेन प्रपूरितान् ॥ ९ ॥
अथवा तिलतैलेन सार्षपेणाप्यभावतः । अन्यस्नेहैर्वसायैश्च दीपांश्चैव प्रबोधयेत् ॥ १० ॥
दीपदश्च शुभाँल्लोकान्याति दीपशतैर्वृतः ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायत्रिशततितमः ॥ ७३ ॥

श्रीसूर्य उवाच ।

यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय च । जातः पृथिव्यां कालेन भवेद्विप्रः पतिर्भुवः ॥ १ ॥
दद्याद्वस्त्राणि देवेभ्यः श्वेतपीतारुणानि च । क्षौमाणि विविधान्येव बहुवर्णानि चाण्डज ॥ २ ॥
दिव्यवस्त्रान्वितो दाता स्वर्गलोकमवाप्नुयात् ॥ ३ ॥

अथ नैवेद्यम् ।

संयावकृशराप्पपायसं यावकं तथा ।
दध्योदनं रसालांश्च मोदकान्गुडपूपकान् । शालितण्डुलकं भक्ष्यं कुर्याद्दत्तं सुसंस्कृतम् ॥ ४ ॥
फलानि विविधान्येव देवाय च निवेदयेत् । सर्वदुःखविनिर्मुक्तः स नरः स्वर्गभाग्भवेत् ॥ ५ ॥

अथार्घ्यदानम् ।

आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्तितः ॥६॥
पूजादौ भानवे ह्यर्घ्यं गायत्र्या च प्रदापयेत् । नमो विवस्वते ब्रह्मन्निति मन्त्रेण चाण्डज ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पूजोपकरणाध्यायश्चतुःसप्ततितमः ॥ ७४ ॥

श्रीसूर्य उवाच ।

अथोपचारान् पूजायाः षोडश शृणु पुत्रक । आद्येनावाहयेद्देवं मन्त्रेण पुरुषोत्तमम् ॥ १ ॥
द्वितीयेनासनं दद्यात्ततः पाद्यं प्रदापयेत् । चतुर्थेनार्घ्यदानं च ततश्चाचमनीयकम् ॥ २ ॥
षष्ठेन स्नपनं दद्यात्सप्तमेनापि वाससी । अष्टमेनोपवीतं च नवमेन विलेपनम् ॥ ३ ॥
दशमेनैव पुष्पाणि दद्याद्देवस्य चाण्डज । एकादशेन मन्त्रेण धूपं चैव प्रदापयेत् ॥ ४ ॥
दीपं द्वादशकेनैव त्रयोदशमितेन वै । नैवेद्यं विविधं दद्याद्भक्ष्यं भोज्यं च पायसम् ॥ ५ ॥
चतुर्दशेन मन्त्रेण दद्यात्सुमनसोऽञ्जलिम् । ततः पञ्चदशेनैव कारयेच्च प्रदक्षिणाम् ॥ ६ ॥
वाद्यादीनि च तेनैव षोडशेन विसर्जनम् । स्नानोपवीतवस्त्रेषु नैवेद्ये कश्यपात्मज ॥ ७ ॥
दद्यादाचमनीयानि सर्वदेवेष्वयं विधिः । स्वैस्स्वैर्मन्त्रैर्विधानेन देवांस्तत्र प्रसादयेत् ॥ ८ ॥
गन्धपुष्पे तथा धूपदीपनैवेद्यकानि च । अशक्तो पञ्च वा कुर्यादुपचारांश्च पूजने ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पूजोपचाराध्यायः पञ्चसप्ततितमः ॥ ७५ ॥

श्रीसूर्य उवाच ।

स्नात्वा नित्यक्रियां कृत्वा कर्ता शुचिरलंकृतः । ब्राह्मणान्देववस्तूनि गन्धाद्यैरर्चयेत्सुत ॥ १ ॥
दानं ददेऽहममुकं दद्याद्विप्रकरे जलम् । ददस्वेति द्विजेनोक्तमिति दानविधिः स्मृतः ॥ २ ॥
ॐतत्सत्पूर्वमुच्चार्य गृहीत्वा तु करे जलम् । सतिलकुशहस्तस्तु कालज्ञानं समुच्चरन्[2] ॥ ३ ॥
प्राङ्मुखश्चोदङ्मुखो वा पैत्रे याम्यमुखः स्थितः । वामेन पाणिना स्पृष्ट्वा स्मरेत्सद्वस्तुदैवते ॥४॥

१ दुग्धोदनम्–ख पु० । २ समुच्चरेत्–ख पु० ।

विप्रायामुकगोत्रायामुककामो ह्यहं ददे । नमस्तेत्युत्सृजेदेतद्विजहस्ते जलं स्रग ॥ ५ ॥
स्वस्तीत्युक्तेन विप्रेण दानमक्षयतां नयेत् । संप्रदानमिति प्रोक्तमन्यत्त्यागमिति स्मृतम् ॥ ६ ॥
कन्यादानं त्रिपुरुषगोत्रोच्चारणपूर्वकम् । गोकन्याप्रतिमा शय्यास्त्वेकैकस्य प्रदापयेत् ॥ ७ ॥
विभक्तविधिना दाता न तत्फलमवाप्नुयात् । प्रतिष्ठासर्वदानानां स्वर्णमक्षयकारकम् ॥ ८ ॥
दानमक्षयतां याति संप्रदानेन यत्कृतम् । अभावे ब्राह्मणादीनां दानमल्पफलं भवेत् ॥ ९ ॥
तीर्थादौ त्यागविधिना संप्रदानसमं फलम् । तावद्धेनुषु धेनुत्वं देवत्वं प्रतिमासु च ॥ १० ॥
यावद्विप्रो न गृह्णीयात्स्वस्तीत्युक्तिवि तद्बसु ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके दानविधानाध्यायः षट्सप्ततितमः ॥ ७६ ॥

अरुण उवाच ।

सामान्येन विधिं ब्रूहि सर्वलोकहिताय वै । पापिनां कर्मदुष्टानां प्रायश्चित्तं परं वद ॥ १ ॥
प्रायश्चित्तविहीनानां का गतिः परमेश्वर । श्रोतुमिच्छाम्यहं त्वत्तः सर्वज्ञस्त्वं यतः प्रभो ॥ २ ॥

श्रीसूर्य उवाच ।

प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥ ३ ॥
प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचकम् । प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥ ४ ॥
महापातकजं चिह्नं सप्तजन्माभिजायते । उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥ ५ ॥
दुष्कर्मजा नृणां रोगा यान्ति चैव क्रमाद्दशमम् । जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमं भवेत् ॥ ६ ॥
पूर्वजन्मकृतं पापं नरकान्ते परीक्षयेत् । बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः ॥ ७ ॥
कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ८ ॥
पूर्वजन्मकृतं पापं व्याधिरूपेण तिष्ठति । कुष्ठं च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ॥ ९ ॥
मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ । दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ॥ १० ॥
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः । जलोदरयकृत्प्लीहशूलशोफव्रणास्तथा ॥ ११ ॥
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः । रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः ॥ १२ ॥
दण्डपातकिमश्वित्रवपुःकम्पविचर्चिकाः । वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥ १३ ॥
अर्शआद्या नृणां रोगा अभिशापाद्भवन्ति हि । अन्ये च बहुधा रोगा जायन्ते दोषसंकराः ॥ १४ ॥
उच्यन्तेऽथ निदानानि प्रायश्चित्तानि च क्रमात् । महापापेषु सर्वस्वं तदर्धं तूपपातके ॥ १५ ॥
दद्यात्पापेषु षष्ठांशं तुर्यं चाथ खगेश्वर ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके सामान्यविचाराध्यायः सप्तसप्ततितमः ॥ ७७ ॥

श्रीसूर्य उवाच ।

दश पञ्चाथ चतुर उपदेश्य द्विजाञ्छुभान् । तेषामनुज्ञया सर्वं प्रायश्चित्तमुपक्रमेत् ॥ १ ॥
विधाय वैष्णवं श्राद्धं संकल्पं निजकाम्यया । धेनुं दद्याद्द्विजेभ्योऽर्घ्यं दक्षिणां च स्वशक्तितः ॥ २ ॥
अलंकृत्य यथाशक्त्या वस्त्रालंकरणैर्द्विजान् । याचेत दण्डवन्नत्वा प्रायश्चित्तं यथोचितम् ॥ ३ ॥

१ आदर्शपुस्तके एतदध्यायान्ते अर्धत्रुटित इत्युक्तम् । अन्यस्मिन्पुस्तके तु त्रुटितप्रथमपादाभावनिरपा वैरस्माभिर्यथास्मुद्रितोय मथ. । यदि त्रुटितप्रथमस्य प्रयत्नेन वैश्विन्मध्यशयेलुमह क्रियेत तर्हि द्वितीयावृत्तौ स प्रथं स्वस्थाने सन्निवेश्य मुद्रयिष्याम इति । २ सप्तजन्मानि—स्पपु० ।

व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि। सर्वं भवति चाऽच्छिद्रं यस्य चेच्छन्ति वै द्विजाः॥४॥
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः। सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥ ५ ॥
उपवासो व्रतं चैव स्नानं तीर्थफलं तपः। विप्रैः संपादितं यस्य संपन्नं तस्य तद्भवेत् ॥ ६ ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम्। तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥७॥
संपन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसा धार्यमग्निष्टोमफलं भवेत् ॥ ८ ॥
तेभ्योऽनुज्ञामिति प्राप्य प्रपद्येत यथाऽऽशिषः। भोजयित्वा द्विजाञ्शक्त्या भुञ्जीत सह बन्धुभिः॥९॥
गोदानं च तथा तेषु कर्तव्यं पापशोधनम्। एका कृच्छ्रेऽतिकृच्छ्रे द्वे तिस्रश्चान्द्रायणे व्रते॥१०॥
गवामभावे निष्पाद्या साशीतिः शतकृच्छ्रदा। पाड्वार्षिके महाभाग प्रायश्चित्ते यथोदिते ॥ ११ ॥
अशीत्युत्तरशतं कृच्छ्राणां भवति ध्रुवम्। त्रिविधा हि महाबाहो कर्मजा दोषजास्तथा ॥ १२ ॥
तयोभयसमुद्भूता नृणां दोषाः पतत्रिण ॥ १३ ॥
कर्मप्रकोपेण कदाचिदेते दोषप्रकोपेण भवन्ति चान्ये।
तथा परे प्राणिषु कर्मदोषप्रकोपजाः कायमनोविकारात् ॥ १४ ॥
प्रायश्चित्तमकृत्वा तु न कुर्यात्कर्म किंचन। अनिस्तीर्यमघं नित्यं वर्धते द्विगुणं पुनः ॥ १५ ॥
दानैर्दयाभिरतिथिद्विजदेवतागोदेवार्चनप्रणतिभिश्च जपैस्तपोभिः।
इत्युक्तपुण्यनिचयैरपचीयमानं प्राक्पापजातमशुभं प्रशमं नयंति ॥ १६ ॥
निष्कृत्या कर्मजन्मत्थो दोषजस्त्वौषधेन हि। उभयाज्जायमानस्तु निष्कृत्यौषधसेवया ॥ १७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके दोषविभागाध्यायोऽष्टसप्ततितमः ॥ ७८ ॥

श्रीसूर्य उवाच।

ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः। धर्मशास्त्रादविज्ञाय प्रायश्चित्तं ददाति यः ॥ १ ॥
राजयक्ष्मा भवेत्तस्य रोगपीडातिदारुणा। क्षयी स्याद्गर्भघातेन तथा क्षेत्रस्य मारणे ॥ २ ॥
क्षयेणात्र क्षयं यान्ति धातवः सर्वदेहिनाम्। प्रायश्चित्तं परं तस्य शृणु यत्नेन चाण्डज ॥ ३ ॥
कारयेत्कदलीं दिव्यां पर्णैः सर्वत्र संयुताम्। फलपूगेन संयुक्तां सुवर्णस्य पलेन तु ॥ ४ ॥
यथाविभवतः कुर्याद्वस्त्रेणावेष्ट्य सूत्रकैः। ब्राह्मणान्भोजयेच्चापि भक्ष्यैर्नानाविधैः शुभैः ॥ ५ ॥
होमं च कारयेत्तत्र पूर्ववद्ब्राह्मणेन च। तस्मै तां कदलीं दद्याद्वस्त्रालंकारपूर्विकाम् ॥ ६ ॥
पूजिताय दरिद्राय वृत्तस्थायात्मवेदिने। धर्मज्ञायातिदान्ताय मन्त्रेणानेन तत्क्षयी ॥ ७ ॥

दानमन्त्रः।

"हिरण्यगर्भ पुरुष परात्पर जगन्मय। रम्भादानेन देवेश क्षयं क्षपय मे प्रभो" ॥ ८ ॥
पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः। शिष्टैरिष्टैर्बन्धुभिश्च सहभोजनमाचरेत् ॥ ९ ॥
जपहोमौ यथाशक्ति पूजामन्त्रश्च त्र्यम्बकम्। राजहा राजयक्ष्मी स्याद्दोषात्तस्यातिनिष्कृतिः॥१०॥
गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः। घृतधेनुप्रदानेन तिलकुम्भप्रदानतः ॥ ११ ॥
दातव्यानि समस्तानि व्यस्तानि चाप्यकल्पतः ॥ १२ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके क्षयरोगाध्याय एकोनाशीतितमः ॥ ७९ ॥

---

१ सर्वकामदम्–ख पु०। २ अथवा पलमेकं तु सुवर्णं गोसमं फले इत्यधिकं–ख पु०। ३ हेमः पलैर्वे दमितैर्वेद्विः कार्यो द्विजातिभिः। जपं लक्षमितं वह्नेः सर्वेषां कार्यसाधकम्, इत्यधिकम्। ख पु०।

## श्रीसूर्य उवाच ।

शूली स्यादन्नहर्ता च जन्मन्यत्र पतत्रिण । हिंसको वा मनुष्याणां शूलरुक्पीडितोऽधुना ॥ १ ॥
पलार्धेन तदर्धेन तदर्धेनापि वा कृतम् । सौवर्णं राजतं वापि शूलं कुर्यात्प्रयत्नतः ॥ २ ॥
ताम्रेण वाऽयसा वापि वदरेणाथवा पुनः । शुभवस्त्रेण संवेष्ट्य तिलानामुपरि न्यसेत् ॥ ३ ॥
तिलानां परिमाणं तु द्रोणं चापि तदर्धकम् । तदर्धं च यथाशक्त्या प्रजपेद्ब्राह्मणः शुचिः ॥ ४ ॥
ततो हुतवते शूलं पूजयित्वा स्वशक्तितः । दद्यात्सदक्षिणां तत्तु प्राङ्मुखो वाप्युदङ्मुखः ॥ ५ ॥
त्वं शूल ब्रह्मणा सृष्टं त्रिपुराणां विनाशने । दैत्यानां दानवानां च शङ्करस्यायुधं तथा ॥ ६ ॥
कुक्षिस्थमथ पार्श्वस्थमथवा पृष्ठसंगतम् । शूलं विनाशय त्वं मे महादेवेन राधितम् ॥ ७ ॥
ततः स्नात्वाथ भुञ्जीत ब्राह्मणैः सह बन्धुभिः । नमः शिवायेति केचित्प्रणवादि पठन्ति च ॥८॥
( त्र्यम्बकं यजेति । अरुचिशूले श्रद्धाहीनो धनवान् दानेष्वरतिस्तामसदानाद्वा यः सोऽरुचिमान् शूला जायते तत्रायं विस्तरः । )
साक्षाद्धन्ति गवादीनि यः पुनर्जननान्तरे । शिरोरोगी श्रोत्ररोगी शूली चारुचिमान्भवेत् ॥ ९ ॥
( अत्र गोहननं यज्ञसाधनत्वादिगुणविशिष्टगोहननं प्रायश्चित्तस्य गुरुत्वात् । )
विश्वस्तं विपदाता च प्लीहवाञ्जायते नरः ।
( वा-चै-शब्दाच्छूली च जठरशूले । )
श्रुत्यध्ययनसम्पन्नं याचितारमकिंचनम् ॥ १० ॥
ब्राह्मणं दान्तमाहूय दानार्थं न ददाति यः । स भवेज्जठरे शूली तथाऽमानी च कर्हिचित् ॥ ११ ॥
पूर्वजन्मनि नास्तिक्यात्स्वयलेशाद्धवशब्द्वान् । निष्कविंशतिकं दद्याद्ब्राह्मणाय कुटुम्बिने ॥ १२ ॥
विष्णुप्रकाशकान्मन्त्राञ्जपेद्रोगोपशान्तये । अपामार्जनपाठेन मन्त्रितं स जलं पिबेत् ॥ १३ ॥

## भोजनं ब्राह्मणेभ्यः ।

नग्नां परस्त्रियं दृष्ट्वा सूर्यं वास्तमयोदये । नेत्रशूली भवेत्सोऽपि नेक्षितुं क्षमते दृशा ॥ १४ ॥
वर्चो मे देहि मन्त्रेण होमः स्यादयुतायुतम् । वयः सुवर्ण इति च नेत्रे सिञ्चेच्च वारिणा ॥ १५ ॥
अक्षीभ्यां त इति जपेन्नेत्रशूलं प्रशाम्यति । ( परस्त्रियं दृष्ट्वेति कामतस्तथा सूर्यमपि । )
वर्चोदा असि वर्चो मे देहीति दशाक्षरो मन्त्रः ।
सर्वेषु स्थलेषु । होमकाले स्वाहान्तः ।
भूपरोपरता येन जायते वपुषातनः । (?) ॥ १६ ॥
सोऽन्नदानं प्रकुर्वीत तथा रुद्रं जपेद्ध्रुवः । अनुक्तेषु च रोगेषु रोगाग्निज्वलितेक्षणम् ॥ १७ ॥
भ्रूभङ्गभीषणं शक्तिं शूलं पाशांकुशौ दधत् । चक्रखड्गगदावज्रशार्ङ्गधनूंषि च ॥ १८ ॥
नासाग्रन्यस्ततर्जन्या तर्जयन्पारिपार्श्वगान् । दंष्ट्रादंष्ट्राधरपुटं दृशाताणिमदेक्षिणम् ॥ १९ ॥
उद्यन्तमभिमुखं धावन्महत्तु पार्श्वयोः कृशम् । विशीर्णनेत्ररोगाणां प्रतिरूपं प्रकल्पयेत् ॥ २० ॥

---

१-२-३ टीकाग्रन्थोऽयं मूले पतित इति प्रतिभाति । ४ सत्यशब्दवान्-त्यपु० । ५ टीकाग्रन्थोऽयं मूले पतित इति प्रतिभाति ।

शान्तं तस्यार्धमर्धं वा हेम्नो निष्कानि तेन तु । तदेव प्रतिमामानं कर्मशान्तिस्यापि स्वतः॥ २१ ॥
येये रोगाः प्रबाधन्ते देहस्थाः सततं तु माम् । गृहाण प्रतिरूपं तु सह रोगैर्द्विजोत्तम ॥ २२ ॥
मन्त्रेणानेन तं दद्यात्पूर्वरीत्या कृतार्चनः ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शूलरोगाध्यायोऽशीतितमः ॥ ८० ॥

श्रीसूर्य उवाच ।

ये पुनः क्रूरकर्माणः पापाः पिशुनचेतसः । ते भवेयुः सदा शीतज्वरवन्तस्तदेनसः ॥ १ ॥
मङ्गलेषु च कार्येषु सततं कोपमाचरेत् । उष्णज्वराभिभूतस्य तत्पापस्यापनुत्तये ॥ २ ॥
जातवेदसमन्त्रेण ब्राह्मणान्भोजयेत्ततः । सुरामांसोपहारायैर्बलिः सर्वत्र शस्यते ॥ ३ ॥
सहस्रकलशस्नानं शतभोजनमेव च ।
रोगगुरुलघुभावेन जपे गुरुलघुभाव इति सर्वत्र द्रष्टव्यम् । सुरादिभिर्बलिरधिकारभेदेन ॥
उष्णज्वरे महेशस्य प्रकुर्यादभिषेचनम् ॥ ४ ॥
रुद्रेण शतरुद्रेण नमकानुवाकैरित्यर्थः । अत्र मृत्युञ्जयस्याप्युपलक्षणम् ॥
देवस्वहरणाच्चैव जायते विविधज्वरः । ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च ॥ ५ ॥
ज्वरे रुद्रजपं कुर्यान्महारुद्रो महाज्वरे । महारुद्रं जपेद्रौद्रे वैष्णवे तु द्वयं जपेत् ॥ ६ ॥
( अथवा तच्छब्देन बुद्धिस्थानि वैष्णवा विष्णुहृदयस्तोत्राणि परामृश्यन्ते । )
आगारदाही ज्वरवान् जायते तत्र निष्कृतिः । नवकुम्भं समानीय मृन्मयं चाव्रणं दृढम् ॥ ७ ॥
लोहितं काष्ण्यरहितं स्थापयेत्तण्डुलोपरि । परिमाणं तण्डुलानां द्रोणपञ्चकमिष्यते ॥ ८ ॥
विशुद्धास्तण्डुला ग्राह्याः श्वेतवस्त्रेण वेष्टयेत् । मधुनाऽप्यथवाज्येन खण्डेनाथ गुडेन वा ॥ ९ ॥
तैलेनाप्यम्भसा वाथ पूजयेच्छक्तितो नरः । श्वेतपुष्पैरर्चयेच्च गन्धपुष्पोपहारकैः ॥ १० ॥
होमश्च पूर्ववत्कार्यः समिदाज्यचरूत्करैः । सुवर्णेन यथाशक्त्या ब्राह्मणाय निवेदयेत् ॥ ११ ॥
तस्मै कृतव्रते वृत्तश्रुतशीलाय सत्कृतम् । मन्त्रेणानेन विधिवत्पूजयित्वा ज्वरी नरः ॥ १२ ॥
महेश देवदेवेश वासुदेव परात्पर । कुम्भेनानेन दत्तेन ज्वरः क्षिप्रं प्रशाम्यतु ॥ १३ ॥
एकान्तरं संनिपातं तृतीयकचतुर्थकौ । पाक्षिकं मासिकं चापि सांवत्सरिकमेव च ॥ १४ ॥
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ज्वराध्याय एकाशीतितमः ॥ ८१ ॥

श्रीसूर्य उवाच ।

कृतघ्नो जायते मर्त्यः कफवान् श्वासकासवान् । उष्णज्वरी च नित्यं हि पित्तरोगसमन्वितः॥१॥
चान्द्रायणत्रयं कुर्यात् पञ्चाशद्विप्रभोजनम् । अग्निं दूताख्यसूक्तेन जपं कुर्याद्विजोत्तमान् ॥ २ ॥
पूजयेद्भोजयेद्यात्तन्मना नान्यमानसः । कृच्छ्राकरणे गोदानं तद्विष्णोः परमं पदम् ॥ ३ ॥
तत्र देयं मधुसर्पिर्हिरण्यवासांसि । अग्निंदूतं वृणीमहे होतारं विश्ववेदसम् । ( अस्य यज्ञस्य सुक्रतुम् । )
कुरुक्षेत्रादिदेशेषु कालेषु ग्रहणादिषु । महादानानि गृह्णीयात्त्रिपिद्धान्यथवा स्वयम् ॥ ४ ॥
अपात्रभूतो दातृभ्यो निषिद्धेभ्यश्च मानवः । सयामाश्वासकासैश्च कुक्षिषु कृमिभिस्तथा ॥ ५ ॥
कण्डूत्या चैव पीड्येत तद्रोगस्य प्रशान्तये । मह्यां यमदेवत्यां दद्याद्वित्तानुसारतः ॥ ६ ॥
( स्वयमपात्रभूतो वेदानित्यकर्मानुष्ठानादिरहित इत्यर्थः । निषिद्धेभ्यो दातृभ्यः । )

१-२-३-४-५ टीकाग्रन्थोऽयं मूले पतित इति प्रतिभाति । खपुस्तके इतोऽप्यधिको दृश्यते ।

काममृत्युस्वरूपा तां महिषीं रक्तभूषणाम् । सालंकारा प्रदास्यामि मम शान्तिं प्रयच्छतु ॥ ७ ॥
पिशुनो नरकस्यान्ते जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसंख्यया ॥ ८ ॥
उदयत्रय जपः कार्यो होमश्चर्वाज्ययोरपि ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके श्वासरोगहराध्यायो द्व्यशीतितम ॥ ८२ ॥

श्रीसूर्य उवाच ।

राजमार्गे नदीतीरे छायायां पुष्टित नरः । मूत्रं पुरीषं वल्मीके पायुं मुञ्चेज्जलेऽपि वा ॥ १ ॥
क्षययुक्व्याधिमाप्नोति ह्येवमाह सदाशिवः । शोफी कृच्छ्रत्रयं कुर्याद्गायत्र्या अयुतं जपम् ॥ २ ॥
तिलहोमसहस्रं च जपेन्मृत्युञ्जयं तथा । विघ्नकर्ता भवेत्क्रूरः शोफी भवति मानवः ॥ ३ ॥
तस्य कर्मविपाकोऽयं व्याधिनाशनमुत्तमम् । क्षौमवस्त्रं समानीय बहुमूल्यं च यद्भवेत् ॥ ४ ॥
मुक्ताफलानि बध्नीयाद्वस्त्रप्रान्ते समन्ततः । कुंकुमेनांकितं सम्यक्कर्पूरागरुधूपितम् ॥ ५ ॥
तण्डुलोपरि संस्थाप्य तण्डुलाश्च स्वशक्तितः । आचार्यायाथ तद्वस्त्रं दद्याच्च सदक्षिणम् ॥ ६ ॥
ऋषीणां प्रवरोऽगस्त्यो लोपामुद्रापतिः प्रभुः । क्षौमवस्त्रप्रदानेन तुष्टो व्याधिं व्यपोहतु ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके शोफहराध्यायस्त्र्यशीतितम ॥ ८३ ॥

श्रीसूर्य उवाच ।

देवद्विजद्रव्यहारी पाण्डुरोगी भवेन्नरः । कृच्छ्रातिकृच्छ्रे कुर्याच्च चान्द्रायणमतन्द्रितः ॥ १ ॥
कुर्यात्कूष्माण्डहोमं च स्वर्णचन्द्रेण वाससी । ब्राह्मणेभ्यो यथाशक्ति पाण्डुरोगस्य शान्तये ॥२॥
[ चन्द्रेण राजतेनेत्यर्थः ]
अग्निष्टोमादिकर्माणि प्रारभ्य न समापयेत् । स पाण्डुरोगी भवति शिरोवेदनवांस्तथा ॥ ३ ॥
अन्त्यजागमने मर्त्यः पाण्डुरोगी प्रजायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पाण्डुरोगहराध्यायश्चतुरशीतितम ॥ ८४ ॥

श्रीसूर्य उवाच ।

छिन्नान्यन्त्राणि जायन्ते वैश्यहन्तुरनन्तरं परम् । ज्वरो शीतोष्णकौ दाहस्तैलपाने तन्निवर्तते ॥ १ ॥
कृच्छ्रातिकृच्छ्रं कुर्याच्च शतब्राह्मणभोजनम् । उदयत्र्यचाजपश्च स्यादयुतत्रयसंख्यया ॥ २ ॥
अन्तसूक्तेन वर्चाज्यं जुहुयाच्छतमष्ट च । अथवा महिषीं दद्यात्पतिरूपेण काञ्चनीम् ॥ ३ ॥
यज्ञविघ्नकरो मर्त्यो जायते चात्र वृद्धिमान् । कुर्यात्स्वर्णमयीं मूर्तिं शुभां नारायणस्य तु ॥ ४ ॥
व्यावहारिकनिष्काभ्यामेकेनापि तदर्धतः । नारायणश्चतुर्बाहुः शंख चक्र तयोत्तरे ॥ ५ ॥
दक्षिणे तु गदा पद्म नीरजीमूतसन्निभः । वामे श्रीवत्सकौस्तुभा पुष्टिः पद्मकरा धरा ॥ ६ ॥
प्रक्षाल्य पञ्चगव्येन स्थापयेत्कुंकुमोपरि । श्वेतवस्त्रेण संवेष्ट्य गन्धमाल्यैः समर्चयेत् ॥ ७ ॥
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः । सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासु निष्ठितः ॥ ८ ॥
होमं च कारयेत्तत्र ह्याग्नेय्यां दिशि शास्त्रतः । समिदाज्यतिलैश्चैव जुहुयान्मूलमन्त्रतः ॥ ९ ॥
रोगी तथार्चयेद्देवं नारायणमनामयम् । मूलमन्त्रेण विधिवन्नैवेद्यं चरुरिष्यते ॥ १० ॥
नमोऽनन्ताय सोङ्कारं मूलमन्त्रः प्रकीर्तितः। ततस्ता प्रतिमां दद्यात्प्राङ्मुखाय ह्युदङ्मुखः॥११॥

१ अपान्ते–राउ० ।

नारायण जगन्नाथ शंखचक्रगदाधर। पूर्वजन्मनि यज्ञादौ विघ्नं यद्वै कृतं मम ॥ १२ ॥
अत्र वृद्धिमहारोगं दानेनानेन तोषितः। चक्रहस्त गदापाणे शमयाशु जगत्पते ॥ १३ ॥
विप्राणां भोजनं दद्यात्स्नात्वा भुञ्जीत बन्धुभिः। एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके वृद्ध्यध्यायः पंचाशीतितमः ॥ ८५ ॥

---

श्रीसूर्य उवाच।

जात्युत्तमस्त्रीगमनाज्जायते मस्तकव्रणी। तत्पातकविशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ॥ १ ॥
कर्मकाले कुक्कुटं च खरादीन्यपि ईक्षते। स नासिकाव्रणी च स्यादार्द्रनेत्रश्च जायते ॥ २ ॥
[ तत्र स्वर्णहरिणीदानं धेनुदानं वा। ]
स्वजातिजायागमने जायते हृदयव्रणी। तत्पातकविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥ ३ ॥
[ स्वजातियागमनमित्यस्यार्थः ब्राह्मणस्य ब्राह्मणी एवं क्षत्रियादेरपि क्षत्रियादिः, स वंशपुरुषस्तस्य भार्येत्यर्थः। ]
जलाग्निबन्धनप्रायोनिमित्तेन म्रियेत यः ॥ ४ ॥
भवेदुरसि दुष्टं हि व्रणं तस्यापि निष्कृतिः। स दद्याद्गोद्वयं तस्य पश्चाद्द्विप्रभोजनम् ॥ ५ ॥
दक्षिणां च यथाशक्ति मुक्तो भवति रोगतः।
[ अनधिकारिणाऽविहितमार्गेण जलादिमरणे। ] पितृष्वसाभिगमने वामाङ्के तु व्रणी भवेत्।
तेनापि निष्कृतिः कार्या अन्नादानेन यत्नतः ॥ ६ ॥
मातृष्वसाभिगमने वामाङ्के तु व्रणी भवेत्। तेनापि निष्कृतिः कार्या सम्यग्दासीप्रदानतः ॥ ७ ॥
[ शक्त्यनुसारेणालंकृत्य दद्यादित्यर्थः। ]
अदण्ड्यांस्तर्जयेद्यो वै स वा गुल्मव्रणी भवेत्। जपहोमादिकं कार्यं धेनुदानं प्रयत्नतः ॥ ८ ॥
हीनजातिस्त्रीगमनाज्जायते चरणव्रणी। तत्पातकविशुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥ ९ ॥
मृते भर्तरि या नारी ब्रह्मचर्याभिघातिनी। सा भवेद्व्रणदोषेण संभोक्तुं क्षमते न च ॥ १० ॥
संभोगान्नूतनं तीव्रवेदना पुरुषस्य च। दद्यान्नीलवृषांस्त्रीन्वै मधुसर्पिस्तिलानपि ॥ ११ ॥
[ चशब्दात्स्त्रीपुंसयोरपि तीव्रवेदना भवतीति। ]
लोहितो यः सवर्णेन मुखे पुच्छे च पाण्डुरः ॥ १२ ॥
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते। योगं हित्वा द्विजो मोहाद्विमुक्तो धर्मनिश्चये॥१३॥
भगन्दरो भवेत्तस्य ह्यधर्मं वदतो मुखे। आर्यभार्याभिगमने भगंदरयुतो भवेत् ॥ १४ ॥
[ अत्र प्रतिकृतिमाह। ]
माणिक्यं पद्मरागं च वज्रवैडूर्यमेव च। गोमेदं च मरकतं पुष्परागं च मौक्तिकम् ॥ १५ ॥
हरितं च नवैतानि स्वर्णपात्रोपरि न्यसेत्। अथवा राजते ताम्रे गव्याज्येन प्रपूरयेत् ॥ १६ ॥
स्वलिङ्गैश्चैव मन्त्रैश्च होमः कार्यस्तु पूर्ववत्। ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ॥ १७ ॥
आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः। विनाशयन्तु मे दोषान्क्षिप्रमेव भगंदरम् ॥ १८ ॥
अनेन कर्मणा नूनं यथाविद्विहितेन तु। ततो नैरुज्यमाप्नोति निःसंदिग्धं भगंदरी ॥ १९ ॥

---

१-६ टीकाग्रन्थोऽयम्।

[ हरितं हरितरत्नम् । यस्मिन् स्वर्णादिपात्रे च रत्नानि स्थापितानि तत्पात्रं गव्येनाज्येन पूरयित्वेति ग्रहणम् । ]

स्वगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी । तेनापि निष्कृतिः कार्या मेषीदानेन यत्नतः ॥ २० ॥

[ तत्र रजतमयो मेषः स्वर्णखुरादि च । ]

श्रीसूर्य उवाच ।

अतिमानादतिक्रोधादतिस्नेहाद्भयादपि । यो धर्मनिश्चयज्ञानमन्यथा कुरुते नरः ॥ २१ ॥

स पूयशोणितस्रद्व्रणी तच्छान्तयेऽस्य तु । अतिकृच्छ्रं प्रकुर्याच्च तिलमस्थमदो भवेत् ॥ २२ ॥

होमश्चरुघृताभ्यां च तिलैरष्टोत्तरं शतम् । सहस्रं वा व्याहृतिभिः कुर्याद्ब्राह्मणभोजनम् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके व्रणाद्यध्याय षडशीतितम ॥ ८६ ॥

श्रीसूर्य उवाच ।

परेषा मर्मभेदेन मुष्टिघातेन चैव हि । असत्यवचनाच्चैव प्लीहश्लीपदयुग् भवेत् ॥ १ ॥

नाडीव्रणश्च जायेत तद्रोगस्यापनुत्तये । चान्द्रायणं चातिकृच्छ्रं वातिचान्द्रायणं चरेत् ॥ २ ॥

कूष्माण्डहोमः कर्तव्यः सोमरुद्रजपस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके प्लीहाद्यध्याय सप्ताशीतितम ॥ ८७ ॥

श्रीसूर्य उवाच ।

पुण्यादिदं तथा पापाल्लोभी पापरतः कश्चित् । धूर्तः सकन्योऽतिशठश्चिन्तादुःखसमन्वितः ॥ १ ॥

ब्राह्मण्या वीर्यदानात्प्राक् तद्धान्यमृतपुत्रकः । लक्ष्मैतदत्र लग्नाच्च सोमः पापान्वितो रिपौ ॥ २ ॥

गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः । स्त्रीसहायकृतात्पापात्पूर्वं गर्भसमुद्भवात् ॥ ३ ॥

अत्र जन्मनि सा नारी ज्येष्ठा सन्ततिवर्जिता । लक्षितो लक्षणैश्चोक्तैः पृच्छकश्चात्र जन्मनि॥४॥

वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधिनीम् । ब्राह्मण्याः प्रतिमा कार्या पलैर्विंशमितैः शुभा ॥५॥

हिरण्मयी सगर्भा च पत्रे लेख्या प्रयत्नतः । तदर्धार्धमिता वापि विप्र वित्तानुसारतः ॥ ६ ॥

संपूज्य गन्धपुष्पाद्यैः सा देया मन्त्रपूर्विका । सुवर्णत्रमितं दद्याच्छिन्न पापप्रणाशनम् ॥ ७ ॥

राजतं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्र्यष्टसहस्रं च होमयेत्तद्दशांशतः ॥ ८ ॥

ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते । य एवं कुरुते सूत पूर्वपापविशोधनम् ॥ ९ ॥

तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि । नैवं करोति यो मोहात्प्रायश्चित्तं त्रिधा मतम्१०॥

न जीवन्ति सुतास्तस्य जीविते नात्र संशयः। प्रायश्चित्ते कृते ह्यायुः षडशीतिमिताब्दकम्॥११॥

प्रायश्चित्तेऽकृतेऽरिष्टं वर्षे षष्टिमिते ध्रुवम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पुत्रजीवनाद्यध्यायोऽष्टाशीतितम ॥ ८८ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्ग्रामाध्यक्षो विराटजः । दत्तानि तेन दानानि गोभूम्यश्वादिकानि च ॥ १ ॥

ब्राह्मणेषु गृहस्थेषु सत्पात्रेषु विशेषतः । अयान्यद्ग्रामपस्यापि क्षत्रियस्य महात्मनः ॥ २ ॥

एकपुत्रस्य पुत्रो वै भुजमूले पुराऽनघ । घातितस्तेन खड्गेन निशायां चौर्यकर्मणा ॥ ३ ॥

समतस्तेन दुःखेन भाविनोऽर्थस्य गौरवात् । तन्माता पुत्रदुःखेन मृता दुःखसमीरिता ॥ ४ ॥

१-२-टीकास्त्य । ३ तद्धान्यमृतपुत्रक -खपु० ।

वरभावरतेनैव कृतं कर्मातिदारुणम्। एवं बहुतिथे काले गतोऽसौ यमशासनम् ॥ ५ ॥
भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गफलं तथा। पूर्वपुण्यप्रभावेण स जातो बाहुजेऽधुना ॥ ६ ॥
शतद्रुनिकटे देशे मेषेऽर्के शनिसंयुते। पितृमातृसुखैर्हीनो भृत्यस्त्रीबन्धुसंयुतः ॥ ७ ॥
पात्रदानादिदं सर्वं फलं पापफलं शृणु। पूर्वं बालवधात्पापादिह जन्मनि चाण्डज ॥ ८ ॥
द्विवेदमितवर्षान्ते जातपुत्रविनाशकः। तथा भ्रातृबाहुजवधाद्भ्रातृबाहुविवर्जितः ॥ ९ ॥
लक्षणैर्लक्षयेदेतैः पृच्छकं चात्र जन्मनि। निष्कृतिं तस्य वक्ष्यामि पूर्वपापविशोधिनीम् ॥ १० ॥
पुत्रवृद्धिकरीं धन्यां सर्वारिष्टविनाशिनीम्। पलपञ्चमितं कुर्याद्बाहुजं च हिरण्मयम् ॥ ११ ॥
तन्मातरं च सौवर्णीं सुवर्णकमितां शुभाम्। लक्ष्मीनारायणं तद्वद्राजतं त्रिपलात्मकम् ॥ १२ ॥
तन्मितां राजतीं गौरीं दद्यान्मन्त्रैः प्रपूजिताम्। गायत्र्यष्टसहस्रं तु जपेदष्टाक्षरं तथा ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्तिविधानतः। लक्षरुद्रं त्रिगुणितं कुर्याद्वा विधिपूर्वकम् ॥ १४ ॥
यो न कुर्याद्विधानेकं त्रिष्वप्येतेषु निश्चितम्। न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ॥ १५ ॥
वेदवेदमितेऽरिष्टं वर्षे चैव प्रकीर्तितम्। यः कुर्याद्विधिवत्सूत प्रायश्चित्तं प्रयत्नतः ॥ १६ ॥
तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि निश्चयात्। एकाशीतिमितायुः स्याच्चैत्रादौ घटमे मृतिः ॥ १७ ॥
जन्मादिमरणान्तं हि सर्वं ते कथितं मया ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोननवतितमः ॥ ८९ ॥

## श्रीसूर्य उवाच।

कीरदेशे समुत्पन्नः कश्चित्क्षात्रे कुले सुधीः। विप्रोत्सङ्गगतस्तत्र प्रयागे मकरे वसन् ॥ १ ॥
कृतवान् विधिवत्स्नानं दानं स्वल्पं स्वशक्तितः। दैवयोगाद्गृहं प्राप्य कृतवान्कर्म दारुणम् ॥ २ ॥
कामलोभेन सततं शूद्री गमनकार्यसौ। स्त्रियां तु हास्ययुक्तेन पापमाचरितं तथा ॥ ३ ॥
विविधैरौषधैस्तस्या गर्भपातः कृतः पुरा। एवं सर्वैर्मिलित्वा तु पातनं बहुधा कृतम् ॥ ४ ॥
ततो बहुतिथे काले प्राप्तस्ते यमशासनम्। भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥ ५ ॥
तीर्थराजप्रभावेण स जातो ब्राह्मणोऽधुना। सौम्ये शनौ सिंहगते सूर्ये कन्यागते कुजे ॥ ६ ॥
मृगे हीरावतीतीरे नात्युच्चो न लघुर्गुणी। श्लिष्टवाक् स्वल्पधर्माढ्यः पितृमातृविवर्जितः ॥ ७ ॥
सहोदरधनैर्हीनो जातः पुत्रविनाशकः। परदाराभिगमनाद्गर्भपातनदोषजात् ॥ ८ ॥
पापात्पूर्वकृतात्सूत लक्षणैर्लक्षयेदिह। स्त्रीसाहाय्याच्चथा सूत प्राप्यपापात्सुपार्जितात् ॥ ९ ॥
तेनैका तत्र पत्नी या तयोः पुत्रशुचान्विता। तयैका बहुपापाच्च भ्रातुः पत्न्यग्रजस्य च ॥ १० ॥
पुत्रभर्तृविहीनात्र पूर्वपापात्प्रदृश्यते। वक्ष्यामि निष्कृतिं सूत पूर्वपापविशोधिनीम् ॥ ११ ॥
सार्धवेदमितैः स्वर्णैः पद्मं कुर्याद्धिरण्मयम्। सनालमष्टपत्राढ्यं शुभं तद्ब्रह्मदैवतम् ॥ १२ ॥
पूरयेत्पारदेनैव तस्य नालं प्रयत्नतः। दद्याद्वेदविदे सूत विधिना संपठन्सुधीः ॥ १३ ॥
ब्रह्मयोनिमिदं पद्ममाद्यं स्थानं च शाश्वतम्। गर्भधारणपापोत्थदोषनाशकरं परम् ॥ १४ ॥
ददेऽहं विप्रमुख्याय पूर्वपापविशुद्धये। इत्युच्चार्य नरो दद्यात्तस्माद्दोषात्प्रमुच्यते ॥ १५ ॥
राजतं च ततो दद्याद्ब्रह्माणं तन्मितं सुत। रुद्राणामथवा लक्षं पूजयेद्विधिनाऽण्डज ॥ १६ ॥
गायत्रीं च यथाशक्त्या जपेच्चैवाघमर्षणम्। नैवं विधानं यः कुर्याल्लोभान्मोहाद्विदोषतः ॥ १७ ॥

१ शूद्रकुले—ख पु०। २ पुत्रहीना शुचान्विता। ख पु०। ३ पापरसेनैव। ख पु०।

[ हरितं हरितरत्नम् । यस्मिन् स्वर्णादिपात्रे च रत्नानि स्थापितानि तत्पात्रं गव्येनाज्येन पूरयित्वेति ग्रहणम् । ]

स्वगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी । तेनापि निष्कृतिः कार्या मेषदानेन यत्नतः ॥ २० ॥

[ तत्र रजतमयो मेषः स्वर्णखुरादि च । ]

श्रीसूर्य उवाच ।

अतिमानादतिक्रोधादतिस्नेहाद्भयादपि । यो धर्मनिश्चयज्ञानमन्यथा कुरुते नरः ॥ २१ ॥
स पूयशोणितग्रहणी तच्छान्तयेऽथ तु । अतिकृच्छ्रं प्रकुर्यात्तु तिलप्रस्थप्रदो भवेत् ॥ २२ ॥
होमश्चरुघृताभ्यां च तिलैरष्टोत्तरं शतम् । सहस्रं वा व्याहृतिभिः कुर्याद्ब्राह्मणभोजनम् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके षण्णवत्यध्याय षडशीतितम ॥ ८६ ॥

श्रीसूर्य उवाच ।

परेषां मर्मभेदेन मुष्टिघातेन चैव हि । असत्यवचनाच्चैव प्लीहश्लीपदयुग् भवेत् ॥ १ ॥
नाडीव्रणश्च जायेत तद्रोगस्यापनुत्तये । चान्द्रायणं चातिकृच्छ्रं यतिचान्द्रायणं चरेत् ॥ २ ॥
कूष्माण्डहोमः कर्तव्यः सोमरुद्रजपस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके प्लीहाद्यध्याय सप्ताशीतितम ॥ ८७ ॥

श्रीसूर्य उवाच ।

पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । धूर्तः सकन्योऽतिशठश्चिन्तादुःखसमन्वितः ॥ १ ॥
ब्राह्मण्या वीर्यदानात्प्राक् तद्धान्यमृतपुत्रकः । लक्ष्मैतदन्न लग्नाच्च सोपः पापान्वितो रिपौ ॥ २ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः । स्त्रीसहायकृतात्पापात्पूर्वे मर्नसमुद्भवात् ॥ ३ ॥
अत्र जन्मनि सा नारी ज्येष्ठा सन्ततिवर्जिता । लक्षितो लक्षणैश्चोक्तैः पृच्छकस्यात्र जन्मनि॥४॥
वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधिनीम् । ब्राह्मण्याः प्रतिमा कार्या पलवेदमिता शुभा ॥५॥
हिरण्मयी सगर्भा च पत्रे लेख्या प्रयत्नतः । तदर्धार्धमिता वापि रिपु वित्तानुसारतः ॥ ६ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया मन्त्रपूर्विका । सुवर्णकृमितं दद्याच्छिन्न पापप्रणाशनम् ॥ ७ ॥
राजतं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्र्यष्टसहस्रं च होमयेत्तद्दशांशतः ॥ ८ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते । य एवं कुरुते सूत पूर्वपापविशोधनम् ॥ ९ ॥
तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि । नैवं करोति यो मोहात्प्रायश्चित्तं क्रिया मतम्१०॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः। प्रायश्चित्ते कृते ह्यायुः षडशीतिमिताब्दकम्॥११॥
प्रायश्चित्तेऽकृतेऽरिष्टं वर्षे षष्टिमिते ध्रुवम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके पुत्रजीवनाध्यायोऽष्टाशीतितम ॥ ८८ ॥

श्रीसूर्य उवाच ।

प्रभूव बाहुजः कश्चिद्ग्रामाध्यक्षो विराटजः । दत्तानि तेन दानानि गोभूम्यश्वादिकानि च ॥ १ ॥
ब्राह्मणेषु गृहस्थेषु सत्पात्रेषु विशेषतः । अथान्यद्ग्रामपस्यापि क्षत्रियस्य महात्मनः ॥ २ ॥
एकपुत्रस्य पुत्रो वै भुजङ्गे पुत्रऽवरु । वाणिज्यसेन सङ्गेन निशायां चार्थकर्मणा ॥ ३ ॥
समस्तसेन दुःखेन भाविनोऽर्थस्य गौरवात् । तन्माता पुत्रदुःखेन मृता दुःखप्रपीडिता ॥ ४ ॥

१—२—टीकामध्य । ३ तद्धान्यमृतपुत्रक —ख० ।

वत्सभावरतेनैव कृतं कर्मातिदारुणम् । एवं बहुतिथे काले गतोऽसौ यमशासनम् ॥ ५ ॥
भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गफलं तथा । पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना ॥ ६ ॥
शतद्रुनिकटे देशे मेषेर्के शनिसंयुते । पितृमातृसुखैर्हीनो भृत्यस्त्रीबन्धुसंयुतः ॥ ७ ॥
पात्रदानादिदं सर्वं फलं पापफलं शृणु । पूर्वं बालवधात्पापादिह जन्मनि चाण्डज ॥ ८ ॥
द्विवेदमितवर्षान्ते जातपुत्रविनाशकः । तथा प्राग्बाहुजवधात्रमबाहुविवर्जितः ॥ ९ ॥
लक्षणैर्लक्षयेदेतैः पृच्छकं चात्र जन्मनि । निष्कृतिं तस्य वक्ष्यामि पूर्वपापविशोधिनीम् ॥ १० ॥
पुत्रवृद्धिकरीं धर्म्यां सर्वारिष्टविनाशिनीम् । पलपञ्चमितं कुर्याद्बाहुजं च हिरण्मयम् ॥ ११ ॥
तन्मातरं च सौवर्णीं सुवर्णकमितां शुभाम् । लक्ष्मीनारायणं तद्वद्राजतं त्रिपलात्मकम् ॥ १२ ॥
तन्मितां राजतीं गौरीं दद्यान्मन्त्रैः प्रपूजिताम् । गायत्र्यष्टसहस्रं तु जपेदष्टाक्षरं तथा ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्तिविधानतः । लक्षरुद्रं त्रिगुणितं कुर्याद्वा विधिपूर्वकम् ॥ १४ ॥
यो न कुर्याद्विधानेकं त्रिष्वप्येतेषु निश्चितम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः॥१५॥
वेदवेदमितेऽरिष्टं वर्षं चैव प्रकीर्तितम् । यः कुर्याद्विधिवत्सूत प्रायश्चित्तं प्रयत्नतः ॥ १६ ॥
तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि निश्चयात् । एकाशीतिमितायुः स्याच्चित्रर्क्षे घटभे मृतिः॥१७॥
जन्मादिमरणान्तं हि सर्वं ते कथितं मया ॥ १८ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्याय एकोननवतितमः ॥ ८९ ॥

---

## श्रीसूर्य उवाच ।

कीरदेशे समुत्पन्नः कश्चित्क्षात्रे कुले सुधीः । विप्रोत्सङ्गगतस्तत्र प्रयागे मकरे वसन् ॥ १ ॥
कृतवान्न विधिवत्स्नानं दानं स्वल्पं स्वशक्तितः । दैवयोगाद्गृहं प्राप्य कृतवान्कर्म दारुणम् ॥ २॥
कामलोभेन सततं शूद्री गमनकार्यसौ । स्त्रीभ्यां तु हारयुक्तेन पापमाचरितं तथा ॥ ३ ॥
विविधैरौषधैस्तस्या गर्भपातः कृतः पुरा । एवं सर्वैर्मिलित्वा तु पातनं बहुधा कृतम् ॥ ४ ॥
ततो बहुतिथे काले प्राप्तास्ते यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥ ५ ॥
तीर्थराजप्रभावेण स जातो ब्राह्मणोऽधुना । सेज्ये शनौ सिंहगते सूर्ये कन्यागते कुजे ॥ ६ ॥
मृगे हैरावतीतीरे नात्युच्चो न लघुर्घृणी । श्लिष्टवाक् स्वल्पधर्माढ्यः पितृमातृविवर्जितः॥ ७ ॥
सहोदरधनैर्हीनो जातः पुत्रविनाशकः । परदाराभिगमनाद्गर्भपातनदोषजात् ॥ ८ ॥
पापात्पूर्वकृतात्सूत लक्षणैर्लक्षयेदिह । स्त्रीसाहाय्यात्तथा सूत प्राक्पापात्समुपार्जितात् ॥ ९ ॥
तेनैका तत्र पत्नी या तयोः पुत्रशुचान्विता । तथैका बहुपापाढ्यात्रातुः पल्यप्रजस्य च ॥ १० ॥
पुत्रभर्तृविहीनात्र पूर्वपापात्प्रदृश्यते । वक्ष्यामि निष्कृतिं सूत पूर्वपापविशोधिनीम् ॥ ११ ॥
सार्धवेदमितैः स्वर्णैः पद्मं कुर्याद्धिरण्मयम् । सनालमष्टपत्राढ्यं शुभं तद्ब्रह्मदैवतम् ॥ १२ ॥
पूरयेत्पारदेनैव तस्य नालं प्रयत्नतः । दद्याद्वेदविदे सूत विधिना संपठन्सुधीः ॥ १३ ॥
ब्रह्मयोनिमिदं पद्ममाद्यं स्थानं च शाश्वतम् । गर्भवारणपापोत्थदोषनाशकरं परम् ॥ १४ ॥
ददेऽहं विप्रमुख्याय पूर्वपापविशुद्धये । इत्युच्चार्य नरो दद्यात्तस्माद्दोषात्प्रमुच्यते ॥ १५ ॥
राजतं च ततो दद्याद्ब्रह्माणं तन्मितं सुत । रुद्राणामयवा लक्षं पूजयेद्विधिनाऽण्डज ॥ १६ ॥
गायत्रीं च यथाशक्त्या जपेच्चैवाघमर्षणम् । नैवं विधानं यः कुर्याल्लोभान्मोहाद्विशेषतः ॥ १७ ॥

---

१ शूद्रकुले—खपु० । २ पुत्रहीना शुचान्विता । खपु० । ३ पापसंभेव । खपु० ।

न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । श्रुत्वैनं विधिवत्कुर्याद्विधानैकं समाहितः ॥१८॥
न तस्य पुत्रमरणं भविष्यति ममाज्ञया । धनपुत्रान्वितो मध्ये ह्यायुरष्टादिसंमितम ॥ १९ ॥
रिष्टं पष्टिमितेऽब्दे तु तस्य चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवतितम ॥ ९० ॥

श्रीसूर्य उवाच ।

आसीद्राजकुलोत्पन्नः पूर्वजन्मनि यो मुने । धनधान्यसमायुक्तो रुद्रभक्तिपरोऽण्डज ॥ १ ॥
दत्तानि तत्र दानानि पर्वस्वपि च शक्तितः । अथो भ्रातृबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
तद्गृहे स्थापितं द्रव्यं पुनर्दत्तं न तेन च । सहायैकयुतेनैव ब्रह्मस्वं भक्षितं पुरा ॥ ३ ॥
स च कालवशं प्राप्य भुक्त्वा पापफलं महत् । पुण्यात्पुण्यफलं तत्र स शूद्रो जाङ्गलेऽधुना ॥ ४ ॥
देशे रामह्रदाख्ये तत्त्रयोजनसम्मिते । कृष्णस्तनौ सुते यस्मात्क्रूराः पश्यन्ति पापिनः ॥ ५ ॥
ह्रस्वो मध्यधनाढ्यस्तु श्रेष्ठोऽमितसुखान्वितः । स्त्रीभृत्यभ्रातृसंयुक्तो मध्यान्ते सुखभागिह॥६॥
ब्रह्मस्वहरणात्पूर्वं चात्र सन्ततिवर्जितः । दाने स्वल्पमतिर्धूर्तः पापात्सर्वमिदं सुत ॥ ७ ॥
अथो भ्रातृसहायात्तु ब्राह्मणस्वं हृतं पुरा । तेन तत्सहजो ज्येष्ठः पुत्रहीनोऽत्र जन्मनि ॥ ८ ॥
लक्ष्योऽत्र लक्षणैरेभिः पृच्छको विनतासुत । तन्निष्कृतिं प्रवक्ष्यामि पूर्वपापविशोधिनीम् ॥ ९ ॥
लक्ष्मी च राजती कार्या पलैर्दशमितैः शुभा । सर्वावयवसंयुक्ता पीतवस्त्रविभूषिता ॥ १० ॥
ब्राह्मणाय च सा देया मन्त्रेणानेन धीमता ।"लक्ष्मि त्वं सर्वभूतानां कामदा मोक्षदायिनी॥११॥
पूर्वजन्मार्जितात्पापान्मां रक्ष शरणागतम् ।" इत्युच्चार्य नरो दद्याद्विप्रद्रव्याघनाशनम् ॥ १२ ॥
तथा पञ्चपलैः सोमो राजतश्चोक्तरूपवत् । पलद्वयमितैस्तद्वद्धनाधिपदिनेश्वरौ ॥ १३ ॥
पूजयित्वा तु गन्धाद्यैर्दद्यात्सर्वान्दिवाकरः । जपेत्पञ्चसहस्रं तु गायत्र्या होमयेत्तथा ॥ १४ ॥
ब्राह्मणान्भोजयेच्छक्त्या शिवभक्तान्विधानतः । अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत्॥१५॥
तस्यात्र पुत्रयुगलं कन्यैका च भविष्यति । न करोति च यो मोहाद्विधिवत्पापशोधनम् ॥ १६ ॥
पञ्चपञ्चमिताब्दान्तं न च पुत्रसुखं त्विह । आयुश्चात्र तदब्दान्तं प्रायश्चित्तेऽकृतेऽधुना ॥ १७ ॥
प्रायश्चित्ते कृते चायुरधिका सप्ततिः समाः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकनवतितम ॥ ९१ ॥

श्रीसूर्य उवाच ।

अभूद्वैश्यकुलोत्पन्नो धनधान्यसमन्वितः । सरस्वत्याश्च निकटे विष्णुधर्मरतः कश्चित् ॥ १ ॥
दत्तानि बहुदानानि ब्राह्मणेषु च शक्तितः । सर्वाण्यपि च तेनैव श्रद्धाहीनेन चेतसा ॥ २ ॥
दैवाद्रजां द्विजस्याऽथ भार्यां वै गर्भसंयुताम् । वैरिभावाद्धातयित्वा भुक्त्वा तेन विजानता ॥ ३ ॥
तत्सुतश्च तया सूत पापमाचरितं[1] त्विदम् । धर्माधर्मफलं भुक्त्वा गत्वा तत्र यमालयम् ॥ ४ ॥
पूर्वपुण्यवशात्सूत ▪ जातः पादजोऽधुना । सरस्वत्या याम्यभागे विंशद्योजनसंमिते ॥ ५ ॥
स रक्तकृष्ण क्षीणाङ्गो विष्णुभक्तिसमन्वितः । पित्राधिकोऽस्वल्पधनी स्त्रीभ्रातृसुखसंयुतः॥६॥
पुण्यादिदं तथा पापाज्जातः[2] पुत्रविनाशकृत् । स्त्रीसाहाय्यागतो यस्मात्सा स्त्री पुत्रप्रपीडिता ॥७॥
तस्य चिह्नमिदं ज्ञेयं मेषः पञ्चमभावगः । पापयुक्तस्तथा ह्यष्टे राहुरेकादशे स्थितः ॥ ८ ॥

१ लेपनं विधिवत् खपु० । २ पापम.—खपु० । ३ पित्राधिको—खपु० ।

लक्षणैर्लक्षितं मौक्तिकैरेहि गरुडाग्रज। (निष्कृतिं वद मे स्वामिन्सर्वारिष्टनिषूदनीम् ॥ ९ ॥
इह पुत्रकरीं धन्यां लोकानां हितकाम्यया)। निष्कृतिं तस्य वक्ष्यामि येन पापक्षयो भवेत्॥१०॥
पलैर्द्वादशभिः कार्या मेषी गर्भसमन्विता।

दानमन्त्रः।

"ब्राह्मणस्य ददाम्यस्मान्मेषीं रौप्यमयीं शुभाम्। देवो वैश्वानरो यस्मात्पशुघातात्प्रमुञ्चतु"११॥
यथा वैश्वानरो देवो देयो वाधर्मप्रमाणतः ॥ १२ ॥

## जपेद्धौताशनम्।

तण्डुलाज्ययवान्हुत्वा तिलान्संमिश्र्य यत्नतः।ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् १३
य एवं कुरुते सूत पूर्वपापविशोधनम्। तस्य वंशप्रवृद्धिः स्यादकृते वंशनाशनम् ॥ १४ ॥
मेषीविद्याण्डजश्रेष्ठ नात्र कार्या विचारणा। पुत्राणां सुखवृद्धिः स्यादायुरुद्धात्रिसप्ततिः ॥ १५ ॥
प्रायश्चित्तेऽकृतेऽरिष्टं पञ्चदशमितकेऽब्दके। यदन्तरगतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विनवतितमः ॥ ९२ ॥

---

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु चास्य विचेष्टितम्। कश्चिद्विप्रोऽभवत्पूर्वं वङ्गदेशेऽपि ग्रामपः ॥ १ ॥
धर्मशास्त्रक्रियाहीनः पित्रोः सुखसमन्वितः। दत्तानि तेन दानानि ब्राह्मणेषु च शक्तितः ॥ २ ॥
सत्पात्रेषु गृहस्थेषु श्रद्धापूतेन चेतसा। मृगयायां गतो विप्रः कदाचिद्दैवयोगतः ॥ ३ ॥
घोरकर्म कृतं तेन प्रारम्भे यौवनस्य च। लुण्ठितो ब्राह्मणस्तत्र महारौद्रेःखितो भृशम् ॥ ४ ॥
हतोऽप्यायुर्बलेनैव न स मृत्युवशं गतः। ब्रह्मस्वमिति तज्ज्ञात्वा न भुक्तं केनचिद्गृहे ॥ ५ ॥
तेनैव भक्षितं सूत येन विप्रः प्रपीडितः। स गत्वा यमलोकं तु भुक्त्वा तु यमशासनम् ॥ ६ ॥
पात्रदानवशात्सूत स जातः क्षत्रियोऽधुना। देशे विपाशिके लग्ने चापसंज्ञेऽस्तगे रवौ ॥ ७ ॥
मेषगे राहुयुक्तेऽथ सोमर्क्षे विधुसंयुते। स गौरो दर्शनीयाक्षः ससत्त्वः स्वल्पवित्तभाक् ॥ ८ ॥
धर्मे चाल्पमतिर्मानी मातृपितृसमन्वितः। दानादिकं गृहस्थेषु फलं पापफलं शृणु ॥ ९ ॥
यत्रयत्र कृता घाताः प्राग्भवे ब्राह्मणस्य च। इह जन्मनि तत्रास्ति बाल्ये कुष्ठगदान्वितः ॥१०॥
अथो स्त्रीपुत्रहीनोऽत्र जायते गरुडाग्रज। यौवनेऽपि च वार्धक्ये तस्येदं कर्मणः फलम् ॥ ११ ॥
एभिश्च लक्षणैः सूत लक्षणीयोऽत्र पृच्छकः। निष्कृतिं परमां सूत वक्ष्यामि शृणु तत्त्वतः॥१२॥
गायत्रीं विधिना जप्त्वा कोटिं शुद्धिमवाप्नुयात्। प्रयागे निवसन्धीरः काश्यां वा कुरुजाङ्गले॥१३॥
अथवाष्टसहस्राणि जप्त्वा कुर्यादिमं विधिम्। हिरण्मयौ सोमविधौ कार्यौ स्वर्णाष्टकाद्गुभौ ॥१४॥
पत्रेऽर्धेनैव वा लेख्यौ सर्वलक्षणसंयुतौ। देयौ द्विजाय विधिवत्पूजयित्वाऽथ यत्नतः ॥ १५ ॥
प्रायश्चित्ते कृते श्वेतकुष्ठहानिः प्रजायते। स्त्रीपुत्रसुखमत्रैव भवत्येव न संशयः ॥ १६ ॥
प्रायश्चित्तं न कुर्याच्चेद्वृद्धेरोगविवर्धनम्। न पुत्रसुखमाप्नोति स जीवति कदाचन ॥ १७ ॥
रिष्टं द्वात्रिंशदब्दे तु जीवनं ह्यष्टसप्ततिः। आनन्त्यात्खलु जीवानां विस्तारो नोदितो मया ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिनवतितमः ॥ ९३ ॥

---

१ अरणगवाक्यमिदं प्रतिभाति। २ क्षात्रय ख-पु०। ३ सूत-ख-पु०।

श्रीसूर्य उवाच ।

पृच्छको विनतासूनो दानधर्मरतोऽभवत् । वैश्यः पूर्वभवे सूत व्यापारकुशलः सदा ॥ १ ॥
दानयज्ञरतो नित्यं ब्राह्मणातिथिपूजकः । तद्गृहे धान्यराशिं तु भक्षयन्ती क्षुधार्तिनी ॥ २ ॥
आसन्नप्रसवा सूत सुरभिः कालमोहिता । भृशं तेन हता कुशा लोभोपहतचेतसा ॥ ३ ॥
बालवत्सो मृतस्तत्र गर्भस्थश्चातिताडनात् । तद्दुःखेन मृता सा तु धेनुराक्रन्दती पुरा ॥ ४ ॥
एवं निवसतस्तत्र मृतः स यमशासनम् । प्राप्य स्वर्गं बहून्भोगान्भुक्त्वा पापफलं तथा ॥ ५ ॥
शतद्रुनिकटे देशे जातोऽयं ब्राह्मणोऽधुना । धनुर्लग्नगते सौरौ गुरौ मीनेऽप्यलौ रवौ ॥ ६ ॥
कुलाग्रणीः कार्यकरो गुणी पित्तकफान्वितः । मध्यरूपयुतः श्रीमान्द्विभार्यो याति संयुतः ॥७॥
चन्द्रे पापयुतेऽप्युग्रे कन्यायां समवस्थिते । गोबालवत्सकवधात्पापात्पूर्वाद्गुप्तक ॥ ८ ॥
स्त्रीसाहाय्ययुतो यस्मात्पूर्वजन्मन्यभूदसौ । तेन कर्मविपाकेन स्त्री ज्येष्ठा पुत्रवर्जिता ॥
प्रायश्चित्ते कृते त्वत्र कनिष्ठायां भविष्यति ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन् येन पापक्षयो भवेत् । कथ्यतां दिवसेशान लोकानां हितकाम्यया॥१०॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं प्रवक्ष्यामि शृणुष्वाथ खगेश्वर । सुवर्णदशका सूत धेनुः कार्या सगर्भिका ॥ ११ ॥
सर्वालंकारयुक्ता च पत्रे लेख्या यथोक्तवत् ॥ १२ ॥
तदर्धार्धप्रमाणा वा यथावित्तानुसारतः । संपूज्य नाममन्त्रैस्तु सा देया ब्राह्मणाय गौः ॥ १३ ॥

मन्त्रः ।

"यन्मया पूर्वजनुषि पापं गोघातजं कृतम् । तदत्र पापनाशाय ददेऽहं गां हिरण्मयीम्" ॥१४॥
मन्त्रमेवं समुच्चार्य दद्याद्विप्राय धीमते । गायत्र्यष्टसहस्रं तु होमयेत्तदनन्तरम् ॥ १५ ॥
आसन्नप्रसवामेकां दद्याच्च भोजयेद्द्विजान् । अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत् ॥ १६ ॥
तस्य संततिवृद्धिः स्यादत्र जन्मनि वै सुत । न करोति यदा श्रुत्वा प्रायश्चित्तं त्रिधा मतम् ॥१७॥
इह जन्मन्यपुत्रः स्यान्मृतो नरकमाप्नुयात् । एकहीनेऽथ पञ्चाशन्मृत्युरब्दे ज्वरेण वै ॥ १८ ॥
प्रायश्चित्ते कृते स्वायुः षष्टिस्त्वङ्कयुताः समाः । कन्यागते रवौ चन्द्रे मीनस्थे मरणं ध्रुवम्॥१९॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्नवतितमः ॥ ९४ ॥

---

अरुण उवाच ।

भूमिदेवकुले स्वन्तः पूर्वजन्मन्यथात्र च । पृच्छको जगतां नाथ तस्य कर्म प्रकाशय ॥ १ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे विप्रो गिरिवासी जितेन्द्रियः । विद्याभ्यासरतो नित्यं सत्यधर्मपरायणः ॥ २ ॥
दत्तानि तत्र दानानि ब्राह्मणेभ्यो हि शक्तितः । पर्वस्वपि च तेनैवाध्यापिता ब्राह्मणाः खग॥३॥
अथ भाविबलात्सूत ब्राह्मणेन तपस्विना । स्थापितं तद्गृहे स्वर्णं लोभयुक् तत्र दत्तवान् ॥ ४ ॥
ततो बहुतिथे काले कालधर्ममुपेयिवान् । स्वर्णापहारी सततं गतो हि यमशासनम् ॥ ५ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण जातोऽयं ब्राह्मणोऽधुना ॥ ६ ॥
सौराष्ट्रे च तुलालग्ने कृशो नातिलघुः सुधीः । धर्मकर्मक्रियायुक्तो लोभदुःखसमन्वितः ॥ ७ ॥
गौरवर्णः शनिर्यस्माल्लग्नगः सुतगः शशी । बहुकन्योऽल्पपुत्रश्च तस्माज्ज्ञेयोऽधुनाऽण्डज ॥ ८ ॥

यौवने स्त्रीसुखं त्वग्रे द्विपञ्चाशन्मितेऽब्दके । भृशं पुत्रसुखप्राप्तिः पूर्वं ब्राह्मणपूजनात् ॥ ९ ॥
कर्कटस्थौ सूर्यजीवौ तस्माद्राजोपसेवकः । सुवर्णहरणाद्दोषात्पूर्वजन्मनि मानद ॥ १० ॥
कुनखी ह्यत्र विज्ञेयो लक्षणैस्त्वैहिकैरसौ । अयो भ्रातृसहायात्तु ब्राह्मणस्वं हृतं पुरा ॥ ११ ॥
तेन तत्सहजो ज्येष्ठः पुत्रहीनोऽत्र जन्मनि । पृच्छकस्य तथा वर्षे पञ्चाशन्मितके ध्रुवम् ॥ १२ ॥
पुत्रे रिष्टं विजानीयात्स्वदेहे वापि निश्चितम् ।

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्पुत्ररिष्टविनाशिनीम् ॥ १३ ॥
त्वत्तोऽहं श्रोतुमिच्छामि सर्वलोकोपकारक ।

श्रीसूर्य उवाच ।

पलपञ्चसुवर्णाढ्यां गां दद्याद्ब्राह्मणाय वै ॥ १४ ॥
तदर्धार्धयुतां वापि श्रेष्ठमध्यकनिष्ठिकाम् । निष्कं वित्तानुसारेण न न्यूनाधिककल्पना ॥ १५ ॥
सुवर्णहरणात्पापाद्दोषान्मुच्यतेऽधुना । पञ्चाशत्तमे वर्षे रिष्टं चाकृतनिष्कृतेः ॥ १६ ॥
प्रायश्चित्ते कृते सूत पूर्णायुर्जायते नरः । सप्तसप्ततिवर्षाणि सपुत्रो जीवति ध्रुवम् ॥ १७ ॥
कार्तिके कृष्णपञ्चम्यां शशिन्यार्द्रागतेऽण्डज । वृषलग्ने च निधनं पृच्छकस्य भविष्यति ॥ १८ ॥

इति श्रीहरसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचनवतितमः ॥ ९५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्कश्चिद्वैश्यो धर्मपरायणः । मथुरायां महाभाग भिषग्वृत्तिविशारदः ॥ १ ॥
भञ्जिताश्च महारोगा गवां तेन महात्मना । दत्तानि तत्र दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
पापमाचरितं तेन कामलुब्धेन चेतसा । स्वजातिवनितायां वै व्यभिचारं चकार सः ॥ ३ ॥
तस्यास्तत्राभवद्गर्भः पातनं हि चकार सा । महोपर्यच्छेदनजैः परीवादाद्भयाण्डज ॥ ४ ॥
सा मृता तेन दुःखेन गर्भपातेन निश्चितम् । पत्नीसाहाय्यतस्ततं सर्वमेतदुपार्जितम् ॥ ५ ॥
ततो यमपुरं प्राप्तः ससहायोऽण्डजोत्तम । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ६ ॥
गवां दुःखापहरेण पुण्येनात्र वणिक्सुतः । जातो रामहृदाख्ये पश्चियोजनसंमिते ॥ ७ ॥
नात्युच्चः श्यामलो भव्यः स्वल्पवित्तसमन्वितः । व्यापारनिरतः क्रोधी वलबुद्धियुतोऽग्रणीः ॥८॥
भ्रातृयुक्तः पितृसुखाद्धीनः स्त्रीप्रियसंयुतः । गर्भपातनजात्पापात्प्रागत्र सुतवर्जितः ॥ ९ ॥
चिद्रमङ्गात्पञ्चमे तु शुभदृष्टिविवर्जिते । चन्द्रे मिथुनराशिस्थे भौमदृष्टे च पुत्रकः ॥ १० ॥
सहायलक्षणं सर्वं शृणुष्वात्र खगेश्वर । या स्त्री पूर्वं सहायाऽऽसीद्गर्भपातनकर्मणि ॥ ११ ॥
पृच्छकस्य तु सा नारी गर्भदुःखाकुलात्र च । वक्ष्यामि निष्कृतिं तस्या सर्वपापप्रणाशिनीम् ॥ १२ ॥
माषैस्त्रिशन्मितैरत्र कार्या वैश्या हिरण्मयी । अपि गर्भयुता लेख्या सुगन्धैश्चित्रिता सुत ॥ १३ ॥
तदर्धमितिका वापि द्वयोर्वित्तानुमानतः । सा देया तु विधिज्ञाय मन्त्रमेनमुदीरयेत् ॥ १४ ॥

मन्त्रः ।

"वैश्यामेनां च सौवर्णां वस्त्राढ्यां विधिदैवताम् । ददेऽहं विप्रमुख्याय पूजिताय विधानतः ॥ १५ ॥
गर्भपातनजाद्दोषात्पूर्वपापविशुद्धये" । इत्युच्चार्य नरो दद्यात्सर्वपापविशोधनम् ॥ १६ ॥

१ प्रकः—सपु० ।

श्रीसूर्य उवाच ।

पृच्छको विनतासूनो दानधर्मरतोऽभवत् । वैश्यः पूर्वभवे सूत व्यापारकुशलः सदा ॥ १ ॥
दानयज्ञरतो नित्यं ब्राह्मणातिथिपूजकः । तद्गृहे धान्यराशिं तु भक्षयन्ती क्षुधार्तिनी ॥ २ ॥
आसन्नप्रसवा सूत सुरभिः कालमोहिता । भृशं तेन हता कुक्षौ लोभोपहतचेतसा ॥ ३ ॥
बालवत्सो मृतस्तत्र गर्भस्थश्चातिताडनात् । तद्दुःखेन मृता सा तु धेनुराक्रन्दती पुरा ॥ ४ ॥
एवं निवसतस्तत्र मृतः स यमशासनम् । प्राप्य स्वर्गं बहून्भोगान्भुक्त्वा पापफलं तथा ॥ ५ ॥
शतद्रुनिकटे देशे जातोऽयं ब्राह्मणोऽधुना । धनुर्लग्नगते सौरौ गुरौ मीनेऽप्यलौ रवौ ॥ ६ ॥
कुलाग्रणीः कार्यकरो गुणी पित्तकफान्वितः । मध्यरूपयुतः श्रीमान्द्विभार्यो याति संयुतः ॥७॥
चन्द्रे पापयुतेऽत्युग्रे कन्यायां समवस्थिते । गोबालवत्सकवधात्पापात्पूर्वादपुत्रक ॥ ८ ॥
स्त्रीसाहाय्ययुतो यस्मात्पूर्वजन्मन्यभूदसौ । तेन कर्मविपाकेन स्त्री ज्येष्ठा पुत्रवर्जिता ॥
प्रायश्चित्ते कृते त्वत्र कनिष्ठायां भविष्यति ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन् येन पापक्षयो भवेत् । कथ्यतां दिवसेशान लोकानां हितकाम्यया ॥१०॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं प्रवक्ष्यामि शृणुष्वाथ खगेश्वर । सुवर्णदशका सूत धेनुः कार्या सगर्भिका ॥ ११ ॥
सर्वालंकारयुक्ता च पश्चे लेख्या यथोक्तवत् ॥ १२ ॥
तदर्धार्धप्रमाणा वा यथावित्तानुसारतः । संपूज्य नाममन्त्रैस्तु सा देया ब्राह्मणाय गौः ॥ १३ ॥

मन्त्रः ।

"यन्मया पूर्वजनुषि पापं गोघातजं कृतम् । तदत्र पापनाशाय ददेऽहं गां हिरण्मयीम्" ॥१४॥
मन्त्रमेनं समुच्चार्य दद्याद्विप्राय धीमते । गायत्र्यष्टसहस्रं तु होमयेत्तदनन्तरम् ॥ १५ ॥
आसन्नप्रसवामेकां दद्याद्गां भोजयेद्द्विजान् । अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत् ॥ १६ ॥
तस्य संततिवृद्धिः स्यादत्र जन्मनि वै सुत । न करोति यदा श्रुत्वा प्रायश्चित्तं त्रिधा मतम् ॥१७॥
इह जन्मन्यपुत्रः स्यान्मृतो नरकमाप्नुयात् । एकहीनेऽथ पञ्चाशन्मृत्युरब्दे ज्वरेण वै ॥ १८ ॥
प्रायश्चित्ते कृते स्वायुः षष्टिस्त्वङ्कयुताः समाः । कन्यागते रवौ चन्द्रे मीनस्थे मरणं ध्रुवम् ॥१९॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्नवतितम ॥ ९४ ॥

---

अरुण उवाच ।

भूमिदेवकुले त्वन्नः पूर्वजन्मन्यथात्र च । पृच्छको जगतां नाथ तस्य कर्म प्रकाशय ॥ १ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे विप्रो गिरिवासी जितेन्द्रियः । विद्याभ्यासरतो नित्यं सत्यधर्मपरायणः ॥ २ ॥
दत्तानि तत्र दानानि ब्राह्मणेभ्यो हि शक्तितः । पर्वस्वपि च तेनैवाध्यापिता ब्राह्मणाः खग ॥३॥
अथ भाविबलात्सूत ब्राह्मणेन तपस्विना । स्थापितं तद्गृहे स्वर्णं लोभयुक् तत्र दत्तवान् ॥ ४ ॥
ततो बहुतिथे काले कालधर्ममुपेयिवान् । स्वर्णापहारी सततं गतो हि यमशासनम् ॥ ५ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण जातोऽयं ब्राह्मणोऽधुना ॥ ६ ॥
सौराष्ट्रे च तुलालग्ने कृशो नातिलघुः सुधीः । धर्मकर्मक्रियायुक्तो लोभदुःखसमन्वितः ॥ ७ ॥
गौरवर्णः शनिर्यस्माल्लग्नगः सुतगः शशी । बहुकन्योऽल्पपुत्रश्च तस्माज्ज्ञेयोऽधुनाऽण्डज ॥ ८ ॥

यौवने स्त्रीसुखं त्वग्रे द्विपञ्चाशन्मितेऽब्दके। भृशं पुत्रसुखप्राप्तिः पूर्वं ब्राह्मणपूजनात् ॥ ९ ॥
कर्कटस्थो सूर्यजीवौ तस्माद्राजोपसेवकः। सुवर्णहरणादोषात्पूर्वजन्मनि मानद ॥ १० ॥
कुनखी ह्यत्र विज्ञेयो लक्षणैस्त्वेहिकैरसौ। अथो भ्रातृसहायात्तु ब्राह्मणस्वं हृतं पुरा ॥ ११ ॥
तेन तत्सहजो ज्येष्ठः पुत्रहीनोऽत्र जन्मनि। पृच्छकस्य तथा वर्षे पञ्चाशन्मितके ध्रुवम् ॥ १२ ॥
पुत्रे रिष्टं विजानीयात्स्वदेहे वापि निश्चितम्।

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्पुत्ररिष्टविनाशिनीम् ॥ १३ ॥
त्वत्तोऽहं श्रोतुमिच्छामि सर्वलोकोपकारक।

श्रीसूर्य उवाच।

पलपञ्चसुवर्णाढ्यां गां दद्याद्ब्राह्मणाय वै ॥ १४ ॥
तदर्धार्धयुतां वापि श्रेष्ठमध्यकनिष्ठिकाम्। त्रिषु वित्तानुसारेण न न्यूनाधिककल्पना ॥ १५ ॥
सुवर्णहरणात्पापाद्गोदानान्मुच्यतेऽधुना। षट्पञ्चाशत्तमे वर्षे रिष्टं चाकृतनिष्कृतेः ॥ १६ ॥
प्रायश्चित्ते कृते सूत पूर्णायुर्जायते नरः। सप्तसप्ततिवर्षाणि सपुत्रो जीवति ध्रुवम् ॥ १७ ॥
कार्तिके कृष्णपञ्चम्यां शशिन्यार्द्रागतेऽण्डज। वृषलग्ने च निधनं पृच्छकस्य भविष्यति ॥ १८ ॥

इति श्रीब्रह्मसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचनवतितमः ॥ ९५ ॥

---

श्रीसूर्य उवाच।

पूर्वजन्मन्यभूत्कश्चिद्वैश्यो धर्मपरायणः। मथुरायां महाभाग भिषग्वृत्तिविशारदः ॥ १ ॥
भञ्जिताश्च महारोगा गवां तेन महात्मना। दत्तानि तत्र दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
पापमाचरितं तेन कामलुब्धेन चेतसा। स्वजातिवनितायां वै व्यभिचारं चकार सः ॥ ३ ॥
तस्यास्तत्राभवद्गर्भः पातनं हि चकार सा। महौषधैश्छेदनजैः परीवादाद्भयाण्डज ॥ ४ ॥
सा मृता तेन दुःखेन गर्भपातेन निश्चितम्। पत्नीसाहाय्यात्सततं सर्वमेतदुपार्जितम् ॥ ५ ॥
ततो यमपुरं प्राप्तः ससहायोऽण्डजोत्तम। भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ६ ॥
गवां दुःखापहरेण पुण्येनात्र वणिक्सुतः। जातो रामहृदाग्नेये षष्टियोजनसंमिते ॥ ७ ॥
नात्युच्चः श्यामलो भव्यः स्वल्पवित्तसमन्वितः। व्यापारनिरतः क्रोधी वलबुद्धियुतोऽभ्रणीः ॥८॥
भ्रातृयुक्तः पितृसुखाद्धीनः स्त्रीप्रियसंयुतः। गर्भपातनजात्पापात्प्रागत्र सुतवर्जितः ॥ ९ ॥
चिह्नमङ्गात्पञ्चमे तु शुभदृष्टिविवर्जिते। चन्द्रे मिथुनराशिस्थे भौमदृष्टे च पुत्रकः ॥ १० ॥
सहायलक्षणं सर्वं शृणुष्वात्र खगेश्वर। या स्त्री पूर्वं सहायाऽऽसीद्गर्भपातनकर्मणि ॥ ११ ॥
पृच्छकस्य तु सा नारी गर्भदुःखाकुलात्र च। वक्ष्यामि निष्कृतिं तस्या सर्वपापप्रणाशिनीम् ॥१२॥
माषैस्त्रिंशन्मितैरत्र कार्या वैश्या हिरण्मयी। अपि गर्भयुता लेख्या सुगन्धैश्चर्चिता सुत ॥१३॥
तदर्धमितिका वापि द्वयोर्वित्तानुमानतः। सा देया तु विधिज्ञाय मन्त्रमेनमुदीरयेत् ॥ १४ ॥

मन्त्रः।

"वैश्यामिमां च सौवर्णीं वस्त्राढ्यां विधिदैवताम्। ददेऽहं विप्रमुख्याय पूजिताय विधानतः ॥१५॥
गर्भपातनजाद्दोषात्पूर्वपापविशुद्धये"। इत्युच्चार्य नरो दद्यात्सर्वपापविशोधनम् ॥ १६ ॥

---

१ भ्रकः–खपु०।

सार्धं सहस्रद्वितयं गायत्रीं त्र्यम्बकं तथा । जपेद्धुत्वा दशांशेन पूर्वपापप्रणोदनम् ॥ १७ ॥
ब्राह्मणान्भोजयेच्छक्त्या दद्याच्चैव तु दक्षिणाम् । एवं विधानं यः कुर्याद्विधिना पापशोधनम् १८
उत्पत्तिर्जायते तस्य संततेर्नात्र संशयः । न कुर्याद्विधिवच्चेत्र लोभान्मोहाद्विशेषतः ॥ १९ ॥
इह जन्मन्यपुत्रत्वं जायते चान्यजन्मनि । पञ्चसप्तमितायुः स्यात्प्रायश्चित्तेऽकृते सति ॥ २० ॥
चत्वारिंशन्मिते रिष्टं तस्य चाकृतनिष्कृतेः ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षण्णवतितमः ॥ ९६ ॥

## श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्पूर्वं क्रूरकर्मा प्रतापवान् । धनधान्यसमृद्धोऽपि वङ्गदेशे वसन्सदा ॥ १ ॥
याचकेभ्यः प्रदत्तानि गोभूम्यश्वादिकानि च । अथो भाविवशात्सूत लोभोपहतचेतसा ॥ २ ॥
सीम्नि वादे ( हृतं द्रव्यं ब्राह्मणानामधर्मतः । द्विजेकेन सहायेन कृतं तत्कर्म दारुणम् ॥ ३ ॥
भूमिवादे ) मृतस्तत्र संग्रामे कालनोदितः ।भुक्त्वाभोगाञ्छुभान्स्वर्गे पापात्पापफलानि च॥४॥
पूर्वपुण्यप्रभावेण स जातः पर्वतेऽधुना । भिपालकुलेऽत्युग्रे सिंहलग्ने गुरावजे ॥ ५ ॥
सूर्ये मेषगते चेन्दौ चापस्थे पापसंयुते । गौरः शूरो महोग्रस्तु बहुकन्यः कुली शुभः ॥ ६ ॥
ददाति शक्तितो धीमान्नात्युच्चो बन्धुसंयुतः । बहुव्ययपरो नित्यं पैत्तिकः प्रियवाग्घृणी ॥ ७ ॥
बहुभार्यो यशस्वी च भृत्यवाहनसंयुतः । अष्टत्रिंशन्मिते वर्षे स्वल्पपुत्रसुखान्वितः ॥ ८ ॥
ह्यन्तरायोद्भवः पुनेरतिदुःखसमन्वितः । ब्रह्मस्वहरणात्पूर्वं धनहीनोऽत्र दृश्यते ॥ ९ ॥
सहायद्विजयुक्तश्च पूर्वेऽभूद्विनतात्मज । तुलाया सोऽनुजो जातो जन्मन्यत्राल्पपुत्रकः ॥ १० ॥
शृणु सूत प्रवक्ष्यामि निष्कृतिं पापकर्मणः । यां कृत्वा विधिवज्जन्तुरिह पापात्प्रमुच्यते ॥ ११ ॥
पुण्येऽह्नि विप्रकथिते धेनूनां पञ्चकं सुत । दद्याच्च वृषभं गौरं पृष्ठवस्त्रयुगान्वितम् ॥ १२ ॥
सुवर्णशृङ्गसहितं तथा क्षितियुतं शुभम् । मन्त्रेणानेन विप्रेभ्यः प्रथा श्रद्धासमन्वितः ॥ १३ ॥

मन्त्रः ।

"भूमिभागयुतं गौरं वृषभं रुद्रदैवतम् । ददेऽहं सीम्नि द्रव्योत्थपापनाशाय वै द्विज" ॥ १४ ॥
अथो स्वर्णहयाढ्यं हि शुभं दद्यात्तुरङ्गमम् । कर्मप्रकाशकायैव मन्त्रमेनमुदीरयेत् ॥ १५ ॥

मन्त्रः ।

"सोपस्करं काञ्चनाढ्यमश्वं तुभ्यमहं ददे । ब्रह्मस्वहरणात्पापान्मोक्षं कुरु ममानघ" ॥ १६ ॥
एवमुच्चार्य दद्याच्च पूजिताय द्विजातये । मुच्यते पूर्वपापाच्च ब्रह्मस्वहरणाद् ध्रुवम् ॥ १७ ॥
शृणुयाद्धरिवंशं च त्रिरावर्त्य विधानतः । होमयेद्दशसाहस्रं ब्राह्मणानां च पूजनम् ॥ १८ ॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य संततिवृद्धिः स्यादिहैव फलमश्नुते ॥
नेमा कुर्याच्च वित्तस्योरिष्टाद्दारिद्र्यजं भयम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तनवतितमः ॥ ९७ ॥

## श्रीसूर्य उवाच ।

पृच्छकोऽयमयोध्यायामभूच्छूद्रश्च धार्मिकः । धनधान्यसमृद्धस्तु यशस्वी पितृवल्लभः ॥ १ ॥

१ वाचकेभ्य –खपु० । २ (  ) पाठोयं नास्ति–खपु० । ३ वलसुत –खपु० । ४ प्रियवान् गुणी–खपु० । ५ वित्तस्यारिष्टारिष्टादंत भयम–खपु० ।

गयायां द्वादशे वर्षे गतो मात्रा सहैव च। सानुजश्च सपत्नीकः सहायत्रयसंयुतः॥ २॥
कृतवांश्च गयाश्राद्धं नानाविभवविस्तरैः। काम्यश्राद्धानि तत्रैव दत्तानि गरुडाग्रज॥ ३॥
तस्य पुत्रप्रभावेण पितरश्च दिवं गताः। अथागत्य गृहं वर्षे चत्वारिंशन्मिते ध्रुवम्॥ ४॥
कृतवान्दारुणं कर्म यौवने काममोहितः। स्वज्ञातिजं धर्मशीलं शूद्रं हत्वा महीपथे॥ ५॥
पत्नीत्वे स्थापिता तस्य भार्या कामविमोहिता। सर्वस्वं तस्य यत्किंचिद् गृहीतं विविधैश्छलैः॥६॥
तस्याः पुत्राश्च ये जाता ते हतास्तस्य भार्यया। सापत्न्यभावदुःखेन कृतं कर्मातिदारुणम्॥७॥
पृच्छकस्य तु या माता तस्याप्यनुमतं त्विदम्। त्रिसहायान्वितस्तत्र गतस्तु यमशासनम्॥ ८॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा। गयाश्राद्धप्रभावेण स जातः पृथिवीपतिः॥ ९॥
दशयोजनविस्तीर्णे देशे पर्वतमाश्रिते। पितृभक्तिविशेषात्तु चैहिकं लक्षणं त्विदम्॥ १०॥
पितृभे जननं चास्य गुरुचन्द्रौ तु सिंहगौ। वृषराशिगते भानौ धर्मे शेषा नभश्चराः॥ ११॥
जनुषो द्वादशे वर्षे राज्यप्राप्तिर्न संशयः। जातोऽत्र रक्तकृष्णोऽसौ देवब्राह्मणपूजकः॥ १२॥
पितृभक्तिरतो विद्वान्गीतनृत्यप्रियः कविः। देशेदेशे तु विख्यातो दाता भोक्ता बलान्वितः॥१३॥
पित्तवाताधिको भीरुर्हस्वः स्थूलोऽतिचञ्चलः। चौरेशः शिथिलः कार्ये लोभी पापरतः क्वचित्॥१४॥
सभार्यां चतुरो दक्षो बहुबन्धुसमन्वितः। सहोदरविहीनस्तु बहुपुत्रो बहुप्रियः॥ १५॥
बहुभार्यो यशस्वी च क्षयवृद्धियनान्वितः। पादजस्य यथापूर्वं पापादत्र च पृच्छकः॥ १६॥
पापूद्‌रव्यथायुक्तो यौवने जायते ध्रुवम्। त्रिसहायैर्युतः पूर्वं शृणुष्वाथ खगेश्वर॥ १७॥
या धर्मपत्नी पूर्वासीत्सा ज्येष्ठात्र गतप्रजा। बालघातकृतं यस्मात्पूर्वेऽत्र विनतासुत॥ १८॥
योऽनुजः पूर्वजनुषि गयायां च सहायकः। स जातः कर्कटे जीवे पृच्छकस्य सुतोऽधुना॥१९॥
वृषभे मिथुनस्थेऽर्के सोऽपि राजा भविष्यति। याऽभवत्पूर्वजनुषि मातास्य विनतासुत॥ २०॥
पापस्यानुमतात्पूर्वं ह्यत्र भर्तृविहीनता। पूर्वजन्मनि या शूद्रं हत्वा नीता शुभानना॥ २१॥
शूद्रस्य चाथ सर्वस्वं तस्य कर्मफलं शृणु। अत्र जन्मनि सा नारी मृता त्रिंशन्मितेऽब्दके॥२२॥
कुचत्वारिंशके वर्षे शूद्रघातः कृतः पुरा। जन्मतस्तन्मिते वर्षे मृत्युर्मृत्युर्भविष्यति॥ २३॥
देशोत्पातो भृशं तत्र हाहाकारश्च लुण्ठनम्। अथवा सर्वं ज्येष्ठस्य सुतस्य मरणाद्भवेत्॥ २४॥

अरुण उवाच।

का तस्य निष्कृतिः स्वामिन्पूर्वपापनिषूदिनी। कथ्यतां दिवसेशान लोकानां हितकाम्यया॥ २५

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि निष्कृतिं तस्य कर्मणः॥
यां कृत्वा विधिवज्जन्तुरिह रिष्टात्प्रमुच्यते। श्रुत्वैनं पुस्तकं पुत्र मया श्रद्धासमन्वितः॥ २६॥
पूर्वं चार्घ्यघटं दत्त्वा पश्चात्कर्म समाचरेत्। वृषगेहे शुचि स्थाने स्नात्वा तु विमले जले॥ २७॥
देवान्पितॄन्समभ्यर्च्य सुमनाः सुसमाहितः। पूजयित्वेष्टदेवं च पश्चात्काम्यं समाचरेत्॥ २८॥
शूद्रस्य प्रतिमा कार्या पलैः शतमितैः शुभा। हिरण्मयी यथोक्ता हि तदर्धार्धेन वा पुनः॥२९॥
एवं कालस्य मूर्तिश्च कार्या लोहमयी शुभा। द्विजाय प्रतिमे देये मन्त्रेणानेन धीमता॥ ३०॥

---

१ पापघट—ख्यु०।

मन्त्रः ।

"काममोहात्कृतं पूर्वं यन्मया शूद्रघातनम् । तस्मान्निष्कृतिं विप्र ददेऽहं तुभ्यमत्र च ॥ ३१ ॥
काल त्वं सर्वभूतानां भयदश्च क्षयंकरः । मां रक्ष पूजितोऽसि त्वं रिष्टात्पापसमुद्भवात्" ॥ ३२ ॥
दिक्पालानां हिरण्मय्यो मूर्तयश्चाष्ट भो खग। अष्टानामिह ता देया विप्रेभ्यो दोषनाशकाः ॥३३॥
अथ रुक्ममयी मूर्तिर्विष्णोर्दद्यात्पलत्रिका । विप्राय वेदविदुषे ततो विप्रांश्च भोजयेत् ॥ ३४ ॥
शिवस्य पूजनं कुर्यात्पूर्वपापविशुद्धये । पुत्रपौत्रधनैर्युक्त इह जन्मनि जायते ॥ ३५ ॥
श्रुत्वेमं पुस्तकं सूत नेमां कुर्याच्च यः कृतिम् । इह पुत्रविहीनः स्याद्देकवेदमितेऽब्दके ॥ ३६ ॥
द्विसप्ततिमिते वर्षे मृत्युश्चाकृतनिष्कृतेः ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टनवतितमः ॥ ९८ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे काश्चिद्विराटे ब्राह्मणोऽण्डज । विद्याभ्यासविहीनश्च कृषिकर्मरतः सदा ॥ १ ॥
स्वल्पवित्तयुतस्त्यागी बन्धुमान्योऽतितामसः। स्ववर्णधर्मरहितोऽतिथीनां पूजने रतः ॥ २ ॥
अथो तस्य गृहे कश्चिद्द्विजः स्थापितवान्धनम् । तस्मै द्विजाय लोभाद्वै पुनर्दत्तं न तद्वसु ॥ ३ ॥
दम्पतिभ्यां मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा । गत्वा धर्मपुरं दैवाच्छुभं वा यदि वाऽशुभम् ॥४॥
फलं भुक्त्वाऽधुना जातः शतद्रुनिकटे खग । खौ केतुयुते चन्द्रे मेषराशिगतेऽण्डज ॥ ५ ॥
मध्यमो रक्तगौरश्च पूर्वापरसहोदरैः । रहितो याचकस्त्यागी सुखी बन्धुरतः सदा ॥ ६ ॥
धूर्तो रूपान्वितो वाग्मी वातपित्तविवर्जितः । स्त्रीसाहाय्ययुतो यस्मात्पूर्वजन्मनि मानद ॥ ७ ॥
कृतवान्दारुणं कर्म तस्य वक्ष्यामि लक्षणम् । अत्र जन्मनि सा नारी मृता सा बहुकन्यका ॥८ ॥
पुत्रहीना च विंशेऽब्दे मधुब्रह्मस्वभक्षणात् । ततो द्विभार्यः पूर्वाभ्यां सुताभ्यां विनतासुत ॥ ९ ॥
हीनो ज्येष्ठकनिष्ठाभ्यामत्र चाकृतनिष्कृतेः । ब्रह्मस्वभक्षणात्सूत द्रव्यतसोऽत्र दृश्यते ॥ १० ॥
पूजनादतिथीनां प्राक् स्वल्पसन्तापसंयुतः । प्राग्वर्णधर्महीनत्वाज्जातोऽयं ब्राह्मणादय ॥ ११ ॥
एतैर्लक्षणसंयुक्तो जायते नान्यथा पुनः । वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधिनीम् ॥ १२ ॥
पलत्रिकार्धार्धनाढ्यां त्रिपु वित्तानुसारतः । कपिलां गां सुवर्णेन सर्वाभरणभूषिताम् ॥ १३ ॥
संप्रदद्यात्तु विप्राय पूजिताय प्रयत्नतः । तस्यैकस्मै विधिज्ञाय मन्त्रमेतत्पठन् सुधीः ॥ १४ ॥
प्राग्धृतं ब्राह्मणस्य स्वं लोभोपहतचेतसा । स्त्रीसाहाय्ययुतेनैव तस्येमां पापशोधिनीम् ॥ १५ ॥
निष्कृतिं कपिलां देवी ददेऽहं ब्राह्मणाय वै । इत्युच्चार्य नरो दद्यात्पूर्वपापविशुद्धये ॥ १६ ॥
ततः प्रभृति पुत्राणां वृद्धिरत्र भविष्यति । धनवृद्धिस्तथात्रैव जायते गरुडाग्रज ॥ १७ ॥
न करोति यदा श्रुत्वा प्रायश्चित्तं प्रयत्नतः । स पुत्रधनशोकाभ्यां दुःखितो म्रियतेऽमुना ॥१८॥
एतत्सर्वमुपाख्यातं प्रायश्चित्तं विधानतः । पञ्चपञ्चमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ १९ ॥
प्रायश्चित्ते कृते ह्यायुः समाः स्युः पञ्चसप्ततिः । ज्येष्ठे मासि सिते पक्षे त्रयोदश्यां दिनोदये॥२०॥
कर्कलग्ने तु निर्याणं कीर्तितं विनतासुत ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनशततमः ॥ ९९ ॥

श्रीसूर्य उवाच ।

क्षात्रे कुले समुत्पन्नः पूर्वजन्मनि मानद । धनधान्यसमृद्धोऽपि देशे स्त्रीराज्यके सुत ॥ १ ॥
मोहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः। ऊर्ध्ववातादिना पीडा बाल्येऽस्य ग्रहणीगदः ॥ २ ॥

१ निष्कृतिम्—खपु० । २ वातादिना—खपु० ।

तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः। रक्तस्रावादिना पीडा जायते चोदरानिलः ॥ ३ ॥
तस्याश्चोदरतो गर्भपातं कुर्याच्च पृष्ठतः। द्विस्त्रिश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा ॥ ४ ॥
केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत्।

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम् ॥ ५ ॥
व्यभिचारभयाद्यापि तया गर्भश्च पातितः। अतिकष्टाद्वैनतेय गर्भपातः कृतो यतः ॥ ६ ॥
अपरं च कृतं कर्म व्यभिचारो यतस्ततः। नानाद्रव्यापहर्त्री च कुलटा वाक्यलङ्घनात् ॥ ७ ॥
भर्तुस्तच्चोरिणीवृत्तिरिष्टसंगतिचारणात्। तेन दुष्टेन यद्द्रव्यं हृतं तस्करबुद्धिना ॥ ८ ॥
भुक्तं ताभ्यां वैनतेय ब्रह्मस्वं तत्र जन्मनि। कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः ॥ ९ ॥
यातना बहुधा प्राप्ता पश्चान्मानुषतां गता। किंचित्पुण्यप्रभावेण चात्रेयं जन्मतो भुवि ॥१०॥
इदं च तृतीयं जन्म गर्भपातोऽभिजायते। उभाभ्यां च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि विश्वेश येन गर्भः स्थिरो भवेत् ॥१२॥

श्रीसूर्य उवाच।

सुशुभं भूप्रदेशं तु गोमयेनोपलेपयेत्। कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः ॥ १३ ॥
तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम्। सुशीतसलिलैः पूर्णं सरत्नौषधपल्लवम् ॥ १४ ॥
तस्योपरि न्यसेत्पात्रं वंशजं वर्तुलाकृति। तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम् ॥ १५ ॥
सुवर्णस्य विशुद्धां च दापयेद्देवतादिने। प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम् ॥ १६ ॥
संकष्टान्मोचयेद्धेनुं दद्यातां दम्पती च तां। एवं कृतविधेः सूत निश्चला संततिर्भवेत् ॥ १७ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्यायः शततमः ॥ १०० ॥

---

अरुण उवाच।

भगवन्देवदेवेश श्रुतमेतन्महाद्भुतम्। [1]सदानुगामिन्या नार्या गतिं मे ब्रूहि भास्कर ॥ १ ॥

श्रीसूर्य उवाच।

मृतं प्रतीक्ष्य भर्तारं या विशेद्धि हुताशनम्। तत्सार्धं सा महापुण्या ज्ञेयाऽत्र सहगामिनी ॥ २ ॥
श्रुत्वा मृतपतिं यात्र विदेशस्थं पतिव्रता। तद्वस्त्रेण विशेदग्नौ सा ज्ञेया चानुगामिनी ॥ ३ ॥
धर्मात्प्रागनिव्रता पूर्वे भवेन्मोक्षगतिर्द्वयोः। अथैकाभून्महासाध्वी जाता ब्रह्महदेऽण्डज ॥ ४ ॥
ब्राह्मणी तपसा युक्ता सदा भर्तृपरायणा। दानशीलरता पुण्या पुण्यकर्मान्विता सती ॥ ५ ॥
दृष्ट्वा मृतपतिं सा तु दिव्याभरणभूषिता। प्राप्ताग्नौ विधिना सूत कृत्वा पूजां हरेर्भृशम् ॥ ६ ॥
सा गता यमराजस्य स्कन्धे दत्त्वा पदाम्बुजम्। वैकुण्ठे चाण्डजश्रेष्ठ यद्गत्वा न निवर्तते ॥ ७ ॥
तलत्तातलघातेन मूर्च्छितोऽभूद्यमाधिपः। तत्काले च तदा पृष्टो नारदेन महात्मना ॥ ८ ॥
धर्मराज वदैतन्मे त्वत्तः परतरश्च कः। दण्डप्रदो महाभाग येन त्वं चालितोऽधुना ॥ ९ ॥
तमुवाच ऋषिश्रेष्ठ गतेयं या शुभानना। सती तत्पादभारेण पीडितोऽहं भृशं द्विज ॥ १० ॥

---

१ अरुणवाक्यमिदं स्यात्। २ इदं च त्रितयं–खपु०।

मोक्षं गता महासाध्वी गृहीत्वा तु स्वकं पतिम् । महापापसमाक्रान्तं नरकस्थं द्विजोत्तम ॥ ११ ॥
साऽऽगमिष्यति चैवात्र पतेः पापावशेषतः । ब्राह्मणी योगयुक्ता च भविष्यति कलौ युगे ॥१२॥
काश्यां मृत्युस्तयोर्यस्माच्छिवत्वमुपगच्छतः ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकाधिकशततमः ॥ १०१ ॥

श्रीसूर्य उवाच ।

यः कामतश्चरेत्पूर्वं ब्रह्महत्यां नराधमः । क्षयरोगान्वितः सोऽपि जायते चात्र जन्मनि ॥ १ ॥
घोराद्ब्रह्मघ्नजात्पापाद्धातकर्मकृतात्सुत । प्रायश्चित्तं मया नोक्तं पापान्मुक्तिस्त्रिजन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्व्यधिकशततमः ॥ १०२ ॥

श्रीसूर्य उवाच ।

ब्राह्मणं घातयेद्यस्तु पूर्वजन्मनि मानवः । मोहादकामतः सोऽपि क्षयरोगसमन्वितः ॥ १ ॥
क्षयेणान्न क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षयेऽतिकष्टेन नष्टायुर्जायते पुमान् ॥ २ ॥
सर्वस्वदानादेवैव क्षयरोगः प्रशाम्यति । कुरुक्षेत्रादितीर्थेषु सत्पात्रेषु विधानतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्र्यधिकशततमः ॥ १०३ ॥

अरुण उवाच ।

कश्चिद्विप्रो महाप्राज्ञश्चारुवर्णः प्रतापवान् । आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किञ्चिद्विचसमन्वितः । तस्य भार्या सदाचारा किंचिदुत्क्लेशकारिणी ॥२ ॥
पतिभक्ता पतिप्राणा प्रतानामनुकाङ्क्षिणी । ऋतुहीना कथं जाता कस्येदं कर्मणः फलम् ॥३॥

श्रीसूर्य उवाच ।

नारीणां जारगर्भाणामसतीनां कुलच्छिदम् । यद्वा चिरप्रसूतानां शीघ्रं गर्भे समुद्भवेत् ॥ ४ ॥
औषधैश्छेदनैर्दुष्टैः प्रलेपैर्दुष्टभक्षणैः । सवाहनैस्तथा घातैरन्यैर्वा वस्तिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायं करोत्यपि च कीर्तयेत् । पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥
नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि । पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
नार्या तये र्ष्यया चैव संततेर्नाशनाय च । औषधैश्छेदनाद्यैस्तु तस्यार्थे कल्पितो गदः ॥ ८ ॥
सपत्न्यैः प्रेरयामास विधिर्नान्येव तद्गदः । तया वै ऋतुभावाच तद्द पीतं महौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद । ऋतावृतौ च संप्राप्ते जाता सा विविधा रुजा॥१०॥
वेदना जायते नित्यमसृग्वातोदरामयः । पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भपातनम् ॥ ११ ॥
एतत्कर्म कृतं तत्र त्रिविधं गर्भदोषकृत् । तथापि फलहन्त्रीणां द्वितीयं सुकृतं कृतम् ॥ १२ ॥
वृद्धा वा दुष्टबुद्ध्या च कृतं वै पूर्वजन्मनि । तेनैव कर्मणा वत्स विविधाः पुष्पबन्धनाः ॥ १३ ॥
गर्भाशयमधिश्रित्य स्रवेत्तु शोणितं बहु । छिद्यन्ति इव चान्त्राणि सूचीभिरिव तुद्यते ॥ १४ ॥
वेदनायाः पुरा भगवन्स्त्रीणां गर्भनिपातने । यावत्कालं प्रदेशीय तासां गर्भमपातयत् ॥ १५ ॥
तावानेव च तद्गर्भः पतेद्वा नास्य संभवः । एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत् ॥ १६ ॥
एकवासा विधिं चैव दम्पती तीर्थसंगमे । शुभे भूप्रदेशे तु पुराणोक्तविधानतः ॥ १७ ॥
मंप्रणाशाय दुष्टस्य प्रायश्चित्तमिहैनसः । प्रोष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ १८ ॥

१ विधिनान्येन-ख पु० ।

यत्नेन गार्भिकं सन्नमुपोषणपरायणा । पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियम् ॥ १९ ॥
केतकीगर्भसंयुक्तैश्चम्पकैः कुमुदोत्पलैः । सौवर्णी राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् ॥२०॥
हारनूपुरमुकुटकुण्डलाभरणादिकम् । नैवेद्यैः शुभ्रकासारमोदकापूपपायसैः ॥ २१ ॥
उपतिष्ठेत विधिवद्भवानीं प्रियवल्लभाम् । पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता ॥ २२ ॥
रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम् । फलैर्नानाविधैरर्घ्यं दद्यान्मंत्रपुरःसरम् ॥ २३ ॥
फलपुष्पाक्षतोपेतमञ्जलं मूर्ध्नि निक्षिपेत् । नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये ॥ २४ ॥
गृहाणार्घ्यमिदं देवि पुत्रान्मह्यं यशस्विनः । पतिपुत्रवती नारी गिरिजावत्प्रसूयते ॥ २५ ॥
एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम् । ततः प्रभाते विमले कृतप्रातःक्रिया सती ॥ २६ ॥
देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः । नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश ॥ २७ ॥
प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम् । सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् ॥ २८ ॥
दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया । सगर्भां च सुपोपेतां सिताङ्गीं वस्त्रसंयुताम् ॥२९॥
सहिरण्यां च गां दद्याद्विप्राय गुणशालिने । अपातयं पुरा गर्भं दुष्टस्त्रीणामुपार्जितम् ॥ ३० ॥
यदयं वन्ध्यताहेतुस्तस्मान्मुञ्च चाम्बिके । तव दानेन पुत्रा मे भवेयुः शुभगामिनः ॥ ३१ ॥
इमं मन्त्रं समुच्चार्य दत्त्वा विप्रं विसर्जयेत् । एवंव्रतेन नार्यां वै गर्भपातो न जायते ॥ ३२ ॥
जायन्ते पुत्रपौत्राद्याः सपत्न्या सह मोदते । न लभेद्गर्भपातं सा पतिपुत्रसुखं लभेत् ॥ ३३ ॥
तृतीये वा चतुर्थे वा मासि गर्भं स्रवेद्यदि । रजतस्य पलाभ्यां वै कोशं गर्भाशयाकृतिम् ॥३४॥
निष्कं च स्वर्णगर्भं च कृत्वा दत्त्वा द्विजन्मने । गर्भपातं प्रकुर्वन्त्या मया प्राक्तनजन्मनि ॥३५॥
यदिदं वन्ध्यकृत्मासं तस्मान्मुच्येऽत्र जन्मनि । जन्म जात्यादिकं वत्स न वदेदिह कर्मणाम् ॥ ३६ ॥
इदं चतुर्थं वै जन्म भूमिदेवकुलोद्भवम् । सपत्नीसहिता येन न सा गर्भस्य दोषकृत् ॥ ३७ ॥
तस्येदमपि संचिन्त्य लक्षणानीह जन्मनि । यस्याः प्राक् पतितो गर्भः सपत्न्याः पतिवर्जिनः॥३८॥
दीनानाथविरोधः स्यात्सविरोधात्तया सुत । अनुमन्त्रितयोक्ता तु पितृमातृसुखोज्झिता ॥ ३९ ॥
बन्धुसंततिदुःखेन मर्यादायनवस्थितिः । शोकः स्यादुदरे बाधा तावत्प्लीहादिविभ्रमः ॥ ४० ॥
अन्तरास्पन्दमानो वा गर्भः सन्नोपलक्ष्यते । पाणौ मुष्टितलावातजानुनी सक्थिजानुनी ॥ ४१ ॥
दोषजो वाग्निजो वापि शस्त्रजोऽश्मादिजोऽपि वा । ब्राह्मणान्भोजयेद्भक्त्या सर्वेष्वात्मानमीक्षयेत्॥४२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुरधिकशततमः ॥ १०४ ॥

---

श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सूत घातितो भूमिलोभतः ॥ १ ॥
सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् । तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तथा च तिर्यक्त्वं सूत विभुज्याघमतः स्वयम् । कर्मक्षये हि पुण्यात्प्राक् सोऽत्र जातो हि बाहुजः॥३॥
क्षयरोगयुतः सूत कृशो दुःखातुरो भृशम् । लग्ने कुम्भाभिधे सूत भौमचन्द्रयुतेऽण्डज ॥ ४ ॥
रिष्टं षष्टिमिते वर्षे जायतेऽकृतनिष्कृतेः । सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तदग्रे ते मृताश्चात्र पुत्राः क्षयरुजान्विताः । रिष्टेन वायुपो भङ्गो दृढपापाच्च निष्कृतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचाधिकशततमः ॥ १०५ ॥

---

१ सौभाग्याष्टकसंयुक्तं—खपु० ।२ सविरोधात्तया सुत—खपु० ।

श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः । गत्वा शत्रुपुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह तत्पुरं शत्रोस्तत्क्षणे लुण्ठितः पुनः । तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम् । अथो ममाज्ञया सर्वो मुक्ता नरकयातनाः ॥ ३ ॥
पुण्यशेषादयाऽत्रापि स जातः क्षत्रियाधमः । देशेऽयोध्याभिधे गौरो लघुर्देहो महोद्यमी ॥ ४ ॥
युवनाश्वे महाभाग राजयक्ष्मप्रपीडितः । अहाहा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तस्य वक्ष्यामि या कृत्वा मुच्यतेऽमुना । कार्यास्तत्र त्रिदेवाना मूर्तयस्तु यथोदिताः ॥६॥
ब्रह्मविष्णुमहेशाना सर्वरोगविनाशकाः । सुवर्णजास्तथा कार्याः कदलीपत्रसंयुताः ॥ ७ ॥
यथावित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । देयास्ता विप्रमुख्येभ्यः क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृते महाबाहो क्षयस्तस्यात्र शाम्यति । नैवं कुर्यात्तु यो मोहाद्विष्टं विशन्मितेऽङ्कके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षडधिकशततम ॥ १०६ ॥

श्रीसूर्य उवाच ।

या योषिदाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामयात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
तत्तस्याः पापशमनं मयोक्तं न पतत्त्रिण । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्ताधिकशततम ॥ १०७ ॥

श्रीसूर्य उवाच ।

स्वसृघाती च पुरुषः पूर्वजन्मनि मानद । बधिरो जायते तत्र प्रायश्चित्तं च तच्छृणु ॥ १ ॥
चान्द्रायणत्रयं कुर्यात्सुवर्णकर्णसंयुतम् । पुस्तकं विधिना दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्ति होमयेच्च स्वशक्तितः ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाधिकशततम ॥ १०८ ॥

श्रीसूर्य उवाच ।

या काचिदाचरेन्नारी पापं प्राग्ब्रह्मघातजम् । अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापकृताद्रोगाद्यस्मात्सर्वस्वदानतः । क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि । काश्यां वाप्यात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवाधिकशततम ॥ १०९ ॥

श्रीसूर्य उवाच ।

मूकोऽत्र जायते जन्तुर्यः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो दशाधिकशततम ॥ ११० ॥

श्रीसूर्य उवाच ।

कालिङ्गदेशे प्राक् सूत काचिद्द्विजवराङ्गना । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
नारी याऽघातयत्पूर्वभवे मोहाच्च कुक्कुटम् । नासावक्त्रत्वमाप्नोति सात्र जन्मनि निश्चयात् ॥ २ ॥

१ च प्रवक्ष्यामि-लपु० । २ न तस्या पापशमन-खपु० । ३ चान्द्रायणत्रय-लपु० ।

हेमनिष्कत्रयं दद्यात्पर्वस्वेव प्रयत्नतः। ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकादशाधिकशततमः ॥ १११ ॥

## श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे पञ्चनदे पुरा। धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्सङ्गगतः सोऽपि प्रयागे गरुडाग्रज। स स्नातो मृगगे भानौ धूर्तः कर्मक्रियोदितः ॥ २ ॥
संप्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम्। ग्रामे निवसित स्यान्यक्षत्रियस्य पतत्रिण ॥ ३ ॥
ददाह भवनं रम्यं वैरभावात्पुरानघ। तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन संप्राप्तः स गत्वा यमशासनम्। भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना। गङ्गायाः प्राक् परे देशे शतयोजनसंमिते ॥ ६ ॥
स मध्यरूपो बलवान्धर्मे स्वल्पमतिः शठः। वृद्धयाविक्रयचारी च पंचिकः स्वल्पशिश्नभाक्॥७॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः। पुण्यादिदं फलं पापात्पूर्वादत्र शृणु द्विज ॥ ८ ॥
गोबालवत्सकवधाज्जीवघातादपुत्रकः। सप्तवेदमिताब्दान्तं जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः। गोराशिगे शनौ सोमात्पष्ठे जीवे मृगस्थिते ॥ १० ॥
लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि। पूर्वे या स्त्री सहायासीन्मृतवत्साऽत्र सा सुत ॥ ११ ॥

## अरुण उवाच।

निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदनीम्। पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥

## श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधनीम्। पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी ॥ १३॥
तदर्धमितिका वापि द्वयोर्वित्तानुसारतः। संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
माषपर्वद्विमितैर्देयस्तथा पशुपतिः सुत। माषाभ्यां च तथा वह्निर्देया माषचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये। जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेदष्टशतकं रुद्रस्याग्रे विधानतः। यः कुर्याद्विधिवत्सूत प्रायश्चित्तं त्रिधा मतम् ॥ १७ ॥
जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र प्रभाज्ञया। नैवं कुर्याच्च यः शक्त्या त्रिष्वेकं पापशोधनम्॥१८॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः। नवसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना ॥ १९ ॥
सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वादशाधिकशततमः ॥ ११२ ॥

## श्रीसूर्य उवाच।

काश्मीरमण्डले पूर्वं काचिद्द्विजवराङ्गना। पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वैरभावेस्तया सूत गृहं दग्धं द्विजस्य च। वैरिणस्तत्सुतो दग्धो गृहदाहे पतत्रिण ॥ २ ॥
सहायात्स्वामिनः सर्वं प्राग्भवे समुपार्जितम्। तत्पापजं महापापात्फलं प्राप्य वियोनिजाम् ॥ ३ ॥
सैव जाता विराटेऽत्र पतिशुश्रूषणात्सुत। क्षत्रिया धनधर्माढ्या पूर्वपुण्यात्तथा सती ॥ ४ ॥
क्षयरोगयुता बाल्ये बालघातादपुत्रिणी। महाग्निदग्धपुत्राच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशन्मिते वर्षे रिष्टेनैवात्र नश्यति। सहायात्तत्पतिश्चात्र पुत्रहीनः क्षयान्वितः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयोदशाधिकशततमः ॥ ११३ ॥

---

१ पाधिमेदेशे-ख॰पु॰। २ प्रभातात्प्रात्-ख॰पु॰। ३ नाशपराय च ख॰पु॰। ४ तत्पाप तन्महापापात्-ख॰पु॰।

श्रीसूर्य उवाच ।

सारिकां यो महाभाग निहन्यात्पापमोहितः । तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥१॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम् । तथात्र पुस्तकं दद्याच्छास्त्रस्य विधिनाण्डज ॥ २ ॥
पूर्वपापाद्विमुच्येत नरोऽत्र गतकिल्बिषः ।
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्दशाधिकशततमः ॥ ११४ ॥

श्रीसूर्य उवाच ।

सारिकां याऽवधीन्नारी पूर्वं पापविमोहिता । सात्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय च । पूर्वपापात्प्रमुच्येत तद्दानाद्विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पंचदशाधिकशततमः ॥ ११५ ॥

श्रीसूर्य उवाच ।

बकघाती च पुरुषः पूर्वजन्मनि मानद । लम्बकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्वेतां सर्वाभरणभूषिताम् । मुच्यते कण्ठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षोडशाधिकशततमः ॥ ११६ ॥

श्रीसूर्य उवाच ।

या नारी पूर्वजनुषि घातयेद्गरुडाग्रज । बकं सा कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिवत्सूत श्वेतामत्र पयस्विनीम् । यथोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तदशाधिकशततमः ॥ ११७ ॥

अरुण उवाच ।

कश्चिद्विप्रकुले जातो धार्मिष्ठो वित्तसंयुतः । उदरे बाजला रोगा गुल्माद्याश्चोर्ध्वहृद्व्यथाः ॥ १ ॥
मेहाद्याः स्वल्पवीर्याश्च अक्षिपाण्डूदरामयः । जायते शीर्षजा पीडा बाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
शरीरे जायते चिह्नमुपघातव्रणादिकम् । पौत्राणां मातुलानां तु विधवार्तिः स्वस्रादिषु ॥ ३ ॥
दायादाच्छत्रुवत्पीडा भूमिद्रव्यविलिप्सया । ऐहिकानि च लक्ष्माणि जायन्ते तस्य वर्ष्मणि ॥ ४ ॥
तस्य भार्या सदाचारा कदाचिद्दोषवादिनी । गौरवर्णा रम्यवाणी संतोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात् । दशमासानतिक्रम्य गर्भे चोदरसौख्यभाक् ॥ ६ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ।
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टादशाधिकशततमः ॥ ११८ ॥

श्रीसूर्य उवाच ।

पुरुकृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि सा क्षात्री संजाता विनतासुत ॥ १ ॥
अज्ञानतिमिरान्धेन स्त्रीणां कर्म दुरात्मनाम् । अजानती कुलस्त्रीणामाचारमनुकम्पनात् ॥ २ ॥
सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च । प्रमादाद्द्वीपिनं हत्वा सदा निष्ठुरमानसा ॥ ३ ॥
तस्य गेहाश्रिता नित्यं मार्जारश्वानपूर्वकम् । पत्रालक्रीडनपरा गेहे संकलिता भृशम् ॥ ४ ॥
तत्रेषु बालुकाग्न्यम्बुतप्तमसमचयादिषु । अविक्षिप्ता तदा चाग्नौ प्राक्षिपत्पापचेतसा ॥ ५ ॥
बालगर्भाशया बालानभिघ्राणाखिलेन्द्रियान् । तद्दृष्ट्वा त्यजते माता बालानामनुकम्पया ॥ ६ ॥

१ कच्छघाती--खपु० । २ त दश--खपु० ।

मायाबन्धनमातॄणां बालगर्भाश्रिता तदा। अन्यतद्धर्मिणां दृष्ट्वा क्षिप्यन्ते वह्निमस्मसात् ॥ ७ ॥
विनिघ्नन्ति प्रमादाद्यैर्भेदसंततिदुःखभाक् । संततिर्दुःखितायास्तु नानादुःखं प्रजायते ॥ ८ ॥
अनयाग्निं समासाद्य तेषां वैनाशनाय च । तयाविधेषु जीवेषु मृतेष्वपि च तद्वशात् ॥ ९ ॥
म्रियन्ते शिशवस्तेऽपि तस्याग्नेर्दोषचिह्निताः । पाताले ज्वलिते ताभिर्बहवो लघुपाणिनः ॥ १० ॥
गर्भयुक्ता मृता मातृक्षमयापि तथा तया। मार्गो न लभ्यते तत्र मृतास्ते दुःखजन्तवः ॥ ११ ॥
तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजा। त्रिविधापत्यजा बाधा प्राप्यते जन्तुरन्तरे ॥ १२ ॥
जन्तवो गर्भिणो ये के स्वकृतं कर्मबन्धनात् । उभयोः कर्मणो हेतुर्न्वश्यावश्यं प्रयोजकम् ॥ १३ ॥
इदं तु तृतीयं जन्म ब्रह्मवंशसमुद्भवम् । स्थिरगर्भा मृतापत्यपुत्रहीना पतत्रिण ॥ १४ ॥

अरुण उवाच।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते। ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ १५ ॥

श्रीसूर्य उवाच।

सुदिष्टे समनुप्राप्ते ग्रहेऽहनि शुभोदये । प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ १६ ॥
तत्रोपर्यर्धिकं तीर्थं नानाचित्रविचित्रकम्। द्रोणमानं तिलानां तु मध्ये गर्भं प्रपूरयेत् ॥ १७ ॥
निष्कमानं सुवर्णस्य शकलं मध्यतः क्षिपेत्। तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपर्वते ॥ १८ ॥
शुद्धतोयं भृशं ताम्रपात्रे दशपलोन्मितम्। स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ १९ ॥
पूजयेच्च सपत्नीकं कश्यपस्य प्रजापतेः । दण्डं साक्षात्करे दक्षे वामे चाथ कमण्डलुम् ॥ २० ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिं च शुभलक्षणाम्। अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २१ ॥
सम्यक् श्रद्धावती नारी त्रिविधापत्यदुःखिनी। विप्राय वेदविदुषे पूजयेद्विविधैर्धनैः ॥ २२ ॥
ततस्ते तु सपत्नीकं मुनीनां विन्मयेदिति। सदक्षिणं जगत्स्रष्टा पत्नी च तपसो बले ॥ २३ ॥
सा मया तिलसंरूपावद्यो भीस्तीव्रवेदनम्। लङ्घिताखीजनाचारामज्ञानरवाद्यात्मकम् ॥ २४ ॥
नाशयेत्तस्य पापस्य देवि प्राप्तं विगर्हितम्। सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी ॥ २५ ॥
सपत्नीकस्य सौवर्णनिर्मितं सम्यगर्चितम् । विप्राय वेदविदुषे प्रदद्याद्गुणशालिने ॥ २६ ॥
एवमामन्त्र्य ता मूर्तीः समादाय पृथक्पृथक्। प्रदद्याद्दानविधिना श्रद्धया च सदक्षिणाः ॥ २७ ॥
दानान्ते कीर्तयेन्मन्त्रं तिष्ठन्ती विहिताञ्जलिः।

मन्त्रः।

"मया पूर्वजनुषि दयारहितचित्तया। कृतं चाप्यशुभं स्वामिंश्छिन्धि तद्विघ्नकारणम्" ॥ २८ ॥
दत्त्वा दानं च विप्राय सर्पिष्यात्मानमीक्षयेत् ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनविंशत्यधिकशततमः ॥ ११९ ॥

श्रीसूर्य उवाच।

काकघाती महाभाग प्राग्भवे चात्र जन्मनि। कूर्चहीनो भवेन्मर्त्यः स च तत्पापलाञ्छितः ॥ १ ॥
कृष्णधेनुप्रदानेन विधिनाऽत्र खगाधिप। मुच्यते दुष्टपापाच्च कूर्चयुक् चात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो विंशत्यधिकशततमः ॥ १२० ॥

---

१ स्वल्पजन्तवः–खपु०। २ जलसंस्था–खपु०। ३ मम कृत्वा दयात्मना–खपु०। ४ नाशाय तस्य–खपु०।

श्रीसूर्य उवाच ।

या नारी घातयेत्काकं विनतानन्दवर्धन । सात्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवेदलम् ॥ १ ॥
कृष्णधेनुप्रदानेन यथोक्तं गरुडाग्रज । पूर्वकर्मविशुद्धिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकविंशत्यधिकशततमः ॥ १२१ ॥

श्रीसूर्य उवाच ।

अभक्ष्यभक्षको यस्तु भवेत्माद्या नवोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते क्रिमिलोदरः ॥ १ ॥
सभीष्मपञ्चकादत्र व्रतात्पुण्यसमर्जनात् । मुच्यते पूर्वरोगाच्च दुष्टात्स क्रिमिलोदरात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वाविंशत्यधिकशततमः ॥ १२२ ॥

श्रीसूर्य उवाच ।

याऽभक्ष्यं भक्षये नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः क्रिमिजोत्थरुजा सुत ॥ १ ॥
तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम् । कार्तिके शुक्लपक्षे च प्रान्तस्थं दिनपञ्चकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्यधिकशततमः ॥ १२३ ॥

श्रीसूर्य उवाच ।

दुष्टस्पर्शेन यो मोहाद्भक्षयेद्विधिवर्जितः । सिद्धान्नानि पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥
विष्णुव्रतान्महापुण्यात्सर्वपापप्रणोदनम् । तदा कृशोदरत्वं च रुजं नात्र प्रपश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्विंशत्यधिकशततमः ॥ १२४ ॥

श्रीसूर्य उवाच ।

भुक्तं यया पुरा सूत सिद्धान्नं द्विजभार्यया । दुष्टस्पर्शेन सततं सात्र स्याच्च कृशोदरी ॥ १ ॥
सा वैष्णवव्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते । कृशोदरव्यथा नश्येत्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चविंशत्यधिकशततमः ॥ १२५ ॥

श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनधान्यसमन्वितः ॥ १ ॥
कृतानि तेन दानानि नानापर्वसु शक्तितः । वेदयुक्तेषु विप्रेषु सत्पात्रेषु विधानतः ॥ २ ॥
यया पापं भृशं चक्रे व्यभिचारसमुद्भवम् । ज्येष्ठां त्यक्त्वा ऋतुस्नातां धर्मशीलयुतां प्रियाम् ॥३॥
रतिं ददौ कनिष्ठायामनृतौ च विमोहितः । ततो यमपुरे प्राप्तः ससहायो द्विजोत्तमः ॥ ४ ॥
भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलानि च । श्रद्धादानवशात्सोऽत्र गङ्गायाः पूर्वभागजः ॥ ५ ॥
लघुवृष्णी त्वभितश्रो द्विजवंशसमुद्भवः । सर्वमेतत्फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ६ ॥
स्त्रीत्यागी भ्रूणहा लोके इति पौराणिका विदुः । येषां साहाय्यतः पूर्वं शृणुष्व विनतासुत ॥ ७॥
प्राग्भवे या कनिष्ठाभूत्सा ज्येष्ठात्र गतप्रजा । गर्भदोषयुता चेति लक्षगर्भक्षयेत्खग ॥ ८ ॥
वक्ष्यामि निष्कृतिं तस्य पूर्वपापविनाशनीम् । कुर्यात्पर्वदोषैर्मितैर्गणेशं विघ्ननाशनम् ॥ ९ ॥
तदर्धार्धमितं देयं विप्रे वित्तादिमं पठन् । त्यक्त्वा वरानना शुद्धा पूर्वं पापं समर्जितम् ॥ १० ॥
तत्पापस्य विनाशाय दद्देद्गं गणनायकम् । माषसप्तमितां लक्ष्मीं शुभां लेरुगां हिरण्मयीम् ॥११॥

१ प्रेत्या च विशुद्धिः स्यात्-खपु० । २ पूर्वरोगात्तु-खपु० ।

दद्देऽहं विप्रमुख्ये वै वेदशास्त्रविशारदे। ब्राह्मणान्वरयेत्तत्र शक्त्या दद्याच्च दक्षिणाम् ॥ १२ ॥
एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः[1] श्रुतेनं शक्तिमान्यस्तु न कुर्याच्छोवनं गदे ॥१३॥
स पुत्रान्नैव चाऽऽप्नोति रिष्टे पञ्चाशदब्दके। प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम् ॥ १४ ॥
अन्यजन्मादिकं ज्ञेयं विस्तरं नोदितं मया।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षड्विंशत्यधिकशततमः ॥ १२६ ॥

---

## श्रीसूर्य उवाच।

देशे पश्चनदे जाता बाहुजा पूर्वजन्मनि। सात्र जन्मनि वै विप्रा जाता प्राग्विप्रपूजनात् ॥ १ ॥
प्राग्यत्तया कृतं कर्म शृणुष्वात्र खगेश्वर। ब्राह्मणेन महद्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न तद्दत्तं पुनस्तस्मै भुक्तं सर्वमशेषतः। मृतो द्विजस्तद्दुःखेन क्षुधितस्तु पतत्रिण ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तया। पञ्चत्ववशमापन्ना मुक्त्वा तु यमशासनम् ॥ ४ ॥
पुत्रसंततिहीनात्र युवभावे क्षयान्विता। निष्कृतिं परमां तस्या वक्ष्येऽहं पापनाशनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा। कदलीपत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः। क्षयनाशकराः सर्वे भविष्यन्त्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तविंशत्यधिकशततमः ॥ १२७ ॥

---

## श्रीसूर्य उवाच।

पूर्वजन्मनि भो सूत चोच्छिष्टं भक्षयेत्तु यः। रात्र्यन्धो जायते सोऽपि जन्मन्यत्र च मानवः ॥१॥
भोजयेद्ब्राह्मणाञ्छक्त्या गोमूत्रं प्राशयेत्तथा। मुच्यते तत्क्षणात्सूत नक्तान्ध्यत्वान्न संशयः ॥२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाविंशत्यधिकशततमः ॥ १२८ ॥

---

## श्रीसूर्य उवाच।

या भक्षयेत्पुरा नारी चोच्छिष्टं सा शुभानना। नक्तान्ध्या जायते ह्यत्र व्यथिता नेत्रपीडया ॥१॥
गोमूत्रप्राशनादत्र ब्राह्मणेभ्यश्च भोजनात्। नक्तान्ध्यरोगान्मुक्ता स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनत्रिंशदधिकशततमः ॥ १२९ ॥

---

## श्रीसूर्य उवाच।

बिडालोच्छिष्टभोजी च रात्र्यन्धो जायतेऽधुना। स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥ १॥
भोजयेच्च तथा विप्राञ्शक्त्या दद्याच्च दक्षिणाम्। रात्र्यन्ध्यरोगात्सकलं मुक्तो भवति मानवः॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिंशदधिकशततमः ॥ १३० ॥

---

## श्रीसूर्य उवाच।

बिडालोच्छिष्टभुङ् नारी भाम्भवे विनतासुत। रात्र्यन्ध्यरोगयुक्ता सा चात्र जन्मनि जायते ॥१॥
द्विजेभ्यो भोजनाच्चैव गोमूत्रप्राशनात्तथा। विमुच्यते प्राक्पापात्तु बिडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकत्रिंशदधिकशततमः ॥ १३१ ॥

---

१. पुत्रान्नोपसर्पन्ति इति–खपु०।

श्रीसूर्य उवाच ।

चाण्डाल्यां गमनात्पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र शतावृत्तिकृतात्सुत । मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वात्रिंशदधिकशततम: ॥ १३२ ॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनतासुत । चण्डालं प्राप्नुयात्सात्राजगरी जायतेऽण्डज ॥ १ ॥
प्राजापत्यव्रतबलात्कृतात्पश्चापवर्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्रशतात्रिण ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयस्त्रिंशदधिकशततमः ॥ १३३ ॥

श्रीसूर्य उवाच ।

पराग्निविघ्नकारी यो भवेद्वै पूर्वजन्मनि । सोऽजीर्णेनातिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमेन कृतेन गरुडाग्रज । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुस्त्रिंशदधिकशततम: ॥ १३४ ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सूत या नारी पूर्वजन्मनि । पराग्नेषु सदा मोहाच्छृणु तत्र पतत्रिण ॥ १ ॥
अजीर्णेनैव रोगेण बाध्यते पीडया महत् । लक्षहोमेन सततं तत्पापान्मुच्यतेऽधुना ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय: पञ्चत्रिंशदधिकशततम ॥ १३५ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यनित्यसदाचारः साधुसेवकसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि । किलासा दद्रुकण्डूश्च नेत्रतोदो[1] विरश्मिता ॥ २ ॥
किंचिच्छ्दः प्रजायेत तद्भूते कारणं विना । तस्य भार्या सुतन्वङ्गी सीधर्मव्रतचारिणी ॥ ३ ॥
तस्याः कुक्षौ व्यथा वातिर्मूर्ध्नि पीडा प्रजायते । मृतवत्सा कथं जाता पुत्रपुत्र्यो मृता तथा ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ।

श्रीसूर्य उवाच ।

पूर्वे वैश्यसमुत्पन्ना प्रिया शूद्रापतारिता ॥ ५ ॥
बहुव्यापारनिरता बहुद्रव्यसमन्विता । शूद्रायान्ते च संबन्धो बहुकालो गतागतः ॥ ६ ॥
अन्योन्यं प्रीतिवशतः किंचित्कालो यथा गतः । उभयोः कर्मणो हेतुर्धनापहरणं यतः ॥ ७ ॥
तयोः शूद्रोऽभवद्योऽसौ तेन तत्रैव जन्मनि । ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालंकरणैर्युतः ॥ ८ ॥
धनलोभाद्धतस्तेन भाविनोऽर्थस्य वै बलात् । तस्याथ मातापितरौ पुत्रदुःखेन दुःखितौ ॥ ९ ॥
द्विस्त्रिवर्षैस्तया मासैर्वयसा च समन्वितौ । धनलोभवशात्तौ वै दुश्चित्तेन संगतौ ॥ १० ॥
अचिराच्च मृतौ तत्र गतौ वै यमशासनम् । तद्देहमुद्दसं जातं ब्राह्मणस्य ततः खग ॥ ११ ॥
तेन कर्मविपाकेन नरके पाचितौ भृशम् । पश्चान्मानुषमापन्नौ व्रतदानप्रभावतः ॥ १२ ॥
इदं चतुर्थकं जन्म मृतापत्यं खगेश्वर । द्वित्र्यादिमासैर्जातानां मृतिर्द्वित्र्यादिहायनैः ॥ १३ ॥
मृतः पुत्रो भवत्यत्र जातोजात स्तथैव च । इदं जीवेदिदं जीवेदित्याशामपि चं ब्रुवन् ॥ १४ ॥

1 नेत्रस्रंदो-खपु० । २ मृ०-रुपु० ३ । वाप्नुयात्-खपु० ।

जाताजाता विनश्यन्ति न कृता तस्य निष्कृतिः।एवं यदि चिरं स्थित्वा नाऽचिरान्म्रियते परम्१५
सुगुणाश्च सुरूपाश्च ललनाचाटुकारिणः । नश्यन्तु जातजातेषु जन्मजन्मसु तेषु च ॥ १६ ॥
व्याध्यन्तरे भवेद्व्याधिर्ग्रस्तो व्यसनवानयम् । नास्ति सौख्यलवोऽप्यस्य नानाशङ्कितचेतसः ॥१७॥
धनमस्ति तथाप्यत्र परापत्यानि पश्यतः । लक्षणानि पुरोक्तानि चास्यैमान्यपि कीर्तयेत् ॥१८॥
स्वोदरे म्रियते बालः स वै ब्राह्मण उच्यते । मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत् ॥ १९ ॥
स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः । दौर्मनस्यं महाव्याधिः शोकसंघः प्रजायते ॥२०॥
अदृष्टगुणलावण्या अदृष्टाननकान्तयः । म्रियन्ते जातमात्रा वै पुत्रा अकृतचाटवः ॥ २१ ॥
एवं तु कर्माणि ज्ञाते प्रायश्चित्तमथाचरेत् ।

अरुण उवाच ।

का तस्य निष्कृतिरिह कर्मपाशनिषूदनी । कथ्यतां दिवसेशान नारीणां हितकाम्यया ॥ २२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि मृतवत्सावनाशिनीम् ॥ २३ ॥
निष्कृतिं विधिवत्ताक्ष्र्य संततेः सौख्यहेतवे । यजमानः सपत्नीको विधिवद्विधिमाचरेत् ॥ २४ ॥
पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित् । सिद्धार्थाक्षतदूर्वाभिः कृतरक्षः प्रतिष्ठितः ॥२५॥
स्नापयेदोषधैर्मन्त्रैर्वारुणैर्विष्णुसूक्तिभिः । सुदिने सुशुभे देशे गोमयाद्युपलिप्तके ॥ २६ ॥
तत्रोपर्यात्विकं स्तीर्त्वा कृष्णाजिनमथापि वा । द्रोणमानं तिलानां तु कृष्णवस्त्रेण संयुतम्॥२७॥
स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् । सौवर्णीं प्रतिमां तत्र बालगोपालसंयुताम् ॥ २८ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिलक्षणलक्षणैः । अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि ॥ २९ ॥
सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी । आहूय विदुषो विप्रांस्तथैव वेदवादिनः ॥ ३० ॥
अलोलुपान्सदाचारान्संपूज्याऽर्घ्यादिकैश्च तान् । "पूर्वजन्मार्जितं पापं द्रोहमापाद्य बालके ॥३१॥
भूमिद्रविणहेमाद्यैलिप्सया तद्धि नश्यतु । नाशयत्वस्य पापस्य फलं ह्यशुभलक्षणम् ॥ ३२ ॥
ततस्तु मम संप्राप्तं मृतसंततिजं चकम् । तस्मान्मोच्या महाभागार्पितगोदानतोषिताः ॥" ३३ ॥
इति तं त्रिःपरिक्रम्य प्रार्थयेत विचक्षणा । अनेनेमोति मन्त्रेण विसृज्य प्रीतमानसा ॥ ३४ ॥
धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि । ब्राह्मणान्भोजयेत्सम्यक् शतं साग्रं यथाविधि॥३५॥
सर्पिष्यात्मानमालोक्य भोजयेदिष्टबान्धवान् । इहैव लक्ष्म विज्ञेयं मातृबन्धुसुखोदितम् ॥ ३६ ॥
स्वसुतासुखसौख्यानां संतोषो निजपुत्रवत्[१] । विरुध्यन्तेऽप्यपत्यानि तादृशानि मिथः कियान् ३७
विकारो विकृतो लीयात्मने पादकृतम् । पैतृजा मातुलान्यां तु कासगुल्मभवा व्यथा ॥ ३८ ॥
मृतापत्यार्दितस्तस्याः पतिः पापादिभेदतः । तथानयात्र दुःखानि जायन्तेऽस्य मुहुर्मुहुः ॥३९॥
पूर्वकर्मार्जितं पापं चिह्नं तस्य च वर्ण्यते ।

इति श्रीस्कन्दसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्त्रिंशदधिकशततमः ॥ १३६ ॥

श्रीसूर्य उवाच ।

विप्राय यो विषं दद्याद्धातार्थं पूर्वजन्मनि । सोऽत्र जन्मनि पक्षीन्द्र च्छर्दिरोगेण बाध्यते ॥ १ ॥
निष्कृतिर्नास्ति तस्यात्र पापस्य दृढकर्मणः । छर्दिरोगेण सततं मृत्वा नाशमवाप्नुयात् ॥ २ ॥
प्रायश्चित्तं न तस्यात्र दानैरपि सहस्रशः ।

इति श्रीस्कन्दसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्रिंशदधिकशततमः ॥ १३७ ॥

---

१ निजपुत्रजात्—स्पु० ।

श्रीसूर्य उवाच ।

चाण्डाल्या गमनात्पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र शताश्वत्तिकृतात्सुत । स मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वात्रिंशदधिकशततम ॥ १३२ ॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनतासुत । चण्डालं प्राप्नुयात्साऽजगरी जायतेऽण्डज ॥ १ ॥
प्राजापत्यव्रतनलात्कृतात्पश्चात्पवर्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्र पतत्रिण ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयस्त्रिंशदधिकशततम ॥ १३३ ॥

श्रीसूर्य उवाच ।

परान्नविघ्नकारी यो भवेद्वै पूर्वजन्मनि । सोऽजीर्णेनातिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमेन कृतेन गरुडाग्रज । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुस्त्रिंशदधिकशततम ॥ १३४ ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सूत या नारी पूर्वजन्मनि । परान्नेषु सदा मोहाच्छृणु तत्र पतत्रिण ॥ १ ॥
अजीर्णेनैव रोगेण बाध्यते पीडया महत् । लक्षहोमेन सततं तत्पापान्मुच्यतेऽधुना ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चत्रिंशदधिकशततम ॥ १३५ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यनित्यसदाचारः साधुसेवकसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि । किलासा दद्रुकण्डूश्च नेत्रतोदो विरश्मिता ॥ २ ॥
किंचिद्रुदः प्रजायेत तद्भूते कारणं विना । तस्य भार्या सुतन्वङ्गी स्त्रीधर्मव्रतचारिणी ॥ ३ ॥
तस्याः कुक्षौ व्यथा वातमूर्ध्नि पीडा प्रजायते । मृतवत्सा कथं जाता पुत्रपुत्र्यो मृता तथा ॥ ४ ॥
केन कर्मविपाकेन तस्य कथय भास्कर ।

श्रीसूर्य उवाच ।

पूर्वं वैश्यसमुत्पन्ना प्रिया शूद्रापतारिता ॥ ५ ॥
बहुव्यापारनिरता बहुद्रव्यसमन्विता । शूद्रायान्ते च संबन्धो बहुकालो गतागतः ॥ ६ ॥
अन्योन्य प्रीतिवशतः किंचित्कालो यथा गतः । उभयोः कर्मणो हेतुर्धनापहरणं यतः ॥ ७ ॥
तयोः शूद्रोऽभवद्योऽसौ तेन तत्रैव जन्मनि । ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालंकरणैर्युतः ॥ ८ ॥
धनलोभाद्धतस्तेन भाविनोऽर्थस्य वै बलात् । तस्याथ मातापितरौ पुत्रदुःखेन दुःखितौ ॥ ९ ॥
द्विनिर्वर्षैस्तथा मासैर्वयसा च समन्वितौ । धनलोभवशाच्चौ वै दुश्चित्तेन मृगता ॥ १० ॥
अचिराच्च मृतौ तत्र गतौ वै यमशासनम् । तदेहसुदसं जात ब्राह्मणस्य ततः खग ॥ ११ ॥
तेन कर्मविपाकेन नरके पाचितौ भृशम् । पश्चान्मानुषमापन्नौ व्रतदानप्रभावतः ॥ १२ ॥
इदं चतुर्थकं जन्म मृतापत्य खगेश्वर । द्वित्र्यादिमासैर्जाताना मृतिर्द्वित्र्यादिहायनैः ॥ १३ ॥
मृतः पुत्रो भवत्यत्र जातोजात स्तथैव च । इदं जीवेदिदं जीवेदित्याशामपि च स्रुवन् ॥ १४ ॥

१ नेत्रभेदो–ख॰ पु॰ । २ पू॰–ख॰ पु॰ ३ । वाप्नुयात्–ख॰ पु॰ ।

जाताजाता विनश्यन्ति न कृता तस्य निष्कृतिः।एवं यदि चिरं स्थित्वा नाऽचिरान्म्रियते परम्॥१५
सुगुणाश्च सुरूपाश्च ललनाचाटुकारिणः। नश्यन्तु जातजातेषु जन्मजन्मसु तेषु च ॥ १६ ॥
व्याध्यन्तरे भवेद्व्याधिग्रस्तो व्यसनवानयम्। नास्ति सौख्यलवोऽप्यस्य नानाशङ्कितचेतसः ॥१७॥
धनमस्ति तथाप्यत्र परापत्यानि पश्यतः। लक्षणानि पुरोक्तानि चास्येमान्यपि कीर्तयेत् ॥१८॥
स्वोदरे म्रियते बालः स वै ब्राह्मण उच्यते। मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत् ॥ १९ ॥
स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यवस्ततः। दौर्मनस्यं महानाधिः शोकसंघः प्रजायते ॥२०॥
अदृष्टगुणलावण्या अदृष्टाननकान्तयः। म्रियन्ते जातमात्रा वै पुत्रा अकृतचाटवः ॥ २१ ॥
एवं तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत्।

अरुण उवाच।

का तस्य निष्कृतिरिह कर्मपाशनिषूदनी। कथ्यतां दिवसेशान नारीणां हितकाम्यया॥ २२ ॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि मृतवत्साघनाशिनीम् ॥ २३ ॥
निष्कृतिं विधिवत्तार्क्ष्य संततेः सौख्यहेतवे। यजमानः सपत्नीको विधिवद्विधिमाचरेत् ॥ २४ ॥
पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित्। सिद्धार्थाक्षतदूर्वाभिः कृतरक्षः प्रतिष्ठितः ॥२५॥
स्नापयेदोषधैर्मन्त्रैर्वारुणैर्विष्णुसूक्तिभिः। सुदिने सुशुभे देशे गोमयाद्युपलिप्तके ॥ २६ ॥
तत्रोपर्यार्विकं स्तीर्त्वा कृष्णाजिनमथापि वा। द्रोणमानं तिलानां तु कृष्णवस्त्रेण संयुतम्॥२७॥
स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम्। सौवर्णीं प्रतिमां तत्र बालगोपालसंयुताम् ॥ २८ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तित्वशुभलक्षणैः। अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि ॥ २९ ॥
सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी। आहूय विदुषो विप्रांस्तथैव वेदवादिनः ॥ ३० ॥
अलोलुपान्सदाचारान्संपूज्याऽर्घ्यादिकैश्च तान्। "पूर्वजन्मार्जितं पापं द्रोहमापाद्य बालके ॥३१॥
भूमिद्रविणहेमाद्यैर्लिप्सया तद्धि नश्यतु। नाशयत्वस्य पापस्य फलं ह्यशुभलक्षणम् ॥ ३२ ॥
ततस्तु मम संप्राप्तं मृतसंततिजं यकम्। तस्मान्मोच्या महाभागार्पितगोदानतोषितः ॥" ३३ ॥
इति तं त्रिःपरिक्रम्य प्रार्थयेत विचक्षणा। अनेनयोति मन्त्रेण विसृज्य प्रीतमानसा ॥ ३४ ॥
धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि। ब्राह्मणान्भोजयेत्सम्यक् शतं साग्रं यथाविधि॥३५॥
सपिण्ड्यात्मानमालोक्य भोजयेदिष्टवान्धवान्। इदं च लक्ष्म विज्ञेयं मातुलन्सुसुतोदितम् ॥ ३६ ॥
स्वसुतासुखसौख्यानां संतोषो निजपुत्रवत्[1]। विरुध्यन्तेऽप्यपत्यानि तादृशानि मिथः क्रियान् ३७
विकारो विकृतो लीयात्मने पादवेक्रतम्। पतृजा मातुलान्यां तु कासगुल्मभवा व्यथा ॥ ३८ ॥
मृतापत्यार्दितस्तस्याः पतिः पापादिभेदतः। तयानयात्र दुःखानि जायन्तेऽस्य मुहुर्मुहुः ॥३९॥
पूर्वकर्मार्जितं पापं चिह्नं तस्य च कर्मणि।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्त्रिंशदधिकशततमः ॥ १३६ ॥

---

श्रीसूर्य उवाच।

विप्राय यो विषं दद्याद्घातार्थं पूर्वजन्मनि। सोऽत्र जन्मनि पक्षीन्द्र च्छर्दिरोगेण बाध्यते ॥ १ ॥
निष्कृतिर्नास्ति तस्यात्र पापस्य दृढकर्मणः। छर्दिरोगेण सततं युवा नाशमवाप्नुयात् ॥ २ ॥
प्रायश्चित्तं न तस्यात्र दानैरपि सहस्रशः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्रिंशदधिकशततमः ॥ १३७ ॥

---

१ निजपुत्रजात्-स्पु०।

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत विषं दद्याद्द्विजातये । छर्दिरोगेण सात्रैव निश्चितं नाशमाप्नुयात ॥ १ ॥
न पापशोधनं प्रोक्तं तस्यास्तु गरुडाग्रज । ब्राह्मणस्य वधाचस्य प्रायश्चित्तं क विद्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टात्रिंशदधिकशततमः ॥ १३८ ॥

श्रीसूर्य उवाच ।

परस्मै या विषं दद्यात्पूर्वजन्मनि मानद । छर्दिरोगेण सात्रैव बाध्यते पीडया मुहुः ॥ १ ॥
धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् । मुच्यते च्छर्दिरोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनचत्वारिंशदधिकशततम ॥ १३९ ॥

श्रीसूर्य उवाच ।

या काचिन्मागधी ह्यासीज्जाता ब्रह्महदे सुत । सा चात्र यवनी देशे शुभे पञ्चनदेऽण्डज ॥ १ ॥
पुत्राभिलाषिणी यस्मादभजद्यवनं पुरा । तस्मात्सा यवनी जाता पुत्रसंततिवर्जिता ॥ २ ॥
नानाधनयुता दानात्कुरुक्षेत्रे पुराऽनघ । शिवभक्तिपरा तस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
अत्र जन्मनि सा चेद्वै विष्णुभक्तिरता भवेत् । तेन पुत्रसुखप्राप्तिर्नान्यथा गरुडाग्रज ॥ ४ ॥
मृकोऽत्र जायते जन्तुर्यः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चत्वारिंशदधिकशततमः ॥ १४० ॥

श्रीसूर्य उवाच ।

कोटिः कोट्यर्धं लक्षं वा रुद्रपूजनजाद्व्रतात् । पुत्रपौत्रयुता नारी भवत्येव न संशयः ॥ १ ॥
अथवा हरिवंशस्य शतावृत्तेर्विधानतः । श्रवणात्पूर्वजातपापान्मुच्यते विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकचत्वारिंशदधिकशततम ॥ १४१ ॥

श्रीसूर्य उवाच ।

देवालयेऽवसत्कश्चिद्ब्राह्मणः पूर्वजन्मनि । विष्णुपूजारतो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौर्येणापहृतं द्रव्यं यत्स्थितं देवताश्रमे । तेनेदं दुष्कृतं सूत कृतं कर्मातिदारुणम् ॥ २ ॥
न तेन कर्मणा युक्तो भुक्तवान्पापजं फलम् । जातो गङ्गाश्रवे क्षत्री पर्वते पूजनाद्धरेः ॥ ३ ॥
बहुद्रव्यान्वितो भूपः सर्वसंपत्सुखान्वितः । बाले हि पाण्डुरोगार्तश्चात्र जन्मनि मानवः ॥ ४ ॥
देवद्रव्यापहारीति पाण्डुरोगी प्रजायते । तत्पापनाशनं पुण्यमुपायं शृणु तत्त्वतः ॥ ५ ॥
कुर्याद्धिरण्मयीं पृथ्वीं ससमुद्रां पलात्मिकाम् । सवनां सागरोपेतां सप्तद्वीपां वसुंधराम् ॥ ६ ॥
गन्धपुष्पैरलंकृत्य दद्याद्विप्राय धीमते । पाण्डुरोगाद्विमुक्तः स्यादत्र जन्मनि मानवः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विचत्वारिंशदधिकशततम ॥ १४२ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे प्रादाद्विषं कस्यापि काश्यप । सात्र जन्मनि रोगेण च्छर्दिसंज्ञेन पीड्यते ॥१॥
धनूनां दशकं दद्यादशक्तौ गरुडाग्रज । सवत्सां कपिलां दद्यात्सा तद्दोषाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिचत्वारिंशदधिकशततम ॥ १४३ ॥

---

१ सा चैत्र-स्पु० ।

श्रीसूर्य उवाच ।

कश्चिद्विप्रो ह्यभूदङ्गे प्राग्भवे धर्मसंयुतः । परस्य कन्यायाश्चासावुद्वाहमकरोत्सुधीः ॥ १ ॥
दानालपत्वान्महाभाग चकाराल्पविधानवः । स चचार वने सूत मार्गलुण्ठनतत्परः ॥ २ ॥
काचित्सुनयना सूत प्राप्ता भाविनलात्तदा । नानाभरणयुक्ता सा पूर्णगर्भसमन्विता ॥ ३ ॥
सा लुण्ठिताऽत्र त्रासिता तेन पापधियाण्डज । सहायैः सा परित्यक्ता ताडनादाकुला भृशम् ॥४॥
तद्भयादि च्युतौ पुत्रौ पापमाचरितं त्विदम् । ततो धर्मपुरं प्राप्तः पुण्यपापसमन्वितः ॥ ५ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापं पतत्त्रिण । परकन्याविवाहेन स जातो वाहुजोऽधुना ॥ ६ ॥
गङ्गायाः पूर्वभागे तु दशयोजनसंमिते । गौरस्वरूपः क्षीणाङ्गो बहुद्रव्यपराक्रमः ॥ ७ ॥
पित्ताधिकोऽतिमतिमान्बहुपुत्रीभिरन्वितः । जातपुत्रैर्मृतैस्त्वत्र पूर्वपापात्तथाण्डज ॥ ८ ॥
विन्मयं तत्प्रवक्ष्यामि येन पापात्प्रमुच्यते । पलार्धार्धमितेनैव कार्या सुघटिता सुत ॥ ९ ॥
वाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता । पूर्वपापविनाशाय सा देया ब्राह्मणाय वै ॥ १० ॥
गन्धैः पुष्पैः समभ्यर्च्य मन्त्रैः प्रणवपूर्वकैः । वेधसं तत्र सौवर्णं सुवर्णैकमितं शुभम् ॥ ११ ॥
दद्याज्जपेच्च मन्त्रांश्च तल्लिङ्गान्विधिपूर्वकम् । होमयेच्च यवांस्तत्र युतांस्तण्डुलसर्षपैः ॥ १२ ॥
ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ।शृणुयाद्धरिवंशं वा शतावृत्त्या विधानतः ॥ १३ ॥
गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते । तस्मात्पुत्रसुखं लाभश्चात्र जन्मनि वै ध्रुवम् ॥१४॥
रिष्टं पञ्चाशदब्दे तु प्रायश्चित्तेऽकृते सुत । वेदसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽत्र वै ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुश्चत्वारिंशदधिकशततमः ॥ १४४ ॥

श्रीसूर्य उवाच ।

व्यभिचाररता पूर्वं यात्रापि व्यभिचारिणी । साऽऽगता नरकाद्घोरादसती पापजाण्डज ॥ १ ॥
न शुध्यत्यशुभाचारा प्रायश्चित्तः शतैरपि । वाराणस्यां गतिश्चास्या वासोऽत्र विनतासुत ॥ २॥
मुच्यते सर्वपापाच्च पूर्वजन्मकृताद्दृढात् । वाराणस्यां चतुर्दश्यां शिवपूजनजागृतात् ॥ ३ ॥
वाहुजेयं महाभाग पूर्वेऽप्यत्रापि वाहुजा । वन्ध्या प्रजायते दुःखाकुला साऽत्रापि पक्षिराट् ॥४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चचत्वारिंशदधिकशततमः ॥ १४५ ॥

श्रीसूर्य उवाच ।

यः कृत्वा धूर्ततां पूर्वं वञ्चयेद् ब्राह्मणं सुत । सोऽत्रापस्मारगेण पीड्यते बहुपीडया ॥ १ ॥
तेनैव पापरोगेण म्रियतेऽत्र पतत्त्रिण । प्रायश्चित्तं मया नोक्तं पापे ब्राह्मणवंचने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्चत्वारिंशदधिकशततमः ॥ १४६ ॥

श्रीसूर्य उवाच ।

या भ्रातृघातिनी नारी प्राग्भवे विनतासुत । सात्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
ज्ञानान्महापापकृताच्च चोक्ता निष्कृतिर्मया । ज्ञात्वा ब्रह्मवधे सूत प्रायश्चित्तं न तत्समम् ॥ २ ॥
सप्तजन्मनि मूकत्वं जायते महदेनसः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तचत्वारिंशदधिकशततमः ॥ १४७ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि वारुजः । देवद्रव्यापहरणात्प्रागत्राऽक्षिमपीडनम् ॥ १ ॥
विंशद्वर्षे व्यतीते च नेत्ररोगः प्रजायते । तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग नेत्ररोगं न पश्यति । भोजयेच्छक्तितो विप्रान्विष्णवाञ्छ्रद्धया सुत ॥ ४ ॥
कृत्वाऽनेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायेऽष्टचत्वारिंशदधिकशततमः ॥ १४८ ॥

श्रीसूर्य उवाच ।

सर्वस्नेहहरः कश्चिद्योऽभवत्पूर्वजन्मनि । सोऽत्र जन्मनि जायेत क्षयरोगसमन्वितः ॥ १ ॥
प्रायश्चित्तं परं तस्य वित्ततुर्यांशभागतः । कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः । कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनपञ्चाशदधिकशततम ॥ १४९ ॥

श्रीसूर्य उवाच ।

ब्रह्मवादरता ह्यत्र या पूर्वेऽभूत्पतिव्रता । पतिवाक्यप्रमाणात्तु गतिं प्राप्य हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी पार्वत्या सह मोदते । भुनक्ति भोगान्सर्वान्वै पतिं प्राप्य तपस्विनी ॥ २ ॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चाशदधिकशततमः ॥ १५० ॥

श्रीसूर्य उवाच ।

यो ज्ञानात्कृतवान्सत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं लभते क्वापि मानवः ॥ १ ॥
चान्द्रायणत्रयं कुर्याद्विधिवत्पापशोधनम् । पुस्तकं च तथा दद्यात्सुवर्णपलसंयुतम् ॥ २ ॥
एवं यः कुरुते सून स तत्पापात्प्रमुच्यते । न जायतेऽत्र मूकत्वं कदाचिद्विनतासुत ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायएकपञ्चाशदधिकशततमः ॥ १५१ ॥

श्रीसूर्य उवाच ।

या धूर्ता वञ्चयेत्कापि लोभात्पूर्वभवेऽण्डज । साऽत्र जन्मनि रोगेणाऽपस्मारेण प्रपीडिता ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं सुत । ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विपंचाशदधिकशततम ॥ १५२ ॥

अरुण उवाच ।

कश्चिद्द्विजोत्तमो जातो धर्मिष्ठो वित्तसंयुतः । उदरे वायुरल्पीयाञ्शिरसोऽर्तिश्च प्रजायते ॥ १ ॥
शरीरे जायते चिह्नं किंचिद्व्रणसमन्वितम् । दद्रुकण्डूकिलासानां गमने पादवक्रतिः ॥ २ ॥
कर्मानुसारतो व्याधिचिह्नं तस्य सदाखिलम् । भार्या प्रीतिपरा नित्यं कदाचित्कलहप्रिया ॥ ३ ॥
रोगयुक्ता मिताहारा प्रदरार्तिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

स्वस्त्रिया सहितो विप्रः कुलीनो बहुयाचकः । गतश्चैव महारण्येऽस्त्रैतत गर्भसंयुता ॥ ५ ॥
बहवोऽन्ये समायाताः शत्रुभिः परिवेष्टिता । तत्र भीता तदा क्षीणा त्रसन्ती च महावने ॥ ६ ॥

गर्भपातोऽभवत्तत्र सत्वरं च ततो मृतः । तेन कर्मविपाकेन म्रियन्तेऽस्या हि बालकाः ॥ ७ ॥
केचिज्जीवन्ति षण्मासं केचिद्वर्षाधिकं सुत । बहुकालो भवेत्किंचिन्मृतिचिह्नं प्रजायते ॥ ८ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ९ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्न एष सुदुर्लभः । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्ताघनाशनम् ॥ १० ॥
गोत्रयं वै सुवर्णाढ्यं सौवर्णं निष्कसंयुतम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ११ ॥
कर्मप्रकाशकं विप्रं पूजयेद्विधिपूर्वकम् । एवं प्रकुरुते वत्स निष्कृतिस्तस्य कर्मणः ॥ १२ ॥
पुत्रपौत्रादिसंयुक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥ १३ ॥
स याति पापदोषेण भूमिं जन्मनिजन्मनि । एवं यः कुरुते भक्त्या प्राप्नोति पुत्रपौत्रकम् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिपंचाशदधिकशततमः ॥ १५३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्काचिन्नारी भर्तृप्रियान्विता । दक्षा सर्वक्रियास्वेव बहुदानप्रदायिका ॥ १ ॥
पार्श्वस्थस्य च शूद्रस्य गृहान्नीतानि मानद । सर्वस्नेहानि चौर्येण सर्वशून्यगृहात्पुरा ॥ २ ॥
भुक्तानि बहुभिः सूत मिलित्वा च सुतादिकैः । पूर्वजन्मकृतात्सर्वं कर्मणोऽत्रैव जन्मनि ॥ ३ ॥
सा जाता बाहुजा नारी धनभोगसमन्विता । पुत्रान्विता विचित्रा च भर्तुः शुश्रूषणे रता ॥ ४ ॥
क्षयरोगाकुला जाता तथा स्नेहहरा यतः । निष्कृतिं चास्य पक्षीन्द्र पूर्वपापौघनाशिनीम् ॥ ५ ॥
कथयामि प्रयत्नेन पितातुर्याशामागतः । कृत्वा तु कदलीं रम्यां पत्रयुक्तां सुवर्णजाम् ॥ ६ ॥
दद्याद्देवविधिज्ञाय क्षयदोषोपशान्तये ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःपंचाशदधिकशततमः ॥ १५४ ॥

श्रीसूर्य उवाच ।

यो लोकान्वञ्चयेत्कश्चित्पुरा धूर्तस्तु कर्मणा । सोऽत्र जन्मन्यपस्माररोगेण महताकुलः ॥ १ ॥
धेनुं दद्यान्महाभाग सवत्सां विधिसंयुताम् । ब्रह्मकूर्चत्रयं कुर्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
न भवेत्तस्य रोगस्य वेदना पापशोधनात् ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचपंचाशदधिकशततमः ॥ १५५ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र चन्द्रवदना गौराङ्गी पतिवल्लभा । धनधान्यसमायुक्ता स्वर्णकारी सुखान्विता ॥ १ ॥
दक्षा भर्तृहिते नित्यं पूर्वं सा द्विजवल्लभा । स्वर्णापहारजातपापादत्र सा स्वर्णकारजा ॥ २ ॥
पुत्रहीना महाभाग परद्रव्यापहारणात् । कुरुक्षेत्रे शशिग्रस्ते स्वर्णं दद्याच्च शक्तितः ॥ ३ ॥
तद्दत्त्वाशु लभेत्पुत्रानत्र जन्मनि वै सुत ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्पंचाशदधिकशततमः ॥ १५६ ॥

श्रीसूर्य उवाच ।

बालघाती भवेद्यस्तु पूर्वजन्मनि मानवः । वैनतेयात्र जनुषि मृतपुत्रः प्रजायते ॥ १ ॥

१ अध्यायोऽयं नास्ति-खपु० ।

श्रवणाद्धरिवंशस्य विधिवच्चात्र जन्मनि । ब्राह्मणोद्वाहनाच्चैव पूजनाच्छङ्करस्य च ॥ २ ॥
जीविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तपंचाशदधिकशततमः ॥ १५७ ॥

श्रीसूर्य उवाच ।

शूकरे याऽभवत्पूर्वं निषादी पुनरेव सा । शूद्राधमा पञ्चनदे जातात्र विनतासुत ॥ १
पुत्रपौत्रधनैर्धान्यैर्गजाश्वोष्ट्रादिवाहनैः । युक्ता सा यवनी सूत तीर्थराजस्य सेवनात् ॥ २
भर्तृसङ्गयुता पूर्वं ध्रुवं तद्धितवाञ्छनात् । यवनी पूर्वपापाच्च तत्र तस्योपसेवनात् ॥ ३

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टपञ्चाशदधिकशततमः ॥ १५८ ॥

श्रीसूर्य उवाच ।

कश्चित्प्रागभवद्विप्रः सर्वविद्याविशारदः । वेदाभ्यासरतः श्रीमान्प्राप्तसर्वमनोरथः ॥ १ ॥
तुलाधृतानि स्नेहानि विप्राणां स्नेहभागिनाम् । गृहीतवान्स चार्थेन लोभोपहतचेतसा ॥ २ ॥
यस्माद्दानकृतं चैव प्राग्भवे तत्फलं शृणु । सोऽत्र विप्रः प्रयागेऽस्ति द्विजो वेदविदां वरः ॥ ३ ॥
धनपुत्रसमायुक्तः क्षयरोगसमन्वितः । वेदाभ्यासात्तथा दानात्तीर्थेषु च प्रयत्नतः ॥ ४ ॥
सो देयात्र विधिज्ञाय मन्त्रमुच्चारयन्निमम् । ब्रह्मणा निर्मिता देवी पापमाचरितं मया ॥ ५ ॥
तत्पापशमनायैव त्वां ददेऽहं हिरण्मयीम् । ब्राह्मणाय महाभाग पापं गच्छति तद् भृशम् ॥ ६ ॥
सोमं च राजतं दद्यात्तन्मानं पापशान्तये । लक्ष्मीनारायणं चापि हैमं सौवर्णसंमितम् ॥ ७ ॥
गायत्र्यष्टसहस्रं तु त्र्यम्बकं तन्मितं जपेत् । मन्त्रमष्टाक्षरं तद्वज्जप्त्वा शुद्धिमवाप्नुयात् ॥ ८ ॥
होमयेत्तद्दशांशेन तिलाज्ययवतण्डुलैः । ब्राह्मणान्भोजयेत्पश्चात्पूजयेच्च विधानतः ॥ ९ ॥
लक्षरुद्रं त्रिगुणितं नानाविभवविस्तरैः । पूजयेद्वा विधानेन तस्मात्पापात्प्रमुच्यते ॥ १० ॥
य एवं विधिना सूत प्रायश्चित्तं समाचरेत् । तस्य संततिवृद्धिः स्यान्नात्र कार्या विचारणा॥ ११ ॥
ब्रह्मलोकमवाप्नोति पूर्वपापविशोधनात् । प्रायश्चित्तेऽकृते रिष्टं वर्षे षष्टिमिते ध्रुवम् ॥ १२ ॥
आयुर्नवतिवर्षान्तमत्र पापविशोधनात् । प्रायश्चित्तं द्वयोरेकं न कुर्याल्लोभमोहितः ॥ १३ ॥
न भवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । न च सद्गतिमाप्नोति पापस्यास्य प्रभावतः ॥१४॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । अष्टाक्षरं त्रिसाहस्रं जप्त्वा शुद्धिमवाप्नुयात् ॥१५॥
होमयेत्तद्दशांशेन शतं विप्रांश्च भोजयेत् । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ १६ ॥
य एवं कुरुते सूत द्वयोः पापविशोधनम् । तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि॥१७॥
नाधयो व्याधयस्तस्य न चारिष्टभयं क्वचित् । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥१८॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । पञ्चत्रिंशन्मिते वर्षे रिष्टं देहधनान्तकम् ॥ १९ ॥
त्रिसप्ततिमिताब्दायुः प्रायश्चित्ते कृतेऽधुना । गतिमप्युत्तमां याति त्वन्यथा ह्याततायिनाम्॥२०॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । नाशः स्यात्क्षयरोगस्य चात्र जन्मनि चाण्डज॥२१॥
दोषात्स्वल्पात्फलैर्युक्तो जीवेद्वर्षशतं ध्रुवम् ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनषष्ट्यधिकशततमः ॥ १५९ ॥

श्रीसूर्य उवाच ।

बभूव ब्राह्मणः कश्चिद्वङ्गदेशे वसन्सुधीः । धर्मशास्त्रक्रियायुक्तो धनपुत्रादिसंयुतः ॥ १ ॥
दत्तानि तेन विप्रेभ्यो दानान्यल्पानि शक्तितः । सत्पात्रेभ्यः परं सूत पर्वस्वपि विधानतः ॥ २ ॥

---

१ तुला ।

पापमाचरितं तेन कामलोभेन चाण्डज। ब्राह्मण्यां धारितो गर्भो भाविनोऽर्थस्य गौरवात्॥ ३॥
स्त्रीसाहाय्यात्तथा तत्र कृतं तद्गर्भपातनम्। सा मृता तेन दुःखेन गर्भपातोद्भवेन च॥ ४॥
एवं किंचिद्गते काले स प्राप्तो यमशासनम्। भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गांश्च शाश्वतान्॥५॥
पूर्वपुण्यप्रभावेन स जातो ब्राह्मणाद्द्विजः। यमुनायां महाभाग गौरः पित्ताधिको घृणी॥ ६॥
धनमित्रसुखैश्वर्यमतिस्त्रीभोगभाग्नरः। दक्षः कार्येषु चार्वङ्गो धर्मिष्ठो लाभसंयुतः॥ ७॥
मानी यशस्वी पुरुषः कान्तिमान्प्रियभाषणः। पुण्यादिदं तथा पापाल्लोभात्पापरतः क्वचित्॥८॥
धूर्तः शठः क्रोधपरो धनवृद्धिक्षयान्वितः। चिन्तातुरः पापशेषादप्राप्तमनोरथः॥ ९॥
ब्राह्मण्यां वीर्यदानात्प्राक् तथा तद्गर्भपातनात्। अत्र पञ्चाशदब्दान्ते जातपुत्रविनाशकः॥ १०॥
त्रिकमङ्गलगृहे सूत चन्द्रः सूर्यगृहाश्रितः। पापाभ्यां पुत्रभावेऽपि समाक्रान्तेऽत्र जन्मनि॥ ११॥
स्त्री सहाया तथा पूर्वं साऽत्र संततिदुःखिता। लक्षणैरेभिराद्यस्य प्रायश्चित्तं वदाम्यहम्॥ १२॥
कार्याऽत्र ब्राह्मणी लेख्या सुवर्णाष्टपलैर्मिता। तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः॥ १३॥
पात्रे गर्भान्वितां भव्यां बहुभूषणसंयुताम्। गन्धपुष्पाक्षतैर्धूपैर्वस्त्रैः पूजां समाचरेत्॥ १४॥
एवं कृत्वा यथा पक्षिन्गर्भपापात्प्रमुच्यते।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षष्ट्यधिकशततमः॥ १६०॥

---

अरुण उवाच।

कथयस्व दिवानाथ लोकानां हितकाम्यया। पृच्छामि तेऽत्र देवेश छिन्धि मे सर्वसंशयात्॥१॥
जात्युत्तमानां जन्तूनां सदा संपत्तयः शुभाः। पूर्वजन्मनि पुण्यत्वात्सुखसंपत्समन्वितः॥ २॥
बन्धूनामतिसौख्यं च वैष्णवी मतिरत्र च। जातसंततिदुःखार्तः कस्येदं कर्मणः फलम्॥ ३॥

श्रीसूर्य उवाच।

ब्राह्मणी गर्भयुक्ता च प्रयाणे भर्तृसंयुता। सर्वाभरणभूषाढ्या नानारत्नसमन्विता॥ ४॥
बहुभिस्सार्धमेतेन तस्या आभरणं हृतम्। तत्र कोलाहलो जातो गर्भपातोऽभवत्तदा॥ ५॥
तेन पापेन बालानां गर्भनाशः प्रजायते।

अरुण उवाच।

का तस्य निष्कृतिः स्वामिन्येन पापं क्षयं व्रियात्॥ ६॥
एतद्धि विस्तराद्ब्रूहि लोकानां हितकाम्यया।

श्रीसूर्य उवाच।

एकवासा विधिं कुर्याल्लक्षपूजां ततः परम्॥ ७॥
सगर्भा गौः प्रदातव्या भोजनं शतसंमितम्। गर्भाशयगतो गर्भो निषेकः समयादनु॥ ८॥
पञ्चमे वाथ षष्ठे वा मासि पातः स्रवश्च यः। तयोः कर्मविशेषांश्च कथयिष्यामि योषिताम्॥ ९॥
सा चापि मृतकल्पा स्यादुत्पन्नैः सूतिकामयैः। शोकदाहोदरे ढोपः शूलं गौरवकम्पनम्॥ १०॥
रक्तस्रावाद्विवर्णाऽस्माज्जायते कर्मणेरितात्। रजस्तस्याः पलाभ्यां तु कोशं गर्भाशयाकृतिम्॥ ११
कुसुम्भैर्वेष्टितं तेन रक्तवस्त्रेण वेष्टयेत्। मधुना पूरयेच्चात्र शलाका रूप्यवर्तिता॥ १२॥
तन्मध्ये हेमशकलान् क्षिपेत्तदपि यत्नतः। दद्याद्द्विजाय विधिवद्यथाश्रुतिनिरूपितम्॥ १३॥

---

१ पापरतो–लघु०।

"यन्मया पूर्वतः स्वामिन् गर्भपातः कृतो हि यः। एतद्दानं विशुद्ध्यर्थं गर्भकोशं ददाम्यहम्॥१४॥
मया मूढेन यद्देतोर्निषिद्धाचरणं कृतम्। ततोऽनपत्यत्वं प्राप्तं तस्मान्मां मोचय प्रभो" ॥१५॥
एवं कृतविधेः सूत गर्भपाताघनाशनम्। ब्राह्मणान्भोजयेत्सम्यग्गां दद्याच्च सवत्सकाम् ॥ १६ ॥
सर्पिष्यात्मानमालोक्य भुंजीत सह बंधुभिः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकषष्ट्यधिकशततम ॥ [1]१६१ ॥

## श्रीसूर्य उवाच।

यो नारी घातयेत्काचित्पुरुषं प्राग्भवेऽण्डज। साऽत्र जन्मनि रोगेण शूलेनैव प्रपीड्यते ॥ १ ॥
सुवर्णदानाद्विधिवत्तथा रुद्रजपादिह। पूजनाच्छङ्करस्यापि शूलरोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विषष्ट्यधिकशततम ॥ १६२ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि योऽज्ञानान्नरो वै घातयेत्सुत। मित्रं च वायुरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
तत्र कुर्यान्महाबाहो मन्त्रैस्तद्वायुदैवतैः। पूजनं वायुदेवस्य गन्धपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैर्नहुभक्ष्यैश्च वायुर्नश्यति तत्क्षणात्। इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिषष्ट्यधिकशततम ॥ १६३ ॥

## श्रीसूर्य उवाच।

गोत्रघातकरी या च पुरा ज्ञानेन काश्यप। सात्र जन्मनि दूताढ्या भवत्येव मयोदितम् ॥ १ ॥
तीर्थस्नानव्रतादीनि निष्फलान्यत्र चाण्डज। ज्ञानपूर्वं कृतात्पापाद्रोगादेवक्षयो भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुष्षष्ट्यधिकशततम ॥ १६४ ॥

## श्रीसूर्य उवाच।

कश्चिच्छूद्रो महाभाग पूर्वस्मिन् प्राग्भवे धनी। व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु ॥ १ ॥
नीतं स्नेह तथा तेन मिलित्वा वार्धसीरिणाम्। लोभात्कालेन तस्मिन्वै स्नेहे मौल्याधिके सुत॥२॥
शेषपापफलाद्घोराद्भ्रमरत्वमुपागतः। ततः पुण्याच्छुभान्भुक्त्वा पुण्याज्जातोऽत्र पर्वते ॥ ३ ॥
शूद्रः पुण्यफलायुक्तो भूमिदानात्सुरार्चनात्। स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहादिदानाद्धि स्ववित्ततुर्यभागतः। स्वर्णदानात्तथा चात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चषष्ट्यधिकशततम ॥ १६५ ॥

## श्रीसूर्य उवाच।

विषं दत्त्वा पतिं सूत प्राग्या जाराश्रिताऽसती। पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत ॥ १॥
विष्णोराराधनादेव गङ्गाया उपसेवनात्। गतिं शुभां सा प्राप्नोति कृच्छ्रोपसेवनात् ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्षष्ट्यधिकशततम ॥ १६६ ॥

---

१ अध्यायोऽयं नास्ति—खपु०। २ भुक्त्वा पापफलान् घोरात्—खपु०। सदार्चनात्—खपु०।

श्रीसूर्य उवाच।

देवागारं दहेद्यस्तु प्राग्जन्मन्यथ पुत्रक। रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देयदानाद्विमाय स्थापनाद्वा विधानतः। मुच्यते पापजाद्रोगादतिसाराद्विनिश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तषष्ट्यधिकशततमः ॥ १६७ ॥

श्रीसूर्य उवाच।

मूर्धाभिषिक्तो यः कश्चिन्मथुरायामभूत्सुधीः। राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगसूकराः। तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
गद्गर्भस्थौ हतौ तत्र शुभौ द्वौ मृगशावकौ। सहायाभ्यां युतेनैव कृतं कर्मातिदारुणम् ॥ ३ ॥
ताभ्यां मिलित्वा तौ मुक्तावभयां चाण्डजाधिप। सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा ४॥
स शौर्यकर्मणा सूत घातयित्वा रिपून् बहून्। घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा। भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणोऽधुना॥ ६ ॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः। जातः कर्कटगे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः। शिवपूजनजातपुण्यात्प्राप्ततात्सकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि। राज्यमचार्यत्पुत्रश्च पुण्यात्पापात्फलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित्। सहायलक्षणमतः शृणु पुत्र यथा तथा ॥ १० ॥
याभ्यां मिलित्वा मुक्तौ द्वौ मृगशावौ खगाधिप। पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ११
ह्यपस्मारेण रोगेण मृतौ चात्रैव जन्मनि। एवं संततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभोजनपापस्य प्रायश्चित्तं वदाम्यहम्। पूजयेच्छिवलक्षं तु तदर्धं वा तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ। पूजयेच्च तथा वायुं विधिना मृगदेवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यैर्विधानतः। प्रायश्चित्तवियुक्तस्य न च पुत्रसुखं भवेत् ॥ १५ ॥
रिष्टेन मरणं चापि वर्षे वेदाब्धिकेऽण्डज। प्रायश्चित्ते कृते तस्य जीवनं पञ्चसप्ततिम् ॥ १६ ॥
चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टषष्ट्यधिकशततमः ॥ १६८ ॥

श्रीसूर्य उवाच।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज। साऽत्रेयं तेन पापेन गर्भपातनदुःखिनी ॥ १ ॥
विप्रकन्याविवाहाद्वै विधिवच्चात्र जन्मनि। मुच्यते तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम्। युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धार्धमितां वापि पूजयित्वा विधानतः। मुच्यते पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनसप्तत्यधिकशततमः ॥ १६९ ॥

श्रीसूर्य उवाच।

या काचिद्दाहयेन्नारी देवागारं पतत्रिण। साऽतिसारेण महता पीडया पीड्यतेऽधुना ॥ १ ॥
शङ्करप्रतिमादानान्मूर्तेर्विष्णोश्च दानतः। न जायते महापीडा रक्तातीसारसंभवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्यधिकशततमः ॥ १७० ॥

"यन्मया पूर्वतः स्वामिन् गर्भपातः कृतो हि यः। एतद्दानं विशुद्ध्यर्थं गर्भकोशं ददाम्यहम्॥ १४॥
मया मूढेन यद्देतोर्नानिषिद्धाचरणं कृतम्। ततोऽनपत्यत्व प्राप्तं तस्मान्मां मोचय प्रभो" ॥१५॥
एवं कृतविधेः सूत गर्भपाताघनाशनम्। ब्राह्मणान्भोजयेत्सम्यग्गा दद्याच्च सवत्सकाम् ॥ १६ ॥
सपिण्ड्याद्यमानमालोक्य भुंजीत सह बंधुभिः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकषष्ट्यधिकशततम ॥ १६१ ॥

श्रीसूर्य उवाच।

यो नारी घातयेत्कांचित्पुरुष प्राग्भवेऽण्डज। साऽत्र जन्मनि रोगेण शूलेनैव प्रपीड्यते ॥ १ ॥
सुवर्णदानाद्विधिवत्तथा रुद्रजपादिह। पूजनाच्छङ्करस्यापि शूलरोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विषष्ट्यधिकशततम ॥ १६२ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि योऽज्ञानान्नरो वै घातयेत्सुत। मित्रं च वायुरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
तत्र कुर्यान्महाबाहो मन्त्रैस्तद्वायुदैवतैः। पूजनं वायुदेवस्य गन्धपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैर्बहुभक्ष्यैश्च वायुर्नश्यति तत्क्षणात्। इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिषष्ट्यधिकशततम ॥ १६३ ॥

श्रीसूर्य उवाच।

गोत्रघातकरी या च पुरा ज्ञानेन काश्यप। सात्र जन्मनि लूताढ्या भवत्येव मयोदितम् ॥ १ ॥
तीर्थस्नानव्रतादीनि निष्फलान्यत्र चाण्डज। ज्ञानपूर्वं कृतात्पापाद्रोगादिक्षयो भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःषष्ट्यधिकशततम ॥ १६४ ॥

श्रीसूर्य उवाच।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी। व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु ॥ १ ॥
नीतं स्नेहं तथा तेन मिलित्वा चार्घसीरिणाम्। लोभात्कालेन तस्मिन्वै स्नेहे मूल्याधिके सुत॥२॥
शेषपापफलाद्घोराद्रूमरत्वमुपागतः। ततः पुण्याच्छुभान्भुक्त्वा पुण्याज्जातोऽत्र पर्वते ॥ ३ ॥
शूद्रः पुण्यकलायुक्तो भूमिदानात्सुरार्चनात्। स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहादिदानाद्वै स्ववित्ततुर्यभागतः। स्वर्णदानात्तथा चात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चषष्ट्यधिकशततम ॥ १६५ ॥

श्रीसूर्य उवाच।

विषं दत्त्वा पतिं सूत प्राग्या जाराश्रिताऽसती। पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत ॥ १॥
विष्णोराराधनादेव गङ्गाया उपसेवनात्। गतिं शुभां सा प्राप्नोति कृच्छ्रचान्द्रायणसेवनात् ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्षष्ट्यधिकशततम ॥ १६६ ॥

---

१ अध्यायोऽयं नास्ति—एपु०। २ मुक्त्वा पापफलान् घोरान्—खपु०। सद्यार्चनात्—खपु०।

श्रीसूर्य उवाच ।

देवागारं दहेद्यस्तु प्राग्जन्मन्यथ पुत्रक । रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देयदानाद्बिम्बाय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतिसाराद्विनिश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तषष्टयधिकशततमः ॥ १६७ ॥

---

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तो यः कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगसूकराः । तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
गद्गर्भस्थौ हतौ तत्र शुभौ द्वौ मृगशावकौ । सहायाभ्यां युतेनैव कृतं कर्मातिदारुणम् ॥ ३ ॥
ताभ्यां मिलित्वा तौ मुक्तावमायां चाण्डजाधिप । सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा ४॥
स शौर्यकर्मणा सूत घातयित्वा रिपून् बहून् । घातितः सोऽपि बहुभिः महारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा । भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणोऽधुना॥ ६ ॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातः कर्कटगे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजात्पुण्यात्संप्राप्तः सकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि । राज्यप्रचार्यत्युग्रश्च पुण्यात्पापात्फलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित् । सहायलक्षणमतः शृणु पुत्र यथा तथा ॥ १० ॥
याभ्यां मिलित्वा मुक्तौ द्वौ मृगशावौ खगाधिप । पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ११
ह्यपस्मारेण रोगेण मृतौ चात्रैव जन्मनि । एवं संततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभोजनपापस्य प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलक्षं तु तदर्धं वा तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ । पूजयेच्च तथा वायुं विधिना मृगदैवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यविधानतः । प्रायश्चित्तवियुक्तस्य न च पुत्रसुखं भवेत् ॥ १५ ॥
रिष्टेन मरणं चापि वर्षे वेदाश्विकेऽण्डज । प्रायश्चित्ते कृते तस्य जीवनं पञ्चसप्ततिम् ॥ १६ ॥
चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टषष्टयधिकशततमः ॥ १६८ ॥

---

श्रीसूर्य उवाच ।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज । साऽत्रेयं तेन पापेन गर्भपातनदुःखिनी ॥ १ ॥
विप्रकन्याविवाहाद्वै विधिवच्चात्र जन्मनि । मुच्यते तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम् । युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धार्धमितां चापि पूजयित्वा विधानतः । मुच्यते पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनसप्तत्यधिकशततमः ॥ १६९ ॥

---

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं पतत्रिण । साऽतिसारेण महता पीडया पीड्यतेऽधुना ॥ १ ॥
शङ्करप्रतिमादानान्मूर्तेर्विष्णोश्च दानतः । न जायते महापीडा रक्तातीसारसंभवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्यधिकशततमः ॥ १७० ॥

---

श्रीसूर्य उवाच ।

ब्रह्महा प्राग्भवे सूत तिर्यक्त्वं प्राप्य निश्चयात् । नरकान्दारुणांश्चैव जायतेऽत्रैव जन्मनि ॥ १ ॥
कर्मक्षयेऽतिकुष्ठेन ह्यस्मि न्त्वयसि पीडितः ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकसप्तत्यधिकशततम ॥ १७१ ॥

श्रीसूर्य उवाच ।

या काचिद्यातयेन्नारी पतेर्मित्रं च प्राग्भवे । नियतं वायुरोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं प्रतीक्ष्य विमोदः सर्वस्वार्धार्धजेन च । वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गन्धैर्वस्त्रैर्विशेषतः । मन्त्रैश्च वायुजैः सूत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगोपशमनं दानेनानेन जायते ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विसप्तत्यधिकशततम ॥ १७२ ॥

श्रीसूर्य उवाच ।

अज्ञानादथ या नारी गोत्रघातकरी पुरा । बभूव सततं चात्र लूतरोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्यव्रतात्सुत । लूतरोगं न पश्येत्तु सात्र जन्मनि चाण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिसप्तत्यधिकशततम ॥ १७३ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नः किंचिद्वित्तसमन्वितः । संयुतो वायुपित्ताभ्यां नेत्रखेदः शिरोर्तिमान् ॥ १ ॥
सद्वृत्तश्च सुखी धीमान् धर्मिष्ठो धर्मवत्सलः । व्रणो रेखा[1]शिरा वापि बाल्ये स्याद्ग्रहणीगदः ॥२॥
कण्ठपृष्ठाभिघाताद्यो व्रणो वाताग्निदर्शनम् । परोक्षमपवादं च श्रुवते कारणं विना ॥ ३ ॥
तस्य प्रिया शुभाचारा सती व्रतपरायणा । काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम् ॥४॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि वैश्योऽस्य भार्या विप्रस्य सात्त्विकी । यातो वेश्म तदा तस्य ब्राह्मणो ज्ञानसत्तमः ॥१॥
अप्रसूता प्रिया तस्य चपला चारुलक्षणा । वैश्येन कथयित्वा तु लोभमोहादिविभ्रमैः ॥ २ ॥
अज्ञानात्काममिच्छन्ती बभूवास्य वलीयसा । तावत्कालवशेनैव ब्राह्मणो जनितोऽघवान् ॥ ३ ॥
स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य वै बलात् । तां तथा धर्षयामास बहुकालं खगेश्वर ॥ ४ ॥
व्यभिचारवशात्तत्र अन्यतस्तद्धृतं धनम् । गृहीतं तद्धनं तेन धूर्तया लोभचेतसा ॥ ५ ॥
ब्राह्मणी निधनं प्राप्ता लोके विस्तार्य विश्रुतिम् । तेन दुःखेन विप्रोऽसौ ब्राह्मणीं चात्यजत्पुरा॥६॥
निर्वंशोऽभूत्तदा तत्र ब्राह्मणश्च खगेश्वर । तेन कर्मविपाकेन तादृशं च भवेदिह ॥ ७ ॥
पश्चान्मानुषमापन्नो बहुशोकाकुलो भृशम् । इदं द्वितीयं जन्मास्य ब्रह्मवंशसमुद्भवम् ॥ ८ ॥
प्राप्यते चानपत्यत्वमेकापत्यत्वमत्र च ।

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन्येन वन्ध्यत्वनाशनम् । एकापत्यभवं दुःखमनपत्यभवं तथा ॥ ९ ॥

१ अध्यायोऽयं नास्ति—ख्पु० । २ समुद्धश—ख्पु० । ३ रेखाशिरो वापि—ख्पु० ।

श्रीसूर्य उवाच ।

मार्गशीर्षे शुभे मासि शुक्लपक्षादितः खग ॥ १० ॥

प्रत्यक्षं सुतसौख्यार्थिव्रतं तु प्रतिवासरम् । षोडशाब्दानि नारीणां कर्तव्यं विधिपूर्वकम् ॥ ११॥
गौरीव्रतमिदं दीप्तं सुतसौख्यफलप्रदम् । प्रातर्नियममास्थाय दन्तधावनपूर्वकम् ॥ १२ ॥
अयाहं शिवयोः प्रीतिमाचरिष्ये शुभव्रतम् । स्थाप्योपवासनिरता निशि जागरतत्परा ॥ १३ ॥
ततो मध्याह्नसमये स्नात्वा कुंकुमवाससी । परिधायार्चयेद्गौरीं पतिपुत्रवतीः स्त्रियः ॥ १४ ॥
कुंकुमैः कज्जलैरेभिः करणैः पुष्पमाल्यया । ताम्बूलैस्तु सकर्पूरैः सौभाग्याष्टकवस्तुभिः ॥ १५ ॥
ततश्चास्तमिते भानौ वर्ति षोडशतन्तुभिः । विधाय तिलतैलेन दीपं कुर्याच्छिवाग्रतः ॥ १६ ॥
गीतवादित्रनिर्घोषैः पुराणश्रवणादिभिः । नैवेद्यं विविधं दद्यादपूपतिलतण्डुलैः ॥ १७ ॥
तथा षोडशसंख्यानि शूर्पाणि वैणवानि च । पतिपुत्रसुखायैव पूजयन्ती गिरेः सुताम् ॥ १८ ॥
भोजयेत्षोडश नारीः शुभास्ताः पतिसंयुताः । एवं विधिं समास्थाय भोजयेद्दम्पतीञ्शुभान् ॥ १९॥
नानाभोज्यैस्तथा पुष्पैः पक्षिभ्यो बलिमाहरेत् । दीनान्धकृपणेभ्योऽन्नं सर्पिष्यात्मानमीक्षयेत् २०
एतद्गौरीव्रतं नाम मार्गशीर्षे समाचरेत् । एवं कृते विधौ सुत प्राप्यंते पुत्रपौत्रकाः ॥ २१ ॥
नारी नियमसंपूर्णं व्रतं कुर्वंतमयत्नतः । सुतसौभाग्ययुक्ता सा पतिपुत्रसुखाप्तये ॥ २२ ॥
ऐहिकं लक्षणं तस्य नारीणां चात्र जायते । स्वसुमातृस्वसृश्वपि सपत्न्याः शोकसंभवः ॥ २३ ॥
उदरार्तिरसृक्स्रावः पार्श्वे पादकराद्दिषु । मिथ्याभिशंसनं क्वापि वातदोषो धनच्युतिः ॥ २४ ॥
स्वज्ञातिनिन्दाहीनत्वं परेभ्यो मर्मतोदनम् ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकशततमः ॥ १७४ ॥

---

श्रीसूर्य उवाच ।

शकृन्मूत्रं सृजेद्यस्तु देवागारे नराधमः । गुदरोगमवाप्नोति सोऽत्र जन्मनि मानवः ॥ १ ॥
मासैकं पूजयेद्विष्णुं शिवं वा विधिनाण्डज । प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनं सुत ॥ २ ॥
न पश्यति तदा पीडां गुदजामत्र जन्मनि ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचसप्तत्यधिकशततमः ॥ १७५ ॥

---

श्रीसूर्य उवाच ।

घातयेद्यः पुरा नारीमज्ञानात्पूर्वजन्मनि । सोऽत्र जन्मनि जायेत कृशो बलविवर्जितः ॥ १ ॥
शर्कराधेनुदानेन दशसंख्येन चाण्डज । विमुच्यते कृशत्वाच्च शतब्राह्मणभोजनात् ॥ २ ॥
हेमात्स्वस्त्ययनाज्जापाद्गायत्रीजपतोऽत्र च । वीर्यस्नानादाज्यदानाद्बली भवति नान्यथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्सप्तत्यधिकशततमः ॥ १७६ ॥

---

श्रीसूर्य उवाच ।

बालानां घातिनी चेयमभवत्पूर्वजन्मनि । तेनाष्टाब्दमिताद्वर्षाद्वर्गबालो न जीवति ॥ १ ॥
क उपायोऽत्र कर्तव्य इति चिन्तयती ध्रुवम् । न जीवन्ति च तत्पुत्राः पूर्वपापात्तथाण्डज ॥ २ ॥
प्रायश्चित्तं शृणुष्वाथ जीवेयुर्येन तत्सुताः । श्रवणाद्धरिवंशस्य दशावृत्त्या खगेश्वर ॥ ३ ॥
पञ्चन्येकमिताब्दपीत्पापात्पूर्वकृतादिह । मुच्यते नात्र संदेहः सत्यंसत्यं वचो मम ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायःसप्तसप्तत्यधिकशततमः ॥ १७७ ॥

---

श्रीसूर्य उवाच ।

यः कश्चिद्धातयेत्पूर्वं ब्राह्मणं ज्ञानवर्जितम् । कुष्ठरोगान्वितः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
दद्यात्कालनरं सूत सर्वोपस्करसंयुतम् । सर्वस्वं वा महापापे दानमुक्तं मनीषिभिः ॥ २ ॥
सर्वस्वदानात्कुष्ठस्य पीडा नश्यति तत्क्षणात् ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टसप्तत्यधिकशततम ॥ १७८ ॥

श्रीसूर्य उवाच ।

देवद्रव्यं हरेत्सूत पूर्वजन्मनि यो नरः । सोऽत्र जन्मनि जायेत वायुपीडाभिरन्वितः ॥ १ ॥
प्रायश्चित्तं परं वायोर्नाशनं तस्य वच्म्यहम् । जपेन्मृत्युंजयं मन्त्रं सावित्रीं च विशेषतः ॥ २ ॥
होमयेत्तद्दशांशेन ब्राह्मणान्भोजयेत्तथा । वायुरोगोपशान्त्यर्थं शक्त्या दद्याच्च दक्षिणाम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनाशीत्यधिकशततम ॥ १७९ ॥

श्रीसूर्य उवाच ।

देवागारे तु या काचित्प्राग्भवे विनतासुत । सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सापि नारी पापप्रणाशनम् । वक्ष्ये गोमिथुनं दद्यात्प्राजापत्यं चरेद्व्रतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽशीत्यधिकशततम ॥ १८० ॥

श्रीसूर्य उवाच ।

बभूव मुखजः कश्चिद्विद्याधनसमन्वितः । नानाकलासु कुशलो विष्णुभक्तिपरायणः ॥ १ ॥
ग्रहणे वै प्रयागे तु सर्वस्वमददात्पुरा । तत्र भाविबलात्सूत पापमाचरितं त्विदम् ॥ २ ॥
धर्षिता क्षत्रिया यूना कामलोभाच्छुभानना । प्रताडितः पतिस्तस्यास्तेन दैवहतेन तु ॥ ३ ॥
ततो मृत्युवशं प्राप्तः स गत्वा यमशासनम् । शुभाच्छुभफलं भुक्त्वा चाशुभं चातिदारुणम् ॥ ४ ॥
अन्यजन्मनि दानेन स जातः क्षत्रियाद्वयः । देशे विपाशानिकटे सप्तयोजनसंमिते ॥ ५ ॥
सुरूपदेहः सद्बुद्धिः स्त्रीपुत्रधनसंयुतः । शूरो दाता प्रधानश्च देशेदेशेऽतिविश्रुतः ॥ ६ ॥
किंचित्पापरतो धूर्तो मनो दुःखाकुलो भृशम् । क्षत्रियाधर्षणात्पूर्वं भर्तृसंताडनात्तथा ॥ ७ ॥
वार्द्धक्ये कण्डुरोगार्तो निश्चयादत्र जन्मनि । लक्ष्यैतदण्डजश्रेष्ठ सूर्यशुक्रौ चतुर्थगौ ॥ ८ ॥
वक्ष्यामि तस्य पापस्य निष्कृतिं पापशोधनीम् । लक्ष्मीनारायणं दद्यात्पलेनार्धं पलेन वा ॥ ९ ॥
हिरण्मयं सुघटितं सर्वाभरणभूषितम् । पूजयित्वा तु गन्धैश्च पुष्पैर्नानाविधैस्तथा ॥ १० ॥
दीपैर्विचित्रैर्विधिना दद्याद्विप्राय धीमते । गणनाथं तथा दद्यात्सौवर्णं दशमाषकम् ॥ ११ ॥
एवं विधानं यः कुर्यात्पूर्वपापविशोधनम् । न तस्य दद्रुः कण्डूश्च तस्माद्दोषात्प्रमुच्यते ॥ १२ ॥
अकालमरणं तस्य प्रायश्चित्तेऽकृतेऽत्र च । प्रायश्चित्ते कृते त्वत्र जीवनं सप्तसप्ततिम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकाशीत्यधिकशततम ॥ १८१ ॥

श्रीसूर्य उवाच ।

घातयेद्यः स्त्रियं साध्वीं कामात्पापविमोहितः । प्राग्भवे नियतं सोऽत्र कार्श्यं भजति जन्मनि ॥ १ ॥
तेनैव मृत्युमाप्नोति रोगेणाथ पतत्रिप । प्राप्ते ... नष्टापुर्जायते महदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे ... द्व्यशीत्यधिकशततम ॥ १८२ ॥

श्रीसूर्य उवाच ।

कन्यकावधजात्पूर्वं पापात्कन्याप्रजा भवेत् । जन्मन्यत्र महाभाग तस्माज्जातमिदं फलम् ॥ १ ॥
पूजनाल्लक्षरुद्राणां तदर्धार्घाणां च पक्षिराट् । मुच्यते पूर्वपापाच्च घोरात्कन्यावधादिह ॥ २ ॥
अथवा विधिना सूत तडागोत्सर्गपुण्यतः । विप्राणां भोजनाच्चास्मिंस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापाद्विमुच्येत नात्र कार्या विचारणा ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्र्यशीत्यधिकशततमः ॥ १८३ ॥

श्रीसूर्य उवाच ।

या च पूर्वभवे नारी देवद्रव्यापहारिणी । सात्र जन्मनि पक्षीन्द्र भवेद्वायुप्रपीडिता ॥ १ ॥
देवालयं सुरुचिरं कृत्वा प्रस्थाप्य देवताम् । वायुरोगोपशमनं निश्चितं जायतेऽण्डज ॥ २ ॥
भोजयेत्तत्र वै विप्रान्वायुप्रीत्यै पतत्रिण । दानं वित्तानुसारेण वित्तशाठ्यं न कारयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकशततमः ॥ १८४ ॥

श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले सूत पूर्वजन्मन्यभूद्वली । गिरिवासी महादुष्टश्चौर्यकर्मरतो दृढः ॥ १ ॥
लुण्ठितो ब्राह्मणस्तत्र मार्गे संताडितो भृशम् । संताडनान्महाबाहो मृतः काले द्विजोत्तमः ॥ २ ॥
गते बहुतिथे काले स जातो ब्रह्महाऽधुना । गङ्गायमुनयोर्मध्ये क्रूरकर्मा महोद्यमी ॥ ३ ॥
प्राक् शिवाराधनात्पुण्याद्वाह्मजः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य सर्वपापौघनाशनीम् ॥ ४ ॥
सर्वस्वस्य समः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्यो शृङ्गाभ्यां संयुतो महान् ॥ ५ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ६ ॥
तस्माच्छिवप्रसादाद्वै कुष्ठस्तस्य प्रशाम्यति ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकशततमः ॥ १८५ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मजा काचिद्भर्तुः प्रियरता सदा । दानधर्मरता साध्वी विप्राणां पूजने रता ॥ १ ॥
तथा देवरता सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रमदद्वाद्विषं चैतद्वशानुगम् ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तया । तद्दुःखेन पतिस्तस्या मृतः पुत्रशुचान्वितः ॥ ३ ॥
पापमाचरितं चोग्रं स्वपुत्रवधसंज्ञकम् । प्राप्ता यमपुरं भुक्त्वा पूर्वपुण्यफलं शुभम् ॥ ४ ॥
तद्वत्पापफलं सूत घोरान्नरकसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता पर्वतेऽधुना ॥ ५ ॥
क्षात्रे कुले महापुण्ये राज्यत्रास्ति पतत्रिण । सा रूपयौवनवती धर्मज्ञा सदा पुण्यपरा खग ॥ ६ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नानाभोगयुता पुण्या स्वकुलेषु प्रियंवदा ॥ ७ ॥
पतिप्रियरता चोग्रा सुखैश्वर्यधनान्विता । पुण्याधिक्ये तथा पापाल्लोभाढ्या स्वल्पपुत्रका ॥ ८ ॥
स्वल्पपापरता बाल्ये चाधिव्याधिसमन्विता । यौवने भर्तृसंयुक्ता वार्द्धक्ये पुत्रवर्जिता ॥ ९ ॥
सपत्नीपुत्रवधजातपूर्वपापात्पतत्रिण । लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
विष्णुः कार्यः शतैर्माषैः सौवर्णो विश्वयोनिभृत् । तद्वन्महेश्वरं कुर्याद्गन्धैः पुष्पैरलंकृतम् ॥ ११ ॥
देयौ विप्रेषु पात्रेषु पूर्वपापापनुत्तये । जपेदष्टशतं मन्त्रमयुतं होमयेत्ततः ॥ १२ ॥

१ भूद्विजः—खपु० ।

गायत्रीं च जपेत्तद्दद्यादाद्य तथा सुत । भोजयेच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् ॥१३॥
एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् । न तस्याः पुत्रमरणं तदग्रे जायते ध्रुवम् ॥ १४ ॥
नैवं या कुरुते नारी प्रायश्चित्तं विधानतः । सपत्नी पुत्रवधतस्तस्याः पुत्रविनाशनम् ॥ १५ ॥
विप्राणां पूजनाद्दानात्तस्याः संततिवर्धनम् । जीवनं कथितं तस्या वर्षाणामष्टसप्ततिम् ॥ १६ ॥
रिष्टं पष्टिमिताद्दद्याद् ध्रुवं चाकृतनिष्कृतेः ॥ १७॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकशततमः ॥ १८६ ॥

अरुण उवाच ।

कश्चिद्विप्रकुलोत्पन्नो द्वावयवसंयुतः । सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किंचिद्व्यापारवान्भुवि । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षं विना सा च पोषिता भर्तृमातुलैः । अस्मात्गदार्तायां बाल्ये स्याद्ग्रहणीगदः ॥ ३ ॥
काष्ठलोष्टाश्मघाताच्चैर्व्रातश्च करपादयोः । बहुपुत्रप्रसूता च अपुत्रा जायते भुवि ॥ ४ ॥
अथवा मृतपुत्रत्वं जायते केन मानद । जातमात्रमृताः केचित्केचिन्मूलगण्डमाश्रिताः ॥ ५ ॥
केचिद्दन्ताननाः वापि मृतपुत्रोऽग्रिमासकः । रक्तस्रावो भृशा पीडा मासेमासे कृताऽनघ ॥ ६ ॥
केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ७ ॥

श्रीसूर्य उवाच ।

पूर्वं क्षात्रसमुत्पन्नः किंचिद्भूमिपतिस्तया । तस्य जन्मनि वैश्यस्तु परवित्तापहारकः ॥ ८ ॥
दूतिकाकर्मनिरतो नानालोकमिदं त्वहम् । ग्रामाधीशोऽभवत्सोऽपि तेन राज्ञे प्रभाषितम् ॥ ९ ॥
एकग्रामे वसन्विप्रः शान्तो दान्तः क्षमः सदा । पुत्र्यः पञ्च तथा सप्त चापुत्रो वित्तसंयुतः ॥१०॥
कालेनैव मृतो विप्रः सर्वस्वं तस्य नीतवान् । निराधाराः सुता जाता न कृतं द्विजभोजनम्॥११॥
क्रियाकर्म कृतं नव सप्त राज्ञा हृतं च तत् । एवं कृतापराधोऽसौ क्षत्री जातो स्त्रिया सह ॥१२॥
गते तु किंचित्काले वै अचिरात्स मृतस्तदा । म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम्॥१३॥
केचित्केचिद्विपच्यन्ते नरके भृशदारुणे । दानधर्मादिना केचिदिह जन्मनि मानद ॥ १४ ॥
विप्रवंशे समुत्पन्ना भवन्ति चेह जन्मनि । इदं तु द्वितीयं जन्म विप्रत्वं जायते भुवि ॥ १५ ॥
पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते । ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते ॥ १६ ॥
नानापत्यानि पच्यन्ते नानाकर्मोद्भवानि च । पुराकृतानि कर्माणि भुज्यन्ते जन्मजन्मनि ॥१७॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पुत्रश्चिरं भवेत् । कन्यापत्यप्रशमनं बहुपुत्रः प्रजायते ॥ १८ ॥

श्रीसूर्य उवाच

सुशुभे भूमिदेशे तु गोमयाद्युपलिप्तके । तत्रोपर्यासिकं स्तीर्यमथवा ह्यजिनं शुभम् ॥ १९ ॥
छादयेच्छुक्लवस्त्रेण तण्डुलद्रोणपर्वतम् । तत्रोपरि न्यसेत्पात्रं ताम्रं दशपलात्मकम् ॥ २० ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम् । मुक्ताय ज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् ॥२१॥
दधानां करयुग्मेन चाक्षमालां कमण्डलुम् । उत्त ह्यमभागे तु स्वदितिं विभ्रमानरम् ॥ २२ ॥
सौवर्णीं स्थापयेत्सत सुवर्णद्वयनिर्मिताम् । एवं तौ दम्पती सम्यगर्घयेत्पर्वतोपरि ॥ २३ ॥
कृत्वा प्रतिष्ठितप्राणौ पूजयेद्विविधैर्गुणैः । रत्नगर्भे फलं देयं नानापुष्पैः समर्चयेत् ॥ २४ ॥
अभ्यर्च्य दम्पती तौ तु मन्त्रमेनमुदीरयेत् । 'अन्यया पूर्वजनुषि विप्राणां हि हृतं धनम् ॥२५॥

दूतीकर्मानुरक्तेन वाक्यदोषादि यत्कृतम्। तत्सर्वं क्षम्यतां देव तव मूर्तिं ददाम्यहम्" ॥ २६ ॥
अदितिं च प्रणम्याथ कृताञ्जलिरिदं ब्रुवन्। "अदिते विश्वमातस्त्वं शरण्यं शरणार्थिनाम्॥२७॥
प्रजादुःखौघसंतप्तहृदयं मामिहेश्वरि। संमणाशय दुःखौघं प्रजां देहि यशस्विनीम्" ॥ २८ ॥
एवं कृतविसर्जोऽयं ब्राह्मणान्भोजयेत्ततः। शालग्रामशिलां शुद्धां सोमकान्तमणिं तथा ॥ २९ ॥
चन्द्रसूर्योपरागे तु ब्राह्मणाय समर्पयेत्। एवं कृतविधिः सूत कृष्णां गां दापयेत्ततः ॥ ३० ॥
सर्पिष्यात्मानमालोक्य भोजयेच्च समृद्धिभिः। ऐहिकं लक्षणं यस्य शरीरेऽप्युपजायते ॥ ३१ ॥
काष्ठलोष्टादिशस्त्राद्यैः करपादे व्रणो भवेत् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्ताशीत्यधिकशततमः ॥ १८७ ॥

## श्रीसूर्य उवाच।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेऽण्डज। स राजयक्ष्मरोगेण युक्तः स्यादत्र जन्मनि ॥ १ ॥
तस्मिन्वयसि पक्षीन्द्र सोऽपि प्राणैर्विमुच्यते। महापापोद्भवाद्रोगात्र चोक्तं विनमयं मया। ॥ २ ॥
अपि ज्ञानकृतं पापं रिष्टरूपेण काश्यप। नाशयत्यमरं सिद्धं पूर्णायुषमपि ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाशीत्यधिकशततमः ॥ १८८ ॥

## श्रीसूर्य उवाच।

परगर्भं तु यः कश्चिद्धातयेज्ज्ञानवर्जितः। जलोदरेण सततं रोगेणात्र प्रपीडितः ॥ १ ॥
जलधेनुप्रदानेन विधिना गरुडाग्रज। ताम्ररौप्यसुवर्णानां दानात्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोननवत्यधिकशततमः ॥ १८९ ॥

## श्रीसूर्य उवाच।

ब्राह्मणोऽभूत्कुरुक्षेत्रे कृषिकृद्वेदपारगः। स्वज्ञातीयस्य चानेन वृत्तिलोपः कृतः खलु ॥ १ ॥
तत्संबन्धेऽभवद्युद्धं द्वयोरेको मृतस्तदा। वृत्तिलोपी द्विजः काले गतो हि यमशासनम् ॥ २ ॥
भुक्त्वा यत्पापजं सर्वं शतद्रुनिकटेऽधुना। स वै जातो द्विजश्चात्र वेदाभ्यासाच्च पुत्रक ॥ ३ ॥
कुष्ठक्षयान्वितश्चात्र युवभावे पतत्रिण। तत्पापनाशनं सर्वं प्रायश्चित्तं प्रवच्म्यहम् ॥ ४ ॥
वेदाभ्यासान्महासूत सावित्रीजपतस्तथा। गङ्गायां वासतः सोऽयं पूर्वपापात्प्रमुच्यते ॥ ५ ॥
न कुष्ठवृद्धिरत्रास्ति तत्कृते शमनं भवेत्। जीवेत्पष्टिमिताब्दान्तं रिष्टं चैव प्रशाम्यति ॥ ६ ॥
गतिस्तस्य महाभाग वेदाभ्यासाज्जपात्तथा। भविष्यति शुभा लोके परत्र च खगेश्वर ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवत्यधिकशततमः ॥ १९० ॥

## श्रीसूर्य उवाच।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा। बभूव भर्तृसुखदा तदाज्ञापालिनी सती ॥ १ ॥
अत्र जन्मनि सा विप्रा काश्यपी जाता हि पुत्रक। व्रतदानपराऽत्रापि भर्तृतोषणसंयुता ॥ २ ॥
पञ्चपञ्चाशदब्दान्तं प्रविशत्यत्र जन्मनि। स्वर्गकामा चिताग्नौ तु नात्र कार्या विचारणा ॥ ३ ॥
सा गमिष्यति वै स्वर्गं चात्र जन्मनि वै नरः। भविष्यति महाराज कुले राजातिधार्मिकः ॥४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकनवत्यधिकशततमः ॥ १९१ ॥

१ महत्–खपु०।

श्रीसूर्य उवाच ।

पीड्यते वातरोगेण दारुणेन पतत्रिण । पूर्वजन्मनि पश्चाद्या किल शूद्रगृहे स्थिता ॥ १ ॥
प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं चरेत् । व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजस्त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विनवत्यधिकशततमः ॥ १९२ ॥

श्रीसूर्य उवाच ।

स्वगर्भपातात्पूर्वं या नारी पापविमोहिता । जलोदरकृता पीडा जायते चात्र जन्मनि ॥ १ ॥
रजतस्वर्णताम्राणां दानाद्रोगविनाशनम् । जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिनवत्यधिकशततमः ॥ १९३ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा । दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुभगा सगर्भा फललालसा । त्रोटितं च फलं पक्वं भक्षार्थं चौर्यकर्मणा ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि । भवन्ति खलु ये पुत्रा अर्वाग् वर्षाष्टतोऽण्डज ॥ ३ ॥
पञ्चत्वमाप्नुवन्त्यत्र यस्मादकृतनिष्कृतिः । निष्कृतिं तत्प्रवक्ष्यामि पूर्वपापप्रणाशनीम् ॥ ४ ॥
शनिवारेऽण्डजश्रेष्ठ निमन्त्र्याश्वत्थकं सुत । तत्तले ब्राह्मणान्सूर्यदिने पश्चात्तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैः सपूपैः रससंयुतैः । फलानि विकिरेत्तत्र कृत्वाऽश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेत्तं महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्नवत्यधिकशततमः ॥ १९४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या काचिद्घातयेद्ब्राह्मणं सुत । सात्र जन्मनि कुष्ठेन मध्ये वयसि पीडिता ॥ १ ॥
जायते म्रियते या च गलत्कुष्ठेन चाण्डज । पापाज्ज्ञानकृतात्पूर्वात्र चोक्तं विन्मयं मया ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचनवत्यधिकशततमः ॥ १९५ ॥

श्रीसूर्य उवाच ।

देशे हि यामुने ह्यासीत्पूर्वं बाहुजसंज्ञकः । गङ्गास्नानं कृतं पूर्वं बाहुजानां सहायतः ॥ १ ॥
शकटेन[२] कुटुम्बस्य जानता पातकं कृतम् । एकास्मिन्वै दिने गत्वा ददाह वनमद्भुतम् ॥ २ ॥
बलाद्विवस्य संप्राप्ता जीवा दग्धा महाकुलाः । बन्धुसाहाय्यतस्तत्र कृतं कर्मातिदारुणम् ॥ ३ ॥
शुभाच्छुभानि भुक्त्वाऽथ पापाच्च नरकांस्तथा । विपाशानिकटे देशे योजने सप्तसंमिते ॥ ४ ॥
भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् । बहुलोभी बहुशोको देवताऽतिथिदूषकः ॥ ५ ॥
भ्रातृहीनः शठो धूर्तः पुत्रसंततिवर्जितः । पञ्चमे भवने राहुर्भौमयुक्तोऽल्पसंततिः ॥ ६ ॥
लक्षणैर्लक्षितश्चैत्तैरवंहि गरुडाग्रज । बन्धुसाहाय्यतः पापात्पूर्वजन्मसमुद्भवात् ॥ ७ ॥
तस्माद्भवत्पुत्रहीनो जायतेऽत्रैव जन्मनि ॥ ८ ॥

अरुण उवाच ।

विन्मयं कथ्यतां देव सुतसौख्यविवर्धनम् । सर्वपापप्रशमनं लोकानां हितकारणम् ॥ ९ ॥

१ अध्यायोऽयं नास्ति–ख्पु० । २ सकटेन–खपु० ।

श्रीसूर्य उवाच।

विन्मयं तत्प्रवक्ष्यामि जन्तुदुष्पापविनाशनम्। वनदेवी वरा कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी शुभा लेख्या पत्रे तन्त्रुरस्के। वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः। राजतं पलमेकं तु गणाध्यक्षं शिवात्मजम् ॥ १२ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया कार्यसाधिनी। देया वेदविधिज्ञाय सर्वपापप्रनुत्तये ॥ १३ ॥
प्रजापतिस्तथा देवः सर्वकल्मषनाशनः। शृणुयाद्भारतं वापि पारायणगुभाषितम् ॥ १४ ॥
अष्टाक्षरं तथा मन्त्रं जपेच्च विधिपूर्वकम्। दशायुतं तदर्धं वा तदर्धं वा प्रयत्नतः ॥ १५ ॥
होमयेत्तद्दशांशेन भोजनं तद्दशांशतः। तथोमितं सूर्यमन्त्रं जपेत्प्रणवपूर्वकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते। य एवं कुरुते सुत पूर्वपापविनाशनम् ॥ १७ ॥
तस्य पुत्रविवृद्धिश्च इह जन्मनि जायते। अकृते तु यथाशक्त्या रिष्टं पट्पञ्चके तथा ॥ १८ ॥
प्रायश्चित्ते कृतेऽब्दानां जीवनं नवसप्ततिम्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षण्णवत्यधिकशततमः ॥ १९६ ॥

श्रीसूर्य उवाच।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत। साऽप्यजीर्णेन रोगेण दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यान्नानाविधं चान्नं रसैः सर्वैः समन्वितम्। विप्रेभ्यो भोजनं दद्याच्छक्त्या दद्याच्च दक्षिणाम् २
होमयेच्च तथाऽन्नानि गायत्र्या त्र्यम्बकेण तु। मुच्यतेऽजीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तनवत्यधिकशततमः ॥ १९७ ॥

श्रीसूर्य उवाच।

देवमूर्तिं च यः कश्चिद्देवागारे स्थितां सुत। भग्नां कुर्यान्नरो मोहात्परेण स्थापितां यदि ॥ १ ॥
अप्रतिष्ठो भवेदत्र जन्मन्यथ खगाधिप। वर्षत्रयं तथाऽश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टनवत्यधिकशततमः ॥ १९८ ॥

श्रीसूर्य उवाच।

यश्चाचरेद्राजवधं मोहात्पूर्वभवे नरः। स राजयक्ष्मी विज्ञेयो घोरपापसमुद्भवः ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः। गोभूहिरण्यमिष्टान्नतिलवस्त्रान्नदानतः ॥ २ ॥
घृतधेनुप्रदानेन क्षयरोगं न पश्यति। दानं यथानुमानेन सर्वस्वार्धमेव च ॥ ३ ॥
देयं द्विजवरादौ तु विचार्यात्र प्रयत्नतः। तत्क्षणे काश्यपेयात्र क्षयरोगः प्रशाम्यति ॥ ४ ॥
रिष्टेनैव विनाशः स्यात्तथा चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽनवनवत्यधिकशततमः ॥ १९९ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचित्परगर्भं पतत्रिण। जलोदरेण रोगेण पीडयते चात्र जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगे स्थिते। तथा तज्जलपानेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विशततमः ॥ २०० ॥

१ सूर्यमन्त्रं सहस्रं च–ख पु०। २ यश्चाचरद् गोवधं हि–ख पु०।

श्रीसूर्य उवाच ।

वाग्विरोधी भवेद्यश्च पूर्वजन्मनि वादिनः । सोऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
मोहादिदं चरेत्सूत देयं दानं द्विजातये । वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वन्धनैः शुद्धैः क्षौमजैर्गरुडाग्रज । तत्पापनाशनं सर्वं प्राग्जन्मोक्तं परंतप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकाधिकद्विशततम. ॥ २०१ ॥

श्रीसूर्य उवाच ।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवे विनतासुत । अयोध्यायां तु सुमुखी धनभर्तृसमन्विता ॥ १ ॥
पूर्वपापप्रभावेण सपत्न्या गर्भनाशनात् । जातेयं पापजात्रैव दुःखार्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणाशनम् । काश्यां गत्वात्र विधिना शिवमाराध्य यत्नतः ॥ ३ ॥
व्रतैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः । शिवरात्रौ ततः पश्चाद्दीपमालादिनाण्डज ॥ ४ ॥
अर्द्धरात्रे महानद्या मध्ये स्नानं तु कारयेत् । मन्त्रैर्वरुणसूक्तैश्च नौकायां वा पतत्रिण ॥ ५ ॥
या चैवं कुरुते सूत तस्याः स्यात्संततिर्ध्रुवम् ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्व्यधिकद्विशततमः ॥ २०२ ॥

श्रीसूर्य उवाच ।

परनिन्दां तुः य कश्चित्प्राग्भवे विनतासुत । कुर्याद् दुर्मतिमापन्नः खल्वाटो जायतेऽधुना॥ १ ॥
दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम् । ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्र्यधिकद्विशततम ॥ २०३ ॥

श्रीसूर्य उवाच ।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत । सात्र जन्मनि तत्काले क्षयरोगप्रपीडिता ॥ १ ॥
यक्ष्मणात्र क्षयं यान्ति धातवः क्षयरोगिणाम् । धातुक्षये क्षयं याति तच्छरीरमशाश्वतम् ॥२॥
दृढकर्मकृतं पापं तस्मान्नोक्तः पतत्रिण । पापनाशकरः कश्चिदुपायस्त्वत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुरधिकद्विशततमः ॥ २०४ ॥

श्रीसूर्य उवाच ।

या वाग्विरोधिनी नारी भर्तुः पूर्वभवे सुत । मूकत्वं जायते तस्मात्त्वत्र जन्मनि निश्चयात् ॥ १ ॥
तत्पापनाशनं दानं दद्याद्वेदस्य पुस्तकम् । ब्राह्मणे वेदविदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
होमयेच्च तिलान् भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चाधिकद्विशततमः ॥ २०५ ॥

श्रीसूर्य उवाच ।

या काचिद्भञ्जनं कुर्यान्नारी पूर्वभवेऽण्डज । प्रतिमां देवतागारे स्थापितामपरेण च ॥ १ ॥
अप्रतिष्ठान्विता सा च जायते वै पतत्रिण । वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय. षडधिकद्विशततम ॥ २०६ ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः । गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः ॥ १ ॥
विधिना तत्र दत्तानि काम्यश्राद्धानि मानद । ततो भाविबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥

१ शोधनम्-स्पृ० ।

स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम्। सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥ ३ ॥
ततो बहुतिथे काले गतो हि यमशासनम्। शुभात्स्वर्गफलं भुक्तं पापाच्च नरकं भृशम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः। मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपोऽमितदो घृणी। बहुदेशाधिकारी च पुण्यात्सर्वं फलं त्विदम् ॥ ६ ॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः। सन्तानसुखहीनस्तु स्वरूपस्त्रीसुखोज्झितः ॥ ७ ॥
बन्धुहीनो व्ययी क्षीणः सर्वं तत्पापतः फलम्। वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधनीम् ८
कुबेरप्रतिमां रौक्मीं पञ्चस्वर्णमितां शुभाम्। तदर्धार्धमितां वापि त्रिषु वित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च। लक्ष्मीनारायणं दद्यात्सुवर्णसंमितं शुभम् ॥ १० ॥
लेख्यं पत्रे पवित्रे च पुत्रसंततिवर्धनम्। य एवं कुरुते भक्त्या तस्य रिष्टं न लिप्यते ॥ ११ ॥
प्रायश्चित्ते कृते ह्यत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायःसप्ताधिकद्विशततमः ॥ २०७ ॥

---

अरुण उवाच।

भूमिदेवकुलोत्पन्नो वाताधिकशरीरवान्। क्षामाङ्गः क्षीणवर्णाभः स्वल्पवृत्तिश्च जीवति ॥ १ ॥
देवब्राह्मणभक्तश्च किंचिद्वादपरायणः। करपादकृशत्वेन दृष्टिश्रुङ्गिविघातनः ॥ २ ॥
ब्रह्मत्वं जायते दीर्घनेत्रस्तोदी[1] विराडिमता। परोक्षमपवादं च शृणुते लोकतोऽन्वहम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा। अनृतं वदते किंचित्किंचित् क्लेशस्य कारिणी ॥ ४ ॥
अपत्यानि मृतानीह एको वा द्विस्त्रयोऽपि वा। वर्षत्रयमिता बाला म्रियन्ते मासंसंमिताः ॥ ५ ॥
केन कर्मविपाकेन मृतापत्या तु याऽनघ। एकोदरे स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
पृथगेवं कुमारीणां[2] मृतापत्या प्रजायते। गतो बहुतरः कालः कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच।

अतः पूर्वं वैनतेय तृतीयेऽत्रैव जन्मनि। क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानव्रतदयायुक्तः प्रियाप्रीतिः परस्परम्। तस्याप्यपरमातुस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
एको धे[3] पादचारस्तु तृतीयस्तु स्तनंधयः। गर्भयुक्तश्चतुर्थस्तु पिता मृत्युवशंगतः ॥ १० ॥
क्रियाकर्म कृतं पुत्रैर्वित्तेन सदृशं खग। मासैस्त्रिभिर्व्यतिक्रान्तैर्ज्येष्ठेनैव[4] दुरात्मना ॥ ११ ॥
निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात्। पुत्रदुःखेन शोकार्ता हृदयं ताडितं भृशम् ॥ १२ ॥
अभिघाताच्छिलाभूता गर्भयुक्ता दिवं गता। अचिरात्तेन कालेन ज्येष्ठघोरेण घातितः ॥ १३ ॥
इदं जन्म द्वितीयं तु मृतापत्यं प्रजायते। पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः ॥ १४ ॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत्। गर्भस्थानां मृतापत्येऽलघूनामलघुश्च यः ॥ १५ ॥
तस्य पापस्य शुद्ध्यर्थं निष्कृतिं वद मे प्रभो ॥ १६ ॥

श्रीसूर्य उवाच।

सौम्यायने तु संप्राप्ते सानुकूलग्रहे दिने। सपत्नीकः शुचिः स्नातः पञ्चगव्येन चाण्डज ॥ १७ ॥
उपोषणं दिवा रात्रौ व्रतस्यानुदिते रवौ। सुरभेर्वै सगर्भाया गोमयेनानुलेपयेत् ॥ १८ ॥

---

१ नेत्रस्वेदो–खपु० । २ कुमारीणां–खपु० । ३ धनंजयः–खपु० । ४ पादिष्टेन–खपु० ।

सुशुभे भूप्रदेशे तु कुङ्कुमाद्युपचर्चिते । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १९ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं च चतुर्भुजम् ॥ २० ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । जनन्या सह संभूतान्प्रद्युम्नाद्यांस्तथार्चयेत् ॥ २१ ॥
चारुदेहं सुवेषं च चारुगुप्तं यशोन्वितम् । इभवाहं चतुर्बाहुं सुचारुं पूजयेत्क्रमात् ॥ २२ ॥
पूजनं विष्णुभक्तेन तथा श्रीरसकोविदः । पुष्पस्रग्धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः ॥ २३ ॥
तद्विप्रे चाथ तद्विष्णौ रतो देवांश्च पूजयेत् । शतमष्टोत्तरं हुत्वा चरुणा पायसेन च ॥ २४ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेनमुदीरयेत् । "यन्मया पापकर्माणि कृतानि पूर्वजन्मनि ॥ २५ ॥
सपत्नानां पृथक् तु जिघांसां कृतवानहम् । स्वकुलहननाद्यापि भूमिद्रव्यादिलिप्सया ॥ २६ ॥
लघूनामलघूनां च हन्ता वै पूर्वजन्मनि । ततोऽत्र वै मया प्राप्तं दुःखं नानाविधं त्विदम् ॥ २७॥
तत्तद्दोषविनाशाय दानं संप्रददे त्विदम् । स्वस्त्यस्तु चेति तत्रोक्त्वा कोदादिति विसर्जनम् ॥२८॥
सर्पिष्यात्माननमालोक्य भोजयेदिष्टभोजनम् । ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिशंसनम् ॥ २९ ॥
काष्ठलोष्टादिशस्त्रौघैर्घातः स्याद्बालक्रीडनात् । जलादग्न्यादिना बाधा व्रणो वा तस्य जायते ३०
स्त्रीणामङ्गे च विकृतिर्व्याधिस्तनव्रणादिकम् । पैत्रो वै मातुलानीनां नेत्रस्रेदो विरुद्धिमता ॥३१॥
स्वसुमातृष्वसुर्वापि बाल्ये वैधव्यताऽपि च ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० अष्टाधिकद्विशततम ॥ २०८ ॥

## श्रीसूर्य उवाच ।

या नारी प्राग्भवे प्राह परनिन्दां न कारयेत् । खल्वाटा हृद्रुजायुक्ता जायतेऽत्रैव जन्मनि ॥ १ ॥
धेनुं दद्यान्महाभागे विधियुक्तां सकम्बलाम् । तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० नवाधिकद्विशततम ॥ २०९ ॥

## श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः । गण्डमालाख्यरोगेण स युक्तो जायतेऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । गृहीत्वा कम्बलं शुद्धं नवं तद्वेदपाठिने ॥ २ ॥
कुटुम्बिने दरिद्राय दद्याद्दोषापमुक्तये । गण्डमालां हरत्येतद्दानमुक्तं मया त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० दशाधिकद्विशततम ॥ २१० ॥

## श्रीसूर्य उवाच ।

कुलघ्नीयं महादुष्टा पूर्वमासीत्पतिव्रिणा । अत्र पूर्वकृतात्पुण्यान्मानुषी संकरा स्मृता ॥ १ ॥
धनपुत्रविहीना सा चात्र जन्मनि दृश्यते । निष्कृतिं तत्प्रवक्ष्यामि प्रयागे सततं सुत ॥ २ ॥
वासात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकादशाधिकद्विशततम ॥ २११ ॥

## श्रीसूर्य उवाच ।

पक्षघातं तु यः कुर्यात्सभार्यां ब्राह्मणस्य च । पक्षाघातेन रोगेण पीडितोऽत्र च जायते ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० द्वादशाधिकद्विशततम ॥ २१२ ॥

---

१ मातुलान्यार्या-ख्पु० । २ न तत्पापं क्षयं याति-ख्पु० । ३ अध्यायोऽयं नास्ति-ख्पु० ।

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा। गण्डमालाख्यरोगेण संयुक्ता जायते ध्रुवम् ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। पूर्वपापहरं पुण्यं दद्यात्तत्र च कम्बलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते। द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयोदशाधिकद्विशततमः ॥ २१३ ॥

श्रीसूर्य उवाच।

यः कश्चिद्बालकं चाहन्ब्राह्मणस्य खगाधिप। वङ्गदेशे वसन्पूर्वं सोऽत्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः। धनधान्यरतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥
विद्यादानात्कृतात्पूर्वं शृणु पापफलं तथा। क्षयरोगाकुलः क्षीणः पुत्रसंततिवर्जितः ॥ ३ ॥
बालघातनजात्पापाद्ब्राह्मणस्य पतत्त्रिण। महाक्रोधपरो लोभी नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्मघातविमोचनीम्। प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान्। गन्धपुष्पैस्तथा धूपैर्लक्षसंख्यान्विधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा। षडस्रे चतुरस्रे वा कुण्डे चाज्यतिलान्शुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्रान्शैवान्कासारलड्डुकैः। नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥ ८ ॥
विविधां दक्षिणां दद्यादुद्रप्रीतिकरां तथा। यथानेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
स बालघातजात्पापान्मुच्यते नात्र संशयः। चतुर्दश्यामथाष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः। पूजयेदर्घ्यपाद्यायैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तं च तत्सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर। आयुर्वर्षाः शतं प्रोक्तं पञ्चहीनं न संशयः ॥ १२ ॥
प्रायश्चित्ते कृते यत्नात्पञ्चम्यां चन्द्रवासरे। विन्मये त्वत्कृते सूत चत्वारिंशन्मिताब्दके ॥ १३ ॥
रिष्टं स्यात्क्षयरोगेण बालघातेन निश्चितम्। ब्रह्मघातान्महापापात्पूर्वजन्मकृताद्दृढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि। बाध्यते क्षयरोगेण सप्तजन्मसु निश्चयात् ॥ १५ ॥
ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः। नहीदृशं महापुण्यं क्षयरोगनिवर्तने ॥ १६ ॥
पुत्रवृद्धिकरं चात्र यथा प्रोक्तं शिवार्चनम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्दशाधिकद्विशततमः ॥ २१४ ॥

श्रीसूर्य उवाच।

यो विप्रः प्राग्भवे मोहात्सुरां त्रिविधजां पिबेत्। मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जन्मनि ॥ १ ॥
गृहवित्तानुसारेण पलेनार्धपलेन वा। कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥
आवाह्य तत्र ब्रह्माणं प्रभुं सर्वोपचारकैः। पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥
दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचदशाधिकद्विशततमः ॥ २१५ ॥

श्रीसूर्य उवाच।

वैकुण्ठादागतस्तत्र मथुरायां पतत्त्रिण। जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥

---

१ ब्राह्मणान् भोजयेन्नित्यं–ख़पु०। २ सप्तजन्मसु निश्चयात्–ख़पु०। ३ अयमर्धश्लोकोऽयं नास्ति–ख़पु०। ४ अर्धश्लोकोऽयं नास्ति–ख़पु०। ५ समाप्तिमोऽयमध्यायइति प्रतिभाति।

घोरे कलियुगे प्राप्ते पापाक्रांते महीतले । भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षोडशाधिकद्विशततमः ॥ २१६ ॥

श्रीसूर्य उवाच ।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज । कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णशतकं दद्यात्स तद्दोषविनाशनम् । चान्द्रायणत्रयं कुर्यात्तथाः तद्दोषशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तदशाधिकद्विशततमः ॥ २१७ ॥

श्रीसूर्य उवाच ।

राजघातकरी प्रोक्ता या पूर्वं घातयेन्नृपम् । राजयक्ष्मान्विता साऽत्र तस्मिन्वयसि भामिनी ॥ १ ॥
प्रायश्चित्तं परं तस्याः शृणुष्वाद्य खगेश्वर । यत्कृते विधिना सर्वं पूर्वजन्माघनाशनम् ॥ २ ॥
स्वर्णगोभूमिमिष्टान्नघृतधेनुतिलानि च । देयानि श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्तेऽकृतेऽधुना ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० अष्टादशाधिकद्विशततमः ॥ २१८ ॥

श्रीसूर्य उवाच ।

निरपराधं यः कश्चिद्वैश्यं चाहन्यतत्क्षण । अग्रजन्मन्यथ युक्तोऽसौ रक्तार्बुदरुजा भृशम् ॥ १ ॥
भविष्यति न संदेहस्तस्य मृत्युः खगाधिप । अपि दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥
त्रिंशद्वर्षे महारिष्टं रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकोनविंशत्यधिकद्विशततमः ॥ २१९ ॥

श्रीसूर्य उवाच ।

मेरोः समागता येयं प्राप्ता माथुरमण्डले । सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगे घोरे सर्वपुण्यविवर्जिते । कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो विंशत्यधिकद्विशततमः ॥ २२० ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्वैश्यमन्यजन्मनि मानवः । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥
प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग क्षयः स्यात्पापकृद्रुजः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकविंशत्यधिकद्विशततमः ॥ २२१ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । सात्र जन्मनि वै मूत्रकृच्छ्रेणातिनिपीडिता ॥ १ ॥
प्रायश्चित्तं परं तस्या घोरपापहरं सुत । सुपूजिताय विप्राय सवत्सां गां निवेदयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वाविंशत्यधिकद्विशततमः ॥ २२२ ॥

---

१ गोभूमि-ख पु० । २ अयमपि भगाक्षितोऽध्याय इति प्रतिभाति । ३ यत्नेन-ख पु० । ४ तद् द्रव्यं निनिवेदयेत्-ख पु० ।

अरुण उवाच।

कश्चिद्विप्रोत्तमो जातः किंचिद्वित्तसमन्वितः। कासश्वासादिना वाधा उदरार्तिः प्रजायते ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यशासनः। भिया प्रीतिपरा नित्यं व्रतानामनुकाङ्क्षिणी ॥ २ ॥
किंचित् क्रोधश्च जायेत अवाच्यं वाच्यकारिणी। उदरे वातजा रोगाः शिरोर्तिर्नेत्रतोदकृत्॥३॥
अपस्मारी भवत्येव पक्षद्विग्यन्तरे दिने। केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच।

भर्तृकर्म कृतं नैव स्त्रीकृतं नात्र संशयः। पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ५ ॥
व्रतानि विविधान्येव कृतानि भुवि मानद। स्वगृहे धान्यराशिं सा भक्षणायानयत्पुरा ॥ ६ ॥
सवत्सा ब्राह्मणस्य गौर्नित्यं जग्धवती च तम्। तया गृहीत्वा लकुटीं भृशं कुक्षौ प्रताडिता ॥७॥
सगर्भायाः सुरभ्या वै गर्भकुक्ष्युपघातनात्। मृतोऽसौ गर्भमध्यस्थः प्रसवो दुःखिता भृशम्॥८॥
शिशुदुःखेन सुरभी भृशमाक्रन्दती मृता। तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ ९ ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः। इदं तु तृतीयं जन्म मृतापत्यं खगेश्वर ॥ १० ॥
सप्तजन्म प्रजायेत गोस्त्रीब्रह्मघातिका। नानादुष्कर्मणा सा च नानापत्यार्थदुःखभाक् ॥११॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन् येनापत्यं प्रजीवति। अनुग्राह्योऽस्म्यहं देव लोकानां हितकाम्यया ॥१२॥

श्रीसूर्य उवाच।

मासे नभसि संप्राप्ते सानुकूलमहेऽहनि। सपत्नीकः शुचिः स्नात औषधैः स्नानमन्त्रतः ॥ १३ ॥
उपोषणं दिवा गत्वा त्रयोदश्यां च भक्तितः। पौर्णमास्या दिनं प्राप्य प्रातश्चानुदिते रवौ ॥१४॥
सुरभ्यास्तु सगर्भाया गोमयेनानुलेपयेत्। तत्रोपरि गवां स्थानं लिखेत्तत्र दिवानिशम् ॥ १५ ॥
अर्हणाद्युपचारैश्च कुंकुमाद्युपचार्चयेत्। कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १६ ॥
तत्रोपरि न्यसेद्देवं माधवं कलशेऽर्चयेत्। सौवर्णे राजते पद्मे सायुधं सचतुर्भुजम् ॥ १७ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः। विष्णुसूक्तेन सूक्तेन श्रियाः सूक्तेन पूजनम् ॥ १८ ॥
पुष्पैश्च धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः। रुद्रैकादशभिश्चैव जपेद्रुद्रं विधानतः ॥ १९ ॥
पूजालक्षमिदं पुष्पमर्चयेद्गन्धवारिभिः। शतमष्टोत्तरं हुत्वा चरुणा पायसेन च ॥ २० ॥
रुद्रस्यायुतहोमश्च समिदाज्यसमाहुतिः। एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥ २१ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेनमुदीरयेत्। "यन्मया कर्मवशतः पुरा जन्मन् दुरात्मना ॥ २२ ॥
गोसगर्भोपघातानां लकुट्या कुक्षिताडनम्। तेन कर्मवशात्मातं मृतगर्भादिकं भृशम् ॥ २३ ॥
मृतसंततिदुःखानि प्राप्यन्ते महदेनसः। तत्तदेनोविनाशार्थं दानं संप्रददे त्विदम्" ॥ २४ ॥
स्वस्त्यस्तु चेति तत्रोक्त्वा कोऽदादिति विसर्जनम्। सामीप्यात्मानमालोक्य अन्यान्वै तोषयेद्विजान्।
भूमिद्रविणवासांसि दानं दत्त्वा विधानतः। व्रतान्ते सुरभिं दद्याद्धर्मी द्रव्यादिशक्तितः ॥ २६ ॥
अहःशेषं ततः शेषं भोजयेदिष्टबन्धुभिः। ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ २७ ॥

---

१ पाठोऽयं नास्ति-खपु०। २ तत्र मन्त्रितः-खपु०। ३ त्रयोदश्यामुभक्तितः-खपु०। ४ लिखेदय-समाविशेत्-खपु०।

काष्ठलोष्टादिशस्त्राद्यैर्हतः स्याद्दुपलेखनात् । शृङ्गिणां चोपघाताच्च जायन्ते व्रणजार्तयः ॥ २८ ॥
जलाकुलोत्यः स्पर्शाग्निस्ताद्दशस्तत्र जायते । स्त्रीणांऽगे विकृतिर्व्याधिस्तिलव्रणमयादिकम्२९॥
पैतृजामातुलानीनां वैवर्ण्यार्तिः स्वसादिषु ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयोविंशत्यधिकद्विशततमः ॥ २२३ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । प्रदरेणातिदुःखेन सात्र जन्मनि पीडिता ॥ १ ॥
प्रायश्चित्तं परं तस्याः प्रदरस्य निवारकम् । दद्याद्रुक्ममयं पद्मं सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्विंशत्यधिकद्विशततमः ॥ २२४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रस्त्रिविधां वै सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं नयेत् ॥ १ ॥
[१]दिह्वेन श्यावदन्तेन लक्षितः पापजः सदा । सप्तजन्मनि रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
ह्यात्मावपापजात्सूत प्रायश्चित्तं न विद्यते । पापक्षयेऽवशेषे च कृच्छ्रं सान्तपनं चरेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चविंशत्यधिकद्विशततमः ॥ २२५ ॥

श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या सुखजात्र च वाहुजा । देशे सारस्वते ब्राह्म्यो सर्वधर्मान्विता सती ॥ १ ॥
क्षयरोगयुता चात्र शुक्भावे पतत्रिण । मात्पपापाद्दुस्तरात्सूत कण्ठपाशादिसंभवात् ॥ २ ॥
निष्कृतिं कदलीं दद्यात्सुवर्णत्रयसंयुताम् । भोजयेद्ब्राह्मणान्सत शिवपूजनतत्परान् ॥ ३ ॥
या त्वेवं कुरुते भक्त्या कदलीदानमुत्तमम् । नश्येत्क्षयरुजा तस्या अपि प्राणप्रणाशिनी ॥ ४ ॥
आयुर्वर्षाणि तत्रोक्तान्यत्र संततिसंख्यया ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय. षड्विंशत्यधिकद्विशततम. ॥ २२६ ॥

श्रीसूर्य उवाच ।

यो नरोऽतिवलोत्कर्षात्परस्त्रीं कामयेत्पुरा । अधुना यौवने प्राप्ते सोन्मादी जायते भृशम् ॥ १ ॥
दद्यात्मजापतिं देवं सौवर्णं शक्तितोऽण्डजं । भृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणान्भक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत ह्युन्मादान्मुच्यतेऽधुना ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय· सप्तविंशत्यधिकद्विशततम ॥ २२७ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी । सात्र जन्मनि रोगेण कुनखेन निपीड्यते ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यतेऽत्रैव जन्मनि ॥ २ ॥
चान्द्रायणत्रयं कुर्यात्कार्तिके मासि शोभने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाविंशत्यधिकद्विशततम ॥ २२८ ॥

---

१ व्याधिः कुलनणः–खपु० । २ ब्राह्म–खपु० ।

श्रीसूर्य उवाच।

वैश्यघ्नी या भवेत्पूर्वे भवे नारी पतिव्रता। रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम्। सप्तधान्येन दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनत्रिंशदधिकद्विशततमः ॥ २२९ ॥

श्रीसूर्य उवाच।

रौप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते। स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे पतात्रिण। प्राजापत्यत्रयं सूत चरेत्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिंशदधिकद्विशततमः ॥ २३० ॥

श्रीसूर्य उवाच।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यान्वितः सुधीः। स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोत्साही देशे केरलके सुत। स्वामिधर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः। दुष्टाः प्रजाः क्रोधयुक्ता बभूवुर्विमुखास्तदा ॥ ३ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत। संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभागा साध्वी पतिपरायणा। तस्मिन्मृते मृता सा तु भर्तुः प्राणावलम्बिनी ॥५॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतिव्रता। मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तथा ॥ ६ ॥
तद्गुणादन्तकालेऽपि दिवं प्राप्ता सभर्तृका। भुक्त्वा तत्र महाभोगानपूर्वान्स्वामिना सह ॥ ७ ॥
नानाप्रजाघातनजातपापात्पूर्वसमुद्भवात्। क्षीणपुण्या तथा सूत म्लेच्छदेशे समुद्भवा ॥ ८ ॥
सिन्धोः पश्चिमभागे तु शतयोजनसंमिते। गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुखैर्युक्तो गजयूथैः समावृतः। पत्त्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोग्रपुत्रपौत्राढ्यश्चात्यन्तसुखसंयुतः। देशेदेशेऽधिकाराढ्यः स म्लेच्छः पृथिवीपतिः ॥ ११ ॥
स्त्रीसहाय आत्मभोगी तथा पुत्रसहायतः। सुखैश्वर्ययुता[1] सापि यवनी तद्वशादिह ॥ १२ ॥
प्राप्तसहायश्च सोऽप्यत्र सपुत्रश्च महाप्रभुः। एवं जन्मफलं प्रोक्तं ससहायं पतत्रिण ॥ १३ ॥
स्वामिधर्मकृतात्पुण्यात्तदर्थमरणात्तथा। भविष्यति गतिस्तेषां पूर्वपुण्यात्पतत्रिण ॥ १४ ॥
पञ्चाशीतिमितायुश्च न चारिष्टे भवेन्मृतिः। रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत ॥ १५ ॥
शस्त्रप्रहारैर्विविधैः प्राप्ते त्वत्र रणाङ्गणे। प्रजापीडनजातपापात्तद्वर्षे नात्र संशयः ॥ १६ ॥
दद्यात्कालनरं तत्र ब्राह्मणाय कुटुम्बिने। देयं हिरण्मयं तद्वज्जं शतपलात्मकम् ॥ १७ ॥
कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु। सर्वोपस्करसंयुक्तं ह्ययमेतच्च पुत्रक ॥ १८ ॥
महारिष्टहरं प्रोक्तं प्रायश्चित्तं परं खग। नातःपरतरं किंचिद्दानं कालनरात्क्वचित्[2] ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकत्रिंशदधिकद्विशततमः ॥ २३१ ॥

श्रीसूर्य उवाच।

या काचिद्यौवने नारी रमते स्वेच्छया परम्। बलात्कारेण पुरुषं सात्रोन्मादेन पीडिता ॥ १ ॥
तत्पापशमनं सर्वमुपायं शृणु यत्नतः। कृत्वा सुवर्णजं वायुं मृगं हेमं च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्तं दद्याद्विप्राय धीमते। न प्राप्नोति तदोन्मादभावं दानप्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वात्रिंशदधिकद्विशततमः ॥ २३२ ॥

१ सुखैश्वर्यगज—ख पु०। २ पाठोऽयं नास्ति—ख पु०।

श्रीसूर्य उवाच ।

पुत्रहारी च यः पूर्वं जन्मन्यत्रैव जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपुं विप्राय धीमते । पलानां त्रिशतं तस्मात्तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयस्त्रिंशदधिकद्विशततमः ॥ २३३ ॥

श्रीसूर्य उवाच ।

विद्यमाने पतौ पुत्र जाराद्गर्भं धृतं पुरा । सा चात्र पादजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्तं यथोदितम् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दजीवितम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुस्त्रिंशदधिकद्विशततमः ॥ २३४ ॥

श्रीसूर्य उवाच ।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा । सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव तथाकाले तस्य रिष्टं प्रकीर्तितम् । विंशन्मितेऽब्दे पक्षीन्द्र कालशास्त्रान्मृतिं वदेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचत्रिंशदधिकद्विशततमः ॥ २३५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी लोभान्मोहात्त्रपुं हरेत् । सात्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥१ ॥
शतत्रयपलं दद्यात्त्रपुं तस्यापनुत्तये । तस्मिन्पापे क्षये सूत श्लेष्मरोगस्य नाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्त्रिंशदधिकद्विशततमः ॥ २३६ ॥

अरुण उवाच ।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः । धनधान्यसमायुक्तो विशालश्चागमोर्जितः ॥ १ ॥
सधनः शक्तिमान्धीरः किंचिद्व्याधिसमन्वितः । इन्द्रियाणां बलं हत्वा गेहानां जायते भृशम् ॥
उदरातिरक्तवातः किंचिदेहे प्रवर्तते । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक्सत्यजा लोके सन्तानामनुकांक्षिणी । बहुपुत्रप्रसूता च किंचित्पुत्रा प्रजायते ॥ ४ ॥
अथवा मृतपुत्रा च पुत्रीषु जीवितास्वपि । केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि विप्रस्तु स जातः पश्चिमे स्विह । तस्य गेहे च प्रवृत्ता कन्यायाः मोढता दृढम् ॥ ६ ॥
भूरिद्रविणलोभेन वृद्धविप्राय दापिता । तद्गृहादाहृतं वित्तं सर्वस्वं तद्वशादपि ॥ ७ ॥
यावत्कन्या भवेत्प्रौढा वरार्थं गुणशालिनी । पतिभक्तिपरा नित्यं यावत्कन्या सुतार्थिनी ॥ ८॥
किंचिद्वर्षे व्यतिक्रान्ते तावद्विप्रो मृतश्च सः । सा बाला विधवा जाता पत्यपत्यार्थदुःखिनी ॥९ ॥
व्रततीर्थरता नित्यं सत्यानामनुकाङ्क्षिणी । बहुवर्षैस्तया यावन्नियमैः शोषितं वपुः ॥ १० ॥
पितृगृहे धनं भूरि रक्षितं च तया भृशम् । किंचित्कालवशात्प्राप्ता मृतिं सा ब्राह्मणी खग॥११॥
सा पुत्री खेचर मृत्वा सागमज्जन्मजन्मनि । कन्या बहुविधास्तस्य निराधारा मृता हि वै॥१२॥
तेन कर्मविपाकेन पूर्वकन्या बहुप्रजा । तस्य भर्तुर्भवेत्प्रसंगातो मृत्युमिच्छति ॥ १३ ॥

१ सम्यक्–ग्पु० । २ घातयेन्नरः–खपु० । ३ शालिभिश्च शतार्जितः–खपु० । ४ मृतपत्यार्थदुःखिनी–गपु० । ५ शतमृच्छति–गपु० ।

पुनर्जन्म पुनर्मृत्युस्तत्कर्मनिष्कृतिं विना। कन्याविक्रयकर्ता च रौरवे नरके मतः ॥ १४ ॥
यातनां बहुधा भुक्त्वा वर्षाणां च सहस्रकम्। पश्चान्मानुषमापन्नो अन्नदानप्रभावतः ॥ १५ ॥
चतुर्थे त्वत्र वै जन्म बहुपुत्री प्रजायते। मृतपुत्रो मृतो गर्भस्तेन गर्भभवादिह ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद। भर्तृविद्वेषिणी नित्यं चिरापत्यानुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन भूरिकन्या मृतः सुतः॥ १८ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापं प्रशाम्यति। निष्कृतिं वद विश्वात्मन्पृथक् त्वं मे प्रकाशय॥१९॥

श्रीसूर्य उवाच।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत्। कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ २० ॥
स्वकन्या वरयोग्या सा चेत्स्यं चिन्तासमाकुला। दशाब्दाश्चैव मानाय यथा भावं यथामति॥२१॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम्। अलंकृतां यथाशक्ति वराय गुणशालिने ॥ २२ ॥
ब्राह्मणाय च विधिना दद्याच्च बहुदक्षिणाम्। महापापविशमनं कन्यादानमतन्द्रितः ॥ २३ ॥
कन्याविवाहसमये महादानविधिं चरेत्। एवं कृतविधिः सूत कन्यां दत्त्वा विधानतः ॥ २४ ॥
शान्तिः कार्या च सर्वत्र विस्तारैर्होमविप्रादिभिः। भूमिरत्नविणवासांसि कन्यावासांसि दापयेत्॥२५॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम्। वर्षे वर्षे तु संपूर्णे अन्नवस्त्रादि चोत्सृजेत् ॥ २६ ॥
एवं कृतविधिः सूत बहुपुत्रा यशस्विनी। पापं पुत्रविनाशाख्यं कन्यापत्योदयश्च यत् ॥ २७ ॥
तस्य पापस्य नाशार्थं कन्यादानविधिः स्मृतः। नाशयेत्तत्कृतं पापं द्विजानां चैव पूजनात्॥२८॥
यजन् यज्ञविधानेन ब्राह्मणान् स्वस्ति वाचयेत्। विनायकाम्बिकामूर्तिहैमनिष्कप्रमाणतः ॥२९॥
आचार्याय दद्याऽसौ नानाकर्मविशान्तये। ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ३० ॥
जिह्वारसनादन्तोपघ्नो वातादिदोषकृत्। नृपचौराग्निहानिश्च वित्तं यातमितस्ततः ॥ ३१ ॥
तप्यमानेन मनसा दूयते भृशमाधिना। सर्विप्यात्मानमालोक्य प्रायश्चित्तमितीरितम् ॥ ३२ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके सप्तत्रिंशदधिकद्विशततमः ॥ २३७ ॥

---

श्रीसूर्य उवाच।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत। औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः। तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात्॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अष्टत्रिंशदधिकद्विशततमः ॥ २३८ ॥

---

श्रीसूर्य उवाच।

गर्भवत्यानया भुक्तं पूर्वजन्मनि मानद। आसन्नगर्भा जायास्तु मासं गर्भस्य धारणात् ॥ १ ॥
तेन कर्मविपाकेन बाहुजा सात्र कीर्तिता। पूर्वजन्मन्यसौ विप्रा न च गर्भे दशात्यलम् ॥ २ ॥
प्रायश्चित्तमिदं तस्याश्चात्र सर्वाघमोचनम्। कृत्वाऽजां गर्भसंयुक्तां राजतीं पद्मलाविकाम् ॥३॥
वैश्वानरस्तथा कार्यः पञ्चमाषैर्हिरण्मयः। पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४ ॥
एवं कुर्याद्विधानेन सर्वपापापनोदनम्। तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके एकोनचत्वारिंशदधिकद्विशततमः ॥ २३९ ॥

---

श्रीसूर्य उवाच ।

पुत्रहारी च यः पूर्वं जन्मन्यत्रैव जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपुं विप्राय धीमते । पलानां त्रिशतं तस्मात्तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयस्त्रिंशदधिकद्विशततमः ॥ २३३ ॥

श्रीसूर्य उवाच ।

विद्यमाने पतौ पुत्र जाराद्गर्भं धृतं पुरा । सा चात्र पादजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्तं यथोदितम् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सुत षडशीत्यब्दजीवितम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुस्त्रिंशदधिकद्विशततमः ॥ २३४ ॥

श्रीसूर्य उवाच ।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा । सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव तथाकाले तस्य रिष्टं प्रकीर्तितम् । विंशन्मितेऽब्दे पक्षीन्द्र कालवस्त्रान्मृतिं वदेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चत्रिंशदधिकद्विशततमः ॥ २३५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी लोभान्मोहात्त्रपुं हरेत् । सात्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपुं तस्यापनुत्तये । तस्मिन्पापे क्षये सुत श्लेष्मरोगस्य नाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्त्रिंशदधिकद्विशततमः ॥ २३६ ॥

अरुण उवाच ।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः । धनधान्यसमायुक्तो विशालश्रमनोर्जितः ॥ १ ॥
सधनः शक्तिमान्धीरः किंचिद्व्याधिसमन्वितः । इन्द्रियाणां बलं हत्वा मेहानां जायते भृशम् ॥
उदरार्तिरसृग्वातः किंचिद्देहे प्रवर्तते । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक्सत्यजा लोके व्रतानामनुकांक्षिणी । बहुपुत्रप्रसूता च किंचित्पुत्रा प्रजायते ॥ ४ ॥
अपरा मृतपुत्रा च पुत्रीए जीवितास्वपि । केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि विप्रस्तु स जातः पञ्चमे त्विह । तस्य गेहे च प्रवृत्ता कन्यायाः मौढता दृढम् ॥ ६ ॥
भूरिद्रविणलोभेन वृद्धविप्राय दापिता । तद्वत्तदाहृतं वित्तं सर्वस्वं तद्वदाद्दपि ॥ ७ ॥
यावत्कन्या भवेत्प्रौढा वरार्थं गुणशालिनी । पतिभक्तिपरा नित्यं यावत्कन्या सुतार्थिनी ॥ ८ ॥
किंचिद्वर्षे व्यतिक्रान्ते तावद्विप्रो मृतश्च सः । सा बाला विधवा जाता पत्यपत्यार्थदुःखिनी ॥ ९ ॥
व्रततीर्थरता नित्यं सत्यानामनुकाङ्क्षिणी । बहुवर्षैस्तया यावात्रियमैः शोषितं वपुः ॥ १० ॥
पितुर्गृहे धनं भूरि तर्पितं च तया भृशम् । किंचित्कालवशात्प्राप्ता मृतिं सा ब्राह्मणी खग ॥ ११ ॥
सा पुत्री खेदरं भूत्वा सागमज्जन्मजन्मनि । कन्या बहुविधास्तस्य निराधारा मृता हि वै ॥ १२ ॥
तेन कर्मविपाकेन पूर्वकन्या बहुप्रजा । तस्य भर्तुर्मवेदर्ममायातो मृत्युमिच्छति ॥ १३ ॥

१ सम्यक्–ग पु० । २ वातयेत्वरः–ख पु० । ३ शालिमिश्र शनार्जितः–ख पु० । ४ मृतपत्यार्थदुः–खिनी–ग पु० । ५ शतमृच्छति–ग पु० ।

पुनर्जन्म पुनर्मृत्युस्तत्कर्मनिष्कृतिं विना । कन्याविक्रयकर्ता च रौरवे नरके मतः ॥ १४ ॥
यातनां बहुधा भुक्त्वा वर्षाणां च सहस्रकम् । पश्चान्मानुषमापन्नो व्रतदानप्रभावतः ॥ १५ ॥
चतुर्थे त्वत्र वै जन्म बहुपुत्री प्रजायते । मृतपुत्रो मृतो गर्भस्तेन गर्भभवादिह ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद । भर्तृविद्वेषिणी नित्यं चिरापत्यानुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन भूरिकन्या मृतः सुतः ॥ १८ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापं प्रशाम्यति । निष्कृतिं वद विश्वात्मन्पृथक् त्वं मे प्रकाशय॥१९॥

श्रीसूर्य उवाच ।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ २० ॥
स्वकन्या वरयोग्या सा चेत्यं चिन्तासमाकुला । दशाब्दाश्चैव मानाय यथा भावं यथामति॥२१॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । अलंकृतां यथाशक्ति वराय गुणशालिने ॥ २२ ॥
ब्राह्मणाय च विधिना दद्याच्च बहुदक्षिणाम् । महापापौघशमनं कन्यादानमतन्द्रितः ॥ २३ ॥
कन्याविवाहसमये महादानविधिं चरेत् । एवं कृतविधिः सूत कन्यां दत्त्वा विधानतः ॥ २४ ॥
शान्तिः कार्या च सर्वत्र विस्तारैर्ऋत्विगादिभिः । भूमिद्रविणवासांसि कन्यावासांसि दापयेत्॥२५॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम् । वर्षे वर्षे तु संपूर्णे अन्नवस्त्रादि चोत्सृजेत् ॥ २६ ॥
एवं कृतविधिः सूत बहुपुत्रा यशस्विनी । पापं पुत्रविनाशाख्यं कन्यापत्योदयश्च यत् ॥ २७ ॥
तस्य पापस्य नाशार्थं कन्यादानविधिः स्मृतः । नाशयेत्तत्कृतं पापं द्विजानां चैव पूजनात्॥२८॥
यजन् यज्ञविधानेन ब्राह्मणान् स्वस्ति वाचयेत् । विनायकाम्बिकामूर्तिं हैमनिष्कप्रमाणतः ॥२९॥
आचार्याय ददेत्साऽसौ नानाकर्मौघशान्तये । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ३० ॥
जिह्वारसनादन्तोष्ठव्रणो वातादिदोषकृत् । नृपचौराग्निहानिश्च वित्तं यातमितस्ततः ॥ ३१ ॥
तप्यमानेन मनसा दूयते भृशमाधिना । सर्पिष्यात्मानमालोक्य प्रायश्चित्तमितीरितम् ॥ ३२ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके सप्तत्रिंशदधिकद्विशततमः ॥ २३७ ॥

---

श्रीसूर्य उवाच ।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात्॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अष्टत्रिंशदधिकद्विशततमः ॥ २३८ ॥

---

श्रीसूर्य उवाच ।

गर्भवत्यानया भुक्तं पूर्वजन्मनि मानद । आसन्नगर्भा जायास्तु मासं गर्भस्य धारणात् ॥ १ ॥
तेन कर्मविपाकेन वाहुजा सात्र कीर्तिता । पूर्वजन्मन्यसौ विप्रा न च गर्भं दधात्यलम् ॥ २ ॥
प्रायश्चित्तमिदं तस्याश्चात्र सर्वाघमोचनम् । कृत्वाऽजां गर्भसंयुक्तां राजतीं पद्पलात्मिकाम् ॥३॥
वैश्वानरस्तथा कार्यः पञ्चमाषैर्हिरण्मयः । पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४ ॥
येवं कुर्याद्विधानेन सर्वपापापनोदनम् । तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके एकोनचत्वारिंशदधिकद्विशततमः ॥ २३९ ॥

---

श्रीसूर्य उवाच ।

मृगयां प्राप्य पक्षीन्द्र गजराजवधात्पुरा । जायते गजचर्मा वै स नरोऽत्रैव जन्मनि ॥ १ ॥
गणेशप्रतिमां दद्यात्सौवर्णां द्विपलात्मिकाम् । गन्धपुष्पैश्च संपूज्य तस्माद्रोगाद्विमुच्यते ॥ २ ॥
कारयेद्गणनाथस्य लक्षजाप्यं विधानतः । होमयेत्तद्दशांशेन मुच्यते सर्वकिल्बिषात् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चत्वारिंशदधिकद्विशततम. ॥ २४० ॥

श्रीसूर्य उवाच ।

यो हरेत्परसिद्धान्नं प्राक् क्षुत्पीडाप्रपीडितः । सोऽत्र जन्मनि पक्षीन्द्र शूलरुक् पीडितोऽधुना ॥१॥
अन्नदानेन विप्राणां रसदानाद्विशेषतः । मुच्येत शूलजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥
सुवर्णशूलदानाद्वा विप्रायान्न कुटुम्बिने । शूलदोषोपशमनमिह जन्मनि वै ध्रुवम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकचत्वारिंशदधिकद्विशततम. ॥ २४१ ॥

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तः प्राक् सूत बभूव पुरुषोत्तमः । स्वजातिषु महाभाग दृढकर्मक्रियापरः ॥ १ ॥
वैराटदेशे निवसन् राजकार्थे रतः सदा । कृतवान् गोगृहं तत्र शत्रूणां भयदायकः ॥ २ ॥
बालवत्सा मृतातत्र पुरे तस्मिन् खगोत्तम । पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३ ॥
ततो यमपुरं प्राप्तो भुक्त्वा भोगांस्तदुक्तवत् । विष्णुपूजनजात्पुण्यात्प्राप्तोऽत्र यमुनातटे ॥ ४ ॥
चारणो धर्मनिरतो बहुपापात्प्रमुच्यते । एवंकृतविधेः सूत सर्वपापविनाशनम् ॥ ५ ॥
तेन पुत्रविवृद्धिः स्यादिह जन्मनि जायते । अकृते तु यथाशक्त्या प्रायश्चित्तं यथोचितम् ॥ ६ ॥
रिष्टं षष्टिमिते वर्षे दारुणं अनुचेकृतम् । प्रायश्चित्ते कृतेऽब्दानां जीवनं पञ्चसप्ततिम् ॥ ७ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विचत्वारिंशदधिकद्विशततम॰ ॥ २४२ ॥

श्रीसूर्य उवाच ।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यतिकोविदः । ग्रामवासी सदा सौम्यः शतद्रुनिकटेऽण्डज ॥ १ ॥
शूद्रकन्या च तेनैव हृया षोडशवार्षिकी । भुक्तातिकामलोभेन बलात्कारेण दूषिता ॥ २ ॥
स चाथ मम पुत्रस्य भुक्त्वा भैरवशासनम् । पूजनाच्छिवलिङ्गानां प्रागजापि च पक्षिराट् ॥ ३ ॥
षण्ढस्तेन विपाकेन प्राप्तसर्वमनोरथः । महोद्यमी महोत्साहो महाविभवविस्तरः ॥ ४ ॥
मृत्युश्चास्यात्र गङ्गायां पुण्याच्च शिवपूजनात् । भविष्यति महाभाग पापान्ते चात्र सद्गतिः ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिचत्वारिंशदधिकद्विशततमः ॥ २४३ ॥

श्रीसूर्य उवाच ।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि । यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय पतत्रिण । न पश्यति महापीडां पादजां चाण्डसंभव ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुश्चत्वारिंशदधिकद्विशततम॰ ॥ २४४ ॥

श्रीसूर्य उवाच ।

अभवत्प्राग्भवे विप्रो ग्रामवासी वनाश्रितः । चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विविधानि च । गोमूल्यस्थादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः॥ २ ॥

१ सोऽत्र दानात्-सपु० ।

स भुक्त्वा नरकान् घोरान् पापात्पुण्याच्च शाश्वतात्। स्वर्गान्पर्वतभागे तु स जातो वाहुजोधुना॥३॥
वामनो राजसम्मानी महोग्रो मन्त्रपारगः। पुत्रहीनोऽप्यसौ सूत परवित्तस्य लुण्ठनात् ॥ ४ ॥
भवन्त्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः। प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदपदान् सूत सौवर्णान् घृतपूरितान्। तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशविधानेन शृणुयाद्भक्तितोऽण्डज । रौद्रं व्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्यात्तत्पुण्यवर्धनम् ॥ ८ ॥
आयुरर्थं तथाशीतिर्वर्षाणां कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचचत्वारिंशदधिकद्विशततमः ॥ २४५ ॥

अरुण उवाच ।

क्षात्रवंशे समुत्पन्नो वातदेहरुजाकरः। गुल्माद्या ह्युदरे बाधाः शिरोऽर्तिर्जायते सदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किंचित्सेवादिना भवेत्। तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् २
अन्योन्यद्वेषभावाच्च किंचित्प्रीतिकरा परा। मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
एको गर्भः स्थिरीभूतो न प्रसूतिर्न पातनम्। केनोपायेन तन्मुक्तिः कथयस्व दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः। दानधर्मपरो नित्यं देवव्रतपरायणः ॥ ५ ॥
अन्योन्यद्वेषभावाच्च वर्तते च विधिस्ततः । कश्चिद्विप्रो धर्मपरो वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। तद्वित्तं भ्रादयामास शूद्रो म्लेच्छजनस्य च ॥ ७ ॥
लङ्घनाय मतिं चक्रे ब्राह्मणो भार्यया सह। भर्त्सनैस्तर्जनाद्यैस्तु तद्धनं च न दापितम् ॥ ८ ॥
कतिपयैर्वै शूद्रेण चान्येभ्यो विनतासुत। म्लेच्छात्क्षयं तदा ज्ञात्वा ब्राह्मणः क्रोधसंकुलः ॥९॥
तदर्थमपि संक्रुद्ध आत्मघातं चकार ह । गर्भयुक्ता च भार्या वै भर्तारं पृष्ठतोऽन्वगात् ॥ १० ॥
हृतं तस्यापि तत्सर्वं म्लेच्छराजेन तत्तदा। तावत्कालेन शूद्रोऽपि तेन म्लेच्छेन घातितः ॥११॥
ततो वै निरये वत्स वर्षायुतसहस्रशः । पाचितो नरके घोरे शूद्रो देहेन वै तदा ॥ १२ ॥
पश्चान्मानुषमापन्नो दानधर्मप्रभावतः । इदं तु तृतीयं जन्म शूद्रवंशसमुद्भवम् ॥ १३ ॥
तेनैव कर्मणा युक्त अपत्यं नैव जायते ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत्। निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया॥१५॥

श्रीसूर्य उवाच ।

संवत्सरं तीर्थसेवा एकाचित्तेन दम्पती । श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १६ ॥
तावत्यां क्रियया भूयः क्रमेणानेन यत्तदा । सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १७ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम्। तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् ॥ १८ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम् । उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः ॥ १९ ॥
जननीसहितान्भूयः प्रद्युम्नाद्यांस्तथार्चयेत्। चारुदेहं चारुबाहुं चारुगुप्तं, यशस्विनम् ॥ २० ॥

१ मोऽप्यभाग्येति–खपु० । २ 'एकोऽपरे स्थिरांभूते' इति–खपु० । ३ भूदेति–खपु० । ४ तावद्भिश्च हृतो भूय इति–खपु० ।

श्रीवत्साङ्कं पीतवस्त्रं सुचारुं पूजयेत्क्रमात् । पूजनं विष्णुभक्तेन तथा श्रीरसकोविदैः ॥ २१ ॥
पुष्पैः सगन्धधूपैश्च सार्चयेद्बहुवार्हणैः । ताद्विमासोऽयं वह्निष्णो विष्णो क्रमत नित्यशः ॥ २२ ॥
ईडितो देवाग्नि तथो विष्णो रेता देवाभिपद्गावेतो । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै ॥ २३ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् । यन्मया पापभावेन कर्मान्धेन दुरात्मना ॥ २४ ॥
म्लेच्छराज्ये च व्यापारे सदा वै दुष्कृतं कृतम् । ब्राह्मणानां हृतं द्रव्यं नीतं वै भक्षणे बलात् २५॥
द्रव्यापहरणात्मासं दुःखं नानाभवान्तरे । स्थिरगर्भं मृतापत्यं प्राप्तं तत्कर्मणः फलम् ॥ २६ ॥
तत्तदेनोविनाशाय दानं संप्रददे त्विदम् । स्वस्त्यस्त्विति च तत्रोक्त्वा कोऽदादिति विसर्जनम्॥२७॥
सापिण्ड्यात्मानमालोक्य भोजयेदिष्टबान्धवान् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २८ ॥
हृद्दुःखं दीर्घनिःश्वासो लोचने साश्रुकम्पिते । काष्ठलोष्ठादिशस्त्राद्यैर्घातः स्यात्तुपलेखनात् ॥२९ ॥
जलाकुलत्वं स्पर्शेऽग्निस्ताहशा अगसंभवाः । क्षीणाङ्गो विकृतिर्व्याधी विलक्षणमुखादिकम् ॥३०॥
पितृजा मातुलान्यास्तु विषघातिः स्वस्रादिषु । स्वकुले प्रेतजा पीडा दुःखं वै परपत्यजम् ॥३१॥
कर्मानुसारतो व्याधिश्चिह्नं तस्य सहायकम् । स्वकुले केऽपि वर्तन्ते पतिताचारचारिणः ॥ ३२ ॥
एवं तु लक्षयित्वा वै प्रायश्चित्तं ततो वदेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्चत्वारिंशदधिकद्विशततम ॥ २४६ ॥

---

श्रीसूर्य उवाच ।

पूर्वं ह्याभीरजा काचिद्भूद्धर्मपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां प्रेरितास्तथा । निदाघकाले संप्राप्ते वहिर्ग्रामाज्जलाशये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नेव जलाशये । शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्ता भृशं गावो लकुटेन हठेन वै । तत्रैकाऽति तृषायुक्ता गर्भभारान्विताऽपि या ॥ ४ ॥
न च त्यक्तं जलं सूत ताडितापि भृशं तया । तस्मिन् काले तदा सूत पतितो गर्भसंस्थितः ॥५॥
वत्सस्तत्ताडनादुग्रान्मृतश्चापि च तत्क्षणात् । विचेष्टितमिदं यस्या सैषा वैश्याङ्गनाऽधुना ॥ ६ ॥
नानाविभूतिसंयुक्ता नानापशुभिरन्विता । सुखभोगधनैर्धान्यैर्वाञ्छितार्थैःसमन्विता ॥ ७ ॥
प्रागोसेवनजातपुण्यात्सर्वं प्राप्तं फलं त्विदम् । अथात्र गर्भपूर्णत्वे सुखभावे खगाधिप ॥ ८ ॥
न मोचयति सा गर्भं दुःखेनाकुलिता भृशम् । एवं वर्षत्रयं यावन्मोचयिष्यति वै सुत ॥ ९ ॥
रिष्टमब्दत्रयं सूत बालवत्सवधादिह ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदर्शक ॥ ११ ॥

श्रीसूर्य उवाच ।

दद्यात्तां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ १२ ॥
सुवर्णद्विमितां तद्वत्कृत्वा गां गर्भसंयुताम् । दद्याद्देवविधिज्ञाय पूर्वपापात्प्रमुच्यते ॥ १३ ॥
भोजयेच्च तथा शक्त्या विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषात्तात्र कार्या विचारणा॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तचत्वारिंशदधिकद्विशततम ॥ २४७ ॥

---

१ ईरितो देवाग्निस्त्वो विष्णो रेता देवाभिपद्गावतोदति–पा० ।

श्रीसूर्य उवाच ।

बभूव पार्थिवः कश्चिद् गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिपरो नित्यं दानानि विधिपूर्वकम् । दत्तानि च विशिष्टेभ्यो ब्राह्मणेभ्योऽतिशक्तितः ॥२॥
देशाच्छत्रुगृहं गत्वा कृतं कर्म नृपा सुत । वैरिपुत्रः पुरा सूत पादभागेषु घातितः ॥ ३ ॥
कुन्तेनापि च तीक्ष्णेन दिवा वै शौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता ह्येकपुत्रिणी ॥४॥
पुत्रदुःखान्मृता सापि दत्त्वा शापं हि दारुणम् । यथा पुत्रविहीनाहं गच्छामि च यमालयम् ॥५॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो मुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलग्ने विधुस्थिते । श्यामांगो वृत्तरस्तीक्ष्णः प्रभुर्देशाऽन्ने रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रप्रियंवदान्वितः । मानभोगसुखाढ्यश्च मितदो लोभसंयुतः ॥ ९ ॥
धर्मात्सर्वं फलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसाविह जन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
स्त्रीजनं तत्सुतं चापि तन्मातरमसंयुताम् । पूजयित्वा तु गन्धाद्यैः षोडशोरूपचारकैः ॥ १३ ॥
सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने । पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् ॥ १४ ॥
तथैव गणनाथं च लेख्यं पञ्चोपचारकैः । संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये ॥ १५ ॥
अष्टाक्षरं[1] तथा मन्त्रं वैदिकं सूर्यदैवतम् । जपेदष्टसहस्रं[2] तु तथा प्रणवपूर्वकम् ॥ १६ ॥
गायत्रीं पञ्चसाहस्रं दुष्टपापविमोचनीम् । कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् ॥ १७ ॥
एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि । न प्राप्नोति तदा रिष्टं पङ्क्तिशाब्दं प्रकीर्तितम् ॥ १८ ॥
पञ्चवेदमिताब्दान्तमायुस्तस्य प्रकीर्तितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० अष्टचत्वारिंशदधिकद्विशततमः ॥ २४८ ॥

श्रीसूर्य उवाच ।

अज्ञानादवधीद्यश्च पूर्वजन्मन्यजां सुत । भविष्यत्यत्र पुरुषो ह्यधिकांगः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं सवत्सं च मुच्यते महदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुण संवादे कर्मविपाके अ० एकोनपञ्चाशदधिकद्विशततमः ॥ २४९ ॥

श्रीसूर्य उवाच ।

लोहहारी च पुरुष इह जन्मनि जायते । बर्बराङ्गारुग्रोगेण पीडितो वाऽत्र जन्मनि ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो वाऽनशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचाशदधिकद्विशततमः ॥ २५० ॥

श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीन्मनोहरा । प्राग्भवेऽण्डज तत्सर्वं चेष्टितं शृणु सांप्रतम् ॥ १ ॥
नकुलानां बिले कृत्वा चालितं हि वालुकम् । पूरितं च तथा सर्वं तद्घातार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वा तु यमशासनम् ॥ ३ ॥

१ वन्धुत्रीति–ख्पु० । २ सप्तपञ्चमितेति–ख्पु० ।

श्रीवत्साङ्कं पीतवस्त्रं सुचारुं पूजयेत्क्रमात् । पूजनं विष्णुभक्तेन तथा श्रीरसकोविदैः ॥ २१ ॥
पुष्पैः सगन्धधूपैश्च चार्चयेद्बहुधार्हणैः । तद्विप्रासोऽथ तद्विष्णो विष्णो क्रमत नित्यशः ॥ २२ ॥
शीइतो देवाग्नि तथो विष्णो रेता देवाभिपद्मावेतो । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै ॥ २३ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् । यन्मया पापभावेन कर्मान्धेन दुरात्मना ॥ २४ ॥
म्लेच्छराज्ये च व्यापारे सदा वै दुष्कृतं कृतम् । ब्राह्मणानां हृतं द्रव्यं नीतं वै भक्षणे बलात्॥२५॥
द्रव्यापहरणात्प्राप्तं दुःखं नानाभवान्तरे । स्थिरगर्भं मृतापत्यं प्राप्तं तत्कर्मणः फलम् ॥ २६ ॥
तत्तदेनोविनाशाय दानं संप्रददे त्विदम् । स्वस्त्यस्त्विति च तत्रोक्त्वा कोऽदादिति विसर्जनम्॥२७॥
सापिण्ड्यात्मानमालोक्य भोजयेदिष्टबान्धवान् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २८ ॥
हृद्दुःखं दीर्घनिःश्वासो लोचने साश्रुकम्पिते । काष्ठलोष्ठादिशस्त्राद्यैर्घातः स्याद्दुपलेखनात् ॥२९ ॥
जलाकुलत्वं स्पर्शेऽग्निस्ताद्दशा ग्रगसंभवाः । क्षीणाङ्गो विकृतिर्व्याधौ तिलव्रणमुखादिकम् ॥३०॥
पितृजा मातुलान्यास्तु विधवार्तिः स्वप्नादिषु । स्वकुले प्रेतजा पीडा दुःखं वै पशुपत्यजम् ॥३१॥
कर्मानुसारतो व्याधिश्चिह्नं तस्य सहायकम् । स्वकुले केऽपि वर्तन्ते पतिताचारचारिणः ॥ ३२ ॥
एवं तु लक्षयित्वा वै प्रायश्चित्तं ततो वदेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय. षट्चत्वारिंशदधिद्विशततम. ॥ २४६ ॥

---

श्रीसूर्य उवाच ।

पुरा ह्याभीरजा काचिद्भर्तृपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां प्रेरितास्तया । निदाघकाले संप्राप्ते बहिर्ग्रामाज्जलाशये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नेव जलाशये । शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्ता भृशं गावो लकुटेन दृढेन वै । तत्रैकाऽपि तृषायुक्ता गर्भभारान्विताऽपि या ॥ ४ ॥
न च त्यक्तं जलं सूत ताडितापि भृशं तया । तस्मिन् काले तदा सूत पतितो गर्भसंस्थितः ॥५॥
वत्सस्तत्ताडनाद्दुग्धान्मृतश्चापि च तत्क्षणात् । विचेष्टितमिदं यस्या सैषा वैश्याङ्गनाऽधुना ॥ ६ ॥
नानाविभूतिसंयुक्ता नानापशुभिरन्विता । सुखभोगधनैर्धान्यैर्वर्जितार्थैस्समन्विता ॥ ७ ॥
प्राग्गोसेवनजात्पुण्यात्सर्वं प्राप्तं फलं त्विदम् । अथात्र गर्भपूर्णत्वे युवभावे खगाधिप ॥ ८ ॥
न मोचयति [illegible] गर्भं दुःखेनाकुलिता भृशम् । एवं वर्षत्रयं यावन्मोचयिष्यति वै सुत ॥ ९ ॥
रिष्टमब्दत्रयं सूत बालवत्सवधादिह ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदर्शक ॥ ११ ॥

श्रीसूर्य उवाच ।

दद्यादगां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ १२ ॥
सुवर्णाद्विमितां तद्वत्लेख्यां गां गर्भसंयुताम् । दद्याद्वेदविदिज्ञाय पूर्वपापात्प्रमुच्यते ॥ १३ ॥
भोजयेच्च तथा शक्त्या विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषान्नात्र कार्या विचारणा॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तचत्वारिंशदधिकद्विशततम ॥ २४७ ॥

---

१ शीरतो देवाग्निनथो विप्रो रेता देवाभिपद्मावतोदाति–ख पु० ।

श्रीसूर्य उवाच ।

बभूव पार्थिवः कश्चिद् गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिपरो नित्यं दानानि विधिपूर्वकम् । दत्तानि च विशिष्टेभ्यो ब्राह्मणेभ्योऽतिशक्तितः ॥२॥
देशाच्छत्रुगृहं गत्वा कृतं कर्म रुषा सुत । वैरिपुत्रः पुरा सूत पादभागेषु घातितः ॥ ३ ॥
कुन्तेनापि च तीक्ष्णेन दिवा वै शौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता ह्येकपुत्रिणी ॥४॥
पुत्रदुःखान्मृता सापि दत्त्वा शापं हि दारुणम् । यथा पुत्रविहीनाहं गच्छामि च यमालयम् ॥५॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो सुरजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे नृपलग्ने विधुस्थिते । श्यामांगो धूसरस्तीक्ष्णः प्रभुर्देशाटने रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रप्रियवदान्वितः । मानभोगसुखाढ्यश्च मितदो लोभसंयुतः ॥ ९ ॥
धर्मात्सर्वं फलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसाविह जन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
स्त्रीजनं सत्सुतं वापि तन्मातरमसंयुताम् । पूजयित्वा तु गन्धाद्यैः षोडशोरुपचारकैः ॥ १३ ॥
सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने । पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् ॥ १४ ॥
तथैव गणनाथं च लेख्यं पञ्चोपचारकैः । संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये ॥ १५ ॥
अष्टाक्षरं[१] तथा मन्त्रं वैदिकं सर्वदैवतम् । जपेदष्टसहस्रं[२] तु तथा प्रणवपूर्वकम् ॥ १६ ॥
गायत्रीं पञ्चसाहस्रं दुष्टपापविमोचनीम् । कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् ॥ १७ ॥
एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि । न प्राप्नोति तदा रिष्टं पड्विंशाब्दं प्रकीर्तितम् ॥ १८ ॥
पञ्चवेदमिताब्दान्तमायुस्तस्य प्रकीर्तितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० अष्टचत्वारिंशदधिकद्विशततमः ॥ २४८ ॥

श्रीसूर्य उवाच ।

अज्ञानाद्दवधीयश्च पूर्वजन्मन्यजां सुत । भविष्यत्यत्र पुरुषो ह्यधिकांगः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं सवस्त्रं च मुच्यते महदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुण संवादे कर्मविपाके अ० एकोनपंचाशदधिकद्विशततमः ॥ २४९ ॥

श्रीसूर्य उवाच ।

लोहहारी च पुरुष इह जन्मनि जायते । वर्वराङ्गास्थ्यरोगेण पीडितो वाऽत्र जन्मनि ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो वाऽनशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचाशदधिकद्विशततमः ॥ २५० ॥

श्रीसूर्य उवाच ।

सर्वमनोरथैर्युक्ता काचिद्दासीन्मनोहरा । प्राग्भवेऽण्डज तत्सर्वं चेष्टितं शृणु सांप्रतम् ॥ १ ॥
नकुलानां बिले कृत्वा चातितप्तं हि वालुकम् । पूरितं च तथा सर्वे तद्धातार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वा तु यमशासनम् ॥ ३ ॥

१ वन्दुत्रीति—ख्पु० । २ समपत्रमितेति—खपु० ।

पूर्वं शतद्रुदेशोत्था ह्यभूदत्र च पर्वते । पूर्वे राजकुले जाताऽत्रापि राजकुले सुत ॥ ४ ॥
प्राग्दानव्रतजातपुण्यात्ततः पापफलाच्छृणु । सर्वे तद्देशजाः सुत वःऽग्रे, मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च वर्षमष्टोत्तरं शतम् । न मुच्यते महापापाद्द्वाजन्मत्रयेऽपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति सांप्रतम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकपञ्चाशदधिकद्विशततमः ॥ २५१ ॥

## श्रीसूर्य उवाच ।

या नारी प्राग्भवे पुत्र घातयेद्जनन्दनम् । सगर्भा गर्भपुष्ट्यर्थं जायतेऽगाधिका तु सा ॥ १ ॥
भोगादेव क्षयः प्रोक्तः समारब्धस्य कर्मणः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विपञ्चाशदधिकद्विशततमः ॥ २५२ ॥

## श्रीसूर्य उवाच ।

लोहं हरति याऽन्यस्य नारी बुद्धिविवर्जिता । अत्र जन्मनि सा नारी बर्बराङ्गान्विता भवेत् ॥१॥
दद्यात्पलशतं लोहं ससुवर्णं द्विजातये । मुच्यते पापजाद्रोगाद्बर्बराङ्गाभिधात्सुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिपञ्चाशदधिकद्विशततमः ॥ २५३ ॥

## श्रीसूर्य उवाच ।

मोहात्प्राग्याऽवधीत्सुत नार्यजां विधिवर्जितम् । साङ्गाधिकात्र जनुपि भाविष्यति वरानना ॥ १ ॥
अजां दद्याद्विधानेन कस्तूरीपलसंयुताम् । सवस्त्रां वेदविदुषे तद्दोषशमनं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःपञ्चाशदधिकद्विशततमः ॥ २५४ ॥

## अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयः । वित्ततः कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
धनधान्यसमोपेतः किंचिद्व्यापारवान्भुवि । दायादाच्छत्रुवत्पीडा मिथः क्लेशश्च जायते ॥ २ ॥
तस्य नारीद्वयं चास्ति संजातं चात्र जन्मनि । बह्व्यः पुत्र्यः प्रसूताश्च न तु पुत्रः प्रजायते॥ ३ ॥
कदाचिज्जातगात्रस्तु मृतः पुत्रोऽष्टमासकः । एका पुष्पवती भार्या संजाता तस्य भास्कर॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय मे विभो ॥ ५ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि से क्षत्रः किंचिद्भूमिपतिस्तथा । अवर्तत्वार्थलुब्धः स ग्रामाधीशः प्रतापवान् ॥ ६ ॥
ग्राममध्ये स्तुतिं चक्रे ब्राह्मणो ज्ञानसत्तमः । पुत्र्यः पंच तथा सप्त ह्यपुत्रो वित्तसंयुतः ॥ ७ ॥
कालेन मृत्युमापन्नो धनलुब्धो निराश्रयः । तस्य भार्या महासाध्वी साहसं कृतवान्खग ॥ ८ ॥
क्रियाकर्म विना तस्य तेन तत्र मृता खग । क्षत्रियेण चिन्तयित्वा नीतं द्रव्यमपुत्रिणः ॥ ९ ॥
निराधाराः सुता जाता पितृभावेन दुःखिताः। सर्वस्वहरणाद्यापि मृताः कन्या इतस्ततः ॥ १० ॥
गृहस्य तस्य चोद्वासः संजातस्तत्र कर्मणा । क्षत्रियस्य गृहे पुत्रो जातः सर्वाङ्गसुन्दरः ॥ ११॥
ये [illegible] पुनः स वै ब्राह्मण ईरितः । एवं ब्रह्मस्वकं प्राप्तमभुक्तं क्षत्रियाधमः ॥ १२ ॥

[illegible] । २ तन्मातुर्मातृपक्षे कान्तिलोकमनागतम् । इति खपु० ।

पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः । तेन कर्मविपाकेन कन्यापत्यो मृतः सुतः ॥ १३ ॥
तस्य पापस्य नाशाय निष्कृतिः कथ्यते शुभा ॥ १४ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येन पापक्षयो भवेत् । संततिं लभते सौख्यं लोकानां हितकाम्यया॥१५

श्रीसूर्य उवाच ।

शुभे त्ववसरे मासे ह्ययने शुभवासरे । मारभेद्धरिभक्तश्च संवत्सरविधिं सुत ॥ १६ ॥
प्रत्यहं परमेशानं विष्णुमव्यक्तमव्ययम् । पौरुषेणेह सूक्तेन अर्चयेद्विधिपूर्वकम् ॥ १७ ॥
कुंकुमागरुकर्पूरश्रेष्ठैर्गन्धैस्तुलसीदलैः । अर्चयेद्विविधैः पुष्पैरुपचारैः पृथक्पृथक् ॥ १८ ॥
मीमाप्यनाभरास्तेजोवायव्यैः पञ्चभिस्तथा । एवं व्रतपरा नारी भर्तृभक्तिपरायणा ॥ १९ ॥
अर्चयन्ती हरिं पूर्णपर्वावधि समाचरेत् । शुभे मासे शुभे पक्षे चैकादश्यामुपोषिता ॥ २० ॥
शुभनक्षत्रयुक्तायां द्वादश्यां पुत्रकाम्यया । पूर्ववद्धरिमभ्यर्च्य ऋग्भिः षोडशभिः प्रभुम् ॥ २१ ॥
विधिवद्वह्निमास्थाय अर्चयेद्वैष्णवं चरुम् । आज्यभागावसानेन कपिलाज्याहुतिस्ततः ॥ २२ ॥
पौरुषेण तु सूक्तेन यावत्षोडशसंख्यया । अश्वत्थसमिधस्तिस्रो जुहुयात्षोडशैव तु ॥ २३ ॥
पुनराज्यं ततो हुत्वा जुहुयाच्चरुमप्यथ । होमान्ते द्विजभोजान्ते दानमेतत्समाचरेत् ॥ २४ ॥
हिरण्यभूमिवासांसि धेनुं वत्ससमन्विताम् । विप्रस्योद्वाहनं कृत्वा कन्यां सालंकृतामपि ॥ २५ ॥
दक्षिणां प्रतिपाद्याथ च्छलकौटिल्यवर्जिताम् । प्राश्नीयात्तद्धविःशेषं सह पत्न्या हरिं स्मरेत् २६
इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वै ध्रुवम् । सुभगा च सुरूपा च भवेद्विगतकिल्बिषा॥२७॥
ऐहिकं लक्षणं चिन्त्यं पूर्वकर्मानुसारतः । गुल्मार्शं उदरे बाधा गुदान्तवृषणार्तयः ॥ २८ ॥
वातरक्ताक्षिशिरसो भेगे कर्णेऽतिपुत्रणः । स्तनेऽतिगौरवं दद्रुः सीमन्ते पादवैकृतिः ॥ २९ ॥
जनश्रुतिर्विनिन्द्या च जायते कारणं विना । हानिस्तु सर्ववस्तूनां द्रव्यनाशो जरामयम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचपंचाशदधिकद्विशततमः ॥ २५५ ॥

श्रीसूर्य उवाच ।

अथ शूद्रकुले पूर्वमासीत्पुण्या वराङ्गना । तदा दानरता जाता कुरुक्षेत्रे पतत्रिण ॥ १ ॥
सर्वैः सुखैः सदोपेता सर्वसंपत्तिसंयुता । तया कृतं महापापं भाविनोऽर्थस्य वै बलात् ॥ २ ॥
समीपे वासिनश्चास्या ब्राह्मणस्य नवं गृहम् । निर्दग्धं चाग्निना सूत वैरभावे पतत्रिण ॥ ३ ॥
तत्र दग्धा महाभाग गौरपापा गृहान्तगा । कृत्वैतदद्भुतं कर्म भुक्त्वा तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्सात्र जाता हि बाहुजा । माथुरे मण्डले पुण्ये वृषलश्रोपलक्षिते ॥ ५ ॥
सुखदुःखसमाक्रान्ता जातसंततिनाशकृत् । दुःखैरनेकैर्युक्ताऽत्र मध्यभावात्खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गङ्गायां पितृतर्पणम् । कुरुक्षेत्राधिवसनं प्राक्पापानां विनाशनम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्पंचाशदधिकद्विशततमः ॥ २५६ ॥

श्रीसूर्य उवाच ।

चक्रपादरुजा युक्तश्चात्र जन्मनि जायते । पूर्वजन्मनि वै मोहाद्द्वे शुनि पतत्रिण ॥ १ ॥-

१ वैष्णवमिति खपु० । २ करे पादे च वैकृतिरिति खपु० । ३ कृतमिति–खपु० । ४ बध्याच्छुन मिति–भवेत ।

निष्कत्रयं प्रदातव्यं सुवर्णं वेदपारगे । दानेनानेन विधिना पूर्वपापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तपञ्चाशदधिकद्विशततमः ॥ २५७ ॥

---

श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दन्तपातनजाद्रोगात्पीडामाप्नोति निश्चयात् ॥ १ ॥
दद्याद्धेनुं सवत्सां च सर्वालंकारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टपञ्चाशदधिकद्विशततमः ॥ २५८ ॥

---

श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीडिता ॥ १ ॥
तया तद्दोषशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपादप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनषष्ट्यधिकद्विशततमः ॥२५९ ॥

---

श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता । सात्र जन्मनि दुःखार्ता दन्तपातनजाद्गदात् ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुम्बिने । प्राजापत्याद्व्रतादेकाचस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षष्ट्यधिकद्विशततमः ॥ २६० ॥

---

श्रीसूर्य उवाच ।

कश्चिदासीत्पुरा सूत चारणो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभवेऽण्डज । तत्र दानानि दत्तानि ब्राह्मणस्य करग्रहे ॥ २ ॥
तेनैकदा महाभाग पापमाचरितं त्विदम् । स्वजात्यां वै धृतो गर्भः कामलोभेन निश्चयात् ॥ ३ ॥
यत्ने कृते तु तत्रैव चासीद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चाण्डज ॥ ४ ॥
एवं बहुतिथे काले गतः स यमशासनम् । भुक्त्वा पापफलं दुःखं पुण्याँल्लोकाञ्शुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गोदावर्याः समीपे तु देशेऽन्यस्मिन्कलाश्रये ॥ ६ ॥
स रक्तकृष्णो मतिमान्दीर्घो मध्यः पृथुः सुधीः । आदिभागे धनी भोगी मध्यमेऽन्ते न सौख्यभाक् ॥ ७ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्तादिसहितश्चात्र दाने स्वल्पमतिः शठः ॥ ८ ॥
स्वजात्यां वीर्यदानाच्च जातपुत्रविनाशवान् । लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गात्पञ्चमावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहैर्युतनिरीक्षितः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णभूषणान्विता ॥ ११ ॥
तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः । संपूज्य वेदविदुषे दद्याद्दोषापनुत्तये ॥ १२ ॥
माषः सप्तमितैर्देयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यम्बकं तु सहस्रकम् ॥ १३ ॥
होमयेत्तद्दशांशेन कपिलैकां प्रदापयेत् । य एवं कुरुते सूत प्रायश्चित्तार्थनाशनम् ॥ १४ ॥
तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्रैव जायते । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥ १५ ॥

---

१ कामदुर्बल इति–खपु० । २ नासीदिति–खपु० । ३ मध्यमेऽन्तेतिसौख्यवित–खपु० । ४ कपिलैकां प्रदीयते इति–खपु० ।

न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । आयुरष्टाद्विवर्षाणि प्रायश्चित्ते कृतेऽधुना ॥ १६ ॥
प्रायश्चित्तेऽकृते रिष्टं पञ्चाशन्मितकेऽब्दके ॥ १७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकषष्ट्यधिकद्विशततमः ॥ २६१ ॥

श्रीसूर्य उवाच ।

यश्च बभ्रुं महाभाग हन्यान्मोहान्नराधमः । बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयहिरण्यस्य कृत्वात्र नकुलं शुभम् । बभ्रुमण्डलनाशार्थं ब्राह्मणाय प्रदापयेत् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विषष्ट्यधिकद्विशततमः ॥ २६२ ॥

श्रीसूर्य उवाच ।

काचिच्चारणजा नारी बभूव प्रियवादिनी । व्रतदानरता साध्वी पूर्वजन्मनि चाण्डज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं गह्वरं वनम् । निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य तज्जनितं फलम् । तत्र दानवशात्पूर्वादत्र सा पादजा स्मृता ॥ ३ ॥
जीवघातात्तथा पूर्वात्पापादत्रैव जन्मनि । जातसंततिहीना सा कुष्ठरोगेण पीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन संपद्यते सुखम् । गृहवित्तषडंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपा महोरगाः । शक्त्या संभोज्य विप्रेन्द्रांस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिषष्ट्यधिकद्विशततमः ॥ २६३ ॥

श्रीसूर्य उवाच ।

शैलघाती महाभाग कुब्जवर्णः प्रजायते । निष्कृतिं तस्य पापस्य शृणु चात्र पतत्रिण ॥ १ ॥
शक्त्या सोपस्करं दद्याद्विप्रे वेदाङ्गपारगे । तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःषष्ट्यधिकद्विशततमः ॥ २६४ ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः । द्विजानां पूजको दक्षः सिन्धुमण्डलजोऽण्डज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्कृतं कर्मापि चाद्भुतम् । स्वपत्नी स्थापिता पण्यशालायां हि पतत्रिण ॥२ ॥
पण्यस्त्रीकर्मतश्चास्ते चकार ह्युपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतश्चात्र जन्मन्यस्ति च वर्तते । शूद्राधमोऽथ वै षण्ढः पूर्वपापाच्छृणुष्व तत् ॥ ४ ॥
निष्कृतिस्तस्य पापस्य ह्यदत्ताग्नि हि भाषिता ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचषष्ट्यधिकद्विशततमः ॥ २६५ ॥

श्रीसूर्य उवाच ।

या नारी नकुलं पूर्वे घातयेद्विनतासुत । सात्र जन्मनि रोगेण बभ्रुमण्डलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम् । तद्रोगनाशनं दद्याद्बभ्रुं निष्कद्वयस्य च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदने ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्षष्ट्यधिकद्विशततमः ॥ २६६ ॥

---

१ अध्यायोऽयं नास्ति—ख पु० ।

अरुण उवाच ।

कश्चित्क्षत्रकुले[1] जातो नानावृत्तिनिरोधकः । नानासन्चो भवेद्भार्या उदरार्तिः प्रजायते ॥ १ ॥
मेहं[1] वै कुरुते नित्यं नेत्रे तोदो विरश्मिता । कटिपृष्ठोरुवंशेषु बाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया व्रतकारिणी । सौभाग्यसुखसंपन्ना पितृमातृसुखोज्झिता ॥
केन संततिहीना च कथं पापेन लिप्यते ॥ ३ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णान्तरे जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय तस्करैः कर्मतत्परः ॥ ४ ॥
धनानामन्तरे प्राप्तः कश्चिद्विप्रः समागतः । गृहीतं तस्य सर्वस्वं यत्किंचिच्चार्जनात्कृतम् ॥ ५ ॥
तेन वै निहतो विप्रस्तस्करेण दुरात्मना । तस्करोऽसौ मृतश्चापि जातश्च वनपन्नगः ॥ ६ ॥
स पश्चान्नरके घोरे पातितोऽयुतसंख्यया । पश्चान्मानुषमापन्नः किंचित्पुण्यप्रभावतः ॥ ७ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । इदं जन्म चतुर्थं हि वन्ध्यत्वं चोपजायते ॥ ८ ॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि । तेन कर्मविपाकेन स्त्रीपुंसोर्जायते त्विह ॥
वन्ध्यत्वं पुत्रहीनत्वं सूत जन्मनिजन्मनि ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं ब्रूहि देव वन्ध्यायां हितकाम्यया । आप्नुयात्संततेः सौख्यं येन पापक्षयो भवेत् ॥१०॥

श्रीसूर्य उवाच ।

शुभे त्ववसरे मासे शुभतीर्थादिसंगमे । विधिवद्विहितं पूर्वैः कृतं स्मृत्योपभाषितम् ॥ ११ ॥
विप्रस्योद्वाहनं कृत्वा गृहदानं यथाविधि । धनधान्यादिकं दत्त्वा तोषयेद्विप्रयाचकान् ॥ १२ ॥
विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणे किल । पुण्याहे विधिमातिष्ठेदनपत्याधिनाशनम् ॥ १३ ॥
सुशुभे भूप्रदेशे तु समे कम्बलवस्त्रिते । विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम् ॥ १४ ॥
परितो रत्निमात्रं तु द्रोणमानैश्च तण्डुलैः । विदध्यात्पर्वतांश्चैव देवद्रुमविभूषितो ॥ १५ ॥
ततस्तौ दम्पती शुद्धौ स्नातावहतवाससौ । दधानौ शुभवेषाढ्यौ चिन्तयानौ प्रजापतिम् ॥ १६ ॥
सूर्योदये च तत्पत्न्याः कुर्यान्मूर्तिं प्रजापतेः । शुद्धवर्णसुवर्णस्य निष्कद्वयविनिर्मिताम् ॥ १७॥
हेममयज्ञोपवीतां च साक्षमालाकमण्डलुम् । अदितेरपि केयूरहारग्रैवेयभूषिताम् ॥ १८ ॥
तदर्धार्धविभागेन तेनैव तस्याः शुभाकृतेः । शैशवीमर्चयेन्मूर्तिं विष्णोर्वामनरूपिणः ॥ १९ ॥
तन्मूर्तित्रितयं सम्यक् कृतसंस्कारमर्चयेत् । कृत्वा प्रतिष्ठितप्राणं ज्ञातकर्माय पुत्रियोः ॥ २०॥
बाललीलाधरं विष्णुं वामनं परिचिन्तयेत् । मातरं द्रष्टुमिच्छन्तं हरिं प्रापणकाङ्क्षया ॥ २१ ॥
ततस्तदाश्रमतटात्सुमेरोस्तिलपर्वतात् । प्रत्यगिरिं प्रगच्छन्तं मार्गैः स्वपदभूषितैः ॥ २२ ॥
आदीर्वे तमपश्यन्ती विरहाकुलचेतसम् । रुदन्तीमिति तं द्रष्टुमाह्वयंतीं परान्मुनीन् ॥ २३ ॥
एवं ध्यात्वाथ तां मन्त्रैर्मन्त्रार्थोदितलक्षणैः । पुष्पस्रग्धूपगन्धाद्यैरर्चयेदतिविह्वलाम् ॥ २४ ॥
तद्विभासोऽथ तद्विष्णोर्विष्णोः कर्माणि पश्यत । ततस्तां वैष्णवीं मूर्तिं मातुरुत्सङ्गगामिनीम् २५
कृत्वा तस्याः प्रतिष्ठां तां लब्धपुत्रां विचिन्तयेत् । अपश्यंतीमिमं मन्त्रं मन्त्रार्थगुणलक्षणम् २६

---

१ मेहो वै-खपु० । २ वाते-खपु० । ३ प्रध्यामे-खपु० ।४ याजयेः-खपु०।५ पर्वतायेन-खपु० ।
६ स्नातौ तस्याः शुभाकृतेः-खपु० । ७गिरीगच्छन्त-खपु०।८ विह्वला-खपु० ।

पुत्रेण सहितां देवीमर्चयेद्विविधैर्गुणैः। ततो ब्राह्मणमध्ये तु समाहूय गुणान्वितम् ॥ २७ ॥
तस्मै तां प्रतिमां दद्यात्सपुत्रामदितेः श्रुताम्। यन्मया निहतो विप्रो धनं हृत्वा घने वने ॥२८॥
चौराणां संगमे पापं प्राप्तमेवोल्बणं महत्। तस्य पापस्य नाशाय दानमेतद्ददाम्यहम् ॥ २९ ॥
सौवर्णी प्रतिमामेनामनघोऽहं भवेदिति। भोजयेच्च शतं विप्रान्सर्पिष्यात्मानमीक्षयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तषष्ट्यधिकद्विशततमः ॥ २६७ ॥

---

श्रीसूर्य उवाच।

उलूकघातेन पूर्वे जन्मन्यत्र च पुत्रक। पाण्डुरोगेण सततं पीडितो वै भवेद् भृशम् ॥ १ ॥
कस्तूरिकापलं चैकं दद्याद्विप्राय पर्वणि। उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तस्मिन्पापोपशमने पाण्डुरोगो विनश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षष्ट्यधिकद्विशततमः ॥ २६८ ॥

---

श्रीसूर्य उवाच।

या नारी घातयेत्काचिदुलूकं पूर्वजन्मनि। पाण्डुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यादत्र विधिनाय पलमेकं पतत्रिण। कस्तूरिकाया विप्रस्य पाण्डुरुग्नाशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनसप्तत्यधिकद्विशततमः ॥ २६९ ॥

---

श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे पञ्चनदे पुरा। धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रीतसङ्गतः सोऽपि प्रयागे गरुडाग्रज। स स्नातो मृगगे भानौ धूर्तो धर्मक्रियोज्झितः ॥ २ ॥
संप्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम्। ग्रामे निवसतोऽन्यस्य क्षत्रियस्य पतत्रिण ॥ ३ ॥
ददाह भवनं रम्यं वैरिभावात्पुरानघ। तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन संप्राप्तः स मृत्वा यमशासनम्। भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना। गङ्गायाः प्राक् परे देशे शतयोजनसंमिते ॥ ६ ॥
स मध्यरूपी बलवान्धर्मे स्वल्पमतिः शठः। बुद्धयाविक्रमचारी च पैतिकः स्वल्पवित्तभाक् ॥७॥
सकन्यश्च सपत्नीको बन्धुभृत्यसुखान्वितः। पुण्यादिदं फलं पूर्वतपापादत्र शृणुष्व च ॥ ८ ॥
गोबालवत्सकवधाज्जीववातादपुत्रकः। सप्तवेदमिताब्दान्तं जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः। गोराशिगे शनौ सोमात्पष्ठे जीवे मृगस्थिते ॥१०॥
लग्नेतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि। पूर्वं या स्त्री सहायासीन्मृतवत्सात्र सा सुत ॥ ११॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्पूर्वपापनिषूदनीम्। पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधनीम्। पञ्चस्वर्णमिता कार्या सुरभिश्च हिरण्मयी ॥१३॥
तदर्धमितिका वापि देया वित्तानुसारतः। संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥

---

१ मतयोऽहं-ख पु०। २ संप्राप्तः-ख पु०। ३ तमःस्वरूपः-ख पु०। ४ बुधाधिक-ख पु०।

मार्षेवह्निमितंदेयस्तया पशुपतिः सुत । माषाभ्यां च तथा वह्निर्जीवा माषचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये । जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेदष्टशतकं रुद्रस्याग्रे प्रयत्नतः । शृणुयाद्धरिवंशं वा दशावृत्तिविधानतः ॥ १७ ॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं त्रिवामतम् । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया॥१८॥
नैवं कुर्याच्च यः शक्त्या निष्पेके पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः॥१९॥
नवसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्यधिकद्विशततमः ॥ २७० ॥

### श्रीसूर्य उवाच ।

वणिक् पूर्वभवे कश्चिदासीद्धर्मपरायणः । द्विभार्यः सिद्धपीठस्थो धनधान्यसमन्वितः ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः । ब्राह्मणेषु गृहस्थेषु सत्पात्रेषु विशेषतः ॥ २ ॥
अथात्र कृतवान्पापं कामलोभेन नित्यशः । ज्येष्ठां त्यक्त्वा तु संप्राप्तां सुशीलां प्रियवादिनीम्॥३॥
रतिं ददौ कनिष्ठायामनृतावपि मोहितः । ततो मृत्युवशं प्राप्तः ससहायो वणिक्सुतः ॥ ४ ॥
भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा । विधिपुण्यवशात्सोऽत्र शतद्रोः पूर्वभागजः ॥ ५ ॥
कुम्भस्थेऽर्कसुते कीटे जीवे सिंहे मृगे विधौ । स रक्तगौरो मतिमान् पितृभ्रातृसुतान्वितः॥ ६ ॥
भ्रातृमित्रधनैर्युक्तः सौम्यः पितृवचोऽनुगः । घृणी ह्रस्वोऽथ मितवः क्षत्रवंशसमुद्भवः ॥ ७ ॥
दानादिदं फलं सर्वं स्त्रीत्यागान्मृतपुत्रकः । स्त्रीत्यागी भ्रूणहा यस्मेऽपीति वेदविदो विदुः ॥ ८ ॥
स्त्रीसाहाय्ययुतः पूर्वं शृणुष्वाथ खगेश्वर । प्राग्भवे या कनिष्ठाभूत्सा ज्येष्ठात्र मृतप्रजा ॥ ९ ॥
गर्भदोषपरता चेति लक्षणैर्लक्षयेत्सुत । वक्ष्यामि निष्कृतिं तस्य पूर्वपापापनोदनीम् ॥ १० ॥
कुर्यात्पले रसमितंब्रह्माणं कमलोद्भवम् । विश्वमूर्तिं त्रिलोकेशं सौवर्णं लिखितं शुभम् ॥ ११ ॥
तदर्धार्धमितं देवं त्रिपु वित्तादिमं पठन् । " त्यक्त्वा वराङ्गनां शुद्धां यत्पूर्वं पापमर्जितम् ॥ १२ ॥
तेनाहमत्र ब्रह्माणं प्रायश्चित्तं ददे द्विजं" । गौरी तु राजती देया द्विपलार्कैश्च तन्मितः ॥ १३ ॥
माषपञ्चमितां विष्णोः सौवर्णीं ब्राह्मणाय वै । हिरण्मयी तथा लक्ष्मीर्देया माषाष्टका शुभा॥१४॥
ब्राह्मणान्भोजयेत्पश्चाद् गृहयज्ञं समाचरेत् । भोजयेच्च यथाशक्त्या ब्राह्मणान्गरुडाग्रज ॥ १५ ॥
एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः । ज्येष्ठायां च कनिष्ठायां नात्र कार्या विचारणा॥
शक्तेनं शक्तिमान्यस्तु न कुर्यात्पापशोधनम् । न जीवन्ति सुतास्तस्य रिष्टं वेदाग्निकेऽब्दके ॥१७॥
प्रायश्चित्ते कृते त्वत्र पुत्रपौत्रविवर्धनम् । भविष्यति तथा ह्यायुः सप्तसप्तमिताः समाः ॥ १८ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकसप्तत्यधिकद्विशततमः ॥ २७१ ॥

### श्रीसूर्य उवाच ।

खशदेशे ह्यभूत्कश्चिच्छूद्रो धर्मप्रियस्ततः । विवाहं कृतवान्सूत कन्यायाः पूर्वजन्मनि ॥ १ ॥
दाने स्वल्पमतिस्तस्माच्चकारात्पविधानतः । चौर्यकर्मरतः सोऽपि कदाचिद्दैवयोगतः ॥ २ ॥
चचार पर्वते सूत मार्गलुण्ठनतत्परः । अथो भाविवशात्सूत प्राप्ता काचिद्वराङ्गना ॥ ३ ॥
पूर्णगर्भसमायुक्ता नानाभरणभूषिता । सा लुण्ठिता भयत्रस्ता तेन क्रूरधियाण्डज ॥ ४ ॥

१ यस्मादिति-खपु० । २ द्विज-खपु० । ३ धर्माप्रिय-खपु० । ४ एने-खपु० ।

सहायस्तु परित्यक्ता ताडनान्मदाकुला । तस्या गर्भच्युती तत्र कन्यापुत्रौ बभूवतुः ॥ ५ ॥
असहायेन तेनैव पापमाचरितं पुरा । ततो यमपुरं प्राप्तो धर्माधर्मसमन्वितः ॥ ६ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । कन्यादानप्रभावेण स जातोऽत्र वणिक्सुतः ॥ ७ ॥
कुरुक्षेत्राद्याम्यभागे त्रिंशद्योजनसंमिते । स रक्तकृष्णः क्षीणाङ्गः स्वल्पवित्तसमन्वितः ॥ ८ ॥
वातपित्तसमद्वन्द्वो बहुपुत्रीभिरन्वितः । प्रियस्त्रीसंयुतो लोभी पितृभक्तिसमन्वितः ॥ ९ ॥
जातपुत्रविहीनश्च पापात्पुण्यात्तथा फलम् । चिह्नमङ्गादिदं सूत चन्द्रो मिथुनराशिगः ॥ १० ॥
न पश्यति सुतं कर्के लाभे शुक्रः प्रपश्यति । तस्माद्बहुत्वं कन्याया न च पुत्रसुखं क्वचित् ॥११॥
निष्कृतिं तस्य वक्ष्यामि पूर्वपापविशोधनीम् । शूद्रायाः प्रतिमा कार्या पलार्धार्धमितेन तु ॥ १२ ॥
लेख्यौ गर्भच्युतौ बालौ तौ वरौ भूषणान्वितौ । सा देया तु विधिज्ञाय पूर्वपापविशुद्धये ॥१३॥
देवः पञ्चमितैर्मापैस्तया वेदनिधिः सुत । जपेच्च वेधसो मन्त्रं वैष्णवं त्र्यम्बकं तथा ॥ १४ ॥
पूर्वपापविशुद्ध्यर्थं सहस्रं प्रतिदैवतम् । होमयेच्च तिलांस्तत्र सघृतान्स्थण्डिले शुभे ॥ १५ ॥
स्वगृह्योक्तविधानेन स्थापयित्वा हुताशनम् । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम्॥१६॥
ततो रुद्रव्रतं कुर्यात्सर्वपापविशोधनम् । चतुर्दश्यां निराहारो रुद्रपूजनतत्परः ॥ १७ ॥
य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः । तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि वै ध्रुवम् ॥ १८ ॥
नैवं विधानं यः कुर्यान्नैव पुत्रसुखं लभेत् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ १९ ॥
कृते त्वायुश्चतुरशीतिश्चतुर्भिरधिकाः समाः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विसप्तत्यधिकद्विशततमः ॥ २७२ ॥

---

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे कश्चिद्वङ्गदेशे द्विजो धनी । विद्याभ्यासयुतो नित्यं धर्मशास्त्रक्रियान्वितः ॥ १ ॥
दत्तानि तेन चाल्पानि दानान्यपि विजानता । पर्वस्वपि च तेनैवाध्यापिता ब्राह्मणास्तथा ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । कालयोगेन संप्राप्य ब्राह्मणेन कुटुम्बिना ॥ ३ ॥
स्थापितं तद्गृहे द्रव्यं घटे ताम्रमये स्थितम् । पुनर्दत्तं न तत्तस्मै लोभोपहतचेतसा ॥ ४ ॥
सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिस्त्रिभिः । ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः ॥ ५ ॥
भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा । विद्यादानादिपुण्येन जातोऽसौ ब्राह्मणोऽधुना ॥ ६ ॥
देशे पञ्चनदे प्राप्य गौरः पित्ताधिको घृणी । वाचा मधुरया युक्तो राजराश्चतुरः सुधीः ॥ ७ ॥
दर्शनीयो नातिह्रस्वो नात्युच्चः क्रोधवर्जितः । सुखस्त्रीमानसंयुक्तः स दासोऽतिधनैर्युतः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । धूर्तः शठोऽल्पदो मन्दः स्वल्पधर्मक्रियान्वितः॥९॥
इष्टैर्मनोरथैर्हीनः पुत्रसंततिदुःखदः । ब्रह्मस्वभक्षणात्पूर्वं फलमत्रास्ति निश्चितम् ॥ १० ॥
लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि । जन्मलग्नात्सुते राशौ घटः पापसमन्वितः ॥ ११ ॥
सहायलक्षणं सर्वं वक्ष्याम्यथ खगेश्वर । पुत्राभावो भ्रातृहीनः स्त्रीसुताल्पत्वसंयुतः ॥ १२ ॥
लक्षणैरेभिराढ्यस्य पृच्छकस्यात्र जन्मनि । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ १३ ॥
लक्ष्मीनारायणः कार्यः सुवर्णाद्रिमितः शुभः । तदर्धं वाथ सौवर्णं देयं वित्तानुसारतः ॥ १४ ॥
स्थापयित्वा घटे ताम्रे सघृते वस्त्रवेष्टिते । संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणाय प्रदापयेत् ॥ १५ ॥

---

१ रजत इति–खपु० । २ स्वहरणात्–खपु० । ३ द्वयोरिति–खपु० ।

चतुर्विंशत्सहस्राणि गायत्री च जपेत्ततः । होमयेच्च यथाशक्त्या कुण्डे वा स्थण्डिले शुभे ॥१६॥
घृतमिश्रांस्तिलांस्तत्र शक्त्या विप्रांश्च भोजयेत् । मम जन्मदिने पश्चादाचरेद्व्रतमुत्तमम् ॥१७॥
य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः । तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि ॥ १८॥
नवं विधानं यः कुर्याद्विप्रद्रव्यापनाशनम् । पुत्रपौत्र यस्य लाभो न न तस्य परमा गतिः ॥१९॥
प्रायश्चित्ते कृतेऽरिष्टं पञ्चाशन्मितकेऽब्दके । प्रायश्चित्ते कृते ह्यायुः सप्तसप्तमितान्दिकम् ॥ २० ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायत्रिसप्तत्यधिकद्विशततमः ॥ २७३ ॥

श्रीसूर्य उवाच ।

गान्धारदेशेऽभूत्कश्चिद्ब्राह्मणो धर्मसंयुतः । ग्रामाधिपश्चोग्रदण्डो ब्रह्मभक्तिपरो दृढः ॥ १ ॥
स गत्वा तु कुरुक्षेत्रं सर्वस्वं विधिनाऽददात् । प्राप्ते सूर्यग्रहे सुत विप्राय च कुटुम्बिने ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य गौरवात् । यौवने धर्षिता विप्रपत्नी चातिशुभानना ॥ ३ ॥
कामलोभेन सततं पतिस्तस्याः प्रपीडितः । एवं निवसतस्तत्र गतस्तु यमशासनम् ॥ ४ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण ॥ जातो बाहुजाधरः ॥ ५ ॥
ऐरावत्यास्तु निकटे त्रिशद्योजनसंमिते । शूरः सुरूपो मतिमान् यशस्वी प्रियदर्शनः ॥ ६ ॥
पुत्रदारधनैर्युक्तो बहुभिः प्रतापवान् । रंजसेऽजतिविख्यातः सुखैश्वर्ययुतो नृपः ॥ ७ ॥
देशेदेशेऽधिकाराढ्य आजन्मे सुखभागिह । दाता भोक्ता प्रधानश्च बहुपालनतत्परः ॥ ८ ॥
धर्मादिदं तथा पापात्क्रोधी दण्डरतोऽव्ययी । पूर्वस्त्रीसुखहेतोस्तु मनोदुःखमथान्वितः ॥ ९ ॥
धर्षणाद्द्विजयोषायाः प्राक् पतेस्तत्र ताडनात् । यौवने नेत्ररोगाढ्यश्चात्र जन्मनि निश्चयात्॥१०॥
चिह्नमङ्गादिदं चन्द्रो भौमयुक्तस्तृतीयगः । वक्ष्यामि निष्कृतिं तस्य सर्वपापविशोधनीम् ॥११॥
हेम्नः पलैर्वेदमितैः शिवः कार्यो विधानतः । सर्वोपचारैः संपूज्य दद्याद्विप्राय धीमते ॥ १२ ॥
गोभूहिरण्यदानानि कृत्वा च सुखमेधते ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकद्विशततमः ॥ २७४ ॥

श्रीसूर्य उवाच ।

सुखेन पालयते तेन कुटुम्बः शकटादिना । दैवात्स च वनं गत्वा ददाह वनमल्पकम् ॥ १ ॥
तस्मिन्दाहे तु निर्दग्धा जीवास्तत्र खगाधिप । पापमाचरितं काष्ठसंबन्धाद्भाविनो बलात् ॥ २ ॥
स्त्रीसाहाय्ययुतस्तत्र गतस्तु यमशासनम् । भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गं तथाण्डज ॥ ३ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्र वणिक्सुतः । गङ्गायाः पश्चिमे भागे सप्तयोजनसंमिते ॥ ४ ॥
स रक्तगौरो वाचालो धूर्तो मध्यमरूपधृक् । स्वल्पवित्तयुतो लोभी सभार्यो बुद्धिमान्नरः ॥ ५ ॥
द्विपञ्चाशन्मिताब्दान्ते जातसंततिनाशकृत् । तस्य चिह्नमिदं प्रोक्तं पापदृष्टयुतः सुतः ॥ ६ ॥
पापभांशगतश्चन्द्रः पापालोकनसंयुतः । लक्षणं क्षितं चास्य कीर्तितं हि गरुडाग्रज ॥ ७ ॥
स्त्रीसाहाय्योद्भवात्पापदामुक्ता पूर्वजन्मनि । तस्मात्सा योषिता त्वत्र मृतपुत्रा प्रपीडिता ॥ ८ ॥

१ गौर इति-खपु० । २ रानसेत्रीति-खपु० । ३ दण्डका इति कपु० । ४ यो बाल्ये-खपु० ।
५ धिवध्य द्रौ भौमश्चेन्द्रर्जिनौपति -खपु० । ६ योनिं येतश्चिन्त्यम् ।

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्पुत्रदुःखनिषूदनीम् । रिष्टात्मक् दिवसाध्यक्ष लोकानां हितकाम्यया॥९॥

श्रीसूर्य उवाच ।

निष्कृतिं तत्प्रवक्ष्यामि जीवदाहविमोचनीम् । यां कृत्वा विधिवत्सूत वंशवृद्धिः प्रजायते ॥ १० ॥

पद्मपत्रे राजते पत्रे वेदाङ्गुलमिताधिके । वनजीवास्तथा लेख्याः सुगन्धैः पञ्चभिर्युताः ॥ ११ ॥

सर्पवृश्चिकगोधाढ्याः पक्षिणश्च पलोन्मिताः । देया विप्राय विधिना पूजयित्वा कुटुम्बिने ॥१२॥

तदर्धमितकैर्वापि देया वित्तानुसारतः । वनदेवी तथा कार्या स्ववेदमितमाषकैः ॥ १३ ॥

माषद्वयहिरण्येन तथा कुर्याद्धुताशनम् । संपूज्य दद्याद्विप्राय इमं मन्त्रमुदीरयेत् ॥ १४ ॥

"वनान्तरगताः पूर्वं ये जीवा दाहिता मया । वनदेव्याविदानात्तु गच्छन्तु मम पातकाः"॥१५॥

इत्युच्चार्य नरः सर्वं ब्राह्मणाय निवेदयेत् । शृणुयाद्धरिवंशं वा त्रिरावर्त्य विधानतः ॥ १६ ॥

जपेत्सहस्रद्वितयं देव्या मन्त्रमथोक्तवत् ॥ १७ ॥

मन्त्रः–'ॐ ह्रीं वनान्तरागतायै नमः ॥' मम जन्मदिने पश्चादाचरेद्विधिना व्रतम् ॥ १८ ॥

एवं यः कुरुते सूत त्रिपु पापविशोधनम । तस्य पुत्रविवृद्धिस्तु जायतेऽत्रैव जन्मनि ॥ १९ ॥

नैवं कुर्याच्च यो मोहात्तस्य पुत्रविनाशनम् । द्विपञ्चाशन्मिते रिष्टमायुपश्चाद्विवत्सराः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचसप्तत्यधिकद्विशततमः ॥ २७५ ॥

---

श्रीसूर्य उवाच ।

कश्चिद्विप्रोऽभवत्पूर्वं धर्मकर्मपरायणः । गौडदेशेऽतितेजस्वी चोग्रदण्डः प्रतापवान् ॥ १ ॥

सप्तविंशत्तमे वर्षे गयाश्राद्धमकारि च । काम्यश्राद्धानि तत्रैव दत्तान्यल्पविधानतः ॥ २ ॥

स मन्त्रविदथो शूरो राज्ञः शत्रोः पुरं गतः । स्वामिधर्मरतो दैवात्कृतवान् गोगृहं पुरा ॥ ३ ॥

तत्रैका सुरभी सूत ह्यासन्नप्रसवा हता । तेनाऽस्त्रेण केनापि ताडिता गर्भदुःखिता ॥ ४ ॥

शल्यंगतेन दुःखेन मृता सा कालनोदिता । गर्भस्योऽपि मृतो वत्सो भाविनोऽर्थस्य गौरवात् ॥ ५ ॥

प्रतापलोभयुक्तेन पापमुग्रमुपार्जितम् । सहार्थकसमायुक्तः स गत्वा यमशासनम् ॥ ६ ॥

पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण स जातः कुरुजाङ्गले ॥ ७ ॥

द्विजो मध्यमरूपाढ्यः पितृभक्तः कुलाग्रणीः । सुखैश्वर्ययुतो दाता महाधनसमन्वितः ॥ ८ ॥

देशेदेशेऽधिकाराढ्यः स्त्रीभोगभ्रातृसंयुतः । मध्येऽन्तेऽतिधनैर्युक्तो मतिमाँल्लोकविश्रुतः ॥ ९ ॥

प्राक् श्राद्धमितवर्षेऽस्य जातपुत्रसमन्वितः । गयाश्राद्धादिदं सर्वं पापात्पापफलं शृणु ॥ १० ॥

क्रूरचेष्टोऽतिदुष्टात्मा दुर्धर्षः क्रोधसंयुतः । नैककन्यो महालोभी धर्मपूर्णोऽस्ति चाण्डज ॥११॥

गोवालवत्सवधात्पृच्छकः शिशुनाशकः । यस्मात्प्रतापलोभेन गोभ्यो दत्तं भयं पुरा ॥ १२[1] ॥

तस्मात्प्रतापकालान्ते मध्ये वापि भयं त्विह । श्राद्धस्याल्पविधानात्याग्धनहानिः प्रजायते॥१३॥

चिह्नमेतच्छशी लग्ने शुभपापान्वितोऽस्तगः । योऽभूदस्य सहायः प्राक् पृच्छकस्य सुतस्त्विह॥१४॥

लक्षितो लक्षणैस्त्वेतैरेवं हि गरुडाग्रज । वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधनीम् ॥ १५ ॥

पलैरर्कमितैः कार्या धेनुरत्र हिरण्मयी । पत्रे लेख्या सवत्सा च तदर्धार्धमिता तथा ॥ १६ ॥

सा देया तु विधिज्ञाय गन्धपुष्पैरलंकृता । तथा पशुपतिर्देयः सुवर्णैकमितः प्रभुः ॥ १७ ॥

---

१ दानधर्म–खपु० ।

नारायणगणेशार्का देवास्तद्वन्मितास्तथा । गायत्र्यष्टसहस्रं तु त्र्यम्बकं दिवसहस्रकम् ॥ १८ ॥
अष्टाक्षरं जपेत्तद्वत्पूर्वपापविशोधनम् । होमयेच्च दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ १९ ॥
ततः शिवं सदा ध्यायेत्सर्वकार्यार्थसिद्धिदम् । य एवं कुरुते सूत पूर्वपापविशोधनम् ॥ २० ॥
न चास्य दुरितं व्याधिर्न च शत्रुभयं क्वचित् । पुत्रपौत्रधनादीनां वृद्धिरत्रैव न क्षयः ॥ २१ ॥
नैवं विधानं यः कुर्याल्लोभान्मोहात्प्रयत्नतः । न च पुत्रधनादीनां वृद्धिरत्र प्रजायते ॥ २२ ॥
प्रायश्चित्ते कृते पुत्र रिष्टं षष्टिमितेऽब्दके । प्रायश्चित्ते कृतेऽशीतिसमाः स्युरायुषां स्थिर ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्सप्तत्यधिकद्विशततमः ॥ २७६ ॥

---

## श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ वैश्यो बभूव कुरुजाङ्गले । बहुभृत्यसुतैर्युक्तः क्रोधी वित्तसमन्वितः ॥ १ ॥
विवाहं कृतवान् पूर्वं कन्याया ब्राह्मणस्य च । हठी धर्मक्रियाहीनो दुःसहायसमन्वितः ॥ २ ॥
ज्येष्ठां स्त्रियं धर्मयुक्तां सुशीलां रूपसंयुताम् । परित्यज्याकरोद्यत्नाद्विवाहं भयसंयुतः ॥ ३ ॥
ऋतुप्राप्तां तदा तां च परित्यज्य शुभाननाम् । प्राददाद्भार्यां कनिष्ठायां रतिं कामातुरोऽप्यपम् ४
स तेन कर्मणा युक्तो भुक्त्वा पापं शुभं फलम् । सहायद्वययुक्तश्च जातो वन्दिजनोऽधुना ॥ ५ ॥
शतद्रोश्च समीपे तु गौरः श्रद्धान्वितः सुखी । सहायाढ्योऽल्पवित्तश्च त्यागी देवद्विजार्चकः ॥६॥
वाचा मधुरया युक्तः पुत्रोत्पत्तिविवर्जितः । प्राग्भवे यः सहायोऽभूत्सोऽत्र पुत्रविवर्जितः ॥ ७ ॥
सहजः पृच्छकस्यापि मृतो भ्राताऽप्युनाण्डजाथा स्त्री प्राक् तु सहायासीत्कनिष्ठा साप्यपुत्रिणी ८
अत्र जन्मनि भार्या सा गर्भं नैव दधात्यसौ । लक्षणैरङ्कितं सर्वैर्वेद्मि गरुडाग्रज ॥ ९ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन पापक्षयो भवेत् लक्ष्मीनारायणं दद्याच्चतुःषष्टिपलात्मकम् ॥ १० ॥
तदर्धार्धपलैर्वापि द्विजाय विधिपूर्वकम् । पूजयित्वा तु गन्धाद्यैः पुत्रपौत्रविवर्धनम् ॥ ११ ॥
कलशे स्थापयेत्ताम्रे नानाऋग्भिश्च प्रपूजिते । तदग्रे होमयेद्धीमांस्तिलानष्टाक्षरेण तु ॥ १२ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम् । एवं यः कुरुते सूत मुच्यते भ्रूणहत्यया॥१३॥
पुत्रपौत्रविवृद्धिः स्यादिह जन्मनि चाण्डज । एवं कुर्यात्प्रयत्नेन प्रायश्चित्तं खगेश्वर ॥ १४ ॥
तस्य जीवेच्च संतानं भविष्यति न संशयः । पञ्चाशद्वत्सरे तु रिष्टं चाकृतनिष्कृतेः ॥ १५ ॥
प्रायश्चित्ते कृतेऽशीतिमितायुः कीर्तितं मया । ज्येष्ठकृष्णचतुर्दश्यां निर्याणं कथितं ध्रुवम् ॥१६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तसप्तत्यधिकद्विशततमः ॥ २७७ ॥

---

## श्रीसूर्य उवाच।

प्रागासीत्क्षत्रियः कश्चिज्जाङ्गले च प्रतापवान् । धर्मशास्त्रक्रियाध्यक्षो ग्रामाध्यक्षो धनान्वितः॥१॥
दत्तानि तेन दानानि प्राप्ते सोमग्रहे सुत । पर्वस्वपि च विप्रेभ्यः श्रद्धापूतेन चेतसा ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । ब्राह्मण्यां धारितो गर्भः कामलोभेन निश्चयात् ॥३॥
यत्ने कृतेऽपि तेनैव नासीद्गर्भस्य पातनम् । ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥ ४ ॥
अर्भकोऽपि मृतस्तस्या गर्भे चोत्पातपीडनात् । सहायैकयुतेनैवं कृतं प्राक्कर्म दारुणम् ॥ ५ ॥
ततो मृत्युवशं प्राप्तः सहायाढ्यो हि बाहुजः गत्वा चान्द्रमसं लोकं भुक्त्वा भोगांश्च शाश्वतान्॥६॥
पापात्पापफलं भुक्त्वा नरकांश्चातिदारुणान् । महापापकृताद्दोषात्तत्रैव क्षत्रियादधः ॥ ७ ॥
शतद्रोः पूर्वभागे तु दशयोजनसंमिते । देशे जातः पूर्वपुण्यात्स शूद्रश्चात्र जन्मनि ॥ ८ ॥

सुकर्माभिरतः साधू रक्तः श्यामश्च मध्यमः । धनी सुधीः पितृभक्तोऽनेकस्त्रीभोगसंयुतः ॥ ९ ॥
आयन्तसुखसंयुक्तश्च मतिमाँल्लोकविश्रुतः ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टसप्तत्यधिकद्विशततमः ॥ २७८ ॥

श्रीसूर्य उवाच ।

गलगण्डगलो द्रव्यहर्ता भवति मानवः । दानेन तत्प्रतीकारं वक्ष्यामि शृणु चाण्डज ॥ १ ॥
अध्यापयति शिष्यांस्तु यः प्रतार्य गुरुस्तथा। शिष्यो गुरुं वञ्चयित्वा योऽधीते तस्य तस्य च॥२॥
जायते गलगण्डाख्यो रोगस्तदुपशान्तये ।

तथा च ।

अभक्ष्यभक्षपापी वा गण्डमाली भवेन्नरः ॥ ३ ॥
माणिक्यं पद्मरागं वा वज्रं मौक्तिकमेव च । वैडूर्यं पुष्पराग च वज्रं मारकतं तथा ॥ ४ ॥
एभिर्मालां प्रकुर्वीत तत्र मध्येऽब्ज राजतम् । अलाभे मौक्तिकीं मालां तस्मै दानं प्रकल्पयेत्॥५॥
ताम्रपात्रे विनिक्षिप्य तिलानामुपरि न्यसेत् । तिलानां परिमाणं हि द्रोणपञ्चकमिष्यते ॥ ६ ॥
यद्वा तदर्धमेवं स्यात्स्वशक्त्या वापि कारयेत् । महाशान्तिं तथा कुर्याद्ब्राह्मणैर्वेदपारगैः ॥ ७ ॥
आचार्यस्तु शुचिर्दक्षः सर्वशास्त्रार्थकोविदः । श्रुतविद्योपसंपन्नः सर्वप्राणिहिते रतः ॥ ८ ॥
एवंविधं पूजयित्वा वस्त्रमाल्यानुलेपनैः । होमं च कारयेत्तेन समिधाज्यचरूत्कटम् ॥ ९ ॥
आसत्येन तथा मन्त्रः सोमराजानमित्यपि ।

मन्त्रः ।

"मालेयं सर्वदेवत्या ब्रह्मविष्णुशिवादिभिः ॥ १० ॥
इन्द्रादिलोकपालैश्च तथा सर्वाग्रमरपि । इयं मे कण्ठमाला या धारिता प्रीतिपूर्वकम् ॥ ११ ॥
ब्राह्मणेभ्यः प्रदानात्तु गलगण्डं व्यपोहतु ।" ग्रहशान्तिः कृता येस्तु तेभ्यो दद्याच्च दक्षिणाः॥१२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनाशीत्यधिकद्विशततमः ॥ २७९ ॥

श्रीसूर्य उवाच ।

चांडालादिवचः शृण्वन् यो भुञ्जानस्तथैव हि । भुंक्ते स पाटलतनुः पित्तोद्रेकी च जायते ॥ १ ॥
प्राणवानपि[1] वा दद्यात्तिलान्वेदविदे तथा । मम सूक्तेन[2] विप्रेन्द्र सर्पिषा मधुसूदने ॥ २ ॥
सहस्रं जुहुयादन्नं मम प्रीत्यर्थमेव च । चाण्डालादिवचः शृण्वन् भोजनं[3] दोषजं मतम् ॥ ३ ॥
अत्र वृद्धगौतमवचः ।
[ अत्र वृद्धगौतमस्तु स्वर्णप्रजदानं प्रदर्शयति । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकद्विशततमः ॥ २८० ॥

श्रीसूर्य उवाच ।

खरकाकादिमांसानां भक्षकः स्फोटवान्भवेत् । पार्श्वयोस्तत्रिकृत्यथ कृच्छ्रं चान्द्रायणं तथा॥१॥
चाण्डालकृतवापीषु तडागे कूपकादिषु । स्नात्वा पीत्वा च सर्वाङ्गे दाहवान्हस्तपादयोः ॥ २ ॥
स्फोटयुक्तश्च स भवेत्कृच्छ्रं सान्तपनं चरेत् । गां हिरण्यं च वासश्च दद्याच्छक्त्यानुसारतः ॥३॥

---

१ प्रीतवानपि भवेत्–ख पु० । २ यमसूक्तेन इति–ख पु० । ३ भोजनं कालकामतः–ख पु० ।

नारायणगणेशार्का देवास्तद्दन्मितास्तथा । गायत्र्यष्टसहस्रं तु त्र्यम्बकं दिक्सहस्रकम् ॥ १८ ॥
अष्टाक्षरं जपेत्तद्वत्पूर्वपापविशोधनम । होमयेच्च दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ १९ ॥
ततः शिवं सदा ध्यायेत्सर्वकार्यार्थसिद्धिदम् । य एवं कुरुते सूत पूर्वपापविशोधनम् ॥ २० ॥
न चास्य दुरितं व्याधिर्न च शत्रुभयं क्वचित् । पुत्रपौत्रधनादीनां वृद्धिरेव न क्षयः ॥ २१ ॥
नैवं विधानं यः कुर्याल्लोभान्मोहात्प्रयत्नतः । न च पुत्रधनादीनां वृद्धिरत्र प्रजायते ॥ २२ ॥
प्रायश्चित्ते कृते पुत्र रिष्टं षष्टिमितेऽब्दके । प्रायश्चित्ते कृतेऽशीतिसमाः स्युरायुषां त्विह ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्सप्तत्यधिकद्विशततमः ॥ २७६ ॥

---

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ वैश्यो बभूव कुरुजाङ्गले । बहुभृत्यसुखैर्युक्तः क्रोधी वित्तसमन्वितः ॥ १ ॥
विवाहं कृतवान् पूर्वं कन्याया ब्राह्मणस्य च । हठी धर्मक्रियाहीनो दुःसहायसमन्वितः ॥ २ ॥
ज्येष्ठां स्त्रियं धर्मयुक्तां सुशीलां रूपसंयुताम् । परित्यज्याकरोद्यत्नाद्विवाहं भयसंयुतः ॥ ३ ॥
ऋतुप्राप्तां तदा तां च परित्यज्य शुभाननाम् । प्राददात्प्राक् कनिष्ठायां रतिं कामातुरोऽप्ययम् ४
स तेन कर्मणा युक्तो भुक्त्वा पापं शुभं फलम् । सहायद्वययुक्तश्च जातो वन्दिजनोऽधुना ॥ ५ ॥
शतद्रोश्च समीपे तु गौरः श्रद्धान्वितः सुखी । सहायाढ्योऽल्पवित्तश्च त्यागी देवद्विजार्चकः ॥६॥
वाचा मधुरया युक्तः पुत्रोत्पत्तिविवर्जितः । प्राग्भवे यः सहायोऽभूत्सोऽत्र पुत्रविवर्जितः ॥ ७ ॥
महजः पृच्छकस्यापि मृतो भ्राताऽधुनाण्डजाया स्त्री प्राक् तु सहायासीत्कनिष्ठा साप्यपुत्रिणी ८
अत्र जन्मनि भार्या सा गर्भं नैव दधात्यसौ । लक्षणरहितं सर्वंखेहि गरुडाग्रज ॥ ९ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन पापक्षयो भवेत् लक्ष्मीनारायणं दद्याच्चतुःषष्टिपलात्मकम् ॥ १० ॥
तदर्धार्धपलैर्वापि द्विजाय विधिपूर्वकम् । पूजयित्वा तु गन्धाद्यैः पुत्रपौत्रविवर्धनम् ॥ ११ ॥
कलशे स्थापयेत्ताम्रे नानारत्नैश्च प्रपूजिते । तदग्रे होमयेद्वीमांस्तिलानष्टाक्षरेण तु ॥ १२ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम् । एवं यः कुरुते सूत मुच्यते भ्रूणहत्यया॥१३॥
पुत्रपौत्रविवृद्धिः स्यादिह जन्मनि चाण्डज । एवं कुर्यात्प्रयत्नेन प्रायश्चित्तं खगेश्वर ॥ १४ ॥
तस्य जीवेच्च संतानं भविष्यति न संशयः । पञ्चाशदष्टवर्षे तु रिष्टं चाकृतनिष्कृतेः ॥ १५ ॥
प्रायश्चित्ते कृतेऽशीतिमितायुः कीर्तितं मया । ज्येष्ठकृष्णचतुर्दश्यां निर्याणं कथितं ध्रुवम् ॥१६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तसप्तत्यधिकद्विशततमः ॥ २७७ ॥

---

श्रीसूर्य उवाच।

प्रागासीत्क्षत्रियः कश्चिज्जाङ्गले च प्रतापवान् । धर्मशास्त्रक्रियाध्यक्षो ग्रामाध्यक्षो धनान्वितः॥१॥
दत्तानि तेन दानानि प्राप्ते सोमग्रहे सुत । पर्वस्वपि च विप्रेभ्यः श्रद्धापूतेन चेतसा ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । ब्राह्मण्यां धारितो गर्भः कामलोभेन निश्चयात् ॥३॥
यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम् । ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥ ४ ॥
अर्भकोऽपि मृतस्तस्या गर्भे चोत्पातपीडनात् । सहायैकयुतेनैवं कृतं पापं दारुणम् ॥ ५ ॥
ततो मृत्युवशं प्राप्तः सहायाढ्यो हि वाड्जः। गत्वा चान्द्रमसं लोकं भुक्त्वा भोगांश्च शाश्वतान्॥६॥
पापात्पापफलं भुक्त्वा नरकांश्चातिदारुणान् । महापापकृताद्दोषात्त्विवं क्षत्रियादधः ॥ ७ ॥
शतद्रोः पूर्वभागे तु दशयोजनसंमिते । देशे जातः पूर्वपुण्यात्स शूद्रश्चात्र जन्मनि ॥ ८ ॥

सुकर्माभिरतः साधू रक्तः श्यामश्च मध्यमः। धनी सुधीः पितृभक्तोऽनेकस्त्रीभोगसंयुतः ॥ ९ ॥
आद्यन्तसुखयुक्तश्च मतिमाँल्लोकविश्रुतः ॥ १० ॥
इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टसप्तत्यधिकद्विशततमः ॥ २७८ ॥

श्रीसूर्य उवाच।
गलगण्डगलो द्रव्यहर्ता भवति मानवः। दानेन तत्प्रतीकारं वक्ष्यामि शृणु चाण्डज ॥ १ ॥
अध्यापयति शिष्यांस्तु यः मतार्थे गुरुस्तथा। शिष्यो गुरुं वञ्चयित्वा योऽधीते तस्य तस्य च॥२॥
जायते गलगण्डाख्यो रोगस्तदुपशान्तये।
तथा च।
अभक्ष्यभक्षपापी वा गण्डमाली भवेन्नरः ॥ ३ ॥
माणिक्यं पद्मरागं वा वज्रं मौक्तिकमेव च। वैडूर्यं पुष्परागं च वज्रं मारकतं तथा ॥ ४ ॥
एभिर्मालां प्रकुर्वीत तत्र मध्येऽत्र राजतम्। अलाभे मौक्तिकीं मालां तस्मै दानं प्रकल्पयेत्॥५॥
ताम्रपात्रे विनिक्षिप्य तिलानामुपरि न्यसेत्। तिलानां परिमाणं हि द्रोणपञ्चकमिष्यते ॥ ६ ॥
यद्वा तदर्धमेवं स्यात्स्वशक्त्या वापि कारयेत्। महाशान्तिं तथा कुर्याद्ब्राह्मणैर्वेदपारगैः ॥ ७ ॥
आचार्यस्तु शुचिर्दक्षः सर्वशास्त्रार्थकोविदः। श्रुतविद्योपसंपन्नः सर्वप्राणिहिते रतः ॥ ८ ॥
एवंविधं पूजयित्वा वस्त्रमाल्यानुलेपनैः। होमं च कारयेत्तेन समिधाज्यचरूत्कटम् ॥ ९ ॥
आसत्येन तथा मन्त्रः सोमराजानमित्यपि।
मन्त्रः।
"मालेयं सर्वदेवत्या ब्रह्मविष्णुशिवादिभिः ॥ १० ॥
इन्द्रादिलोकपालैश्च तथा सर्वाणिमैरपि। इयं मे कण्ठमाला या धारिता प्रीतिपूर्वकम् ॥ ११ ॥
ब्राह्मणेभ्यः प्रदानात्तु गलगण्डं व्यपोहतु।" ग्रहशान्तिः कृता यैस्तु तेभ्यो दद्याच्च दक्षिणाः॥१२॥
इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनाशीत्यधिकद्विशततमः ॥ २७९ ॥

श्रीसूर्य उवाच।
चांडालादिवचः शृण्वन् यो भुञ्जानस्तथैव हि। भुंक्ते स पाटलतनुः पित्तोद्रेकी च जायते ॥ १ ॥
माणवानपि वा दद्यात्तिलान्वेदविदे तथा। मम सूक्तेन विप्रेन्द्र सर्पिषा मधुसूदने ॥ २ ॥
सहस्रं जुहुयादन्नं मम प्रीत्यर्थमेव च। चाण्डालादिवचः शृण्वन् भोजनं दोषजं मतम् ॥ ३ ॥
अथ वृद्धगौतमवचः।
[ अत्र वृद्धगौतमस्तु स्वर्णभजदानं प्रदर्शयति। ]
इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकद्विशततमः ॥ २८० ॥

श्रीसूर्य उवाच।
खरकाकादिमांसानां भक्षकः स्फोटवान्भवेत्। पार्श्वयोस्तन्निवृत्त्यर्थ कृच्छ्रं चान्द्रायणं तथा॥१॥
चाण्डालकृतवापीषु तडागे कूपकादिषु। स्नात्वा पीत्वा च सर्वाङ्गे दाहवान्हस्तपादयोः ॥ २ ॥
स्फोटयुक्तश्च स भवेत्कृच्छ्रं सान्तपनं चरेत्। गां हिरण्यं च वासश्च दद्याच्छक्त्यनुसारतः ॥३॥

१ प्रीतयानपि भवते–खपु०। २ यमसूक्तेन इति–खपु०। ३ भोजनं कालकामतः–खपु०।

अवमन्य तु भर्तारं जारमालिङ्गयतेऽनघ । सार्धं क्रीडति या नारी तमेवानुस्मरत्यपि ॥ ४ ॥
तस्यास्तु स्तनयोः स्फोटा जायन्ते जनमान्तरे । भगे च रक्तं स्रवति तद्रोगस्य प्रशान्तये ॥ ५ ॥
दद्यादाज्यं पञ्चलवणं हरिद्रां धान्यमेव च । उमामहेश्वरं चैव पूजयेच्च धने सति ॥ ६ ॥
निष्कद्वादशकं दद्याज्जपेन्नामाग्निसूक्तकम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकाशीत्यधिकद्विशततम ॥ २८१ ॥

श्रीसूर्य उवाच ।

अनिर्दशाया गोः पीत्वा पयः स स्फोटवान्भवेत् । उपवासत्रयं कुर्याद्भोजयेद्विंशतिं द्विजान् ॥१॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽशीत्यधिकद्विशततम ॥ २८२ ॥

श्रीसूर्य उवाच ।

देवानां ब्राह्मणानां वा धनाहरणतस्तथा । स्वामिद्रोहाद्वातरोगी भवेद्दस्यापि निष्कृतिः ॥ १ ॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥ २ ॥

[ अत्र हिरण्यदानं कर्मविपाके । ]

गुर्वप्रीतिकरो यस्तु वातरोगी भवेन्नरः । नामत्रयेण कुर्वीत जपं होमं च शान्तये ॥ ३ ॥
होमयित्वा परान्नं तु भुङ्क्ते यस्तु विगर्हितम् । सोन्मादवातयुक्तः स्यात्कृच्छ्रं चान्द्रायणं तथा ॥
कुर्यात्सारस्वतं मन्त्रं जपेद्ब्राह्मणतर्पणम् ॥ ४ ॥
अनिच्छन्तीमिच्छती यान्नुपभुङ्क्ते परस्त्रियम् । बलादाक्रम्य स नरः सर्वगात्रेषु वेदनाम् ॥ ५ ॥
तीव्रामाप्नोति रुगिय चतुर्वातयुता भवेत् । दरी तदुपनुत्त्यर्थं महिषीदानमाचरेत् ॥ ६ ॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् । उद्यज्ञयजपश्चैव शक्त्या ब्राह्मणभोजनम् ॥ ७ ॥
नामत्रयं जपेन्मर्त्यो रोगशान्त्यर्थमात्मनः । सेहस्रनामकं वापि स्तोत्रं सम्यग्विधानतः ॥ ८ ॥
अच्युतानन्त गोविन्देत्येतन्नामत्रयं द्विज । अच्युतत्रितयावृत्त्या जपेद्रोगस्य शान्तये ॥ ९ ॥
पुरुषसूक्तं जपेद्विद्वांस्ततो रोगात्प्रमुच्यते ॥ १० ॥

[ अत्र महिषीदानम् । ]

सभाया पक्षपाती च जायते पक्षघातकः । स्याच्चतुर्माषकः स्वर्णः सनिष्कृष्टइ एव हि ॥ ११ ॥
योऽकृत्वा ब्राह्मणो भुङ्क्ते स्नानहोमजपादिकम् । स द्विकरोगसंयुक्तस्तत्पापस्यापनुत्तये ॥ १२ ॥
चान्द्रायणत्रयं कुर्यात्त्रीन्कृच्छ्रांश्च समाचरेत् । तामग्निवर्णामिति च जपेत्सूक्तं समाहितः ॥१३॥

[ अत्र स्वर्णमृगदानम् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायत्र्यशीत्यधिकद्विशततम ॥ २८३ ॥

श्रीसूर्य उवाच ।

सवर्णागमने वातरक्तवाञ्जायते नरः ॥ १ ॥

[ तत्र लक्ष्मीनारायणं स्वर्णरूपम् । पादघातपितृहननार्थमिदं दानम् । ]

लशुनं गृञ्जनं वालफलं वाऽश्नाति यो द्विजः । स वातपित्तरोगी च भवेच्चान्द्रायणं चरेत् ॥ २ ॥

[ औषधिव्यतिरेकेण लशुनादिभक्षणे चान्द्रायणम् । ]

---

१ तद्गुर्वप्रियं—कपु० । २ सहस्रेत्यारभ्याच्युतेत्यन्त पाठ—स्रपु० नास्तीति बोध्यम् ।

रक्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान्। चान्द्रायणं द्विजः कुर्यादेतद्रोगस्य शान्तये ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुरशीत्यधिकद्विशततमः ॥ २८४ ॥

श्रीसूर्य उवाच।

वैद्यशास्त्रमदायस्तु कृत्वौषधमथान्यथा। प्रयोजयेदन्यथा हि रक्तपित्तयुतो भवेत् ॥ १ ॥
कृच्छ्रचान्द्रायणे कार्ये तथा ब्राह्मणभोजनम् ॥ २ ॥

[ गोदानम् ]

मद्यपो रक्तपित्ती स्यात्स दद्यात्सर्पिषो घटम्। मधुनोऽर्धवटं चैव सहिरण्यं विशुद्धये ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चाशीत्यधिकद्विशततमः ॥ २८५ ॥

श्रीसूर्य उवाच।

त्रपुहारी च पुरुषो जायते श्लेष्मणः सदा। उपोष्य दिवसं सोऽपि दद्यात्पलशतं त्रपु ॥ १ ॥
नित्यानुष्ठानविमुखः कफरोगी भवेन्नरः। पराभवं समाप्नोति चेत्याह भगवान्यमः ॥ २ ॥
तच्छान्तये मासमेकं यावकं भक्षयेन्नरः। सहस्रनामपाठश्च होमश्चाष्टोत्तरायुतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायःषडशीत्यधिकद्विशततमः ॥ २८६ ॥

श्रीसूर्य उवाच।

धूर्तोऽपस्माररोगी स्यात्स तद्दोषोपशान्तये। ब्रह्मकूर्चत्रयं कृत्वा धेनुं दद्यात्सदक्षिणाम् ॥ १ ॥
[ ब्रह्मकूर्चलक्षणं कृच्छ्रप्रकरणे दर्शितम्। ]
गुरौ यो गर्ववद्द्रष्टा प्रतिकूलं समाचरेत्। सोऽपस्मारी भवेत्तत्र कुर्याच्चान्द्रायणं नरः ॥ २ ॥
[ विनायकप्रतिमादानम्। ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्ताशीत्यधिकद्विशततमः ॥ २८७ ॥

श्रीसूर्य उवाच।

नागहारी च सततं पुरुषः शीर्षरोगवान्। सीसं पलशतं दद्यादुपोष्य स तु वासरम् ॥ १ ॥
गुरूपरोधी शिरसि रोगवाञ्जायते नरः। कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापि वा ॥ २ ॥
औपधानि मद्याच्च तिलपात्रं तथैव च। प्रायोपवेशनादीनां व्रतानां त्यागकारणात् ॥ ३ ॥
शिरोरोगयुतो भूयात्तन्निष्कृतिरथोच्यते। गोहत्यायां व्रतं कुर्यात्पश्चाद्‌द्विजभोजनम् ॥ ४ ॥
[ कूष्माण्डसंभवः। ]
ब्रह्मचारी यदाश्नीयाद्भिन्नपात्रे विशेषतः। एकांशेन शिरोरोगी भवतीत्याह नारदः ॥ ५ ॥
अक्षीभ्यान्त इत्येव सूक्तमष्टोत्तरं शतम्। जपेच्चरुघृताभ्यां यो जुहुयाच्च तथैव हि ॥ ६ ॥
[ भिन्नपात्रे भिन्नकांस्ये भोजनमित्यर्थः। ]
औपवस्यापि हरणात्सूर्यावर्तः प्रजायते। तेन सूर्यः प्रदातव्यो निष्कैकस्य यथाविधि ॥ ७ ॥
[ अत्र चोपवीतदानं शंसन्ति। ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाशीत्यधिकद्विशततमः ॥ २८८ ॥

---

१ योगरिव द्रष्टादि—कपु०।

श्रीसूर्य उवाच ।

धर्मकर्माण्युपक्रम्य मध्ये त्यजति यो नरः । अविद्यमानं दोषं वा परेषां यः प्रकाशयेत् ॥
स भवेत्पूतिवक्त्रस्तु कुर्याच्चान्द्रायणं व्रतम् ॥ १ ॥
धूपस्रक्चन्दनादीनि सुगन्धीनि च शक्तितः । दद्याद्विप्राय पश्चाद्ब्राह्मणान्भोजयेत्तथा ॥ २ ॥

अन्तु च ।

परवाचां विघ्नकर्ता मुखरोगी प्रजायते । धर्मोद्वाटनतोऽन्येषां मुखरोगः प्रजायते ॥ ३ ॥
भुक्तं मार्जारसंस्पृष्टं भुक्त्वा दुर्गन्धवान्भवेत् । पीत्वा त्रिरात्रं गोमूत्रं भोजयेद्ब्राह्मणत्रयम् ॥ ४ ॥

अन्तु च ।

कूटसाक्षी भवेद्वक्त्ररोगी शोणितपित्तवान् । कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥ ५ ॥
कुर्यात्कूष्माण्डहोमं च गायत्रीमयुतं जपेत् । दद्याद्धिरण्यं व्रीहींश्च मुखरोगस्य शान्तये ॥ ६ ॥
वाग्विरोधं गुरौ कृत्वा मुखरोगी भवेन्नरः । तस्य दानेन विहितो गजरूपकृताङ्गतः ॥ ७ ॥
[ स्वर्णगजदानमित्यर्थः । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोननवत्यधिकद्विशततमः ॥ २८९ ॥

श्रीसूर्य उवाच ।

पक्वान्नहरणे चैव जिह्वारोगः प्रजायते । गायत्र्याः स जपेल्लक्षं दशांशं जुहुयात्तिलैः ॥ १ ॥

अन्तु च ।

परेषां दुःखकरणात्तर्कवादानृतभाषणात् । जिह्वाच्छेदात्तथाऽन्येषां पक्षपाताच्च संसदि ॥ २ ॥
जिह्वारोगी भवेदास्ये व्रणी चैवाभिजायते । पराकद्वितयं चैव होमः कूष्माण्डसंज्ञकः ॥ ३ ॥
कयानश्चित्रसूक्तस्य जपहोमस्तथैव च । व्रीह्यादीनां तथा दानमौषधस्य च संस्मृतम् ॥ ४ ॥
इत्यसौ छर्दिरोगी स्याद्गां च दद्यात्पयस्विनीम् ॥ ५ ॥
[ चकारादेकः कृच्छ्रः सौरमन्त्रजपश्च समुच्चीयत इति । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवत्यधिकद्विशततमः ॥ २९० ॥

श्रीसूर्य उवाच ।

आमान्नहरणे चैव दन्तपीडा प्रजायते । स दद्यादाश्विनौ हेमनिष्कद्वयविनिर्मितौ ॥ १ ॥
सूकरे निहते चैव दन्तुरो जायते नरः । स दद्यात्तद्विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् ॥ २ ॥
सुरापी श्यावदन्तः स्यात्प्राजापत्यात्रकं चरेत् । शर्करायास्तुलाः सप्त दद्यात्पापविशुद्धये ॥ ३ ॥
जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलान् । ततोऽभिषेकः कर्तव्यो मन्त्रैर्वारुणदैवतैः ॥ ४ ॥
[ आत्मसमाः शर्करातुला दद्यादित्यर्थः । ]

मंत्रः ।

"त्वं तुले सर्वभूतानां परिमाणं प्रकीर्तितम् । मां तोलयसि संसारादुद्धरस्व नमोऽस्तु ते" ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकनवत्यधिकद्विशततमः ॥ २९१ ॥

श्रीसूर्य उवाच ।

परेषां तर्कवरणान्निष्ठुरोक्तिः प्रजायते । खरोक्तिहास्यकरणाद्दद्यान्मौक्तिककाञ्चने ॥ १ ॥
[ खरोक्तिर्नीरसोक्तिः, गर्दभस्य स्ववद्रवो यस्य, स्वपरोद्वेगजनकस्य वा । ]

मूको भ्रातृवधाच्चैव तस्येयं निष्कृतिः परा। तेन कर्मविशुद्ध्यर्थं व्रतं चान्द्रायणत्रयम् ॥ २ ॥
व्रतान्ते पुस्तकं दद्यात्सुवर्णपलसंयुतम्। ब्राह्मणाय यजुर्वेदविदे वस्त्रेण वेष्टितम् ॥ ३ ॥
इमं मन्त्रं समुच्चार्य ब्राह्मणं तं विसर्जयेत् ॥ ४ ॥

मन्त्रः।

"सरस्वति जगन्मातः शब्दब्रह्माधिदेवते। दुष्कर्मकारिणं पापं रक्ष मां परमेश्वरि।" ॥
स्वरोपघाती वाचां च हर्ता मूकः प्रजायते ॥ ५ ॥

[वाचां हर्ता गुर्वननुज्ञामृते वेदादिहर्ता पुस्तकहर्ता च।]

कुर्यात्स्वर्णमयं पद्मं पलार्धेन तदर्धतः। यथास्वविभवं सम्यग्वित्तशाठ्यं न कारयेत् ॥ ६ ॥
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रे परित्यजेत्। ताम्रपात्रपरीमाणं पलानामष्टकं विदुः ॥ ७ ॥
आढकद्वितयं मानं तिलराशौ प्रयत्नतः। उपचारैः षोडशभिरभ्यर्च्य सर्वशास्त्रवित् ॥ ८ ॥
रक्तचन्दनपुष्पाद्यैर्मन्त्रेणानेन पूजयेत् ॥ ९ ॥

मंत्रः।

"ब्रह्मणे तु नमस्तुभ्यं विष्णोरमितनाभिज। अतिप्रीतिकरो भानोस्तथा रुद्रस्य चैव हि ॥
पूजां मम गृहाण त्वं सर्वक्लेशविनाशक" ॥ १० ॥

आग्नेय्यां दिशि वै होमः कर्तव्यो मन्त्रपूर्वकः। समिदाज्यतिलैश्चैव समिधाष्टाक्षरेण तु ॥ ११ ॥

[चित्रमित्यनयर्चा।]

तस्मै हुतवते पद्मं दद्यात्स्मृत्वा चतुर्मुखम्। यत्प्राग्वाचां निरोधेन वैरूप्यं मम देहजम् ॥ १२ ॥
स्वरोपघातजं तीव्रं दुःखं रोगकरं तथा। तत्सर्वं नाशयन्त्वद्य ब्रह्मविष्णुशिवाग्नयः ॥ १३ ॥
त्रिदशाद्यश्च ये देवा हविष्मन्तस्तथा भुवि। एवं दत्त्वा तु तत्पद्ममाचार्यायातिभक्तितः ॥ १४॥
पृष्ठतस्तु ह्यनुव्रज्य स्वरभेदाद्विमुच्यते ॥ १५ ॥

[आज्यहोमे 'चित्रं देवानाम्' इति मन्त्रः।]

वेदं वा धर्मशास्त्रं वा विक्रीणीयाद्द्विजो नरः। अधीतं तस्य नायाति जिह्वायां शबलं भवेद् ॥१६॥
अपरिस्फुटवक्त्रो वा जिह्वायां व्रणवानपि। कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥१७॥
सूक्तं ताममिवर्णाख्यं जपेच्चैवायुतत्रयम्। दद्याद्धिरण्यं विप्रेभ्यो भोजनं च स्वशक्तितः ॥ १८ ॥

[वेदं वा धर्मशास्त्रं वा विक्रीणीयादिति भृतकाध्यापक इत्यर्थः।]

वाग्विरोधं गुरोः कृत्वा भवेद्गद्गदवाङ् नरः ॥ १९ ॥

[तत्र स्वर्णसरस्वतीदानम्।]

उष्ट्रे विनिहते चैव जायते विकृतस्वरः। स तत्पापविशुद्ध्यर्थं कृच्छ्रमेकं चरेद्बुधः ॥ २० ॥
कर्पूरस्य पलं दद्यात्क्षीरद्रव्याणि शक्तितः ॥ २१ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विनवत्यधिकद्विशततमः ॥ २९२ ॥

---

श्रीसूर्य उवाच।

लवणस्यापहर्ता च शीर्णप्राणाङ्घ्रिपाणिकः। वर्त्मरसरवांश्चैव जायते तस्य निष्कृतिः ॥ १ ॥

---

१ यति इति–क० पु०।

उद्यन्नद्यन्नृचं चैव जपेत्त्रिंशत्सहस्रकम् । जुहुयाच्चरुसर्पिर्भ्यां रक्तवासांसि दापयेत् ॥ २ ॥
दद्याद्देवद्विजगवां कुर्यात्पूजा च शक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिनवत्यधिकद्विशततमः ॥ २९३ ॥

श्रीसूर्य उवाच ।

कुक्कुटे निहते चैव वक्रनासः प्रजायते । तेन निष्कः प्रदातव्यो ब्राह्मणाय प्रयत्नतः ॥ १ ॥
परदृष्टिविधानेन भिषङ्मिथ्याचरेण च । कामात्परस्त्रियं दृष्ट्वा नेत्ररोगी भवेन्नरः ॥ २ ॥
चान्द्रायणं पराकं च पश्चाद्विप्रभोजनम् । वचोद्वा इति मन्त्रं तु जपेदाज्यं सकाञ्चनम् ॥ ३ ॥
दद्याद्विप्राय विधिवन्नेत्ररोगः प्रशाम्यति ॥ ४ ॥

[ एतच्च भोजनं मुद्गप्रधानम् । ]

मुद्गान्नं ब्राह्मणंदद्यान्नेत्ररोगापनुत्तये ॥ ५ ॥

दम्पतिभ्यां प्रवृत्तं तु मैथुनं यो निरीक्षयेत् । स नेत्रपूययुक्तः स्यादक्षिभ्यामिति मन्त्रतः ॥ ६ ॥
जपहोमौ च कुर्वीत शक्त्या ब्राह्मणभोजनम् । सहस्रकलशैः स्नानं रवेः कुर्याद्द्विजोत्तमः ॥ ७ ॥

[ अतिप्रचुरदूषिका पूयमित्यभिधीयते । ]

घृतचौरस्तु पुरुषो जायते नेत्ररोगवान् । उपोष्य संप्रदद्याद्वै घृतधेनुं विधानतः ॥ ८ ॥

[ अन्धत्वं प्रतिबद्धदृष्टित्वं नोत्पादितनेत्रत्वं रात्र्यन्धत्वं वा । ]

पितृहा चेतनाहीनो मातृहान्धश्च जायते । नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ९ ॥

[ चेतनाहीनो निश्चेष्टो निर्बुद्धिश्च, अस्यापि वक्ष्यमाणम् । ]

प्राजापत्यानि कुर्वीत त्रिंशच्छास्त्रविधानतः । व्रतान्ते कारयेन्नावं सुवर्णपलसंख्यया ॥ १० ॥
स्तम्भं रौप्यमयं चैव ताम्रपात्रं च पूर्ववत् । नौका द्विजाय दातव्या सर्वोपस्करसंयुता ॥ ११ ॥

[ नौकेत्युपलक्षणं स्तम्भोऽपि विष्णुप्रतिमा च दातव्या सोपस्करेति । उपस्करो नौकादण्डः सोऽपि सौवर्ण एव । ]

मन्त्रः ।

"वासुदेव जगद्वन्द्य सर्वभूताशयस्थित । पापार्णवे सुमग्नं मां तारयाश्रिततारक" ॥ १२ ॥
इत्युदीर्य प्रणम्याथ ब्राह्मणं तं विसर्जयेत् ॥ १३ ॥

[ इति चेतनाहीनत्वहरेऽपि । ]

शाकहारी च पुरुषो जायते नीललोचनः । ब्राह्मणाय प्रदातव्यं महानीलमणिद्वयम् ॥ १४ ॥

कपिलाक्षित्वे-

रीतिहृत्कपिलाक्षः स्यादुपोष्य दिवसद्वयम् । रीतेः पलशतं दद्यादलंकृत्य द्विजातये ॥ १५ ॥

[ रीतिर्नाम ताम्रप्रकृतिको धातुविशेषः पित्तलमिति । ]

उच्छिष्टः सन्य आदित्यं पश्यन्नस्यन्तमम्बरे । मध्यंगतमथास्तं च जातमुच्छिष्ट एव सन् ॥
नक्षत्राण्यथवा चन्द्रं स भवेन्मन्दहृष्टियुक् ॥ १६ ॥
घृतेन चरुणा नेत्ररश्मिहीनो हुताशने । जुहुयादयुतं सम्यगिति शास्त्रस्य निश्चयः ॥ १७ ॥
दद्यादन्नं वरं कृत्वा वासांसि व्याधिशान्तये ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्नवत्यधिकद्विशततमः ॥ २९४ ॥

---

१ रक्तवासश्च तं न्यसेत् इति-क्पु० ।

श्रीसूर्य उवाच ।

कुर्यान्मूत्रं पुरीषं यो दद्रुरोगच्युतो भवेत् । शक्त्या तत्पापशान्त्यर्थं दद्याच्छम्भुं हिरण्मयम् ॥ १ ॥
देवद्विजगृहे तीर्थे पुण्यस्याधिष्ठितं परम् । चतुर्भुजं तु द्विभुजामुमां कुर्याद्विचक्षणः ॥ २ ॥
लक्षणैः सोऽपि संयुक्तो वित्तशाठ्यं न कारयेत् । वृषोऽपि रूप्यजः कार्यो घण्टासालंकृतो भवेत् ॥ ३ ॥
वस्त्रैर्माल्यैस्तथा गन्धैर्मूलमन्त्रेण पूजयेत् । ततो ब्राह्मणमाहूय दरिद्रं धर्मकोविदम् ॥ ४ ॥
श्रुतवित्तोपसंपन्नं ज्ञातं चैवात्मवेदिनम् । वस्त्रांगुलीयकैस्तस्य पूजां भक्त्या प्रकल्पयेत् ॥ ५ ॥
होमं च कारयेत्तेन समिदाज्यतिलैरपि । मन्त्रश्च रुद्रगायत्री सर्वत्रेति विनिश्चयः ॥ ६ ॥

रुद्रगायत्री लिंगपुराणे विहिता यथा-

" सर्वेश्वराय विद्महे शूलहस्ताय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ "

यद्वा त्र्यम्बकमन्त्रेण समिधो जुहुयात्सुधीः । कद्रुद्रेति मन्त्रेण जुहुयादाज्यमावृतः ॥ ७ ॥

[ मूलमन्त्रः-पञ्चाक्षरी वा रुद्रगायत्री वा । ]

कैलासवासी भगवानुमया सहितः परः । त्रिनेत्रश्च हरो दद्रुरोगमाशु व्यपोहतु ॥ ८ ॥
ततश्च ब्राह्मणान्सम्यक् प्रणिपत्य क्षमापयेत् । ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत वाग्यतः ॥ ९ ॥
एवं दत्वा महादानं दद्रुरोगात्प्रमुच्यते । गोघ्नो कृतघ्नो चैव प्राजापत्यं समाचरेत् ॥ १० ॥
व्रतान्ते मेदिनीं दद्याच्छृणुयाच्चैव भारतम् ॥ ११ ॥

[ भूमेरभावे मेदिनीमितिनिर्दिष्टत्वेन गां पयस्विनीं दद्यात् । भारतश्रवणं शास्त्रोक्तप्रकारेणेति । ]

लोहहारी च पुरुषो भवेद्वै बर्बराङ्गकः । लोहं पलशतं दद्यादुपोष्य शतवासरम् ॥ १२ ॥
कारुकाणां वधे कृष्णो रूक्षाङ्गश्च प्रजायते । तेन तत्पापशुद्ध्यर्थं दद्याद्वै वृषभं सितम् ॥ १३ ॥

[ कारुकाः शिल्पिनः । ]

तैलचौर्येण भवति नरः कण्डूयनः सदा । उपोष्य सोऽपि विप्राय दद्यात्तैलघटद्वयम् ॥ १४ ॥
वस्त्रहारी च शीर्णाङ्गः ॥ प्रदद्यात्सुशोभनम् । हेम निष्कत्रयमितं वस्त्रयुग्मं च दापयेत् ॥ १५ ॥
स्वाम्यङ्गनाभिगमने जायते दद्रुमण्डलः । कृत्वा लोहमयीं धेनुं पलषष्टिप्रमाणतः ॥ १६ ॥
कार्पासभारसंयुक्तां सप्तधान्यसमन्विताम् । दद्याद्विप्राय विदुषे पापं मे क्षीयतामिति ॥ १७ ॥
विश्वस्तभार्यागमने गजचर्म प्रजायते । तत्पापस्य विनाशाय प्रायश्चित्तं विधीयते ॥ १८ ॥

[ विश्वस्तभार्यागमने गुरुतल्पगप्रायश्चित्तादि दोषवशात् प्रायश्चित्तेन निष्कृतिरभिधीयते । सा च कृच्छ्रादितपोदानरूपा । तत्र साङ्गं गोदानम् । ]

मयूरघातेन चैव जायते कृष्णमण्डलः । निष्कत्रयमिता देया तेन स्वर्णमयी शिखी ॥ १९ ॥
हंसघाती भवेद्यस्तु तस्य स्याच्छ्वेतमण्डलम् । रौप्यं पलत्रयमितं हंसं दद्याद्विशुद्धये ॥ २० ॥
अमेध्यस्य प्रदाता च विसर्पिव्याधिमान्भवेत् । मासं पयोव्रतं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ २१ ॥

[ तत्र सर्पिर्मूर्तिदानम् । ]

सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते । लक्षमेकं तु पद्मानां जुहुयाज्जातवेदसम् ॥ २२ ॥
स दद्यान्मधुधेनुं च उपोष्याय द्विजातये ॥ २३ ॥

इति श्रीरुद्रसूर्यसंवादे कर्मविपाके अध्यायः पंचनवत्यधिकद्विशततमः ॥ २९५ ॥

श्रीसूर्य उवाच ।

ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते । प्रायश्चित्तं प्रकुर्वीत तत्पातकविशुद्धये ॥ १ ॥
[ प्रायश्चित्तं पाङ्वार्षिकं कुर्वीत पापस्योपभोगेन क्षयत्वात् । पश्चात्कृते प्रायश्चित्ते- ]
चत्वारः कलशाः कार्याः पञ्चपल्लवसंयुताः । पञ्चरत्नसमायुक्ताः सितवस्त्रेण वेष्टिताः ॥ २ ॥
[ अत एव स्थानादिमृद्युक्तास्तीर्थोदकेन पूरिता युता इत्यर्थः । ]
गजे विनिहते वाश्वे कृमिकुक्षिः प्रजायते ॥ ३ ॥
मृते भर्तरि या नारी नीलं वस्त्रं प्रधारयेत् । सा मृता नरकं याति कृमिकुक्षिस्ततः परम् ॥ ४ ॥
[ नरकभोगादनन्तरं मनुष्यशरीरमासाद्येत्यर्थः । ]
स नीलवृषभान्पञ्च दद्याच्चान्द्रायणं व्रतम् । कुर्यात्रिंशद्द्विजा भोज्या दद्याच्छक्त्या तदौषधम्॥५॥
नीलवृषभलक्षणं भगवणहरे-
भुक्त्वा ॥ स्पृश्यमस्पृश्यं जायते स कृशोदरः । त्रिरात्रं वैष्णवं कुर्यात्पातकाद्वै प्रमुच्यते ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पण्णवत्यधिकद्विशततम ॥ २९६ ॥

श्रीसूर्य उवाच ।

इक्षोर्विकारस्य हारी भवेदुदरगुल्मवान् । गुडधेनुः प्रदातव्या तेन दोषस्य शान्तये ॥ १ ॥
गुरुमत्यर्थितो यातो गुल्मवाञ्जायते नरः । आचरेत्तन्निवृत्त्यर्थं मासमेकं पयोव्रतम् ॥ २ ॥
[ वातगुल्मवानित्यर्थः । ]
मुञ्चामि त्वेति सूक्तेन घृतेन चरुसर्पिषा । जुहुयादयुतं सम्यग्वात आवातु भेषजम् ॥ ३ ॥
एतत्सूक्तं जपेद्दद्यादन्नदानं च शक्तितः ॥ ४ ॥
[ वात आवातिवति सूक्तं तत्र विनायकदानम् । ]
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तनवत्यधिकद्विशततम. ॥ २९७ ॥

श्रीसूर्य उवाच ।

गर्भपातनजा रोगा यकृत्प्लीहजलोदराः । तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् ॥ १ ॥
एतेषु दद्याद्विप्राय जलधेनुं विधानतः । सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥ २ ॥
भृतकाध्यापको यस्तु कन्यादूषणतत्परः । प्लीहवान्स भवेद्विप्रो जपेच्छ्रीसूक्तमेव हि ॥ ३ ॥
अयुतत्रयसंख्याकं प्लीहोदरविमुक्तये ॥ ४ ॥
यो ब्रह्मविष्णुरुद्राणां भेदं युक्तिकदम्बकैः । साधयेदुदरव्याधियुक्तो भवति मानवः ॥ ५ ॥
कुर्यात्कृच्छ्रातिकृच्छ्रे तु चान्द्रायणमथाऽपरम् । सहस्रकलशस्नानमीश्वरस्य तु कारयेत् ॥ ६ ॥
जपेदयुतसंख्याकमुपत्रयेत्यृचं तथा । राज्ञा कर्मातियुक्तेन नियुक्तो धर्मनिश्चये ॥ ७ ॥
पुरोहितः स्वाधिकारात्सचिवश्चान्यथाचरेत् । जलोदरत्वमाप्नोति तस्य वक्ष्यामि निष्कृतिम् ॥८॥
पयसा वर्तयेन्मासत्रितय व्रतमुत्तमम् । सहस्रकलशस्नानमीश्वरस्य तु कारयेत् ॥ ९ ॥
उदरव्याधियुक्तस्तु भवेद् गुर्वङ्गनागमे । कुर्यात्तु मकरं सम्यग्राजतं ताम्रमेव वा ॥ १० ॥
[ कृत्वा मकरं ब्राह्मणाय दद्यादित्यर्थः । ]
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टनवत्यधिकद्विशततम ॥ २९८ ॥

१ आरभेत्तन्निवृत्त्यर्थं–टी–पु० । २ त्र्यर्धेन इति–पु० ।

श्रीसूर्य उवाच।

मन्दोदराग्निर्भवति शतिद्रव्येण वै जपेत्। प्राजापत्यत्रयं कृत्वा भोजयेत्सततं द्विजान् ॥ १ ॥
[ शतिद्रव्यं कदन्नमिति पाठः। ]
गोमांसखादको मन्दजठराग्निर्भवेन्नरः। अकारणं गरं दत्त्वा प्रमापयति यः पुनः ॥ २ ॥
स मन्दाग्निर्भवत्येव मृतकः स्वल्पकालतः। अग्निमान्द्यं भवेत्तस्य यस्त्रेताग्निविनाशकः ॥ ३ ॥
[ तत्र मेषदानं स्वर्णस्य तण्डुलदानं च। ]

श्रीसूर्य उवाच।

अन्नहर्ता त्वजीर्णार्तो भवेदस्य तु निष्कृतिः। उपवासत्रयं कृत्वा प्राजापत्यमथापि वा ॥ ४ ॥
जुहुयाच्चरुसर्पिभ्यामग्निमद्गमीळृचाऽनया । परान्नविघ्नकरणादजीर्णमपि जायते ॥ ५ ॥
लक्षहोमं प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवनवत्यधिकद्विशततमः ॥ २९९ ॥

---

श्रीसूर्य उवाच।

गुरुणा नानुयातो यो वेदाध्ययनमाचरेत्। स जडः प्रज्ञया हीनः संसारे जायते नरः ॥ १ ॥
[ चरेत्कुर्यादित्यर्थः। ]
वक्ष्यामि तत्प्रतीकारं शुद्धकांस्यमयीं दृढाम्। शोभनां कारयेद्धण्टां शुभरेखाविभूषिताम् ॥ २ ॥
पलैस्तु कुर्याद्विंशत्या त्रिंशत्या वा तदर्धतः। सुस्वरां चायतीं श्लक्ष्णां पञ्चगव्येन स्नापयेत् ॥३॥
श्वेतवस्त्रेण संवीतां तण्डुलोपरि विन्यसेत् ॥ ४ ॥
[ ब्राह्मणाय देयं मन्त्रस्तु ब्रह्मजज्ञानमिति। ]
पितृहा चेतनाहीनो मातृहांधश्च जायते । नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ५ ॥
[ अस्य प्रायश्चित्तं नेत्ररोगहरणप्रकरणेऽन्धत्वहर प्रपञ्चितम्। ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिशततमः ॥ ३०० ॥

---

श्रीसूर्य उवाच।

गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते । तेनापि निष्कृतिः कार्या शास्त्रदृष्टेन वर्त्मना ॥ १ ॥
[ अनेन विधिना निष्कृतिरुच्यते, तत्रैकादशप्राजापत्यादिव्रतरूपा । अपरा प्रतिमादानजप-होमब्राह्मणभोजनरूपा। ]
स्थापयेत्कुम्भमेकं तु पश्चिमायां शुभे दिशि। नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् ॥ २ ॥
तस्योपरि न्यसेद्देवं लोहपात्रे प्रचेतसम्। सुवर्णनिष्कषट्केन निर्मितं यादसां पतिम् ॥ ३ ॥
यजेत्पुरुषरूपेण वरुणं विश्वरूपिणम् ॥ ४ ॥
[ वरुणमूर्तिः पाशवरदकरा मकरवाहना च भवति। ]
"यादसामाधिपो देवो विश्वेषामपि पावनः। संसाराब्धिकर्णधारो वरुणः पावनोऽस्तु मे" ॥ ५ ॥
इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि। दद्यादेवमलंकृत्वा मूत्रकृच्छ्रप्रशान्तये ॥ ६ ॥

---

१ स्वल्पकमयात् इति–क्पु०। २ हरणात् इति–क्पु०। ३ पितृत्वचेतनाहीनोहीनो मातृत्वजायते इति–क्पु०।

पशुयोनौ च गमनान्मूत्रकृच्छ्रं प्रजायते । तिलपात्रत्रयं चैव स दद्यादात्मशुद्धये ॥ ७ ॥
तत्र तिलपात्रदानमाह ।
ताम्रपात्रे तिलान्कृत्वा पलषोडशकल्पिते । सहिरण्यं स्वशक्त्या वा विप्राय प्रतिपादयेत् ॥ ८ ॥
नाशयेत्रिविधं पापं वाङ्मनःकायसंभवम् । तिलपात्रं त्रिधा प्रोक्तं कनिष्ठाधममध्यमम् ॥ ९ ॥
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत् । त्रिगुणं चोत्तमे तद्वत्सुवर्णं परिकीर्तितम् ॥ १० ॥
मत्सरी गुरुणा यश्च विधवामभिगच्छति । सभवेन्मूत्रकृच्छ्री तु गुरुतल्पार्धमाचरेत् ॥ ११ ॥
[ गुरुतल्पार्धप्रायश्चित्तं षाड्वार्षिकमित्यर्थः । पद्मदानं वा देयम् । ]
मातुः सपत्नीगमने जायते चाश्मरी गदः । स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ १२ ॥
[ प्रायश्चित्तमत्र त्रैमासिकम् । ]
दद्याद्विप्राय विदुषे मधुधेनुं यथोदितम् । तिलद्रोणशतं चैव हिरण्येन समन्वितम् ॥ १३ ॥
दुग्धचौरस्तु पुरुषो जायते बहुमूत्रवान् । स दद्याद्दुग्धधेनुं च ब्राह्मणाय यथाविधि ॥ १४ ॥
सोदर्यागमने रोगो जायते बहुमूत्रता ॥ १५ ॥
[ पराकद्वितयं ब्राह्मणभोजनं सहस्रात्मसूक्तस्य पौरुषस्य स्वशक्तितः पाठः कार्यः । ]
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकत्रिशततम ॥ ३०१ ॥

श्रीसूर्य उवाच ।
चाण्डालीगमनात्सर्वः प्रमेहव्याधिमान्भवेत् । क्षुत्पिपासातुरश्चैव जायते तस्य निष्कृतिः ॥ १ ॥
चान्द्रायणत्रयं कुर्याद्यवमध्यं तथा पदम् । तिर्यग्गामी समूलेन प्रमेहेन युतो भवेत् ॥ २ ॥
कुर्यात्सान्तपनादीनि प्रायश्चित्तं यथाविधि । सर्वव्यवायी मनुजः कन्यागामी तथैव च ॥ ३ ॥
वातप्रमेहयुक्तः स्यात्कुर्याच्चान्द्रायणत्रयम् । मधुमेही मातृगामी सततं जायते नरः ॥ ४ ॥
पितृभार्याभिगामी च जलमेही नराधमः । यो गच्छेद्भगिनीं नित्यं वसुमेहीति निश्चयः ॥ ५ ॥
[ पितृभार्या सपत्नजननीत्यर्थः । ]
प्रायश्चित्तं क्रमादत्र पट्वर्षाण्यथ पञ्च च । अब्दमित्याचरेत्सम्यक्ततो रोगात्प्रमुच्यते ॥ ६ ॥
ब्राह्मणः स्वर्णहारी च प्रमेही जायते नरः । धेनुं स्वर्णमयीं कुर्यात्पूर्वेण विधिना ततः ॥ ७ ॥
[ तत्र विष्णुप्रतिमा यथोक्तदानम् । ]
मंत्रः ।
"चक्रं सुदर्शनं यस्य चिह्नानि विविधानि च । प्रमेहं हरतु क्षिप्रं विष्णुर्गरुडवाहनः " ॥ ८ ॥
तपस्विनीप्रसङ्गेन प्रमेहो जायते गदः । मासं रुद्रजपं कुर्याद्दद्याद्रुक्मं च काञ्चनम् ॥ ९ ॥
[ प्रसङ्गेन गमनेनेत्यर्थः । ]
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकत्रिशततम ॥ ३०२ ॥

श्रीसूर्य उवाच ।
मातृगामी भवेद्यो हि लिङ्गं तस्य विनश्यति ॥ १ ॥
चाण्डालीगमने चैव हीनकुष्ठः प्रजायते । तस्य प्रतिक्रियां कर्तुं कुम्भमुत्तरतो न्यसेत् ॥ २ ॥
[ उत्तरतः शुद्धलिप्तदेशस्योत्तरदिग्भागे उदकादिपूरितं कलशं स्थापयेत् । कलशस्या पनवि धिनेत्यर्थः । ]

कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् । तस्योपरि न्यसेत्कांस्यपात्रे देवं धनेश्वरम् ॥ ३ ॥
सुवर्णनिष्कपद्केन निर्मितं नरवाहनम् । यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम् ॥ ४ ॥
[ यजेत्पूजयेत् । ]
"निधीनामधिपो देवः शङ्करस्य प्रियः सखा । स देवाधिपतिः श्रीमान्मम पापं व्यपोहतु"॥५॥
इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि । दद्यादेवं हीनकुक्षी लिङ्गनाशी च शुद्ध्यति ॥ ६ ॥
दुष्टवादी तु पण्डः स्यात्स दद्याच्च द्विजातये । रूप्यं पलत्रयं दुग्धघटत्रयसमन्वितम् ॥ ७ ॥
नृपो भृत्यादिहस्तादीनपराधं विनैव यः । छेदयेत्तस्य देहस्तु भवेद्दग्ध इवाग्निना ॥ ८ ॥
शिलापृष्ठसदृक्षश्च सव्रणश्चापि जायते । रुधिरं प्रस्रवेत्पश्चात्तस्येयं निष्कृतिः परा ॥ ९ ॥
शतरुद्रं जपेत्सम्यगष्टोत्तरसहस्रकम् । यतिचान्द्रायणं चैव कुर्याद्दद्याच्च गां ततः ॥ १० ॥
जायते नृपणीपमथ्याधिः परमदारुणः । जपित्वा दशसाहस्रं मुच्यते रुद्रसंहिताम् ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्र्यधिकत्रिशततमः ॥ ३०३ ॥

---

श्रीसूर्य उवाच ।

सुरालये जले मार्गे सक्रृद्विष्ठां करोति यः । गुदरोगो भवेत्तस्य पापरूपः स दारुणः ॥ १ ॥
मासं सुरार्चनेनैव गोदानद्वितयेन च । प्राजापत्येन चैकेन शमयेद्गुदजा रुजः ॥ २ ॥
[ यद्यपि सुरार्चनमिति सामान्येनाभिहितं तथापि सूर्यप्राधान्येन रुद्रविष्णू पूज्यौ । 'आरोग्यं भास्करादिच्छेत्' इति स्मृतिः । ]

प्रस्रवगुदरोगे ।

विण्मूत्रोत्सर्जनं कृत्वा यः कृत्वा शौचकर्म तु । भुङ्क्ते जन्मान्तरे मर्त्यो भवेत्स प्रस्रवाग्गुदः ॥ ३॥
भवेच्च दारुणा पीडा तत्र कृच्छ्रातिकृच्छ्रकः । चान्द्रायणं च कर्तव्यं तथा च क्षीरसर्पिषा ॥४॥
अक्षीभ्यामिति सूक्तेन सहस्रं जुहुयाद्धविः । उद्यन्नद्यऋचं चैव जपेत्पूर्वोक्तसंख्यया ॥ ५ ॥

अध्यापयेच्च जुहुयाज्जपेद्वाशोंयुतो भवेत् ॥ ६ ॥
[ तन्निवृत्तौ प्रकुर्वीत कण्ठं चैव विष्णुहृदयं जपेत्तथा ]
तामग्निवर्णामिति च जपेत्सूक्तं समाहितः । हिरण्यं सघृतं दद्याच्छ्रोत्रियाय कुटुम्बिने ॥ ७ ॥
[ तत्र धेनुदानं च प्रशंसन्ति बौधायनः गोपालदानम् । ]

दानमन्त्रमाह ।

"बर्हापीडकसंयुक्तं वेणुवादनतत्परम् । गोपीजनैः परिवृतं वनपुष्पावतंसकम् ॥
ददामि प्रीतये तस्य सर्वपापहरं परम्" ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुरधिकत्रिशततमः ॥ ३०४ ॥

---

श्रीसूर्य उवाच ।

स्मार्ताग्निं शमयेद्यस्तु सोऽतिसारयुतो भवेत् । अग्निरश्मीतृचं जप्त्वा दशांशं जुहुयात्तिलान्॥१॥
सर्पिषा चाप्लुतं दद्याद्धिरण्यं ब्राह्मणाय च ।
[ स्मार्ताग्निरौपासनाग्निः । ]

---

१ मुक्तस्तु भवेद्व्यथी विधा—स्वपु० ।

अत एवासुमादाय चित्तं त्रैमासि दम्पत्योरनुकूले शुभे दिने स्वस्तिवाचनं कृत्वा स्वशक्त्यनुसारेण पूजां विधाय 'पुत्रकामनया हरिवंशश्रवणं करिष्ये' इति संकल्पयेत् । 'दम्पत्योः श्रवणकर्तृकत्वेन करिष्यावहे' इति प्रयोगो वा । अन्यतरकर्तृकत्वे कारयिष्ये एवं संकल्प्य । श्रुताध्ययनसंपन्नं ब्राह्मणं विभवानुसारेण वस्त्रमुद्रिकाकुण्डलादिभिः संपूज्य तं श्रावणे वृणु 'एभिश्चन्दनताम्बूलादिभिर्हरिवंशश्रवणे त्वामहं वृणे' इति प्रयोगः । ततश्च प्रतिदिनमव्यसनमप्रतिबन्धे स्नातावलंकृतौ दम्पती तदेकचित्ततया शृणुयाताम् । नारिकेलपूगादिना शमदमवान्प्रतिदिनमाचार्यं पुस्तकं च पूजयेत् । अन्ते च स्वलंकृतां गां पयस्विनीं सवत्सां स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्यदोहनां सवस्त्रां सदक्षिणां च दद्यात् । संकल्प्य स्वर्णादिमहादानानि दद्याद्यथाशक्ति । गोदानमन्त्रः गोदानविधौ । विनायकशान्तिस्तु शान्तिसारे । मकृतमनुसरामः । ब्राह्मणोद्वाहनमेकं प्रायश्चित्तम् । अपरं हरिवंशश्रवणं परिशेषान्महारुद्रं रुद्रमपि तृतीयं प्रायश्चित्तम् । अत एव वचनास्थिताः स्वशब्दार्थाः । एतानि त्रीण्यपि शक्त्याद्यपेक्षया व्यस्तानि समस्तानि वा योज्यानि । महारुद्रलक्षणं दशांशहोमप्रकारो रुद्रानुवाकानामार्षादिसर्वपरिभाषा रुद्रविधाने समुपवर्णिता । एकादशपशून् परत्र गौः रुद्राय गामिति श्रुतौ । दुर्मनाश्चैव जायेत तस्य निष्कृतिः परा ।

कृच्छ्रचान्द्रायणे कुर्याद्धोमः कूष्माण्डसंज्ञकः । कर्तव्यो होमविधिश्च स्वर्णदानं तथा परम् ॥ २ ॥
कन्यादानं च पञ्चम्यां श्राद्धं कुर्वीत यत्नतः । सहस्रनामजापी च न चेदेवं विशुद्ध्यति ॥ ३ ॥

एतान्यष्टकादिश्राद्धरहितादीनि पञ्चापि पृथक्पृथङ्निर्मितानि । अतो यावद्व्याधिमनोकस्तावत्सहस्रनामस्तोत्रं पठेत् ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये पञ्चाधिकत्रिशततमः ॥ ३०५ ॥

---

श्रीसूर्य उवाच ।

चतुर्विधा तु या वन्ध्या भवेद्वत्सवियोजनम् । वक्ष्ये तस्य प्रतीकारं तत्स्वरूपं निबोधयेत् ॥ १ ॥
मृतवत्सा भवेत्काचित्काचिदेकप्रसूतिका । कन्याप्रसूतिरूपा च काकवन्ध्या चतुर्थिका ॥ २ ॥

[ अप्रसूतेत्यर्थः ]

सर्वास्ताः पापघोरेण जायन्ते पूर्वजन्मनि । मृतवत्सा द्रव्यहरणादेकसुताऽसुघातनात् ॥ ३ ॥
कन्याप्रजर्णसंनन्धात्काकवन्ध्याविरोधतः ।

[ तत्र स्वर्णधेनुदानम् । ]

हिरण्येन यथाशक्त्या सवत्सां कारयेद्गवाम् ॥ ४ ॥
धेनुं यत्नेन वत्सं च पादेन गुरुरब्रवीत् । धेनुं रूप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत् ॥ ५ ॥
घण्टा गलेन यद्भीयात्ताम्रं पृष्ठे निधापयेत् । सर्वोपचारैः षोडशभिर्नैवेद्यं पायसं भवेत् ॥ ६ ॥
मोदकं च तथा पूपं गुडं लवणमेव च । जीरकं च सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥ ७ ॥
धेनोरेवं प्रदातव्यं ब्राह्मणेषु चैव हि ।

[ मोदकादिपरिपूर्णपात्राणि पडष्टौ दश वा दद्यात् । ]

ब्राह्मणं सर्वशास्त्रज्ञं कुशलं धर्मवेदिनम् ॥ ८ ॥
विद्याविनयसंपन्नं शान्तं च विजितेन्द्रियम् । अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ॥ ९ ॥
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गन्धपुष्पकैः । तेनैव कारयेत्पूजां मातृतो धेनुवत्सयोः ॥ १० ॥

होमं च कारयेत्तत्र समुच्चार्य ततः पुनः।
"अस्य गौतम ऋषिर्धेनुर्देवतानुष्टुप् छन्दः। विनियोगः।"
प्राङ्मुखायोपविष्टाय प्रदद्याचाप्युदङ्मुखः ॥ ११ ॥
मन्त्रेणानेन विधिवत्पुच्छे हस्तं निधाय च।
सार्धद्वयेन।

"धेनुर्याङ्गिरसामन्त्रेण प्रतिष्ठा सुरभेश्च या। दुहिता या तथा भानोरग्नेश्च वरुणस्य च ॥ १२ ॥
यांश्च गावः प्रवर्तन्ते वनेषूपवनेषु च। प्रीणन्तु ता मम सदा पुत्रपौत्रसुखप्रदाः ॥ १३ ॥
प्रयच्छन्तु दिवारात्रमविच्छेदं च शान्तये।" एवं दत्त्वा च तद्दानं प्रणिपत्य विसर्जयेत् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकद्विशततमः ॥ २०६ ॥

---

श्रीसूर्य उवाच।

[ अत्र कर्माणि स्त्रीपुंसयोर्मिलितयोः प्रत्येकं वा यथा नियतमधिकारः। अथ गर्भस्रावे यज्ञोपवीतदानम्। ]

स्रवद्गर्भा भवेत्सा तु बालकं हन्ति या विषैः। यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ॥ १ ॥
अत्यन्तवर्णापेक्षेण राजतं चोत्तरीयकम्। पलार्धेन तदर्धेन तदर्धेनाथवा पुनः ॥ २ ॥
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव च। प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ॥ ३ ॥
द्रोणप्रमाणं तस्मिंस्तु निःक्षिपेत्तद्धिमध्यतः। ताम्रस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ॥ ४ ॥
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरपि भक्तितः ॥ ५ ॥

[ दधि ताम्रभाजनोपरि आज्यं तत्प्रमाणं यथालाभोपपन्नं वा आज्यमुपवीतं स्थाप्यं महोत्तरीयं च। ]

ततो ब्राह्मणमाहूय होमं तत्र प्रकल्पयेत्। तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् ॥ ६ ॥
तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु। मन्त्रेणानेन विधिवत्प्राङ्मुखायोपवीतकम् ॥ ७ ॥
"उपवीतं परमिदं ब्रह्मणा विधृतं पुरा। भवनौकप्रदानेन गर्भं संधारयाम्यहम्।" ॥ ८ ॥

[ अयमर्थः-संसारे द्विजकर्मा। ]

धनान्यन्यब्राह्मणेभ्यस्तस्मिन्काले प्रदापयेत्। अनुव्रज्य तथा कार्यं प्रणिपत्य समापयेत् ॥ ९ ॥
गर्भस्रावकराद्दोषादेवं कृत्वा विमुच्यते ॥ १० ॥

[ अस्मिन्कर्मणि स्त्रियोऽधिकारः। ]

मासोपवासिनी नारी यतः प्रस्रावयेद्यदि। यदि संपर्कदोषेण जायते साऽन्यजन्मनि ॥ ११ ॥
स्रवद्रक्ता सदा योनौ तन्निष्कृतिरिहोच्यते। मासोपवासं कुर्वीत तथा मासं पयोव्रतम् ॥ १२ ॥
क्षीरं मुष्णाति या नारी पूर्वजन्मनि सुव्रत। जन्मान्तरे तु तस्या वै क्षीरं न वितरेत्स्तने ॥ १३ ॥
क्षीरान्नं भोजयेद्विप्रान् साज्यं समधुमण्डकम्। अनुलिम्पेच तेनैवाक्षिदिगन्तःस्वशक्तितः ॥ १४ ॥
विप्रपादोदकैश्चापि क्षालयेत्कुचमण्डलम्। सुरामांसघृतक्षौद्रपूर्वैर्वा गन्धपुष्पकैः ॥ १५ ॥
भूतेभ्यश्च बलिं दद्याद्भूतान्यत्र च संशृणु। मधुश्च नवनीतश्च पिण्डमाल्यो ह्यचिन्तकः ॥ १६ ॥
भूतभेभ्यः स्वशक्तिश्च भूतानां पञ्चकं त्विदम् ॥ १७ ॥

[ स्वशक्तिरिति मध्वादीनां विशेषणम्। अत्र सुरादीनि बलिद्रव्याण्यविहितानि तेषु ब्राह्मणादिभिर्निषिद्धान्येवाप्राह्याणि। ]

ज्येष्ठभ्रातर्यनूढे तु यो वोद्वहति च स्वयम् । स भवेन्मृतपत्नीक उष्णज्वरसमन्वितः ॥ १८ ॥
प्राजापत्यत्रयं कुर्याद्दिवं त्रयमेव च । तामग्निरिति चार्चेन चरुणाष्टोत्तरायुतम् ॥ १९ ॥
जुहुयाद्भोजयेद्विप्रानेवं पापाद्विमुच्यते ॥ २० ॥
मित्रभार्याभिगामी च मृतभार्योभिजायते । तस्य पापविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥ २१ ॥
धर्मपत्न्यां सुव्रतायां मुखमैथुनकारिणः । पत्न्या विरक्तिर्भवति सुवर्णकलशेन सः ॥ २२ ॥
उमामहेश्वरं देवं रुद्रैकादशनीजपम् । स्नापयेच्छ्रद्धया युक्तो ह्यविच्छिन्नाम्बुधारया ॥ २३ ॥

[ त्र्यम्बकमिति मन्त्रः । अथ यथाशक्त्या सुवर्णेनोमामहेश्वरप्रतिमां रजतवृषारूढां कारयित्वा स्थापयित्वा ब्राह्मणाय दद्यात् । ]

अथ दारिद्र्यहरधनदमूर्तिदानम् ।

दरिद्रो जायते मर्त्यो दानविघ्नं करोति यः । ऐश्वर्यं साध्यते येन कारिणा तच्छृणु प्रभो ॥ २४ ॥
पलार्धेन तदर्धेन चतुर्थांशेन वा पुनः । धनदस्य प्रतिकृतिं कुर्याद्धेममयीं शुभाम् ॥ २५ ॥
द्विभुजां वाहनोपेतां नयनानन्दकारिणीम् ।शङ्खपद्मनिधिभ्यां च युक्तां तच्छङ्खयोर्द्वयोः॥२६॥
श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत् । तण्डुलानां परीमाणं भवेद्द्रोणमितं शुभम् ॥ २७ ॥
ऋणं दत्त्वाधिकां वृद्धिं गृह्णीयाद्यश्च योभयम् । उत्पादयति चान्येषां पापाणेन महारतः॥ २८ ॥

[ अधिवृद्धिग्रहणं नाम शास्त्रघतादिग्रहणम् । भयमुत्पादयतीति निमित्तमन्तरेण भयोत्पादनम् ।]

तलप्रहारकृच्चैव जातो वै धनिनां कुले । धनेन रहितः प्रायो देशान्तरगतो भवेत् ॥ २९ ॥
महाक्लेशो बहूद्वेगी उदावर्ती भवेन्नरः । कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥ ३० ॥
कुर्याद्दिष्टचरुभ्यां च होमो व्याहृतिभिस्तथा । यत्किंचिदमितं सूक्तमयुतं वारुणं जपेत् ॥ ३१ ॥
अन्यायवृत्तिनृपतेः सेवनाद्विप्रहिंसनात् । महादानसमादानाद्गुरुभार्याविमर्दनात् ॥ ३२ ॥
दंष्ट्रिभ्यश्चाथ मरणादपमृत्योश्च निन्दया । वेदबाह्यस्य शास्त्रस्य पाठनात्कर्मसेवनात् ॥ ३३ ॥
विषोद्बन्धनशस्त्राद्यैर्मरणादपिसेनिकात् । उदासीनः सभामध्यभङ्गात्स्त्रीगमनात्तथा ॥ ३४ ॥
श्रुताध्ययनसंपन्नश्रोत्रियब्राह्मणस्य तु । उदासीनः सभामध्ये कृत्वा भङ्गं तु दारुणम् ॥ ३५ ॥
परीक्षासमये प्राप्ते भृतकाध्यापकस्तथा । देवब्राह्मणराज्ञां तु स्वर्णापहरणात्तथा ॥ ३६ ॥
अरण्ये निर्जने देशे ब्रह्मरक्षः प्रजायते । गयाश्राद्धं तु कृत्वापि जपहोमादिभिस्तथा ॥ ३७ ॥
देवतातीर्थसेवाभिः कन्यादानेन चैव हि । ब्रह्मराक्षसपैशाच्यान्मुच्यते मनुरब्रवीत् ॥ ३८ ॥

[ ब्रह्मराक्षसत्वं पिशाचस्याप्युपलक्षणम् । तत्र निष्कृतिर्बृहन्मनुप्रोक्ता पुत्रादिभिः कार्या । जपो वेदपारायणं पवमानादिसूक्तजपश्च तथा सहस्रनामादिस्तोत्रजपश्च होमोऽयुतहोमादिः तत्र गोभूहिरण्यदानं साङ्गमिति । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकत्रिशततमः ॥ ३०७ ॥

---

श्रीसूर्य उवाच ।

रजस्वलागामिनं च तदुच्छिष्टस्य भोजिनम् । प्रजाग्रहः प्रगृह्णाति ततः ज्वरवान्भवेत् ॥ १ ॥
अतिसारी च कुष्ठी च गात्रे सर्वत्र वातवान् । स्त्रियश्चेद्धर्मनाशः स्यादत्रेयं निष्कृतिः परा ॥ २ ॥
कृच्छ्रं चान्द्रायणं चैव कुर्यात्सांतपनत्रयम् । अष्टोत्तरसहस्रं तु सर्पिषा जुहुयात्तथा ॥ ३ ॥

---

१ मुखमैथुनकारिणम्—क० पु० । २ जायते ब्रह्मराक्षसः—ख० पु० ।

पुनर्ममेतुमन्त्रेण जपेत्पुरुषसूक्तकम् ॥ ४ ॥

तत्र बलिदानमाह।

कांस्यपात्रे नवे व्रीहितण्डुलानाढकोन्मितान्। निक्षिप्य जलकुम्भेन सार्धं नीत्वा चतुष्पथम्॥५॥
गन्धपुष्पादिभिस्तत्र समभ्यर्च्य बलिं क्षिपेत् ॥ ६ ॥

मन्त्रः।

"प्रगृह्णीष्व बलिं चेमं मज्जाग्रह महाबल। आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं मज्जाग्रह।"॥ ७ ॥
रजस्वलां च चाण्डालीं यो गच्छेत्तं ज्वरग्रहः। गृह्णाति तेन सन्तापधारी भवति मानवः॥ ८ ॥
चान्द्रायणं सांतपनं कुर्याच्च मधुमिश्रितैः। रसालपल्लवैर्होमो जातवेदसमन्त्रतः॥ ९ ॥
नाम्ना सहस्रं तु जपेदयुतं जातवेदसम्। शक्त्या हिरण्यदानं च ब्राह्मणान्भोजयेत्तथा ॥ १० ॥
पायसं कांस्यपात्रे तु ध्वजैः श्वेतैः परिष्कृतम्। निक्षिप्य गन्धपुष्पाद्यैर्ग्रहपूजां विधाय च ॥
देवालये क्षिपेद्विद्वान्निःक्षिपेच्च चतुष्पथे ॥ ११ ॥

मन्त्रः।

"प्रगृह्णीष्व बलिं चेमं दाहरूप महाज्वर। आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाग्रह" ॥ १२ ॥
तस्करो यो महापापी हिंसको निर्दयाश्रयः ॥ १३ ॥

अरुण उवाच।

केन कर्मफलेनाहमर्धाङ्गत्वमुपागतः। वक्तुमर्हसि देवेश श्रोतुमिच्छामि यत्नतः ॥ १४ ॥

श्रीसूर्य उवाच।

कश्चिद्द्विजस्तपोयुक्तो विरक्तः मातृसूद्भवः। बभूव मातरं त्यक्त्वा ह्येकपुत्रां तपस्विनीम् ॥ १५ ॥
स कदाचित्कुरुक्षेत्रे प्राप्य सूर्यपरायणः। गायत्रीजपमास्थाय तपस्तेपे सुदुश्चरम् ॥ १६ ॥
ऊर्ध्वबाहुरभूत्पूर्वं पुनरासीदधोमुखः। तस्य कर्माद्भुतं दृष्ट्वा पीडिता सा जनन्यभूत् ॥ १७ ॥
वर्जितोऽपि तया तत्र तद्वाचा न कृता कृपा। स्थापयित्वा शिरो भूमौ सोऽर्धाङ्गेन तदातपत्॥१८॥
तस्मै शापं ददौ माता जन्मजन्मनि भो सुत। शरीरमर्धं संप्राप्य ज्वलत्पावकसंनिभम् ॥ १९ ॥
तमोमये महाकाशे गच्छ भ्रमवतां गतिम् ॥ २० ॥
एवं संशापितो विप्रो जनन्या स्वल्पपापकृत्। तत्क्षणादत्यजत्तत्र योगेनात्मकलेवरम् ॥ २१ ॥
प्राप्यैवं मद्विधाँल्लोकान् विनतायामिहाण्डज। प्रयागे कश्यपाज्जातः सर्वदेवबलाधिकः ॥ २२ ॥
रौद्ररूपो महाकायो दुर्धर्षोऽर्धशरीरभृत्। संप्राप्य कश्यपाज्ज्ञानं प्राप्तस्त्वं मे पदं ध्रुवम् ॥ २३ ॥

अरुण उवाच।

मातृशापप्रतिकृतिं ब्रूहि मे वदतांवर। यत्कृत्वा सर्वसौख्यानि सुलभान्यत्र जन्मनि ॥ २४ ॥

श्रीसूर्य उवाच।

न काचिन्निष्कृतिः सूत मातुः शापविनाशिनी। तथापि तत्ते वक्ष्यामि शृणु गुह्यं परंतप ॥ २५॥
स्यन्दनानि महाबाहो मदीयान्यद्भुतानि च। दुर्लभानि च देवानां गन्धर्वोरगरक्षसाम् ॥ २६ ॥
तान्यहं प्रेक्ष्य शून्यानि सूत हीनानि काश्यप। तावदेव मया दृष्टस्त्वं मे भक्तिपरायणः ॥ २७ ॥
स्थापितोऽसि रथे यस्मात्सर्वशास्त्रविशारद। नानासौरगणैः सार्धं ममाग्रोदयकारकः ॥ २८ ॥

---

१ ज्वरी–ख० पु०।

त्वां दृष्ट्वा मां प्रपश्यन्तु भूर्लोकादिसमाश्रिताः । त्वं निष्पापोऽसि पक्षीन्द्र मम सांनिध्यभक्तितः॥
यस्मान्मम पदे प्राप्ते सर्वकल्मषनाशने । जन्तुर्न लिप्यते पापैः पद्मपत्रमिवाम्भसा ॥ ३० ॥
एतत्ते कथितं वत्स तव कर्मफलं त्विदम् । सर्वकर्माश्रयं स्वर्गापवर्गाख्यं शुभाशुभम् ॥ ३१ ॥
अतः परं किमन्यत्त्वं श्रोतुमर्हसि तद्वद ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाधिकत्रिशततमः ॥ ३०८ ॥

---

अरुण उवाच ।

साक्षाज्जातिस्मरो देव कलौ कोऽपि भविष्यति । प्रादुर्भूतस्तथा त्वं मे ब्रूहि कः पुरुषोत्तमः॥१॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि कथां पौराणिकीमिमाम् । यथा जातः कलौ घोरे साक्षाज्जातिस्मरः प्रभुः॥
तत्र भाद्रपदे मासि कृष्णाष्टम्यां च पुत्रक । मथुरामण्डले पुण्ये निशीथे रोहिणीयुते ॥ ३ ॥
विजयाख्ये मुहूर्ते तु सूर्ये सिंहगतेऽण्डज । भारावतरणार्थाय कंसादीनां वधाय च ॥ ४ ॥
देवक्यां वसुदेवाच्च नररूपी जनार्दनः । शङ्खचक्रधरो देवः श्यामाङ्गः कमलेक्षणः ॥ ५ ॥
चतुर्भुजो महाबाहुर्वनमालाविभूषितः । सकौस्तुभो गदापाणिः प्रादुर्भूतो भविष्यति ॥ ६ ॥
अदितिर्देवकी तत्र वसुदेवश्च कश्यपः । ताभ्यां जातोऽण्डजश्रेष्ठ तस्मात्स पुरुषोत्तमः ॥ ७ ॥
स एव जातिं स्मरति कलौ साक्षात्पतत्रिण । नान्यः कदापि देवोऽपि शरीरं प्राप्य मानुषम् ॥८॥
तत्र पुण्यप्रभावेण नानादेवद्विजार्चनात् । प्राकृताद्देहदानाच्च जातिं सूर्यारुणात्स्मरेत् ॥ ९ ॥
साक्षाज्जातिस्मरो विष्णुर्यस्मात्स पुरुषोत्तमः । कृत्वाऽद्भुतानि कर्माणि त्रिदशैर्दुष्कृतान्यपि १०
भारोद्धारं पृथिव्याश्च गमिष्यति पदं स्वकम् । तस्य जन्मदिने सूत यः कुर्याद्विधिपूर्वकम्॥११॥
व्रतोपवासं संपूज्य जन्मविंशेर्जनार्दनम् । स गच्छेत्परमं स्थानं यत्र विष्णुः सनातनः ॥ १२ ॥
पुनः कलियुगस्यान्ते स एव भगवान्हरिः । अवतारं स्वकं कृत्वा कल्किसंज्ञं तदाद्भुतम् ॥१३॥
क्षयं नीत्वा जनान्दुष्टान्म्लेच्छान्धर्मपराङ्मुखान् । प्रकाश्य वेदधर्मांश्च गमिष्यति परं पदम् ॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवाधिकत्रिशततम ॥ ३०९ ॥

---

श्रीसूर्य उवाच ।

क्षीणात्पुण्यादथो कश्चित्पततिस्म सुरात्सुत । स एवाऽयं महाभाग जातश्चैवात्र जन्मनि ॥ १ ॥
देशे गङ्गासमीपस्थे पुण्ये पुण्यजनाश्रिते । महीपालकुलेऽत्युग्रे महोग्रः पृथिवीपतिः ॥ २ ॥
लघुस्वरूपो मतिमान् नानारत्नचयान्वितः । महामात्यैर्दृढैर्युक्तो भूपालानां भयप्रदः ॥ ३ ॥
तपःशेषान्महापुण्यात्सर्वमेतत्फलं सुत । पापावशेषात्पापिष्ठः कामी लोभसमन्वितः ॥ ४ ॥
धर्मशास्त्रक्रियाहीनः शास्त्रवर्ती पतत्रिण । गङ्गास्नानान्महाबाहो प्रायश्चित्तं परं न हि ॥ ५ ॥
यत्र गङ्गाऽण्डजश्रेष्ठ प्रायश्चित्तं हि तत्र सा । प्रायश्चित्तं परं नैवाशेषपापनिकृन्तनम् ॥ ६ ॥
शिवाराधनजात्पुण्यादत्र जन्मनि सुव्रत । इहैव सर्वसौख्यानि चान्ते रुद्रगणो नरः ॥ ७ ॥
भविष्यति महापुण्याद्रुद्रपूजनजात्फलात् । आयुस्तस्य महाभाग पञ्चपञ्चाशदब्दकम् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० दशाधिकत्रिशततम. ॥ ३१० ॥

---

१ विनता—कपु० । २ वेवच्छेष—कपु० ।

श्रीसूर्य उवाच।

कैलासात्पार्वतीशापात्प्राग्जन्मन्यपवर्गजा। बभूव काचिद्वनिता महादानरता सदा ॥ १ ॥
पार्वत्याः क्षोमणादत्र यवन्यस्ति पतत्रिण। महाविभूत्या युक्ता सा समस्तैश्वर्यसंयुता ॥ २ ॥
पृथ्वीपतेः सा पुत्रीयं जाता वै नर्मदातटे। पुत्रभ्रातृविहीना सा देवीशापान्महासती ॥ ३ ॥
भञ्जनात्तद्व्रतस्यात्र न च पूर्णमनोरथा। सुवर्णवर्णा पद्माक्षी नानाभरणशोभिता ॥ ४ ॥
जाता कुम्भगते लग्ने स्थिते तत्र शनैश्चरे। पञ्चवेदमितायुः स्यादत्र जन्मनि वै ध्रुवम् ॥ ५ ॥
विभुज्य सर्वभोगान्सा गच्छेत्स्वर्गं महासती। अग्रे जन्मनि सा देवी भविष्यति च याहुजा ॥ ६ ॥
पत्या सार्धं प्रविश्याग्नौ पुनर्गच्छेच्छिवालयम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकादशाधिकत्रिशततमः ॥ ३११ ॥

---

श्रीसूर्य उवाच।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतः सदा। पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः। तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम्। तत्र जन्मनि तद् भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले रम्यपर्वते। पण्डस्तु तेन पापेन स चास्त्वत्र पतत्रिण ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः। पापस्यात्रार्जितस्याथ प्रायश्चित्तं परं न हि ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च तद्गतिः। तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वादशाधिकत्रिशततमः ॥ ३१२ ॥

---

श्रीसूर्य उवाच।

नन्दिकेश्वरसांनिध्याच्च्युतो रुद्रगणो महान्। अभिमानान्वितस्तत्र रुद्रभक्तिपराङ्मुखः ॥ १ ॥
शप्तो नन्दीश्वरेणाथ यस्माद्रुद्रपराङ्मुखः। तस्मात्त्वं यवनो दुष्टो भविष्यसि महीतले ॥ २ ॥
प्रसादितस्तदा तेन स्तुतिभिर्नन्दिकेश्वरः। अपि स्वल्पतरे काले शापान्मुक्तिं ददौ प्रभुः ॥ ३ ॥
तस्य शापान्महाभाग जन्मन्यत्राजनि स्वयम्। महाभूमिभुजां वंशे म्लेच्छानां गरुडाग्रज ॥ ४ ॥
पुष्करात्प्राक्परे देशे शुक्रे स्वोच्चे तु लाभगे। मालव्ययोगे विख्याते सचन्द्रे बहुभिर्युते ॥ ५ ॥
गौरो यशस्वी मतिमान् नानारत्नचयैर्वृतः। गजयूथैः समाक्रान्तो बहुभूपालसेवितः ॥ ६ ॥
नानावाहनसंयुक्तो बहुभोगयुतस्तथा। सकलैश्वर्यवित्ताढ्यः स्वेच्छाद्रव्याश्रिताऽनुजः ॥ ७ ॥
दातातिशक्तितो लोके धर्मात्मा लोकविश्रुतः। रुद्रभक्त्यन्तरायश्च न तु पूर्णमनोरथः ॥ ८ ॥
बहुभृत्यैः समायुक्तो यावज्जीवं सुखान्वितः। पञ्चवेदमिते वर्षे रिष्टं शस्त्रास्त्रबन्धनात् ॥ ९ ॥
रुद्रकर्मकृतात्पापाद्रुद्रपूजनभङ्गजात्। प्रायश्चित्तं महाभाग नात्र जन्मनि विद्यते ॥ १० ॥
चिह्नमङ्गात्तथा सूत भौमो नीचोऽष्टमे स्थितः। सूर्यस्यायगताच्छुक्रात्सङ्ख्यान्मालव्यसंज्ञकात् ॥ ११ ॥
नायुर्दायमवाप्नोति रिष्टान्तं जीवनं स्मृतम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयोदशाधिकत्रिशततमः ॥ ३१३ ॥

---

१ क्षोमनात्–इयु०।

त्वां दृष्ट्वा मां प्रपश्यन्तु भूलोकादिसमाश्रिताः । त्वं निष्पापोऽसि पक्षीन्द्र मम सांनिध्यभक्तितः॥
यस्मान्मम पदे प्राप्ते सर्वकल्मषनाशने । जन्तुर्न लिप्यते पापैः पद्मपत्रमिवाम्भसा ॥ ३० ॥
एतत्ते कथितं वत्स तव कर्मफलं त्विदम् । सर्वकर्माश्रयं स्वर्गापवर्गाख्यं शुभाशुभम् ॥ ३१ ॥
[1] अतः परं किमन्यत्त्वं श्रोतुमर्हसि तद्वद ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टाधिकत्रिशततम ॥ ३०८ ॥

---

अरुण उवाच ।

साक्षाज्जातिस्मरो देव कलौ कोऽपि भविष्यति । प्रादुर्भूतस्तथा त्वं मे ब्रूहि कः पुरुषोत्तमः॥१॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि कथां पौराणिकीमिमाम् । यथा जातः कलौ घोरे साक्षाज्जातिस्मरः प्रभुः॥
तत्र भाद्रपदे मासि कृष्णाष्टम्यां च पुत्रक । मथुरामण्डले पुण्ये निशीथे रोहिणीयुते ॥ ३ ॥
विजयाख्ये मुहूर्ते तु सूर्ये सिंहगतेऽण्डज । भारावतरणार्थाय कंसादीनां वधाय च ॥ ४ ॥
देवक्यां वसुदेवाच्च नररूपी जनार्दनः । शङ्खचक्रधरो देवः श्यामाङ्गः कमलेक्षणः ॥ ५ ॥
चतुर्भुजो महाबाहुर्वनमालाविभूषितः । सकौस्तुभो गदापाणिः प्रादुर्भूतो भविष्यति ॥ ६ ॥
अदितिर्देवकी तत्र वसुदेवश्च कश्यपः । ताभ्यां जातोऽण्डजश्रेष्ठ तस्मात्स पुरुषोत्तमः ॥ ७ ॥
स एव जातिं स्मरति कलौ साक्षात्पतत्रिण । नान्यः कदापि देवोऽपि शरीरं प्राप्य मानुषम् ॥८॥
तत्र पुण्यप्रभावेण नानादेवद्विजार्चनात् । प्राकृतादेर्ददानाच्च जातिं सूर्यारुणात्स्मरेत् ॥ ९ ॥
साक्षाज्जातिस्मरो विष्णुर्यस्मात्स पुरुषोत्तमः । कृत्वाऽद्भुतानि कर्माणि निदर्शैर्दुष्कृतान्यपि १०
भारोद्धारं पृथिव्याश्च गमिष्यति पदं स्वकम् । तस्य जन्मदिने सूत यः कुर्याद्विधिपूर्वकम्॥११॥
व्रतोपवासं संपूज्य जन्मविघ्नैर्जनार्दनम् । स गच्छेत्परमं स्थानं यत्र विष्णुः सनातनः ॥ ११ ॥
पुनः कलियुगस्यान्ते स एव भगवान्हरिः । अवतारं स्वकं कृत्वा कल्किसंज्ञं तदाद्भुतम् ॥१३॥
क्षयं नीत्वा जनान्दुष्टान्म्लेच्छान्धर्मपराङ्मुखान् । प्रकाश्य वेदधर्मांश्च गमिष्यति परं पदम् ॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवाधिकत्रिशततम ॥ ३०९ ॥

---

श्रीसूर्य उवाच ।

क्षीणात्पुण्यादथो कश्चिदपतत्त्रिदशपुरात्सुत । स एवाऽयं महाभाग जातश्चैवात्र जन्मनि ॥ १ ॥
देशे गङ्गासमीपस्थे पुण्ये पुण्यजनाश्रिते । महीपालकुलेऽप्युग्रे महोग्रः पृथिवीपतिः ॥ २ ॥
लघुस्वरूपो मतिमान् नानारत्नचयान्वितः । महामात्यैर्हदैर्युक्तो भूपालानां भयप्रदः ॥ ३ ॥
तपःशेषान्महापुण्यात्सर्वमेतत्फलं सुत । पापावशेषात्पापिष्ठः कामी लोभसमन्वितः ॥ ४ ॥
धर्मशास्त्रक्रियाहीनः शास्त्रवर्ती पतत्त्रिण । गङ्गास्नानान्महाबाहो प्रायश्चित्तं परं न हि ॥ ५ ॥
यत्र गङ्गाऽण्डजश्रेष्ठ प्रायश्चित्तं हि तत्र सा । प्रायश्चित्तं परं नैवाशेषपापनिकृन्तनम् ॥ ६ ॥
शिवाराधनजात्पुण्यादत्र जन्मनि सुव्रत । इहैव सर्वसौख्यानि चान्ते रुद्रगणो नरः ॥ ७ ॥
भविष्यति महापुण्याद्रुद्रपूजनजात्फलात् । आयुस्तस्य महाभाग पञ्चपञ्चाशदब्दकम् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० दशाधिकत्रिशततम ॥ ३१० ॥

---

१ त्रिनता—क्पु० । २ चैतच्छेष—कपु० ।

श्रीसूर्य उवाच।

कैलासात्पार्वतीशापात्प्राग्जन्मन्यपवर्गजा। बभूव काचिद्वनिता महादानरता सदा ॥ १ ॥
पार्वत्याः क्षोभणा॑दत्र यवन्यस्ति पतत्रिण। महाविभूत्या युक्ता सा समस्तैश्वर्यसंयुता ॥ २ ॥
पृथ्वीपतेः सा पुत्रीयं जाता वै नर्मदातटे। पुत्रभ्रातृविहीना सा देवीशापान्महासती ॥ ३ ॥
भञ्जनाच्चव्रतस्यात्र न च पूर्णमनोरथा। सुवर्णवर्णा पद्माक्षी नानाभरणशोभिता ॥ ४ ॥
जाता कुम्भगते लग्ने स्थिते तत्र शनैश्चरे। पञ्चवेदमितायुः स्यादत्र जन्मनि वै ध्रुवम् ॥ ५ ॥
विभुज्य सर्वभोगान्सा गच्छेत्स्वर्गं महासती। अग्रे जन्मनि सा देवी भविष्यति च वाङ्कुजा ॥ ६ ॥
पत्या सार्धं प्रविश्याग्नौ पुनर्गच्छेच्छिवालयम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकादशाधिकत्रिशततमः ॥ ३११ ॥

श्रीसूर्य उवाच।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतः सदा। पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः। तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम्। तत्र जन्मनि तद् भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले रम्यपर्वते। पण्ढस्तु तेन पापेन स चास्त्यत्र पतत्रिण ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः। पापस्यात्रार्जितस्याथ प्रायश्चित्तं परं न हि ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च तद्गतिः। तीर्थार्थयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वादशाधिकत्रिशततमः ॥ ३१२ ॥

श्रीसूर्य उवाच।

नन्दिकेश्वरसांनिध्याच्च्युतो रुद्रगणो महान्। अभिमानान्वितस्तत्र रुद्रभक्तिपराङ्मुखः ॥ १ ॥
शप्तो नन्दीश्वरेणाथ यस्माद्रुद्रपराङ्मुखः। तस्मात्त्वं यवनो दुष्टो भविष्यसि महीतले ॥ २ ॥
प्रसादितस्तदा तेन स्तुतिभिर्नन्दिकेश्वरः। अपि स्वल्पतरे काले शापान्मुक्तिं ददौ प्रभुः ॥ ३ ॥
तस्य शापान्महाभाग जन्मन्यत्राजनि स्वयम्। महाभूमिभुजां वंशे म्लेच्छानां गरुडाग्रज ॥ ४ ॥
पुष्करात्प्रागपरे देशे शुक्रे स्वोच्चे तु लाभगे। मालव्ययोगे विख्याते सचन्द्रे बहुभिर्युते ॥ ५ ॥
गौरो यशस्वी मतिमान् नानारत्नचयैर्युतः। गजयूथैः समाक्रान्तो बहुभूपालसेवितः ॥ ६ ॥
नानावाहनसंयुक्तो बहुभोगयुतस्तथा। सकलैश्वर्यवित्ताढ्यः स्वेच्छाद्रव्याश्रिताऽनुजः ॥ ७ ॥
दातातिशक्तितो लोके धर्मात्मा लोकविश्रुतः। रुद्रभक्त्यन्तरायश्च न तु पूर्णमनोरथः ॥ ८ ॥
बहुभृत्यैः समायुक्तो यावज्जीवं सुखान्वितः। पञ्चवेदमिते वर्षे रिष्टं शस्त्रास्त्रबन्धनात् ॥ ९ ॥
दृढकर्मकृतात्पापाद्रुद्रपूजनभङ्गजात्। प्रायश्चित्तं महाभाग नात्र जन्मनि विद्यते ॥ १० ॥
चिह्नमङ्गात्तथा सूत भौमो नीचोष्मे स्थितः। सूर्यस्यायगताच्छुक्रात्सङ्गान्मालव्यसंज्ञकात् ॥ ११ ॥
नायुर्दायमवाप्नोति रिष्टान्तं जीवनं स्मृतम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयोदशाधिकशततमः ॥ ३१३ ॥

---

१ क्षोभनात्-खपु०।

अरुण उवाच ।

भगवन्देवदेवेश श्रुतमेतन्महाद्भुतम् । सहानुगामिनी नार्या गतिं मे ब्रूहि भास्कर ॥ १ ॥

श्रीसूर्य उवाच ।

मृतं सतीक्ष्य भर्तारं या विशेच्च हुताशनम् । सार्धं तेन महापुण्या ज्ञेया सा सहगामिनी ॥ २ ॥
श्रुत्वा मृतपतिं यात्र विदेशस्थं पतिव्रता । तद्वस्त्रेण विशेदग्नौ सा ज्ञेया चानुगामिनी ॥ ३ ॥
धर्मात्पतिव्रता पूर्वं भवेन्मोक्षगतिर्द्वयोः । अर्थैकामून्महासाध्वी जाता ब्रह्महदेऽण्डज ॥ ४ ॥
ब्राह्मणी तपसा युक्ता सदा भर्तृपरायणा । दानशीलरता पुण्या पुण्यकर्मान्विता सती ॥ ५ ॥
दृष्ट्वा मृतपतिं सा तु दिव्याभरणभूषिता । प्राप्याग्नौ विधिना सूत कृत्वा पूजां हरेर्भृशम् ॥ ६ ॥
सा गता यमराजस्य स्कन्धे दत्त्वा पदाम्बुजम् । वैकुण्ठे चाण्डजश्रेष्ठ यद्गत्वा न निवर्तते ॥७॥
तत्स्वातलघातेन मूर्च्छितोऽभूद्यमाधिपः । तत्काले वै तत्र पृष्टो नारदेन महात्मना ॥ ८ ॥
धर्मराज वदैतन्मे त्वत्तः परतरश्च कः । दण्डप्रदो महाभाग येन त्वं चालितोऽधुना ॥ ९ ॥
तमुवाच ऋषिश्रेष्ठ गतेयं या शुभानना । सती तत्पादभारेण पीडितोऽहं भृशं द्विज ॥ १० ॥
मोक्षं गता महासाध्वी गृहीत्वा तु स्वकं पतिम् । महापापसमाक्रान्तं नरकस्थं द्विजोत्तम ॥ ११ ॥
साऽगमिष्यति चैवात्र पत्युः पापावशेषतः । ब्राह्मणी योगयुक्ता च भविष्यति कलौ युगे ॥ १२ ॥
काश्यां मृत्युस्तयोर्यस्माच्छिवत्वमुपगच्छतः ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्दशाधिकत्रिशततमः ॥ ३१४ ॥

---

श्रीसूर्य उवाच ।

कामतो यश्चरेत्पूर्वं ब्रह्महत्यां नराधमः । क्षयरोगान्वितः सोऽपि जायते चात्र जन्मनि ॥ १ ॥
घोराद्ब्रह्मघ्नजातपापाद्दुष्कर्मकृतात्सुत । प्रायश्चित्तं मया नोक्तं पापान्मुक्तिस्त्रिजन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचदशाधिकत्रिशततमः ॥ ३१५ ॥

श्रीसूर्य उवाच ।

ब्राह्मणं घातयेद्यस्तु पूर्वजन्मनि मानवः । मोहादकामतः सोऽपि क्षयरोगसमन्वितः ॥ १ ॥
क्षयेणात्र क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षयेऽतिकष्टेन नष्टायुर्जायते पुमान् ॥ २ ॥
सर्वस्वदानादत्रैव क्षयरोगः प्रशाम्यति । कुरुक्षेत्रादितीर्थेषु सत्पात्रेषु विधानतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० षोडशाधिकत्रिशततमः ॥ ३१६ ॥

---

अरुण उवाच ।

कश्चिद्विप्रो महासाधुश्चारुवर्णः प्रतापवान् । आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किंचिद्विचसमन्वितः । तस्य भार्या सदाचारा किंचिच्च क्लेशकारिणी ॥२ ॥
पतिभक्ता पतिप्राणा व्रतानामनुकाङ्क्षिणी । ऋतुहीना कथं जाता कस्येदं कर्मणः फलम् ॥३॥

श्रीसूर्य उवाच ।

नारीणां वै जारगानामसतीनां कुलच्छिदाम् । यद्वा वीरप्रसूतानां शीघ्रगर्भसमुच्छिदाम्[1] ॥ ४ ॥
औषधैश्छेदनैर्दुष्टैः मलैर्पैर्दुष्टभक्षणैः । संभावनैस्तथाघातैरन्यैर्वा बस्तिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायं करोत्यपि च कीर्तयेत् । पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥

---

१ यद्वा चिरप्रसूतं शीघ्रगर्भं समुद्भवेत् इति-स्वपु० ।

नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि । पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
अन्यायां ईर्ष्यया चैव संततेर्नाशनाय च । आपर्वेच्छेदनार्थैस्तु तस्यार्थं कल्पितोऽगदः ॥ ८ ॥
सपत्न्यै प्रेरयामास विविधोऽन्येन तेऽद्गदः । तया वै ऋतुभावाच्च शीघ्रं पीतं तदौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद । ऋतावृत्वौ च संप्राप्ते जातं तद्विविधं रजः ॥ १० ॥
वेदना जायते नित्यमसृग्वातोदरामयः । पुष्पे[1] नष्टे फलं नष्टं कदाचिद्गर्भपातनम् ॥ ११ ॥
एतत्कर्म कृतं पूर्वभवे वै गर्भदोषकृत् । तथापि फलहन्त्रीणां द्वितीयं सुकृतं चरेत् ॥ १२ ॥
ऋजुभावाद्दुष्टबुद्ध्या कृतं वै पूर्वजन्मनि । तेनैव कर्मणा वत्स विविधाः पुष्पबन्धनाः ॥ १३ ॥
गर्भाशयमधिश्रित्य स्रवते शोणितं बहु । छिद्यन्तीव च वान्त्राणि सूचीभिरिव सुव्रत ॥ १४ ॥
वेदनायाः पुरा भोगात्स्त्रीणां गर्भनिपातनात् । यावत्कालं निष्ठुरेयं तासां गर्भमपातयत् ॥ १५ ॥
तावानेन पतेद्गर्भो ह्यथवा नास्य संभवः । एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत् ॥ १६ ॥
एकमासावधिं चैव दम्पती वीर्यसङ्गमे । सुशुभे भूप्रदेशे तु पुराणोक्तविधानतः ॥ १७ ॥
संमनाशाय दुष्टस्य प्रायश्चित्तमिहैनसः । प्रोष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ १८ ॥
नियमेन कृतं सूत व्रतं सिद्धिं ददाति तत् । पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियम् ॥ १९ ॥
केतकीगर्भसंयुक्तैश्चम्पकैः कुमुदोत्पलैः । सौवर्णीं राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् ॥ २० ॥
हारनूपुरमुकुटकुण्डलाभरणादिकम् । नैवेद्यैः शुभ्रकासारमोदकापूपपायसैः ॥ २१ ॥
उपतिष्ठेत विधिवद्भवानीप्रियवल्लभम् । पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता ॥ २२ ॥
रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम् । द्रव्यैर्नानाविधैरर्घ्यं दद्यान्मन्त्रपुरःसरम् ॥ २३ ॥
फलपुष्पाक्षतोपेतं मज्जनं मूर्ध्नि निक्षिपेत् ॥ २४ ॥

मन्त्रः ।

"नमस्तेऽस्तु महादेवि नमस्ते[2] गिरिशप्रिये । गृहाणार्घ्यमिदं देवि पुत्रान्मह्यं यशस्विनः ॥
देहि देहि जगत्पूज्ये शंकरप्राणवल्लभे" ॥ २५ ॥

एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम् । ततः प्रभाते विमले कृतप्रातःक्रिया सती ॥ २६ ॥
देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः । नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश ॥ २७ ॥
प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम् । सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् ॥ २८ ॥
दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया । सगर्भां च युतां[3] सितां गां वस्त्रसंयुताम् ॥ २९ ॥
सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ ३० ॥

मन्त्रः ।

"गर्भपाताद्धि यत्पापं दुष्टस्त्रीणामुपार्जितम् ।
तदत्र वन्ध्यताहेतुस्तस्मान्मुञ्चय चाम्बिके । तव दानेन पुत्रा मे भवेयं सुभगा सती" ॥ ३१ ॥
इमं मन्त्रं समुच्चार्य दत्त्वा विप्रे विसर्जयेत् । एवं व्रतपराया वै गर्भपातो न जायते ॥ ३२ ॥
यथाऽत्र पुत्रपौत्राढ्या स्वपत्या सह मोदते । न लभेद्गर्भपातं सा पतिपुत्रासुखं च न ॥ ३३ ॥
तृतीये वा चतुर्थे वा मासि गर्भः समेयते । रजतस्य पलाभ्यां वै कोशं गर्भाशयाकृतिम् ॥ ३४ ॥
निष्केण स्वर्णगर्भं च कृत्वा दत्त्वा द्विजन्मने । "गर्भपातं प्रकुर्वत्या मया प्राक्तनजन्मनि ॥ ३५ ॥

१ तद्गदः इति–खपु० । २ कृतभावाय–खपु० । ३ सुगर्भां सती इति–खपु० ।

यद्द्य वन्ध्यत्वं प्राप्तं तस्मान्मुच्येऽत्र जन्मनि[1] । जन्मजात्यादिकं वत्स वद त्वमिह कर्मणः ॥ ३६ ॥
इदं चतुर्थकं जन्म भूमिदेवकुलोद्भवम् । सपत्नीसहितं येन न सा गर्भस्य दोषहृत् ॥ ३७ ॥
तत्रेऽमपि संचित्य लक्षणं त्विह जन्मनि । यथा प्राक् पातितो गर्भः सपत्न्याः पतिवर्जिता ॥ ३८ ॥
दीनानाथविरोधः स्यात्स विरोधस्तया सुत । अनुमन्त्रिमयोक्ता सा पितृमातृसुखोज्झिता ॥ ३९ ॥
बन्धुसंततिदुःखी स्यात्सर्वदा ह्यनवस्थितिः । शोकः स्यादुदरे बाधा तावत्प्लीहादिविभ्रम ॥ ४० ॥
अन्तरात्स्यन्दमानो वा गर्भः सन्नोपलक्ष्यते । पाणौ मुष्टितलाघाताज्जानुना सक्थिजानुनी ॥ ४१ ॥
दोषघ्नो वाग्निजो वापि शस्त्रजोऽस्माद्विजोऽपि वा । ब्राह्मणान्भोजयेद्दत्त्वा सर्पिष्यात्मानमीक्षयेत् ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० सप्तदशाधिकत्रिशततम ॥ ३१७ ॥

---

श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सूत घातितो भूमिलोभतः ॥ १ ॥
सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् । तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तथापि तिर्यक्कं सूत विमुच्याऽधर्मतः स्वयम् । कर्मक्षयेऽथ पुण्यात्प्राक् सोऽत्र जातो हि बाहुजः ॥ ३
क्षयरोगयुतः सूत कृशोऽरातुरो भृशम् । लग्ने कुम्भाभिधे सूत भौमचन्द्रयुतेऽण्डज ॥ ४ ॥
रिष्टं पष्टिमिते वर्षे जायेत कृतनिष्कृतेः । सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तस्मै ते मृताश्चान पुत्राः क्षयरुजान्विताः । रिष्टेन वायुपो भग्नो हढपापान निष्कृतिः ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकत्रिशततम ॥ ३१८ ॥

---

श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः । गत्वा स तु पुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह तत्पुरं शत्रोस्तत्क्षणे लुंठितः पुन । तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम् । अथो यमाज्ञया सर्वाः भुक्त्वा नरकयातनाः ॥ ३ ॥
पुण्यशेषात्तथाऽत्रापि स जातो क्षत्रियावरः । देशेऽयोध्याभिधे गौरो लघुदंशो महोद्यमी ॥ ४ ॥
युवभावे महाभाग राजयक्ष्मप्रपीडितः । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तत्प्रवक्ष्यामि यां कृत्वा मुच्यतेऽधुना । कार्यास्तत्र त्रिदेवानां मूर्तयस्तु यथोदिताः ॥ ६ ॥
ब्रह्मविष्णुमहेशानां सर्वरोगविनाशकाः । सुवर्णजास्तथा कार्या कदलीपत्रसंयुता ॥ ७ ॥
निजवित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । देयास्तु विप्रमुख्येभ्यः क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमश्चैव जपेत्तथा । गायत्र्या विधिना सूत पूर्वपापप्रनुत्तये ॥ ९ ॥
एवं कृते महाबाहो क्षयरस्तस्य न शाम्यति । नैव कुर्यात्तु यो मोहाद्रिष्टं विशन्मितेऽब्दके ॥ १० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनविंशत्यधिकत्रिशततम ॥ ३१९ ॥

---

श्रीसूर्य उवाच ।

या योषिद्दाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामयात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं मयोक्तं न पतत्रिण । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकत्रिशततम ॥ ३२० ॥

---

१ चतुर्थे-ए=पु० ।

श्रीसूर्य उवाच ।

स्वसृघाती च पुरुषः पूर्वजन्मनि मानद । बधिरो जायतेऽत्रैव प्रायश्चित्तं च तच्छृणु ॥ १ ॥
चान्द्रायणव्रतं कुर्यात्सुवर्णैकपलान्वितम् । पुस्तकं विधिवद्दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्त्या होमयेच्च स्वशक्तितः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकत्रिशततमः ॥ ३२१ ॥

श्रीसूर्य उवाच ।

या काचिदाचरेन्नारी पापं प्राग्ब्रह्मघातजम् । अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापकृताद्घोराघस्मात्सर्वस्वदानतः । क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि । काश्यां वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकत्रिशततमः ॥ ३२२ ॥

श्रीसूर्य उवाच ।

कलिङ्गदेशे प्राक् सूत काचिद्द्विजवराङ्गना । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
सा नार्यघातयत्पूर्वे भवे मोहाच्च कुक्कुटम् । नासावकलत्वमाप्नोति सात्र जन्मनि निश्चयात् ॥ २ ॥
हेमनिष्कत्रयं दद्यात्सर्वस्वेव प्रयत्नतः । ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रयोविंशत्यधिकत्रिशततमः ॥ ३२३ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे पञ्चनदेऽधुना । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्सङ्गगतश्चायं प्रयागे गरुडाग्रज । सुस्नातो मृगगे भानौ धूर्तः कर्मक्रियोज्झितः ॥ २ ॥
संप्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम् । ग्रामे निवासितस्यान्यक्षत्रियस्य पतत्रिणं ॥ ३ ॥
ददाह भवनं रम्यं वैरिभावात्पुरानघ । तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगे च संप्राप्ते स गत्वा यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गङ्गायाः प्राक्परे देशे शतयोजनसंमिते ॥ ६ ॥
सुमध्यरूपो बलवान्धर्मे स्वल्पमतिः शठः । बुद्ध्याधिकप्रधारी च पंक्तिकः स्वल्पवित्तवान् ॥ ७ ॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः । पुण्यादिदं फलं पूर्वात्पापादत्र शृणुष्व मे ॥ ८ ॥
गोवालवत्सकवयाजीवघातादपुत्रक । सप्तवेदमिताब्दान्ते जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधात्पापान्यत्र नाशकराणि च । गोगाशिगः शनिः सोमात्पञ्चो जीवो मृगास्थितः ॥ १० ॥
रुक्मवदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि । पूर्वे या स्त्री सहायासीन्मृतवत्सात्र सा सुत ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदनीम् । पुत्रवृद्धिकरी धन्या सात्र जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोषणीम् । पञ्चस्वर्णमिता कार्या सुरभिश्च हिरण्मयी ॥ १३ ॥
तदर्धमितिका वापि द्वयोर्वित्तानुसारतः । संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
सार्पैर्यद्विमितैर्दत्तस्तया पशुपतिः सुत । मासाभ्यां च तथा वह्निर्जीवा मासचतुष्कतः ॥ १५ ॥
देयाश्च विधिना सूत प्रायश्चित्तं विधानतः । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया ॥ १६ ॥

नैवं कुर्याच्च यः शक्त्या विपेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ॥ १७ ॥
नवसप्तममायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तवेदमिते वर्षे रिष्टं वा कृतनिष्कृतेः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुर्विंशत्यधिकत्रिशततमः ॥ ३२४ ॥

श्रीसूर्य उवाच ।

काश्मीरमण्डले पूर्वं काचिद्द्विजवराङ्गना । पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वैरिभावं तया स्मृत्वा गृहं दग्धं द्विजस्य च । चौर्येण तत्सुतो दग्धो गृहदाहे पतत्रिप ॥ २ ॥
साहाय्यात्स्वामिनः सर्वं प्राग्भवे समुपार्जितम् । तत्पापजान्महाघोरात्फलाज्जाता वियोनिजा ॥ ३ ॥
नैव जाता विराटेऽत्र पतिशुश्रूषणात्सुत । क्षत्रिया धनधर्माढ्या पूर्वपुण्यात्तथा सती ॥ ४ ॥
क्षयरोगयुता बाल्ये बालघातादपुत्रिणी । महाग्निदाहपापाच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशन्मिते वर्षे रिष्टेनैशाच नश्यति । साहाय्यात्तत्पतिश्चात्र पुत्रहीनो रुजान्वितः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये पञ्चविंशत्यधिकत्रिशततमः ॥ ३२५ ॥

श्रीसूर्य उवाच ।

सारिकां यो महाभाग निहन्यात्पापमोहितः । तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥ १ ॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम् । तथा च पुस्तकं दद्याच्छास्त्रस्य विधिनाण्डज ॥ २ ॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकिल्बिषः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये षड्विंशत्यधिकत्रिशततमः ॥ ३२६ ॥

श्रीसूर्य उवाच ।

सारिकां घातयन्नारी पूर्वं पापविमोहिता । साऽत्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय वा । पूर्वपापात्प्रमुच्येत तद्दानाद्विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये सप्तविंशत्यधिकत्रिशततमः ॥ ३२७ ॥

श्रीसूर्य उवाच ।

मकराती च पुरुषः पूर्वजन्मनि मानद । रुग्णकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्वेतां सर्वाभरणभूषिताम् । मुच्यते कण्ठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकत्रिशततमः ॥ ३२८ ॥

श्रीसूर्य उवाच ।

या नारी पूर्वजनुषि घातयेन्मण्डलाण्डज । चक्रं सा कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिना सूत श्वेतामन्न पयस्विनीम् । ययोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनत्रिंशदधिकत्रिशततमः ॥ ३२९ ॥

अरुण उवाच ।

कश्चिद्द्विजकुले जातो धर्मिष्ठो वित्तसंयुतः । उदरे वातजा रोगा गुल्माद्या वोर्ध्वहृद्व्यथाः ॥ १ ॥
मोहाद्याः रक्तपीडाश्च अतिपाण्डुदरादयः । जायते शीर्षजा पीडा बाल्ये स्यात्कर्णरोगदः ॥ २ ॥
शरीरे जायते दाहिदखातत्रणाकुलः । पौत्राणां मातुलानां च दुःखवार्ताश्रुतिः सदा ॥ ३ ॥
दायादाच्छत्रुतःपीडा भूमिद्रव्याभिलिप्सया । ऐदिकानि च लक्ष्माणि तस्य देहे भवन्ति हि ॥ ४ ॥

तस्य भार्या सदाचारा कदाचिद्रोपवादिनी। गौरवर्णा शुभा वाणीसन्तोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात्। दश मासानतिक्रम्य गर्भे चोदरसौख्यभाक् ॥ ६॥
केन कर्मविपाके न सत्यं कथय भास्कर ॥ ७॥

श्रीसूर्य उवाच।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः। पूर्वजन्मनि सा क्षात्रा संजाता विनतासुत ॥ ८ ॥
अज्ञानतिमिरान्धेन स्त्रीणां कर्म दुरात्मनाम्। अजानती कुलस्त्रीणामाचारमनुकम्पया ॥ ९ ॥
सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च। ममाद्रोहोपिनं हत्वा सदा निष्ठुरमात्मना ॥ १० ॥
तस्य गेहाश्रिता नित्यं मार्जारश्वानपूर्वकाः। पातालक्रीडनपरा गेहे संकुलिता भृशम् ॥ ११ ॥
तत्यक्ता त्यज्यते मातृबालानामनुकम्पया। मायावन्धनमातृणां वालगर्ताश्रिता तदा ॥ १२ ॥
अन्यसद्धर्मिणां दृष्ट्वा क्षिप्यते वह्निभस्मसात्। विनिघ्नन्ति ममाद्यार्थैर्भेदं संततिदुःखभाक् ॥ १३॥
संततिर्दुःखितायास्तु नानादुःखाय जायते। अनया वित्तमासाद्य तेषां वैनाशनाय तु ॥ १४ ॥
तथाविधेषु जीवेषु मृतेष्वपि च तद्वशात्। म्रियन्ते शिशवस्तेऽपि तस्यास्तद्दोषचिह्निताः ॥१५॥
पाताले ज्वलिता ताभिर्बहवो लघुप्राणिनः। गर्भयुक्ता मृतामातृक्षामयापि तथाऽनया ॥ १६ ॥
गर्भे न लभते तत्र मृतासो दुःखजन्तवः। तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजा ॥ १७ ॥
त्रिविधापत्यजा बाधा प्राप्यते जन्तुरन्तरे। जन्तवो गर्भिणो ये तैः स्वकृतं कर्म भुज्यते ॥ १८ ॥
उभयोः कर्मणां हेतून्वक्ष्यावश्यप्रयोजकान्। इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम् ॥
स्थिरगर्भा मृतापत्या पुत्रहीना पतत्त्रिण ॥ १९ ॥

अरुण उवाच।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते। ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २० ॥

श्रीसूर्य उवाच।

सुदिष्टे समनुप्राप्ते गृहेऽहनि शुभोदये। प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २१ ॥
तत्रोपर्यर्चिकां स्तीर्य नानाचित्रविचित्रकम्। द्रोणमानं तिलानां तु मध्ये गर्भं प्रपूजयेत् ॥ २२ ॥
निष्कमानं सुवर्णस्य शकलं मध्यतः क्षिपेत्। तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपर्वते ॥ २३ ॥
शुद्धं मोऽयं भृशं ताम्रपात्रं दशपलोन्मितम्। स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम्॥२४॥
पूजयेच्च सपत्नीकं कश्यपं च प्रजापतिम्। वेणुदण्डं करे दक्षे वामे चाथ कमण्डलुम् ॥ २५ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिं च शुभलक्षणाम्। अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २६ ॥
सम्यक् श्रद्धावती नारी त्रिविधापत्यदुःखिनी। विप्राय वेदविदुषे पूजयेद्विविधैर्धनैः ॥ २७ ॥
ततस्तत्तु सपत्नीकं मुनीनां विन्मयेदिति। सदक्षिणा जगत्स्रष्टा पत्नी च तपसोवला ॥ २८ ॥
सा मया तिलसंस्था वेदाघोभिस्त्वीन्नवेदनम्। लपिता स्त्रीजनाचारमजानन्त्या दयात्मिकाम्॥२९॥
नाशयेत्तस्य पापस्य देवमात्रं विगर्हितम्। सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी ॥ ३० ॥
सपत्नीकं च सौवर्णं निर्मितं सम्यगर्चितम्। विप्राय वेदविदुषे प्रदद्याद्गुणशालिने ॥ ३१ ॥
एवमाश्राव्य ता मूर्तीः समादाय पृथक्पृथक्। प्रदद्याद्दानविधिना श्रद्धया च सदक्षिणाः ॥
दानान्ते कीर्तयेन्मन्त्रं तिष्ठेति विहिताञ्जलिः ॥ ३२ ॥

---

१ दोषिनम् इति—ख्पु०। २ ये जाता इति—ख्पु०। ३ मार्गं इति—ख्पु०।

मन्त्रः ।

"यन्मया पूर्वजन्मापि दयारहितचित्तया । प्राप्तमत्यशुभं स्वामिञ्छिन्धि तत्कर्म दारुणम्" ॥३३॥
दत्त्वा दानं च विप्राय सर्पिष्यात्मानमीक्षयेत् ॥ ३४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकत्रिशततमः ॥ ३३० ॥

---

### श्रीसूर्य उवाच ।

काकघाती महाभाग प्राग्भवे चात्र जन्मनि । कूर्चहीनो भवेन्मर्त्यः स तत्पापेन लाञ्छितः ॥१॥
कृष्णधेनुप्रदानेन विधिनात्र खगाधिप । मुच्यते तत्पापात्तु कूर्चयुक् चात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकत्रिंशदधिकत्रिशततमः ॥ ३३१ ॥

---

### श्रीसूर्य उवाच ।

या नारी घातयेत्काकं विनतानन्दवर्धन । सात्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवेद्ध्रुवम् ॥ १ ॥
कृष्णधेनुप्रदानेन कूर्चयुग् गरुडाग्रज । पूर्वपापविशुद्धिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकत्रिशततमः ॥ ३३२ ॥

---

### श्रीसूर्य उवाच ।

अभक्ष्यभक्षको यस्तु भवेत्प्राग्मानवोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते कृमिलोदरः ॥ १ ॥
स भीष्मपञ्चकादत्र व्रतात्पुण्यसमार्जितात् । मुच्यते किल रोगात्तु दुष्टात्कृमिभवात्खग ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रयस्त्रिंशदधिकत्रिशततमः ॥ ३३३ ॥

---

### श्रीसूर्य उवाच ।

याऽभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः कृमिजाता रुजा सुत ॥ १ ॥
तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम् । कार्तिके शुक्लपक्षे तु प्रातस्तद्दिनपञ्चकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुस्त्रिंशदधिकत्रिशततमः ॥ ३३४ ॥

---

### श्रीसूर्य उवाच ।

दुष्टस्पृष्टं तु यो मोहाद्भक्षयेद्विधिवर्जितः । सिद्धान्नं स पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥
विष्णुव्रतान्महापुण्यात्सर्वपापप्रणोदनम् । तदा कृशोदरत्वं च रुजं नात्र प्रपश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चत्रिंशदधिकत्रिशततमः ॥ ३३५ ॥

### श्रीसूर्य उवाच ।

भुक्तं यया पुरा सूत सिद्धान्नं द्विजभार्यया । दुष्टस्पृष्टं च सततं सात्र स्यात्तु कृशोदरी ॥ १ ॥
सा वैष्णवव्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते । कृशोदरव्यथा नश्येत्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्त्रिंशदधिकत्रिशततमः ॥ ३३६ ॥

---

### श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनसौख्यसमन्वितः ॥ १ ॥
कृतानि तेन दानानि नानापर्वसु शक्तितः । वेदविज्ञानयुक्तेषु सत्पात्रेषु विधानतः ॥ २ ॥
अथो पापं भृशं चक्रे व्यभिचारसमुद्भवम् । त्यक्त्वा ज्येष्ठामृतुस्नातां धर्मशीलयुतां प्रियाम् ॥३॥
गतिं ददौ कनिष्ठायामनृतावविमोहितः । ततो यमपुरं प्राप्तः समहायो द्विजोत्तमः ॥ ४ ॥

भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा। श्रद्धादानवशात्सोऽत्र गङ्गायाः पूर्वभागजः ॥ ५ ॥
सिंहस्थेऽर्के सुते राहौ जीवे कर्कटलिगे भृगौ। स रक्तगौरो मतिमान् बन्धुस्त्रीसुखसंयुतः ॥६ ॥
लघुपूर्णो स्वमितदो द्विजबन्धुसहायकः। सर्वे त्विदं फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ७ ॥
स्त्रीत्यागी भ्रूणहा लोके इति पौराणिका विदुः। योपासाद्यायतो जातं शृणुष्व विनतासुत ॥८॥
प्राग्भवे या कनिष्ठाभृत्सा ज्येष्ठात्र गतप्रजा। गर्भदोषयुता चेति लक्षणैर्लक्ष्यते खग ॥ ९ ॥
वक्ष्यामि निष्कृतिं तस्य पूर्वपापविनाशिनीम्। कुर्यात्पलैर्वदमितैर्गणेशं विघ्ननाशनम् ॥
तदर्धार्धमितं वापि विप्र वित्तादिमं पठेत् ॥ १० ॥

मन्त्रः।

"त्वाचक्र वराननां शुद्धां पूर्वं पापं समार्जितम्। तदुग्रपापनाशाय ददेऽहं गणनायकम् ॥११॥
मापसप्रमिता लक्ष्मीः शुभा स्वल्पा हिरण्मयी। ददेऽहं विप्रमुख्याय वेदशास्त्रविदे त्विह" ॥१२॥
ब्राह्मणान्भोजयेच्छक्त्या शुभां दद्याच्च दक्षिणाम्। एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः॥१३॥
श्रुत्वैवं शक्तिमान्यस्तु न कुर्याच्छोधनं त्वके। स पुत्रात्रोपसंपन्नं रिष्टं पश्चाशदब्दके ॥ १४ ॥
प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम्। अत्र जन्मादिकं ज्ञेयं विस्तरं नोदितं मया ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तत्रिंशदधिकत्रिशततमः॥ ३३७ ॥

श्रीसूर्य उवाच।

देहे पञ्चनदे जाता वाडजा पूर्वजन्मनि। सात्र जन्मनि वै विप्रा जाता प्राग्विष्णुपूजनात् ॥ १ ॥
यत्कृतं दुष्कृतं तच्च शृणुष्वात्र खगेश्वर। ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न तद्दत्तं पुनस्तस्मै भुक्तं सर्वमदोषतः। मृतो द्विजस्तद्दुःखेन क्षुधितश्च पतत्रिण ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तया। पञ्चत्वमागतापि भुक्तापि यमशासनम् ॥ ४ ॥
पुत्रसंततिहीनात्र युग्मभावे क्षयान्विता। निष्कृतिं परमां तस्या वक्ष्येऽहं पापनाशिनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा। कदलीपत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः। क्षयनाशकराः सर्वे भविष्यन्त्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकत्रिशततमः ॥ ३३८ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि भो सूत श्वोच्छिष्टं भक्षयेत्तु यः। रात्र्यन्धो जायते सोऽपि जन्मन्यत्र च मानवः ॥१॥
भोजयेद्ब्राह्मणाञ्छक्त्या गोमूत्रं प्राशयेत्तथा। मुच्यते तत्क्षणात्सूत नक्तान्धत्वान्न संशयः ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकत्रिशततमः॥ ३३९ ॥

श्रीसूर्य उवाच।

या भक्षयेत्पुरा नारी श्वोच्छिष्टं सा शुभानना। नक्तान्धा जायते त्वत्र व्यथिता नेत्रपीडया ॥१॥
गोमूत्रप्राशनादत्र ब्राह्मणेभ्यश्च भोजनात्। नक्तान्ध्यरोगान्मुक्तिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चत्वारिंशदधिकत्रिशततमः ॥ ३४० ॥

श्रीसूर्य उवाच।

बिडालोच्छिष्टभोजी प्राग् रात्र्यन्धो जायते न हि। स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥१॥

भोजयेच्च तथा विप्रान्शक्त्या दद्याच्च दक्षिणाम्। रात्र्यन्ध्यरोगात्सततं मुक्तो भवति मानवः ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकचत्वारिंशदधिकत्रिशततमः ॥ ३४१ ॥

श्रीसूर्य उवाच ।

बिडालोच्छिष्टभुङ् नारी प्राग्भवे विनतासुत । रात्र्यन्ध्यरोगयुक्ता सा चात्र जन्मनि जायते॥१॥
द्विजेभ्यो भोजनाच्चैव गोमूत्रप्राशनात्तथा। मुच्यते पूर्वपापात्तु बिडालोच्छिष्टभोजनात् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायद्विचत्वारिंशदधिकत्रिशततम ॥ ३४२ ॥

श्रीसूर्य उवाच ।

चाण्डाल्या गमने पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनि जन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र दशावृत्त्या कृतात्सुत । स मुच्यतेऽजगरत्वाच्छुचित्वाद्भिर्भवेदिह ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिचत्वारिंशदधिकत्रिशततम ॥ ३४३ ॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनतासुत । चाण्डालं स्वीकरोत्येपाऽजगरी[१] जायतेऽण्डज ॥ १ ॥
प्रजापतिव्रताचरणात्कृतात्पश्चात्परंतपः । मुच्यते पूर्वपापात्सा जन्मन्यत्र पतत्रिण ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुश्चत्वारिंशदधिकत्रिशततम ॥ ३४४ ॥

श्रीसूर्य उवाच ।

परान्नविघ्नपाती तु यो भवेत्पूर्वजन्मनि । सोऽजीर्णेनातिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमेन कृतेन गरुडाग्रज । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चचत्वारिंशदधिकत्रिशततम ॥ ३४५ ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सूत या नारी पूर्वजन्मनि। परान्नेषु यदा मोहाच्छृणु तत्र पतत्रिण ॥ १ ॥
अजीर्णेनैव रोगेण बाध्यते पीडया महत् । लक्षहोमेन सततं तत्पापान्मुच्यतेऽत्र सा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्चत्वारिंशदधिकत्रिशततम ॥ ३४६ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यरक्तः सदाचारी साधुसेवनसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि। किलासदद्रुकण्डूश्च नेत्रतोदो शिरोभ्रमता ॥ २ ॥
किंचिद्रदः प्रजायेत तत्कथं कारणं विना। तस्य भार्या सुवन्ध्यङ्गी स्त्रीधर्मव्रतकारिणी ॥ ३ ॥
वातोद्भवा व्यथा तस्या मूर्ध्नि तुदे प्रजायते। मृतवत्सा कथं जाता पुत्राः पुत्र्यो मृताः कथम् ॥४॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय सप्तचत्वारिंशदधिकत्रिशततम ॥ ३४७ ॥

श्रीसूर्य उवाच ।

पूर्वं वैश्यसमुत्पन्ना प्रिया शूद्रा प्रतारिता। बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ १ ॥
शूद्रा याता च संबन्धं बहुकालोऽगतागतः । अन्योन्यं प्रतिवसतः किंचित्कालवशंगतः ॥ २ ॥

१ अजगरी सती-पपु०।

उभयोः कर्मणोर्हेतुर्धनहर्ता पतिर्यतः। ततस्तेन कृतं कर्म भीषमत्रैव जन्मनि ॥ ३ ॥
ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालंकरणैर्युतः। धनलोभाद्धतः शीघ्रं भविनोऽर्थस्य वै बलात् ॥ ४ ॥
तस्यापि मातापितरौ पुत्रदुःखेन दुःखितौ। द्वित्रवर्षैस्तथा मासैर्मृतौ तौ दंपती तदा ॥ ५ ॥
धनलोभप्रसारतोऽसौ दुष्टचित्तः सुदुर्मनाः। तत्प्रिया च मृतौ तत्र गतौ वैवस्वतशासनम् ॥ ६ ॥
प्रनष्टं तद्गृहं जातं ब्राह्मणस्य ततः खग। तेन कर्मविपाकेन नरके पचितौ भृशम् ॥ ७ ॥
पश्चान्मानुषमापन्नौ प्रभवान्प्रभवान्ततः। इदं जन्म चतुर्थं स्यान्मृतापत्यं खगेश्वर ॥ ८ ॥
द्वित्रादिमासजातानां मृतिर्द्वित्रादिहायनैः। मृतपुत्रा भवेत्यत्र जाताजातास्तथैव च ॥ ९ ॥
इदं जीवेदिदं जीवेदित्याशामपि च ध्रुवम्। जाताजातौ विनश्यन्ति हि तस्याकृतनिष्कृतेः ॥१०॥
एवं यदि चिरं स्थित्वा अचिरान्म्रियते परम्। सगुणाश्च सुरूपाश्च लालनाद्याह्लादकारिणः ॥११॥
नश्यत्सु जातजातेषु जन्मजन्मसु तेषु च। व्याध्यन्तरो भवेद्व्याधिर्ग्रस्तो व्यसनवानयम् ॥ १२॥
नास्ति सौख्यं लभेत्तस्य नानाशङ्कितचेतसः। सौख्यं न तद्धनस्यापि परापत्यानि पश्यतः॥१३॥
लक्षणानि पुरोक्तानि तस्येमान्यपि कीर्तयेत्। स्वोदरे म्रियते बालः स वै ब्राह्मण उच्यते॥१४॥
मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत्। स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः ॥ १५ ॥
दौर्मनस्यं महानाधिः शोक एवोपजायते। अदृष्टगुणलावण्या अदृष्टाननकान्तयः ॥ १६ ॥
म्रियन्ते जातमात्रा ये पुत्रा अकृतबान्धवः। एवं तु कर्मणि पुरा प्रायश्चित्तमथाचरेत् ॥ १७ ॥

अरुण उवाच।

जातस्य निष्कृतिः स्वामिन्निह कर्मनिषूदनी। कथ्यतां दिवसेशान नारीणां हितकाम्यया १८॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि मृतवत्सावनाशनीम्। निष्कृतिं विधिवत्तात मंत्रैः सौख्यहेतवे ॥ १९ ॥
यजमानः सपत्नीको विधिवद्विधिमाचरेत्। पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित् २०॥
सिद्धार्थाक्षतदूर्वाभिः कृतरक्षाप्रतिष्ठितः। स्थापयेद्दीपमर्मन्त्रैर्वरुणैर्विष्णुसूक्तिभिः ॥ २१ ॥
सुदृष्टे सुशुभे देशे गोमयाद्युपलिप्तके। तत्रोपर्यविकं स्तीर्य कृष्णाजिनमथापि वा ॥ २२ ॥
द्रोणमानं तिलानां तु कृष्णवस्त्रेण संयुतम्। स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ २३॥
सौवर्णीं प्रतिमां तत्र बालगोपालमूर्तिकाम्। कृत्वा प्रतिष्ठितप्राणां मूर्तित्वे शुभलक्षणे ॥ २४ ॥
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि। सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी ॥ २५ ॥
आहूय विदुषो विप्रान् अर्थाश्च वेदवादिनः। अलोलुपाः सदाचाराः पूज्या अर्घ्यादिकैस्तथा ॥
यो निर्मितः पुरा द्रोहो मया च परसूनुषु। भूमिद्रविणदेमायलिप्सया स प्रणश्यतु ॥ २७ ॥
नाशयेत्तन्महापापं मूर्तिश्च शुभलक्षणा। तदस्तु महदप्राप्तं मृतं संततिरात्मनः ॥ २८ ॥
तस्मान्मुच्ये महाभाग पीतगोदानतोऽपतः। इति तत्र परिक्रम्य त्रिस्तेनोक्तोऽप्रतिग्रहे ॥ २९ ॥
अग्रे नयेति मन्त्रेण विसर्ज्यैतमुदीरयेत्। धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि ॥ ३० ॥
सापिण्ड्यात्मानमालोक्य भोजयेद्द्विजबान्धवान्। इहैव लक्ष्म विज्ञेयं मातृबन्धुसुखोज्झितम् ॥३१॥
स्वसुताः सुतसौख्याय संतोष्य निजपुत्रवत्। विरुध्यन्तेऽप्यपत्यानि तादृशानि मिथः क्रियत्३२॥
विकारा विकृता प्रायो गमने पादवैकृतम्। पैतृजा मातुलान्या रुक् कामगुल्मार्तिलव्यथा॥३३॥
मृतापत्यार्तिदासैषामनुमन्त्रादिभेदतः।

---

१ विहर्ति उच्या—पपु०।

तथातथाऽत्र दुःखानि जायन्तेऽस्य मुहुर्मुहुः । पूर्वकर्मार्जितं पापं चिह्नं तस्य सहायकम् ॥ ३८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकत्रिशततम ॥ ३४८ ॥

श्रीसूर्य उवाच ।

विप्राय यो विषं दद्याद्धातार्थं पूर्वजन्मनि । सोऽत्र जन्मनि पक्षीन्द्र च्छर्दिरोगेण बाध्यते ॥ १ ॥
नास्ति तस्यात्र पापस्य निष्कृतिर्दृढकर्मणः । छर्दिरोगेण सततं युवा नाशमवाप्नुयात् ॥ २ ॥
प्रायश्चित्तं न तस्यात्र दानैरपि सहस्रशः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनपञ्चाशदधिकत्रिशततम ॥ ३४९ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत विषं दद्याद्द्विजातये । छर्दिरोगेण सात्र निश्चितं नाशमाप्नुयात् ॥ १ ॥
न पापशोधनं मोक्ष तस्यास्तु गरुडाग्रज । ब्राह्मणस्य वधे पापे प्रायश्चित्तं क विद्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चाशदधिकत्रिशततम ॥ ३५० ॥

श्रीसूर्य उवाच ।

परस्मिन्यो विषं दद्यात्पूर्वजन्मनि मानवः । छर्दिरोगेण सोऽत्र बाध्यते पीडया बहु ॥ १ ॥
धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् । मुच्यते छर्दिरोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदधिकत्रिशततम ॥ ३५१ ॥

श्रीसूर्य उवाच ।

मूकोऽत्र जायते जन्तुर्नः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकत्रिशततम ॥ ३५२ ॥

श्रीसूर्य उवाच ।

या काचिन्मागधी त्वासीज्ज्ञाता ब्रह्महदे सूत । सा चात्र यवनी देशे शुभे पञ्चनदेऽण्डज ॥ १ ॥
पुनाभिलाषिणी पूर्वमनजघवनं पुरा । तस्मात्सा यवनी जाता पुत्रसंततिवर्जिता ॥ २ ॥
नानाविधान्नदानात्सा कुरुक्षेत्रे पुराऽनघ । शिवभक्तिपरा यस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
अत्र जन्मनि सा लक्षरुद्रपूजनजात्कृतात् । पुत्रपौत्रयुता नारी भवत्येव न संशयः ॥ ४ ॥
अथवा हरिवंशस्य शतावृत्त्या विधानतः । श्रवणात्पूर्वजात्पापान्मुच्यते विनतासुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदधिकत्रिशततम ॥ ३५३ ॥

श्रीसूर्य उवाच ।

देवालयेऽभवत्कश्चिद्ब्राह्मणो पूर्वजन्मनि । विष्णुपूजापरो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौर्येणापहृतं द्रव्यं यत्स्थितं देवतालये । तेनेदं दुष्कृतं सूत कृतं कर्मातिदारुणम् ॥ २ ॥
स तेन कर्मणा युक्तो भुक्त्वा तत्पापजं फलम् । जातो गङ्गाश्रय क्षत्री पर्वते पूजनाद्धरेः ॥ ३ ॥
बहुद्रव्यान्वितो नृपः सर्वसंपत्सुखान्वितः । बाल्ये हि पाण्डुरोगार्तश्चात्र जन्मनि मानवः ॥ ४ ॥
देवद्रव्यापहारीति पाण्डुरोगी प्रजायते । तत्पापनाशनं पुण्यमुपायं शृणु तत्त्वतः ॥ ५ ॥
कुर्याद्धिरण्मयीं पृथ्वीं ससमुद्रां पलात्मिकाम् । सवनां सागरोपेतां सप्तद्वीपां वसुंधराम् ॥ ६ ॥
गन्धपुष्पैरलंकृत्य दद्याद्विप्राय धीमते । पाण्डुरोगाद्विमुक्तः स्यादत्र जन्मनि मानवः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःपञ्चाशदधिकत्रिशततम ॥ ३५४ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे प्रादाद्विषं कांस्यस्थ काश्यप। सात्र जन्मनि रोगेण च्छर्दिसंज्ञेन पीड्यते ॥ १॥
धेनूनां दशकं दद्यादशक्तौ गरुडाग्रज। सवत्सां कपिलां दद्यात्सा तद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पंचपंचाशदधिकत्रिशततमः ॥ ३५५ ॥

---

श्रीसूर्य उवाच।

काश्चिद्विप्रो ह्यवृद्धङ्गे प्राग्भवे धर्मसंयुतः। परस्य कन्यकायाश्च विवाहमकरोत्सुधीः ॥ १ ॥
दानाल्पत्वान्महाभाग चकाराल्पविधानतः। चौर्यकर्मरतः सोऽपि कदाचिद्दैवयोगतः ॥ २ ॥
स चचार वने सूत मार्गलुण्ठनतत्परः। काचित्सुनयना तत्र प्राप्ता भाविबलाद्दृढात् ॥ ३ ॥
नानाभरणयुक्ता सा किल गर्भसमन्विता। त्रासिता लुण्ठिता साऽत्र तेन पापधियाऽण्डज ॥ ४ ॥
सहायैः सा परित्यक्ता ताडनादाकुला यतु। तद्गर्भोऽपि च्युतो पापमाचरितं स्वियद्म ॥ ५ ॥
ततो धर्मपुरं प्राप्तः पुण्यपापसमन्वितः। पुण्यात्पुण्यफलं भुक्त्वा पापात्पापं पतत्रिण ॥ ६ ॥
परकन्याविवाहेन स जातो बाहुजोऽधुना। गङ्गायाः पूर्वभागे तु दशयोजनसंमिते ॥ ७ ॥
गौरः प्रतापी क्षीणाङ्गः बहुद्रव्यपराक्रमः। पित्ताधिकोऽग्निमातिमान् बहुपुत्रोभिरन्वितः ॥ ८ ॥
जातपुत्रैर्मृतैस्तस्मः पूर्वपापात्तथाण्डज। किन्मयं तत्प्रवक्ष्यामि येन पापात्प्रमुच्यते ॥ ९ ॥
पलार्धार्धमितेनैव कार्या सुघटिता सुत। बाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता ॥ १० ॥
पूर्वपापविनाशाय सा देया ब्राह्मणाय वै। गन्धैः पुष्पैः समभ्यर्च्य मन्त्रैः प्रणवपूर्वकैः ॥ ११ ॥
शिवं वा तत्र सौवर्णं सुवर्णकमितं सुत। दद्याज्जपेच्च मन्त्रांश्च तल्लिङ्गान्विधिपूर्वकम् ॥ १२ ॥
होमयेच्च यवांस्तत्र सतण्डुलससर्षपान्। ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्त्या विधानतः। गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते ॥ १४ ॥
पुत्रसौख्यस्य लोभोऽपि चात्र जन्मनि वै ध्रुवम्। रिष्टं पञ्चाशदब्दे तु प्रायश्चित्ते कृते सुत ॥ १५ ॥
वेदसप्तमितायुः स्यात्प्रायश्चित्ते कृते सुत ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्पञ्चाशदधिकत्रिशततमः ॥ ३५६ ॥

---

श्रीसूर्य उवाच।

व्यभिचाररता पूर्वं याऽत्रापि व्यभिचारिणी। साऽऽगता नरकाद्घोरात्सुदती पापजाण्डज ॥ १ ॥
न शुध्यत्यशुभाचारा प्रायश्चित्तैः शतैरपि। वाराणस्यां गतिश्चास्या वासेन विनतासुत ॥ २ ॥
मुच्येत सर्वपापाच्च पूर्वजन्मकृताद्दृढात्। वाराणस्यां चतुर्दश्यां शिवपूजनजागरात् ॥ ३ ॥
बाहुजेयं महाभाग पूर्वेऽप्यत्रापि बाहुजा। वन्ध्या भ्राम्या यतो दुःखाकुला च दयितान्विता ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तपंचाशदधिकत्रिशततमः ॥ ३५७ ॥

---

श्रीसूर्य उवाच।

यः कृत्वा धूर्ततां पूर्वं वञ्चयेद्ब्राह्मणं सुत। सोऽत्रापस्माररोगेण पीड्यते बहुपीडया ॥ १ ॥
तेनैव पापरोगेण म्रियतेऽत्र पतत्रिण। प्रायश्चित्तं मया नोक्तं पापे ब्राह्मणवञ्चने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टपंचाशदधिकत्रिशततमः ॥ ३५८ ॥

---

१ विप्रो इति-खपु०। २ विवाहं इति-खपु०। ३ चौक्तम् इति-खपु०।

श्रीसूर्य उवाच।

या भ्रातृघातिनी नारी प्राग्भवे द्विनतासुत। सात्र जन्मनि मूकत्वं भजत्येव न संशयः॥ १॥
ज्ञानात्कृतान्महापापाच्च चोक्ता निष्कृतिर्यथा। ज्ञात्वा भ्रातृवधे सुत प्रायश्चित्तं कृतं तत्समम्॥२॥
सप्तजन्मनि मूकत्वं जायते महदेनसः॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकोनषष्ट्यधिकत्रिशततम॥ ३५९॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि बाहुजः। देवद्रव्यापहरणात्प्रागत्राऽक्षिप्रपीडितः॥ १॥
विंशद्वर्षे व्यतीते च देहभङ्गः प्रजायते। तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम्॥ २॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम्। गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः॥ ३॥
राजताश्च महाभाग नेत्ररोगं न पश्यति। भोजयेद्भक्तितो विप्रान् वैष्णवान्श्रद्धया सुत॥ ४॥
कृत्वाऽनेन विधानेन रिष्टं चैव प्रणश्यति॥ ५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षष्ट्यधिकत्रिशततम॥ ३६०॥

श्रीसूर्य उवाच।

सर्वस्वहरः कश्चिद्यो भवेत्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत क्षयरोगप्रपीडितः॥ १॥
प्रायश्चित्तं परं तस्य वित्ततुर्यांशभागतः। कालचक्राभिधं दानं दद्याद्दोषोपशान्तये॥ २॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः। कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः॥३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकषष्ट्यधिकत्रिशततम॥ ३६१॥

श्रीसूर्य उवाच।

ब्रह्मवादरतस्य या पूर्वेऽभूद्धे पतिव्रता। पत्युः पापप्रभावाद्धि गतिं प्राप्ता हि मानुषीम्॥ १॥
त्यक्त्वा शरीरं सा देवी पार्वत्या सह मोदते[1]। भुङ्क्ते भोगान्समस्तान्वै पतिं प्राप्य तपस्विनी॥२॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकत्रिशततम॥ ३६२॥

श्रीसूर्य उवाच।

योऽज्ञानात्कृतवान्सूत प्राग्भवे भ्रातृघातनम्। सोऽत्र जन्मनि मूकत्वं भजते किल मानवः॥१॥
चान्द्रायणत्रयं कुर्याद्विधिवत्पापशोधनम्। पुस्तकं च तथा दद्यात्सुवर्णपलसंयुतम्॥ २॥
एवं यः कुरुते सूत स तत्पापात्प्रमुच्यते। न जायतेऽत्र मूकत्वं कदाचिद्विनतासुत॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकत्रिशततम॥ ३६३॥

श्रीसूर्य उवाच।

या धूर्ता वस्त्रहेतुकाच्चिह्लोमात्पूर्वभवेऽण्डज। सात्र जन्मनि रोगेणापस्मारेण प्रपीडिता॥ १॥
प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं सुत। ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम्॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुष्षष्ट्यधिकत्रिशततम॥ ३६४॥

अरुण उवाच।

कश्चिद्वर्णोत्तमो जातो धर्मिष्ठो वित्तसंयुतः। उदरे वायुरल्पीयाञ्छिरोऽर्तिश्च प्रजायते॥ १॥

१ मोदते पार्वती सह नित्यं स्यात्।

शरीरे जायते चिह्नं किंचिद्व्रणसमन्वितम् । दद्रुकण्डूविलीनाङ्गं गमने पादवैकृतम् ॥ २ ॥
कर्मानुसारतो व्याधिचिह्नं तस्य सहायकम् । भार्या प्रीतिपरा नित्यं कदाचित्कलहप्रिया ॥ ३ ॥
रोपाद्युक्ताऽमिताढ्यापि प्रदरार्तिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

स्वस्त्रिया सहितो विप्रः कुलीनो बहुयाचकः । गत्वा चैव महारण्येऽवर्तत गर्भसंयुता ॥ ५ ॥
बहवोऽपि समायाताः शबरास्तैश्च वेष्टिता । जाता भीता तदा स्त्री सा त्रासयद्भिर्महावने ॥ ६ ॥
गर्भपातोऽभवत्तत्र पश्चाच्च स द्विजो मृतः । तेन कर्मविपाकेन म्रियन्ते तस्य बालकाः ॥ ७ ॥
केचिज्जीवन्ति षण्मासं केचिद्वर्षाधिकं भृशम् । बहुकालं भवेत्किंचिच्चिह्नमङ्गे प्रजायते ॥ ८ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ९ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो किलैतच्च सुदुर्लभम् । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तमघापहम् ॥ १० ॥
गङ्गायां वै सवर्णायां सौवर्णं निष्कसंयुतम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ११ ॥
कर्मप्राकादिकं विप्रं पूजयेद्विधिपूर्वकम् । एवं प्रकुरुते वत्स निष्कृतिं कर्मणः फलम् ॥ १२ ॥
पुत्रपौत्रादिकैर्युक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥ १३ ॥
आयाति पापदोषेण भुवि जन्मनिजन्मनि । एवं यः कुरुते भक्त्या प्राप्यते पुत्रपौत्रकम् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्यधिकत्रिशततमः ॥ ३६५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्काचिन्नारी भर्तृप्रियान्विता । दक्षा सर्वक्रियास्वेव बहुदानप्रदायिका ॥ १ ॥
पार्श्वस्थस्यान्यशूद्रस्य गृहान्नीतानि मानवैः । सर्वक्षेहानि चौर्येण सर्वशून्यगृहात्पुरा ॥ २ ॥
भुक्तानि बहुभिः सूत मिलित्वा च सुतादिकैः । पूर्वजन्मकृतात्पापात्पाप्तेऽत्रैव जन्मनि ॥ ३ ॥
सा जाता बाहुजा नारी कर्मभोगसमन्विता । पुत्रान्विता विचित्रा च भर्तृशुश्रूषणे रता ॥ ४ ॥
यौवने क्षयरोगाढ्याऽऽकुला स्नेहहा यतः । निष्कृतिं तस्य पापस्य पुण्यात्पापौघनाशनीम् ॥ ५ ॥
कथयामि प्रयत्नेन वित्ततुर्यांशभागतः । कृत्वा तु कदलीं रम्यां पत्रयुक्तां सुवर्णजाम् ॥ ६ ॥
दद्याद्वेदविदे विप्राय क्षयदोषोपशान्तये ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः षट्षष्ट्यधिकत्रिशततमः ॥ ३६६ ॥

श्रीसूर्य उवाच ।

यो लोकान्वञ्चयेत्कश्चित्पुरा घातयेन कर्मणा । सोऽत्र जन्मन्यपस्माररोगेण महताऽऽकुलः ॥ १ ॥
धेनुं दद्यान्महाभाग सवत्सां विधिसंयुताम् । ब्रह्मकूर्चत्रयं कुर्यात्स तत्पापात्प्रमुच्यते ॥ २ ॥
न भवेत्तस्य रोगस्य वेदना पापशोधनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तषष्ट्यधिकत्रिशततमः ॥ ३६७ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र चन्द्रवदना गौराङ्गी पतिवल्लभा । धनधान्यसमायुक्ता स्वर्णकाञ्ची सुभूषिता ॥ १ ॥

---

१ त्रिशतसानाम् इति–क पु० । २ रसम् इति–ख पु० ।

दक्षा भर्तृहिते नित्यं पूर्वं सा द्विजवल्लभा । स्वर्णापहारजातात्पापादत्र सा स्वर्णकारजा ॥ २ ॥
पुत्रहीना महाभाग परद्रव्यापहारजात् । कुरुक्षेत्रे शशिग्रस्ते स्वर्णं दद्याच्च शक्तितः ॥ ३ ॥
तद्दत्वा तु लभेत्पुत्रानत्र जन्मनि वै सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायोऽष्टषष्ट्यधिकत्रिशततमः ॥ ३६८ ॥

श्रीसूर्य उवाच ।

अन्नहत्याम्भवे यस्तु ज्ञानादत्र पतत्रिण । सोऽजीर्णेनैव रोगेण पीड्यते बहुपीडया ॥ १ ॥
अन्नदानाच्च विप्रेभ्यो रसदानाच्च शक्तितः । सावित्रीजपतो होमात्पूर्वपापात्प्रमुच्यते ॥ २ ॥
पापक्षये क्षयं यान्ति रोगाः पापसमुद्भवाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो नवषष्ट्यधिकत्रिशततमः ॥ ३६९ ॥

श्रीसूर्य उवाच ।

या काचिन्मोहतश्चक्रे नारी भ्रातृवधं पुरा । सात्र जन्मनि मूकत्वं भजेत्क्वापि शुभानना ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्याश्चान्द्रायणत्रयम् । वेदपुस्तकदानं च पलस्वर्णयुतं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः सप्तत्यधिकत्रिशततमः ॥ ३७० ॥

श्रीसूर्य उवाच ।

बालघाती भवेद्यस्तु पूर्वजन्मनि मानवः । तेनैवात्र जनुषि मृतपुत्रः प्रजायते ॥ १ ॥
श्रवणाद्धरिवंशस्य विधिवच्चात्र जन्मनि । ब्राह्मणोद्वाहनाच्चैव पूजनाच्छङ्करस्य च ॥ २ ॥
जीविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकसप्तत्यधिकत्रिशततमः ॥ ३७१ ॥

श्रीसूर्य उवाच ।

शूकरे याभवेत्पूर्वं निपाशी पुनरेव सा । शूद्राऽधमा पञ्चनदे जाताऽत्र विनतासुत ॥ १ ॥
पुत्रपौत्रधनैर्धान्यैर्गजाश्वोष्ट्रादिवाहनैः । युक्ता सा यवनी सैव तीर्थराजस्य सेवनात् ॥ २ ॥
सा भर्तृसंयुता पूर्वं जनुष्यथ शिवार्चनात् । यवनी पूर्वपापाच्च निद्राहाणां च सेवनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विसप्तत्यधिकत्रिशततमः ॥ ३७२ ॥

श्रीसूर्य उवाच ।

कश्चित्प्रागभवद्विप्रः सर्वविद्याविशारदः । वेदाभ्यासरतः श्रीमान् प्राप्तसर्वमनोरथः ॥ १ ॥
तुलाधृतानि लेहानि विप्राणां लेहभागिनाम् । गृहीतान्यतिचौर्येण लोभयुक्तेन चेतसा ॥ २ ॥
यस्मादज्ञानकृतं कर्म प्राग्भवे तत्फलं शृणु । सोऽत्र विप्रो प्रयागेऽस्ति श्रेष्ठो वेदविदांवरः ॥ ३॥
धनपुत्रसमायुक्तः क्षयरोगसमन्वितः । वेदाभ्यासात्तथा दानात्तीर्थराजाधिवासनात् ॥ ४ ॥
नाशः स्यात्क्षयरोगस्य चात्र जन्मनि चाण्डज । दोषात्स्वल्पात्फलैर्युक्तो जीवेद्वर्षशतं ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायस्त्रिसप्तत्यधिकत्रिशततमः ॥ ३७३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्कश्चिद्द्विजो धर्मसंयुतः । ग्रामाध्यक्षः प्रतापाढ्यो भ्रातृपुत्रसमन्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः । पर्वस्वपि च भूस्वर्णगोऽश्वशय्यासनादिकम् ॥२॥

१ मलिया इति–प्रपु० ।

तिलपात्राणि भक्ष्याणि वस्त्राणि विविधानि च । सर्वरत्नानि पात्रेषु हव्यकव्यानि चाण्डज ॥ ३॥
पापमाचरितं चापि भाविनोऽर्थस्य गौरवात् । ग्रामान्तरे स्थितस्यास्य शत्रोः सीमापहारिणः ४॥
निर्दग्धं भवनं सर्वं रात्रौ वै चौर्यकर्मणा । तस्मिन्दग्धे महाभाग दग्धः क्षामशिशुस्तथा ॥ ५ ॥
बहवो गृहजा जीवा दग्धास्तद्ग्रामजा ध्रुवम् । वैरिभावात्सहायैश्च पापमुग्रमुपार्जितम् ॥ ६ ॥
एवं बहुतिथे काले स प्राप्तो यमशासनम् । पुण्यात्स्वर्गांश्च विविधान्भुक्त्वा पापात्तथोत्तरान् ॥७॥
पूर्वपुण्यप्रभावेण स जातो ब्राह्मणोऽधुना । कुरुक्षेत्रात्परे भागे दशयोजनसंमिते ॥ ८ ॥
स ग्रामगतो मतिमान्सुरूपो बहुधनैर्युतः । यशस्वी भ्रातृमित्राढ्यः पितृभक्तो दयापरः ॥ ९ ॥
सुखीभृत्यसुखैश्वर्यनानावाहनभोगभाक् । बुद्ध्याधिकप्रचारी च पितृभाग्यविवृद्धिदः ॥ १० ॥
ह्रस्वः कृशोदरो बन्धुमान्गोऽश्वोऽमितिदः प्रभुः । आदिमध्यावसानान्तं सुखैश्वर्यसमन्वितः ११॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । बहुचिन्तानुगे धूर्तो दाने चाल्पमतिस्तथा ॥१२॥
पीड्यमानस्तथा रोगैर्यौवने वातसंभवे । क्लेशैर्भयमनोदुःखैः क्वापि क्षीणाधिकारकः ॥ १३ ॥
बालघातात्पुरा पापाज्जातपुत्रविनाशनात् । चिह्नमत्र जनुर्लग्नाद्गुरुर्भवेत्तु पञ्चमे ॥ १४ ॥
तस्मात्पापस्तथा चन्द्रो नीचः केन्द्रेऽशुभान्वितः । सहायलक्षणं सर्वं वक्ष्याम्यत्र पतत्त्रिण ॥१५॥
या स्त्री पूर्वं सहायासीद्ग्रामदाहेऽतिनिष्ठुरा । ज्येष्ठा स्त्री प्रसूरत्रास्ति मृतवत्सा खगेश्वर ॥ १६ ॥
तथाऽपरः सहायोऽभूत्पुत्रः पूर्वभवेऽण्डज । सहजः सोऽत्र जनुषि बहुपुत्रीभिरन्वितः ॥ १७ ॥
अन्ये ये बान्धवा भृत्याः सहायाः पणिताः पुरा । प्रसूरनेऽत्र सुता जाता भवन्ति बहुदुःखदाः॥
लक्षणैरभिराढ्यस्य प्रसूरत्रैव जन्मनि । प्रायश्चित्तं प्रवक्ष्यामि येन पापक्षयो भवेत् ॥ १९ ॥
पुण्यक्षेत्रेऽष्टभिर्विप्रैः पञ्चभिस्त्रिभिरेव वा । कारयेत्पार्थिवाँल्लिङ्गानेकादशशतोन्मितान्[1] ॥ २० ॥
गन्धपुष्पोपचारैस्तु मन्त्रैरेव प्रपूजयेत् । ततश्चाष्टपलं रुद्रं कुर्याद्धेममयं शुभम् ॥ २१ ॥
सपत्नीकं यथाकारं सर्वावयवसंयुतम् । तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः ॥ २२ ॥
पूजयित्वा तु गन्धाद्यैर्विधिज्ञाय प्रदापयेत् । हिरण्मयं तथा चाग्निं माषैः पञ्चमितैः शुभैः ॥२३॥
राजते च तथा पात्रे पलद्वयमिते शुभे । लेख्या जीवास्तु बालाद्या दग्धा ये च गृहाश्रिताः २४॥
ब्राह्मणाय च ते देया दाहदोषोपशान्तये । लक्ष्मीनारायणं तद्वत्पलाष्टमितिकं सुत ॥ २५ ॥
राजतं विधिवद्द्यात्सर्वदोषापनुत्तये । गायत्र्यष्टसहस्रं तु सहस्रं द्वादशाक्षरम् ॥ २६ ॥
अष्टाक्षरं त्रिसाहस्रं जप्त्वा शुद्धिं समाचरेत् । होमयेत्तद्दशांशेन गाश्च विप्रांश्च भोजयेत् ॥ २७ ॥
शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः । य एवं कुरुते सूत द्वयोः पापविशोधनम् ॥ २८ ॥
तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि । नाधयो व्याधयस्तस्य न चारिष्टभयं क्वचित्२९॥
नैवं करोति यो मोहाल्लोभात्पापविशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः॥३०॥
पञ्चत्रिंशन्मिते वर्षे रिष्टं देहपतनान्तकम् । त्रिसप्ततिमिताब्दायुः प्रायश्चित्ते कृतेऽधुना ॥ ३१ ॥
गतिमप्युत्तमां याति त्वन्यथा ह्याततायिनाम् ।
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यदन्तरगतं सूत तन्मच्छास्त्राद्विचिन्तयेत् ॥ ३२ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाके अध्यायश्चतुःसप्तत्यधिकद्विशततमः ॥ २७४ ॥

---

१ क्षेत्रेषु निर्दिष्टः इति–खपु० ।

अरुण उवाच ।

प्रयच्छति च धर्मात्मा सर्वपापविशोधनम् । सर्वस्वेन यजेद्देवानग्निकृष्टं श्रद्धयान्वितः ॥ १ ॥
गयाश्राद्धादिभिः काम्यैर्दानैर्हव्यैर्विधानतः । पूर्वपापविनिर्मुक्तो याति ब्रह्मसनातनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय पञ्चसप्तत्यधिकत्रिशततम ॥ ३७५ ॥

अरुण उवाच ।

कथयस्व दिवानाथ लोकाना हितकाम्यया । त्वा पृच्छाम्यत्र देवेश छिन्धि मे सर्वसंशयान् ॥ १ ॥

श्रीसूर्य उवाच ।

शृणु सूत महाभाग सर्वं धर्माच्छुभं भवेत् । कश्चिद्विप्रस्तीर्थमार्गे सकन्यः स्त्रीसुतान्वितः ॥ २ ॥
लुण्ठितो केनचिद्राज्ञा स मृतो धनलोभतः । तन्नाशनादपुत्रोऽयं शृणु तस्य प्रतिक्रियाम् ॥ ३ ॥
द्विजस्य प्रतिमा कृत्वा सर्वस्वेन हिरण्मयीम् । यथाकारा स्त्रियस्तापि स पुत्रानपितेस्तु ताम् ॥ ४ ॥
यन्मया निहतो विप्रो धनं हृत्वा घने वने । तस्करात्संगमे पापं प्राप्तमेवोल्बणं महत् ॥ ५ ॥
तस्य पापस्य नाशाय दानमेतद्ददाम्यहम् । सौवर्णी प्रतिमामेनामनघोऽहं भवेदिति ॥ ६ ॥
भोजयेच्च शतं विप्रान् सापराधात्मानमीक्षयेत् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षट्सप्तत्यधिकत्रिशततम ॥ ३७६ ॥

श्रीसूर्य उवाच ।

या नारी घातयेत्काचिद्दूक पूर्वजन्मनि । पाण्डुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यादन विधिज्ञाय पलमेकं पतत्रिण । कस्तूरिकाया विप्राय पाण्डुरुप्रशमनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तसप्तत्यधिकत्रिशततम ॥ ३७७ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु प्राक्कर्मणः फलम् । कश्चिदासीत्कलिङ्गे वै द्विजो धर्मकृपापरः ॥ १ ॥
बहुस्त्रीनरसंयुक्तो गोधनैश्च समन्वितः । गयायां कृतवाञ्छ्राद्धं श्रद्धाविधिसमन्वितः ॥ २ ॥
सततं कृतवान्पापं कामान्धः स च निश्चयात् । ज्येष्ठा त्यक्तवांस्तुल्यभाता धर्मिष्ठां प्रियवादिनीम् ॥ ३ ॥
रतिं ददौ कनिष्ठायामनुतो स्त्रीविमोहितः । जीवन्स्तु चिरं कालं पश्चान्मृत्युमवाप्तवान् ॥ ४ ॥
शुभाच्छुभफलं भुक्त्वा पापान्नरकयातनाः । गयाश्राद्धप्रभावेण जातो सोऽपि स द्विजः ॥ ५ ॥
देशे रम्यस्थले पुण्ये नदे लोहितसंज्ञके । मध्यरूपः प्रियायुक्तो धनबुद्धिसमन्वितः ॥ ६ ॥
शुभादिदं तथा पापान्मनोदुःखसमन्वितः । औमं माहेश्वरं रूपं हैम सोपस्करं किल ॥
यो दद्याद्धर्मतः पापात्प्रीत्यागान्मुच्यतेऽचिरात् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽष्टसप्तत्यधिकत्रिशततम ॥ ३७८ ॥

श्रीसूर्य उवाच ।

शान्तिकं पौष्टिकं चेदं यदप्यागं तथाण्डज । सर्वपापहरं ज्ञेयं तथा रोगविनाशनम् ॥ १ ॥
कुर्याच्चान्द्रायणं पुण्यं त्रिविधं सर्वपापहृत् । पीडिते तु गदार्यस्तु हृद्रोगी भवेन्नरः ॥ २ ॥
पिपीलिकामध्यरूपं कुर्याच्चान्द्रायणव्रतम् । अष्टोत्तरसहस्रं तु जपेत्सूक्तं च पौरुषम् ॥ ३ ॥
बलिश्चापि प्रदातव्यो मन्त्रजपपूर्वकम् । यात्यष्टयुतं वाग्मादायेच्छिद्रयुक्त रसम् ॥ ४ ॥
अंगं स्पृशति स्कन्धात्प्रगः सरमते ततः । पादयोर्हस्तयोश्चैव विकारो वायुजो भवेत् ॥ ५ ॥

बलिदानमाह।

तिलपिष्टदधिक्षीरकृसरापूपसक्तवः। राजमाषाश्च मुद्गाश्च निष्पावाः कन्दमूलकम् ॥ ६ ॥
पक्वं मांसं सुरा चेति पूर्णकुम्भयुतश्च वै। एभिर्दद्याद्बलिं सम्यक् मध्यरात्रेण संयुतम् ॥ ७ ॥
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ८ ॥
सर्वभूताश्रया भूमिर्वराहेण समुद्धृता। अनन्तसाम्ये त्वद्दानाच्छान्तिं श्रेष्ठां प्रयच्छ मे ॥ ९ ॥
महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः। तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ १० ॥
हिरण्यगर्भगर्भस्त्वं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ११ ॥
शरणं सर्वलोकानां लज्जाया रक्षणं परम्। सुवेषधारि वस्त्र त्वमतः शान्तिं प्रयच्छ मे ॥ १२ ॥
सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत्। प्राणिनां जीवनोपायश्चातः शान्तिं प्रयच्छ मे ॥ १३ ॥
यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः। सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥ १४ ॥
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा। तथा रसानां वै श्रेष्ठः सदा चेक्षुरसो मतः ॥
मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥ १५ ॥
प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोः सदा। शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥ १६ ॥
यस्मादन्न रसाः सर्वे नोत्कृष्टा लवणं विना। शम्भोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे १७॥
पुण्यस्त्वं शंख पुण्यानां मङ्गलानां च मङ्गलम्। विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे॥
धर्मस्त्वं वृषरूपेण जगदानन्दकारक। अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ १९ ॥
विष्णुरश्वस्वरूपेण यस्मादमृतसंभवः। चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥ २० ॥
यस्मादायसकार्याणि दात्राधाराश्च सर्वदा। हे लोह लाङ्गलादीनि तस्माच्छान्तिं प्रयच्छ मे॥२१॥
यस्मात्त्वं छाग यज्ञानामाहुतित्वे व्यवस्थितः। यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे २२॥
यथा रत्नेषु सर्वेषु देवाः सर्वे प्रतिष्ठिताः। तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः ॥ २३ ॥
यहा गावो नरेन्द्राश्च विशेषेण प्रपूजिताः। पूजकं पूजयन्त्येनं निर्दहन्त्यवमानिताः ॥ २४ ॥
आयुःकामो विधानेन प्रयोगमिममाचरेत्। मुच्यते सर्वरोगेभ्य आयुःपूर्णो भवेन्नरः ॥ २५ ॥
न प्राप्नुयान्महारिष्टं प्रयोगस्य प्रभावतः ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकत्रिशततमः ॥ ३७९ ॥

---

श्रीसूर्य उवाच।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी। व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु ॥ १ ॥
सर्वं स्नेहं तेन नीतं मिलित्वा चार्धसीरिणाम्। कालेन तद्घृतं लोभात्स्नेहमौपाधिकं सुत ॥ २ ॥
भुक्त्वा पापफलं घोरं भ्रमरत्वमुपागतः। ततः पुण्याच्छुभान्भुक्त्वा पुण्याज्जातोऽत्र पर्वते ॥ ३ ॥
शूद्रः पुण्यकलायुक्तो भूमिदानात्सुरार्चनात्। स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहातिदानाद्धि स्वविचातुर्यमागतः। स्वर्णदानं तथा चात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायऽशीत्यधिकत्रिशततमः ॥ ३८० ॥

श्रीसूर्य उवाच।

विषं दत्त्वा हन्ति सूत भार्या जाराश्रिता पतिम्। पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत॥१॥

---

१ यथा तीर्थेषु वेदेषु इति-खपु०। २ मौल्याधिकमिति-खपु०।

विष्णोराराधनादत्र गङ्गाया उपसेवनात् । गतिं शुभां सा प्राप्नोति व्रतकृच्छ्रोपसेवनात् ॥२॥ धर्मादत्र महाभाग परत्र च शुभां गतिम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकाशीत्यधिकत्रिशततमः ॥ ३८१ ॥

श्रीसूर्य उवाच ।

देवागारं देहेवस्तु प्राग्जन्मन्यथ पुत्रक । रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तस्यैव दानाद्विप्राय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतिसाराद्विनिश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकत्रिशततमः ॥ ३८२ ॥

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तः प्राक्कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगसूकराः । तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
तद्गर्भगौ हतौ तत्र शुभौ द्वौ मृगशावकौ । सहजाभ्यां युतेनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तौ शावकौ चाण्डजाधिप । सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा॥४॥
स शौर्यकर्मणा सूत हतवान् वै रिपून्बहून् । घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा । भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणोऽधुना ॥६॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातकः कर्कटे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजातपुण्यात्प्राप्तकृतास्तकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि । दंभप्रचारपरमश्च पापाचापि फलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित् । सहायस्याप्यत्र लक्ष्म शृणु पुत्र यथा तथा ॥ १०॥
याभ्यां मिलित्वा भुक्तौ द्वौ मृगशावौ खगाधिप । पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ११
ह्यपस्मारेण रोगेण मृतौ चात्रैव जन्मनि । एवं संततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभोजनजातपापात्प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलक्षं तु तदर्धं वा तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ । पूजयेच तथा वायुं विधिना मृगदैवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यैर्विधानतः । प्रायश्चित्तं परं तस्य पापस्य क्षयकारकम् ॥ १५ ॥
अथवा भोजयेद्विप्रान्सहस्रद्वयसंमितान् । पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृतेऽधुना ॥ १६ ॥
प्रायश्चित्तेऽकृते त्वत्र न च पुत्रसुखं लभेत् । रिष्टेन मरणं चापि वर्षे वेदाब्धिकेऽण्डज ॥ १७ ॥
प्रायश्चित्ते कृते वाणसप्तत्यब्दं हि जीवनम् । चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज ॥१८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्र्यशीत्यधिकत्रिशततम ॥ ३८३ ॥

श्रीसूर्य उवाच ।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज । सात्रेयं तेन पापेन गर्भपातेन दुःखिनी ॥ १ ॥
विप्रकन्याविवाहाद्दै विधिवदत्र जन्मनि । मुच्यते तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम । युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धार्धमितां वापि पूजयित्वा विधानतः । मुच्यते पूर्वपापाच गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुरशीत्यधिकत्रिशततमः ॥ ३८४ ॥

---

१ विधिवद्याजनार्चनात् इति-ख०पु० ।

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं पतत्रिण । सांतीसारेण महता पीडया पीड्यतेऽधुना ॥ १ ॥
शङ्करप्रतिमादानान्मूर्तेर्विष्णोः प्रपादनात् । न जायते महापीडा रक्तातीसारसंभवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पञ्चाशीत्यधिकत्रिशततमः ॥ ३८५ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी पत्युर्मित्रं च बान्धवे । नियतं वायुरोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं समीक्ष्य विपादि सर्वस्वार्धार्जनेन च । वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गन्धैर्वस्त्रैर्विशेषतः । मन्त्रैश्च वायुजैः सूत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगोपशमनं दानेनानेन जायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षडशीत्यधिकत्रिशततमः ॥ ३८६ ॥

श्रीसूर्य उवाच ।

अज्ञानादथवा नारी गोवधघातकरी पुरा । बभूव सततं चाथ लूतिरोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्याद्व्रतात्सुत । लूतिरोगेण पश्येत सात्र जन्मनि चाण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्सप्ताशीत्यधिकत्रिशततमः ॥ ३८७ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नः किंचिद्वित्तसमन्वितः । संयुतो वायुपित्ताभ्यां नेत्रतोदः शिरोर्तिमान् ॥ १ ॥
सद्वृत्तश्च सुखी धीमान् धर्मिष्ठो धर्मवत्सलः । व्रणो रेखा शरा वापि बाल्ये स्याद्ग्रहणीगदः ॥२॥
कटिपृष्ठाभिघाताश्च व्रणे वाताग्निदर्शनम् । परोक्षे ह्यपवादं वै ब्रूतेऽत्र कारणं विना ॥ ३ ॥
तस्य प्रिया शुभाचारा सती व्रतपरायणा । काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वे जन्मनि वैश्यस्तु भार्या विप्रस्य सात्त्विकी । प्रतिवेश्म तदा तस्य ब्राह्मणो ज्ञानसत्तमः ॥ ५ ॥
अप्रसूता प्रिया तस्य चपला चारुलक्षणा । वैश्येन कथयित्वा तु लोभमोहादिविभ्रमः ॥ ६ ॥
अज्ञानात्काममिच्छन्ती उभयेपि बलीयसा । तावत्कालवशेनैव ब्राह्मणो जनतां गतः ॥ ७ ॥
स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य वैभवात् । सतां वै धर्षयामास बहुकालं खगेश्वर ॥ ८ ॥
व्यभिचारवशात्तत्र अन्योन्यं तद्धृतं धनम् । गृहीतं तद्धनं तेन धूर्तया लोभचेतसा ॥ ९ ॥
ब्राह्मणी निधनं प्राप्ता लोके गृह्णाति विश्रुतिम् । तेन दुःखेन विप्रो सौ ब्राह्मणीमभजत्पुरा ॥ १० ॥
निर्विषं जायते तत्र ब्राह्मणस्य खगेश्वर । तेन कर्मविपाकेन तादृशं च भवेदिह ॥ ११ ॥
पश्चान्मानुपमापन्नो बहुशोकाकुलो भृशम् । इदं जन्म द्वितीयं तु ब्रह्मवंशसमुद्भवम् ॥ १२ ॥
प्राप्यते चानपत्यस्य एकापत्यो थवा यदि ॥ १३ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन् येन वन्ध्यत्वनाशनम् । एकापत्यभवं दुःखमनपत्याथवा यदि ॥ १४ ॥

श्रीसूर्य उवाच ।

मार्गशीर्षे शुभे मासि शुक्लपक्षादितः खग । प्रत्यक्षं सुखसौख्यामिश्रितेन प्रतिवासरम् ॥ १५ ॥
षोडशाब्दांश्च नारीणामिभिः कर्तव्यं विधिपूर्वकम् । गौरीव्रतमिदं दिक्षु सुतसौख्यकरं स्मृतम् ॥ १६ ॥

पूजनाल्लक्षरुद्राणां तद्धोमं तथैव च । मुच्यते पूर्वपापाच्च घोरकन्यावधादिह ॥ २ ॥
अथवा विधिना सूत तडागोत्सर्गपुण्यतः । विप्राणां भोजनाच्चापि समस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापात्प्रमुच्येत नात्र कार्या विचारणा ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तनवत्यधिकत्रिशततमः ॥ ३९७ ॥

श्रीसूर्य उवाच ।

या च पूर्वभवे नारी देवद्रव्यापहारिणी । सात्र जन्मनि पक्षीन्द्र भवेद्वायुप्रपीडिता ॥ १ ॥
देवालयं सुरुचिरं कृत्वा स्थापयेत देवताम् । वायुरोगोपशमनं निश्चितं जायतेऽण्डज ॥ २ ॥
भोजयेत्तत्र वै विप्रान् वायुभीत्या पतत्रिण । दानं वित्तानुसारेण वित्तशाठ्यं न कारयेत् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टनवत्यधिकत्रिशततमः ॥ ३९८ ॥

श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले सूत पूर्वजन्मन्यभूद्ध्रुवम् । गिरिवासी महादुष्टश्चौर्यकर्मरतो दृढः ॥ १ ॥
लुण्ठितो ब्राह्मणस्तत्र मार्गे संताडितो भृशम् । तत्ताडनान्महाबाहो मृतः काले द्विजोत्तमः ॥ २ ॥
गते बहुतिथे काले स जातो ब्राह्मणोऽधुना । गङ्गायमुनयोर्मध्ये क्रूरकर्मा महोद्यमी ॥ ३ ॥
प्राक् शिवाराधनात्पुण्याद्द्वाद्गुजः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य सर्वपापौघनाशनीम् ॥ ४ ॥
सर्वस्वस्य समः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्यः शृङ्गाभ्यां संयुतो महान् ॥ ५ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ६ ॥
तस्माच्छिवप्रसादाद्धि कुष्ठस्तस्य प्रशाम्यति ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः एकोनचतुःशततमः ॥ ३९९ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणी काचिद्धर्मप्रियरता सदा । दानधर्मरता साध्वी विप्राणां पूजने रता ॥ १ ॥
तदा देवात्सा सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रे स्वद्रव्यादिव सा पापचारिणी ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तया । तद्दुःखेन पतिस्तस्या मृतः पुनश्चान्वितः ॥ ३ ॥
पापमाचरितं चोग्रं स्वपुत्रवधसंज्ञकम् । प्राप्ता यमपुरं भुक्त्वा पूर्वपुण्यफलं शुभम् ॥ ४ ॥
तत्रस्थापफलं सूत घोरं नरकसंज्ञकम् । पूर्वपुण्यप्रभावेण सा जाता पर्वतेऽधुना ॥ ५ ॥
क्षात्रे कुले महापुण्ये राज्यत्रास्ति पतत्रिण । सा रक्तगौरा धर्मज्ञा सदा पुण्यपरायणा ॥ ६ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नातिव्ययथुता पुण्या स्वकुलेष्टा प्रियवदा ॥ ७ ॥
पतिप्रियरता चोग्रा सुखैश्वर्यधनान्विता । पुण्यादिदं तथा पापाल्लोभाढ्या स्वल्पपुत्रका ॥ ८ ॥
स्वल्पपापरता काले चाधिव्याधिसमन्विता । यौवने भर्तृसंयुक्ता वार्द्धक्ये पुत्रवर्जिता ॥ ९ ॥
सपत्नीपुत्रवधजात्पूर्वपापात्पतत्रिण । लक्षणेगेमिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
विष्णुः कार्यः शतैर्माषैः सौवर्णो विश्वयोनिसूत् । तद्वन्महेश्वरं कुर्याद्गन्धैः पुष्पैरलंकृतम् ॥ ११ ॥
देयौ विप्रेषु पात्रेषु पूर्वपापापनुत्तये । जपेदष्टाक्षरं मन्त्रमयुतं होमयेत्ततः ॥ १२ ॥
गायत्रीं च जपेत्तद्वद्दद्यादाढावस्तथा सुत । भोजयेच्छक्तितो विप्रास्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् । न तस्याः पुत्रमरणं तद्ग्रे जायते ध्रुवम् ॥ १४ ॥
नैव या कुरुते सूत प्रायश्चित्तं विधानतः । तयाऽनुभूयते दुःखमसकृत्पुत्रनाशनम् ॥ १५ ॥

विप्राणां पूजनाद्दानात्तस्याः संततिवर्धनम्। जीवनं कथितं तस्या वर्षाणामष्टसप्ततिम् ॥ १६ ॥
रिष्टं पष्टिमितादब्दादूर्ध्वं वाकृतनिष्कृतेः ॥ १७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुःशततमः ॥ ४०० ॥

---

## अरुण उवाच।

कश्चिद्विप्रकुलोत्पन्नो ह्यष्टाश्रयवसंयुतः। सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किंचिद्व्यापारवान्भुवि। तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षं समाश्रित्य पोषिता भ्रातृमातुलैः। ह्रस्वबालगदार्ता सा बाल्येऽस्याद् ग्रहणीगदः ॥३॥
काष्ठलोष्टाश्मशस्त्राद्यैर्घातश्च करपादयोः। बहुपुत्रीप्रसूता च अपुत्रा जायते भुवि ॥
अथवा मृतपुत्रत्वं जायते केन मानद ॥ ४ ॥
जातमात्रमृताः केचित्केचित्पौगण्डमाश्रिताः। केचिद्दृष्टाननो वापि मृतः पुत्रोऽग्रिमासकः ॥५॥
रक्तस्रावकृता पीडा मासेमासे सदाऽनघ। केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ६ ॥

## श्रीसूर्य उवाच।

पूर्वं क्षात्रः समुत्पन्नः किंचिद्भूमिपतिस्तथा। तत्काल एव वैश्यस्तु परवित्तापहारकः ॥ ७ ॥
दूतिकाकर्मनिरतो लोकवञ्चनतत्परः। ग्रामाधीशोऽभवद्यो वै तस्याऽग्रे भाषितं खलु ॥ ८ ॥
एकग्रामेऽवसद्विप्रः शान्तो दान्तः क्षमः सदा। पुत्र्यः पञ्च तथा सप्त चापुत्रो वित्तसंयुतः ॥ ९ ॥
कालेनैव मृतो विप्रो हर्तव्यं तद्धनं त्विति। क्रिया नैव कृता तस्य सर्वं राज्ञा हृतं च तत्॥ १०॥
एवं कृतापराधोऽसौ क्षत्री वैश्यसहायकः। कतिचिन्मासपक्षान्तमुल्लंघ्य सोऽचिरान्मृतः ॥ ११ ॥
म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम्। केचित्तत्र विपच्यंते नरके भृशदारुणे ॥ १२ ॥
दानधर्मादिना केचिद्धरण्यामिह मानद। विप्रवंशे समुत्पन्ना जायंते चेह जन्मनि ॥ १३ ॥
द्वितीयं जन्म तस्याऽपि विप्रत्वे जायते भुवि। पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते ॥ १४ ॥
ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते। नानापत्यानि पश्यन्ते नानाकर्मोद्भवानि च ॥ १५ ॥
पुराकृतानि कर्माणि भुज्यन्ते जन्मजन्मनि ॥ १६ ॥

## अरुण उवाच।

प्रायश्चित्तं वद स्वामिन् यच्चिरायुः सुतो भवेत्। कन्यापत्यप्रशमनं बहुपुत्रकरं प्रभो ॥ १७ ॥

## श्रीसूर्य उवाच।

सुशुभे भूमिदेशे तु गोमयाद्युपलिप्तके। तत्रोपर्याविकं स्तीर्यमथवा चाजिनं शुभम् ॥१८॥
छादयेच्छुक्लवस्त्रेण तण्डुलद्रोणपर्वतम्। तत्रोपरि न्यसेत्पात्रं तस्मिन् दशपलैर्मितम् ॥ १९ ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम्। मुक्तायज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् २०॥
दधानं करयुग्मेन चाक्षमालां कमण्डलुम्। कश्यपाद्वामभागे च त्वादितिं विश्वमातरम् ॥ २१ ॥
सौवर्णीं स्थापयेत्सूत सुवर्णद्वयनिर्मिताम्। हारकेयूरमुकुटां कुण्डलाभरणान्विताम् ॥ २२ ॥
आसने वै समास्थाय ततो द्रोणान्दिशो दश। एवं तौ दम्पती सम्यगर्चयत्पर्वतोपरि ॥ २३ ॥
कृत्वा प्रतिष्ठितप्राणां पूजयेद्विविधैर्गुणैः। नानागन्धफलैश्चैव नानापुष्पैः सुगन्धितैः ॥
अभ्यर्च्य दम्पती तौ तु मन्त्रमेतमुदीरयेत् ॥ २४ ॥

मन्त्रः ।

" यन्मया पूर्वजनुषि विप्राणामाहृतं धनम् । द्यूतसंगं च संप्राप्य वाक्यदोषादि यत्कृतम् ॥
तत्सर्वं क्षम्यतां देव तव मूर्तिं ददाम्यहम् " ॥ २५ ॥
अदितिं च प्रणम्याथ कृताञ्जलिरिदं ह्यवत् ॥ २६ ॥

मंत्रः ।

" अदिते विश्वमातस्त्वां शरण्यां शरणार्थिनाम् । प्रजादुःखौघसंतप्तो हृदये नौमि चेश्वरि ॥
संप्रणाशाय दुःखस्य प्रजा देहि यशस्विनीम् " ॥ २७ ॥

एवं कृत्वा विसृज्याथ ब्राह्मणान्भोजयेत्ततः । शालग्रामशिला शुद्धा सोमकान्तमणिं तथा ॥२८॥
चन्द्रसूर्योपरागे तु ब्राह्मणाय समर्पयेत् । एवं कृत्वा विधिं सूत कृष्णां गां दापयेत्ततः ॥ २९ ॥
सपिण्ड्यात्मानमालोक्य भोजयेच्चैव बान्धवान् । ऐहिकं लक्षणं यत्तच्छरीरे गरुडाग्रज ॥ ३० ॥
काष्ठलोष्टादिशस्त्राद्यैः करपादे व्रणं वदेत् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकचतुःशततम ॥ ४०१ ॥

श्रीसूर्य उवाच ।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेऽण्डज । स राजयक्ष्मरोगेण युक्तः स्यादत्र जन्मनि ॥ १ ॥
तस्मिन्वयसि पक्षीन्द्र सोऽपि प्राणैर्वियुज्यते । महापापोद्भवाद्रोगात्त्र चोक्तं विन्मयं मया ॥ २ ॥
अपि ज्ञानकृतात्पापाद्विष्टरूपाश्च काश्यप । नाशयत्यमरं सिद्ध पूर्णायुरपि च ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकचतुःशततम ॥ ४०२ ॥

श्रीसूर्य उवाच ।

पुरा गर्भं तु यः कश्चित्पातयेज्ज्ञानवर्जित । जलोदरेण सततं रोगेणात्र प्रपीडितः ॥ १ ॥
जलधेनुप्रदानेन विधिना गरुडाग्रज । ताम्ररूप्यसुवर्णादिदानात्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकचतुःशततम ॥ ४०३ ॥

श्रीसूर्य उवाच ।

ब्राह्मणोऽभूत्कुरुक्षेत्रे कृपिकृद्वेदपारगः । स्वज्ञातीयस्य चान्यस्य वृत्तिलोपं चकार सः ॥ १ ॥
तत्तत्पक्षेऽभवद्युद्धं द्वयोरेको मृतस्तदा । वृत्तिलोपी द्विजः काले गतो हि यमशासनम् ॥ २ ॥
भुक्त्वा तत्पापजं सर्वं शतवृनिकटेऽधुना । स वै जातो द्विजश्चात्र वेदाभ्यासाच्च पुत्रक ॥ ३ ॥
कुष्ठक्षयान्वितश्चात्र युवभावे पतत्रिण । तत्पापनाशनं सर्वं प्रायश्चित्तं प्रवच्म्यहम् ॥ ४ ॥
वेदाभ्यासान्महासूत सावित्रीजपतस्तथा । गङ्गायां वासतश्चापि पूर्वपापात्प्रमुच्यते ॥ ५ ॥
न कुष्ठवृद्धिरस्यास्ति तत्कृते शमनं भवेत् । जीवेत्पष्टिमिताब्दान्तं रिष्टं चैव प्रशास्यति ॥ ६ ॥
गतिस्तस्य महाभाग वेदाभ्यासाज्जपात्तथा । भविष्यति शुभा लोके परत्र च खगेश्वर ॥७॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकचतुःशततम ॥ ४०४ ॥

श्रीसूर्य उवाच ।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा । बभूव भर्तृसुहृदा तदाज्ञापालनी सती ॥ १ ॥
अत्र जन्मनि सा विप्रा काश्यपा जाता हि सुव्रत । व्रतदानपराऽत्रापि भर्तृतोषणसंयुता ॥ २ ॥
पञ्चपञ्चाशदब्दान्तं प्रवेक्ष्यत्यत्र जन्मनि । स्वर्गकामा चिताग्नौ तु नात्र कार्या विचारणा ॥ ३ ॥

सा गमिष्यति वै स्वर्गं चात्र जन्मनि वै नरः। भविष्यति महाराजकुले राजातिधार्मिकः ॥ ४॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाधिकचतुःशततमः ॥ ४०५ ॥

श्रीसूर्य उवाच।

पीड्यते वातरोगेण दारुणेन पतत्रिण। योऽत्र तेन त्वाहतःश्वा पूर्वं शूद्रगृहाश्रितः ॥ १ ॥
प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं चरेत्। व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये, ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजास्त्विह ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकचतुःशततमः ॥ ४०६ ॥

श्रीसूर्य उवाच।

स्वगर्भं पातयेत्पूर्वं या नारी पापमोहिता। जलोदरकृता पीडा तस्या अत्र प्रजायते ॥ १ ॥
रजतस्वर्णताम्राणां दानाद्रोगविनाशनम्। जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकचतुःशततमः ॥ ४०७॥

श्रीसूर्य उवाच।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा। दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुभगा सुगर्भाफललालसा। फलं पक्वं त्रोटितं वै भक्षार्थं चौरकर्मणा ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि। भवन्ति चैव ये पुत्रा अर्वाग्वर्षात्ततोऽण्डज ॥ ३ ॥
पञ्चत्वमाप्नुवन्त्यत्र यस्मादकृतनिष्कृतिः। निष्कृतिं तत्प्रवक्ष्यामि पूर्वपापप्रणाशिनीम् ॥ ४ ॥
शनिवारेऽण्डजश्रेष्ठ निमन्त्र्याश्वत्थकं सुत। तत्तले ब्राह्मणान्सूर्यदिने षष्ठ्यां तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैरपूपैरससंयुतैः। फलानि विकिरेत्तत्र कृत्वाऽश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेत्तं महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाधिकचतुःशततमः ॥ ४०८ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि या काचिद्घातयेद्ब्राह्मणं सुत। सात्र जन्मनि कुष्ठेन तस्मिन्वयसि पीडिता ॥ १ ॥
जायते म्रियते सा च गलत्कुष्ठेन चाण्डज। पापाज्ज्ञानकृतात्पूर्वात्र चोक्तं विनिर्णयं मया ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवाधिकचतुःशततमः ॥ ४०९ ॥

श्रीसूर्य उवाच।

देशे हि यामुने ह्यासीत्पूर्वं बाहुजवंशजः। गङ्गास्नानं कृतं पूर्वं बाहुजानां साहाय्यतः ॥ १ ॥
शकटेन कुटुम्बस्य पालनं कृतवांश्च सः। एकस्मिन्वै दिने गत्वा ददाह पनसद्रुमान् ॥ २ ॥
बलीवर्दस्य तत्रस्था जीवा दग्धा महाकुलाः। बन्धोः साहाय्यतस्तत्र कृतं कर्मातिदारुणम् ॥३॥
शुभाच्छुभफलं भुक्त्वा पापाच्च नरकांस्तथा। माघे तु जाह्नवीस्नानात्स जातः शूद्रजे कुले ॥ ४ ॥
विपाशानिकटे देशे योजने सप्तसंमिते। भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥
बहुलोभी बहुस्त्रीको देवतातिथिपूजकः। भ्रातृहीनो शठो धूर्तः पुत्रसंततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुः भौमयुक्तोऽल्पसंततिः। लक्षणैर्लक्षितश्चोक्तस्त्वेहि गरुडाग्रज ॥ ७ ॥
बन्धोः साहाय्यतः पापात्पूर्वजन्मसमुद्भवात्। भ्रातृपुत्रविहीनोऽसौ जायतेऽत्रैव जन्मनि ॥ ८ ॥

अरुण उवाच ।

विन्मयं कथयता देव सुतसौख्यविवर्धनम् । सर्वपापप्रशमनं लोकाना हितकारकम् ॥ ९ ॥

श्रीसूर्य उवाच ।

विन्मयं वै प्रवक्ष्यामि जन्तुदाहजकिल्बिषे । वनदेवी तथा कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी तथा लेख्या पत्रे वै चतुरस्रके । वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः । राजतं पलमानं तु गणाध्यक्षं शिवात्मजम् ॥ १२ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया कार्यसाधिनी । तथा वेदविधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रजापतिस्तथा देयः सर्वकल्मषनाशकः । शृणुयाद्भारतं वापि पारायणप्रभाषितम् ॥ १४ ॥
अष्टाक्षरं तथा मन्त्रं जपेच्च विधिपूर्वकम् । दशायुतं तदर्धं वा तदर्धं विनतासुत ॥ १५ ॥
होमयेत्तद्दशांशेन तद्दशांशेन भोजयेत् । तथामितं सूर्यमन्त्रं जपेत्प्रणवपूर्वकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते । य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ १७ ॥
तस्य पुनर्विवृद्धिः स्यादिह जन्मनि पुत्रक । अकृते तु यथाशक्त्या रिष्टं षट्पञ्चकेऽब्दके ॥ १८ ॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो दशाधिकचतुःशततमः ॥ ४१० ॥

---

श्रीसूर्य उवाच ।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत । साऽत्राजीर्णेन रोगेण दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यान्नानाविधं चान्नं रसैः सर्वैः समन्वितम् । विप्रेभ्यो भोजनं दद्याच्छक्त्या दद्याच्च दक्षिणाम् ॥ २
होमयेच्च तथा चान्नं गायत्र्या त्र्यम्बकेण तु । मुच्यतेऽजीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकादशाधिकचतुःशततमः ॥ ४११ ॥

श्रीसूर्य उवाच ।

देवमूर्तिं च यः कश्चिद्देवागारस्थितां सुत । भग्नां कुर्यान्नरो मोहात्परेण स्थापितां पुरा ॥ १ ॥
सोऽप्रतिष्ठो भवेदत्र जन्मन्यथ खगाधिप । वर्षत्रयं तदाऽश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्वादशाधिकचतुःशततमः ॥ ४१२ ॥

श्रीसूर्य उवाच ।

यश्चाचरेद्राजवधं मोहात्पूर्वभवे नरः । स राजयक्ष्मी विज्ञेयो घोरपापसमुद्भवात् ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः । गोभूहिरण्यमिष्टान्नतिलवस्त्रान्नदानतः ॥ २ ॥
घृतधेनुप्रदानेन क्षयं रोगं न पश्यति । दानं यथानुमानेन सर्वस्वार्धार्धमेव च ॥ ३ ॥
देयं द्विजवधार्दौ तु विचार्यात्र प्रयत्नतः । तत्क्षणे काश्यपेयात्र क्षयरोगः प्रशाम्यति ॥ ४ ॥
रिष्टेनैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकचतुःशततमः ॥ ४१३ ॥

श्रीसूर्य उवाच ।

या नारी पातयेत्काचित्परगर्भं पतत्रिण । जलोदरेण रोगेण पीड्यते सात्र जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगस्थिते । तथा तज्जलपातेन तस्मात्पापाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुर्दशाधिकचतुःशततमः ॥ ४१४ ॥

---

श्रीसूर्य उवाच ।

वाग्विरोधी च यो मर्त्यः पूर्वजन्मनि वादिनाम् । सोऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥१॥
मोहादिदं चरेत्सूत देयं दानं द्विजातये । वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वस्त्रैः शुद्धैः क्षौमैर्वा गरुडाग्रज । तत्पापनाशनं सर्वं मार्ज्ज प्रोक्तं परंतप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशाधिकचतुःशततमः ॥ ४१५ ॥

श्रीसूर्य उवाच ।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवेऽभूत्सुतान्विता । अयोध्यायां तु सुमुखी धनभर्तृसमन्विता ॥ १॥
पूर्वपापप्रभावाच्च सपत्न्या गर्भपातजात् । जातेयं पादजाप्रेव दुःखार्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणाशनम् । काश्यां गत्वा तु विधिना शिवमाराध्य यत्नतः ॥ ३॥
व्रतदानैर्महापुण्यैर्नानाविभवविस्तरैः । शिवरात्रौ तथा पश्चाद्दीपमाल्यादिनेऽण्डज ॥ ४ ॥
अर्धरात्रे महानद्यां मध्ये स्नानं तु कारयेत् । मन्त्रैर्वरुणसूक्तैश्च नौकायां वा पतत्रिण ॥५॥
या ह्येवं कुरुते सूत तस्याः स्यात्संततिर्ध्रुवम् ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्चत्वारिंशदधिकचतुःशततमः ॥ ४१६ ॥

श्रीसूर्य उवाच ।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत । सात्र जन्मनि तत्काले क्षयरोगप्रपीडिता ॥ १ ॥
क्षयेणाऽत्र क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षये क्षयं याति तच्छरीरमशाश्वतम् ॥ २ ॥
दुष्टकर्मभवं पापं तस्मान्नोक्तोऽत्र विन्मयः । पापनाशकरः कश्चिदुपायस्त्वत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशाधिकचतुःशततमः ॥ ४१७ ॥

श्रीसूर्य उवाच ।

परनिन्दां तु यः कश्चित्प्राग्भवे कुरुते नरः । दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम् ॥ १ ॥
ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकचतुःशततमः ॥ ४१८ ॥

श्रीसूर्य उवाच ।

या वाग्विरोधिनी नारी भर्तुः पूर्वे भवे सुत । मूकत्वं जायते तस्याश्चात्र जन्मनि निश्चितम् ॥१॥
तत्पापनाशनं दद्याद्वेदस्य पुस्तकं तथा । ब्राह्मणायैव विदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
पूजयेच्च तिलान् भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकचतुःशततमः ॥ ४१९ ॥

श्रीसूर्य उवाच ।

भग्नां कुर्यात्तु या काचिन्नारी पूर्वभवेऽण्डज । प्रतिमां देवतागारे स्थापितामपरेण च ॥ १ ॥
प्रतिष्ठिता कदाचित्सा जायतेऽत्र न चाण्डज । वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकचतुःशततमः ॥ ४२० ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः । गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः ॥ १ ॥
विधिना तत्र दत्तानि काम्यश्राद्धानि मानद । ततो भाविजलात्सुत ब्राह्मणेन तपस्विना ॥ २ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न कद्दनम् । सर्वैर्भिलित्वा तद्द्रव्यं स्त्रीपुत्रभ्रातृभिः सह ॥ ३ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्स्वर्गफलं भुक्तं पापाच्च नरका भृशम् ॥४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपोऽमितदो वृणी । बहुदेशाधिकाराढ्यः पुण्यात्सर्वं फलं त्विदम् ॥६॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । संतानसुखहीनस्तु सुरूपस्त्रीसुखोज्झितः ॥ ७ ॥
बन्धुहीनो व्ययशीलः सर्वं तत्पापजं फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधनीम् ॥८॥
कुबेरप्रतिमा सौवर्णी पञ्चस्वर्णमितां शुभाम् । तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च । लक्ष्मीनारायणं दद्यात्सौवर्णसंमितं शुभम् ॥१०॥
लेरंया पवित्रामायुष्या पुत्रसंततिवर्धनीम् । य एवं कुरुते भक्त्या तस्यारिष्टं न लिप्यते ॥ ११ ॥
प्रायश्चित्ते कृते त्वत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकचतु शततम ॥ ४२१ ॥

---

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो शताधिकशरीरवान् । क्षामाङ्गः क्षीणवर्णाभः स्वल्पवृत्तिः कृशोदरः ॥ १ ॥
देवब्राह्मणभक्तश्च किंचिद्वादपरायणः । करपादे कुशस्त्रेण दंष्ट्रिशृङ्गिविघातिना ॥ २ ॥
व्रणित्व जायते शीघ्रं नेत्ररोगो विरश्मिता । परोक्षमपवाद च ब्रूते लोकेषु संततम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं वदते किंचित्किंचित्क्लेशकरी सदा ॥ ४ ॥
अपत्यानि म्रियतेऽत्र एकद्वित्रिमिताऽब्दकाः । वर्षत्रयमिता बाला म्रियन्ते मासमंमिताः ॥ ५ ॥
केन कर्मविपाकेन मृतापत्यत्वमण्डज । उदरे यः स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
तस्य जायेत यदि वा मृतापत्या प्रजायते । गतो बहुतरः कालः कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वं वैनतेय तृतीये चैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद् भूमिपतिस्तथा ॥ ८ ॥
दानव्रतदयायुक्तः प्रियाप्रीतिसमन्वितः । तस्य प्रथमजातस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
द्वितीयोऽपि च तादृक्षस्तृतीयश्च स्तनंधयः । गर्भयुक्तश्चतुर्थस्तु तदा मृत्युं गतः पिता ॥१०॥
क्रिया कृता च तैः पुत्रैर्विचेन सदृशा खग । मासैस्त्रिभिर्व्यतिक्रान्तैर्ज्येष्ठेनैव दुरात्मना ॥ ११॥
विहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात् । पुत्रदुःखेन वै मात्रा हृदयं ताडितं भृशम् ॥१२॥
अभिघाताच्छिलाभूता गर्भयुक्ता दिवं गतास्वल्पे काले गते सोयं ज्येष्ठश्चौरेण घातितः ॥१३॥
इदं जन्म द्वितीयं तु मृतापत्यं प्रजायते । पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः ॥ १४॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । म्रियन्ते त्वघवश्चात्पल्पवः प्राणिनः कथम् ॥ १५॥
तत्पापस्य विशुद्ध्यर्थं निष्कृतिं वद मे प्रभो ॥ १६ ॥

श्रीसूर्य उवाच ।

सौम्यायने तु संप्राप्ते सानुकूलग्रहे दिने । सपत्नीकः शुचिः स्नातः पञ्चगव्येन चांजसा ॥१७॥
उपोषणाद्दिवा रात्रौ प्रातश्चाऽभ्युदिते रवौ । गुरुर्भर्त्रे सगर्भाया गोमयेनोपलेपयेत् ॥ १८ ॥
सुशुभे भूमदेशे तु कुङ्कुमाद्युपचर्चिते । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १९ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशोऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं च चतुर्भुजम् ॥२० ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । जनन्या सह संभूतान्प्रद्युम्नादींस्तथार्चयेत् ॥ २१ ॥
चारुदेहं सुषेणं च चारुगुप्तं यशोऽन्वितम् । इभचारुं चारुबाहुं सुचारुं पूजयेत्क्रमात् ॥ २२ ॥
शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै । होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

"पापकर्म कृतं मोहाद्यन्मया पूर्वजन्मनि । सपत्नानां परेषां च पुत्राणां हननं कृतम् ॥२४॥
स्वकुलं चाऽपि हतवान्भूमिद्रव्यादिलिप्सया । लूनानामलूनां च हंता वै पूर्वजन्मनि ॥ २५ ॥
ततोऽयं च मया प्राप्तं दुःखं नानाविधं त्विदम् । तत्तदेनोविनाशाय दानं संप्रददे त्विदम् "२६
स्वस्त्यस्त्विति च तत्रोक्त्वा कोऽदादिति विसर्जनम् ।सापत्न्यात्मानमालोक्य भोजयेद्दिष्टबान्धवान्
ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिशंसनम् । कालेऽोष्ठकुशब्दाद्यैर्वातः स्याद्धाल्कुदनात् ॥ २८ ॥
जलादग्न्यादिना वाधा प्रणरानत्र जायते । स्त्रियोऽङ्गे विकृतिर्व्याधौ मुखे व्रणतिलादिकम्॥२९॥
पत्रजो मातुलानीनां नेत्रे तोद्रो विरिश्मता । स्वमुमातृष्वसुश्चाऽपि बाल्ये वैधव्यमेव च ॥३०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्वाविंशत्यधिकचतुःशततमः ॥ ४२२ ॥

---

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहात्परनिन्दां चकार वै । तत्पापादश्रुता सात्र जायते सूत जन्मनि ॥ १॥
धेनुं दद्यान्महाभाग विधियुक्तां सवत्सकाम् । तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्यधिकचतुःशततमः ॥ ४२३ ॥

---

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः । गण्डमालाख्यरोगेण संयुक्तो जायते सुत ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । गृहीत्वा कम्बलं दिव्यं नवं तद्वेदपाठिने ॥ २ ॥
कुटुम्बिने दरिद्राय दद्याद्दोषापनुत्तये । गण्डमालाहरं चैतद्दानमुक्तं मया तव ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकचतुःशततमः ॥ ४२४ ॥

---

श्रीसूर्य उवाच ।

कुलस्त्रीयं महादुष्टा पूर्वमासीत्पनात्रिप । अथ पूर्वकृतात्पुण्यान्मानुषी संकरा तथा ॥ १ ॥
धनपुत्रविहीना सा चात्र जन्मनि दृश्यते । निष्कृतिं तत्प्रवक्ष्यामि प्रयागे मरणात्सुत ॥ २ ॥
वासात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्यधिकचतुःशततमः ॥ ४२५ ॥

---

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा । गण्डमालाख्यरोगेण संयुक्ता जायतेऽधुना ॥ १ ॥

श्रीसूर्य उवाच ।

वैकुण्ठादागतस्तत्र मथुरायां पतत्रिप । जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
घोरे कलियुगे प्राप्ते पापाक्रान्ते महीतले । भारावतारणार्थाय क्षत्रियाणां वधाय च ॥२॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकचतुःशततमः ॥ ४३० ॥

श्रीसूर्य उवाच ।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज । कुलरवी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णशतकं दद्यात्स तद्दोषविनाशनम् । चान्द्रायणत्रयं कुर्याद्धातदोषोपशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकत्रिंशदधिकचतुःशततमः ॥ ४३१ ॥

श्रीसूर्य उवाच ।

राजघातकरी प्रोक्ता या पूर्वं घातयेन्नृपम् । राजयक्ष्मान्विता सात्र तस्मिन्नयासि भामिनी ॥ १॥
प्रायश्चित्तं परं तस्याः शृणुष्वाथ खगेश्वर । यत्कृते विधिना सर्वं पूर्वजन्माघनाशनम् ॥ २ ॥
स्वर्णगोभूमिमिष्टान्नघृतधेनुतिलानि च । देयानि श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्ते कृते किल ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकचतुःशततमः ॥ ४३२ ॥

श्रीसूर्य उवाच ।

अनागसं तु यः कश्चिद्वैश्यं हन्यात्पतत्रिप । प्राग्जन्मन्यथ युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥१॥
भविष्यति न संदेहस्तस्य मृत्युः खगाधिप । अपि दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥
त्रिंशद्वर्षे महारिष्टं रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकचतुःशततमः ॥ ४३३ ॥

श्रीसूर्य उवाच ।

मेरोः समागता येये प्राप्ता माथुरमण्डले । सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगेऽत्रैव पापेन रहितानि च । कृत्वा चाद्भुतकर्माणि यास्यंत्येव पुनस्ततः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदधिकचतुःशततमः ॥ ४३४ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्वैश्यमन्यजन्मनि मानवः । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥
प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये क्षयं यायाद्रुजा पापसमुद्भवा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदधिकचतुःशततमः ॥ ४३५ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । सात्र जन्मनि मूत्रेण कृच्छ्रेणातिप्रपीडिता ॥१॥
प्रायश्चित्तं परं तस्या घोरपापहरं सुत । सुवर्णपद्मं पक्षीन्द्र सत्पत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय विधिज्ञाय पूजिताय प्रकल्पयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदधिकचतुःशततमः ॥ ४३६ ॥

अरुण उवाच ।

कश्चिद्द्विजोत्तमो जातः किंचिद्वित्तसमन्वितः । कासश्वासादिना बाधा उदरार्तिः प्रजायते ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यशासनः । प्रिया प्रीतिपरा नित्यं व्रतदानपरायणा ॥ २ ॥
समावेशेन क्रोधस्य स्ववाक्यप्रतिपादिनी । उदरे वातजा रोगाः शिरोर्तिर्नेत्रतोदजा ॥ ३ ॥
अपत्यानि म्रियन्ते च द्वित्रैर्वर्षैः खगाऽधिप । रजोऽन्त्यां वै प्रपीडयेत वेदना विविधा तथा ॥४॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

भर्त्रा कर्म कृतं नैव, स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ६ ॥
व्रतानि विविधान्येव कृतानि भुवि मानद । स्वगृहे धान्यराशीनां भक्षणादन्नतत्परा ॥ ७ ॥
ब्राह्मणस्य सवत्सा गौर्धान्यभक्षणतत्परा । तया गृहीत्वा लकुटं भृशं कुक्षौ प्रताडिता ॥ ८ ॥
सगर्भा सुरभी तस्या गर्भकुक्ष्युपघातनात् । मृतो वै गर्भमध्यस्थः प्रसवो दुःखिता भृशम् ॥ ९॥
शिशुदुःखेन सुरभी भृशमाक्रन्दती मृता । तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ १० ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः । इदं जन्म तृतीयं तु मृतापत्यं खगेश्वर ॥ ११ ॥
सप्तजन्म प्रजायेत गोस्त्रीब्रह्मप्रघातकः । नानापापकर्मणां पाको नानापत्यार्थदुःखकृत् ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं वदाऽपत्यं येन जीवेद्दिवाकर । अनुग्राह्योऽस्म्यहं देव लोकानां हितकाम्यया ॥ १३ ॥

श्रीसूर्य उवाच ।

मासे नभसि संप्राप्ते सानुकूलग्रहेऽहनि । सपत्नीकः शुचिः स्नात औषधैः स्नानमन्त्रतः ॥ १४ ॥
उपोषणं दिवा रात्रौ त्रयोदश्यादितश्चरेत् ।पौर्णमास्या दिनं प्राप्य प्रातरभ्युदिते रवौ ॥ १५ ॥
गुरुभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । तत्रोपरि गवां स्थानं चोदङ्मुखं प्रमासनम् ॥ १६ ॥
अर्हणाद्युपहारैश्च कुङ्कुमाद्युपचर्चयेत् । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १७ ॥
तत्रोपरि न्यसेद्देवं माधवं कलशोऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं च चतुर्भुजम् ॥ १८ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । विष्णुसूक्तेन सूक्तेन श्रीसूक्तेन च पूजनम् ॥ १९ ॥
पुष्पैश्च धूपगन्धाद्यैरर्चयेन्निविधैर्गुणैः । रुद्रैकादशिनीभिश्च जपेद्रुद्रं विधानतः ॥ २० ॥
पूजालक्ष्म त्विदं पुष्पैरर्चयेद्गन्धवारिभिः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वा ॥ २१ ॥
रुद्रस्यायुतहोमश्च समध्वाज्यसमाहुतैः । एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २२ ॥

मंत्रः ।

" यन्मया कर्मवशतः कृतं पापं दुरात्मना । सगर्भायाश्च गोः पूर्वं लकुटेन कुक्षिताडनात् ॥२३॥
तत्कर्मवशसंप्राप्तमृतगार्भ्यादिहेतो भृशम् । मृतसंततिदुःखानि प्राप्तानि महदेनसः ॥
तत्तदेनोविनाशार्थं दानं संप्रददे त्विदम् " ॥ २४ ॥
स्वस्त्यस्तु चेति तत्रोक्ता कोऽदादिति विसर्जनम् ॥ २५ ॥

सार्पिष्यात्मानमालोक्य पश्चाद्वै तोषयेद्द्विजान् । भूमिद्रविणवासांसि दानं दत्त्वा विधानतः ॥२६॥
व्रतान्ते सुरभीं दद्याद्धेमीं द्रव्यादिशक्तितः । अहःशेषं ततः सर्वं भोजयेदिष्टबान्धवान् ॥ २७ ॥
ईदृकं लक्षणं तस्य शरीरेऽप्युपजायते । काष्ठलोष्ठकुशाद्यैर्वातः स्यादुपलेखनात् ॥ २८ ॥

शूद्राणां चोपघातश्च जायन्ते ब्रह्मजातयः । जलाकुलत्वं स्पर्शोऽस्तादृशी तत्र वेदना ॥ २९ ॥
स्त्रियोऽङ्गे विकृतिर्व्याधी मुखे व्रणतिलादिकम् । पतृजा मातुलानीनां वैधव्यार्तिः रादातनौ॥३०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदधिकचतुःशततमः ॥ ४३७ ॥

## श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । मदरोगाऽतिदुःखेन सात्र जन्मनि पीडिता ॥ १ ॥
प्रायश्चित्तं परं तस्याः मदरस्य तु नाशनम् । दद्यात्कुम्भमयं पद्मं सपत्रं श्लक्ष्णवर्तम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय शुभे दिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकचतुःशततमः ॥ ४३८ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रस्त्रिविधां तु सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं व्रियात् ॥ १ ॥
चिह्नेन श्यावदन्तेन, लक्षितः पापजः सदा । सप्तजन्मनि रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
हठात्माकृपापजास्तत प्रायश्चित्तं न विद्यते । पापक्षयावशेषे च कृच्छ्रं सान्तपनं चरेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽ० एकोनचत्वारिंशदधिकचतुःशततमः ॥ ४३९ ॥

## श्रीसूर्य उवाच ।

अकामतश्च या नारी वैश्यघातनतत्परा । बभूव प्राक्तु पक्षीन्द्र सात्र जन्मनि निश्चयात् ॥ १ ॥
रक्तार्बुदसमाक्रान्ता दुष्टपापप्रयोजिता । महारिष्टेन सा याति यमलोकं पतत्रिण ॥ २ ॥
चत्वारिंशन्मिते वर्षे सत्यं सत्यं वदाम्यहम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदधिकचतुःशततमः ॥ ४४० ॥

## श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या सुखजात्र च याहुजा । देशे सारस्वते प्राप्ता सर्वधर्मान्विता सती ॥ १ ॥
क्षयरोगयुता चात्र युवभावे पतत्रिण । प्राक्पापाद्दुस्तरात्सूत कण्ठपाशादिसंभवात् ॥ २ ॥
निष्कृतिं कदलीं दद्यात्सुवर्णत्रयसंयुताम् । भोजयेद्ब्राह्मणान्पश्चाच्छिवपूजनतत्पराम् ॥ ३ ॥
या त्वेवं कुरुते भक्त्या कदलीदानमुत्तमम् । नश्येत्क्षयरुजा तस्या अपि प्राणव्रणाशनीम् ॥ ४ ॥
आयुरब्दास्तु षड्युक्ताश्चाऽत्र सप्ततिसंख्यकाः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदधिकचतुःशततमः ॥ ४४१ ॥

## श्रीसूर्य उवाच ।

यो नरोऽतिचलोत्कर्षात्परस्त्रीं कामयेत्पुरा । अधुना यौवने प्राप्ते सोन्मादी जायते भृशम् ॥ १ ॥
दद्यात्प्रजापतिं देवं सौवर्णं शक्तितोऽण्डज । मृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणाञ्शक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत सोन्मादान्मुच्यतेऽधुना ॥३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकचतुःशततमः ॥ ४४२ ॥

## श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परद्रव्यापहारिणी । सात्र जन्मनि रोगेण कुनखत्वेन बाध्यते ॥ १ ॥

दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यतेऽत्रैव जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासे तु कार्तिके ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदधिकचतुःशततम ॥ ४४३ ॥

श्रीसूर्य उवाच ।

वश्यहैत्री भवेत्पूर्वभवे नारी पतिव्रता । रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
अत्रं चरेन्महाभाग प्राजापत्यचतुष्टयम् । सप्तधान्यस्य दानेन रक्तार्बुदविनाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकशततम. ॥ ४४४ ॥

श्रीसूर्य उवाच ।

गैप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते । स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे पतत्रिण । प्राजापत्यं चरेत्सत्र सर्वपापप्रणाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चचत्वारिंशदधिकचतुःशततम. ॥ ४४५ ॥

श्रीसूर्य उवाच ।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यान्वितः सुधीः । स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः । दुष्टाः प्रजाः क्रोधयुक्ता बभूवुर्विमुखास्तदा ॥ २ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत । संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ३ ॥
तस्य पत्नी महाभाग साध्वी पतिपरायणा । तस्मिन्मृते मृता सा तु भर्तृप्राणावलम्बिनी ॥ ४ ॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतिव्रता । मृते पत्यौ न जीवामीत्युक्त्वा स्मृतवती तथा ॥ ५ ॥
तद्गुणेनान्तकालेऽपि दिवि प्राप्ता सभर्तृका । भुक्त्वा तत्र महाभोगानपूर्वान्स्वामिधर्मतः ॥ ६ ॥
नानाप्रजाघातनजात्पापात्पूर्वसमुद्भवात् । क्षीणात्पुण्यात्तथा सुत म्लेच्छदेशे समुद्भवः ॥ ७ ॥
सिन्धोः पश्चिमभागे तु शतयोजनसंमिते । गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ८ ॥
नानाभोगसुखैर्युक्तो गजयूथैः समावृतः । पत्त्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ ९ ॥
महोग्रः पुत्रपौत्राढ्यश्चात्यन्तसुखसंयुतः । देशेदेशेऽधिकाराढ्यः स म्लेच्छः पृथिवीपतिः ॥१०॥
स्त्रीसाहाय्यान्महाभाग तथा पुत्रसहायतः । सुखैश्वर्ययुता सापि युवती तद्वशादिह ॥ ११ ॥
स पुत्रः प्राक् सहायात्स्व सोऽप्यत्रैव महाप्रभुः । एवं जन्मफलं प्रोक्तं ससहायं पतत्रिण ॥ १२ ॥
स्वामिधर्मकृतात्पुण्यात्तदर्थं मरणात्तथा । भविष्यति गतिस्तेषां पूर्वपुण्यात्पतत्रिण ॥ १३ ॥
पञ्चाशीतिमितायुः स्यान्न च रिष्टं न तन्मृतिः । रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत॥ १४ ॥
शस्त्रप्रहारैर्विविधैः प्राप्ते त्वत्र रणाङ्गणे । प्रजापीडनजात्पापात्तदर्थं नात्र संशयः ॥ १५ ॥
दद्यात्कालान्तरं तत्र ब्राह्मणाय कुटुम्बिने । देयं हिरण्मयं तद्द्रव्यं शतपलात्मकम् ॥ १६ ॥
कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु । सर्वोपस्करसंयुक्तं देयमेतच्च पुत्रक ॥ १७ ॥
महारिष्टहरं प्रोक्तं प्रायश्चित्तं परं खग । नातः परतरं प्रोक्तं दानं वालनरात्मकचित् ॥ १८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्चत्वारिंशदधिकचतुःशततम. ॥ ४४६ ॥

श्रीसूर्य उवाच ।

या काचिद्यौवने नारी रमते स्वेच्छया परे । बलात्कारेण पुरुषे सात्रोन्मादेन पीडिता ॥ १ ॥
तत्पापनाशनं सर्वमुपायं शृणु यत्नतः । कृत्वा सुवर्णजं वायुं मृगं हैमं च वाहनम् ॥ २ ॥

सर्वोपस्करसंयुक्तं दद्याद्विमाय धीमते। न प्राप्नोति तदोन्मत्त्यं दानेन विनतासुत ॥ ३ ॥
दद्यात्तत्पापनाशाय विप्राय पुत्रिणेऽण्डज। पलानां त्रिशतं शुद्धं तस्माद्रोगाद्विमुच्यते ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःसप्तचत्वारिंशदधिकचतुःशततमः ॥ ४४७ ॥

## श्रीसूर्य उवाच।

पत्यौ पुत्रे विद्यमाने जाराद्गर्भो धृतः पुरा। सा चात्र पादजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात्। कन्याविवाहात्सततं दरिद्राद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्तायथोदितात्। प्रायश्चित्ते कृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृतेऽब्दानां षडशीतिं च जीवनम् ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकचतुःशततमः ॥ ४४८ ॥

## श्रीसूर्य उवाच।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा। सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव तथा काले तस्य रिष्टं प्रकीर्तितम्। विंशन्मितेऽब्दे पक्षीन्द्र कालशस्त्रान्मृतिर्भवेत् ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकचतुःशततमः ॥ ४४९ ॥

## श्रीसूर्य उवाच।

यः कश्चिद्ब्राह्मणीं सूत बलोत्कर्षेण मन्दधीः। रमयेत्पाग्भवे सोऽत्र मदोन्मादी प्रजायते ॥ १ ॥
पापादसाध्याद्रोगाद्वै प्रमुक्तिर्नैव जायते। म्रियते रिष्टयोगेन सोन्मादी चात्र जन्मनि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदधिकचतुःशततमः ॥ ४५० ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि या नारी हरेल्लोभान्महत्त्रपु। साऽत्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपु तत्पापशुद्धये। कृते तस्मिन्नुपाये तु श्लेष्मरोगस्य नाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदधिकचतुःशततमः ॥ ४५१ ॥

## श्रीसूर्य उवाच।

विप्रवंशे समुत्पन्नः शक्तिमान्धर्मपारगः। धनधान्यसमायुक्तो दयालुश्चार्जनान्वितः ॥ १ ॥
सुवक्ता शक्तिमान्वीरः किंचिद्विद्याविसमन्वितः। इन्द्रियाणां बलं हत्वा मोहो वै जायते भृशम् ॥२॥
उदरार्तिरस्रवातः किंचिद्देहे प्रवर्तते। तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक् सत्यसंकल्पा व्रताढ्या धनसंयुता। बहुपुत्रप्रसूताऽपि किंचित्पुत्रा प्रजायते ॥ ४ ॥
अथवा मृतपुत्रा च पुत्रीषु जीवितास्वपि। केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥
पूर्वजन्मनि विप्रस्तु संजातः पत्रमादिह। तस्य गेहे प्रवृत्तं तु कन्यायाः प्रौढ्यमण्डज ॥ ६ ॥
भूरिद्रविणलोभेन वृद्धविप्राय दापिता। तद्वत्तदाहृतं वित्तं सर्वस्वं तद्वशादपि ॥ ७ ॥
यावत्कन्याऽभवत्प्रौढा वरार्थं गुणशालिनी। पतिभक्तिपरा नित्यं यावत्कन्यासुतार्थिनी ॥ ८ ॥
किंचित्काले गते तस्याः पतिर्मृत्युवशंगतः। सा बाला विधवा जाता पत्यपत्यार्थदुःखिनी ॥९॥

१ धारयेत्यारभ्य जीवनेतिपर्यन्तः पाठः खपु० नास्ति। २ अयं ग्रन्थः खपु० नास्ति। ३ कृते तूपाये तस्मिंस्तु इति स्यात्।

व्रततीर्थरता नित्यं सत्यधर्मपरायणा । बहुवर्षैस्तया वत्स नियमैः शोषितं वपुः ॥ १० ॥
पितुर्गृहे धनं भूरि स्थापितं स्नेहकारणात् । किंचित्कालवशात्प्राप्ता मृतिं सा ब्राह्मणी खग ॥ ११ ॥
तां पुत्रीं हृदये कृत्वा सोऽगमज्जन्मजन्मनि । कन्या बहुविधास्तस्य निराधारा मताः किल ॥१२॥
तेन कर्मप्रभावेन पूर्वकन्या बहुप्रजा । सा तु भर्तृभवं गर्भं दृष्ट्वा मृत्युं प्रतीक्षती ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युरनरकर्मनिष्कृतिं विना । कन्याविक्रयकर्ता च रौरवे नरके मृतः ॥ १४ ॥
यातना बहुधा भुक्त्वा वर्षाणां च सहस्रकम् । पश्चान्मानुषमापन्नो व्रतदानप्रभावतः ॥ १५ ॥
इदं जन्म चतुर्थं तु पुत्रीवानत्र जायते । मृतः पुत्रो मृतो गर्भस्तेन गर्भभवादिह ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद । भर्तृविद्वेषिणी नित्यं चिरापत्यानुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन कन्या भूरि मृतः सुतः ॥ १८ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापोपशाम्यति । निष्कृतिं वद विश्वात्मन् पृथक्तेन प्रकाशय ॥ १९ ॥

श्रीसूर्य उवाच ।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ २० ॥
स्वकन्यां वरयोग्यां सा चिन्तयन्तीमनागमम् । दशाब्दिकां च मानेन यथाभावं यथामत ॥२१॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । अलंकृतां यथाशक्ति वराय गुणशालिने ॥२२॥
ब्राह्मणे विधिना सुत दद्याच्च बहुदक्षिणाम् । महापापौघशमनं कन्यादानमतन्द्रितः ॥ २३ ॥
कन्याविवाहसमये महाशान्तिविधिं चरेत् । एवं कृतविधिः सुत कन्यां दत्त्वा विधानतः ॥ २४ ॥
शान्तिकर्माणि सर्वत्र विस्तीर्य ऋत्विजादयः । भूमिद्रविणवासांसि कन्यावासांसि दापयेत् २५॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम् । वर्षं वर्षं तु संपूर्णं अन्नवस्त्रैश्च पोषयेत् ॥ २६ ॥
एवं कृतविधिः सुत बहुपुत्रा यशस्विनी । पापं पुत्रविनाशाख्यं कन्यापत्योदयश्च यत् ॥ २७ ॥
तस्य पापस्य नाशार्थं कन्यादानादयः स्मृताः। नाशयेदेव तत्पापं द्विजानां विधिपूजनात् ॥२८॥
यजनाच्च विधानेन ब्राह्मणैः स्वस्तिवाचनात् । विनायकाम्बिकामूर्ती हेमनिष्कप्रमाणतः ॥२९ ॥
आचार्याय ददेत्सुत नानाकर्मौघशान्तये । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ३० ॥
जिह्वाहृदयदन्तोष्ठे रोगा वातादिदोषजाः । नृपचौराग्निहानिश्च वित्तानि च यतस्ततः ॥ ३१ ॥
तप्यमानेन मनसा दूयते भृशमाधिना । सर्पिष्यात्मानमालोक्य प्रायश्चित्तं यथाविधि ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकचतुःशततमः ॥ ४५२ ॥

श्रीसूर्य उवाच ।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्य दानान्महाभाग पापं नश्यति तत्क्षणात् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः त्रिपञ्चाशदधिकचतुःशततमः ॥ ४५३ ॥

श्रीसूर्य उवाच ।

गर्भवत्याऽनया भुक्ता पूर्वजन्मनि मानद । गर्भासन्ना ह्यजा वध्या विधिना गर्भधारणात् ॥ १ ॥
तेन कर्मविपाकेन चाऽजा साऽत्र जन्मनि । पूर्वजन्मन्यसौ विप्रा न च गर्भं दधात्यलम् ॥ २ ॥
प्रायश्चित्तमिदं तस्य चात्र सर्वाघमोचनम् । कृत्वाऽजां गर्भसंयुक्तां राजतीं पद्मपलात्मिकाम् ३

वैश्वानरस्तया कार्यः पञ्चमाषैर्हिरण्मयः । पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४ ॥
एवं कुर्याद्विधानेन सर्वपापापनोदनम् । तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि, वै ध्रुवम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदधिकचतुःशततमः ॥ ४९४ ॥

श्रीसूर्य उवाच ।

यो हरेत्परसिद्धान्नं प्राक् क्षुत्पीडाप्रपीडितः । सोऽत्र जन्मनि पक्षीन्द्र शूलरुक्पीडितोऽधुना ॥१॥
अन्नदानेन विप्रेभ्यो रसदानाद्विशेषतः । मुच्यते शूलजाद्रोगात्तत्र कार्या विचारणा ॥ २ ॥
सुवर्णशूलदानाद्वा विप्रायात्र कुटुम्बिने । शूलरोगोपशमनमिह जन्मनि वै ध्रुवम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचपंचाशदधिकचतुःशततमः ॥ ४९५ ॥

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तः प्राक् सूत बभूव पुरुषोत्तमः । स्वज्ञातिषु महाभाग दृढधर्मक्रियापरः ॥ १ ॥
विराटदेशे निवसन् राजकार्ये रतः सदा । कृतवानभिदाहं च शत्रूणां भयदायकम् ॥ २ ॥
बालवत्सा मृतास्तत्र पुरे तस्मिन्खगोत्तम । पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३ ॥
ततो यमपुरं प्राप्तो जातोऽत्र यमुनातटे । चारणो धर्मनिरतो बहुद्रव्यसमन्वितः ॥ ४ ॥
नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः । चन्द्रभूत्याधिकाराढ्यो वस्त्रभूषणभूषितः ॥ ५ ॥
सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु । धूर्तो मिथ्यापवादी च बहुलोभसमन्वितः ॥ ६ ॥
जातसंततिदुःखार्तो बालवत्सवधादिह । नेत्ररोगान्वितो नित्यं शृणु चिह्नं पतत्रिण ॥ ७ ॥
चत्वारिंशन्मिते वर्षे सर्वसंततिनाशनम् । गृहनाशान्महाभाग कृषिरिष्टसमुद्भवात् ॥ ८ ॥
पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः ॥ ९ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् बालवत्साघनाशनीम् । यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते॥ १०॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं शृणुष्वात्र तद्वर्षानन्तरं सुत । तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ ११ ॥
दृढकर्मार्जितात्पापात्र चोक्तं पापशोधनम् । श्रवणाद्धरिवंशस्य वैशाखे विधिनाण्डज ॥ १२ ॥
माघे वा कार्तिके वापि दशावृत्तिविधानतः । ततस्तु भोजयेद्विप्रान् होमयेच्च स्वशक्तितः ॥ १३ ॥
कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा । धेनूनां दशकं दद्यात्सवत्साभरणान्वितम् ॥ १४ ॥
दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम् । प्रायश्चित्तमिदं पुत्र चेत्कुर्याद्विधिपूर्वकम् ॥ १५ ॥
तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत । मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः ॥१६ ॥
प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं तथा । द्विरुक्तमायुः कथितं तीर्थं पुण्याश्रयेऽण्डज ॥ १७ ॥
जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे । त्रयोदश्यां दिवा भूमौ ऋक्षे मृगशिराभिधे ॥ १८ ॥
निर्णयः कथितस्तस्य विष्णुपूजनजात्फलात् । भविष्यति गतिस्तस्य पुनर्विष्णुप्रपूजनात् ॥१९॥
तथा तृतीये जनुषि मरणात्प्रोष्ठे सुत । सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ २० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पंचाशदधिकचतुःशततमः ॥ ४९६ ॥

---

१ भुक्त्वा भोगान् तदुत्तमान् । विष्णुपूजनजात्पुण्यात् प्राप्तोऽत्र इति, ख० पु० अधिकः पाठः ।

श्रीसूर्य उवाच ।

पिङ्गलाक्षो भवेदन्न पूर्वं रीत्यपहारकः । देया तत्पापशुद्ध्यर्थं रीतिः शतपलात्मिका ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलाज्यैर्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद्ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदधिकचतु शततम ॥ ४५७ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग खररोमा प्रजायते । पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयं हिरण्यं च दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गपाठिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदधिकचतु शततम ॥ ४५८ ॥

श्रीसूर्य उवाच ।

प्रागुक्तं गर्भपुष्ट्यर्थं कुक्कुटाण्डं खगेश्वर । अत्र जन्मनि सा जाता संकरा लोभसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं दधात्येषा प्राक्पापाद्दण्डनक्षणात् ॥ २ ॥
कृत्वाऽण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम् । तदर्धार्धमितं वापि निष्कं वित्तानुसारतः ॥ ३ ॥
दत्त्वा द्विजाय विधिना आचरेच्छाङ्करं व्रतम् । तेनेह कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥ ४ ॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनान् । तथा पुण्यफलं पुण्यात्प्राप्य पुण्यावशेषतः ॥ ५ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा । नानाचौर्यक्रियायुक्तो लोकवञ्चनतत्परः ॥ ६ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि । सुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ७ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः । वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ८ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम् । पूजयेत्तु त्रिवर्षान्तं मन्त्रैस्तल्लिङ्गजैस्तथा ॥९॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः । संपूज्य विधिवद्देवं तदन्ते भोजयेद्द्विजान् ॥ १० ॥
शिवभक्तांस्तथा शान्तान् दक्षिणाभिश्च पूजयेत् । नानाहिरण्यैर्विविधैर्वस्त्रैर्वाभरणैः शुभैः ॥ ११ ॥
अथवा श्रृणुयात्तत्र यजुर्वेदं विधानतः । ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १२ ॥
य एवं कुरुते भक्त्या पूर्वपापप्रणाशनम् । संप्राप्य तत्र निर्याणं शिवलोकं स गच्छति ॥ १३ ॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप । नाधिकारोऽस्ति शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १४॥
तप्ता शलाका देया वै शूद्रकर्णेऽतिदारुणा । श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १५ ॥
आयुरब्दशतं तस्य पक्षीन्द्र कृतनिष्कृतेः । प्रायश्चित्ते कृते रिष्टं जायते पञ्चवत्सरे ॥ १६ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोनषष्ट्यधिकचतु शततम ॥ ४५९ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे हन्यात्खरमत्रैव जन्मनि । खररोमसमानानि रोमाणि प्रभवन्ति च ॥ १ ॥
ब्राह्मणाय तदा दद्यात्स्वर्णं निष्कत्रयं सुत । जायते सूक्ष्मरोमा सा विनतानन्दवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय षष्ट्यधिकचतु शततम ॥ ४६० ॥

श्रीसूर्य उवाच ।

या वै पुरा हरेद्रीतिं नारी सा च पतत्रिण । पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्याच्छतपलां तथा ब्राह्मणभोजनम् । गायत्र्या जुहुयाद्भक्त्या तिलान् रोगविनाशनम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकचतुःशततमः ॥ ४६१ ॥

श्रीसूर्य उवाच ।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी । सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनेभ्योऽथ पतत्रिण । भिक्षुभ्यश्च तथा दानाद्रसदानाच्च शक्तितः ॥२॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः । प्रायश्चित्तेऽकृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकचतुःशततमः ॥ ४६२ ॥

श्रीसूर्य उवाच ।

उष्ट्रघाती भवेत्पूर्वे जन्मन्यथ पतत्रिण । सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि । कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकचतुःशततमः ॥ ४६३ ॥

श्रीसूर्य उवाच ।

वन्ध्येयं या महाभाग गङ्गायां हि पतत्रिण । पूजयेल्लक्षं रुद्राणां तदर्धं वा तदर्धकम् [1] ॥ १ ॥
शक्त्याथ भोजयेद्विप्रान् होमयेच्च स्वशक्तितः । अनेन विधिना या च प्रायश्चित्तं समाचरेत् ॥२॥
जायते संततिस्तस्या इह जन्मनि वै ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकचतुःशततमः ॥ ४६४ ॥

श्रीसूर्य उवाच ।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायते त्विह ॥ १ ॥
दानाच्छतपलादन्न सीतकादण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगो विनश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्यधिकचतुःशततमः ॥ ४६५ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे कीराभिधे सुत । धर्मकर्माल्पको भक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः । पर्वस्वपि च पात्रेभ्यो गोभूस्वश्वादिकानि च॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । स्ववंशजस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरिभावेन रात्रौ वै भार्यया सह । तस्मिन् दाहे महाभाग निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा । ततो बहुतिथे काले गतः स यमशासनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा पापाद्दुष्टं शुभं तथा । पुण्यात्पाञ्चनदे देशे स जातो बाहुजोऽधरः ॥ ६ ॥
मध्यस्वरूपो मतिमान् कुलेष्टः पुरुषो दृढः । रक्तो नोच्चो नातिनीचो बहुकल्यः पृथुर्विभुः ॥७॥
यौवने तु सुखैश्वर्यधनैः स्थानैर्युतायुतः । मितदो भोगवानाढ्यः कृती मानी जनप्रियः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । उग्रश्चिन्तातुरो धूर्तो दुःखभोगी तथाऽण्डज ॥ ९ ॥

१ अयं श्लोकः खपु० नास्ति ।

सा ज्येष्ठा प्रसुरेव स्त्री मृतपुत्रात्र जन्मनि । लक्षणैस्तदण्डजश्रेष्ठ जन्माङ्के वृषभे शनिः ॥ १० ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । कारयित्वा शिवं साङ्गं पलैर्वेदमितैः शुभैः ॥ ११ ॥
हिरण्मयं महाभाग पत्रे लेख्यं शिवान्वितम् । तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः ॥ १२ ॥
उपचारैः षोडशभिः पूजयित्वा विधानतः । संस्थाप्य पशुपं पश्चाद्रोरथे सुमनोहरे ॥ १३ ॥
सर्वोपस्करसंयुक्ते क्षौमाम्बरविभूषिते । दद्याद्वेदविधिज्ञाय मन्त्रमेतमुदीरयेत् ॥ १४ ॥

मंत्रः ।

"मोहात्पूर्वं महापापमग्निदाहाद्यदर्जितम् । तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम्" ॥ १५ ॥
गोविकायास्तथा जीवाः पत्रे लेख्यास्तु राजते । जीवपञ्चमिदं दद्याद्ये चान्ये घातिताः पुरा ॥१६॥
पञ्चमाससमितो वह्निर्देयो हेममयः शुभः । गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम् ॥ १७ ॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान् । य एवं कुरुते सूत प्रायश्चित्तं विधानतः ॥ १८ ॥
न तस्य पुत्रमरणं तदग्रे जायते क्वचित् । जायन्ते सुलभाः पुत्राश्चाधिव्याधिविवर्जिताः ॥ १९ ॥
नैवं करोति यो मोहादत्र पुत्रविवर्जितः । चत्वारिंशन्मिते कूने वर्षे रिष्टं प्रकीर्तितम् ॥ २० ॥
पञ्चाशन्मितेके रिष्टं देयाच्चाकृतनिष्कृतेः । प्रायश्चित्ते कृते ह्यायुश्चतुःसप्तमिताब्दकम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्यधिकचतुःशततमः ॥ ४६६ ॥

---

श्रीसूर्य उवाच ।

कांस्यहारी च पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽत्र हि ॥ १ ॥
दानाच्छतपलादत्र सीसकादण्डजोत्तम । विप्राय वेदविदुषे दरिद्राय कुटुम्बिने ॥ २ ॥
तस्य पापस्य शमनं मया प्रोक्तं खगाधिप । तस्मिन्वयसि तद्रिष्टं भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्यधिकचतुःशततमः ॥ ४६७ ॥

---

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । सात्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
दद्याच्छतपलं सीसं ब्राह्मणाय कुटुम्बिने । तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकचतुःशततमः ॥ ४६८ ॥

---

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । सात्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णां राजतीं तथा । दद्याद्वेदविधिज्ञाय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकचतुःशततमः ॥ ४६९ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्र जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र पतत्रिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्यधिकचतुःशततमः ॥ ४७० ॥

---

श्रीसूर्य उवाच।

गायत्र्याश्च जपेल्लक्षं नात्र कार्या विचारणा। न तस्य विन्मयं प्रोक्तमत्र जन्मनि चाण्डज॥१॥
स्वशरीरविशुद्ध्यर्थं येन मुक्तो मृगः पुरा॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकचतुःशततमः॥ ४७१॥

---

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोहाद्गुडं हरति कस्यचित्। गुल्मोदरेण रोगेण पीड्यते सात्र जन्मनि॥ १॥
गङ्गायां हि महाभाग गुडधेनुप्रदानतः। तत्र स्नानान्महापुण्यात्तस्माद्रोगाद्विमुच्यते॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकचतुःशततमः॥ ४७२॥

---

श्रीसूर्य उवाच।

धर्मार्थकाम्ययोऽभवत्पूर्वं देशे नेपालसंज्ञके। बहुमित्रसुतैराढ्यो हीनद्रव्येण संयुतः॥ १॥
आराधनं तु कृतवान्स देव्याः पूर्वजन्मनि। स्वस्त्रियं च सुरूपां च परित्यज्य शुभाननाम्॥२॥
[1]अन्यस्त्रियमुपगतो व्यभिचारपरो दृढः। स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति॥ ३॥
पापपुण्यफलं भुक्त्वा स जातोऽत्र महीधरे। गौरो भव्यो महाज्ञानी महाविभवसंयुतः॥ ४॥
देशेदेशेऽतिविख्यातो घृणी शूरो महायशाः। स्वस्त्रीत्यागान्महाभाग जायते स्त्रीविवर्जितः॥५॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तेः सौख्यकारिणीम्॥ ६॥

श्रीसूर्य उवाच।

पार्वतीप्रतिमां कृत्वा हैमीं सर्वार्थकारिणीम्। पलपञ्चमितां लक्ष्म्यां गन्धमाल्यैरलंकृताम्॥ ७॥
दद्याद्वेदविधिज्ञाय सुकुलीनाय चार्थिने। प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम्॥ ८॥
ब्रह्मदैवतमन्त्रेण गृह्णीयात्स द्विजोत्तमः। पश्चाद्दशाक्षरं मन्त्रं सहस्रं पापशोधनम्॥ ९॥
जपेदष्टसहस्रं तु सूर्यमन्त्रं महाबलम्। होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत्॥ १०॥
य एवं कुरुते सूत सर्वपापविशोधनम्। प्रायश्चित्तं परं पुत्र तस्मात्पापात्प्रमुच्यते॥ ११॥
नैवं करोति यो मोहाज्जडवर्दैवघातितः। न लभेत्स्त्रीसुखं सोऽत्र रिष्टं पद्वैदकेऽब्दके॥ १२॥
प्रायश्चित्ते कृतेऽब्दानां जीवनं पञ्चसप्ततिम्॥ १३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्यधिकचतुःशततमः॥ ४७३॥

---

श्रीसूर्य उवाच।

मृगं हन्याद्विनाऽऽखेटं प्राग्भवे योऽण्डजाधिप। षण्ढः स्यादत्र जनुषि तत्काले मृगघातकः॥ १॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत। दद्याद्धयं नरं तत्र स्वर्णनिष्कयुतं शुभम्॥ २॥
सहासनमलंकारैर्भूषयित्वा विधानतः। विधिज्ञाय महाबाहो नानाशास्त्रविधानतः॥ ३॥
न स पश्यति षण्ढत्वं दानस्यास्य प्रभावतः॥ ४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकचतुःशततमः॥ ४७४॥

---

1 देहदिव्येन संयुतः—ख० पु०।

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परतल्पापहारिणी । सात्र जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तिलघटद्वयात् । सुवर्णाढ्याच्चतथा शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चसप्तत्यधिकचतु शततम. ॥ ४७५ ॥

श्रीसूर्य उवाच ।

राजाऽमात्यः स वै कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दुराचारोऽसावधर्मतः । गर्भं च कामपुग्धो यो भाविनोऽर्थस्य वै बलात् ॥२॥
पापात्पापफलं भुक्त्वा यमलोके पतत्रिण । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि षाद्जः ॥ ३ ॥
देशे जाङ्गलके पण्डो सर्वधर्मबहिष्कृतः । शिवपूजारतो यस्मात्सोऽत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्सप्तत्यधिकचतु शततम ॥ ४७६ ॥

श्रीसूर्य उवाच ।

पूर्वं जनुषि या नारी गर्भघातकरी ह्यभूत् । गर्भपातेन दुःखार्ता साऽत्र जन्मनि जायते ॥ १ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ २ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न पतति च गर्भोऽस्या पीडामेव जन्मनि ॥ ३ ॥
दानप्रभावात्पक्षीन्द्र खञ्जत्वं नाप्नुयाद्द्विज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तसप्तत्यधिकचतु शततम ॥ ४७७ ॥

श्रीसूर्य उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मोहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्ववातादिना पीडा बाल्ये स्याद्ग्रहणीगदः । तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः ॥२॥
रक्तस्रावादिना पीडा जायते वायुसम्भवा । स एव तस्या गर्भस्य घातं कुर्याच्च पृच्छितः ॥ ३ ॥
द्विमैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा । केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु चास्य विचेष्टितम् । व्यभिचारभयाद्यापि तया गर्भश्च पातितः ॥ ५ ॥
अतिकष्टाद्वैनतेय गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचारोऽपतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्री च कुत्सा वाक्यलंघनात् । भर्तुस्तु चारिणी वृत्तिर्दुष्टसंगासिकोऽर्जनात् ॥ ७ ॥
तेन दुष्टेन यद्द्रव्यं हृतं भस्करसुद्धिना । भुक्तं ताभ्यां वैनतेय ब्रह्मस्वं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः । यातना बहुधाः प्राप्ताः पश्चान्मानुषतां गतः ॥ ९ ॥
किंचिद्धर्मप्रभावेण क्षात्रेयं जन्मना भुवि । इदं जन्म चतुर्थं वै गर्भपातोऽभिजायते ॥ १० ॥
उभाभ्यां च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् ॥ १२ ॥

---

१ उदरस्थस्य गर्भस्य इति स्यात् ।

श्रीसूर्य उवाच।

पूर्वजन्मनि या नारी नानागर्भान्निहंति हि। तस्या निष्कृतितः शुद्धिः श्रूयतां कश्यपात्मज॥१३॥
नारी नियमसंवीता ध्रुवं सा व्रतकाङ्क्षिणी। सौम्यायनं समासाद्य सितपक्षे शुभेऽहनि ॥ १४ ॥
तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत्। पयःस्रवन्तीं शान्तां वा सुरभीं शुभलक्षणाम् ॥१५॥
गृहमानीय विधिवत्पूजयेत्तां समाहिता। इष्टैस्तु यवसैः पात्रैर्भक्ष्यैः कण्डूयनैरपि ॥ १६ ॥
रुचिरैश्च सुमिष्टान्नैः सा तां परिचरेत्सदा। रात्रौ पुष्पावलीभिश्च दीपैः प्राक् चन्दनादिभिः॥१७॥
सुगीतमङ्गलध्वानैस्तदधःशायिनी भुवि। प्राणयात्रां प्रकुर्वीत ततस्तु पयसाऽहनि ॥ १८ ॥
तस्यास्तु पञ्चगव्यानि यथान्यायं यथाश्रुति। एवं व्रतपरा नारी मासिमासि तु संयता ॥ १९ ॥
तस्या धेनोः सवत्साया इष्टं समभिकांक्षिणी। व्रतान्ते द्विजमाहूय समस्तगुणशालिनम् ॥ २० ॥
अभ्यर्च्य पूजयेद्भक्त्या वस्त्रस्रग्दामभूषणैः। सम्यगभ्यर्च्य तां धेनुं तनयं वै स्तनंधयम् ॥ २१ ॥
सुवर्णं शुद्धमाग्नेयं माषषोडशसंमितम्। कृत्वा च विधिना तस्मै तां दद्यादिति भाषिणी॥२२॥
मद्याह्यां सवत्सां च पूर्वपापापनुत्तये ॥ २३ ॥

प्रार्थना।

"यन्मया कुलधर्मान्नानागर्भाश्च हिंसिताः। नानाभेदैः प्रयातास्ते मे गर्भा बहवो भुवि॥२४॥
तैश्च कर्मार्जितं पापं गर्भपातादिदूषणम्। एतस्तस्य नाशाय सवत्सां दापयेत्विमाम् ॥ २५ ॥
इह जन्मनि वन्ध्यत्वं नाशयेन्मम सत्वरम्। दानेनानेन सुरभे ह्यनघा किल सुव्रता ॥ २६ ॥
भवेयं त्वत्प्रसादेन गर्भो मे सुभगो भवेत्"। एवमस्त्विति तां धेनुं समादाय सदक्षिणाम् ॥२७॥
हिरण्यं रजतं ताम्रं विविधानि फलानि च। दापयेद्द्विजमुख्याय भूरिद्रव्यैश्च तोषयेत् ॥ २८॥
भोजयेच्च शतं विप्रान् नानान्नैः सकृपायसैः। एवं कृतविधिः सूत नारी सा दुःखनाशिनी॥२९॥
वन्ध्यत्वं मुच्यते सूत पुत्रं प्राप्य यशस्विनम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० ष्टसप्तत्यधिकचतुःशततमः ॥ ४७८ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चित्तुरङ्गं घातयेन्नरः। वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात्। वक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनाशीत्यधिकचतुःशततमः ॥ ४७९ ॥

श्रीसूर्य उवाच।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि। पादहीनो भवेत्सूत भृशं चाकृतनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम्। ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकचतुःशततमः ॥ ४८० ॥

श्रीसूर्य उवाच।

संकरः प्राग्भवे सूत बभूव धनसंयुतः। तीर्थवासी विरक्तश्च लोमधर्मक्रियान्वितः ॥ १ ॥
क्रूरं कर्म कृतं तेन दुष्टसङ्गेन चाण्डज। चौर्येण गां परां नीत्वा क्षुधितैर्भक्षिता पुरा ॥ २ ॥
मृतास्ते तेन पापेन नानायोनिमुपागताः। स तीर्थे मत्स्यवशतो गङ्गातीरेऽत्र पादजः ॥ ३ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परतल्पापहारिणी । सात्र जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तिलघटद्वयात् । सुवर्णाढ्याच्चया शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्यधिकचतुःशततमः ॥ ४७५ ॥

---

श्रीसूर्य उवाच ।

राजाऽमात्यः स वै कश्चिद्वारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्या महाबाहो द्वाराऽऽसाद्यधर्मतः । गर्भं च कामयुग्मो यो भाविनोऽर्थस्य वै वशात् ॥२॥
पापात्पापफलं भुक्त्वा यमलोके पतत्त्रिण । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि पादजः ॥ ३ ॥
देशे जाङ्गलके पण्ढो सर्वधर्मबहिष्कृतः । शिवपूजारतो यस्मात्तस्मादत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्यधिकचतुःशततमः ॥ ४७६ ॥

श्रीसूर्य उवाच ।

पूर्वे जनुषि या नारी गर्भघातकरी ह्यभूत् । गर्भपातेन दुःखार्ता साऽत्र जन्मनि जायते ॥ १ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ २ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न पश्यति च गर्भोत्थां पीडामत्रैव जन्मनि ॥ ३ ॥
दानप्रभावात्पक्षीन्द्र खञ्जत्वं नाप्नुयादिह ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकचतुःशततमः ॥ ४७७ ॥

---

श्रीसूर्य उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मोहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्ववातादिना पीडा बाल्ये स्याद्ग्रहणीगदः । तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः ॥२॥
रक्तस्रावादिना पीडा जायते वायुसम्भवा । स एव तस्या गर्भस्य घातं कुर्याच्च वृद्धितः ॥ ३ ॥
द्विर्मैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा । केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु चास्य विचेष्टितम् । व्यभिचारभयाच्चापि तया गर्भश्च पातितः ॥ ५ ॥
अतिकष्टाटनेनैव गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचारोऽप्यतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्री च कुल्टा वाक्यलंघनात् । भर्तुस्तु चारिणी वृत्तिर्दुष्टसंगतिकोऽर्जनात् ॥ ७ ॥
तेन दुष्टेन यद्द्रव्यं हृतं तस्करवृत्तिना । भुक्तं ताभ्यां वैनतेय ब्रह्मस्वं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः । यातना बहुधाः प्राप्ताः पश्चात्मानुषतां गतः ॥ ९ ॥
किंचिद्धर्मप्रभावेण क्षात्रेय जन्मना भुवि । इदं जन्म चतुर्थं वै गर्भपातोऽभिजायते ॥ १० ॥
उभाभ्यां च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् ॥ १२ ॥

---

१ उदरस्थस्य गर्भस्य नीति स्यात् ।

श्रीसूर्य उवाच।

पूर्वजन्मनि या नारी नानागर्भान्निहंति हि। तस्या निष्कृतितः शुद्धिः श्रूयतां कश्यपात्मज॥१३॥
नारी नियमसंवीता ध्रुवं सा व्रतकाङ्क्षिणी। सौम्यायनं समासाद्य सितपक्षे शुभेऽहनि॥ १४॥
तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत्। पयस्वन्तीं शान्तां वा सुरभीं शुभलक्षणाम्॥१५॥
गृहमानीय विधिवत्पूजयेत्तां समाहिता। इष्टैस्तु यवसैः पानैर्भक्ष्यैः कण्डूयनैरपि॥ १६॥
रुचिरैश्च सुमिश्रान्नैः सा तां परिचरेत्सदा। रात्रौ पुष्पावलीभिश्च दीपैः प्राक् चन्दनादिभिः॥१७॥
सुगीतमङ्गलध्यानैस्तदधःशायिनी भुवि। प्राणयात्रां प्रकुर्वीत ततस्तु पयसाऽहनि॥ १८॥
तस्यास्तु पञ्चगव्यानि यथान्यायं यथाशुचि। एवं व्रतपरा नारी मासिमासि तु संयता॥ १९॥
तस्या धेनोः सवत्साया इष्टं समभिकांक्षिणी। व्रतान्ते द्विजमाहूय समस्तगुणशालिनम्॥ २०॥
अभ्यर्च्य पूजयेद्भर्त्र्या वस्त्रस्रग्दामभूषणैः। सम्यगभ्यर्च्य तां धेनुं तनयं वै स्तनंधयम्॥ २१॥
सुवर्णं शुद्धमाग्नेयं माषषोडशसंमितम्। कृत्वा च विधिना तस्मै तां दद्यादिति भाषिणी॥२२॥
मद्यागां सवत्सां च पूर्वपापापनुत्तये॥ २३॥

प्रार्थना।

"यन्मया कुलधर्मान्नानागर्भाश्च हिंसिताः। नानाभेदैः प्रयातास्ते मे गर्भा बहवो भुवि॥२४॥
तैश्च कर्मार्जितं पापं गर्भपातादिदूषणम्। एतस्तस्य नाशाय सवत्सां दापयेत्विमाम्॥ २५॥
इह जन्मनि वन्ध्यत्वं नाशयेन्मम सत्वरम्। दानेनानेन सुरभे ह्यनया किल सुव्रता॥ २६॥
भवेयं त्वत्प्रसादेन गर्भो मे सुभगो भवेत्"। एवमस्त्विति तां धेनुं समादाय सदक्षिणाम्॥२७॥
हिरण्यं रजतं ताम्रं विविधानि फलानि च। दापयेद्विजमुख्याय भूरिद्रव्यैश्च तोषयेत्॥ २८॥
भोजयेच्च शतं विप्रान् नानान्नैः सकुपायसैः। एवं कृतविधिः सूत नारी सा दुःखनाशिनी॥२९॥
वन्ध्यत्वं मुच्यते सूत पुत्रं प्राप्य यशस्विनम्॥ ३०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० अष्टसप्तत्यधिकचतुःशततमः॥ ४७८॥

श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चित्तुरङ्गं घातयेन्नरः। वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते॥ १॥
स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात्। वक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्याय एकोनाशीत्यधिकचतुःशततमः॥ ४७९॥

श्रीसूर्य उवाच।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि। पादहीनो भवेत्सूत भृशं चाकृतनिष्कृतिः॥ १॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम्। ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकचतुःशततमः॥ ४८०॥

श्रीसूर्य उवाच।

संकरः प्राग्भवे सूत बभूव धनसंयुतः। तीर्थवासी विरक्तश्च लोमधर्मक्रियान्वितः॥ १॥
क्रूरं कर्म कृतं तेन दुष्टसङ्गेन चाण्डज। चौर्येण गां परां नीत्वा क्षुधितैर्भक्षिता पुरा॥ २॥
मृतास्ते तेन पापेन नानायोनिमुपागताः। स तीर्थे मत्स्यरतो गङ्गातीरेऽत्र पादजः॥ ३॥

तीर्थमृत्युप्रसादाच्च धनपुत्रसमन्वितः । युवभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशसम्मितम् । लिखितां च विधानेन पूजयित्वा विधानतः ॥ ५ ॥
सा देया वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं वायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्त्या भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिना चेत्थं स तद्दोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकचतुःशततमः ॥ ४८१ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । सा तत्र पुरुषं वापि घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वस्थानात्पाताच्च वैकृता । पादभङ्गो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥
कथं वा कस्य पापस्य चिन्मयं विधिना चरेत् । यस्माद्रोगात्प्रमुच्येत चोर्ध्वपातभवात्तथा ॥ ३ ॥
अश्वं निष्कसुवर्णाढ्यं चिन्मयं पापशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकचतुःशततमः ॥ ४८२ ॥

श्रीसूर्य उवाच ।

आसीत्क्षत्री महाभाग पाञ्चाले देशके शुभे । नानाधर्मसमायुक्ते ग्रामे यो विश्रुतो महान् ॥ १ ॥
दुष्कर्माचरितं तेन भाविनोऽर्थस्य वै बलात् । शूद्रायां धारितो गर्भः कामसंरम्भेण निश्चयः ॥ २ ॥
कृतं यत्नं महत्तत्र नासीद्गर्भस्य पातनम् । तया हालाहलं पीतं लोकलज्जातुरा मृता ॥ ३ ॥
गर्भपीडावशात्तुमाद्बालकोऽपि मृतस्ततः । सहायपञ्चयुक्तेन कृतं सत्कर्म दारुणम् ॥ ४ ॥
कर्मणां संग्रहश्चायं गर्भनाशसमुद्भवः । ततोऽसौ मरणं प्राप्तो बाहुजः ससहायकः ॥ ५ ॥
सूर्यलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्नरकान्भुक्त्वा स्वार्जितान्दृढकर्मजान् ॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । स जातो यमुनातीरे बाहुजोऽप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लग्नश्च धनसौख्यसमन्वितः । पितृभ्रातृविहीनश्च लोभमोहरतः सदा ॥ ८ ॥
नैकस्त्रीसंयुतः कामी नानाविभवविस्तरः । आद्यन्तसुखयुक्तश्च बुद्धिमान्देशविश्रुतः ॥ ९ ॥
धर्मादिद्रं तथा पापाद्भूतः पापरतः शठः । सकम्पो हृदि रोगश्च मनोदुःखसमन्वितः ॥ १० ॥
शूद्रायां च वीर्यदानात्प्रागगर्भस्य वधात्पुनः । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वपापप्रणोदनीम् । पुत्रवृद्धिकरीं धन्यां लोकानां हितकाम्यया ॥ १२ ॥

श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भदोषसमुद्भवाम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चमितैः शुभा । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः ॥ १४ ॥
तदर्धार्धेन वा कार्या त्रिषु वित्तानुमानतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशनी ॥ १५ ॥
पञ्चमापमितं विष्णुं सर्वपापप्रणाशनम् । प्रजापतिं तथा दद्यात्सौवर्णं पञ्चमापकम् ॥ १६ ॥
गजतं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्रीं दशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्पपैः सतिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥

एवं कृतविधेः सूत सर्वपापविनाशनम्। तस्य पुत्रविशुद्धिः स्यादिह जन्मनि जायते ॥ १९ ॥
अकृते न यथाशक्त्या प्रायश्चित्ते यथोचिते ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्यधिकचतुःशततमः ॥ ४८३ ॥

श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मनि त्वकोविदः। ग्रामवासी सदा सौम्यः शलद्वृत्तिकोऽण्डज ॥ १ ॥
शूद्रकन्या च तेनैव हृता षोडशवार्षिकी। मुक्तातिकाममकुर्वेन बलात्कारेण दूषिता ॥ २ ॥
स चाथ सूर्यपुत्रस्य भुक्त्वा भैरवशासनम्। पूजनाच्छिवलिङ्गानां प्राग्भवेऽपि च संकरः ॥ ३ ॥
पण्ढस्तेन विपाकेन प्राप्तसर्वमनोरथः। राजप्रचारको धीमान्गजाश्वपरिपालकः ॥ ४ ॥
महाधनो महोत्साहो महाविभवविस्तरः। मृत्युश्चास्यात्र गङ्गायां पुण्याच्च शिवपूजनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चात्र सद्गतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकचतुःशततमः ॥ ४८४ ॥

श्रीसूर्य उवाच।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि। यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय पतत्त्रिण। न पश्यति महापीडां पापजां पादसंभवाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकचतुःशततमः ॥ ४८५ ॥

श्रीसूर्य उवाच।

यो घातयेदजां ज्ञानात्प्राग्भवे विनतासुत। भक्षार्थं सोऽत्र जनुषि पुरुषोऽङ्गाधिको भवेत् ॥ १ ॥
न तस्य निष्कृतिर्दुष्टपापस्यात्र च काश्यप। प्रारब्धस्य क्षयो नास्ति विन्मये शतधा कृते ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकचतुःशततमः ॥ ४८६ ॥

श्रीसूर्य उवाच।

अभवत्प्राग्भवे विप्रो ग्रामवासी जनाश्रितः। चौराविप्रो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत। गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान् पापात्पुण्याच्च शाश्वतान्। स्वर्गान्पर्वतभागेऽत्र स जातो बाहुजोऽधुना ॥
वामनो राजसन्मानी महोग्रो मन्त्रपारगः। पुत्रहीनोऽप्यसौ सूत परवित्तस्य लुण्ठनात् ॥ ४ ॥
भवन्त्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः। प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान्। तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोऽण्डज। गदं व्रतं चरेत्पश्चात्सर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्यात्तत्पुत्रवर्धनम् ॥ ८ ॥
आयुश्चाष्टाधिकाऽशीतिः समानां कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्यधिकचतुःशततमः ॥ ४८७ ॥

अरुण उवाच।

क्षात्रवंशे समुत्पन्नो वातदेहो रुजाकरः। गुल्माद्या उदरे बाधाः शिरोऽर्तिश्च पुनस्तदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किंचित्क्षेत्रादिना भवेत्। तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् ॥२॥

तीर्थमृत्युप्रसादाच्च धनपुत्रसमन्वितः । युवभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशसम्मितम् । लिखितां च विधानेन पूजयित्वा विधानतः ॥ ५ ॥
सा देया वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं वायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्त्या भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिना चेत्थं सर्वदोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकचतुःशततमः ॥ ४८१ ॥

---

## श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । सा तत्र पुरुषं वापि घातार्थमुपदर्शयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वस्थानात्पाताच्च वैकृता । पादभङ्गो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥
कथं वा कस्य पापस्य निष्कृतिं विधिना चरेत् । यस्माद्रोगात्प्रमुच्येत चोर्ध्वपातभवात्तथा ॥ ३ ॥
अर्धं निष्कसुवर्णाढ्यं निर्मयं पापशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकचतुःशततमः ॥ ४८२ ॥

---

## श्रीसूर्य उवाच ।

आसीत्क्षत्री महाभाग पाञ्चाले देशके शुभे । नानाधर्मसमायुक्ते ग्रामे यो विश्रुतो महान् ॥ १ ॥
दुष्कर्माचरितं तेन भाविनोऽर्थस्य वै बलात् । शूद्राया धारितो गर्भः कामयुग्येन निश्चयः ॥ २ ॥
कृतं यत्नं महत्तत्र नासीद्गर्भस्य पातनम् । तया हालाहलं पीतं लोकशङ्कातुरा मृता ॥ ३ ॥
गर्भपीडावशाद्गर्भाद्बालकोऽपि मृतस्ततः । सहायपञ्चयुक्तेन कृतं साकर्म दारुणम् ॥ ४ ॥
कर्मणा संप्रदृश्यायं गर्भनाशसमुद्भवः । ततोऽसौ मरणं प्राप्तो बाहुजः ससहायकः ॥ ५ ॥
स्वर्गलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्नरकान्भुक्त्वा स्वार्जितान्दृढकर्मजान् ॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । स जातो यमुनातीरे बाहुजोऽप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लम्बश्च धनसौख्यसमन्वितः । पितृभ्रातृविहीनश्च लोभमोहरतः सदा ॥ ८ ॥
नैकस्त्रीसंवृतः कामी नानाविभवविस्तरः । आद्यन्तसुखयुक्तश्च बुद्धिमान्देशविश्रुतः ॥ ९ ॥
धर्माढ्यं तथा पापाढ्यः पापरतः शठः । सकन्यो हृदि रोगश्च मनोदुःखसमन्वितः ॥ १० ॥
शूद्राया च वीर्यदानात्प्रागगर्भस्य वधात्पुनः । ईदृक्षं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

## अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वपापापनोदनीम् । पुत्रवृद्धिकरीं धन्यां लोकानां हितकाम्यया ॥ १२ ॥

## श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भदोषसमुद्भवाम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चमितैः शुभा । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः ॥ १४ ॥
तदर्धार्धेन वा कार्या त्रिषु वित्तानुमानतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशिनी ॥ १५ ॥
पञ्चमापमितं विष्णुं सर्वपापप्रणाशनम् । प्रजापतिं तथा दद्यात्सौवर्णं पञ्चमापकम् ॥ १६ ॥
गजं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्रीं दशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्पिषैः सतिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥

एवं कृतविधेः सूत सर्वपापविनाशनम्। तस्य पुत्रविशुद्धिः स्यादिह जन्मनि जायते ॥ १९ ॥
अकृते न यथाशक्त्या प्रायश्चित्ते यथोचिते ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्यधिकचतुःशततमः ॥ ४८३ ॥

श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मनि ह्यकोविदः। ग्रामवासी सदा सौम्यः शनद्रुनिकटेऽण्डज ॥ १ ॥
शूद्रकन्या च तेनैव हृद्या षोडशवार्षिकी। भुक्तातिकाममुग्धेन बलात्कारेण दूषिता ॥ २ ॥
स चाथ सूर्यपुत्रस्य भुक्त्वा भैरवशासनम्। पूजनाच्छिवलिङ्गानां प्राग्भवेऽपि च संकरः ॥ ३ ॥
षण्ढस्तेन विपाकेन प्राप्तसर्वमनोरथः। राजप्रचारको धीमान्गजाश्वपशुपालकः ॥ ४ ॥
महाधनो महोत्साहो महाविभवविस्तरः। मृत्युश्चास्यात्र गङ्गायां पुण्याच्च शिवपूजनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चात्र सद्गतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकचतुःशततमः ॥ ४८४ ॥

श्रीसूर्य उवाच।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि। यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय पतत्त्रिण। न पश्यति महापीडां पापजां पादसंभवाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशीत्यधिकचतुःशततमः ॥ ४८५ ॥

श्रीसूर्य उवाच।

यो घातयेद्गजं ज्ञानात्प्राग्भवे विनतासुत। भक्षार्थं सोऽत्र जनुषि पुरुषोऽङ्गाधिको भवेत् ॥ १ ॥
न तस्य निष्कृतिर्दुष्टपापस्यात्र च काश्यप। प्रारब्धस्य क्षयो नास्ति विस्मये शतधा कृते ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकचतुःशततमः ॥ ४८६ ॥

श्रीसूर्य उवाच।

अभवत्प्राग्भवे विप्रो ग्रामवासी जनाश्रितः। नागाधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत। गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान् पापात्पुण्याच्च शाश्वतान्। स्वर्गान्पर्वतभागेऽत्र स जातो बाहुजोऽधुना ॥
वामनो राजसन्मानी महोग्रो मन्त्रपारगः। पुत्रहीनोऽप्यसौ सूत परवित्तस्य लुण्ठनात् ॥ ४ ॥
भवन्त्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः। प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान्। तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोऽण्डज। रौद्रं व्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्यात्तत्पुत्रवर्धनम् ॥ ८ ॥
आयुश्चाशाविरुद्धश्रीनिः समानां कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्यधिकचतुःशततमः ॥ ४८७ ॥

अरुण उवाच।

क्षात्रवंशे समुत्पन्नो वातदेहो रुजाकरः। गुल्माद्या उदरे बाधाः शिरोर्तिश्च पुनस्तनौ ॥ १ ॥
व्यापारो निष्फलस्तस्य किंचित्क्षेत्रादिना भवेत्। तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् ॥२॥

अन्योन्यद्वेषिभावाच्च किंचित्प्रीतिविवर्जिता । मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
गर्भस्तस्याः स्थिरीभूतो न प्रसूतिर्न पातनम् । केन पापप्रभावेण कथयस्व दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः । दानधर्मपरो नित्यं देवदेवपरायणः ॥ ५ ॥
अन्योन्यद्वेषिभावाच्च वर्तते च विधिस्ततः । कश्चिद्विप्रो धर्मपरो वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात् । तद्वित्तं ग्राहयामास शूद्रो म्लेच्छजनस्य च ॥७॥
लङ्घनाय मतिं चक्रे ब्राह्मणो भार्यया सह । भर्त्सनैस्तर्जनाद्यैस्तु तद्धनं च तदा हृतम् ॥ ८ ॥
कतिपयैरेव शूद्रेण चान्येभ्यो विनतासुत । म्लेच्छभयसमाक्रुष्टो ब्राह्मणः क्रोधसंयुतः ॥ ९ ॥
तदर्थमपि सम्भ्रान्त आत्मघातं चकार ह । गर्भयुक्ता च भार्या वै भर्तारं पृष्ठतोऽन्वगात् ॥१०॥
हृतं तस्यापि तत्सर्वं म्लेच्छराजेन तत्तदा । तावत्काले गते किंचिच्छूद्रो म्लेच्छेन घातितः ॥
प्राप्तस्ततो वै निरये वर्षायुतसहस्रशः । पाचितो नरके घोरे शूद्रो देहेन वै तदा ॥ १२ ॥
पश्चान्मानुषमापन्नो दानधर्मप्रभावतः । इदं जन्म तृतीयं तु शूद्रवंशसमुद्भवम् ॥ १३ ॥
तेन वै कर्मणा युक्तोऽप्यपत्यं नैव जायते ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया १५

श्रीसूर्य उवाच ।

तीर्थस्यावत्सरं सेवामेकचित्तेन दम्पती । श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १६ ॥
तावन्निष्कृतये भूय. क्रमेणानेन दम्पती । शुभेऽथ भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १७ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् । तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् ॥ १८ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम् । उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः ॥ १९ ॥
जनन्या सहितान्भूयः प्रद्युम्नाद्यांस्तथाऽर्चयेत् । चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ २० ॥
श्रीवत्साङ्कं पीतवस्त्रं सुचारुं पूजयेत्क्रमात् । पूजनं विष्णुसूक्तेन तथा श्रीरसिकोविदैः ॥ २१ ॥
पुष्पैः सुगन्धैर्धूपैश्चाप्यर्चयेद्विष्णुमर्हणैः । तद्विप्रासोय तद्विष्णोर्मन्त्रैरेतैश्च पूजयेत् ॥ २२ ॥
देवताऽग्निस्तथा विप्र एतं ते वाभिपद्भुतः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन च ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

"यन्मया पापभावेन कर्मान्धेन दुरात्मना । म्लेच्छराज्ये च व्यापारस्तथा वै दुष्कृतं कृतम् ॥२४॥
ब्राह्मणानां यद्द्रव्यं नीत्वा भर्त्सनताडनैः । भुक्तं तस्मान्महत्प्राप्तं दुःखं नानाभवान्तरे ॥२५॥
स्थिरगर्भमृतापत्यं प्राप्तं तत्कर्म दुःसहम् । तदेनोविनाशाय दानं संप्रददे त्विदम् " ॥ २६ ॥
स्वस्त्यस्त्विति च तत्रोक्ता कोऽस्मादिति विसर्जनम् । सर्पिष्यात्मानमालोक्य भोजयेदिष्टबान्धवान्
ऐहिकं लक्षणं तस्य शरीरे चोपजायते । हृद्दुःखं दीर्घनिःश्वासो लोचने साश्रुकाङ्गिते ॥ २८ ॥
काष्ठलोष्टकुशाद्यर्घातः स्यादुपलेखनात् । गलाकुलत्वं स्पर्शोऽग्निस्तादृशो व्रणसंभवः ॥ २९ ॥
भ्रूणोऽङ्गे विकृतिर्व्याधिर्मुखे व्रणतिलादिकम् । पत्न्याधिर्मातुलानीनां वैधव्यार्तिः स्वसादिषु ॥३०॥
स्वकुले प्रेतजा पीडा दुःखं वै पञ्चपत्यजम् । कर्मानुसारो वै व्याधिश्चिह्नं तस्य सहायकम् ॥ ३१ ॥
स्वकुले केऽपि वर्तन्ते पतिताचारचारिणः । एवं तु लक्षणैर्व्याप्तं प्रायश्चित्तं ततो वदेत् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्यधिकचतुःशततमः ॥ ४८८ ॥

श्रीसूर्य उवाच ।

पूर्वं आभीरजा काचिदभूद्धर्मपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां मेरितास्तया । निदाघकाले संप्राप्ते वहिर्ग्रामाज्जलाशये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नपि जलाशये । शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्ता भृशं गावो लगुडेन दृढेन वै । तत्रैका तृषिता वापि वारिता च भृशं तया ॥ ४ ॥
न च त्यक्तं जलं सूत गर्भभारान्विता यतः । तस्मिन्काले तदा सूत पतितो गर्भसंस्थितः ॥ ५ ॥
वत्सस्तत्ताडनाद्दुष्टान्मृतश्चापि च तत्क्षणात् । विचेष्टितमिदं यस्याः सैषा वेश्याङ्गनाऽधुना ॥ ६ ॥
नानाविभूतिसंयुक्ता नानापशुभिरन्विता । सुखभोगधनैश्वर्यभूतिभिश्चान्विता सुत ॥ ७ ॥
प्राग्गोसेवनजात्पुण्यात्सर्वं पुण्यफलं त्विदम् । एवं वर्षत्रयं यावन्मोचयिष्यति वै सुत ॥ ८ ॥
रिष्टमब्दत्रये सूत वालवत्सवधादिह ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पाप क्षयो भवेत् । उपकाराय लोकानां देव त्वं सर्वदर्शकः ॥ १० ॥

श्रीसूर्य उवाच ।

दद्याद्वां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोपशमनाय च ॥ ११ ॥
सुवर्णार्द्धमितां तद्वल्लेख्यां गां गर्भसंयुताम् । दद्याद्वेदविधिज्ञाय पूर्वपापात्प्रमुच्यते ॥ १२ ॥
भोजयेत्तु यथाशक्त्या विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषान्नात्र कार्या विचारणा॥१३॥

इति श्रीसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोननवत्यधिकचतुःशततमः ॥ ४८९ ॥

श्रीसूर्य उवाच ।

बभूव पादजः कश्चिद् गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिरतो नित्यं दानानि विधिपूर्वकम् । दत्तानि तेन विप्रेभ्यो ब्राह्मणेभ्योऽपि शक्तितः॥२॥
देवाच्छत्रुगृहं गत्वा कृतं कर्म रुपा किल । वैरिपुत्रः पुरा सूत पादभागेषु घातितः ॥ ३ ॥
कुन्तेनापि च तीक्ष्णेन दिवा वै शौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता शोकपुत्रिणी ॥ ४ ॥
पुत्रदुःखान्मृता सापि ददौ शापं हि दारुणम् । यथा पुत्रविहीनाऽहं गच्छामि यमशासनम् ॥५ ॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । तथा बहुविधे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो सुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे नृपे चंद्रयुते सुत । श्यामाङ्गो धूसरः क्षीणः प्रभुर्दशनो रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रे प्रियवदान्वितः । मानभोगसुखाढ्यश्च मितदो लोभसंयुतः ॥ ९ ॥
धर्मात्सर्वं फलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसाविह जन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मातरं च सौवर्णपलैकेन मितां शुभाम् । पत्रे लेख्यां यथाकारां यथोपस्करसंयुताम् ॥ १३ ॥
पूजयित्वा तु गन्धाद्यैः षोडशोरुपचारकैः । सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने ॥१४॥
पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् । तथैव गणनाथं च लेख्यं पञ्चोपचारकैः ॥ १५ ॥
संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये । अष्टाक्षरं तथा मन्त्रं वैदिकं सूर्यदैवतम् ॥ १६ ॥
जपेदष्टसहस्रं तु यथा प्रणवपूर्वकम् । गायत्रीं पञ्चसाहस्रं जपेत्पापविशोधनीम् ॥ १७ ॥

कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् । एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि ॥ १८ ॥
न प्राप्नोति तदा रिष्टं पङ्क्तिशब्दं प्रकीर्तितम् । पञ्चवेदमितान्द्रान्तमायुस्तस्य प्रकीर्तितम् ॥१९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकचतुःशततमः ॥ ४९० ॥

श्रीसूर्य उवाच ।

अज्ञानादपर्वायश्च पूर्वजन्मन्यजासुतम् । भविष्यत्यत्र पुरुषो ह्यधिकाङ्गयुतस्तदा ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजामेकं च वस्त्राढ्यं मुच्यते महदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकचतुःशततम. ॥ ४९१ ॥

श्रीसूर्य उवाच ।

लोहहारी च पुरुष इह जन्मनि जायते । वर्वराङ्गाख्यरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं तत्पापनाशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकचतुःशततम. ॥ ४९२ ॥

श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीच्छुभानना । प्राग्भवेऽण्डज तत्सर्वं चेष्टितं शृणु साम्प्रतम् ॥ १ ॥
नकुलानां बिलं कृत्वातितरां किल वालुकम् । पूरितं च तया सर्वं तद्धातार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । साऽपि मृत्युवशं प्राप्ता भुक्त्वा तु यमशासनम् ॥ ३ ॥
पूर्वं शतद्रुके देशे त्वत्र च पर्वते । पूर्वं राजकुले जाताऽत्रापि राजकुले सुत ॥ ४ ॥
प्राग्दानप्रभवात्पुण्यादयो पापफलं शृणु । सर्वे तद्वंशजाः सुत तद्ये मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च वर्षाण्यष्टोत्तरं शतम् । न मुच्यते महापापाद्दशजन्मशतैरपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति सांप्रतम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकचतुःशततमः ॥ ४९३ ॥

श्रीसूर्य उवाच ।

लोहं हरति यान्यस्य सूत बुद्धिविवर्जिता । अत्र जन्मनि सा सुत वर्वराङ्गान्विता भवेत् ॥ १ ॥
दद्याच्छतपलं लोहं ससुवर्णं द्विजातये । मुच्यते पापजाद्रोगाद्वर्वराङ्गाभिधात्सुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्णवत्यधिकचतुःशततमः ॥ ४९४ ॥

श्रीसूर्य उवाच ।

मोहात्प्राग्याऽधीत्सूत नार्यजं विधिवर्जितम् । साङ्गाधिकात्र जनुषि भविष्यति वरानना ॥ १ ॥
अत्र दद्याद्विधानेन कस्तूरीपलसंयुतम् । सवस्त्रं वेदविदुषे तद्दोषशमनं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चनवत्यधिकचतुःशततमः ॥ ४९५ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयः । वित्तमः कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
समुपेतो धनैर्धान्यैः किंचिद्व्यापारवान्भुवि । दायादाच्छत्रुवत्पीडा मिथः क्लेशश्च जायते ॥ २ ॥
नारीद्वयं च तस्यापि संजातं चात्र जन्मनि । बहुपुत्र्यः प्रसूताश्च न तु पुत्रः प्रजायते ॥ ३ ॥
कदाचिज्जातमात्रस्तु मृतः पुत्रोऽग्निपासकः । एका पुष्पवती भार्या संजाता तस्य भास्कर ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय मे विभो ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि क्षात्रस्तु किंचिद्भूमिपतिस्तथा। अर्थबुद्धिर्यौवनाढ्यो ग्रामाधीशः प्रतापवान् ॥ ६ ॥
ग्राममध्ये स्थितिं चक्रे ब्राह्मणो ज्ञानसत्तमः। पुत्र्यः पञ्च तथा सप्त ह्यपुत्रो वित्तसंयुतः ॥ ७ ॥
कालेन मृत्युमापन्नो धनलुब्धो निरामयः। तस्य भार्या महासाध्वी साहसं कृतवान्खग ॥ ८ ॥
क्रिया कर्मविधानार्थं तया दत्तं धनं खग। मृता पुनः क्षात्रियेण तस्य नीतं धनं सुत ॥ ९ ॥
निराधारा सुताहीनाः पित्रा मात्रा सुदुःखिताः। सर्वस्वहरणाद्धापि मृताः कन्या इतस्ततः ॥१०॥
मातृपक्षे गता काचित्काचिद्दै पैतृके खग। ब्रह्मस्वस्तद्गृहस्यात्र सञ्जातः किल कर्मणा ॥ ११ ॥
यो वै क्षात्रगृहे पुत्रो ब्राह्मणः स तु जायते। योऽत्र न ब्यो मृतः पुत्रो धनलुब्धः स एति वै॥१२॥
एवं पुत्र ऋणीभूते तत्काल ऋणमाप्यते। ब्रह्मस्वहरणादेवं पुत्रपुत्रीमृतिः सदा ॥ १३ ॥
पुरा कृतानि कर्माणि भुज्यन्ते चेह मानवैः। तेन कर्मविपाकेन कन्यापत्यं मृतं सुत ॥ १४ ॥
तस्य पापस्य नाशाय निष्कृतिः क्रियते शुभा। शुभे त्ववसरे प्राप्ते ह्ययने शुभवासरे ॥ १५ ॥
प्रारभेद्धरिभक्तश्च संवत्सरविधिं त्विह। प्रत्यहं परमेशानं विष्णुमव्यक्तमव्ययम् ॥ १६ ॥
पौरुषेणेह सूक्तेन अर्चयेन्मासमेव च। कुंकुमागरुकर्पूरैश्चन्दनैस्तुलसीदलैः ॥ १७ ॥
अर्चयेद्विविधैः पुष्पैरुपचारैः पृथक्पृथक्। भौमाप्यनाभसस्तेजोवायव्यैः पञ्चभिस्तथा ॥ १८ ॥
एवं व्रतपरा नारी भर्तृभक्तिपरायणा। अर्चयन्ती हरिं पूर्णे वर्षावधिमथाचरेत् ॥ १९ ॥
शुभे मासे शुभे पक्षे चैकादश्यामुपोषिता। शुभनक्षत्रयुक्तायां द्वादश्यां पुत्रकाम्यया ॥ २० ॥
पूर्ववद्धरिमभ्यर्च्य ऋचां षोडशभिः प्रभुम्। विधिवद्वह्निमास्थाय ह्यर्चयेद्वैष्णवं चरुम् ॥ २१ ॥
आज्यभागावसानेन कपिलाज्याहुतिर्हविः। पौरुषेण च सूक्तेन यावत्षोडशसंख्यया ॥ २२ ॥
अश्वत्थसमिधस्तिस्रो जुहुयात्षोडशैव तु। पुनराज्यं ततो हुत्वा जुहुयाच्च चरोरपि ॥ २३ ॥
होमान्ते द्विजभोजान्ते दानमेतत्समाचरेत्। हिरण्यभूमिवासांसि धेनुं वत्ससमन्विताम् ॥ २४ ॥
विप्रस्योद्वाहनं कृत्वा कन्यां सालंकृतामपि। दक्षिणां प्रतिपाद्याथ च्छलकौटिल्यवर्जिताम्॥२५॥
प्राश्नीयान्तं हविःशेषं सह पत्न्या हरिं स्मरेत्। इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वैष्णवम्॥२६॥
सुभगा च सुरूपा च भवेद्विगतकिल्बिषा। ऐहिकं लक्षणं चिह्नं पूर्वकर्मानुसारतः ॥ २७ ॥
गुल्मार्शः उदरे बाधा गुदान्तवृषणान्तयः। वातरक्ताक्षिशिरसो नेत्रकर्णार्तितो व्रणः ॥ २८ ॥
स्तनोपर्गौरवं दद्रुर्गमने पादवैकृतम्। जनश्रुतिरभूत्तत्र ब्रुवते कारणं विना ॥ २९ ॥
हानिस्तु सर्ववस्तूनां द्रव्यनाशनजं भयम् ॥ ३० ॥

इति श्रीहरसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पण्णवत्यधिकचतुःशततमः ॥ ४९६ ॥

श्रीसूर्य उवाच।

अथ शूद्रकुले पूर्वमासीत्पुण्या वराङ्गना। हृष्टा दानरता जाता कुरुक्षेत्रे पतत्रिण ॥ १ ॥
सर्वैः सुखैः सदोपेता सर्वसंपत्तिसंयुता। तया कृतं महापापं भाविनोऽर्थस्य वै बलात् ॥ २ ॥
समीपे वासितस्यास्य ब्राह्मणस्य नवं गृहम्। निर्दग्धं चाग्निदाहेन वैरिभावे पतत्रिण ॥ ३ ॥
तत्र दग्धा महाभाग गौरपापा गृहान्तगा। कृत्वैतदद्भुतं कर्म भुक्ता तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्सात्र जाता हि बाहुजा। माथुरे मण्डले पुण्ये नृपलक्षोपलक्षिते ॥ ५ ॥

१ क्षात्रेण चिन्तयित्वेत्वं प्राप्तं जन्म सुतस्य न इति स्यात्। २ गता कन्या इति स्यात्। ३ तोऽर्हणः– इति ख० पु०।

सुखदुःखसमाक्रान्ता संततेर्जातनाशतः । दुःखैरनेकैर्युक्तात्र मध्यमवे खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गयायां पितृतर्पणम् । कुरुक्षेत्राधिवसनं प्राक्पापानां विनाशनम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तनवत्यधिकचतुःशततमः ॥ ४९७ ॥

### श्रीसूर्य उवाच ।

चक्रपादरुजा युक्तश्चात्र जन्मनि जायते । पूर्वजन्मनि यो मोहाद्वधेच्छ्वानं पतत्रिण ॥ १ ॥
निष्कत्रयं प्रदातव्यं सुवर्णं वेदपारगे । दानेनानेन विधिना पूर्वपापापनोदनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकचतुःशततमः ॥ ४९८ ॥

### श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दन्तपातनजाद्रोगात्पीडामाप्नोति निश्चयात् ॥ १ ॥
दंष्ट्राछेत्तुं सवत्सां च सर्वालंकारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचशततमः ॥ ४९९ ॥

### श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीड्यते ॥ १ ॥
तथा तत्पापशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपादविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचशततमः ॥ ५०० ॥

### श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता । क्षत्रजन्मनि दुःखार्ता दन्तपातजाद्रुकात् ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुम्बिने । प्राजापत्याद्व्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकपंचशततमः ॥ ५०१ ॥

### श्रीसूर्य उवाच ।

कश्चिद्दासीसुतो सूत चारणो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभवेऽण्डज । तत्र दानानि दत्तानि ब्राह्मणस्य करग्रहे ॥ २ ॥
तेन कश्चिन्महाभाग पापमाचरितं त्विदम् । स्वजात्यां वै धृतो गर्भः कामयुग्मेन निश्चितम् ॥३॥
यत्ने कृतेऽपि तेनैव नासीद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चाण्डज ॥ ४ ॥
एवं बहुतिथे काले गतः स यमशासनम् । भुक्त्वा पापफलं दुःखं पुण्याल्लोकान् शुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गोदावर्याः समीपे तु देशे रम्ये जलाशये ॥ ६ ॥
स रक्तकृष्णो मतिमान् दीर्घो मध्यो पृथुः सुधीः आदिभागे धनी भोगी मध्यमेऽन्त्येऽतिशोखभाक्
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्तातिसहितश्चात्र दाने स्वल्पमतिः शठः ॥८॥
स्वजात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लग्नेऽपदण्डजश्रेष्ठ जन्माल्लग्नात्पष्ठभावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहयुतनिरीक्षितः । लक्षणैरभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः । संपूज्य वेदविदुषे दद्यात्सेोपापनुत्तये ॥ १२ ॥
माषैः सप्तमितैर्देयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यम्बकं तु सहस्रकम् ॥१३॥

होमयेत्तद्दशांशेन कपिलां गां प्रदापयेत्। य एवं कुरुते सुत प्रायश्चित्ताघनाशनम् ॥ १४
तस्य पुत्रविवृद्धिश्च जन्मन्यत्रैव जायते। नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥ १५ ॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः। आयुरष्टाद्रिवर्षाणि प्रायश्चित्ते कृतेऽधुना ॥ १६ ॥
प्रायश्चित्ते कृते रिष्टं पश्चाच्छान्तिमितिकेऽब्दके ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकपंचशततमः ॥ ५०२ ॥

श्रीसूर्य उवाच।

यश्च बभ्रुं महाभाग हन्यान्मोहान्नराधिपः। बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयसुवर्णस्य कृत्वाथ नकुलं शुभम्। चक्षुरोगविनाशार्थं ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकपंचशततमः ॥ ५०३ ॥

श्रीसूर्य उवाच।

काचिच्चारणजा नारी बभूव प्रियवादिनी। व्रतदानरता साध्वी पूर्वजन्मनि चाण्डज ॥ १ ॥
तया ग्रामात्ततो गत्वा निर्दग्धं गह्वरं वनम्। निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य तज्ज्ञानितं व्रतम्। तत्र दानवशात्पूर्वादत्र सा पादजा स्मृता ॥ ३ ॥
जीवघातात्तया पूर्वोत्पापादत्रैव जन्मनि। जातसंततिहीना सा कुष्ठरोगेण पीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन संपद्यते सुखम्। गृहवित्तषडंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपा गृहोरगाः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकपंचशततमः ॥ ५०४ ॥

श्रीसूर्य उवाच।

शशघाती महाभाग कुब्जकर्णो प्रजायते। निष्कृतिं तस्य पापस्य शृणुष्वात्र पतत्रिण ॥ १ ॥
शक्तया सोपस्करां दद्याद्वेदवेदाङ्गपारगे। तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाधिकपंचशततमः ॥ ५०५ ॥

श्रीसूर्य उवाच।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः। द्विजानां पूजको दक्षः सिन्धुमण्डलजोऽण्डज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्तत्कृतं कर्म चाधमम्। स्वपत्नी स्थापिता पण्यशालायां हि पतत्रिण ॥२॥
पण्यस्त्रीकर्मतश्चासौ चकार चोपजीवनम्। ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतश्चात्र जन्मन्यस्मिं च पर्वते। शूद्राधमोऽथ वै षण्ढः पूर्वपापाच्छृणुष्व तत् ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्द्विजात्सुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकपंचशततमः ॥ ५०६ ॥

श्रीसूर्य उवाच।

या नारी नकुलं पूर्वं निहन्ति विनतासुत। सात्र जन्मनि रोगेण बभ्रुमण्डलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम्। तद्रोगनाशनं दद्याद्बभ्रुं निष्कद्वयस्य च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकपंचशततमः ॥ ५०७ ॥

अरुण उवाच ।

कश्चित्क्षत्रकुले जातो वातरोगेण पीडितः । नानासंभिन्नवा वाया उदरार्तिः प्रजायते ॥ १ ॥
मेहार्त्तः सर्वदा सोऽयं नेत्रे तोदो विरम्भिता । कटिपृष्ठोरुवंशेषु वाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया व्रतचारिणी । सौभाग्यसुरसंपन्ना पितृमातृसुखोज्झिता ॥ ३ ॥
केन संततिहीना च कर्मणा लिप्यते कथम् ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वे वर्णान्तरे जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय चौर्यकर्मणि तत्परः ॥ ५ ॥
दिनान्तामन्तरे प्राप्ते कश्चिद्विप्रः समागतः । गृहीतं तेन सर्वस्वं यत्किंचिच्चार्जनं कृतम् ॥ ६ ॥
तेनैव निहतो विप्रस्तस्करेण दुरात्मना । तस्करोऽसौ मृतश्चापि जातश्च वनपन्नगः ॥ ७ ॥
॥ पश्चान्नरके घोरे पतितोऽयुतसंख्यया । पश्चान्मानुषमापन्नः किंचित्पुण्यप्रभावतः ॥ ८ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । इदं जन्म चतुर्थं तु वन्ध्यत्वं चोपजायते ॥ ९ ॥
व्यभिचारवशात्सोऽपि तस्करः पूर्वजन्मनि । तेन कर्मविपाकेन स्त्रीपुंसोर्जातवानिह ॥ १० ॥
पुत्रहानिर्भवेत्तस्य वन्ध्यत्वं जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

शुभे स्ववसरे मासे शुभतीर्थादिसंगमे । विधिवद्विहितं पूर्वं कृतं स्मृत्याभिभाषितम् ॥ १२ ॥
विप्रस्योद्वाहनं कृत्वा गृहदानं यथाविधि । धनधान्यादिकं दत्त्वा तोषयेद्विप्रयाजकान् ॥ १३ ॥
विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणे तथा । पुण्याहे विधिना विप्रेदनपत्यावनागमम् ॥ १४ ॥
सुशुभे भूप्रदेशे तु समे धन्वन्तविस्तृते । विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम् ॥ १५ ॥
परितो रत्नपात्रं तु द्रोणमानं सतण्डुलम् । विदध्यात्पर्वतावेव देवद्रुमविभूषितौ ॥ १६ ॥
ततस्तौ दम्पती शुद्धौ स्नात्वाऽऽश्वाहतवाससौ। दधानौ शुभवेषाढ्यौ चिन्तयानौ प्रजापतिम्॥१७॥
सूर्योदये ततो यत्नात्कुर्यान्मूर्तिं प्रजापतेः । सुवर्णशुद्धवर्णस्य निष्कद्वयविनिर्मिताम् ॥ १८ ॥
हेमयज्ञोपवीता च साक्षमालाकमण्डलुम् । अदितेरपि केयूरहारग्रैवेयभूषिताम् ॥ १९ ॥
तदर्धार्धविभागेन तनौ तस्याः शुभाकृतिम् । स शैवीमर्चयेन्मूर्तिं विष्णोर्वामनरूपिणः ॥ २० ॥
तन्मूर्तिंत्रितयं सम्यक्कृतसंस्कारमर्चयेत् । कृत्वा प्रतिष्ठितप्राणं ज्ञानकर्माय पुंस्त्रियोः ॥ २१ ॥
बाललीलापरं विष्णुं वामनं प्रतिचिन्तयेत् । मातरं द्रष्टुमिच्छन्तं हरिं तत्स्तनकाङ्क्षया ॥२२॥
ततस्तदाश्रमतटात्सुमेरोऽस्तितलपर्वतात् । वामनमनुगच्छन्तीं मार्गेस्तत्पदभूषितैः ॥ २३ ॥
अदितिं नमपश्यन्तीं विरहाकुलचेतसा । रुदतीमिति तद्दृष्टुमाह्वयंतीं परान्मुनीन् ॥ २४ ॥
एवं ध्यात्वाथ तां मन्त्रैर्मन्त्रार्थोदितलक्षणाम् । पुष्पस्रग्धूपगन्धाद्यैरर्चयेददितिविह्वलाम् ॥ २५ ॥
तद्विप्रासोऽथ तद्विष्णोर्विष्णोः कर्माणि पश्यनः । ततस्तां वैष्णवीं मूर्तिमातुस्त्सङ्गगामिनीम्॥२६॥
कृत्वा तस्याः प्रतिष्ठां तां लब्धपुत्रां विचिन्तयेत् । अपश्यन्तमिमं मन्त्रं मन्त्रार्थकृतलक्षणम्॥२७॥
संयुक्तः सहितां देवीमर्चयेद्द्विविधैर्गुणैः । ततो ब्राह्मणमध्ये तु समाहूय गुणान्विताम् ॥ २८ ॥
तस्मै तां प्रतिमां दद्यात्सपुत्रामदितेः सुताम् । यन्मया निहतो विप्रो धनं हृत्वा घने वने ॥२९॥

१ तस्मिन्नयनस्तुतारक इति-ग्पु० । २ माह्वयन्तीं च तान्मुनीन् इति-ख० पु० ।

संस्कारासंगमे पापं प्राप्तं मे चोल्वणं महत्। तस्य पापस्य नाशाय दानमेतद्ददाम्यहम् ॥ ३० ॥
सौवर्णीं प्रतिमामेनामनघेयं भवेदिति। भोजयेच्च शतं विप्रान् सर्पिष्पात्मानमीक्षयेत् ॥ ३१ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टाधिकपंचशततमः ॥ १०८ ॥

श्रीसूर्य उवाच।

उलूकघातेन पूर्वं जन्मन्यत्र च पुत्रक। पाण्डुरोगेण सततं पीड्यते, वैः भवेच्छृणु ॥ १ ॥
कस्तूरिकापलं चैकं दद्याद्विप्राय पर्वणि। उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तत्पापस्योपशमने पाण्डुरोगो विनश्यति ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो नवाधिकपंचशततमः ॥ १०९ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचिदुलूकं पूर्वजन्मनि। पाण्डुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यादन्न विधिज्ञाय पलमेकं पतत्रिण। कस्तूरिकाया विप्रस्य पाण्डुरुङ्नाशनं परम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो दशाधिकपंचशततमः ॥ ११० ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु प्रायकर्मणः फलम्। कश्चिच्छ्रेष्ठो कलिङ्गेऽभूद्द्विजो धर्मक्रियापरः ॥ १ ॥
बहुस्त्रीबलसंयुक्तो गोधनैश्च समन्वितः। गङ्गायां कृतवाञ्छ्राद्धं श्रद्धाविधिसमन्वितम् ॥ २ ॥
सततं कृतवान्पापं काममोढ्यान्नसंशयः। ज्येष्ठां त्यक्त्वा ऋतुमासां धर्मिष्ठां प्रियवादिनीम् ॥३॥
रतिं ददौ कनिष्ठायां याचितः स्त्रीविमोहितः। अजीवत्स चिरं कालं पश्चान्मृत्युमवाप्तवान् ॥ ४ ॥
शुभाशुभफलं भुक्त्वा पापान्नरकयातनाः। गयाश्राद्धप्रभावेण जातोऽत्रापि च वै द्विजः ॥ ५ ॥
देशे रम्यस्थले पुण्ये नदे लोहितसंज्ञके। भव्यरूपः प्रियायुक्तो धनबुद्धिसमन्वितः ॥ ६ ॥
शुभादिदं तथा पापात्ततो दुःखसमन्वितः। मुलदर्भः शाद्यमानैश्च प्रलेपैर्दुष्टभक्षणैः ॥ ७ ॥
संवाहनैस्तथा पानैरन्यैर्वा वस्तिकर्मभिः। गर्भस्य पातनोपायमकरोत्स विमोहितः ॥ ८ ॥
पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः। नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि ॥ ९ ॥
पूर्वं वैश्यकुले जाता सपत्नीसहिता खग। अनया चेर्ष्यया चैव संततेर्नाशनाय च ॥ १० ॥
औषधस्छेदनार्थेस्तु तस्यार्थे कल्पितं गदम्। सपत्न्यै प्रेरयामास विविधं चैव तं गदम् ॥ ११॥
तया वा त्वृतुभावाच्च शीघ्रं पीतं तदौषधम्। पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद ॥१२॥
ऋतावृत्तौ च संप्राप्ते जाता सा विविधा रुजाः। जाता वै वेदना नित्यमसृग्वालोदरामयः ॥१३॥
पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भपातनम्। एतत्कर्म कृतं चैव विविधं गर्भदोषकृत् ॥ १४ ॥
तथापि फलहन्तॄणां द्वितीयं सुकृतं चरेत्। ऋजुभावाद्दुष्टबुद्ध्या कृतं वै पूर्वजन्मनि ॥ १५ ॥
तेन वै कर्मणा वत्स विविधं पुष्पबन्धनम्। गर्भाशयमविश्रित्य स्रवते शोणितं बहु ॥ १६ ॥
छिद्यन्ति इव चान्त्राणि सूचीभिरिव तुद्यते। वेदना या पुरा भगवन्स्त्रीणां गर्भनिपातने॥ १७ ॥
यावत्कालप्रदेशीयं तासां गर्भमपातयत्। तावानेव च तद्गर्भः पतेद्वा नाशसंभवः ॥ १८ ॥
एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत्। एकवासा विधिं चैव दम्पती तीर्थसंगमे ॥ १९ ॥

१ आर्षत्वात्सन्धिदोष उपेक्षणीयः।

सुशुभे भूप्रदेशे तु पुराणोक्तविधानतः । एतन्नाशाय दुष्टस्य प्रायश्चित्तमिहैनसः ॥ २० ॥
प्रौष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् । यत्नेन गार्भिकं सम्यक्सुपोषणपरायणः ॥ २१ ॥
पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियम् । केतकीगर्भसंयुक्तैश्चम्पकैः कुमुदोत्पलैः ॥ २२ ॥
सौवर्णीं राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् । हारनूपुरमुकुटकुण्डलाभरणादिकम् ॥ २३ ॥
नैवेद्यैः शुभ्रकासारमोदकापूपपायसैः । उपतिष्ठेत विधिवद्भवानीं प्रियवल्लभाम् ॥ २४ ॥
पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिताम् । रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम् ॥ २५ ॥
फलैर्नानाविधैरर्घ्यं दद्यान्मंत्रपुरःसरम् । फलपुष्पाक्षतोपेतैरञ्जनं मूर्ध्नि निक्षिपेत् ॥ २६ ॥

मन्त्रः ।

"नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये । गृहाणार्घ्यमिमं देहि पुत्रान्मह्यं यशस्विनः" ॥२७॥
पतिपुत्रवती नारी गिरिजावत्प्रसूयते । एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम् ॥ २८ ॥
ततः प्रभाते विमले कृतप्रातःक्रिया सती । देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः ॥ २९ ॥
नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश । प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम् ॥ ३० ॥
सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् । दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया ॥ ३१ ॥
सगर्भां च वृषोपेतां सितां गां वस्त्रसंयुताम् । सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ ३२ ॥

मन्त्रः ।

"अपातय पुरा गर्भं दुष्टस्त्रीणामुपार्जितम् । पापायं वन्ध्यताहेतुस्तस्मान्मुच्याय चाम्बिके ॥ ३३॥
तव दानेन पुत्रा मे भवेयं सुभगा सती" । इमं मन्त्रं समुच्चार्य दत्त्वा विप्रं विसर्जयेत् ॥ ३४ ॥
एवं व्रतपरायास्तु गर्भपातो न जायते । मुच्यते गुरुपापाद्या स्वपत्या सह मोदते ॥ ३५ ॥
न लभेद्गर्भपातं सा पतिपुत्रा सुखं च न । तृतीये वा चतुर्थे वा मासि गर्भस्य धारणम् ॥ ३६ ॥
रजस्तस्य पलाभ्यां वै कोष्ठं गर्भाशयाकृतिम् । निष्कं च स्वर्णगर्भं च कृत्वा दत्त्वा द्विजन्मने ३७
गर्भपातं प्रकुर्वन्त्या मया प्राक्तनजन्मनि । यदघं वन्ध्यकृत्पापं तस्मान्मुच्ये पतिव्रता ॥ ३८ ॥
जन्मजात्यादिकं वत्स तव चेदिह कर्मणाम् । इदं कर्म चतुर्थं तु भूमिदेवकुलोद्भवे ॥ ३९ ॥
सपत्नीसहिता चैषा न सा गर्भस्य दोषकृत् । तस्येदमपि संचिन्त्य लक्षणानीह जन्मनि ॥ ४० ॥
यस्याः प्राक्पतितो गर्भः सपत्न्याः पतिवर्जितः । दीनानाथविरोधः स्यात्सविरोधा तथा सुतः ४१
अनुमन्त्रिप्रयोक्ता सा पितृमातृकुलोज्झिता । बन्धुसंततिदुःखी स्यान्मर्यादाधनवर्जिता ॥ ४२ ॥
शोकः स्यादुदरे बाधा तावत्स्त्रीहादिविभ्रमः । अन्तरास्यन्दमानो वा गर्भः सस्योपलक्षितः ॥ ४३ ॥
पाणौ मुष्टितलाघाताज्जानुना सविषजानुनी । दोषजो वाग्मिजो वापि शस्त्रजोन्मादजोऽपि वा ४४
ब्राह्मणान् भोजयेद्भक्त्या सर्पिष्यात्मानमीक्षयेत् ॥ ४५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकपञ्चशततम ॥ ५११ ॥

श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सूत वाधितो भूमिलोभतः ॥ १ ॥
सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् । तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तथा तिर्यक्त्वं च सुत विशुद्ध्याधर्मतः स्वयम् । कर्मक्षयेऽथ पुण्यात्प्राक् सोऽत्र जातो हि वाडुजः ॥ ३ ॥
क्षयरोगयुतः सूत कृशो दुःखातुरो भृशम् । लग्ने कुम्भाभिधे सूत भौमचन्द्रयुतेऽण्डज ॥ ४ ॥

रिष्टं षष्टिमिते वर्षं जायते कृतनिष्कृतेः । सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तदग्रे ते मृताश्चात्र पुत्राः क्षयरुजान्विताः । रिष्टेन चायुषो भङ्गो दृढपापान्न निष्कृतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशाधिकपंचशततमः ॥ ९१२ ॥

## श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः । गत्वा शत्रुपुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह तत्पुरं शत्रोस्तत्क्षणे लुण्ठितः पुनः । तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम् । अथो यमाज्ञया सर्वा भुक्त्वा नरकयातनाः ॥ ३ ॥
पुण्यशेषादयाऽत्रापि स जातः क्षत्रियाधरः । देशेऽयोध्याभिधे गौरो लघुदंशो महोद्यमी ॥ ४ ॥
युवभावे महाभाग राजयक्ष्मप्रपीडितः । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तत्प्रवक्ष्यामि यां कृत्वा मुच्यतेऽधुना । कार्या सुवर्णिता देव मूर्तयस्तु यथोदिताः ॥ ६ ॥
ब्रह्मविष्णुमहेशानां सर्वरोगविनाशकाः । सुवर्णजास्तथा कार्याः कदलीपत्रसंयुताः ॥ ७ ॥
यथावित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । देयास्ता विप्रमुख्येभ्यः क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृते महाबाहो क्षयस्तस्यात्र शाम्यति । नैवं कुर्यात्तु यो मोहाद्रिष्टं विंशन्मितेऽब्दके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रयोदशाधिकपंचशततमः ॥ ९१३ ॥

## श्रीसूर्य उवाच ।

या योषिदाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामथात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं मयोक्तं च पतत्रिण । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकपंचशततमः ॥ ९१४ ॥

## श्रीसूर्य उवाच ।

स्वसृघाती च पुरुषः पूर्वजन्मनि मानद । बधिरो जायते त्वत्र प्रायश्चित्तं च तच्छृणु ॥ १ ॥
चान्द्रायणं व्रतं कुर्यात्सुवर्णपलसंयुतम् । पुस्तकं विधिवद्दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्त्या होमयेच्च स्वशक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पंचदशाधिकपंचशततमः ॥ ९१५ ॥

## श्रीसूर्य उवाच ।

या काचिदाचरेन्नारी पापं प्राग्ब्रह्मघातजम् । अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापकृताद् घोरात्तस्मात्सर्वस्वदानतः । क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि । काश्यां वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षोडशाधिकपंचशततमः ॥ ९१६ ॥

## श्रीसूर्य उवाच ।

मूकः प्रजायते जन्तुर्यः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तदशाधिकपंचशततमः ॥ ९१७ ॥

श्रीसूर्य उवाच ।

कलिङ्गदेशे प्राक् सूत काचिद्द्विजवरानना । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
सा नार्यघातयत्पूर्वे भवे मोहाच्चकुक्कुटम् । न सा पुत्रमवाप्नोति सात्र जन्मनि निश्चयात् ॥२॥
हेमनिष्कत्रयं दद्यात्सर्वेस्तं [redacted] प्रयत्नतः । ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टादशाधिकपञ्चशततमः ॥ ५१८ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे पश्चनदे शुभः । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्सङ्गतः सोऽपि प्रयागे गरुडाग्रज । स्नातो मृगगते भानौ धूर्तः कर्मक्रियोज्झितः ॥ २ ॥
समाप्य स्वगृहे शीघ्रं कृतवान्कर्म दारुणम् । ग्रामे निवसितस्यान्यक्षत्रियस्य पतत्रिण ॥ ३ ॥
ददाह भवनं रम्यं वैरभावात्पुराऽनघ । तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन संप्राप्तः स गत्वा यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गङ्गायाः प्राक्परे देशे शतयोजनसंमिते ॥ ६ ॥
स मध्यरूपी बलवान्धर्मे स्वल्पमतिः शठः । वृद्ध्याविक्रयचारी च पैत्तिकः स्वल्पवित्तभाक्॥७॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः । पुण्यादिदं फलं पूर्वात्पापादत्र शृणु द्विज ॥ ८ ॥
गोपालवत्सकवधाज्जीवघातादपुत्रकः । सप्तवेदमिताब्दानां जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः । गोराशिगः शनिः सोमात्पष्ठे जीवो मृगस्थितः॥१०॥
लग्नेमेतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि । पूर्वं या स्त्री सहायासीन्नवत्साऽत्र सा सुता॥ ११॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वपापनिषूदनीम् । पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात्॥१२॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधनीम् । पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी॥१३॥
तदर्धमितिका वापि द्रव्यवित्तानुसारतः । संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
माषपञ्चाशैर्मितैर्देयस्तथा पशुपतिः सुत । माषाभ्यां च तथा वह्निर्जीवा माषचतुष्ककाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये । जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेदष्टशतकं रुद्रस्याग्रे प्रयत्नतः । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ १७ ॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं त्रिधा मतम् । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र पतत्रिण॥१८॥
नैवं कुर्याच्च यः शक्त्या त्रिष्वेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः॥
नवसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकपञ्चशततमः ॥ ५१९ ॥

श्रीसूर्य उवाच ।

काश्मीरमण्डले पूर्वं काचिद्द्विजवरानना । पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वैरिभावात्तया स्मृत्वा गृहं दग्धं द्विजस्य च । वैरिणस्तु सुतो दग्धो गृहदाहे पतत्रिण ॥ २ ॥
साहाय्यात्स्वामिनः सर्वं प्राग्भवे समुपार्जितम् । तत्पापजान्महाघोरात्फलं प्राप्य वियोजितात्॥३॥
सैव जाता विराटेऽत्र पतिशुश्रूषणात्सुत । क्षत्रिया धनधर्माढ्या पूर्वपुण्यात्तया सती ॥ ४ ॥

क्षयरोगयुता बाल्ये बाल्यातादृपुत्रिणी। गृहाग्निदाहपापाच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशन्मिते वर्षे रिष्टं चैवात्र नश्यति। क्षयरोगयुता बाल्ये सहाया अपि तादृशाः ॥ ६ ॥
साहाय्यात्तत्पतिश्चात्र हीनो क्षयरुजान्वितः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकपञ्चशततमः ॥ ५२० ॥

## श्रीसूर्य उवाच।

सारिकां यो महाभाग निहन्यात्पापमोहितः। तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥ १ ॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम्। तथात्र पुस्तकं दद्याच्छास्त्रस्य विधिनाण्डज ॥ २ ॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकिल्बिषः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकपंचशततमः ॥ ५२१ ॥

## श्रीसूर्य उवाच।

सारिकां याऽवधीन्नारी पूर्वे पापविमोहिता। सात्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय च। पूर्वपापात्प्रमुच्येत तद्दानाद्विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकपञ्चशततमः ॥ ५२२ ॥

## श्रीसूर्य उवाच।

बकघाती च पुरुषः पूर्वजन्मनि मानद। लम्बकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवत्सूत सर्वाभरणभूषिताम्। मुच्यते कण्ठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रयोविंशत्यधिकपंचशततमः ॥ ५२३ ॥

## श्रीसूर्य उवाच।

या नारी पूर्वजनुषि घातयेद्गरुडाग्रज। बकं सा कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिना सूत श्वेतामत्र पयस्विनीम्। यथोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुर्विंशत्यधिकपंचशततमः ॥ ५२४ ॥

## अरुण उवाच।

कश्चिद्विप्रकुले जातो धर्मिष्ठो वित्तसंयुतः। उदरे वातजा रोगा गुल्माद्याश्चोर्ध्वहृद्व्यथाः ॥ १ ॥
मोहाद्याः स्वल्पवीर्यश्च अक्षिपाण्डुदृगामयः। जायते शीर्षजा पीडा बाल्ये स्याद्रुहणीगदः ॥२॥
शरीरे जायते वह्निरुपद्रवात्प्रणाकुला। पौत्रीणां मातुलीनां तु वैधव्यं च स्वस्रादिषु ॥ ३ ॥
दायादाच्छत्रुवत्पीडा भूमिद्रव्यादिलिप्सया। ऐहिकानि च लक्ष्माणि तस्य गेहे प्रजायते ॥४॥
तस्य भार्या सदाचारा कदाचित्क्रोधवादिनी। गौरवर्णा शुभावाणी संतोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात् दशमासानतिक्रम्य गर्भे चोदरसौख्यभाक् ॥ ६ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ७ ॥

## श्रीसूर्य उवाच।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः। पूर्वजन्मनि सा क्षात्रा संजाता विनतासुत ॥ ८ ॥
अज्ञानात्तिमिरान्धानां स्त्रीणां कर्म दुरात्मनाम्। अजानती कुलस्त्रीणामाचारमनुकम्पया ॥ ९ ॥
सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च। प्रमादाद्द्वेषिनं हत्वा सदा निष्ठुरमानसा ॥ १० ॥

१ वातरोगाद्य इति–ख० पु०।

तस्य गेहाश्रिता नित्यं मार्जारश्वानपूर्वकाः । पातालक्रीडनपरा गेहे संकुलिता भृशम् ॥ ११ ॥
ततेषु जलतलेषु तत्तभस्मचयादिषु । विक्षिप्ता सा तदा चार्या प्राक्षिपत्पापचेतसा ॥ १२ ॥
बालगर्भाशयान्बालानविस्पृष्टाखिलेन्द्रियान् । तस्यक्ताज्ञात्यजत्साऽपि माता बालानुकम्पया १३
मायाबन्धनमातॄणां बालगर्भाश्रितांस्तदा । अन्यत्तद्धर्मिणो दृष्ट्वा क्षिप्यते वह्निभस्मसात् ॥ १४ ॥
विनिघ्नन्ती प्रमादाद्यैर्भेदसंततिदुःखभाक् । संततिर्दुःखितायास्तु नानादुःखा च जायते ॥ १५ ॥
आनीयाग्निं समासाद्य तेषां वै नाशनाय च । तथाविधेषु जीवेषु मृतेष्वपि च तद्वशात् ॥ १६ ॥
त्रियन्ते शिशवस्तेऽपि तस्यास्तद्दोषचिह्निताः । पाताले ज्वलिता ताभिर्बहवो लघुप्राणिनः॥१७॥
गर्भयुक्ता मृता मातृक्षामयापि तथा च ते । मार्गं न लभते तत्र मृतास्ते दुःखजन्तवः ॥ १८ ॥
तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजा । त्रिविधापत्यजा बाधा प्राप्यते जन्तुनोदरे ॥ १९ ॥
जन्तवः कर्मणा चैके स्वकृतैः कर्मजन्यनैः । उभयोः कर्मणोर्हेतुन्वश्याश्यप्रयोजकान् ॥ २० ॥
इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम् । स्थिरगर्भा मृतापत्या पुत्रहीना पतत्रिण ॥ २१ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते । ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २२ ॥

श्रीसूर्य उवाच ।

सुदिष्टे समनुप्राप्ते ग्रहेऽहनि शुभोदये । प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २३ ॥
तत्रोपर्यार्विकं स्तीर्त्वा नानाचित्रविचित्रितम् । द्रोणमानं तिलानां तु मध्ये रत्नैः प्रपूरयेत् ॥२४॥
निष्कमानं सुवर्णस्य शकलं मध्यतः क्षिपेत् । तस्य वै पूर्वदिग्भागे तण्डुलद्रोणपर्वतम् ॥ २५ ॥
शुद्धतोयं भृशं ताम्रं पात्रं दशपलोन्मितम् । स्थापयेद्भाजनं पद्मं तन्मध्ये पलनिर्मितम् ॥ २६ ॥
पूजयेच्च सपत्नीकं कश्यपस्य प्रजापतेः । कोऽक्षमालां दक्षे च वामे चाथ कमण्डलुम् ॥ २७ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिं तु शुभलक्षणाम् । अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २८ ॥
सम्यक् श्रद्धावती नारी त्रिविधापत्यदुःखिनी । विप्रं च वेदविधिना पूजयेद्विविधैर्धनैः ॥ २९ ॥
ततस्तं तु सपत्नीकं मुनीनां प्रवरं तथा । सिसृक्षणा जगत्स्रष्टा पत्नी च तपसो बलात् ॥ ३० ॥
सा मया तिलसंरुद्धा व चार्थिभिस्तीव्रवेदनैः । लंघिता स्त्रीजनाचारमजानन्त्या दयात्मकम्॥३१॥
नाशयेत्तस्य पापस्य देवप्राप्तं विगर्हितम् । सम्यक् श्रद्धावती नारी मृतसंततिदुःखिनी ॥ ३२ ॥
सपत्नीकस्य सौवर्णीं निर्मितां सम्यगर्चिताम् । विप्राय वेदविदुषे प्रदद्याद्गुणशालिने ॥ ३३ ॥
एवं समाप्य ता मूर्तीः समादाय पृथक्पृथक् । प्रदद्याद्दानविधिना श्रद्धया च प्रदक्षिणाः॥३४ ॥
दानान्ते कीर्तयेन्मन्त्रं तिष्ठन्ती विहिताञ्जलिः ॥ ३५ ॥

मंत्रः ।

"यन्मया पूर्वजनुपि विजानंत्या हताश्च ये । प्राप्ताऽहमशुभां स्वामिञ्जन्यि तत्कर्मकारणम्"३६
दत्त्वा दानं च विप्राय सर्पिष्यात्मानमीक्षयेत् ॥ ३७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्यधिकपञ्चशततमः ॥५२५॥

श्रीसूर्य उवाच ।

काकघाती महाभाग प्राग्भवे चात्र जन्मनि । कूर्चहीनो भवेन्मर्त्यः स च तत्पापलाञ्छितः ॥ १ ॥
कृष्णधेनुप्रदानेन विधिना च खगाधिप । मुच्यते दुष्टपापाच्च कूर्चयुक्तोऽत्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकपञ्चशततमः ॥ ५२६ ॥

श्रीसूर्य उवाच ।

या नारी घातयेत्काकं विनतानन्दवर्धन । सात्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवेद्‌लम् ॥ १ ॥
कृष्णधेनुप्रदानेन यथोक्तया गरुडाग्रज । पूर्वपापविशुद्धिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकपंचशततमः ॥ ९२७ ॥

श्रीसूर्य उवाच ।

अभक्ष्यभक्षको यस्त्वभवत्प्राङ् मानवोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते क्रिमिलोदरः॥१॥
स भीष्मपञ्चकादत्र व्रतात्पुण्यसमर्जनात् । मुच्यते पूर्वरोगात्तु दुष्टात्सूत गदोदरात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकपंचशततमः ॥ ९२८ ॥

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः क्रिमिजोत्थरुजा सुत ॥ १ ॥
तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम् । कार्तिके शुक्लपक्षे तु प्रान्त्याख्यं दिनपञ्चकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोनत्रिंशदधिकपंचशततमः ॥ ९२९ ॥

श्रीसूर्य उवाच ।

दुष्टस्पर्शेन यो मोहाद्भक्षयेद्विधिवर्जितः । सिद्धान्नानि पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥
विष्णुव्रतान्महापुण्यात्सर्वपापप्रणोदनम् । तदा कृशोदरत्वं च रुजं नात्र प्रपश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकपंचशततमः ॥ ९३० ॥

श्रीसूर्य उवाच ।

भुक्तं यया पुरा सूत सिद्धान्नं द्विजभार्यया । दुष्टस्पर्शन सततं सात्र स्याच्च कृशोदरी ॥ १ ॥
सा वैष्णवव्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते । कृशोदरव्यथा नश्येत्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदधिकपंचशततमः ॥ ९३१ ॥

श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनसौख्यसमन्वितः ॥ १ ॥
कृतानि तेन दानानि नानापर्वसु शक्तितः । वेदयुक्तेषु विप्रेषु सत्पात्रेषु विधानतः ॥ २ ॥
अथो पापं भृशं चक्रे व्यभिचारसमुद्भवम् । ज्येष्ठां त्यक्तुं समारब्धां धर्मशीलयुतां प्रियाम् ॥ ३ ॥
रतिं दद्यौ कनिष्ठायामनृतावपि मोहितः । ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः ॥ ४ ॥
भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा । श्रद्धादानवशात्सोऽत्र गङ्गायाः पूर्वभागजः ॥ ५ ॥
सिंहस्थेऽर्के सुखे राहौ जीवे कर्केऽलिगे भृगौ । स रक्तगौरो मतिमान् चन्द्रपुत्रीसुखसंयुतः॥ ६ ॥
लघुघूर्णी त्वमितदो द्विजवंशसमुद्भवः । सर्वमेतत्फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ७ ॥
स्त्रीत्यागी भ्रूणहा लोके इति वेदविदो विदुः । योषासाहाय्यतः पूर्वं शृणुष्व विनतासुत ॥ ८ ॥
प्राग्भवे या कनिष्ठाभूत्सा ज्येष्ठात्र गतप्रजा । गर्भदोषयुता चेति लक्षणैर्लक्षयेत्खग ॥ ९ ॥
वक्ष्यामि निष्कृतिं तस्य सर्वपापविनाशनीम् । कुर्यात्पलैर्वेदमितैर्गणेशं विघ्ननाशनम् ॥ १० ॥
तदर्धार्धमितं देयं त्रिषु वित्तादिमं पठन् ॥ ११ ॥

मंत्रः ।

"त्याज्या वरानना शुद्धा पूर्वे पापं समार्जितम् । तत्पापस्य विनाशाय ददेऽहं गणनायकम् ॥१२॥
मासससमिता लक्ष्मीः शुभा लेख्या हिरण्मयी । ददेऽहं विप्रमुख्येऽत्र वेदशास्त्रविशारदे" ॥ १३ ॥
ब्राह्मणान्वरयेत्तत्र शक्त्या दद्याच्च दक्षिणाम् । एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः॥१४॥
श्रुत्वैनं शक्तिमान्यस्तु न कुर्याच्छोधनं सदा । ते पुत्राश्चोपसर्पन्ति रिष्टं पञ्चाशब्दके ॥ १५ ॥
प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम् । अन्यजन्मादिकं ज्ञेयं विस्तरं नोदितं मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्वात्रिंशदधिकपञ्चशततमः ॥ ५३२ ॥

---

श्रीसूर्य उवाच ।

देशे पञ्चनदे जाता बाहुजा पूर्वजन्मनि । सात्र जन्मनि वै विप्रा जाता प्राग्विप्रपूजनात् ॥ १ ॥
प्राग्यत्तया कृतं कर्म शृणुष्वाग्रे खगेश्वर । ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न दत्तं तत्पुनस्तस्मै भुक्तं सर्वमशेषतः । मृतो द्विजस्तद्दुःखेन क्षुधितस्तु पतत्रिण ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तथा । पञ्चत्ववशगा जाता भुक्त्वात्र यमशासनम् ॥ ४ ॥
पुत्रसंततिहीनात्र युवभावे क्षयान्विता । निष्कृतिं परमां तस्या वक्ष्येऽहं पापनाशिनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा । कदलीपत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः । क्षयनाशकराः सेव भविष्यन्त्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकपञ्चशततमः ॥ ५३३ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि भो सूत चोच्छिष्टं भक्षयेत्तु यः । रात्र्यन्धो जायते सोऽपि जन्मन्यत्र च मानवः ॥१॥
भोजयेद्ब्राह्मणान्भक्त्या गोमूत्रं प्राशयेत्तथा । मुच्यते तत्क्षणात्सत नक्तान्धत्वं न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदधिकपञ्चशततमः ॥ ५३४ ॥

---

श्रीसूर्य उवाच ।

या भक्षयेत्पुरा नारी चोच्छिष्टं सा शुभानना । नक्तान्धा जायते त्वत्र व्यथिता नेत्रपीडया ॥१॥
गोमूत्रप्राशनादत्र ब्राह्मणेभ्यश्च भोजनात् । नक्तान्ध्यरोगान्मुक्ताः स्यादत्र जन्मनि सुव्रत ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चत्रिंशदधिकपञ्चशततमः ॥ ५३५ ॥

---

श्रीसूर्य उवाच ।

बिडालोच्छिष्टभोजी प्राग्रात्र्यंधो जायतेऽधुना । स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥१॥
भोजयेच्च तथा विप्रान् शक्त्या दद्याच्च दक्षिणाम् । रात्र्यन्धरोगात्सततं मुक्तो भवति मानवः॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदधिकपञ्चशततमः ॥ ५३६ ॥

---

श्रीसूर्य उवाच ।

बिडालोच्छिष्टभुङ्नारी प्राग्भवे विनतासुत । रात्र्यन्धरोगयुक्ता सा चात्रजन्मनि जायते ॥ १ ॥
द्विजेभ्यो भोजनाच्चैव गोमूत्रप्राशनात्तथा । मुच्यते पूर्वपापाच्च बिडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदधिकपञ्चशततमः ॥ ५३७ ॥

---

श्रीसूर्य उवाच।

चाण्डाल्यां गमने पूर्वभवे च गरुडाग्रज। जायतेऽजगरश्चात्र मूढो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र दशावृत्त्या कृतात्सुत। स मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकपंचशततमः ॥ ५३८ ॥

श्रीसूर्य उवाच।

या काचिदधमा नारी प्राग्भवे विनतासुत। चाण्डालं प्राप्नुयात्साऽत्राजगरी जायते जडा ॥ १ ॥
प्राजापत्यव्रताचरणात्कृतात्पञ्चापवर्तनैः। मुच्यते पूर्वपापात्सा जन्मन्यत्र पतत्रिण ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकपंचशततमः ॥ ५३९ ॥

अरुण उवाच।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो वत्सलः सुधीः। [1]नित्यसत्यसदाचारो साधुसेवकसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि। किलासो दद्रुः कण्डूश्च नेत्रतोदो शिरश्मिता ॥ २ ॥
किंचिद्रदः प्रजायेत यौवने कारणं विना। तस्य भार्या सुतन्वङ्गी स्त्रीधर्मव्रतकारिणी ॥ ३ ॥
तस्योदरे वातबाधा मूर्ध्नि पीडा प्रजायते। मृतवत्सा कथं जाता पुत्रपुत्र्यो मृताः कथम् ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वं वैश्यसमुत्पन्ना प्रिया शूद्राप्रतारिता। बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ ६ ॥
शूद्रा याता च संबन्धं बहुकालगतागतैः। अन्योन्यं प्रीतिवशतः किंचित्कालो गतस्तदा ॥ ७ ॥
उभयोः कर्मणोर्हेतू धनकर्ता यतस्ततः। मान्यकर्मकृता योऽसौ तेन तत्रैव जन्मनि ॥ ८ ॥
ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालंकरणैर्युतः। धनलोभाद्धतस्तेन भाविनोऽर्थस्य वै बलात् ॥ ९ ॥
तस्यापि मातापितरौ पुत्रदुःखेन दुःखितौ। द्विजवर्यैस्तया मासैर्वयोभिश्च समन्वितः ॥ १० ॥
धनलोभवशात्तेन दुष्टचित्तेन वै तदा। अचिरान्न मृतस्तत्र गतो वै यमशासनम् ॥ ११ ॥
गृहस्य जात उद्वासो ब्राह्मणस्य ततः खग। तेन कर्मविपाकेन नरके पातितो भृशम् ॥ १२ ॥
पश्चान्मानुषमापन्नो व्रतदानप्रभावतः। इदं जन्म चतुर्थं तु मृतापत्यं खगेश्वर ॥ १३ ॥
द्वित्रादिमासजातानां मृतिर्द्वित्र्यादिहायनैः। मृताः पुत्रा भवेयुस्ते जाताजातास्तथैव च ॥ १४ ॥
इदं जीवेदिदं जीवेदित्याशामपि चाब्रुवन्। जाताजाता विनश्यन्ति ते तस्याऽकृतनिष्कृतेः ॥ १५ ॥
एवं यदि चिरं स्थितश्चा अचिरान्म्रियते परम्। सुगुणाश्च सुरूपाश्च लालनाचाटुकारिणः ॥ १६ ॥
नश्यत्सु जातजातेषु जन्मजन्मसु तेषु च। व्याध्यन्तरो भवेद्व्याधिर्मस्तो व्यसनवानयम् ॥ १७ ॥
नास्ति सौख्यं लभेऽप्यस्य नानाशङ्कितचेतसः। भवेच्च तद्वत्तस्यापि परापत्यानि पश्यतः ॥ १८ ॥
लक्षणानि पुरोक्तानि तस्य स्वान्यपि कीर्तयेत्। सोदरे म्रियते बालः स वै ब्राह्मण उच्यते ॥ १९ ॥
मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत्। स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः ॥ २० ॥
दौर्मनस्यं महाव्याधिः शोक एवोपजायते। अदृष्टगुणलावण्यमदृष्टाननकान्तयः ॥ २१ ॥
म्रियन्ते जातमात्रा वै पुत्रा अकृतचाटवः। एवं तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत् ॥ २२ ॥

[1] क्षणेऽप्यस्य इति स्यात्।

पलार्धार्धमितेनैव कार्या सुघटिता सुत । वाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता ॥ १० ॥
पूर्वपापविशोधाय सा देया ब्राह्मणाय वै । गन्धैः पुष्पैः समभ्यर्च्य मन्त्रैः प्रणवपूर्वकैः ॥ ११ ॥
वैवस्वं तत्र सौवर्णं सुवर्णैकमितं शुभम् । दद्याज्जपेच्च मन्त्रांश्च तल्लिङ्गान्विधिपूर्वकम् ॥ १२ ॥
होमयेच्च यवांस्तत्र सतण्डुलसर्षपान् । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्त्या विधानतः । गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते ॥ १४ ॥
तस्मात्पुत्रसुतं लेभे चात्र जन्मनि वै ध्रुवम् । रिष्टं पञ्चाशदब्दे तु प्रायश्चित्ते कृते सुत ॥ १५ ॥
वेदसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽत्र च ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकपञ्चशततमः ॥ ५४८ ॥

---

## श्रीसूर्य उवाच ।

व्यभिचाररता पूर्वं याऽत्रापि व्यभिचारिणी । साऽऽगता नरकाद्घोरादसती पापजाण्डज ॥ १ ॥
न शुद्ध्यत्यशुभाचारा प्रायश्चित्तशतैरपि । वाराणस्यां गतिश्चास्या वासोऽत्र विनतासुत ॥ २ ॥
मुच्यते सर्वपापाच्च पूर्वजन्मकृताद्दृढात् । वाराणस्यां चतुर्दश्यां शिवपूजनजाद्व्रतात् ॥ ३ ॥
वाहुजेह महाभाग पूर्वेऽप्यत्रापि वाहुजा । यः कृत्वा धूर्तता पूर्वे वञ्चयेद्ब्राह्मणं सुत ॥ ४ ॥
सोऽत्राऽपस्माररोगेण पीड्यते बहुपीडया । तेनैव पापरोगेण म्रियतेऽत्र पतत्रिण ॥ ५ ॥
प्रायश्चित्तं मया प्रोक्तं पापे ब्राह्मणवञ्चने ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदधिकपञ्चशततमः ॥ ५४९ ॥

---

## श्रीसूर्य उवाच ।

या भ्रातृघातिनी नारी प्राग्भवे विनतासुत । सात्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
ज्ञानान्महापापकृतात्र चोक्ता निष्कृतिर्मया । ज्ञात्वा ब्रह्मवधं सूत प्रायश्चित्तं न तत्समम् ॥२॥
सप्तजन्मनि मूकत्वं जायते मद्देनतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाशदधिकपञ्चशततमः ॥ ५५० ॥

---

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि वाहुजः । देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनम् ॥ १ ॥
विंशद्वर्षे व्यतीते च नेत्रभङ्गः प्रजायते । तद्रक्षार्थमहं वच्मि दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग नेत्ररोगं न पश्यति । भोजयेच्छक्तितो विप्रांस्तथैव वैष्णवान्सुत ॥ ४ ॥
कृत्वा तेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदधिकपञ्चशततमः ॥ ५५१ ॥

---

## श्रीसूर्य उवाच ।

सर्वस्वेहहरः कश्चिद्भवत्पूर्वजन्मनि । सोऽत्र जन्मनि जायेत क्षयरोगप्रपीडितः ॥ १ ॥
प्रायश्चित्तं परं तस्य वित्ततुर्यांशमागतः । कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः । कालचक्रस्य दानेन रोगा नश्यन्ति पापजाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकपञ्चशततमः ॥ ५५२ ॥

---

श्रीसूर्य उवाच ।

अल्पवादरता ह्यत्र या पूर्वेऽभूत्पतिव्रता । पतिपापप्रभावाद्धि गतिं प्राप्ता हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी पार्वत्या सह मोदते । भुनक्ति भोगान्सकलान् पतिं प्राप्य तपस्विनी ॥२॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपंचाशदधिकपंचशततमः ॥ ५५३ ॥

श्रीसूर्य उवाच ।

योऽज्ञानात्कृतवान्सूत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं भजते क्वापि मानवः ॥१॥
चान्द्रायणत्रयं कुर्याद्विधिना पापशोधनम् । पुस्तकं च तथा दद्यात्सुवर्णपलसंयुतम् ॥ २ ॥
य एवं कुरुते सूत स तत्पापात्प्रमुच्यते । न जायेतात्र मूकत्वं कदाचिद्विनतासुत ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदधिकपंचशततमः ॥ ५५४ ॥

श्रीसूर्य उवाच ।

या धूर्ताविश्रयेत्काचिल्लोकान्पूर्वभवेऽण्डज । साऽत्र जन्मनि रोगेणापस्मारेण प्रपीडिता ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं शुभ । ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचपंचाशदधिकपंचशततमः ॥ ५५५ ॥

अरुण उवाच ।

कश्चिद्वर्णोत्तमो जातो धर्मिष्ठो वित्तसंयुतः । उदरे वायुरल्पीयाञ्छिरोऽर्तिश्च प्रजायते ॥ १ ॥
शरीरे जायते चिह्नं किंचिद्व्रणसमन्वितम् । दद्रुः कण्डूर्विशालाक्षो गमने पादवैकृतिः ॥ २ ॥
कर्मानुसारतो व्याधिश्चिह्नं तस्य सहायकम् । भार्या प्रीतिपरा नित्यं कदाचित्कलहप्रिया ॥ ३ ॥
रोषयुक्ता मिताहारा मदरार्तिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

स्वस्त्रिया सहितो विप्रः कुलीनो बहुयाचकः । गत्वा चैव महारण्येऽभेत्तत गर्भसंयुता ॥ ५ ॥
बहवोऽपि समायाताः शत्रुभिः परिवेष्टिता । तत्र भीता तदा स्त्रीणां त्रासयन्ती महावने ॥ ६ ॥
गर्भपातोऽभवत्तत्र तथैव च ततो मृतः । तेन कर्मविपाकेन म्रियन्ते तस्य बालकाः ॥ ७ ॥
केचिज्जीवन्ति षण्मासं केचिद्वर्षाधिकं भृशम् । बहुकाले भवेत्कश्चिन्मृतानां चिह्नमेव च ॥ ८ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ९ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो परमेतच्च दुर्लभम् । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तमघापहम् ॥ १० ॥
गोत्रयं वै सुवर्णानां सौवर्णं निष्कसंयुतम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ११ ॥
कर्मप्रकाशकं विप्रं पूजयेद्विधिपूर्वकम् । एवं यः कुरुते वत्स निष्कृतिं कर्मणः फलम् ॥ १२ ॥
पुत्रपौत्रादिकैर्युक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥ १३॥
स याति पापदोषेण भुवि जन्मनि जन्मनि । एवं यः कुरुते भक्त्या प्राप्यते पुत्रपौत्रकम् ॥ १४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्पंचाशदधिकपंचशततमः ॥ ५५६ ॥

---

१ सोऽतिष्ठत् इति स्यात् । २ शत्रुभिर्वेष्टितस्य चेति भवेत् । ३ तत्र भीत्या तदा स्त्रीणां तत्त्रासाच इति पाठो भवेत् ।

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्काचिन्नारी भर्तृप्रियान्विता । दक्षा सर्वक्रियास्वेव बहुदानप्रदायिका ॥ १ ॥
पार्श्वस्थस्यान्यशूद्रस्य गृहान्नीतानि मानद । सर्वस्नेहानि चौर्येण सर्वशून्यात्पुराऽनघ ॥ २ ॥
भुक्तानि बहुभिः सूत मिलित्वा च सुतादिकैः । पूर्वजन्मकृतात्सर्वं कर्मणोऽत्र फलं भुवि ॥ ३ ॥
सा जाता बाहुजा नारी धनभोगसमन्विता । पुत्राऽन्विता विचित्रा च भर्तृशुश्रूषणे रता ॥ ४ ॥
क्षयरोगाकुला पक्षिन्न स्नेहहरा यतः । निष्कृतिं तस्य पापस्य पुण्यां पापौघनाशनीम् ॥ ५ ॥
कथयामि प्रयत्नेन वित्तशुल्कांशभागतः । कृत्वा तु कदलीं रम्यां पत्रयुक्तां सुवर्णजाम् ॥ ६ ॥
दद्याद्वेदविधिज्ञाय क्षयदोषोपशान्तये ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदधिकपञ्चशततम ॥ ५५७ ॥

श्रीसूर्य उवाच ।

यो लोकान्वञ्चयेत्कश्चित्पुरा धूर्तस्य कर्मणा । सोऽत्र जन्मन्यपस्माररोगेण महताऽऽकुलः ॥ १ ॥
धेनु दद्यान्महाभाग सवत्सां विधिसंयुताम् । ब्रह्मकूर्चत्रयं कुर्यात्स तत्पापात्प्रमुच्यते ॥ २ ॥
न भवेत्तस्य रोगस्य वेदना पापशोधनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदधिकपञ्चशततम ॥ ५५८ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र चन्द्रवदना गौराङ्गी पतिवल्लभा । धनधान्यसमायुक्ता स्वर्णकारी सुखान्विता ॥ १ ॥
दक्षा भर्तृहिता नित्यं पूर्वं सा द्विजवल्लभा । स्वर्णापहारजातपापात्प्राप्ता सा स्वर्णकारिताम् ॥ २ ॥
पुत्रहीना महाभाग परद्रव्यापहारजात् । कुरुक्षेत्रे शशिग्रस्ते स्वर्णं दद्याच्च शक्तितः ॥ ३ ॥
तद्दत्त्वाशु लभेत्पुत्रानन्न जन्मनि वै सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्यधिकपञ्चशततम ॥ ५५९ ॥

श्रीसूर्य उवाच ।

अन्नहृत्प्राग्भवे यस्तु ज्ञानादत्र पतत्रिण । सोऽजीर्णेनैव रोगेण पीड्यते बहुपीडया ॥ १ ॥
अन्नदानाच्च विप्रेभ्यो रसदानाच्च शक्तितः । सावित्रीजपतो होमात्पूर्वपापात्प्रमुच्यते ॥ २ ॥
पापक्षये क्षयं यान्ति रोगाः पापसमुद्भवाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षष्ट्यधिकपंचशततम ॥ ५६० ॥

श्रीसूर्य उवाच ।

या काचिन्मोहनाचक्रे नारी भ्रातृवधं पुरा । सात्र जन्मनि मूकत्वं भजेत्कापि शुभानना ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य चान्द्रायणव्रतम् । वेदपुस्तकदानं च पलं स्वर्णमितं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकपंचशततम ॥ ५६१ ॥

श्रीसूर्य उवाच ।

बालघाती भवेद्यस्तु पूर्वजन्मनि मानवः । वैनतेयात्र जनुषि मृतपुत्रः प्रजायते ॥ १ ॥
श्रवणाद्धरिवंशस्य विधिवत्त्वात्र जन्मनि । ब्राह्मणोद्वाहनाच्चैव पूजनाच्छङ्करस्य च ॥ २ ॥
जीविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकपंचशततम ॥ ५६२ ॥

श्रीसूर्य उवाच ।

सूकरी या भवेत्पूर्वं निषादी पुनरेव सा । शूद्राधमा पञ्चनदे जाताऽत्र विनतासुत ॥ १ ॥
पुत्रपौत्रधनैर्धान्यैर्गजैश्चोष्ट्रादिवाहनैः । मुक्ता सा यवनी सूत तीर्थराजस्य सेवनात् ॥ २ ॥
भर्तृसङ्गयुतात्पूर्वं पुनस्तद्धितवाञ्छनात् । यवनी पूर्वपापाच्च तत्र तस्योपसेवनात् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकपंचशततमः ॥ ९९३ ॥

श्रीसूर्य उवाच ।

कश्चित्प्रागभवद्विप्रः सर्वविद्याविशारदः । वेदाभ्यासरतः श्रीमान् प्राप्तसर्वमनोरथः ॥ १ ॥
तुलाधृतानि स्वेहानि विप्राणां स्नेहभागिनाम् । गृहीतान्यतिचौर्येण लोभयुक्तेन चेतसा ॥ २ ॥
यस्माद् ज्ञानकृतं चैव प्राप्स्यसे तत्फलं शृणु । सोऽत्र विप्रः प्रयागेऽस्ति द्विजो वेदविदांवरः ॥३॥
धनपुत्रसमायुक्तः क्षयरोगसमन्वितः । वेदाभ्यासात्तथा दानात्तीर्थराजाधिसेवनात् ॥ ४ ॥
नाशः स्यात्क्षयरोगस्य चात्र जन्मनि चाण्डज । दोषास्त्वल्पास्फलैर्युक्तो जीवेद्वर्षशतं ध्रुवम्॥५॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकपंचशततमः ॥ ९९४ ॥

श्रीसूर्य उवाच ।

बभूव ब्राह्मणः कश्चिद्वङ्गदेशे वसन्सुधीः । धर्मशास्त्रक्रियायुक्तो धनपुत्रादिसंयुतः ॥ १ ॥
दत्तानि तेन विप्रेभ्यो दानान्यल्पानि शक्तितः । सत्पात्रेभ्यः परं सूत पर्वस्वपि विधानतः ॥ २ ॥
पापमाचरितं तेन कामलोभेन चाण्डज । ब्राह्मण्यां धारितो गर्भो भाविनोऽर्थस्य गौरवात् ॥३ ॥
स्त्रीसाहाय्यात्तथा तत्र कृतं तद्गर्भपातनम् । सा मृता तेन दुःखेन गर्भपातोद्भवेन च ॥ ४ ॥
एवं किंचिद्गते काले संप्राप्तो यमशासनम् । भुक्त्वा पापाच्च नरकान् पुण्यात्स्वर्गांश्च शाश्वतान् ॥
पूर्वपुण्यप्रभावेण स जातो ब्राह्मणाद्वधः । यमुनायां महाभाग गौरः पित्ताधिको वृणी ॥ ६ ॥
धनमित्रसुखैश्वर्यमतिस्त्रीभोगभास्वरः । दक्षः कार्येऽथ चार्वङ्गो धर्मिष्ठो लाभसंयुतः ॥ ७ ॥
मानी यशस्वी पुरुषः कान्तिमान् प्रियभाषणः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्॥८॥
धूर्तः शठः क्रोधपरो धनवृद्धिक्षयान्वितः । चिन्तातुरः पापशेषादप्राप्तमनोरथः ॥ ९ ॥
ब्राह्मण्यां वीर्यदानात्प्राक्तया गर्भस्य पातनात् । अत्र पञ्चाशदब्दान्तं जातपुत्रविनाशकः ॥१० ॥
चित्रभङ्गाद्द्रूपे सूनौ चन्द्रः शुक्रगृहान्वितः । पापाभ्यां पुत्रभावेऽपि समाक्रान्तोऽत्र जन्मनि ॥११॥
स्त्रीसाहाय्यात्तथा पूर्वं सात्र संततिदुःखिता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कार्याऽत्र ब्राह्मणी लेख्या सुवर्णाष्टपलैर्मिता । तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः ॥ १३ ॥
पत्रे गर्भान्विता भव्या बाहुभूषणसंयुता । गन्धपुष्पाक्षतैर्वस्त्रैः पूजनीया प्रयत्नतः ॥ १४ ॥
सा देयात्र विधिज्ञाय मन्त्रमुच्चारयन्निमम् ॥ १५ ॥

मंत्रः ।

" ब्रह्मणा निर्मिते देवि पापमाचरितं त्वयि ॥ १६ ॥
तत्पापशमनार्थेत्वां ददेऽहं हिरण्मयीम् । ब्राह्मणाय महाभाग पापं गच्छतु तद्दृशम्" ॥ १७ ॥
सोमं च राजतं दद्यात्तन्मितं पापशान्तये । लक्ष्मीनारायणं चापि हेमसौवर्णसंमितम् ॥ १८ ॥
गायत्र्यष्टसहस्रं तु त्र्यम्बकं तन्मितं जपेत् । मन्त्रमष्टाक्षरं तद्वज्जप्त्वा शुद्धिमवाप्नुयात् ॥ १९ ॥
होमयेत्तद्दशांशेन तिलाज्ययवतण्डुलैः । ब्राह्मणान्भोजयेत्पश्चात्पूजयेच्च विधानतः ॥ २० ॥

रुद्रलक्षं त्रिगुणितं नानाविभवविस्तरैः । पूजयेद्वा विधानेन तस्मात्पापात्प्रमुच्यते ॥ २१ ॥
य एवं विधिना सूत प्रायश्चित्तं समाचरेत् । तस्य संततिवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि॥२२॥
ब्रह्मलोकमवाप्नोति पापस्यास्य प्रभावतः । प्रायश्चित्ते कृते रिष्टं वर्षे षष्टिमिते ध्रुवम् ॥ २३ ॥
आयुर्नवतिवर्षान्तमत्र पापविशोधनात् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २४ ॥
अष्टाक्षरं त्रिसाहस्रं जप्त्वा शुद्धिं समाचरेत् । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥२५॥
शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः । य एवं कुरुते सूत द्वयोः पापविशोधनम् ॥ २६ ॥
तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि । नाधयो व्याधयस्तस्य न चारिष्टभयं क्वचित्॥२७॥
नैवं करोति यो मोहाल्लोभात्पापविशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः॥२८॥
पञ्चत्रिंशन्मिते वर्षे रिष्टं देहधनान्तिकम् । त्रिसप्ततिमितं चायुः प्रायश्चित्ते कृतेऽमुना ॥ २९ ॥
गतिमप्युत्तमां याति त्वन्यथा ह्याततायिनाम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्॥३०॥
यदन्तरगतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पंचषष्ट्यधिकचतुःशततमः ॥ ४६५ ॥

श्रीसूर्य उवाच ।

यः प्राप्नोति हि धर्मात्मा सर्वपापविशोधनम् । सर्वस्वेन यजेद्देवान् पितॄंश्च श्रद्धयान्वितः ॥ १ ॥
गयाश्राद्धादिभिः कव्यैर्हव्यैर्दानैर्विधानतः । पूर्वपापविनिर्मुक्तो याति ब्रह्मसनातनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्षष्ट्यधिकचतुःशततमः ॥ ४६६ ॥

अरुण उवाच ।

कथयस्व दिवानाथ लोकानां हितकाम्यया । पृच्छामि तेऽत्र देवेश छिन्धि मे सर्वसंशयान्॥१॥
जात्युत्तमानां जनुषि महा संपत्तसमृद्धिमान् । पूर्वजन्मनि किं जन्म सुखसंपत्समन्वितः ॥ २ ॥
धन्यूनामपि सौख्यं च वैष्णवीमतिवर्तने । जातसंततिदुःखार्तः कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच ।

ब्राह्मणी गर्भयुक्ता च प्रयाणे भर्तृसंयुता । सर्वाभरणभूषाढ्या नानारत्नसमन्विता ॥ ४ ॥
बहुभिर्मिलितैश्चौरैर्जगृहे सर्वभूषणम् । तत्र कोलाहलो जातो गर्भपातोऽभवत्तदा ॥ ५ ॥
तेन पापेन बालानां गर्भनाशः प्रजायते ॥ ६ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन् येन पापं प्रणश्यति । एतेषां विस्तरं भगवन् लोकानां हितकाम्यया॥७॥

श्रीसूर्य उवाच ।

एकवासो विधिश्चैव लक्षपूजा ततः परम् । सगर्भा गौः प्रदातव्या भोजनं शतसंमितम् ॥ ८ ॥
गर्भात्प्रयागतामम्भोऽभिषेकः समयादनु । पञ्चमे वाथ षष्ठे वा मासि जातः स्मृतश्च यः ॥ ९ ॥
तयोः कर्मविशेषांश्च कथयिष्यामि योषितोः । सप्तमेषु च मासेषु यन्मृतः प्रसवस्त्रियः ॥ १० ॥
अथवा चाष्टमे मासि सूत सद्यो विपद्यते । स चापि मृतकल्पा स्यादामयैः सूतिकामयैः ॥११॥
शोकादामोदरे टोपं शूलं गौरवकम्पनैः । रक्तस्रावो विवर्णश्च जायते कर्मणेरितः ॥ १२ ॥

१ गर्भाधप्रगतश्चाम्भो इति–ख पु० ।

रजस्तस्य पलाभ्यां तु कोशगर्भाश्रयाकृति। कुसुम्भवेष्टितं तं च रक्तवस्त्रेण वेष्टयेत् ॥ १३ ॥
मधुना पूरयेत्तत्र शलाकां रूप्यवर्तिनीम्। तन्मध्ये हेमशकलं क्षिपेदपि च यत्नतः ॥ १४ ॥
दद्याद्विप्राय विधिवद्यथाश्रुतिनिरूपितम् ॥ १५ ॥

प्रार्थना।

"यन्मया पूर्वतः स्वामिन् गर्भपातः कृतः पुरा। एतत्पापविशुद्ध्यर्थं गर्भकोशं ददाम्यहम्॥१६॥
मया मूढेन यद्धेतोर्निषिक्तं परयोषिति। ततोऽनपत्यं यत्प्राप्तं तस्मान्मां मोचय प्रभो" ॥ १७ ॥
एवं कृतविधेः सूत गर्भपाताघनाशनम्। ब्राह्मणान्भोजयेत्सम्यग्गां दद्याच्च सवत्सकाम् ॥ १८॥
संपिण्ड्यात्मानमालोक्य भोजयेदिष्टबान्धवान् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तषष्ट्यधिकपंचशततमः ॥ ९६७ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचित्पुरुषं प्राग्भवेऽण्डज। सात्र जन्मनि रोगेण शूलेनैव प्रपीड्यते ॥ १ ॥
सुवर्णदानाद्विधिवत्तथा रुद्रजपादिह। पूजनाच्छंकरस्यापि शूलरोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकपंचशततमः ॥ ९६८ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि यो ज्ञानान्नरो वै घातयेत्सुतम्। मित्रं च वायुरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
तत्र कुर्यान्महाबाहो मन्त्रैस्तद्वायुदैवतैः। पूजनं वायुदेवस्य गन्धपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैर्बहुभक्ष्यैश्च वायुर्नश्यति तत्क्षणात्। इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकपंचशततमः ॥ ९६९ ॥

श्रीसूर्य उवाच।

गोत्रघातकरी या च पुरा ज्ञानेन काश्यप। सात्र जन्मनि लूताढ्या भवत्येव मयोदितम् ॥ १ ॥
तीर्थस्नानव्रतादीनि निष्फलान्यत्र चाण्डज। ज्ञानपूर्वकृतात्पापाद्रोगादेव क्षयो भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्यधिकपंचशततमः ॥ ९७० ॥

श्रीसूर्य उवाच।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी। व्यापारनिरतो दक्षो क्रयविक्रयकर्मसु ॥ १ ॥
नीतं स्नेहं तेन तेन सर्वं मिलित्वा चार्थसीरिणाम्। कालेन तद्घृतं लोभात्स्नेहं मौल्याधिकं सुत॥२॥
भुक्त्वा पापफलं घोरं भ्रमरत्वमुपागतः। ततः पुण्याच्छुभान्मुक्त्वा पुनर्जातोऽत्र जन्मनि ॥ ३ ॥
शूद्रः पुण्यकलायुक्तो भूमिदानात्सुरार्चनात्। स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहादिदानादि स्ववित्तात्तुर्यभागतः। स्वर्णदानं तथा चात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकपंचशततमः ॥ ९७१ ॥

श्रीसूर्य उवाच।

विषं दत्वा पतिं सूत या प्राग्जाराश्रिताऽसती। पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत ॥१॥
विष्णोराराधनादत्र गङ्गायामुपसेवनात्। गतिं शुभां सा प्राप्नोति व्रतकृच्छ्रोपसेवनात् ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभागतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकपंचशततमः ॥ ९७२ ॥

श्रीसूर्य उवाच ।

देवागारं दहेद्यस्तु प्राग्जन्मन्यथ पुत्रक । रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देवदानाद्विप्राय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतिसारादिनिश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्यधिकपञ्चशततम ॥ ५७३ ॥

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तजः कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयार्थं गतो दैवाद् घातिता मृगसूकराः । तत्रैका हरिणी सुत घातिता गर्भसंयुता ॥ २ ॥
तद्गर्भजौ हतौ तत्र शुभौ द्वौ मृगशावकौ । सहायाभ्यां युतेनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तावमायां चाण्डजाधिप । सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा ॥४॥
स्वशौर्यकर्मणा सूत घातयित्वा रिपून् बहून् । घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा । भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणोऽधुना ॥६॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातः कर्कटके जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजात्पुण्यात्प्राक्कृतात्सकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि । राज्यप्रचार्यत्पुनश्च पुण्यात्पापफलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित् । सहायलक्षणमतः शृणु पुत्र यथा तथा ॥ १० ॥
याभ्यां मिलित्वा भुक्तौ द्वौ मृगशावौ खगाधिप । पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ॥ ११ ॥
अपस्मारेण रोगेण मृतौ चात्रैव जन्मनि । एवं संततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभुग्जनितात्पापात्प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलक्षं तु तदर्धं वा तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ । पूजयेच्च तथा वाणं विधिना मृगदैवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यैर्विधानतः । प्रायश्चित्तं परं तस्य पापस्य क्षयकारकम् ॥ १५ ॥
अथवा भोजयेद्विप्रान्सहस्रद्वयसंमितान् । पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृतेऽधुना ॥ १६ ॥
अकृतप्रायश्चित्तस्य न च पुत्रसुखं भवेत् । स्थित्वा मरणं चापि वर्षे वेदाब्धिकेऽण्डज ॥ १७ ॥
प्रायश्चित्ते कृते तस्य जीवनं पञ्चसप्ततिम् । चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकपञ्चशततम ॥ ५७४ ॥

श्रीसूर्य उवाच ।

गर्भपातनपापाद्वा बभूव प्राग्भवेऽण्डज । साऽत्रेयं तेन पापेन गर्भपातनदुःखिनी ॥ १ ॥
विप्रकन्याविवाहाद्वै विधिवदत्र जन्मनि । मुच्यते तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्धैमीं दशसुवर्णजाम् । युक्तां स्कन्दगणेशाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धार्धमितां वापि पूजयित्वा विधानतः । मुच्यते पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चसप्तत्यधिकपञ्चशततम ॥ ५७५ ॥

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं पतत्रिण । सातिसारेण महता पीडया पीडचतेऽधुना ॥ १ ॥
शंकरप्रतिमादानान्मूर्तेर्विष्णोः प्रपादनात् । न जायते महापीडा रक्तातीसारसंभवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्सप्तत्यधिकपञ्चशततम ॥ ५७६ ॥

श्रीसूर्य उवाच।

ब्रह्महा प्राग्भवे सूत तिर्यक्त्वं प्राप्य निश्चयात्। नरकान्दारुणांश्चैव जायतेऽत्रैव जन्मनि ॥ १ ॥
कर्मक्षयेऽतिकष्टेन तस्मिन्नयसि पीडितः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे; कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकपंचशततमः ॥ ५७७ ॥

---

श्रीसूर्य उवाच।

या काचिद्घातयेन्नारी पत्योर्मित्रं च प्राग्भवे। नियतं वायुरोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं परीक्ष्य विप्राद्यैः सर्वस्वार्धार्धकेन च। वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गन्धैर्वस्त्रैर्विशेषतः। मन्त्रैश्च वायुजैः सूत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगोपशमनं दानेनानेन जायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकपंचशततमः ॥ ५७८ ॥

---

श्रीसूर्य उवाच।

अज्ञानादथवा नारी गोत्रघातकरी पुरा। बभूव सततं चात्र लूतिरोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्यव्रतात्सुत। लूतिरोगं न पश्येत सोऽत्र जन्मनि चाण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकपंचशततमः ॥ ५७९ ॥

---

अरुण उवाच।

भूमिदेवकुलोत्पन्नः किंचिद्वित्तसमन्वितः। संयुतो वायुपित्ताभ्यां नेत्रतोदः शिरोऽर्तिमान् ॥ १ ॥
सतद्व्रतश्च सुधीर्धीमान् धर्मिष्ठो धर्मवत्सलः। व्रणो वातात्रिदशनश्चान्यव्याधिप्रपीडितः ॥ २ ॥
परोक्षमपवादं च ब्रुवते कारणं विना। तस्य प्रिया सदाचारा सती व्रतपरायणा ॥ ३ ॥
काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि वैश्येन भार्या विप्रस्य सात्त्विकी।[1] प्रतिवेश्मि तदा तस्य ब्राह्मणो ज्ञानसत्तमः ॥ ५ ॥
अप्रसूता प्रिया तस्य चपला चारुलक्षणा। वैश्येन कथयित्वा तु लोभमोहादिविभ्रमैः ॥ ६ ॥
अज्ञानात्काममिच्छन्ती उभयेऽपि बलीयसा। तावत्कालवशेनैव ब्राह्मणो जडतां गतः ॥ ७ ॥
स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। स तां वै धर्षयामास बहुकालं खगेश्वर ॥ ८ ॥
व्यभिचारवशात्तत्र अन्यतस्तद्धनं हृतम्। गृहीतं तद्धनं तेन धूर्तेन लोभचेतसा ॥ ९ ॥
ब्राह्मणी निधनं प्राप्ता लोके गृह्णाति विश्रुतिम्। तेन दुःखेन विप्रोऽसौ ब्राह्मणीमत्यजत्पुरा[2] ॥ १० ॥
निर्वंशं जायते तत्र ब्राह्मणस्य खगेश्वर। तेन कर्मविपाकेन तादृशं च भवेदिह ॥ ११ ॥
पश्चान्मानुषमापन्नो बहुशोकाकुलो भृशम्। इदं जन्म द्वितीयं तु ब्रह्मवंशसमुद्भवम् ॥ १२ ॥
प्राप्यते चानपत्यत्वमेकापत्यमथो यदि ॥ १३ ॥

अरुण उवाच।

प्रायश्चित्तं कथं स्वामिन् येन वन्ध्यत्वनाशनम्। एकापत्यभवं दुःखमनपत्यमथो यदि ॥ १४ ॥

---

१ उपभुक्ता इति भवेत्। २ जनतां इति–ख० पु०।

श्रीसूर्य उवाच।

मार्गशीर्षे शुभे मासि शुक्लपक्षादितः खग। सत्यक्षं सुतसौख्याप्तिर्व्रतं तु मुनिवासरम् ॥ १५ ॥
षोडशाब्दानि नारीणां कर्तव्यं विधिपूर्वकम्। गौरीव्रतमिदं दीर्घं सुतसौख्यफलप्रदम् ॥ १६ ॥
प्रातर्नियममास्थाय दन्तधावनपूर्वकम्। अद्याहं शिवयोः प्रीतिमाचरिष्ये शुभं व्रतम् ॥ १७ ॥
स्थानप्रवासनिरतं निशि जागरतत्परा। ततो मध्याह्नसमये स्नात्वा कुंकुमवाससी ॥ १८ ॥
परिधायार्चयेद्गौरीं पतिपुत्रवतीं स्त्रियम्। कुंकुमैः कज्जलैरेभिः करणैः पुष्पमालया ॥ १९ ॥
ताम्बूलैस्तु सकर्पूरैः सौभाग्याष्टकवंस्तुना। ततश्चास्तमिते भानौ वर्तिः षोडशतन्तुभिः ॥ २० ॥
विधाय तिलतैलेन दीपान्कुर्याच्छिवाग्रतः। गीतवादित्रनिर्घोषैः पुराणश्रवणादिभिः ॥ २१ ॥
नैवेद्यं विधिवत्कुर्यादपूपतिलतण्डुलैः। तथा षोडशसंख्यानि शूर्पाणि वेणवानि च ॥ २२ ॥
सप्तधान्यफलोपेतं सौभाग्याष्टकसंयुतम्। प्रत्येकं दीपान् विन्यस्य गौर्यग्रेऽपि प्रकल्पयेत् ॥२३॥
पतिपुत्रसुखायैव पूजयन्ती गिरेः सुताम्। भोजयेत्षोडश नार्यः शुभास्ताः पतिसंयुताः ॥ २४ ॥
एवं विधिं समास्थाय भोजयेद्दम्पतीञ्छुभान्। नानाभोज्यैस्तथापूपैः पक्षिभ्यो बलिमाहरेत् ॥२५॥
दीनान्धकृपणेभ्योऽन्नं सर्पिष्यात्मानमीक्षयेत्। एतद्गौरीव्रतं नाम मार्गशीर्षे समाचरेत् ॥ २६ ॥
एवं कृतविधिः सूत प्राप्नोति पुत्रपौत्रकान्। नारी नियमसंपूर्णं व्रतं कुर्यात्प्रयत्नतः ॥ २७ ॥
सुतसौभाग्ययुक्ता सा पतिपुत्रसुखाप्तये। ऐहिकं लक्षणं तस्य नारीणां चात्र जायते ॥ २८ ॥
स्वसा मातृष्वसा वापि सपत्नी शोकसंयुता। उदरार्तिरसृक्स्रावः पार्श्वपादकरादिषु ॥ २९ ॥
मिथ्याभिशंसनं कापि वाक्यदोषघनश्रुतिः। स्वसातिनिन्दाहीना सा परेभ्यो मर्मतोदनम् ॥३०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकपञ्चशततमः ॥ १८० ॥

श्रीसूर्य उवाच।

शकृन्मूत्रं सृजेद्यस्तु देवागारे नराधमः। गुदरोगमवाप्नोति सोऽत्र जन्मनि मानवः ॥ १ ॥
मासिकं पूजयेद्विष्णुं शिवं वा विधिनाण्डज। प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनं सुत ॥ २ ॥
न पश्यति तदा पीडां गुदजामत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकपञ्चशततमः ॥ १८१ ॥

श्रीसूर्य उवाच।

घातयेद्यः पुरा नारीमज्ञानात्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत कृशो बलविवर्जितः ॥ १ ॥
शर्कराधेनुदानेन दशसंख्येन चाण्डज। विमुच्यते कृशत्वाच्च शतब्राह्मणभोजनात् ॥ २ ॥
होमात्स्वस्त्ययनात्पुण्याद्गायत्रीजपतोऽत्र च। तीर्थस्नानादाज्यदानाद्बली भवति नान्यथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकपञ्चशततम. ॥ १८२ ॥

श्रीसूर्य उवाच।

बालानां घातिनी चेयमभवत्पूर्वजन्मनि। तेनाष्टाब्दमिताद्वर्षादर्वाग्बालो न जीवति ॥ १ ॥
अत्र जन्मनि भो सूत तस्मात्सा मृतपुत्रका। इदं जीवेदिदं जीवेदिति चिन्तयती ध्रुवम् ॥ २ ॥
न जीवन्ति च तत्पुत्राः पूर्वपापात्तथाण्डज। प्रायश्चित्तं शृणुष्वाथ येन जीवन्ति तत्सुताः ॥ ३॥
श्रवणाद्धरिवंशस्य दशावृत्त्या खगेश्वर। पञ्चत्र्येकमितावृत्त्याद्विमादिशिशुजाद्वधात् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्र्यशीत्यधिकपञ्चशततम. ॥ १८३ ॥

श्रीसूर्य उवाच।

यः कश्चिद्घातयेत्पूर्वं ब्राह्मणं ज्ञानवर्जितः। कुष्ठरोगान्वितः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
दद्यात्कालनरं सूत सर्वोपस्करसंयुतम्। सर्वस्वं वा महापापे दानमुक्तं मनीषिभिः ॥ २ ॥
सर्वस्वदानात्कुष्ठस्य पीडा नश्यति तत्क्षणात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकपंचशततमः ॥ ९८४ ॥

श्रीसूर्य उवाच।

देवद्रव्यं हरेत्सूत पूर्वजन्मनि यो नरः। सोऽत्र जन्मनि जायेत वायुपीडाभिरन्वितः ॥ १ ॥
प्रायश्चित्तं परं वायोर्नाशनं तस्य वच्म्यहम्। जपेन्मृत्युंजयं मन्त्रं सावित्रीं च विशेषतः ॥ २ ॥
होमयेत्तद्दशांशेन ब्राह्मणान्भोजयेत्तथा। वायुरोगोपशान्त्यर्थं शक्त्या दद्याच्च दक्षिणाम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकपंचशततमः ॥ ९८५ ॥

श्रीसूर्य उवाच।

देवागारे तु या काचित्प्राग्भवे विनतासुत। सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारी पापप्रणाशनम्। वक्ष्ये गोमिथुनं दद्यात्प्राजापत्यं चरेद्व्रतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकपंचशततमः ॥ ९८६ ॥

श्रीसूर्य उवाच।

बभूव सुखजः कश्चिद्विद्याधनसमन्वितः। नानाकलासु कुशलो विष्णुभक्तिपरायणः ॥ १ ॥
राहुग्रस्ते प्रयागे तु सर्वस्वमददात् पुरा। तत्र भाविबलात्सूत पापमाचरितं त्विदम् ॥ २ ॥
धर्षिता क्षत्रिया सूत कामलोभाच्छुभानना। प्रतारितः पतिस्तस्यास्तेन दैवहतेन तु ॥ ३ ॥
ततो मृत्युवशं प्राप्तः स गत्वा यमशासनम्। शुभाच्छुभफलं भुक्त्वा चाशुभं त्वतिदारुणम् ॥ ४ ॥
अन्यजन्मनि दानेन स जातः क्षत्रियादवः। देशे विपाशानिकटे सप्तयोजनसंमिते ॥ ५ ॥
सुरूपदेहः सद्बुद्धिः स्त्रीपुत्रधनसंयुतः। शूरो दाता प्रधानश्च देशेदेशेऽतिविश्रुतः ॥ ६ ॥
किंचित्पापरतो धूर्तो मनोदुःखाकुलो भृशम्। धर्षिता क्षत्रिया पूर्वं भर्तृसंताडनात्तथा ॥ ७ ॥
वार्द्धक्ये कण्डुरोगार्तो निश्चयादत्र जन्मनि। लक्ष्मैतदण्डजश्रेष्ठ सूर्यशुक्रौ चतुर्थकौ ॥ ८ ॥
वक्ष्यामि तस्य पापस्य निष्कृतिं पापशोधनीम्। लक्ष्मीनारायणं दद्यात्पलेनार्धपलेन वा ॥ ९ ॥
हिरण्मयं सुघटितं सर्वाभरणभूषितम्। पूजयित्वा तु गन्धैश्च पुष्पैर्नानाविधैस्तथा ॥ १० ॥
दीपैर्विचित्रैर्विधिना दद्याद्विप्राय धीमते। गणनायकं तथा दद्यात्सौवर्णं दशमापकम् ॥ ११ ॥
एवं विधानं यः कुर्यात्पूर्वपापविशोधनम्। न तस्य दद्रुः कण्डूश्च तस्माद्रोगात्प्रमुच्यते ॥ १२ ॥
अकालमरणं तस्य प्रायश्चित्ते कृतेऽत्र च। प्रायश्चित्ते कृते तत्र जीवनं वर्षसप्ततिम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्यधिकपंचशततमः ॥ ९८७ ॥

श्रीसूर्य उवाच।

देवागारे तु या काचित्प्राग्भवे विनतासुत। सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारी पापप्रणाशनम्। वक्ष्ये गोमिथुनं दद्यात्प्राजापत्यं व्रतं चरेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय अष्टाशीत्यधिकपंचशततमः ॥ ९८८ ॥

### श्रीसूर्य उवाच ।

घातयेद्यः स्त्रियं साध्वीं कामात्पापविमोहितः । प्राग्भवे नियतं सोऽत्र कार्श्यं भजति जन्मतः १॥
तेनैव मृत्युमाप्नोति रोगेणैव पतत्रिण । प्राप्ते रिष्टेऽथ नष्टायुर्जायते महदेनसः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्यधिकपंचशततम ॥ ५८९ ॥

### श्रीसूर्य उवाच ।

कन्यकावधजात्पूर्वं तस्मात्कन्या प्रजा भवेत् । जन्मन्यत्र महाभाग पूर्वपापादिदं फलम् ॥ १ ॥
पूजनाल्लक्षरुद्राणां तद्वांना तथा सुत । मुच्यते पूर्वपापाच्च घोरात्कन्यावधादिह ॥ २ ॥
अथवा विधिना सूत तडागोत्सर्गपुण्यतः । विप्राणां भोजनाच्चास्मिस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापात्प्रमुच्येत नात्र कार्या विचारणा ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकपंचशततम ॥ ५९० ॥

### श्रीसूर्य उवाच ।

या च पूर्वभवे नारी देवद्रव्यापहारिणी । सात्र जन्मनि पक्षीन्द्र भवेद्वायुप्रपीडिता ॥ १ ॥
देवालयं सुरुचिरं कृत्वा स्थापयात्र देवताः । वायुरोगोपशमनं निश्चितं जायतेऽण्डज ॥ २ ॥
भोजयेत्तत्र वै विप्रान् वायुर्नश्यते पतत्रिण । दानं वित्तानुसारेण वित्तशाठ्यं न कारयेत् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकपंचशततम ॥ ५९१ ॥

### श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले सूत पूर्वजन्मन्यभूद् ध्रुवम् । गिरिवासी महादुष्टश्चौर्यकर्मरतो दृढम् ॥ १ ॥
लुण्ठितो ब्राह्मणस्तेन मार्गे संताडितो भृशम् । तत्ताडनान्महाबाहो मृतः काले द्विजोत्तमः ॥ २ ॥
गते बहुतिथे काले स जातो ब्राह्मणोऽधुना । गङ्गायमुनयोर्मध्ये क्रूरकर्मा महोद्यमी ॥ ३ ॥
प्राक् शिवाराधनात्पुण्याद्ब्राह्मणः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य पूर्वपापप्रनाशनीम् ॥४ ॥
सर्वस्वस्य समः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्य शृङ्गाभ्यां संयुतो महान् ॥ ५ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ६ ॥
तस्माच्छिवप्रसादाद्धि कुष्ठस्तस्य प्रशाम्यति ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायो द्विनवत्यधिकपंचशततम ॥ ५९२ ॥

### श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणा काचिद्भर्तुःप्रियतमा सदा । दानधर्मरता साध्वी विप्राणां पूजने रता ॥ १ ॥
तथा देवारता सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रे त्वददाद्विषं च तद्धशानुगम् ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं सद्धनं तथा । तद्दुःखेन पतिस्तस्या मृतः पुत्रशुचान्वितः ॥ ३ ॥
पापमाचरितं चोग्रं स्वपुत्रवधसंज्ञकम् । प्राप्ता यमपुरे भुक्त्वा पूर्वपुण्यफलं शुभम् ॥ ४ ॥
तद्वत्पापफलात्तत्र घोरान्नरकसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता पर्वतेऽधुना ॥ ५ ॥
क्षात्रे कुले महापुण्ये राजपुत्रास्ति पतत्रिण । सा रक्तगौरा धर्मज्ञा सदा पुण्यपरायणा ॥ ६ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नातिद्रव्ययुता मान्या सर्वकर्मसु कोशला ॥ ७ ॥
पुण्यादिदं तथा पापाल्लोभाढ्या न सपुत्रका । स्वल्पपापवता काले कुष्ठव्याधिसमन्विता ॥ ८ ॥
यौवने भर्तृसंयुक्ता वार्द्धक्ये सुखवर्जिता । सपत्नीपुत्रस्य वधात्पूर्वपापात्पतत्रिण ॥ ९ ॥

लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् । विष्णुः कार्यः शतैर्भागैः सौवर्णो विश्वयोनिभृत् ॥ १० ॥
तद्वन्महेश्वरः कार्यो गन्धैः पुष्पैरलंकृतः । देयो विप्रेषु पात्रेषु पूर्वपापप्रनुत्तये ॥ ११ ॥
जपेदष्टाक्षरं मन्त्रमयुतं होमयेत्ततः । गायत्रीं च जपेत्तद्वद्गावो देयास्तथा सुत ॥ १२ ॥
भोजयेच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् । एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् ॥ १३ ॥
न तस्याः कुष्ठमरणं तदग्रे जायते ध्रुवम् । नैवं या कुरुते नारी प्रायश्चित्तं विधानतः ॥ १४ ॥
पूर्वपापप्रभावेण तस्याः पुत्रविनाशनम् । विप्राणां पूजनाद्दानात्तस्याः संततिवर्धनम् ॥ १५ ॥
जीवनं कथितं तस्या वर्षाणामष्टसप्ततिम् । रिष्टं पष्टिमिताद्वर्षाद् ध्रुवं वा कृतनिष्कृतेः ॥ १६ ॥

इति श्रीस्कन्दसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकपंचशततमः ॥ ५९३ ॥

---

अरुण उवाच ।

कश्चिद्विप्रकुलोत्पन्नो शोभनाङ्गयवः सुत । सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किंचिद्व्यापारवान्भुवि । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षं समाश्रित्य पालिता भ्रातृमातुलैः । अस्त्रघातगदार्ता सा बाल्ये स्याद्ग्रहणीगदः ॥ ३ ॥
काष्ठलोष्टाश्मशस्त्राद्यैर्घातोऽस्याः करपादयोः । बहुपुत्रप्रसूता च अपुत्रा जायते भुवि ॥ ४ ॥
अथवा मृतपुत्रत्वं जायते केन मानद । जातमात्रा मृताः केचित्केचित्पीगण्डमाश्रिताः ॥ ५ ॥
केचिद्दशानना वापि मृतः पुत्रोऽष्टमासकः । रक्तस्रावाद् भृशं पीडा मासेमासे कृतानघ ॥ ६ ॥
केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ७ ॥

श्रीसूर्य उवाच ।

पूर्वे क्षात्रे समुत्पन्नः किंचिद्भूमिपतिस्तथा । तावज्जन्मनि वैश्यस्तु परवित्तापहारकः ॥ ८ ॥
दूतिकाकर्मनिरतो नानालोकप्रभेदन्वहम् । ग्रामाधीशोऽभवत्सोऽपि तेनाग्रे सर्वभावितम् ॥ ९ ॥
एकग्रामेऽवसद्विप्रः शान्तो दान्तः क्षमी सदा । पुत्र्यः पञ्च तथा तस्य चापुत्रो वित्तसंयुतः ॥ १० ॥
कालेनैव मृतो विप्रो हृतं तस्य धनं तदा । मिथ्याभिशंसनाद्वाक्यैः क्रोधयुक्तैश्च तर्जनैः ॥ ११ ॥
अपुत्रश्च मृतो विप्रः सर्वस्वं नीतवांस्तदा । निराधाराः सुता जाता द्विजभोजो न कारितः ॥ १२ ॥
क्रिया सर्वा कृता नैव सर्वं राज्ञा हृतं धनम । एवं क्रमापराधोऽसौ स क्षत्री सहदूतिकः ॥ १३ ॥
केचिन्मासाद्य पश्चाच्चिरान्मृत्युवशंगतः । म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासने ॥ १४ ॥
केचित्केचिद्विपच्यन्ते नरके भृशदारुणे । दानधर्मादिना केचिदिह जन्मनि मानद ॥ १५ ॥
विप्रवंशे समुत्पन्नो जायते चेह जन्मनि । इदं जन्म द्वितीयं तु विप्रत्वं जायते भुवि ॥ १६ ॥
पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते । ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते ॥ १७ ॥
नानापत्यानि नश्यन्ति नानाकर्मसमुद्भवात् । पापात्कृतानि कर्माणि भुज्यन्ते चेह जन्मनि ॥ १८ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पुत्रश्चिरं भवेत् । कन्यापत्यमशोभनं बहुपुत्रः प्रजायते ॥ १९ ॥

श्रीसूर्य उवाच ।

सुशुभे भूमिदेशे तु गोमयाद्युपलिप्तके । तत्रोपर्यांविकं स्तीर्यमथवा चाजिनं शुभम् ॥ २० ॥
छादयेच्छुक्लवस्त्रेण तण्डुलद्रोणपर्वतम् । तत्रोपरि न्यसेत्पात्रं ताम्रं दशकपालिनम् ॥ २१ ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम् । मुक्तायज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् ॥ २२ ॥

दधानं करयुग्मेन चाक्षमालां कमण्डलुम् । कश्यपाद्वामभागे च त्वदितिं विश्वमातरम् ॥ २३ ॥
सौवर्णां स्थापयेत्सूत सौवर्णद्वयनिर्मिताम् । आसनैश्च समास्थाय ततो द्रोणान् दिशो दश ॥२४॥
हारकेयूरमुकुटकुण्डलाभरणान्वितौ । एवं तौ दम्पती सम्यगर्चयेत्पर्वतोपरि ॥ २५ ॥
कृत्वा प्रतिष्ठितप्राणमर्चयेद्विविधैर्गुणैः । नानार्थं च फलं देयं नानापुष्पैश्च पूजयेत् ॥ २६ ॥
अभ्यर्च्य दंपती तौ तु मन्त्रमेतमुदीरयेत् ॥ २७ ॥

मन्त्रः ।

"यन्मया पूर्वजनुषि विप्राणां यद्धृतं धनम् । दूतिकाकर्मणा सूत वाक्यदोषादिकं कृतम् ॥२८॥
तत्सर्वं क्षम्यतां देव तव मूर्तिं ददाम्यहम्" ॥ २९ ॥
अदितिं च प्रणम्याथ कृताञ्जलिरिदं ब्रुवन् । अदिते विश्वमातस्त्वं शरण्या शरणार्थिनाम् ॥३०॥
प्रजादुःखौघसंतप्तं हृदयं मे महेश्वरि । संप्रसन्नाथ दुःखान्तां प्रजां देहि यशस्विनि ॥ ३१ ॥
एवं कृत्वा विसर्ज्याथ ब्राह्मणान्भोजयेत्ततः । शालग्रामशिलां शुद्धां सोमकान्तमणिं तथा ॥३२॥
चन्द्रसूर्योपरागे तु ब्राह्मणाय समर्पयेत् । एवं कृतविधिः सोऽप्य कृष्णां गां दापयेत्ततः ॥ ३३॥
सर्पिष्यात्मानमालोक्य भोजयेच्च समृद्धिभिः । ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ ३४ ॥
काष्ठलोष्टादिशस्त्राद्यैः करपादे व्रणो वदेत् ॥ ३५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकपंचशततमः ॥ ५९४ ॥

श्रीसूर्य उवाच ।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेऽण्डज । स राजयक्ष्मरोगेण युक्तः स्यादत्र जन्मनि ॥ १ ॥
तस्मिन्वयसि पक्षीन्द्र सोऽपि प्राणैर्विमुच्यते । महापापोद्भवाद्रोगान्न चोक्तं विस्मयं मया ॥ २ ॥
अपि ज्ञानकृतात्पापाद्धदरूपेण[1] काश्यप । नाशयत्यमरां सिद्धिं पूर्णायुरपि च ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चनवत्यधिकपञ्चशततमः ॥ ५९५ ॥

श्रीसूर्य उवाच ।

परगर्भं तु यः कश्चित्पातयेज्ज्ञानवर्जितः । जलोदरेण सततं रोगेणात्र प्रपीडितः ॥ १ ॥
जलधेनुप्रदानेन विधिना गरुडाग्रज । ताम्ररूप्यसुवर्णानामग्दानात्पापविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्यधिकपञ्चशततमः ॥ ५९६ ॥

श्रीसूर्य उवाच ।

ब्राह्मणोऽभूत्कुरुक्षेत्रे कृषिकृद्वेदपारगः । स्वज्ञातीयस्य चान्यस्य वृत्तिलोपः कृतस्तदा ॥ १ ॥
तत्संबन्धेऽभवद्युद्धं द्वयोरेको मृतस्तदा । वृत्तिलोपी द्विजः काले गतो हि यमशासनम् ॥ २ ॥
भुक्त्वा तत्पापजं सर्वं शवद्युनिकटेऽधुना । सैव जातो द्विजश्चात्र युवभावे पतत्रिण ॥ ३ ॥
तत्पापनाशनं सर्वं प्रायश्चित्तं प्रवक्ष्यहम् । वेदाभ्यासान्महासूत सावित्रीजपतस्तथा ॥ ४ ॥
गङ्गायां वासतः पूर्वात्सर्वपापात्प्रमुच्यते । न कुष्ठवृद्धिरत्रास्ति तत्काले शमनं भवेत् ॥ ५ ॥
जीवेत्षष्टिमिताब्दान्तं रिष्टं चैव प्रशाम्यति । गतिस्तस्य महाभाग वेदाभ्यासाज्जपात्तथा ॥ ६ ॥
भविष्यति शुभा लोके परत्र च खगेश्वर ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तनवत्यधिकपञ्चशततमः ॥ ५९७ ॥

---

१ दद्रुरूपेण इति—ख पु० ।

श्रीसूर्य उवाच।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा। बभूव भर्तृसुहृदा तदाज्ञापालिनी सती ॥ १ ॥
अत्र जन्मनि सा विप्रा काश्यां जाता हि सुव्रत। व्रतदानपरात्रापि भर्तृतोषणसंयुता ॥ २ ॥
पश्चपश्चाशदब्दान्तं प्रविशेदत्र जन्मनि। स्वर्गकामा चितायां तु नात्र कार्या विचारणा ॥ ३ ॥
सा गमिष्यति वै स्वर्गं चात्र जन्मनि वै नरः। भविष्यति महाराजकुले राजातिधार्मिकः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकपंचशततमः ॥ ५९८ ॥

श्रीसूर्य उवाच।

पीड्यते वायुरोगेण दारुणेन पतत्रिण। पूर्वजन्मनि यश्चायात्पूर्वं शूद्रां गृहाश्रिताम् ॥ १ ॥
प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं चरेत्। व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजस्त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोनषट्शततमः ॥ ५९९ ॥

श्रीसूर्य उवाच।

स्वगर्भं पातयेत्पूर्वं नारी पापविमोहिता। जलोदरकृता पीडा जायते चात्र जन्मनि ॥ १ ॥
रजतस्वर्णताम्राणां दानाद्रोगविनाशनम्। जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्शततमः ॥ ६०० ॥

श्रीसूर्य उवाच।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा। दानधर्मपरा भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुखजा सगर्भा फललालसा। त्रोटितं च फलं पक्वं भक्षार्थं चौर्यकर्मणा ॥ २ ॥
तेन कर्मविपाकेन फलहीना इहाभवत्। भवन्ति खलु ये पुत्रा अर्वाक् वर्षाष्टतोऽण्डज ॥ ३ ॥
पञ्चत्वमाप्नुवन्त्यत्र यस्मादकृतनिष्कृतिः। निष्कृतिं तत्प्रवक्ष्यामि पूर्वपापविनाशनीम् ॥ ४ ॥
शनिवारेऽण्डजश्रेष्ठ निमन्त्र्याश्वत्थकं सुत। तत्तले ब्राह्मणान्सूर्यदिने पश्चात् तु भोजनम् ॥५॥
नानाफलैस्तथा पक्वैः सपूपैः रससंयुतैः। फलानि विकिरेत्तत्र कृत्वाश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेत्तु महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकषट्शततमः ॥ ६०१ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि या काचिद्घातयेद्ब्राह्मणं सुत। सात्र जन्मनि कुष्ठेन तस्मिन्वयसि पीडिता ॥ १ ॥
जायते म्रियते सा च गलत्कुष्ठेन चाण्डज। पापाद् ज्ञानकृतात्पूर्वात्र चोक्तं विन्मयं मया ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकषट्शततमः ॥ ६०२ ॥

श्रीसूर्य उवाच।

देशे हि यामुने ह्यासीत्पूर्वं वाहुजसंज्ञकः। गङ्गास्नानं कृतं पूर्वं वाहुजानां सहायतः ॥ १ ॥
शकटेन कुटुम्बं तु पाल्यते तेन जानता। एकस्मिन्वै दिने गत्वा ददाह वनमद्भुतम् ॥ २ ॥
बलदेवस्य संप्राप्ता जीवा दग्धा महाकुलाः। बन्धोः साहाय्यतस्तत्र कृतं कर्मातिदारुणम् ॥३॥
शुभाशुभफलं भुक्त्वा पापाच्च नरकांस्तथा। मध्ये तु जाह्नवीस्नानात्स जातः शूद्रजे कुले ॥ ४ ॥
विपाशानिकटे देशे योजने सप्तसंमिते। भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥

बहुलोमी महास्त्रीको देवतातिथिपूजकः । भ्रातृहीनः शठो धूर्तः पुत्रसंततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुर्यमयुक्तोऽल्पसंततिः । लक्षणैर्लक्षितश्चैक्तिरवेहि गरुडाग्रज ॥ ७ ॥
वन्योः साहाय्यतः पापात्पूर्वजन्मसमुद्भवात् । तस्माद्भ्रातृपुत्रहीनो जायतेऽत्रैव जन्मनि ॥ ८ ॥

अरुण उवाच ।

चिन्मयं कथ्यतां देव सुतसौख्यविवर्धनम् । सर्वपापप्रशमनं लोकानां हितकारणम् ॥ ९ ॥

श्रीसूर्य उवाच ।

चिन्मयं तत्प्रवक्ष्यामि जन्तुदुःखविनाशनम् । वनदेवी तया कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी शुभा लेख्या यत्नेनचतुरस्रके । वनजीवास्तया लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तया कार्यो माषत्रयविनिर्मितः । राजतं पलमेकं तु गणाध्यक्षं शिवात्मकम् ॥ १२ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया कार्यसाधिनी । देया वेदविधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रजापतिस्तया देयः सर्वकल्मषनाशनः । शृणुयाद्भारतं वापि नारायणमुभाषितम् ॥ १४ ॥
अष्टाक्षरं तथा मन्त्रं जपेच्च विधिपूर्वकम् । दशायुतं तदर्धं वा तदर्धं विनतासुत ॥ १५ ॥
होमयेत्तद्दशांशेन तद्दशांशेन भोजनम् । तथामितं सूर्यमन्त्रं जपेत्प्रणवपूर्वकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते । य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ १७ ॥
तस्य पुत्रविवृद्धिः स्यादिह जन्मनि जायते । अकृते तु यथाशक्त्या रिष्टं पञ्चपदेऽब्दके ॥१८॥
प्रायश्चित्ते कृते सूत जीवनं नवसप्ततिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकषट्शततम ॥ ६०३ ॥

श्रीसूर्य उवाच ।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत । सात्राजीर्णेन रोगेण दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यात्स्नानाविधिं चान्नं रसतर्पसमन्वितम् । विप्रेभ्यो भोजनं दद्यात्स्वशक्त्या दद्याच्च दक्षिणाम् ॥ २॥
होमयेच्च तथान्नानि गायत्र्या त्र्यम्बकेन तत् । मुच्यतेऽजीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकषट्शततम ॥ ६०४ ॥

श्रीसूर्य उवाच ।

देवमूर्तिश्च यः कश्चिद्देवागारस्थितेः सुत । भङ्गं कुर्यान्नरो मोहात्स्थापिता च परेण या ॥ १ ॥
अप्रतिष्ठो भवेदत्र जन्मन्यत्र खगाधिप । वर्षत्रयं तथाश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाधिकषट्शततम ॥ ६०५ ॥

श्रीसूर्य उवाच ।

यश्चाचेद्राजवधं मोहात्पूर्वभवे नरः । स राजयक्ष्मी विज्ञेयो घोरपापसमुद्भवः ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः । गोभूहिरण्यमिष्टान्नतिलवस्त्रान्नदानतः ॥ २ ॥
घृतधेनुप्रदानेन क्षयरोगं न पश्यति । दानं यथानुमानेन सर्वस्वार्धार्धकेन च ॥ ३ ॥
देयं द्विजवरायैवं विचार्यात्र प्रयत्नतः । तत्क्षणं काश्यपेयात्र क्षयरोगः प्रणश्यति ॥ ४ ॥
रिष्टे नैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्याय षडधिकषट्शततमः ॥ ६०६ ॥

श्रीसूर्य उवाच।

या नारी वातयेत्काचित्परगर्भं पतत्रिण। जलोदरेण रोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
गङ्गास्नानाच्च सततं विधिनार्के मृगे स्थिते। तथा तज्जलपानेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकषट्शततमः ॥ १०७ ॥

श्रीसूर्य उवाच।

वाग्विरोधी भवेद्यश्च पूर्वजन्मनि वादिनाम्। सोऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
मोक्षादिदं चरेत्सूत देयं दानं द्विजातये। वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वस्त्रैः शुद्धैः क्षौमजैर्गरुडाग्रज। तत्पापनाशनं सर्वं प्राग्जन्मोक्तं परंतप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ध्यायोऽष्टाधिकषट्शततमः ॥ १०८ ॥

श्रीसूर्य उवाच।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवेऽभूत्सुतान्विता। अयोध्यायां तु सुमुखी धनभर्तृसमन्विता ॥१॥
पूर्वपापप्रभावेण सपत्न्या गर्भनाशनात्। जातेयं पाद्मजाऽत्रैव दुःखार्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणोदनम्। काश्यां गत्वात्र विधिना शिवमाराध्य यत्नतः ॥ ३ ॥
अन्नैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः। शिवरात्रौ ततः पश्चाद्दीपमालादिनेऽण्डज ॥ ४ ॥
अर्धरात्रे महानद्यां मध्ये स्नानं तु कारयेत्। मन्त्रैर्वरुणसूक्तैश्च नौकायां वा पतत्रिण ॥ ५ ॥
या चैनं कुरुते सम्यक्तस्याः स्यात्संततिर्ध्रुवम् ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवाधिकषट्शततमः ॥ १०९ ॥

श्रीसूर्य उवाच।

परनिन्दां तु यः कश्चित्प्राग्भवे विनतासुत। कुर्याद्दुर्मतिमापन्नः खल्वाटो जायतेऽधुना ॥ १ ॥
दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम्। ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशाधिकषट्शततमः ॥ ११० ॥

श्रीसूर्य उवाच।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत। सात्र जन्मनि तत्काले क्षयरोगप्रपीडिता ॥ १ ॥
यक्ष्मणा च क्षयं यान्ति धातवः सर्वदेहिनाम्। धातुक्षये क्षयं याति तच्छरीरमशाश्वतम् ॥ २ ॥
पूर्वं दृष्टं कृतं पापं तस्मात्प्रोक्तः पतत्रिण। पापनाशकरः कश्चिदुपायस्त्वत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकषट्शततमः ॥ १११ ॥

श्रीसूर्य उवाच।

या वाग्विरोधिनी नारी भर्तुः पूर्वभवे सुत। मूकत्वं जायते तस्मात्त्वत्र जन्मनि निश्चयात् ॥ १ ॥
तत्पापनाशनं दानं दद्याद्वेदस्य पुस्तकम्। ब्राह्मणे वेदविदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
पूजयेच्च तिलान् भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याया द्वादशाधिकषट्शततमः ॥ ११२ ॥

श्रीसूर्य उवाच।

या कांचिद्भञ्जनं कुर्यान्नारी पूर्वभवेऽण्डज। प्रतिमाया देवगेहे स्थापितामपरेण च ॥ १ ॥

अप्रतिष्ठान्विता सा च जायते वै पतत्रिण । वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकपञ्चशततमः ॥ ६१३ ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः । गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः ॥ १ ॥
विधिना तत्र दत्तानि काम्यश्राद्धानि मानद । ततो भाविवलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम् । सर्वैर्मिलित्वा तद् भुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥३ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्स्वर्गफलं भुक्त्वा पापाच्च नरकं भृशम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपोऽमितदो घृणी । बहुदेशेऽधिकाराढ्यः पुण्यात्सर्वफलं त्विदम् ॥६॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । संतानसुखहीनस्तु सुरूपा स्त्री सुखोज्झिता ॥७ ॥
बन्धुहीनः पतिः साक्षात्सर्वं तत्पापतः फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधनीम् ॥
कुबेरप्रतिमां रौप्यीं पञ्चस्वर्णमितां शुभाम् । तदर्धार्धमितां वापि त्रिपु वित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च । लक्ष्मीनारायणं दद्यात्सौवर्णं वेदसंमितम् ॥१०॥
शुभं लेख्यं पवित्रं च पुत्रसंततिवर्धनम् । य एवं कुरुते भक्त्या तस्य रिष्टं न लिप्यते ॥ ११॥
प्रायश्चित्ते कृते त्वत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकपञ्चशततमः ॥ ६१४ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो वाताधिकशरीरवान् । क्षामाङ्गः क्षितिवर्णाभः स्वल्पवृत्तिश्च जीवति ॥ १ ॥
देवब्राह्मणभक्तश्च किंचिद्वादपरायणः । करे पादे कुशास्त्रेण दंष्ट्रिशृङ्गिविधानत ॥ २ ॥
व्रणत्वं जायते दीर्घनेत्रतोदो विरश्मिता । परोक्षमपवादं च ब्रुवते लोकतोऽन्वहम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं वदते किंचित्किंचित्क्लेशस्य कारिणी ॥ ४ ॥
अपत्यानि मृतानीह एको वा द्वौ त्रयोऽपि वा । वर्षत्रयमिता बाला म्रियन्ते माससंमिताः ॥ ५ ॥
केन कर्मविपाकेन मृतापत्या तु साऽनव । एकस्तुंदे स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
पृथगेवं कुमातॄणां मृतापत्या प्रजायते । गतो बहुतरः कालः कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वं वैनतेय तृतीयेऽत्रैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानव्रतदयायुक्तः प्रियामीतिः परस्परम् । तस्याप्यपरमातुस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
एको वै पादचारस्तु तृतीयश्च स्तनंधयः । गर्भयुक्तश्चतुर्थस्तु पिता मृत्युवशं गतः ॥ १० ॥
क्रियाकर्म कृतं पुत्रैर्विवेन सदृशं खग । मासैस्त्रिभिर्व्यतिक्रान्तैर्ज्येष्ठेनैव दुरात्मना ॥ ११ ॥
निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात् । मात्रादि दुःखेन हृदयं ताडितं भृशम् ॥ १२ ॥
अभिघाताच्छिलाभूता गर्भयुक्ता दिवं गता । अचिरात्तेन कालेन ज्येष्ठश्चौरेण घातितः ॥ १३ ॥
इदं जन्म द्वितीयं तु मृतापत्यं प्रजायते । पुरा कृतानि कर्माणि भुज्यंते चेह मानवैः ॥ १४ ॥

---

१ ऋणी इति—ख पु० ।

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । गर्भस्थश्च मृतापत्यं लवूनि चाऽलवूनि यत्॥१५॥
तस्य पापस्य शुद्ध्यर्थं निष्कृतिं वद मे प्रभो ॥ १६ ॥

श्रीसूर्य उवाच ।

सौम्यायने तु संप्राप्ते सानुकूले ग्रहेऽहनि । सपत्नीकः शुचिः स्नातः पञ्चगव्येन चोत्तमः ॥ १७॥
उपोषणं दिवा रात्रौ प्रातश्चानुदिते रवौ । सुरभेर्वै सगर्भाया गोमयेनोपलेपयेत् ॥ १८ ॥
सुशुभे भूप्रदेशे तु कुंकुमाद्युपचर्चिते । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १९ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् । सौवर्णं राजते पद्मे सायुधं च चतुर्भुजम् ॥ २० ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । जनन्या सह संभूतान् प्रद्युम्नाद्यांस्तथार्चयेत् ॥ २१ ॥
चारुदेष्णं सुवेषं च चारुगुप्तं यशोन्वितम् । इभवाहुं चारुवाहुं सुचारुं पूजयेत्क्रमात् ॥ २२ ॥
पूजनं विष्णुसूक्तेन तथा श्रीसूक्तमंत्रैः । पुष्पस्रग्धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः ॥ २३ ॥
तद्विप्रातोऽथ तद्विष्णोरस्तोदेवांश्च पूजयेत् । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै ॥ २४ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २५ ॥

मंत्रः ।

" यन्मया पापकर्माद्याः कृता वै पूर्वजन्मनि । सपत्न्यां[1] चैकजातीनां संप्रेता च पुत्रिणी ॥२६॥
स्ववंशहननाद्वापि भूमिद्रव्यादिलिप्सया । लवूनामलवूनां च हत्वा वै पूर्वजन्मनि ॥ २७ ॥
ततोऽथ वै मया प्राप्तं दुःखं नानाविधं त्विदम् । तत्तदेनोविनाशाय दानं संप्रददे त्विदम्" ॥२८॥
स्वस्त्यस्तु चेति तत्रोक्तः कोऽस्मादिति विसर्जनम् । सर्पिष्यात्मानमालोक्य भोजयेदिष्टवान्धवान्॥
ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिशंसनम् । काष्ठलोष्टकुठाराद्यैर्घातः स्याद्बालक्रीडनात् ॥ ३० ॥
जलादग्न्यादिना वापि व्रणो वा तस्य जायते । स्त्रियोऽङ्गे विकृतिर्व्याधिर्मुखेतिलव्रणादिकम्॥३१॥
वैरेयी मातुलानीनां नेत्रतोदो विरश्मिता । स्वसुर्मातृष्वसुर्वापि बाल्ये वैधव्यमेवं च ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशाधिकषट्शततमः ॥ ६१५ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहात्परनिन्दां च कारयेत् । खल्वाटद्युना सा च जायतेऽत्रैव जन्मनि ॥१॥
धेनुं दद्यान्महाभाग विधियुक्तां सकम्बलाम् । तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशाधिकषट्शततमः ॥ ६१६ ॥

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः । गण्डमालाख्यरोगेण संयुक्तो जायतेऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । गृहीत्वा कम्बलं शुद्धं नवं तद्वेदपारगे ॥ २ ॥
कुटुम्बिने दरिद्राय दद्याद्दोषापनुत्तये । गण्डमालाहरं चैव दानं प्रोक्तं मया त्विद ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशाधिकषट्शततमः ॥ ६१७ ॥

श्रीसूर्य उवाच ।

कुलस्त्रीयं महादुष्टा पूर्वमासीत्पतत्त्रिण । अत्र पूर्वकृतात्पापान्मातुषी संकरा स्मृता ॥ १ ॥

---

[1] सपत्नीनां इति स्यात् ।

धनपुत्रविहीना चा सात्र जन्मनि दृश्यते । निष्कृतिं तत्प्रवक्ष्यामि प्रयागे मरणं सुत ॥ २ ॥
बलात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकशततमः ॥ ११८ ॥

श्रीसूर्य उवाच ।

पक्षपातं च यः कुर्यात्सभायां ब्राह्मणस्य च । पक्षाघातेन रोगेण पीडा तत्रैव जायते ॥ १ ॥
दद्यान्निष्कत्रयं स्वर्णं ब्राह्मणाय कुटुंबिने । तस्माद्रोगाद्विमुच्येत पक्षघातात्पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकशततमः ॥ ११९ ॥

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा । गण्डमालाख्यरोगेण संयुक्ता जायतेऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । पूर्वपापहरं पुण्यं दद्यादत्र च कंबलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते । द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकशततमः ॥ १२० ॥

श्रीसूर्य उवाच ।

यः कश्चिद्ब्राह्मणं हन्याद्ब्राह्मणस्य खगाधिप । वङ्गदेशेऽवसत्पूर्वं चात्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः । धनधान्यरतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥
विद्याज्ञानात्कृतात्पूर्वं शृणु पापफलं तथा । क्षयरोगाकुलः क्षीणः पुत्रसंततिवर्जितः ॥ ३ ॥
बालघातनजात्पापाद्ब्राह्मणस्य पतत्रिण । महाक्रोधपरो लोभी नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्मघातविमोचनीम् । प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान् । गन्धपुष्पैस्तथा धूपैर्लक्षसंख्यान्विधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा । पद्मस्रे चतुरस्रे वा कुण्डे चाज्यतिलाञ्शुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्राञ्शिवान्क्रमरलड्डुकैः । नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥ ८ ॥
विविधां दक्षिणां दद्याद्द्विजप्रीतिकरां तथा । पश्चात्तेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
बालघातजात्पापान्मुच्यतेऽत्र ममाज्ञया । चतुर्दश्यामथाष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः । पूजयेदर्घ्यपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तस्य तत्सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर । आयुस्तस्य शतं प्रोक्तं पञ्चहीनं च पुत्रक ॥१२॥
प्रायश्चित्तेकृते ह्यायुः पञ्चम्यां चन्द्रवासरे । विनिमये त्वकृते सूत चत्वारिंशन्मिताब्दके ॥ १३॥
रिष्टं स्यात्क्षयरोगेण बालघातस्य निश्चितम् । ब्रह्मवधान्महापापात्पूर्वजन्मकृताद्दृढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि । बाध्यते क्षयरोगेण सप्तजन्मानि निश्चयात् ॥ १५ ॥
ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः । न हीदृशं महापुण्यं क्षयरोगविनाशनम् ॥ १६ ॥
पुत्रवृद्धिकरं चात्र[1]यथा प्रोक्तं शिवार्चनम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकशततमः ॥ १२१ ॥

श्रीसूर्य उवाच ।

विनापराधं या नारी परपक्षं च घातयेत् । पक्षाघातेन रोगेण पीडितात्रैव जायते ॥ १ ॥

१ पुत्रहीनेऽपीति स्यात् ।

तथा निष्कामितं स्वर्णं देयं पापविशुद्धये । मुच्यतेऽत्र महारोगात्पक्षवातान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकषट्शततमः ॥ ६२२ ॥

### श्रीसूर्य उवाच ।

यो द्विजः प्राग्भवे मोहात्सुरां तु विविधां पिबेत्।मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जायते ॥१॥
गृहवित्तानुसारेण पलेन द्विपलेन वा । कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥
आवाह्य तत्र ब्रह्माणं प्रभुं सर्वोपचारकैः । पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥
दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्यधिकषट्शततमः ॥ ६२३ ॥

### श्रीसूर्य उवाच ।

वैकुण्ठादागतस्तत्र मथुरायां पतत्रिण । जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
घोरे कलियुगे प्राप्ते पापाक्रान्ते महीतले । भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकषट्शततमः ॥ ६२४ ॥

### श्रीसूर्य उवाच ।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज । कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णशतकं दद्यात्तु तद्दोषविनाशनम् । चान्द्रायणत्रयं कुर्यात्तदा तद्दोषशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्यधिकषट्शततमः ॥ ६२५ ॥

### श्रीसूर्य उवाच ।

राजयक्ष्मान्विता सात्र तस्मिन् वयसि भामिनी । प्रायश्चित्तं परं तस्याः शृणुष्वाथ खगेश्वर ॥१॥
यत्कृते विधिना सर्वं पूर्वजन्मावनाशनम् । स्वर्णगोभूमिमिष्टान्नघृतधेनुतिलानि च ॥ २ ॥
देयानि श्रद्धया सूत क्षयरोगापनुत्तये । रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्ते कृतेऽधुना ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकषट्शततमः ॥ ६२६ ॥

### श्रीसूर्य उवाच ।

अपराधमृते कश्चिद्वैश्यं हन्यात्पतत्रिण । प्राग्जन्मन्यत्र युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥ १ ॥
भविष्यति न संदेहस्तस्य मृत्युः खगाधिप । अपि दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥
विंशद्वर्षे महारिष्टं रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकषट्शततमः ॥ ६२७ ॥

### श्रीसूर्य उवाच ।

मेरोः समागतो योऽयं प्राप्तो माथुरमण्डले । सर्वभूतोपकाराय दुष्टनाशकताय च ॥ १ ॥
प्राप्ते कलियुगेऽत्रैव सर्वपापविवर्जितः । कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकषट्शततमः ॥ ६२८ ॥

### श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्वैश्य चान्यजन्मनि मानवः । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥

धनपुत्रविहीना चा सात्र जन्मनि दृश्यते। निष्कृतिं तत्रवक्ष्यामि प्रयागे मरणं सुत ॥ २ ॥
बलात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टदशाधिकषट्शततमः ॥ ६१८ ॥

श्रीसूर्य उवाच ।

पक्षपात च यः कुर्यात्सभायां ब्राह्मणस्य च। पक्षाघातेन रोगेण पीडा तत्रैव जायते ॥ १ ॥
दद्यान्निष्कत्रयं स्वर्णं ब्राह्मणाय कुटुंबिने। तस्माद्रोगाद्विमुच्येत पक्षघातात्पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकषट्शततमः ॥ ६१९ ॥

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा। गण्डमालाख्यरोगेण संयुक्ता जायतेऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। पूर्वपापहरं पुण्यं दद्यादत्र च कंबलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते। द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोविंशत्यधिकषट्शततम ॥ ६२० ॥

श्रीसूर्य उवाच।

यः कश्चिद्ब्राह्मणं हन्याद्ब्राह्मणस्य खगाधिप। वङ्गदेशेऽवसत्पूर्वं चात्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः। धनधान्यरतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥
विद्याज्ञानात्कृतात्पूर्वं शृणु पापफलं तथा। क्षयरोगाकुलः क्षीणः पुत्रसंततिवर्जितः ॥ ३ ॥
बालघातनजात्पापाद्ब्राह्मणस्य पतत्रिण। महाक्रोधपरो लोभी नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्मघातविमोचनीम्। प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान्। गन्धपुष्पैस्तथा धूपैर्लक्षसंख्यान्विधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा। पद्मे चतुरस्रे वा कुण्डे चाज्यतिलाञ्छुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्राञ्छिवान्कुमरलड्डुकैः। नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥ ८ ॥
विधिवां दक्षिणां दद्याद्रुद्रप्रीतिकरां तथा। पश्चात्तेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
स बालघातजात्पापान्मुच्यतेऽत्र ममाज्ञया। चतुर्दश्यामथाष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः। पूजयेदर्घ्यपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तस्य तत्सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर। आयुस्तस्य शतं प्रोक्तं पश्चहीनं च पुत्रक ॥१२॥
प्रायश्चित्तेकृते ह्यायुः पञ्चम्यां चन्द्रवासरे। विंमिये स्वकृते सूत चत्वारिंशान्विताब्दके ॥ १३॥
रिष्टं स्यात्क्षयरोगेण बालघातस्य निश्चितम्। ब्रह्मघातान्महापापात्पूर्वजन्मकृताद्दृढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि। बाध्यते क्षयरोगेण सप्तजन्मनि निश्चयात् ॥ १५ ॥
ब्रह्मघ्न क्षयरोगी स्यादिति वेदविदो विदुः। न हीदृशं महापुण्यं क्षयरोगविनाशनम् ॥ १६ ॥
पुत्रवृद्धिकरं चात्र[1]यथा प्रोक्तं शिवार्चनम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकषट्शततमः॥ ६२१ ॥

श्रीसूर्य उवाच।

विनापराधं या नारी परपक्षं च घातयेत्। पक्षाघातेन रोगेण पीडितात्रैव जायते ॥ १ ॥

१ पुत्रहीनेऽस्मीति स्यात्।

तया निष्कामितं स्वर्णं देयं पापविशुद्धये। मुच्यतेऽत्र महारोगात्पक्षघातान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकषट्शततमः ॥ ६२२ ॥

श्रीसूर्य उवाच।

यो द्विजः प्राग्भवे मोहात्सुरां तु विविधां पिबेत्।मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जायते ॥१ ॥

गृहवित्तानुसारेण पलेन द्विपलेन वा। कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥

आवाह्य तत्र ब्रह्माणं प्रभुं सर्वोपचारकैः। पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥

दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रयोविंशत्यधिकषट्शततमः ॥ ६२३ ॥

श्रीसूर्य उवाच।

वैकुण्ठादागतस्तत्र मथुरायां पतत्त्रिण। जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥

घोरे कलियुगे प्राप्ते पापाक्रान्ते महीतले। भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥

कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकषट्शततमः ॥ ६२४ ॥

श्रीसूर्य उवाच।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज। कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥

सुवर्णशतकं दद्यान्न तद्दोषविनाशनम्। चान्द्रायणत्रयं कुर्यात्सदा तद्दोषशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्यधिकषट्शततमः ॥ ६२५ ॥

श्रीसूर्य उवाच।

राजयक्ष्मान्विता साऽत्र तस्मिन् वयसि भामिनी। प्रायश्चित्तं परं तस्याः शृणुष्वाथ खगेश्वर ॥१॥

यत्कृते विधिना सर्वं पूर्वजन्माघनाशनम्। स्वर्णगोभूमिमिष्टान्नघृतधेनुतिलानि च ॥ २ ॥

देयानि श्रद्धया सूत क्षयरोगापनुत्तये। रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्ते कृतेऽधुना ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकषट्शततमः ॥ ६२६ ॥

श्रीसूर्य उवाच।

अपराधमृते कश्चिद्वैश्यं हन्यात्पतत्त्रिण। प्राग्जन्मन्यत्र युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥ १ ॥

भविष्यति न संदेहस्तस्य मृत्युः खगाधिप। अपि दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥

त्रिंशद्वर्षे महारिष्टे रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकषट्शततमः ॥ ६२७ ॥

श्रीसूर्य उवाच।

मेरोः समागतो योऽयं प्राप्तो माथुरमण्डले। सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥

प्राप्ते कलियुगेऽत्रैव सर्वपापविवर्जितः। कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकषट्शततमः ॥ ६२८ ॥

श्रीसूर्य उवाच।

यो मोहाद्घातयेद्वैश्य चान्यजन्मनि मानवः। सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥

प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग क्षय स्यात्पापकृद्रुजः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदधिकषट्शततमः ॥ ६२९ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । सात्र जन्मनि मूत्रेण कृच्छ्रेणातिप्रपीडिता ॥१॥
प्रायश्चित्तं परं तस्या घोरपापहरं सुत । सुवर्णपद्मं पक्षीन्द्र सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय विधिज्ञाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकषट्शततमः ॥ ६३० ॥

अरुण उवाच ।

कश्चिद्विप्रोत्तमो जातः किंचिद्वित्तसमन्वितः । कासश्वासादिना बाधा उदरार्तिः प्रजायते ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यशासनः । प्रिया प्रीतिपरा नित्यं ब्रताचामनुकांक्षिणी ॥ २ ॥
किंचित्क्रोधगता या तु अवाक्ये वाक्यकारिणी । उदरे वातजा रोगाः शिरोर्तिर्नेत्रतोदकृत् ॥ ३ ॥
अपत्यानि म्रियन्ते च एकोऽपि द्वौ त्रयोऽपि वा । रजोदोषात्प्रपीड्येत वेदना विविधा कृता॥४॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

भर्त्रा कर्म कृतं नैव स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ६ ॥
व्रतानि विविधान्येव कृतानि सुवि मानद । स्वगृहे धान्यराशिं गोरभक्षन्नियतं पुरा ॥ ७ ॥
ब्राह्मण्या सा सवत्सा गौर्धान्यभक्षणतत्परा । गृहीतया लकुट्या वै तया कुक्षौ प्रताडिता ॥ ८ ॥
सगर्भायास्तु सुरभेर्गर्भकुक्ष्युपघातनात् । मृतो वै गर्भमध्यस्थः प्रसवे दुःखिता भृशम् ॥ ९ ॥
शिशुदुःखेन सुरभी भृशमाक्रन्दती मृता । तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ १० ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः । इदं जन्म तृतीयं तु मृतापत्यं खगेश्वर ॥ ११ ॥
सप्तजन्मनि जायेत गोस्त्रीब्रह्मघातकः । नानापापकर्मणां तेषां नानापत्यार्थदुःखकृत् ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येनापत्यं प्रजीवति । अनुग्राह्योऽस्म्यहं देव लोकानां हितकाम्यया ॥१३॥

श्रीसूर्य उवाच ।

माघे मासि च संप्राप्ते सानुकूल्यग्रहेऽहनि । सपत्नीकः शुचिः स्नात औषधैः स्नानमन्त्रतः ॥१४॥
उपोषणं दिवा रात्रौ त्रयोदश्यामनिर्जितः । पूर्णमास्या दिनं प्राप्य प्रातश्चानुदिते रवौ ॥ १५ ॥
सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । तत्रोपरि गवां स्थानं चोदङ्मुखः समाविशेत् ॥१६॥
अर्हणाद्युपचारैश्च कुंकुमाद्यैस्तथार्चयेत् । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १७ ॥
तत्रोपरि न्यसेद्देवं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं च चतुर्भुजम् ॥ १८ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । विष्णुसूक्तेन सूक्तेन श्रियः सूक्तेन पूजनम् ॥ १९ ॥
पुष्पैश्च धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः । रुद्रैकादशनामभिश्च जपेद्रुद्र विधानतः ॥ २० ॥
पूज्यो लक्ष्मीपतिः पुष्पैरर्चयेद्गन्धवारिभिः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वा ॥ २१ ॥
रुद्रस्यायुतहोमश्च समध्वाज्यसमाहुतिः । एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥ २२ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

यन्मया कर्मवशतः पुराभवे दुरात्मना । धेनुः सगर्भोपहता लकुटचा कुक्षिताडनात् ॥ २४ ॥
तेन कर्मवशात्यासं मृतगर्भादिना भृशम् । मृतसंततिदुःखानि प्राप्यंते महदेनसः ॥ २५ ॥
तत्तदेनोविनाशार्थं दानं संप्रददे त्विदम् ।" स्वस्त्यस्त्विति च तत्रोक्ता कोदादिति विसर्जनम् २६
सर्पिष्यात्मानमालोक्य अन्यान्वै तोपयेद्द्विजान् । भूमिद्रविणवासांसि दानं दत्त्वा विधानतः२७॥
व्रतान्ते सुरभीं दद्याद्धेमद्रव्यादिशक्तितः । अहःशेषे ततः सर्वं भोजयेदिष्टबान्धवान् ॥ २८ ॥
यदीदृशं लक्षणं तस्य शरीरेऽप्युपजायते । काष्ठलोष्ठादिशस्त्रार्यैर्वातः स्यादुपलेखनात् ॥ २९ ॥
शृङ्गिभ्यश्चोपघातश्च जायन्ते व्रणजातयः । जलाकुलत्वं स्पर्शोऽश्नो तादृशी तत्र वेदना ॥ ३० ॥
स्त्रियोङ्गे विकृतिर्व्याधिमुखे तिलव्रणादिकम् । पत्नीया मातुलानीनां विधवानिः स्वस्त्रादिषु ॥३१॥
इति श्रीहृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकत्रिंशदधिकषट्शततमः ॥ ६३१ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । मद्रेणातिदुःखेन साऽत्र जन्मनि पीडिता ॥ १ ॥
प्रायश्चित्तं परं तस्याः मद्ररस्य प्रणाशनम् । दद्यादुक्ममयं पद्मं सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय निवेदयेत् ॥ ३ ॥
इति श्रीहृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्वात्रिंशदधिकषट्शततमः ॥ ६३२ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रस्त्रिविधां वै सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं व्रजेत् ॥ १ ॥
चिह्नं श्यावदन्तेन लक्षितः पादजः सदा । सप्तजन्मसु रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
इदात्मायपापजातस्तु प्रायश्चित्तं न विद्यते । पापक्षयेऽवशेषे च कृच्छ्रं सांतपनं चरेत् ॥ ३ ॥
इति श्रीहृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकषट्शततमः ॥ ६३३ ॥

श्रीसूर्य उवाच ।

अकामतश्च या नारी वेश्यत्वाननतत्परा । बभूव प्राक् च पक्षीन्द्र साऽत्र जन्मनि निश्चयात् ॥१॥
रक्तार्बुदसमाक्रान्ता दुष्टपापमयोनिना । महारिष्टेन सा याति यमलोकं पतत्रिण ॥ २ ॥
चत्वारिंशन्मिते वर्षे सत्यंसत्यं वदाम्यहम् ॥ ३ ॥
इति श्रीहृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुस्त्रिंशदधिकषट्शततमः ॥ ६३४ ॥

श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या मुखजात्र च बाहुजा । देशे सारस्वते प्राप्ता सर्वधर्मान्विता सती ॥ १ ॥
क्षयरोगयुता चात्र युवभावे पतत्रिण । प्राक्पापदुस्तरात्सत्त्व कण्ठपाशादिसंभवात् ॥ २ ॥
निष्कृतिं कदलीं दद्यात्सुवर्णत्रयसंयुताम् । भोजयेद्ब्राह्मणान्पश्चाच्छिवपूजनतत्परान् ॥ ३ ॥
या त्वेवं कुरुते भक्त्या कदलीदानमुत्तमम् । नश्येत्क्षयरुजा तस्या अपि प्राणप्रणाशना ॥ ४ ॥
आयुर्वर्षाणि पट्युक्तं पञ्चसप्ततिसंख्यया ॥ ५ ॥
इति श्रीहृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदधिकषट्शततमः ॥ ६३५ ॥

श्रीसूर्य उवाच ।

यो नरोऽतिबलोत्कर्षात्परस्त्रीं कामयेत्पुरा । अधुना यौवने प्राप्ते स उन्मादी प्रजायते ॥ १ ॥
दद्यात्प्रजापतिं देवं सौवर्णं शक्तितोऽण्डज । मृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणाञ्शक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत सोन्मादान्मुच्यतेऽधुना ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्त्रिंशदधिकशततमः ॥ १३६ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी । साऽत्र जन्मनि रोगेण कुनखित्वेन बाध्यते ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यतेऽत्रैव जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासे तु कार्तिके ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तत्रिंशदधिकशततमः ॥ १३७ ॥

श्रीसूर्य उवाच ।

वेश्यघ्नी याऽभवत्पूर्वं भवे नारी पतिव्रता । रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम् । सप्तधान्येन दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

श्रीसूर्य उवाच ।

रौप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते । स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे पतत्त्रिण । प्राजापत्यत्रयं सूत चरेत्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकशततमः ॥ १३८ ॥

श्रीसूर्य उवाच ।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यान्वितः सुधीः । स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोत्साही देशे केरलके सुत । स्वामिधर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः । दुष्टाः प्रजाः क्रोधयुक्ता बभूवुर्विमुखास्तदा ॥ ३ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत । संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभाग साध्वी पतिपरायणा । तस्मिन्मृते मृता सा तु भर्तृमार्गावलम्बिनी ॥ ५ ॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतत्त्रिण । मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तथा ॥ ६ ॥
तत्क्षणादन्तकालेऽपि दिवि प्राप्ता समर्तृका । भुक्त्वा तत्र महाभोगानपूर्वान्स्वामिधर्मतः ॥ ७ ॥
नानाप्रजापीडनजात्पापात्पूर्वसमुद्भवात् । तीक्ष्णात्पुण्यात्तथा सूत म्लेच्छदेशे समुद्भवः ॥ ८ ॥
सिन्धोः पश्चिमभागे तु शतयोजनसंमिते । गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुसंयुक्तो गजवृन्दैः समावृतः । पत्त्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोग्रः पुत्रपौत्राढ्यः स म्लेच्छः पृथिवीपतिः । स्त्रीसाहाय्यान्महाभाग तथा पुत्रसहायतः ॥ ११ ॥
सुखैश्वर्ययुता सापि यवनी तद्वशादिह । सपुत्रः भार्यसहायाच्च सोऽप्यत्रैव महाभुजः ॥ १२ ॥
एवं जन्मफलं प्रोक्तं ससहायं पतत्त्रिण । स्वामिधर्मकृतात्पुण्यात्तद्दर्थमरणात्तथा ॥ १३ ॥
भविष्यति गतिस्तेषां पूर्वपुण्यात्पतत्त्रिण । पञ्चाशीतिमितायुः स्यात्र च रिष्टेन तन्मृतिः ॥ १४ ॥
रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत । शस्त्रप्रहारैर्विविधैः प्राप्ते तत्र रणाङ्गणे ॥ १५ ॥
प्रजापीडनजात्पापात्तद्रूपं नात्र संशयः । दद्यात्काञ्चनं तत्र ब्राह्मणाय कुटुम्बिने ॥ १६ ॥

देयं हिरण्मयं तत्र तद्गच्छतपलात्मकम्। कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु ॥ १७ ॥
सर्वोपस्करसंयुक्तं देयमेतच्च पुत्रक। महारिष्टहरं प्रोक्तं प्रायश्चित्तं परं खग ॥ १८ ॥
नातः परतरं प्रोक्तं दानात्कालनरादिह ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकषट्शततमः ॥ ६३९ ॥

## श्रीसूर्य उवाच।

या काचिद्यौवने नारी रमते स्वेच्छया परे। बलात्कारेण पुरुषं सात्रोन्मादेन पीडिता ॥ १ ॥
तत्पापनाशनं सर्वमुपायं शृणु यत्नतः। कृत्वा सुवर्णजं वायुं मृगं हेमं च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्तं दद्याद्विप्राय धीमते। न प्राप्नोति तदोन्मत्तभावं दानप्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदधिकषट्शततमः ॥ ६४० ॥

## श्रीसूर्य उवाच।

त्रपुहारी च यः पूर्वजन्मन्यत्रैव जन्मनि। म्लेच्छरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपु विप्राय धीमते। पलानां त्रिशतं शुद्धं तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकचत्वारिंशदधिकषट्शततमः ॥ ६४१ ॥

## श्रीसूर्य उवाच।

विद्यमाने भर्त्तरि तु जाराद्गर्भपरायणा। सा चात्र पापजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात्। कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्ताद्यथोचितात्। प्रायश्चित्ते कृते रिष्टं पञ्चाशन्मितकेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दांश्च जीवनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकषट्शततमः ॥ ६४२ ॥

## श्रीसूर्य उवाच।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा। सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव तदा काले तस्य रिष्टं प्रकीर्तितम्। विंशन्मितेऽब्दे पक्षीन्द्र कालज्ञात्राम्मृतिर्भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदधिकषट्शततमः ॥ ६४३ ॥

## श्रीसूर्य उवाच।

यः कश्चिद्ब्राह्मणीं सूत बलोत्कर्षेण मन्यति। रमयेत्प्राग्भवे सोऽत्र महोन्मादी प्रजायते ॥ १ ॥
पापादसाध्यजादत्र रोगान्मुक्तिर्न जायते। म्रियते रिष्टयोगेन सोन्मादी चात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकषट्शततमः ॥ ६४४ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि या नारी मोहाल्लोभाद्धरेत्त्रपु। सात्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपु तत्पापशुद्धये। तस्मिन्पापक्षये सूत श्लेष्मरोगस्य नाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचचत्वारिंशदधिकषट्शततमः ॥ ६४५ ॥

श्रीसूर्य उवाच ।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः । धनधान्यसमायुक्तश्चैश्वर्याल्पश्चार्जनान्वितः ॥ १ ॥
सुव्रतः शक्तिमान धीरः किंचिद्व्याधिसमन्वितः । इन्द्रियाणां बलं हत्वा मोहानां जायते भृशम्॥२॥
उदरार्तिरसृग्वातः किंचिद्देहे प्रजायते । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक् सत्यजा लोके व्रतानामनुकांक्षिणी । बहुपुत्रप्रसूता च किंचित्पुत्रः प्रजायते ॥ ४ ॥
अथवा मृतपुत्रा च पुत्रीषु जीवितास्वपि । केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥
पूर्वजन्मनि विप्रस्तु संजातः पश्चिमे त्विह । प्रावर्तत तस्य गेहे कन्यायाः प्रौढ्यमण्डज ॥ ६ ॥
भूमिद्रविणलोभेन वृद्धविप्राय दापिता । तद्वत्तदाहृतं वित्तं सर्वस्वं तद्वशादपि ॥ ७ ॥
यावत्कन्याभवत्प्रौढा वरार्थं गुणशालिनी । पतिभक्तिपरा नित्यं यावत्कन्या सुतार्थिनी ॥ ८ ॥
किंचित्काले ह्यतीते वै तद्विप्रोऽसौ मृतश्च वै । सा बाला विवशा जाता पत्यपत्यार्थदुःखिता ॥९॥
व्रततीर्थरता नित्यं सत्यानामनुकांक्षिणी । बहुवर्षास्तया वत्स नियमैः शोषितं वपुः ॥ १० ॥
पितुर्गृहे धनं भूरि त्वर्पितं पुत्रिका भृशम् । कश्चित्कालवशं प्राप्ता मृता सा ब्राह्मणी खग॥११॥
सा पुत्रा ह्युदरे भूत्वा सागमज्जन्मजन्मनि । कन्या बहुविधा तस्य निराधारा मृता च वै॥१२॥
तेन कर्म प्रभावेण पूर्वकन्या बहुप्रजा । तस्य भर्तुर्भया याता मृतमिच्छति जन्मनि ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युस्तत्कर्मनिष्कृति विना । कन्याविक्रयकर्ता च रौरवे नरके मतः ॥ १४ ॥
यातना बहुधा प्राप्ता वर्षाणां च सहस्रकम् । पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ १५ ॥
इदं जन्म चतुर्थं तु बहुपुत्री प्रजायते । मृतपुत्रो मृतो गर्भस्तेन गर्भभवादिह ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद । भर्तृविद्वेषिणी नित्यं विरापत्यानुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन भूरिकन्यो मृतात्मजः ॥ १८ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापं प्रशाम्यति । निष्कृतिं वद विश्वात्मन् पृथक्तं मे प्रकाशय ॥ १९ ॥

श्रीसूर्य उवाच ।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ २० ॥
स्वकन्या वरयोग्या सा चिन्तयन्त्यामनागमप्रादशाब्दानि च मासेन यथाभावं यथामति ॥२१॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । अलंकृतां यथाशक्ति वराय गुणशालिने ॥ २२॥
ब्राह्मणे विधिना सूत दद्याच्च बहुदक्षिणाम् । महापापौघशमनं कन्यादानमतन्द्रितः ॥ २३ ॥
कन्याविवाहसमये महाशान्तिविधिं चरेत् । एवं कृतविधिः सूत कन्यां दत्त्वा विधानतः ॥ २४॥
शान्तिकर्माणि सर्वत्र विस्तरेद्दत्विजादयः । भूमिद्रविणवासांसि कन्यावासांसि दापयेत् ॥ २५ ॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम् । वर्षेवर्षे तु संपूर्णे अन्नवस्त्रैश्च पोषयेत् ॥ २६ ॥
एवं कृते विधौ सूत बहुपुत्रा यशस्विनी । पापं पुत्रविनाशाख्यं कन्यापत्यादयश्च ये ॥ २७ ॥
तेषां पापप्रणाशार्थं कन्यादानादिभिस्ततः । नाशयेत्तद्धि पापं तु द्विजानां विधिपूजनात् ॥ २८॥
यजन्यज्ञं विधानेन ब्राह्मणान्स्वस्ति वाचयेत् । विनायकाम्बिकामूर्तिं हेमनिष्कप्रमाणतः ॥२९॥
आचार्याय ददेत्तासां नानाकर्मोपशान्तये । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ३० ॥
जिह्वारदनदन्तोष्ठव्रणवातादिदोषकृत् । नृपचौराग्निभिर्हानिर्वित्तानां च यतस्ततः ॥ ३१ ॥
तप्यमानेन मनसा दूयते भृशमाधिजे । सर्पिष्यात्मानमालोक्य प्रायश्चित्तन्तथा विधिः ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चचत्वारिंशदधिकशततमः ॥ १४६ ॥

श्रीसूर्य उवाच ।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात् ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदधिकषट्शततमः ॥ ६४७ ॥

श्रीसूर्य उवाच ।

गर्भवत्या तया भुक्तः पूर्वजन्मनि मानवः । गर्भासन्नामजां जग्ध्वा विधिना गर्भधारणात् ॥ १ ॥
तेन कर्मविपाकेन बहुशोऽत्र प्रकीर्तिता । पूर्वजन्मन्यसौ विभा न च गर्भं दधात्यलम् ॥ २ ॥
प्रायश्चित्तमिदं तस्य चात्र सर्वाघनोदनम् । कृत्वा गर्भेण संयुक्तां राजतीं षट्पलामिमाम् ॥३॥
वैश्वानरस्तथा कार्यः पञ्चमापोहिरण्मयः । पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४ ॥
एवं कुर्याद्विधानेन सर्वपापापनोदनम् । तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकषट्शततमः ॥ ६४८ ॥

श्रीसूर्य उवाच ।

मृगयां प्राप्य पक्षीन्द्र गजराजवधे पुरा । जायते गजचर्मा वै स नरोऽत्रैव जन्मनि ॥ १ ॥
गणेशप्रतिमां दद्यात्सौवर्णां द्विपलामिमाम् । गन्धपुष्पैश्च संपूज्य तस्माद्रोगाद्विमुच्यते ॥ २ ॥
कारयेद्गणनाथस्य लक्षजाप्यं विधानतः । होमयेच्च दशांशेन मुच्यते पूर्वकिल्बिषात् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकषट्शततमः ॥ ६४९ ॥

श्रीसूर्य उवाच ।

यो हरेत्परसिद्धान्नं क्षुत्पीडाभावप्रपीडितः । सोऽत्र जन्मनि पक्षीन्द्र शूलरुक्पीडितोऽधुना ॥ १ ॥
अन्नदानेन विप्राणां रसदानाद्विशेषतः । मुच्यते शूलजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥
सुवर्णशूलदानाद्वा विप्रायात्र कुटुम्बिने । शूलदोषोपशमनमिह जन्मनि वै ध्रुवम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदधिकषट्शततमः ॥ ६५० ॥

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तः प्राक् सूत बभूव पुरुषोत्तमः । स्वज्ञातिषु महाभाग दृढकर्मक्रियापरः ॥ १ ॥
विराटदेशे निवसन् राजकार्यरतः सदा । गृहं दग्धं तत्र शत्रोरनेन भयदायकम् ॥ २ ॥
बालवत्सा मृतास्तत्र पुरे तस्मिन्खगोत्तम । पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३ ॥
ततो यमपुरं प्राप्तो भुक्त्वा भोगांस्तदुक्तवत् । विष्णुपूजनजात्पुण्यात्प्राप्तोऽत्र यमुनातटे ॥ ४ ॥
चारणो धर्मनिरतो बहुद्रव्यसमन्वितः । नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः ॥ ५ ॥
बन्धुभृत्याधिकाराढ्यो वस्त्रभूषणभूषितः । सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु ॥ ६ ॥
धूर्तो मिथ्यापवादी च बहुलोभसमन्वितः । जातसंततिदुःखार्तो बालवत्सवधादिह ॥ ७ ॥
नेत्ररोगान्वितो नित्यं शृणु चिह्नं पतत्रिण । चत्वारिंशन्मिते वर्षे सर्वसंततिनाशनम् ॥ ८ ॥
गृहदाहान्महाभाग गर्वि[1] रिष्टसमुद्भवात् । पूर्वपापफलस्यास्य भोगादेव क्षयः स्मृतः ॥ ९ ॥

---

१ विष्टि इति—क० पु० ।

अरुण उवाच।

निष्कृतिं वदमे स्वामिन्नाखुवत्साधनाशनीम्। यां कृत्वा विविधा जन्तुः पूर्वपापात्प्रमुच्यते॥१०॥

श्रीसूर्य उवाच।

प्रायश्चित्तं शृणुष्वाथ तदूर्ध्वानन्तरं सुत। तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ ११ ॥

इदकर्मार्जितात्पापान्न चोक्तं पापशोधनम्। श्रवणाद्धरिवंशस्य वैशाखे विधिनाण्डज ॥ १२ ॥

माघे वा कार्तिके वापि दशावृत्त्या विधानतः। ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ १३ ॥

कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा। धेनूनां दशकं दद्यात्सवत्साभरणान्वितम् ॥ १४ ॥

दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम्। प्रायश्चित्तमिदं पुत्र चेत्कुर्याद्विधिपूर्वकम् ॥ १५ ॥

तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत। मृत्युः पश्चाशदब्दे तु खग चाकृतनिष्कृतेः ॥ १६ ॥

प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं तथा। द्वियुक्तमायुः कथितं तीर्थं पुण्याश्रयेऽण्डज ॥ १७ ॥

जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे। नवोदर्श्यां दिवा भूमी ऋक्षे मृगशिरभिधे ॥ १८ ॥

निर्याणं कथितं तस्य विष्णुपूजनजात्फलात्। भविष्यति गतिस्तस्य पुनर्विष्णुप्रपूजनात् ॥ १९ ॥

तथा तृतीयजनुषि मरणं गोगृहात्सुत। सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदधिकषट्शततमः ॥ ६५१ ॥

श्रीसूर्य उवाच।

पिङ्गलाक्षो भवेदत्र पूर्वे रीत्यपहारकः। देयं रीतेः पलानां च शतं तत्पापनिष्कृतौ ॥ १ ॥

गायत्र्या होमयेत्पश्चात्तिलाग्निर्मोश्च भोजयेत्। मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद् ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकषट्शततमः ॥ ६५२ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग खररोमात्र जायते। पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥

प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः। निष्कत्रयहिरण्यं च दद्याद्दोषोपशान्तये ॥ २ ॥

ब्राह्मणाय दरिद्राय वेदवेदाङ्गपारगे ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदधिकषट्शततमः ॥ ६५३ ॥

श्रीसूर्य उवाच।

प्रागुक्तं गर्भपुष्टयर्थं कुक्कुटाण्डाद्यं खगेश्वर। अत्र जन्मनि सा जाता संकरा लोभसंयुता ॥ १ ॥

धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज। न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥

कूष्माण्डं विधिना तद्वद्देयं द्विपलात्मकम्। तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः ॥ ३ ॥

दत्त्वा द्विजाय विधिना ह्याचरेच्छांकरं व्रतम्। फाल्गुनादौ चतुर्दश्यां कृष्णाया मासिमासि तु ४

पूजयेच्छंकरं रात्रौ तथा जागरणेन वा। भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदधिकषट्शततमः ॥ ६५४ ॥

श्रीसूर्य उवाच।

शृणु सूत महाभाग कर्म यत्कृतवान्पुरा। जीवोऽयं तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥

अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः। राज्यमचारी बलवाञ्शूरो मन्त्री महायशाः ॥ २ ॥

१ पुण्या इति—ख पु०।

संधिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदुष्करम्। लुंठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः। स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥ ५॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनान्। तथा पुण्यफलं पुण्यात्प्राप्य पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा। नानाचौर्यक्रियायुक्तो लोकवञ्चनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि। मुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः। वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम्। पूजयेत्तु त्रिवर्षान्तं मन्त्रैस्तल्लिङ्गजैस्तथा॥१०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः। संपूज्य विधिवद्देवं तदन्ते भोजयेद् द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्दक्षिणाभिश्च पूजयेत्। नानाहिरण्यैर्विविधैस्तथा चाभरणैः शुभैः ॥१२॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः। ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम्। संप्राप्य तत्र निर्वाणं शिवलोकं हि गच्छति ॥ १४॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप। नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तप्ता शलाका देया वै शूद्रकर्णेऽतिदारुणा। श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुरब्दाः शतं तस्य कृतनिष्कृतिकस्य च। प्रायश्चित्तेऽकृते रिष्टं जायते पष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं विधानतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पंचपंचाशदधिकषट्शततमः ॥ ६५५ ॥

---

## श्रीसूर्य उवाच।

या पुरा हरयेद्रीतिं नारी सा च पतत्रिण। पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम्। गायत्र्या जुहुयाच्छक्त्या तिलान् रोगविनाशनम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्पंचाशदधिकषट्शततमः ॥ ६५६ ॥

---

## श्रीसूर्य उवाच।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी। सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनेभ्योऽथ पतत्रिण। भिक्षुभ्यश्च तथा दानाद्रसदानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः। प्रायश्चित्तेऽकृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तपंचाशदधिकषट्शततमः ॥ ६५७ ॥

---

## श्रीसूर्य उवाच।

उष्ट्रघाती भवेत्पूर्वजन्मन्यथ पतत्रिण। सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि। कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपंचाशदधिकषट्शततमः ॥ ६५८ ॥

---

## श्रीसूर्य उवाच।

वन्ध्येयं या महाभाग पृच्छति स्वं प्रयोजनम्। गर्भपापरता पूर्वं अनुभ्यत्र फलं त्विदम् ॥ १ ॥
प्रसवजा प्राग्भवे त्वत्र तत्पापाघघ्नी हि सा। निष्कृतिं तत्प्रवक्ष्यामि गङ्गायां हि पतत्रिण ॥ २ ॥

अरुण उवाच ।

निष्कृतिं वदमे स्वामिन्बालवत्साघनाशनीम् । यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते॥१०॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं शृणुष्वाथ तदर्पानन्तरं सुत । तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ ११ ॥
दृढकर्मार्जितात्पापान्न चोक्तं पापशोधनम् । श्रवणाद्वर्षसंशस्य वैशाखे विधिनाण्डज ॥ १२ ॥
माघे वा कार्तिके वापि दशाज्ञत्या विधानतः । ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ १३ ॥
कोटिलक्षायुतं सुत रुद्राध्यायं जपेत्तथा । धेनूना दशकं दद्यात्सवत्साभरणान्वितम् ॥ १४ ॥
दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम् । प्रायश्चित्तमिदं पुत्र चेत्कुर्याद्विधिपूर्वकम् ॥ १५ ॥
तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत । मृत्युः पञ्चाशदब्दे [1] खग चाकृतनिष्कृतेः ॥ १६ ॥
प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं तथा । द्वियुक्तमायुः कथितं तीर्थे पुण्याश्रयेऽण्डज ॥ १७ ॥
जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे । नयोदश्या दिशा भूमौ ऋक्षे मृगशिराभिधे ॥ १८ ॥
निर्याणं कथितं तस्य विष्णुपूजनजात्फलात् । भविष्यति गतिस्तस्य पुनर्विष्णुप्रपूजनात् ॥ १९ ॥
तथा तृतीयजनुषि मरणं गोगृहात्तथा । सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदधिकपञ्चशततम ॥ ५५१ ॥

श्रीसूर्य उवाच ।

पिङ्गलाक्षो भवेदत्र पूर्वे रीत्यपहारकः । देय रीतेः पलाना च शतं तत्पापनिष्कृतौ ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद् ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकपञ्चशततम ॥ ५५२ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग खररोमात्र जायते । पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयहिरण्यं च दद्याद्दोषप्रशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गपारगे ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदधिकपञ्चशततम ॥ ५५३ ॥

श्रीसूर्य उवाच ।

प्राग्भुक्तं गर्भपुष्टयर्थं कुक्कुटाण्डं खगेश्वर । अत्र जन्मनि सा जाता सकरा लोभसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥
कृत्वाण्डं विधिना तद्वद्धिरण्यं द्विपलात्मकम् । तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः ॥ ३ ॥
दत्त्वा द्विजाय विधिना स्थापयेच्छास्त्रं नवम् । फाल्गुनादौ चतुर्दश्यां कृष्णायां मासिमासि तु ४
पूजयेच्छंकरं रात्रौ तथा जागरणेन वा । भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदधिकपञ्चशततम ॥ ५५४ ॥

श्रीसूर्य उवाच ।

शृणु सुत महाभाग कर्म यत्कृतवान्पुरा । जीवोऽयं तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः । राज्यप्रचारी बलवाञ्शूरो मन्त्री महायशाः ॥ २ ॥

---

१ पुण्या इति—ख पु० ।

संधिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदुष्करम्। लुंठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः। स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥ ५॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनात्। तथा पुण्यफलं पुण्यात्प्राप्य पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा। नानाचौर्यक्रियायुक्तो लोकवञ्चनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि। सुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः। वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम्। पूजयेत्तु त्रिवर्षान्तं मन्त्रैस्तल्लिङ्गजैस्तथा॥१०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः। संपूज्य विधिवद्देवं तदन्ते भोजयेद् द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्दक्षिणाभिश्च पूजयेत्। नानाहिरण्यैर्विधिवत्तथा चाभरणैः शुभैः ॥१२॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः। ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम्। संप्राप्य तत्र निर्वाणं शिवलोकं हि गच्छति ॥ १४॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप। नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तप्ता शलाका देया वै शूद्रकर्णेऽतिदारुणा। श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुरब्दाः शतं तस्य कृतनिष्कृतिकस्य च। प्रायश्चित्तेऽकृते रिष्टं जायते षष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं विधानतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पंचपंचाशदधिकषट्शततमः ॥ ६५५ ॥

## श्रीसूर्य उवाच।

या पुरा हरयेद्रीतिं नारी सा च पतत्रिण। पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम्। गायत्र्या जुहुयाच्छक्त्या तिलान् रोगविनाशनम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्पञ्चाशदधिकषट्शततमः ॥ ६५६ ॥

## श्रीसूर्य उवाच।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी। सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनेभ्योऽप्य पतत्रिण। भिक्षुभ्यश्च तथा दानाद्सदानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः। प्रायश्चित्तेऽकृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तपञ्चाशदधिकषट्शततमः ॥ ६५७ ॥

## श्रीसूर्य उवाच।

उष्ट्रघाती भवेत्पूर्वजन्मन्यथ पतत्रिण। सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि। कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपंचाशदधिकषट्शततमः ॥ ६५८ ॥

## श्रीसूर्य उवाच।

वन्ध्येयं या महाभाग पृच्छति स्वं प्रयोजनम्। गर्भपापरता पूर्वं जन्तुष्यत्र फलं त्विदम् ॥ १ ॥
मुखजा प्राग्भवे त्वत्र तत्पापाघघ्नी हि सा। निष्कृतिं तत्प्रवक्ष्यामि गङ्गायां हि पतत्रिण ॥ २ ॥

पूजयेल्लक्षरुद्राणां त्रिगुणार्थतदर्धकम् । ग्रत्याय भोजयेद्विमान् होमयेच्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना या च प्रायश्चित्तं समाचरेत् । जायते संततिस्तस्या इह जन्मनि वै ध्रुवम् ॥ ८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्यधिकाष्टशततमः ॥ ६५९ ॥

श्रीसूर्य उवाच ।

कांस्यहारी च पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानात्पलशतानां च सीसकादण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षष्ट्यधिकषट्शततम ॥ ६६० ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे कीराभिधे सुत । धर्मकर्मात्मको भक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः । पर्वस्वपि च पात्रेभ्यो गोभूम्यश्वादिकानि च॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । स्ववंशस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरिभावेन साहाय्येन स्त्रियाः सुत । तस्मिन्दाहे महाभाग निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा । ततो बहुतिथे काले गतः स यमशासनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा पापाद्दृष्टं शुभं तथा । पुण्यात्पञ्चनदे देशे स जातो बाहुजाधमः ॥ ६ ॥
मध्यस्वरूपो मतिमान्कुलेष्टः पुरुषो दृढः । रक्तो नोच्चो नातिनीचो बहुकल्पः पृथुर्विभुः ॥ ७ ॥
यौवने सुसुखैश्वर्यधनस्यान्वितः पुनः । मितदो भोगभाग्याढ्यः कृती मानी जनप्रियः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्तातुरो धूर्त उग्रो दुःखार्तो मानवर्जितः ॥९॥
गोघातादग्निदाहाच्च जातपुत्रविनाशकः । सहायलक्षणं सर्वं कथयामि खगेश्वर ॥ १० ॥
या स्त्री पूर्वं सहायासीद्दाहकर्मणि चाण्डज । सा ज्येष्ठा मृतुरेवात्र मृतपुत्राऽत्र जन्मनि ॥ ११ ॥
रुक्मेतदण्डजश्रेष्ठ जन्माङ्गाद्भूपेभ शैनिः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कारयित्वा शिवं साङ्गं पलैर्वेदमितैः शुभम् । हिरण्मयं महाभाग पत्रे लेख्य शिवान्वितम् ॥ १३ ॥
तदर्धार्धमितं चापि त्रिषु वित्तानुसारतः । पूजयित्वा तु गन्धाद्यैः षोडशोपचारकैः ॥ १४ ॥
संस्थाप्य पशुपं पश्चाद्गोरथे सुमनोहरे । सर्वोपस्करसंयुक्ते वितानाम्बरभूषिते ॥ १५ ॥
दद्याद्वेदविधिज्ञाय मन्त्रमेतमुदीरयेत् ॥ १६ ॥

मंत्रः ।

" मोहात्पूर्वं मया पापमग्निदाहाद्यदर्जितम् । तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम् " ॥ १७ ॥
गोधिकायास्तथा जीवाः पत्रे लेख्यास्तु राजते । शिवपत्रमितं दद्याचे चान्ये घातिताः पुरा॥१८॥
पञ्चमाषमितो वह्निर्देयो हेममयः शुभः । गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम् ॥ १९ ॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान् । य एवं कुरुते सुत प्रायश्चित्तं विधानतः ॥ २० ॥
न तस्य पुत्रमरणं तदग्रे जायते क्वचित् । जायन्ते सुलभाः पुत्राश्चाधिव्याधिविवर्जिताः ॥ २१ ॥
नैवं करोति यो मोहाचात्र पुत्रविवर्जितः । चत्वारिंशन्मिते कुले वर्षे रिष्टं प्रकीर्तितम् ॥ २२ ॥
पञ्चाशन्मितकेऽब्दे वा रिष्टं चाकृतनिष्कृतेः । प्रायश्चित्ते कृते ह्यायुश्चतुःसप्ततिमब्दकम् ॥२३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकषट्शततम ॥ ६६१ ॥

---

१ दशमे इति-रू० पु० ।

श्रीसूर्य उवाच।

कांस्यहारी च पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानात्पलशतादत्र सीसकादण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकषट्शततमः ॥ ६६२ ॥

श्रीसूर्य उवाच।

वन्ध्यायाश्च महाभाग प्रायश्चित्तं शृणुष्व तत्। शूलोद्भिन्नतनुं चौरं मृतं प्राप्य रवेर्दिने ॥ १ ॥
तत्तले तु तदा कुर्याद्वन्ध्यास्नानं शतौषधैः। पत्रैर्वृक्षोद्भवैः सूत तथा मृद्भिश्च सप्तकैः ॥ २ ॥
स मन्त्रैश्च तथा पूज्यः प्रथमं विनतासुत। विधिनानेन या कुर्याद्वन्ध्या पुत्रं लभेद् ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकषट्शततमः ॥ ६६३ ॥

श्रीसूर्य उवाच।

सतीं स्वभार्यां परमां साध्वीं संत्यज्य दुर्मतिः। प्रमादात्प्राग्भवे गच्छेदन्यस्त्रीं काममोहितः॥१॥
सोऽत्र जन्मनि भो सूत ग्रहणीरोगसंयुतः। जायते म्रियतेऽवश्यं ब्राह्मण्यां गमनादिह ॥ २ ॥
न तस्य पापशमनं मया प्रोक्तं खगाधिप। तस्मिन्नयति तद्दृष्टं भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकषट्शततमः ॥ ६६४ ॥

श्रीसूर्य उवाच।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी। सात्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
दद्यात्पलशतं सीसं ब्राह्मणाय कुटुम्बिने। तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पञ्चषष्ट्यधिकषट्शततमः ॥ ६६५ ॥

श्रीसूर्य उवाच।

या नारी ह्यवधीत्पूर्वं मोहाद्दुष्टं खगाधिप। सात्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णीं राजतीं तथा। दद्याद्वेदविदे विप्राय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्षष्ट्यधिकषट्शततमः ॥ ६६६ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत्। नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे। मुच्यते नेत्ररोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्यधिकषट्शततमः ॥ ६६७ ॥

श्रीसूर्य उवाच।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि। परपुंसि महाभाग ग्रहणीरुग्युताऽत्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं चरेत्। वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकषट्शततमः ॥ ६६८ ॥

---

१ तत्तदृतांस्तु संपूज्य विधिना इति-क पु०।

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकत्रिशततम ॥ ३६९ ॥

---

अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षदर्शनः । उदरे वातजा रोगाः किंचिच्छ्लेष्मोपघातकाः ॥ १ ॥
किंचित्क्रोधश्च लोभश्च किंचिद्वित्तसमन्वितः । तस्य प्रिया सदाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्या भवेत्सा च जायते मृतपुत्रका । आदिपुत्रो मृतस्तस्य अपत्यं नैव जायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वे भवे महाबाहो विप्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन यत्कृतम् ॥ ५ ॥
व्यवहारादिना कृत्वा ब्रह्मवित्तेन वर्धितः । कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् ॥ ६ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणाच्चैव वर्षाणां च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे पच्यते चेह कर्मणा । पश्चान्मानुषमापन्नो व्रतदानप्रभावतः ॥ ९ ॥
इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम् । निक्षेपहरणाच्चापि मृतपुत्रः प्रजायते ॥ १० ॥
ब्राह्मणस्य विशेषेण धनं विषमिव स्मृतम् । ऋणं प्रसह्य वै प्रोक्तमपि कल्पशतादिकम् ॥ ११ ॥
तस्माद्विप्रऋणं प्रोक्तं प्रसह्य त्वभिजायते ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणां च निष्कृतिं सौख्यहेतवे ॥ १३ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामप्रदः प्रभुः । पूजनीयो महारुद्रः संततिश्रेय इच्छया ॥ १४ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । यजनैरभ्यर्च्य मुच्येत पापादाकल्पसंभवात् ॥ १५ ॥
रुद्रैकादशनीभिश्च रुद्रैकादशकेन वा । जपैर्वैनं तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १६ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितः । विधिवज्जुहुयाद्वह्नौ तिलैश्च मधुरप्लुतैः ॥ १७ ॥
हरितालपलाशैर्हि सर्पिषोऽत्र महेद्रुते । प्रतिरुद्रं प्रदातव्यं गोयुगं रसनान्वितम् ॥ १८ ॥
केयूरकुण्डलाकल्पमन्त्रपुस्तकमण्डजं । प्रतिरुद्रं शतं विप्रान् भोजयेत्सुसमाहितः ॥ १९ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा गुरुदक्षिणाम् । एवं रुद्रविधिं कृत्वा त्रिविधं पापशान्तिकृत् ॥ २० ॥
इतिहासपुराणोक्तिः सूक्तानि विविधानि च । शृणुयाद्विधिवत्तार्क्ष्य समाधेः प्रीतितोऽन्वहम् ॥ २१ ॥
देवर्षिपितृमर्त्यानामृषीणां च महीक्षिताम् । देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २२ ॥
सर्वासां जीवजातीनामुत्पत्तिं शृणुयादपि । नृपीणामृषिपत्नीनां वंशान्पूर्वानुदीरितान् ॥ २३ ॥
एव स त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात् । गुरून्देवान्द्विजान्सम्यक् श्रद्धया समुपाचरेत् ॥ २४ ॥
एवं कृतविधेः सूत हरिवंशश्रुतार्थिनः । वाचकोपरि संतुष्टो भूमिद्रविणवस्त्रकैः ॥ २५ ॥

---

१ समिधोऽत्र वहिर्हुता इति–क पु० ।

मुद्रां कर्णीकृत्य वरां गां दत्त्वा च पयस्विनीम् । भूमिद्रविणदानाद्यैस्तोषयेद् ब्राह्मणाननु ॥२६॥
निष्कृतौ क्रियमाणायां सपिण्ड्यात्मानमीक्षयेत् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २७॥
जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः । दुष्टरुक् चानपत्यः स प्रमेहार्तोऽप्यकिंचनः ॥२८॥
कुनखी दद्रुणः पाण्डुरोगी चैव क्रमाद्भवेत् । जलमग्निश्च चौरश्च राजाश्चिन्ता व्यथादिका ॥२९॥
लकुटचावशस्त्राद्यैर्जायन्ते व्रणजार्तयः[1] ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्तत्यधिकषट्शततमः ॥ ६७० ॥

---

श्रीसूर्य उवाच ।

अथ सूर्यदिने सूत प्राप्य भूमिं श्मशानजाम् । मृतयेतं समालोक्य रात्रौ गच्छेदतन्द्रितः ॥ १ ॥
पूजयित्वा चितां तस्य बलिमष्टविधां सृजेत् । स्नानं कृत्वा मृदालम्भैः पत्रैर्वृक्षोद्भवैस्तथा ॥ २ ॥
शतच्छिद्रघटात्प्राप्य नानातीर्थोद्भवैर्जलैः । दीपमालादिने वापि प्रयोगं विधिनाचरेत् ॥ ३ ॥
हरिवंशं ततः पश्चाच्छृणुयाद्विधिपूर्वकम् । दत्त्वा द्विजेभ्यो विधिना नानाभक्ष्यफलानि च ॥ ४ ॥
स्वेच्छया भोजनं तेभ्यो दद्याद्दोषापनुत्तये । अनेनैव प्रयोगेण वन्ध्या याति सपुत्रताम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकषट्शततमः ॥ ६७१ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ वन्ध्या चात्र जन्मनि बाहुजः । देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनात् ॥ १ ॥
विंशद्वर्षे व्यतीते च नेत्रभङ्गः प्रजायते । तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धैः पुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकषट्शततमः ॥ ६७२ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
तेन कर्मार्जितेनात्र षण्ढश्चैवात्र शूद्रजः । गवां पालनजात्पुण्यात्प्रागत्र सुखसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवात्र चिन्मयम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रिसप्तत्यधिकषट्शततमः ॥ ६७३ ॥

---

श्रीसूर्य उवाच ।

या काचिद्योषिद्दि पूर्वं मोहात्परघृतं हरेत् । सात्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकषट्शततमः ॥ ६७४ ॥

---

श्रीसूर्य उवाच ।

माहिषीमवधीत्पूर्वभवे यश्च नराधमः । सोऽत्र जन्मनि पक्षीन्द्र कृष्णगुल्मयुतो भवेत् ॥ १ ॥
स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषिताम् । सूक्ष्मकम्बलयुक्तां च दद्याद्वेदविदे सुत ॥ २ ॥
कृष्णगुल्मोद्भवां पीडां नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचसप्तत्यधिकषट्शततमः ॥ ६७५ ॥

---

1 भ्रमजार्तय इति–क पु० ।

श्रीसूर्य उवाच ।

प्राग्भवे याऽभवत्काचित्स्वर्णकारी पतत्रिण । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लकुटेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्तं गर्भातिभारतः । मृता च तेन दुःखेन गर्भजातसमन्विता ॥ ३ ॥
तेन कर्मसमायुक्ता संप्राप्योचितशासनम् । पुनः शूद्रीमिमा जाता गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यैर्नानाविभवसंयुता । पुत्रसंततिहीना सा प्राग्गोघाताघसंभवात् ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापक्षयंकरम् । कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा ॥ ६ ॥
मार्गे हि धर्मतो यत्नात्प्रतिष्ठां कारयेत्ततः । संस्थाप्य च शिवं तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच्च ततस्तत्र तिलानाज्ययुतानिह । भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् ॥ ८ ॥
दद्यात्तथैव कपिलां सर्वपापप्रणाशिनीम् । प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् ॥ ९ ॥
नव या कुरुते श्रुत्वा तस्याः संततिजं भयम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय षट्सप्तत्यधिकषट्शततम ॥ ६७६ ॥

श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले पापमेवात्र बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गपारगे । विधिना काश्यपेयात्र न पश्येद्बहुमूत्रताम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तसप्तत्यधिकषट्शततम ॥ ६७७ ॥

श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कस्यचित्पापमोहिता । पूर्वजन्मनि साऽत्रैव बहुमूत्ररुजाऽऽकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना त्वत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकषट्शततम ॥ ६७८ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत महिषीं नवयौवनाम् । प्राग्भवे नियतं सोऽपि कृष्णगुल्मेन बाध्यते ॥ १ ॥
स नानारत्नदानेन विधिना गरुडाग्रज । नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्विप्राय विधिनाण्डज । महिषीपापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोनाशीत्यधिकषट्शततम ॥ ६७९ ॥

श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकृन्तनम् । ब्रह्मघातान्महापापात्षण्ढः स्याद्बहुजन्मनि ॥ १ ॥
ब्रह्मपुत्रस्य षण्ढः स्यादत्र जन्मनि निश्चयात् । ज्ञानाज्ञानकृतं वापि निष्कृतिर्नात्र विद्यते ॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकषट्शततम ॥ ६८० ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । फलानां बहुपक्वानां तथामानां निपातनात् ॥ १ ॥
पूर्वजन्मनि पुण्यापि बहुदानरता सती । अत्र सा क्षत्रिया जाता प्रागाप क्षात्रयाण्डज ॥ २ ॥
अत्र पुत्रविहीना सा फलहृत्पापजाद्दात् । फलानां बहुदानाच्च चातुर्मास्येष्व नित्यशः ॥ ३ ॥
भोजनं तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् । प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम् ॥ ४ ॥

अमायां नालिकेराणि देयानि खलु शक्तितः । तत्कृते सुतवृद्धिः स्याज्जीवनं वर्षसप्ततिम् ॥ ५ ॥
दधिहारी पुमान् पूर्वे जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ ६ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः । तस्माद्रोगात्प्रमुच्येत तत्काले गरुडाग्रज ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकपट्शततमः ॥ १८१ ॥

श्रीसूर्य उवाच ।

महिषीं घातयेन्नारी प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदेवताम् । युग्मकम्बलसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
स मुच्यते महापापान्महिषीवधजात्सुत । तस्मिन्नपगते तत्र कृष्णगुल्मं न पश्यति ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्व्यशीत्यधिकपट्शततमः ॥ १८२ ॥

श्रीसूर्य उवाच ।

वेधेत्प्राग्वृषभाणां च नासाग्रं गरुडाग्रज । नासाच्छेदोऽत्र तस्यास्ति वृषभावे विनिश्चयात् ॥ १ ॥
नास्ति तद्भिन्नमर्यं क्वापि दत्तदानैर्शरीप ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्यधिकपट्शततमः ॥ १८३ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिनिरतो बहुचातुर्यसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवान्परघातनम् । परघातकृते सूत स्वशरीरमथात्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महद्वीर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम् । सिन्धोः पश्चिमभागेऽत्र शतयोजनसंमिते ॥६॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
सुखैश्वर्यसमाक्रान्तो धनवाहनभोगभाक् । शूरः सुवेषोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापाल्लोभरतः क्रोधी नानाभैरवशासनः । रिष्टं पष्टिमिते वर्षे पञ्चहीने पतत्रिण ॥ ९ ॥
सर्ववित्तपर्दशेन महारिष्टहरं परम् । पञ्चाशीत्यब्दकं चायुर्दत्ते कालनरेऽण्डज ॥ १० ॥
मायाश्रिते कृते तत्र रिष्टं स्यात्प्रोक्तवत्सरे । कालरूपेण शस्त्रेण तत्क्षणे मरणं स्मृतम् ॥ ११ ॥
महाघोराहवे सूत चात्मघातादिदं फलम् । चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् ॥ १२ ॥
हृदिस्थं लशुनं पुत्र पडङ्गुलमितं शुभम् ॥ १३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकपट्शततमः ॥ १८४ ॥

श्रीसूर्य उवाच ।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
नवधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्येन्नेत्रजं रोगं कातरत्वं हि काश्यप ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० पञ्चाशीत्यधिकपट्शततमः ॥ १८५ ॥

श्रीसूर्य उवाच ।

प्राग्भवे सुमुखी काचिद्गता देवालयेऽण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा शूद्रात्र महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महापापात्माक्कृतात्र पतत्रिण ॥ २ ॥
तेन कर्मविपाकेन चक्षुःपीडाति दारुणा । त्रिदोषैर्भूषिता चात्र युवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम् । दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥
सुवर्णार्धमिता भक्त्याः संपूज्याथ महेश्वरम् । गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः प्रयत्नतः ॥ ५ ॥
देया द्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय षडशीत्यधिकपद्शततम ॥ १८६ ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कातराक्षी प्रजायेत चक्षूरोगेण चाण्डज ॥ १ ॥
धेनुं रत्नमयीं दद्यात्ससुवर्णां विधानतः । न पश्यत्यक्षिरोगं सा तद्दत्तेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्ताशीत्यधिकाद्शततम ॥ १८७ ॥

श्रीसूर्य उवाच ।

प्राग्जन्मन्यप्यभूत्कश्चिन्नरो राजक्रियान्वितः । दण्डाधिकारवाञ्छूद्रो दक्षो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र लोभाढ्योऽपि विशेषतः । व्यभिचाररतस्यैष ब्राह्मणस्य पतत्रिणः ॥ २ ॥
लोभाच्चकारासौ तत्र ह्यण्डभेदं च तत्क्षणात् । स तेन कर्मणा युक्तो मुक्तातियमशासनम् ॥ ३ ॥
देशे पञ्चनदे ह्यत्र जातः शूद्रोऽपि चाधमः । स चास्यत्र विवर्णस्तु पण्ढः पापमतिः सुखी ॥ ४ ॥
सकलैश्वर्यसंपन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मन्यसौ पण्ढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्यधिकपद्शततम ॥ १८८ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्ययशोधनः । राजमान्यविरोधी च नानासांख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते चोदरे भृशम् । वातरक्ताच्च शिरसि जायते पक्षसंख्यया ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी । प्रियभक्तिरता नित्यं दानदाक्षिण्यवर्तिनी ॥ ३ ॥
एकपुत्रप्रसूता चाप्यन्यपुत्रमुपागता । पश्चात्पुण्यं गतं शान्तिमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं शाम्येद्धि तत्प्रियः । विधानं वा हितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातो धातुकार्यादिकारकः । ब्राह्मणो मित्रं संजातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्येण वर्धितः । कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
संचितं तद्धनं सर्वं न तु किंचित्प्रदापितम् । ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासंततिनाशनम् । यश्चैतस्य मृतः पुत्रः स जातो ब्राह्मणस्तथा ॥ ९ ॥
इदं जन्म चतुर्थं तु नष्टवंशप्रमृद्धनम् । भार्या दुःखकरा ह्येवं पुत्रहीना पतत्रिण ॥ १० ॥

१ जन्मान्तरे इति–क० पु० ।

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश संततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

ब्रह्मस्वं विपनीकारं पुत्रपौत्रादिनाशनम् । विषेणैकोऽपि म्रियते ब्रह्मस्वात्सुतसंततिः ॥ १२ ॥
तस्य पापस्य नाशाय कारयेन्निष्कृतिं शुभाम् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुले । तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं ससर्वौषधिपल्लवम् । नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यसमोपेतं वस्त्रयुक् चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम् । सुवर्णस्य विशुद्धां च दापयेद्देवतादिने ॥ १७ ॥
प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम् । अष्टोत्तरशतं विमान् द्रोणाः सप्तैव निर्मिताः ॥ १८ ॥
जातीपुष्पैः समुद्भूता लक्षपूजा शिवोपरि । संकष्टान्मोचयेद्देवं दम्पती परिधापयेत् ॥ १९ ॥
एवं कृतविधेः सूत निश्चला संततिर्भवेत् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अ० एकोननवत्यधिकषट्शततमः ॥ ६८९ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत् । सात्र जन्मनि पक्षीन्द्र दुर्गन्धाढ्या प्रजायते ॥ १ ॥
मधुधेनुप्रदानात्तु व्यतीपातादिपर्वसु । दुर्गन्धरोगात्सततं मुच्यतेऽत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकषट्शततमः ॥ ६९० ॥

श्रीसूर्य उवाच ।

पण्ढोऽस्ति राजसम्मानी अत्र जन्मनि चाण्डजा । महादुष्टक्रियायुक्तो वधबन्धनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यधनान्वितः । महामानी महाधूर्तः जडोगम्यातिसेवनात् ॥ २ ॥
नात्र जन्मनि पक्षीन्द्र प्रायश्चित्तं मयोदितम् । अगम्यागमनं पापं प्रायश्चित्तं न तत्समम् ॥ ३ ॥
पुत्रस्त्रीसुखहीनश्च सर्वधर्मविवर्जितः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकषट्शततमः ॥ ६९१ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा मया प्रोक्ता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं यस्माच्छृणुष्वात्र पतत्रिण ॥ १ ॥
अनया द्रव्यलोभेन सपत्न्या घातितः सुतः । प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥
तस्मादियं महादुष्टा बाल्ये कुष्ठान्विता सुत । विवासिता यतः सर्वैः पितृगेहे स्थिताण्डज ॥ ३ ॥
महापापवती पापाज्जातात्र यवनी खग । भविष्यति महारिष्टमग्निदाहेन चाण्डज ॥ ४ ॥
चतुर्विंशन्मिते वर्षे मरणं कीर्तितं ध्रुवम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकषट्शततमः ॥ ६९२ ॥

श्रीसूर्य उवाच ।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दन्तुरः सोऽपि काले तत्पापचिह्नितम् ॥ १ ॥

१ पण्ड इति–ख०पु० ।

घृतकुम्भं यथा दद्याच्छक्त्या विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

॥ ॥ इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकषट्शततम ॥ १९३ ॥

श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः । गुल्मोदरेण रोगेण पीड्यते सोऽत्र जन्मनि ॥ १ ॥
गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

॥ ॥ इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकषट्शततम ॥ १९४ ॥

श्रीसूर्य उवाच ।

अथो काचित्सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिना प्रेरिता पूर्वं शत्रोर्दग्ध तया गृहम् ॥१॥
तदाहाच्च महाभाग दग्धं सर्वपुरं तदा । ब्राह्मणस्य तु या कन्या तस्मिन्काले ऽपि सा मृता ॥ २ ॥
भुक्त्वा शुभं फलं पुण्यात्पापात्पापसमुद्भवम् । सा शूद्री यमुनातीरे जाताऽत्र पतिसेवया ॥ ३ ॥
कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशनीम् । वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् ॥ ४ ॥
कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चनवत्यधिकषट्शततमः ॥ १९५ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतः सदा । पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः । तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्वा नासाप्रमुष्कौ तु कृतं कर्मातिदारुणम् । तत्र जन्मनि तद्भुक्त्वा फलं पापसमुद्भवम्॥३॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते । षण्ढस्तु तेन पापेन स चास्त्यत्र पतत्रिण ॥ ४ ॥
धर्मात्पूर्वं कृतात्सोऽपि सुखैश्वर्यधनान्वितः । दृढपापार्जनात्सूत प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च तद्गतिः । तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्ट पञ्चाशदब्दके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षण्णवत्यधिकषट्शततम ॥ १९६ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले घातसंभवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तनवत्यधिकषट्शततम ॥ १९७ ॥

श्रीसूर्य उवाच ।

तलहारी तु यः कश्चिद्वलेभात्पुराभवे । कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणस्य पतत्रिण । कण्डूरोगोपशमनं दानात्तैलघटद्दयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकषट्शततम ॥ १९८ ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ता विचित्ता सा महारोगवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैर्भर्तुः पुरत्वं हि नाशितम् । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥

धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मन्यसौ पापान्मुक्तो भवति चाण्डज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकषट्शततमः ॥ ६९९ ॥

श्रीसूर्य उवाच ।

स्वभक्षार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खञ्जः स्याद्वायुपीडातिदुःखितः ॥१॥
सुवर्णमृगदानेन पूर्वपीडां न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तशततमः ॥ ७०० ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ग्रहणीरुग्युतात्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकसप्तशततमः ॥ ७०१ ॥

अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षिदर्शनः ।[1] उदरे वातजान् रोगान् किंचिच्छस्त्रोपघातकान् ॥ १ ॥
किंचित्क्रोधश्च लोभश्च किंचिद्वित्तसमन्वितः । तस्य प्रिया सदाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्यं भवेत्तस्य जायते मृतपुत्रकः । आदिपुत्रो मृतस्तस्य ह्यपत्यं नैव जायते ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्म महाबाहो शूद्रवंशसमुद्भवम् ॥ ४ ॥
व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन यत्कृतम् । व्यवहारादिना कृत्वा ब्रह्मवित्तेन वर्धितः ॥ ५ ॥
कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् । नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् ॥ ६ ॥
ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर । पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः ॥ ७ ॥
ब्रह्मस्वभक्षणाच्चैव वर्षाणां च सहस्रकम् । पातितो नरके घोरे पच्यते चेह कर्मणा ॥ ८ ॥
पश्चान्मानुषमापन्नो व्रतदानप्रभावतः । इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम् ॥ ९ ॥
निक्षेपहरणाद्वापि मृतपुत्रः प्रजायते । ब्राह्मणस्य विशेषेण ब्रह्मस्वं विषमेव यत् ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणां च निष्कृतिं सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामकरः प्रभुः । पूजनीयो महारुद्रः संततिश्रेय इच्छता ॥ १२ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । यजनैस्त्र्यं मुच्येत पापादाकल्पसंभवात् ॥ १३ ॥
रुद्रैकादशनीभिश्च रुद्रैकादशकेन वा । जपेन तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १४ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम् । विधिवज्जुहुयाद्वह्नि तिलैस्त्रिमधुरप्लुतैः ॥ १५ ॥
हरितालीपलाशाभ्यां समिधोऽत्र हविर्हुताः । प्रतिरुद्रं प्रदातव्यं गोयुगं रसनान्वितम् ॥ १६ ॥

१ सदशम्, इति । "ऋणं विप्रस्य याऽल्पमपि कल्पशतावधि । तस्माद्विप्रऋणं घोरमसप्तमभिजायते"
ति-क० पु० ।

केयूरकुण्डलाकल्पमन्त्रपुस्तकमण्डलम् । प्रतिरुद्रं शतं विप्रान् भोजयेत्सुसमाहितः ॥ १७ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा सुरुप्यदक्षिणाम् । एवं रुद्रविधिं कृत्वा त्रिविधापत्यशान्तिकृत् १८
इतिहासपुराणोक्तसूक्तानि विविधानि च । शृणुयाद्विधिवच्चार्क्य सभार्यः प्रीतितोऽन्वहम् ॥ १९॥
देवर्षिपितृमर्त्यानामृषीणा च महीक्षिताम् । देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २० ॥
सर्वासामपि जातीनामुत्पत्तिं शृणुयादपि । ऋषीणामृषिपत्नीनां वंशान्सर्वानुदीरितान् ॥ २१ ॥
हरेर्वंशस्य श्रवणात्पूर्वपापात्प्रमुच्यते । तस्य संततिवृद्धिः स्यादत्र जन्मनि वै सुत ॥ २२ ॥
कृष्णगुल्मोद्भवां पीडा नरश्चात्र न पश्यति ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकसप्तशततम ॥ ७०२ ॥

---

## श्रीसूर्य उवाच ।

प्राग्भवे याऽभवत्काचित्स्वर्णकारी पतत्रिण । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लकुटेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः । मृता च तेन दुःखेन गर्भजातसमन्विता ॥ ३ ॥
तेन कर्मसमायुक्ता संप्राप्योचितशासनम् । पुनः शूद्रीसमा जाता गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यैर्नानाविभवसंयुता । पुत्रसंततिहीना सा प्राग्गोघाताघसंभवात् ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापक्षयंकरम् । कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा ॥ ६ ॥
मार्गे हि धर्मतो यत्नात्प्रतिष्ठा कारयेत्ततः । संस्थाप्य च शिवं तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच्च ततस्तत्र तिलानाज्ययुतानिह । भोजयेद्ब्राह्मणाञ्शक्त्या शिवपूजनतत्परान् ॥ ८ ॥
दद्यात्तथैका कपिला सर्वपापप्रणाशनीम् । प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् ॥ ९ ॥
नैवं वा कुरुते श्रुत्वा तस्याः संततिजं भयम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकसप्तशततम ॥ ७०३ ॥

## श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले स तु पापेन बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना तत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकसप्तशततम ॥ ७०४ ॥

## श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कस्यचित्पापमोहिता । पूर्वजन्मनि साऽत्रैव बहुमूत्ररुजाऽऽकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गपारगे । विधिना काश्यपेयात्र न पश्येद्बहुमूत्रताम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाधिकसप्तशततम ॥ ७०५ ॥

## श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत माहिषीं नवयौवनाम् । प्राग्भवे नियतं सोऽपि कृष्णगुल्मेन बाध्यते ॥ १ ॥
स नानाधेनुदानेन विधिना गरुडाग्रज । नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा माहिषीदानाद्विप्राय विधिनाण्डज । महिषीपापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडधिकसप्तशततम ॥ ७०६ ॥

---

श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकुट्टनम । ब्रह्मपुत्रस्य षण्ढः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृतं वापि निष्कृतिर्नात्र विद्यते । ब्रह्मघातान्महापापात्षण्ढः स्याद्बहुजन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकसप्तशततमः ॥ ७०७ ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । सर्वजन्मनि पुण्यापि बहुदानरता सती ॥ १ ॥
अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज । अत्र पुत्रविहीना सा फलहृत्पापजाद्द्धात् ॥ २ ॥
फलानां बहुदानाच्च चातुर्मास्ये च नित्यशः । भोजनं तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् ३॥
प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम् । अमायां नालिकेराणि देयानि खलु शक्तितः ॥ ४ ॥
तत्कृते सुतवृद्धिः स्याज्जीवनं वर्षसप्ततिम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाधिकसप्तशततमः ॥ ७०८ ॥

श्रीसूर्य उवाच ।

दधिहारी पुमान्पूर्वं जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः । तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवाधिकसप्तशततमः ॥ ७०९ ॥

श्रीसूर्य उवाच ।

महिषीं घातयेन्नारी प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदैवताम् । युग्मकम्बलसंच्छन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत । तस्मिंश्च पच्यते तत्र गुल्मरोगं न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशाधिकसप्तशततमः ॥ ७१० ॥

श्रीसूर्य उवाच ।

वेधेत्प्राग्वृषभानां च नासाग्रं गरुडाग्रज । नासाछेदोऽत्र तस्यास्ति युवभावे विनिश्चयात् ॥ १ ॥
नास्ति तद्भिन्नमयं क्वापि दत्तैर्दानशतैरपि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकसप्तशततमः ॥ ७११ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग चारणोऽति यंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परघाते कृते सूत स्वशरीरमथात्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महाचौर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम् । सिन्धोः पश्चिमभागेऽत्र शतयोजनसंमिते ॥ ६ ॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
[illegible]ते प्रजापालनसंयुतः । शूरः सुवेषोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥

पापाल्लोभरतः क्रोधी नानाभैरवशासनः । रिष्टं षष्टिमिते वर्षे पञ्चहीने पतत्रिण ॥ ९ ॥
सर्ववित्तषडंशेन महारिष्टहरं परम् । पञ्चाशीतिमितायुः स्यात्तत्ते कालनरोऽण्डज ॥ १० ॥
प्रायश्चित्ते कृते तत्र रिष्टं स्यात्प्रोक्तवासरे । कालरूपेण शस्त्रेण तत्क्षणे मरणं स्मृतम् ॥ ११ ॥
महाघोराहवे सूत चात्मघातादिदं फलम् । चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् ॥ १२ ॥
हृदिस्थं लशुनं पुत्र षडंगुलमितं शुभम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशाधिकसप्तशततम ॥ ७१२ ॥

श्रीसूर्य उवाच ।

दधिहर्त्री भवेन्नारी प्राग्भवे याऽत्र जन्मनि । मेदसा पीड्यते सा तु विनतानन्दवर्द्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने । मुच्यतेऽत्र महारोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकसप्तशततम ॥ ७१३ ॥

श्रीसूर्य उवाच ।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्यत्यक्षिरोगं च कातरोत्थं हि काश्यप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकसप्तशततम ॥ ७१४ ॥

श्रीसूर्य उवाच ।

प्राग्भवे सुमुखी काचिद्गता देवालयेऽण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा शूद्रा च महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महादानात्प्राक्कृतात्तु पतत्रिण ॥ २ ॥
तेन कर्मफलेनात्र चक्षुःपीडाऽतिदारुणा । त्रिदोषैर्दुःखिता चात्र सुतभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम् । दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥
सुवर्णार्द्धमिता भव्याः संपूज्याथ महेश्वरम् । गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्द्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चदशाधिकसप्तशततम ॥ ७१५ ॥

श्रीसूर्य उवाच ।

दुष्टगन्धियुतः सूत जायते सोऽत्र जन्मनि । मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु ॥ १ ॥
मधुधेनुप्रदानाद्धि ब्राह्मणाय पतत्रिण । दुष्टगन्धिकृताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षोडशाधिकसप्तशततम ॥ ७१६ ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कातराक्षी प्रजायेत चक्षूरोगेण पक्षिराट् ॥ १ ॥
धेनुं रत्नमयीं दद्यात्सुवर्णां विधानतः । न पश्यत्यक्षिरोगं सा सत्यमेतन्महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तदशाधिकसप्तशततम ॥ ७१७ ॥

श्रीसूर्य उवाच ।

प्राग्जन्मन्यप्यभूत्कश्चिन्नरो राजकृपान्वितः । दण्डाधिकारवाञ्छूद्रो दृढो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र लोभाढ्योऽपि विशेषतः । व्यभिचाररतस्याथो ब्राह्मण्या पतत्रिण ॥ २ ॥

लोभाच्चकारासौ तत्र ह्यण्डच्छेदं च तत्क्षणात्। स तेन कर्मणा युक्तो मुक्त्वातियमशासनम्॥३॥
देशे पंचनदे ह्यत्र जातः शूद्रोऽविनायमः। स चाप्यत्र विवर्णस्तु स्वेच्छापापमतिः सुखी ॥४॥
सकलैश्वर्यसम्पन्नो नानाधनसमन्वितः। नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मन्यसौ षंढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकसप्तशततमः ॥ ७१८ ॥

अरुण उवाच।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्ययशो धनी। राजमान्यविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते चोदरे भृशम्। वातरक्ताच्च शिरसि जायते वक्षसि ह्यथ ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी। प्रियभक्तिरता नित्यं दानदाक्षिण्यवर्तने ॥ ३ ॥
एकपुत्रप्रसूता चाप्यन्यपुत्रमुपागता। पश्चात्पुण्यं गतं शान्तिमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं शाम्यति तत्स्त्रियाः। विधानार्थहितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वं वर्णान्तरे जातो धातुकांस्यादिकारकः। ब्राह्मणस्य च मित्रं तु बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्येण वर्धितः। कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
संचितं तद्धनं सर्वं न तु किंचित्प्रदापितम्। ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासंततिनाशनम्। यो यै तस्य मृतः पुत्रः स जातो ब्राह्मणस्य च ॥ ९ ॥
इदं जन्म चतुर्थं तु ब्रह्मवंशसमुद्भवम्। भार्या दुःखवती ह्येवं पुत्रहीना पतत्रिण ॥ १० ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि देवेश संततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच।

ब्रह्मस्वं विषसंकाशं पुत्रपौत्रादिनाशनम्। म्रियतेऽत्र विषेणैको ब्रह्मस्वात्सकुलं खग ॥ १२ ॥
तस्य संतत्यनाशाय कारयेन्निष्कृतिं शुभाम्। सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः। तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवम्। नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति। सप्तधान्यफलोपेतं वस्त्रयुक् चंदनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम्। सुवर्णस्य विशुद्धां च स्थापयेद्देवादिने ॥ १७ ॥
प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम्। शतमष्टोत्तरं विप्रान् द्रोणाः सप्तैव निर्मिताः॥१८॥
जातीपुष्पसमुद्भूतां लक्षपूजां शिवोपरि। संकष्टान्मोचयेद्देनुं दम्पती परिधापयेत् ॥ १९ ॥
एवं कृतविधेः सूत निश्चला संततिर्भवेत् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकसप्तशततमः ॥ ७१९ ॥

श्रीसूर्य उवाच।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत्। साऽत्र जन्मनि पक्षीन्द्र दुर्गन्धाढ्या प्रजायते॥१॥
मधुधेनुप्रदानाच्च व्यतीपातादिपर्वसु। दुर्गन्धिरोगात्सततं मुच्यतेऽत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकसप्तशततमः ॥ ७२० ॥

श्रीसूर्य उवाच ।

पंढोऽस्ति राजसम्मानी चात्र जन्मनि चाण्डज । महादुष्टक्रियायुक्तो वृषपंवनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यधनान्वितः । महामानी महाधूर्तः पंढो राजातिसेवनात् ॥ २ ॥
नात्र जन्मनि भो सूत प्रायश्चित्तं मयोदितम् । अगम्यागमने पापं प्रायश्चित्तविवर्जितम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकसप्तशततम ॥ ७२१ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा मया प्रोक्ता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं यस्माच्छृणुष्वात्र पतत्रिण ॥ १ ॥
अनया द्रव्यलोभेन सपत्न्या घातितः सुतः । प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥
तस्मादियं महादुष्टा बाल्ये कुष्ठान्विता सुत । अविवाह्या यतः सर्वैः पितृगेहे स्थिताऽण्डज ॥ ३ ॥
महादोषवती पापा तस्या नोक्ताऽत्र निष्कृतिः । चतुर्विंशन्मिते वर्षे मरणं कीर्तितं ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकसप्तशततम ॥ ७२२ ॥

श्रीसूर्य उवाच ।

वराह यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दंतुरः सोऽपि काले तत्कालचिह्नितः ॥ १ ॥
घृतकुम्भं यथा दद्याच्छक्त्या विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्यधिकसप्तशततम ॥ ७२३ ॥

श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः । गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकसप्तशततम ॥ ७२४ ॥

श्रीसूर्य उवाच ।

अथो काचित् सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिना प्रेरिता पूर्वं शत्रोर्गेहं ददाह सा ॥१॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । ब्राह्मण्येका सबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधस्तत्र किंचित्कालेऽपि सा मृता । भुक्त्वा फलानि सर्वाणि पुण्यपापोद्भवानि च ॥ ३॥
सा शूद्री यमुनातीरे जाताऽत्र पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापशोधनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चविंशत्यधिकसप्तशततम ॥ ७२५ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतस्तथा । पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः । तेन तद्वृषभस्याऽपि प्राग्भवे विनतासुत ॥ २ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम् । तत्र जन्मनि भुक्त्वा तु फलं पापसमुद्भवम् ॥३ ॥
जातोऽत्र यवनः सिन्धुमण्डले पवताश्रित । पश्चात्तु येन [illegible] पतत्रिण ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः । पापाद्वृद्धार्जनात्सुत प्रायश्चित्तं न विद्यते ॥ ५ ॥

पूजनादतिथीनां च भविष्यति च तद्गतिः। तीर्थाश्रयेऽस्य जनुषि मृत्युस्तस्य प्रकीर्तितः॥ ६॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके॥ ७॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकसप्तशततमः॥ ७२६॥

श्रीसूर्य उवाच।
घातयेद्या पुरा नारी वराहं गरुडाग्रज। दन्तुरा सा भवेदत्र तत्काले घातसंभवे॥ १॥
ताम्रकुंभं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम्। तद्दोपशमनायैव दद्याच्छक्त्या विधानतः॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकसप्तशततमः॥ ७२७॥

श्रीसूर्य उवाच।
तैलहारी तु यः कश्चित्सूत लोभात्पुराभवे। कंडूरोगेण सततं पीड्यते चात्र जन्मनि॥ १॥
शक्त्या तैलप्रदानाच्च ब्राह्मणाय पतत्रिण। कंडूरोगप्रशमनं दानं तैलघटद्वयम्॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकसप्तशततमः॥ ७२८॥

श्रीसूर्य उवाच।
काचिच्छुभानना पूर्वेऽभवच्चारणवल्लभा। पतित्यक्ताऽधिविन्ना सा महारोपवती ह्यभूत्॥ १॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम्। तेन पापप्रभावेण जातोऽत्रायं नपुंसकः॥ २॥
धूर्तः पापरतो नित्यं सर्वधर्मविवर्जितः। वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम्॥ ३॥
बहुजन्मन्यसौ पापान्मुक्तो भवति चांडज॥ ४॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशत्यधिकसप्तशततमः॥ ७२९॥

श्रीसूर्य उवाच।
स्वभक्षार्थं महाभाग यो हन्याद्वायुवाहनम्। अत्र जन्मनि खञ्जोऽपि नात्र कार्या विचारणा॥ १॥
न तस्य विन्मयं प्रोक्तमत्र जन्मनि चांडज। स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशत्यधिकसप्तशततमः॥ ७३०॥

श्रीसूर्य उवाच।
या नारी प्राग्भवे मोहाद्गुडं हरति कस्यचित्। गुल्मोदरेण रोगेण पीड्यते साऽत्र जन्मनि॥१॥
गंगायां हि महाभाग गुडधेनुप्रदानतः। तत्र स्नानान्महापुण्यात्तस्माद्रोगात्प्रमुच्यते॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशत्यधिकसप्तशततमः॥ ७३१॥

श्रीसूर्य उवाच।
कश्चिद्वैश्योऽभवत्पूर्वे भवे नेपालविश्रुते। बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः॥ १॥
आराधनं तु कृतवान्देव्या यः पूर्वजन्मनि। स्वस्त्रियं च सुरूपां च परित्यज्य शुभाननाम्॥ २॥
अन्यस्त्रियामभिगमाद्व्यभिचारपरो दृढः। स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति॥ ३॥
तत्र पापं फलं भुक्त्वा शुभाज्जातो महीतले। गौरो भव्यो महाज्ञानी महाविभवसंयुतः॥ ४॥
देशेदेशेऽतिविख्यातो घृणी लघुर्महायशाः। स्वस्त्रीत्यागान्महत्पापाज्जायते स्त्रीविवर्जितः॥ ५॥
अरुण उवाच।
निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तिसौख्यकारिणीम्। पार्वतीप्रतिमां कृत्वा हैमीं वै कार्यकारिणीम् ६

पलपंचमितां लेख्यां गंधैर्माल्यैरलंकृताम् । दद्याद्देदविधिज्ञाय सुकुलीनाय चार्थिने ॥ ७ ॥
प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम् । ब्रह्मदैवतमंत्रेण गृह्णाति स महाद्विजः ॥ ८ ॥
पश्चादष्टाक्षरं मंत्रं सहस्रं पापशोधनम् । जपेदष्टसहस्रं तु सूर्यमंत्रं महाबलम् ॥ ९ ॥
होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् । य एवं कुरुते सूत सर्वपापविनाशनम् ॥ १० ॥
प्रायश्चित्तं परं तत्र तस्मात्पापात्प्रमुच्यते । नैवं करोति यो मोहाज्जडधीर्दैवघातितः ॥ ११ ॥
न लभेत्स्त्रीसुखं तत्र रिष्टं षड्दके ऽब्दके । प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकसप्तशततमः ॥ ७३२ ॥

श्रीसूर्य उवाच ।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतासुत । खञ्जः स्यादत्र जनुषि तत्काले मृगघातजे ॥ १ ॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत । दद्यादश्वं नवं तत्र स्वर्णं निष्कयुतं शुभम् ॥ २ ॥
सहासनमलंकारं पूजयित्वा विधानतः । विधिज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ ३ ॥
न स पश्यति खंजत्वं दानस्यास्य प्रभावतः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकसप्तशततमः ॥ ७३३ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परतैलापहारिणी । साऽत्र जन्मनि पक्षीन्द्र कंडुरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तैलघटद्वयात् । सुवर्णाढ्या तथा शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदधिकसप्तशततमः ॥ ७३४ ॥

श्रीसूर्य उवाच ।

राजप्रचारी यः कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरो शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दधाराऽसावधर्मतः । गर्भं च कामलोभेन भाविनोऽर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके पतत्रिण । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि पादजः ॥ ३ ॥
देशे जांगलके षण्ढः सर्वधर्मबहिष्कृतः । शिवपूजनतो यस्मात्प्रागत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चत्रिंशदधिकसप्तशततमः ॥ ७३५ ॥

श्रीसूर्य उवाच ।

गर्भाढ्या याऽवधीत्पूर्वं मृगं हि विनतासुत । स्वगर्भपालने दक्षा जन्मन्यत्र गतघृणा ॥ १ ॥
तद्घातकाले खंजा सा भविष्यति शुभानना । गर्भपातनदुःखार्ता तथैव मद्वदेनसः ॥ २ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युक्तं भूषणान्वितम् ॥ ३ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न पश्यति च गर्भोत्थां पीडामत्रैव जन्मनि ॥ ४ ॥
दानप्रभावात्पक्षीन्द्र खंजत्वं नाप्नुयादिह ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदधिकसप्तशततमः ॥ ७३६ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मोहादिपीडितो नित्यं कृशांगः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्वं यातादिना पीडा बाल्ये स्याद्व्रणीगदः । तस्य भार्या सदाचारा सुस्नेहा भर्तृसंयुता ॥ २ ॥

रत्नस्रावादिना पीडा जायते चोदराग्निलः। उदराचस्या गर्भस्य पातं कुर्याच दारुणः ॥ ३ ॥
द्वित्रिभिः पंचभिर्मासैः चतुर्भिः सप्तभिस्तथा। केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम्। व्यभिचारभयाच्चापि तया गर्भश्च पातितः ॥ ५ ॥
अतिकष्टद्वैनतेय गर्भपातकृतागसः। अपरं च कृतं कर्म व्यभिचारं यतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्री च कुलटा वाक्यलंघनात्। भर्तुस्तु चौरिणी वृत्तिर्दुष्टसंगस्यचार्जनात् ॥ ७ ॥
तेन दुष्टेन यद्द्रव्यं हृतं तस्करबुद्धिना। भुक्तं ताभ्यां वैनतेय ब्रह्मस्वं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्ता पीडितो दारुणैर्महैः। यावना बहुधा प्राप्या पश्चान्मानुषमाप्नुयात् ॥ ९ ॥
किंचित्पुण्यप्रभावेण क्षात्रोऽयं जन्मतो भुवि। इदं जन्म चतुर्थं तु गर्भपातो विजायते ॥ १० ॥
उभाभ्यां हि कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि देवेश येन गर्भः स्थिरो भवेत् ॥ १२ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदधिकसप्तशततमः ॥ ७३७ ॥

---

श्रीसूर्य उवाच।

पूर्वं जन्मनि या नारी नानागर्भाञ्जिघांसति ॥ १ ॥
तस्या निष्कृतये शुद्धिः श्रूयतां कश्यपात्मज। नारी नियमसंशीला ध्रुवं सा व्रतकांक्षिणी ॥२ ॥
सौम्यायने समापूर्यमाणे पक्षे शुभेऽहनि। तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत् ॥ ३ ॥
पयःस्रवंतीं श्रान्तां वा सुरभीं शुभलक्षणाम्। गृहमानीय विधिवत्पूजयेत्तां समाहितः ॥ ४ ॥
दृष्टैस्तु यवसैः पानैर्भक्ष्यैः कंडूयनैरपि। रुचिरैश्च सुगोग्रासैः स तां परिचरेत्सदा ॥ ५ ॥
रात्रौ पुष्पावलीभिश्च दीपस्रक्चन्दनादिभिः। सुगीतमङ्गलध्वानैस्तदधःशायिनी भुवि ॥ ६ ॥
प्राणायामं प्रकुर्वीत तस्यास्तु पयसा भुवि। तस्यास्तु पंचगव्यानि यथान्यायं यथाश्रुति ॥ ७ ॥
एवं व्रतपरा नारी मासिमासि तु संयुता। तस्या धेनोः सवत्सायाः दद्यं समभिकांक्षिणी ॥ ८ ॥
व्रतान्ते द्विजमाकार्य समस्तगुणशालिनम्। अभ्यर्च्य पूजयेद्भक्त्या वस्त्रस्रग्दामभूषणैः ॥ ९ ॥
सम्यगभ्यर्च्य तां धेनुं तनयं तरस्तनंधयम्। कृत्वा तु विधिवत्तस्मै तां दद्यादितिभाषिणी ॥१०॥
सुवर्णशृङ्गमाग्नेयं मापषोडशसंयुतम्। दापयेद्गां सवत्सां च पूर्वपापापनुत्तये ॥ ११ ॥
यन्मया कुलटेच्छातो नानागर्भा विहिंसिताः। नानाभेदैः पातिता मे गर्भा वै बहवो भुवि ॥१२॥
तस्य कर्मार्जितं पापं गर्भपातादिदूषणम्। एनसस्तस्य नाशाय सवत्सादानतोऽस्त्व च ॥ १३ ॥
इह जन्मनि वन्ध्यत्वं नाशयेदस्य वस्य तु। दानेनानेन सुरभेरनघा सातिसुव्रत ॥ १४ ॥
भवेयं त्वत्प्रसादेन गर्भं मे सुभगान्विते। एवमस्त्विति तां धेनुं समादाय सदक्षिणाम् ॥ १५ ॥
हिरण्यं रजतं ताम्रं वस्त्रं मुक्ताफलानि च। दापयेद् द्विजमुख्याय भूरिद्रव्यैश्च तोषयेत् ॥ १६ ॥
भोजयेच्च शतं विप्रान्नानान्नैः सक्तुपायसैः। एवं कृतविधेः सूत नारी वा दुःखनाशनी ॥ १७ ॥
वंध्यत्वं मुच्यते सूत पुत्रप्राप्तिर्यशस्विनी ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकसप्तशततमः ॥ ७३८ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चित्तुरगं घातयेन्नरः। वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात्। वक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकसप्तशततमः ॥ ७३९ ॥

श्रीसूर्य उवाच।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि। पादहीनो भवेत्सूत भृशं चाकृतनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम्। ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदधिकसप्तशततमः ॥ ७४० ॥

श्रीसूर्य उवाच।

संकरः प्राग्भवे सूत बभूव धनसंयुतः। तीर्थवासी विरक्तश्च लोभी धर्मक्रियान्वितः ॥ १ ॥
क्रूरकर्म कृतं तेन दुष्टसंगेन चाण्डज। चौर्येण गां परां नीत्वा क्षुधितैर्भक्षिता पुरा ॥ २ ॥
मृतास्ते तेन पापेन नानायोनिमुपागताः। सतीर्थमृत्युवशतो गङ्गातीरेऽत्र पादजः ॥ ३ ॥
तीर्थमृत्युप्रसादाच्च धनपुत्रसमन्वितः। युवभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशसम्मितम्। लिखित्वा गौर्विधानेन पूजयित्वा विधानतः ॥ ५ ॥
सा देया वेदविदुषे पूर्वपापविशुद्धये। गायत्रीं च जपेत्तत्र नियतं चायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाभक्त्या भोजयेच्च ततो द्विजान्। यः कुर्याद्विधिना चेदं स तद्दोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदधिकसप्तशततमः ॥ ७४१ ॥

श्रीसूर्य उवाच।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि। सा तत्र पुरुषं याति घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वात्स्थानाच्च वहुवेकृतात्। पादभंगो भवेत्तस्मात्पापाद्वै खगाधिप ॥ २ ॥
करोति तस्य पापस्य विन्मयं विधिनात्र चेत्। तस्मात्पापात्प्रमुच्येत तच्चोर्ध्वात्पतनं तथा ॥३॥
अश्वं निष्कसुवर्णाढ्यं विन्मयं पापशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकसप्तशततमः ॥ ७४२ ॥

श्रीसूर्य उवाच।

या नारी घातयेदश्वं प्राग्भवे सात्र जन्मनि। महापर्वसु गंगादिपुण्यतीर्थेषु दापयेत् ॥ १ ॥
सर्वोपस्करसंयुक्तं स्वर्णाढ्यं विधिसंयुतम्। सा मुच्यते वक्रकंठपीडनाद्दिनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदधिकसप्तशततम. ॥ ७४३ ॥

श्रीसूर्य उवाच।

आसीत्क्षत्री महाभाग पांचाले देशके शुभे। नानाधर्मसमायुक्तो ग्रामपो विश्रुतो महान् ॥ १ ॥
दुष्कर्माचरितं तेन भगिनीऽर्थस्य वै बलात्। शूद्रायां च धृतो गर्भः कामलोभेन निश्चयात् ॥२॥
कृतं यत्नं महत्तत्र नासीद्गर्भस्य पातनम्। तया हालाहलं पीतं लोकशंका तु सा मृता ॥ ३ ॥
गर्भपीडा महत्युग्रा बालकोऽपि मृतस्ततः। महाप्रपंचसंयुक्तः कृतं प्राग्दारुणं महत् ॥ ४ ॥

कर्मणां संग्रहे चेदं गर्भनाशसमुद्भवम्। ततो मरणसंप्राप्तो बाहुजोऽथ सहायधृक्॥ ५॥
सूर्यलोकं ततो गत्वा भुक्त्वा भोगांश्च शाश्वतान्। अशुभान्नरकान्भुक्त्वा स्वकृताद्दृढकर्मजात्॥६॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद। स जातो यमुनातीरे बाहुजोऽप्यत्र जन्मनि॥ ७॥
गौरः कृशांगो लंबश्च धनसौख्यसमन्वितः। पितृभ्रातृविहीनश्च लोभमोहरतः सदा॥ ८॥
नैकस्त्रीसंयुतः कामी नानाविभवसंयुतः। आद्यंतसुखयुक्तश्च मतो दुःखसमन्वितः॥ ९॥
शूद्रायां वीर्यदानात्प्राक् तद्वधाच्चात्र पुत्रक। ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते॥ १०॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्सर्वपापप्रणाशनीम्। पुत्रवृद्धिकरीं धन्यां लोकानां हितकाम्यया॥११॥

श्रीसूर्य उवाच।

वक्ष्यामि निष्कृतिं तस्य शृणु सूत प्रयत्नतः। पूर्वपापविशुद्ध्यर्थं गर्भधारणकारिणी॥ १२॥
शूद्रायाः प्रतिमा कार्या पलैः पंचमितैः शुभा। हिरण्मयी सगर्भा च पत्रे लेख्यासमन्वितः॥१३॥
तदर्धार्धेन वा कार्या त्रिपु वित्तानुमानतः। गंधपुष्पैरलंकृत्य सा देया पापनाशनी॥ १४॥
माषपंचमितो विष्णुः सर्वपापप्रणाशनः। प्रजापतिं तथा दद्यात्सौवर्णं पंचमाषकम्॥ १५॥
राजतं च तथा दद्यात्सोमं सार्धपलात्मकम्। गायत्रीं दशसाहस्रं जपेच्च विधिपूर्वकम्॥ १६॥
होमयेत्तंडुलैः साज्यैः सर्षपैः सलिलैस्तथा। ब्राह्मणान्भोजयेत्पश्चात्सर्वपापात्प्रमुच्यते॥ १७॥
एवं कृतविधेः सूत सर्वपापविनाशनम्। तस्य पुत्रविवृद्धिः स्यादिह जन्मनि चाण्डज॥ १८॥
अकृते तु यथाशक्त्या प्रायश्चित्तं यथोदितम्। रिष्टं षष्ठिमिते वर्षे दारुणं शत्रुवेकृतम्॥ १९॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम्। जन्मादिमरणान्तं च स्वल्पमेवात्र सूचितम्॥ २०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकसप्तशततमः॥ ७४४॥

---

श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यतिकोविदः। ग्रामवासी सदा सौम्यः शतद्रुनिकटेऽण्डज॥ १॥
शूद्रकन्या च तेनैव हृता षोडशवार्षिकी। भुक्ता सा कामलोभेन बलात्कारेण दूषिता॥ २॥
स चाथ मम पुत्रस्य भुक्त्वा भैरवशासनम्। पूजनाच्छिवलिङ्गानां प्रागत्रापि च संकरः॥ ३॥
पंढस्तेन विपाकेन प्राप्तसर्वमनोरथः। राज्यप्रचारको धीमान् गजाश्वपरिपालकः॥ ४॥
महाधनो महोत्साहो नानाविभवविस्तरः। मृत्युश्चास्यात्र गंगायां पुण्याच्च शिवपूजनात्॥ ५॥
भविष्यति महाभाग पापान्ते चास्य सद्गतिः॥ ६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके अध्यायः पञ्चचत्वारिंशदधिकसप्तशततमः॥ ७४५॥

श्रीसूर्य उवाच।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि। यो मार्गहा पुरा लोके परलुंठनतत्परः॥ १॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय पतत्रिण। न पश्यति महापीडां पापजां पादसंभवाम्॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदधिकसप्तशततमः॥ ७४६॥

श्रीसूर्य उवाच।

अभवत्प्राग्भवे विप्रो ग्रामवासी वनाश्रितः। चौराधिपो महोग्रश्च तत्संसर्गात्खगाधिप॥ १॥

---

१ प्रयत्नत इति–क० पु०।

दत्तानि तेन ग्रहणे दानानि विनतात्मज । गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिभक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान् पापात्पुण्याच्च शाश्वतान् । स्वर्गान्पर्वतभागे तु स जातो बाहुजोऽधुना ॥३॥
वामनो राजसम्मानी महोग्रो मंत्रपारगः । पुत्रहीनोऽप्यसौ सूत परवित्तस्य लुंटनात् ॥ ४ ॥
भवंत्यत्र च ये पुत्रा म्रियंते नाऽत्र संशयः । प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान् । तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोंडज । रौद्रं व्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः । जायतेऽत्रैव पक्षीन्द्र कुर्याच्चेत्पुत्रवर्धनम् ॥ ८ ॥
आयुरष्टौ तथाशीतिर्वर्षाणां कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदधिकसप्तशततमः ॥ ७४७ ॥

अरुण उवाच ।

क्षात्रवंशे समुत्पन्नो वातो देहे रुजाकरः । गुल्माद्या ह्युदरे बाधाः शिरोर्तिर्जायते सदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किंचित्सेवादिना भवेत् । तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् ॥२॥
अन्योन्यद्वेषिभावाच्च किंचित्प्रीतिकरा परा । मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
एको गर्भः स्थिरीभूतो न प्रसूतिर्न पातनम् । केन पापप्रभावेण कथयस्व दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः । दानधर्मपरो नित्यं देवदेवपरायणः ॥ ५ ॥
अन्योन्यं द्वेषिभावाच्च वर्तते विविधस्ततः । कश्चिद्विप्रो धर्मपरो वेदवेदार्थपारगः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात् । तद्वित्तं माहयामास शूद्रो म्लेच्छजनस्य च ॥ ७ ॥
लंघनाय मतिं चक्रे ब्राह्मणो भार्यया सह । भर्त्सनैस्तर्जनाद्यैस्तु वञ्चनं च तदा द्विजैः ॥ ८ ॥
कतिपयैरेव शूद्रेण चान्येभ्यो विनतासुत । म्लेच्छाद्द्रव्यं स वै दृष्ट्वा ब्राह्मणः क्रोधसंकुलः ॥ ९॥
तदर्थमपि मासश्च सात्मघातं चकार ह । गर्भयुक्ता च भार्या वै भर्तारं पृष्ठतोऽन्वगात् ॥ १० ॥
हृतं तस्यापि तत्सर्वं म्लेच्छराजेन तत्तदा । तावत्कालेन ते केचिच्छूद्रा म्लेच्छेन घातिताः ११ ॥
ततो वै निरये वत्स वर्षायुतसहस्रशः । पच्यते नरके घोरे शूद्रो देहेन वै तदा ॥ १२ ॥
पश्चान्मानुषतां प्राप्तो दानधर्मप्रभावतः । ब्रह्मस्वहरणेनैव अपत्यं नैव जायते ॥ १३ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया ॥ १४ ॥

श्रीसूर्य उवाच ।

तीर्थं संवत्सरं सेव्यं ह्येकचित्तेन दंपती । श्रवणं हरिवंशस्य विप्रस्योद्वाहनं ततः ॥ १५ ॥
तावन्निष्कृतयो भूयः क्रमेणानेन वै तदा । सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १६ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् । तन्मध्ये रुक्मिणीयुक्तं माधवं कलशोर्चयेत् ॥ १७ ॥
सौवर्णं राजते पद्मे सायुधं तु चतुर्भुजम् । उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः ॥ १८ ॥
जननीसहितान्भूयः प्रद्युम्नाद्यांस्तथाऽर्चयेत् । चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ १९ ॥
श्रीवत्सांकं पीतवासं सुबाहुं पूजयेत्क्रमात् । पूजनं विष्णुसूक्तेन तथा श्रीरसकोविदैः ॥ २० ॥
पुष्पैः स्रग्गन्धधूपाद्यैरर्चयेद्विष्णुमर्हणैः । तद्विप्रासोऽप्य तद्विष्णोर्ददे एताश्च पूजयेत् ॥ २१ ॥
दद्यान्निश्चाचरेद्विप्रस्तथा द्वेषादिभावतः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन च ॥ २२ ॥

होमान्ते विप्रभोजान्ते मंत्रमेतमुदीरयेत् । यन्मया पापभावेन कर्मान्धेन दुरात्मना ॥ २३ ॥
म्लेच्छराज्ये च व्यापारे बहु वै दुष्कृतं कृतम् । ब्राह्मणानां बहु द्रव्यं नीत्वा भक्षणतर्जनैः॥२४॥
द्रव्यापहरणात्प्राप्तं दुःखं नानाभवान्तरे । स्थिरगर्भो मृतापत्यं प्राप्तं च कर्म दुःसहम् ॥ २५ ॥
तत्तदेनोविनाशाय दानं संप्रदे त्विदम् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २६ ॥
हृद्दुःखं दीर्घनिश्वासो लोचने साश्रुकंपिते । काष्ठलोष्टादिशस्त्राद्यैर्घातः स्याद्रुपलेखनम् ॥ २७ ॥
जलाकुलत्वं स्पर्शेग्निस्ताद्दशा व्रणसंभवाः । स्त्रियोगे विकृतव्याधिर्मुखे व्रणतिलादिकम् ॥२८॥
पैतृजा मातुलानीनां विधवार्तिः स्वस्रादिषु । स्वकुले प्रेतजा पीडा दुःखं वै पश्वपत्यजम् ॥ २९ ॥
कर्मानुसारतो व्याधिश्चिह्नं तस्य सहायवत् । स्वकुले केऽपि वर्तन्ते पतिताश्चारचारिणः ॥ ३० ॥
एवं तु लक्षणैर्व्याप्तं प्रायश्चित्तं ततो वदेत् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकसप्तशततमः ॥ ७४८ ॥

## श्रीसूर्य उवाच ।

पूर्वं ह्याभीरजा काचिदभूद्गर्वपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां प्रेरितास्तया । दिनाध्यकाले संप्राप्ते बहिर्ग्रामाज्जलाशये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नपि जलाशये । शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्ता भृशं गावो लकुटेन दृढेन तु । तत्रैका तृषिता युक्ता ताडितापि भृशं तया ॥ ४ ॥
न च त्यक्तं जलं सूत गर्भभारान्विता यतः । तस्मिन्काले तदा सूत पतितं गर्भसंस्थितम्॥ ५ ॥
वत्सस्तत्ताडनाद्दुग्धान्मृतश्चापि च तत्क्षणात् । विचेष्टितमिदं यस्याः सैव वेश्याङ्गनाधुना ॥ ६ ॥
नानाविभूतिसंयुक्ता नानापशुभिरन्विता । सुखभोगधनैर्धान्यैर्वाञ्छितार्थान्विता सुत ॥ ७ ॥
प्रागोसेवनजात्पुण्यात्सर्वपुण्यफलं त्विदम् । अथात्र गर्भपूर्णान्ते युवभावे खगाधिप ॥ ८ ॥
तं शोचयति सा गर्भं तद्दुःखेनाकुला भृशम् । एवं वर्षत्रयं यावन्मोचयिष्यति वै सुत ॥ ९ ॥
रिष्टं चाब्दत्रये सूत वाल्वत्सवधादिह ॥ १० ॥

## अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन् येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदर्शकः ॥ ११ ॥

## श्रीसूर्य उवाच ।

दद्याद्गां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ १२ ॥
सुवर्णार्द्धमितां तद्वल्लेख्यां गां गर्भसंयुताम् । दद्याद्वेदविधिज्ञाय पूर्वपापापनुत्तये ॥ १३ ॥
भोजयेत्तु यथाशक्त्या विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषान्नात्र कार्या विचारणा ॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकसप्तशततमः ॥ ७४९ ॥

## श्रीसूर्य उवाच ।

बभूव पार्थिवः कश्चिद् गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवताऽतिथिपूजकः ॥ १ ॥
पितृभक्तिरतो नित्यं दानानि विधिपूर्वकम् । दत्तानि च विशिष्टेभ्यो ब्राह्मणेभ्योऽतिशक्तितः॥२॥
दैवाच्छत्रुगृहं गत्वा कृतं कर्म तु वै तदा । वैरिपुत्रः पुरा सूत पादभागे च घातितः ॥ ३ ॥
कुन्तेनापि च तीक्ष्णेन दिवा वै शौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माताऽभूदपुत्रिणी ॥ ४ ॥
पुत्रदुःखान्मृता साऽपि दत्त्वा शापं हि दारुणम् । यथा पुत्रविहीनाऽहं गच्छामि च यथा लयम् ॥५॥

तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो मुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलग्ने निशाकरे । श्यामाभो धूसरः क्षीणः प्रभुर्देशाटने रतः ॥ ८ ॥
वहुस्त्रीधनसंयुक्तो मित्रप्रियवदान्वितः । मानभोगसुखैश्वर्यो मितदो लोभसंयुतः ॥ ९ ॥
धर्मात्सर्व फलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसाविहजन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविनाशनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मातरं च सौवर्णी पलेकेन मितां शुभाम् । पत्रे लेख्यां यथाकारां यथोपस्करसंयुताम् ॥ १३ ॥
पूजयित्वा तु गन्धाद्यैः षोडशोरूपचारकैः । सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने ॥१४॥
पलपंचमितं रौक्मं कुर्याद्धरिहरात्मकम् । तथैव गणनाथं च लेख्यं पंचोपचारकैः ॥ १५ ॥
संपूज्य विधिना दद्यात्सर्वपापविशुद्धये । अष्टाक्षरं तथा मंत्रं वैदिकं सूर्यदैवतम् ॥ १६ ॥
जपेदष्टसहस्रं तु यथा प्रणवपूर्वकम् । गायत्रीपंचसाहस्रं दुष्टपापविमोचनम् ॥ १७ ॥
कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् । एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि ॥ १८ ॥
न प्राप्नोति तदा रिष्टं पङ्क्तिशब्दे प्रकीर्तितम् । पंचवेदमिताब्दान्तमायुस्तस्य प्रकीर्तितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदधिकसप्तशततमः ॥ ७५० ॥

---

श्रीसूर्य उवाच ।

अज्ञानादवधीयश्च पूर्वजन्मन्यजासुतम् । भविष्यत्यत्र पुरुषो ह्यधिकांगः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं च वस्त्राढ्यं मुच्यते महदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदधिकसप्तशततमः ॥ ७५१ ॥

---

श्रीसूर्य उवाच ।

लोहहारी च पुरुष इह जन्मनि जायते । वर्वरांगारुयरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो वाताशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदधिकसप्तशततमः ॥ ७५२ ॥

---

श्रीसूर्य उवाच ।

सर्वमनोरथैर्युक्ता काचिदासीच्छुभानना । प्राग्भवेऽडज तत्सर्वं चेष्टितं शृणु साम्प्रतम् ॥ १ ॥
नकुलानां बिले तस्याः कृत्वा वै वालुकांऽडज । पूरिता च तया पूर्वं तद्घातार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्य भुक्त्वाऽतियमशासनम् ॥ ३ ॥
पूर्वं शतद्रुजे देशे सभूदत्र च पर्वते । पूर्वं राजकुले जाताऽत्रापि राजकुलेषु च ॥ ४ ॥
प्राग्दानव्रतजात्पुण्यात्दयो पापफलं शृणु । सर्वे तद्वंशजाः सूत तदग्रे मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च वर्षाण्यधोत्तरं शतम् । न मुच्यते महापापाद्दाज्जन्मत्रयेऽपि वा ॥ ६ ॥
कृच्छ्रेभ्यो दिवासाच्च पापं नश्यति सांप्रतम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपंचाशदधिकसप्तशततमः ॥ ७५३ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत घातयेद्जनंदनम् । सगर्भा गर्भपुष्टयर्थं जायते गोधिका तु सा ॥ १ ॥
भोगादेव क्षयः प्रोक्तः समारब्धस्य कर्मणः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदधिकसप्तशततमः ॥ ७५४ ॥

---

श्रीसूर्य उवाच ।

लोहं हरति यान्यस्य नारी बुद्धिविवर्जिता । अत्र जन्मनि सा नारी वर्वराङ्गाधिका भवेत् ॥ १ ॥
दद्यात्पलशतं लोहं ससुवर्णं द्विजातये । मुच्यते पापजाद्दोषाद्वर्वरांगाधिकात्सुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचपंचाशदधिकसप्तशततमः ॥ ७५५ ॥

---

श्रीसूर्य उवाच ।

मोहात्प्राग्याऽत्र्यधीत्सूत नार्यजं विधिवर्जितम् । सांगाधिकाऽत्र जनुषि भविष्यति वरानना ॥ १ ॥
अजं दद्याद्विधानेन कस्तूरीपलसंयुतम् । सवस्त्रं वेदविदुषे तद्दोपशमनं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पंचाशदधिकसप्तशततमः ॥ ७५६ ॥

---

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयः । वित्तपः कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
धनधान्यसमोपेतः किंचिद्व्यापारवान्भुवि । दायादाच्छत्रुवत्पीडा मिथः क्लेशश्च जायते ॥ २ ॥
कदाचिज्जातमात्रश्च :मृतः पुत्रोऽष्टमासकः । एका पुष्पवती भार्या संजाता तस्य भास्कर ॥
केन कर्मविपाकेन सत्यं कथय तत्खलु ॥ ३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि क्षात्रस्तु किंचिद्भूमिपतिस्तथा ॥ ४ ॥
अर्थलुब्धोऽभवत्सूत ग्रामाधीशः प्रतापवान् । ग्राममध्ये स्थितिं चक्रे ब्राह्मणो ज्ञानसत्तमः ॥ ५ ॥
पुत्र्यः पंचाऽभवत्तस्य ह्यपुत्रो वित्तसंयुतः । कालेन मृत्युमापन्नो धनलुब्धैर्निराश्रयः ॥ ६ ॥
तस्य भार्या महासाध्वी साहसं कृतवान् खग । क्रियाकर्म विना तस्य तेन तत्तद्धृतं खग ॥ ७ ॥
क्षात्रिणा चिंतयित्वा तु ह्यपुत्रस्य द्विजन्मनः । निराधाराः सुतास्तस्य पितृमातृसुखोज्झिताः ॥८॥
सर्वस्वहरणाच्चापि गताः कन्या इतस्ततः । काचिन्मातुर्गता पक्षे काचित्स्वैरमनागमा ॥ ९ ॥
उद्वासस्तद्गृहस्याशु संजातस्तत्र कर्मणा । यो वै क्षात्रगृहे पुत्रः ॥ वै ब्राह्मण उच्यते ॥ १० ॥
योऽसौ तस्य मृतः पुत्रो धनलुब्धेन चागतः । एवं पुत्रऋणं नेतुं तत्काले वै प्रजायते ॥ ११ ॥
एवं ब्रह्मस्वकारभासात्पुत्रपौत्रमृतिस्तथा । पुराकृतानि कर्माणि भुज्यंते चेह मानवैः ॥ १२ ॥
तेन कर्मविपाकेन कन्यापत्यं मृतः सुतः । तस्य पापस्य नाशाय निष्कृतिः क्रियते शुभा ॥१३॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन् येन पापक्षयो भवेत् । संततिं लभते सौख्यं लोकानां हितकाम्यया १४

श्रीसूर्य उवाच ।

शुभे तु वत्सरे प्राप्ते ह्ययने शुभवासरे । प्रारभेद्धरिभक्तश्च संवत्सरविधिं सुत ॥ १५ ॥
प्रत्यहं परमेशानं विष्णुमव्यक्तमव्ययम् । पौरुषेणेह सूक्तेन चार्चयेन्मासमेव च ॥ १६ ॥

कुंकुमागुरुकर्पूरैश्चंदनैस्तुलसीदलैः । अर्चयेद्विविधैः पुष्पैरुपचारैः पृथक्पृथक् ॥ १७ ॥
भौमाप्यनभसस्तेजोवायव्यैः पंचभिस्तथा । एवं व्रतपरा नारी भर्तृभक्तिपरायणा ॥ १८ ॥
अर्चयंती हरिं पूर्णं वर्षावधि समाचरेत् । शुभे मासे शुभे पक्षे चैकादश्यामुपोषितः ॥ १९ ॥
शुभनक्षत्रयुक्तायां द्वादश्यां पुत्रकाम्यया । पूर्ववद्धरिमभ्यर्च्य ऋग्भिः षोडशभिस्तथा ॥ २० ॥
विधिवद्वह्निमास्थाप्य अर्चयेद्वैष्णवं चरुम् । आज्यभागावसानेन कपिलाज्याहुतिस्ततः ॥ २१ ॥
पौरुषेण तु सूक्तेन यावत्षोडशसंख्यया । अश्वत्थसमिधास्तिस्रो जुहुयात्षोडशैव तु ॥ २२ ॥
पुनराज्यं ततो हुत्वा जुहुयाच्चरुमप्यथ । होमान्ते विप्रभोजान्ते दानमेतत्समाचरेत् ॥ २३ ॥
हिरण्यभूमिवासांसि धेनुं वत्ससमन्विताम् । विप्रस्योद्वाहनं कृत्वा कन्यां सालंकृतामपि ॥ २४॥
दक्षिणां प्रतिपाद्यास्मै छलकौटिल्यवर्जिता । प्राशनीयात्ततः शेषं सह पत्या हरिं स्मरेत् ॥२५ ॥
इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वैष्णवम् । सुभगा च सुरूपा च भवेद्विगतकल्मषा ॥२६॥
ऐहिकं लक्षणं नित्यं पूर्वकर्मानुसारतः । गुल्मं तथोदरे बाधा गुदांते बहुशोऽर्तयः ॥ २७ ॥
वातरक्तैरक्षितोदो तथा कर्णांतितो व्रणः । स्तनौ सुगौरवौ दद्रुमता वै पादवैकृतिः ॥ २८ ॥
जनश्रुतिरभूत्तत्र सुवते कारणं विना । हानिस्तु सर्ववस्तूनां द्रव्यनाशनजं भयम् ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय. सप्तपञ्चाशदधिकसप्तशततमः ॥ ७५७ ॥

---

श्रीसूर्य उवाच ।

अत्र शूद्रकुले पूर्वमासीत्पुण्या वराङ्गना । तदा दानरता जाता कुरुक्षेत्रे पतत्रिण ॥ १ ॥
सर्वैः सुखैः समोपेता सर्वसंपत्तिसंयुता । तया कृतं महापापं भाविनोऽर्थस्य वै बलात् ॥ २ ॥
समीपे वासितस्यास्य ब्राह्मणस्य नवं गृहम् । निर्दग्धं चाग्निदाहेन वैरिभावे पतत्रिण ॥ ३ ॥
तत्र दग्धा महाभाग घोरपापा गृहं गता । कृत्वैतदद्भुतं कर्म भुक्त्वा तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्साऽत्र जाता हि बाहुजा । माथुरे मण्डले पुण्ये वृषलक्ष्मोपलक्षिते ॥ ५ ॥
सुखदुःखसमाक्रान्ता जातसंततिनाशकृत् । दुःखैरनेकैर्युक्ताऽत्र मध्यभावे खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गङ्गायां पितृतर्पणम् । कुरुक्षेत्रादिवसनं प्राक्पापानां विनाशनम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदधिकसप्तशततम ॥ ७५८ ॥

---

श्रीसूर्य उवाच ।

चक्रपादरुजा युक्ता चात्र जन्मनि जायते । पूर्वजन्मनि मोहात्सा वधेच्छ्वानं पतत्रिण ॥ १ ॥
निष्कत्रयं प्रदातव्यं सुवर्णं वेदपारगे । दानेनानेन विधिना सर्वपापप्रणुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्यधिकसप्तशततम. ॥ ७५९ ॥

---

श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दंतपातनजाद्रोगात्पीडामाप्नोति निश्चितम् ॥ १ ॥
दद्याद्धेनुं सवत्सां च सर्वाऽलंकारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षष्ट्यधिकसप्तशततम ॥ ७६० ॥

---

श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीड्यते ॥ १ ॥

तथा तत्पापशुद्धयर्थं स्वर्णनिष्कत्रयं सुत। देयं विप्राय विधिना चक्रपाङ्प्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकषष्ट्यधिकसप्तशततमः ॥ ७६१ ॥

श्रीसूर्य उवाच।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता। दन्तपातनजाद्रोगात् साऽत्र जन्मनि दुःखिता ॥ १॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुम्बिने। प्राजापत्याद्व्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकसप्तशततमः ॥ ७६२ ॥

श्रीसूर्य उवाच।

कश्चिदासीत्पुरा सूत चारणो ज्ञानदुर्बलः। शिवभक्तियुतो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभवेऽण्डज। तत्र दानानि दत्तानि ब्राह्मणस्य करग्रहे ॥ २ ॥
एकदा च महाभाग पापमाचरितं त्विदम्। स्वजात्यां वै धृतो गर्भः कामलोभेन निश्चयात् ॥३॥
यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम्। मृता सा तेन दुःखेन गर्भपातेन चाण्डज ॥ ४ ॥
गते बहुतिथे काले यातः स यमशासनम्। भुक्त्वा पापफलं दुःखं पुण्याल्लोकाञ्छुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातो पादजोऽधुना। गोदावर्याः समीपे तु देशे रम्ये जनाश्रये ॥ ६ ॥
स रक्तकृष्णो मतिमान् दीर्घो मध्यः पृथुः सुधीः। आदिभागे धनी भोगी मध्यमे त्वतिसौख्यभाक् ७
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। अतिचिन्तायुतश्चात्र दाने स्वल्पमतिः शठः ॥ ८ ॥
स्वजात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गात्पञ्चमभावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहैर्युक्तनिरीक्षितः। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता। सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धार्धमिता वापि त्रिषु वित्तानुसारतः। संपूज्य ब्रह्मविदुषे दद्याद्दोषापनुत्तये ॥ १२ ॥
माषैः सप्तमितैर्देयो भौमः स्वर्णमयः शुभः। गायत्रीमयुतं जप्त्वा त्र्यम्बकं तु सहस्रशः॥ १३॥
होमयेत्तद्दशांशेन कपिला गाः प्रदापयेत्। य एवं कुरुते सूत प्रायश्चित्तमघापहम् ॥ १४ ॥
तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्रैव जायते। नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥१५॥
न जीवंति सुतास्तस्य म्रियन्ते नात्र संशयः। अष्टाद्वय आयुरब्दाः प्रायश्चित्ते कृतेऽधुना ॥१६ ॥
प्रायश्चित्तेऽकृते स्थिरं पंचाशन्मितिकेऽब्दके ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकसप्तशततमः ॥ ७६३ ॥

श्रीसूर्य उवाच।

यश्च बंधुं महाभाग हन्यान्मोहान्नराधमः। बभ्रुनामकरोगार्त्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयं हिरण्यस्य कृत्वाऽत्र नकुलं शुभम्। बभ्रुमण्डलनाशार्थं ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकसप्तशततमः ॥ ७६४ ॥

श्रीसूर्य उवाच।

काचिच्चारणजा नारी बभूव प्रियवादिनी। व्रतदानरता साध्वी पूर्वजन्मनि चाण्डज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं गहनं वनम्। निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥

१ बभ्रुम् इति–क० पु०।

ततो बहुतिथे काले प्राप्य संयमिनीपुरीम् । तत्र दानवशात्पूर्वादत्र सा पादजा स्मृता ॥ ३ ॥
जीवघातात्तथा पूर्वात्पापादत्रैव जन्मनि । जातसंततिहीना सा कुष्ठरोगेण पीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन सम्पद्यते सुखम् । गृहवित्तषडंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
यद्वाग्निना विधानेन नानारूपा गृहोरगाः । शक्त्याथ भोज्या विप्रेन्द्रा तस्मात्पापात्प्रमुच्यते॥६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चषष्ट्यधिकसप्तशततमः ॥ ७६५ ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः । द्विजानां पूजने दक्षः सिंधुमंडलजोऽण्डज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्तत्कृतं कर्म चाधमम् । स्वपत्नी स्थापिता पण्यशालायां हि पतत्रिण ॥ २ ॥
पण्यस्त्रीकर्मतश्चादौ चकार स्वोपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतश्चात्र जन्मन्यस्ति च पर्वते । शूद्राधमोऽयं वै पंढः पूर्वं पापं शृणुष्व तत् ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्दढात्प्रभुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्षष्ट्यधिकसप्तशततमः ॥ ७६६ ॥

श्रीसूर्य उवाच ।

या नारी नकुलं पूर्वं घातयेद्विनतासुत । सात्र जन्मनि रोगेण वस्त्रमंडलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडा वै भवति ध्रुवम् । तद्रोगनाशने दद्याद् वस्त्रं निष्कद्वयस्य च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्यधिकसप्तशततमः ॥ ७६७ ॥

अरुण उवाच ।

कश्चित्क्षात्रकुले जातो नानारक्ताऽनिलोद्भवाः । नानासंधिभवा बाधा उदरार्तिः प्रजायते ॥ १ ॥
मोहं वै कुरुते नित्यं नेत्रतोद्धो शिरश्मिता । कटिपृष्ठोरुवंशस्थं बाल्ये स्याद् ग्रहणीगदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया व्रतकारिणी । सौभाग्यसुखसंपन्ना पितृमातृसुखोज्झिता ॥ ३ ॥
येन संपत्तिहीना च कथं कर्मणि लिप्यते ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय चौरकर्मणि तत्परः ॥ ५ ॥
पनानामन्तरे प्राप्ते कश्चिद्विप्रः समागतः । गृहीतं तस्य सर्वस्वं यत्किंचिच्चार्जनात्कृतम् ॥ ६ ॥
तेन वै निहतो विप्रस्तस्करेण दुरात्मना । तस्करोऽसौ मृतश्चापि जातश्च वनपन्नगः ॥ ७ ॥
सततं नरके घोरे पतितोऽयुतसंख्यया । पश्चान्मानुषमापन्नः किंचित्पुण्यप्रभावतः ॥ ८ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । इदं जन्म चतुर्थं च वन्ध्यत्वं चोपजायते ॥ ९ ॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि । तेन कर्मविपाकेन स्त्रीपुंसोर्जायते त्विह ॥ १० ॥
पुत्रहन्ता भवत्यस्य वंध्यत्वं जन्मजन्मनि । शुभे तु वत्सरे प्राप्ते शुभतीर्थादिसङ्गमे ॥ ११ ॥
विधिवद्विहितं पूर्वं सुत चात्र प्रभाषितम् । विप्रस्योद्वाहनं कृत्वा गृहदानं यथाविधि ॥ १२ ॥
धनधान्यादिकं दत्त्वा तोषयेद्विजयाजकान् । विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणार्जिते ॥ १३ ॥

१ संधिषु या बाधा इति स्यात् । २ सर्वस्थानस्थे इति-क० पु० ।

पुण्याहे विधिना तिष्ठेदनपत्याघनाशनम् । सुशुभे भूप्रदेशे तु समे कंबलविस्तृते ॥ १४ ॥
विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम् । परितोऽरत्निमानं तु द्रोणमानं सुतण्डुलैः ॥ १५ ॥
विदध्यात्पर्वतानेवं देवद्रुमविभूषितान् । ततस्तौ दंपती शुद्धौ स्नातावहतवाससौ ॥ १६ ॥
दधानौ शुभरूपाढ्यौ चिंतयानौ प्रजापतिम् । तस्योद्दिष्टेऽर्चने त्वल्पां कुर्यान्मूर्तिं प्रजापतेः ॥१७॥
शुद्धवर्णसुवर्णस्य निष्कद्वयविनिर्मिताम् । हेमयज्ञोपवीतां च साक्षमालां कमण्डलुम् ॥ १८ ॥
अदितेरपि केयूरहारग्रैवेयभूषिताम् । तदर्धार्धविभागेन स्तनौ तस्याः शुभाकृती ॥ १९ ॥
स वै समर्चयेन्मूर्तिं विष्णोर्वामनरूपिणीम् । तन्मूर्तित्रितयं सम्यक् कृतसंस्कारमर्चयेत् ॥ २० ॥
कृत्वा प्रतिष्ठितप्राणं ज्ञानकर्मार्थ पुंस्त्रियोः। बाललीलाधरं विष्णोर्वामनं परिचिंतयेत् ॥ २१ ॥
मातरं द्रष्टुमिच्छन्तं हरिं तत्स्तनकांक्षया । ततस्तदाश्रमात्सुत स्वालयात्पर्वतात्खग ॥ २२ ॥
मत्यंतगिरिं गच्छंतं मार्गैः स्वपदभूषितैः । अदितिस्तमपश्यंती विरहाकुलचेतसा ॥ २३ ॥
रुदंतमिति तं दृष्ट्वा चाकरोत्तत्परां मतिम् । एवं ध्यात्वाऽथ तां मन्त्रैर्मन्त्रार्थोदितलक्षणाम्॥२४॥
पुष्पस्रग्गन्धधूपाद्यैरर्चयेददितिविह्वलाम् । तद्विमासोऽथ तद्विष्णोर्विष्णोः कर्माणि पश्यत ॥ २५ ॥
ततस्तां वैष्णवीं मूर्तिं मातुरुत्संगगामिनीम् । कृत्वा तस्याः प्रतिष्ठां तां लब्धपुत्रां विचिंतयेत् ॥
अपःपूर्वमिमं मन्त्रं मंत्रार्थगुणलक्षणम् । संयोगसहितां देवीमर्चयेद्विविधैर्गुणैः ॥ २७ ॥
ततो ब्राह्मणमध्ये तु समाहूय गुणान्वितम् । तस्मै तां प्रतिमां दद्याद्द्विज पूर्वाऽघनाशनीम्॥२८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्टयधिकसप्तशततमः ॥ ७६८ ॥

---

## श्रीसूर्य उवाच।

ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः। अथवा धर्मशास्त्राणि ज्ञात्वा दुःखं ददाति यः॥१॥
राजयक्ष्मा भवेत्तस्य रोगपीडाऽतिदारुणा । अथवा गर्भघातेन तथा क्षेत्रस्य धारणात् ॥ २ ॥
क्षयेणात्र क्षयं यान्ति धातवः सर्वदेहिनाम् । प्रायश्चित्तं परं तस्य शृणु यत्नेन चांडज ॥ ३ ॥
कारयेत्कदलीं दिव्यां पर्णै रम्यैः समन्विताम् । फलभारेण संयुक्तां सुवर्णस्य पलेन तु ॥ ४ ॥
यथाविभवतः कुर्याद् ब्रह्मसूत्रेण भूषिताम् । ब्राह्मणान्भोजयेच्चापि भक्ष्यैर्नानाविधैः शुभैः॥ ५ ॥
होमं च कारयेत्तत्र पूर्ववद्ब्राह्मणेन च। तस्मै तां कदलीं दद्याद्वस्त्रालंकारपूर्विकाम् ॥ ६ ॥
पूजिताय दरिद्राय वृत्तिस्थायात्र वेदिने । धर्मज्ञायातिदक्षाय मंत्रेणानेन तां क्षये ॥ ७ ॥

मंत्रः।

"हिरण्यगर्भ पुरुष परात्पर जगन्मय । रम्भादानेन देवेश क्षयं क्षपय मे प्रभो" ॥ ८ ॥
पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः । शिष्टैरिष्टैर्बंधुभिश्च सह भोजनमाचरेत् ॥ ९ ॥
[ पूजामंत्रश्च त्र्यंबकम् । जपहोमौ यथाशक्ति । ]
राजहा राजयक्ष्मी स्यादेषा तस्यास्ति निष्कृतिः। गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ॥१० ॥
दातव्यानि समस्तानि वस्तूनि चाप्यकल्मषः ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकसप्तशततमः ॥ ७६९ ॥

---

## श्रीसूर्य उवाच।

शूली स्याद्ब्रह्महा च जन्मन्यत्र पतत्रिण। हिंसको वा मनुष्याणां शूलरुक्पीडितोऽधुना ॥ १ ॥
पलेनाथ तदर्धेन तदर्धेनाथवा सुत। सौवर्णं राजतं वापि शूलं कुर्यात्प्रयत्नतः ॥ २ ॥

ताम्रेण वाऽयसा वापि वार्द्रेणाथवा पुनः । रक्तवस्त्रेण संवेष्ट्य तिलानामुपरि न्यसेत् ॥ ३ ॥
तिलानां परिमाणं तु द्रोणं चापि तदर्धकम् । तदर्धं च यथाशक्त्या पूजयेद्ब्राह्मणं शुचिः ॥ ४ ॥
ततो हुतवते शूलं पूजयित्वाऽथ शक्तितः । दद्यात्सदक्षिणं तत्र प्राङ्मुखाय ह्युदङ्मुखः ॥ ५ ॥

प्रार्थना ।

"त्वं शूल ब्रह्मणा सृष्टं त्रिपुराणां विनाशनम् । दैत्यानां दानवानां च शंकरस्यायुधं तथा ॥ ६ ॥
तथोदरे स्थितं पार्श्वे चाथ पृष्ठेन संगतम् । शूलं विनाशय त्वं मे महादेवेन राधितम्" ॥ ७ ॥
ततः स्नात्वाऽथ भुंजीत ब्राह्मणैः सह बंधुभिः । नमः शिवायेति केचित्प्रणवादि पठंति च॥ ८ ॥

[ 'त्र्यंम्बकं यजामहे' इति । ] अरुचिशूले-

श्रद्धाहीनो हि धनवान्दानेष्वरतिदानतः । शिरोरोगी नेत्ररोगी शूली चारुचिमान् भवेत् ॥९ ॥

[ अत्र गोहनने यज्ञसाधनत्वादिगुणविशिष्टगोहननप्रायश्चित्तस्य गुरुत्वात्, विश्वस्तविप-दानात् प्लीहावान् जायते नरः ] वाक्शब्दशूलिनो जठरशूलः ।

श्रुत्यध्ययनसम्पन्नं याचितारमकिंचनम् । ब्राह्मणं दातुमाहूय दानार्थं न ददाति यः ॥ १० ॥
स भवेज्जठरे शूली तथाऽध्मानी च कर्हिचित् । पूर्वजन्मनि नास्तिक्यात्संध्यादिरहितो द्विजः॥११॥
हस्तशूली स भवति निष्फलादशकं दिशेत् । मैथुनं शृणुयात्पुत्र कर्णशूली भवेत्तु सः ॥ १२ ॥
अथवा बधिरः किंचित् पक्षिन् स ह्यशब्दवान् । निष्फविंशतिकं दद्याद्ब्राह्मणाय कुटुम्बिने॥१३॥
विष्णुमाकाशिका मंत्राः क्षयरोगोपशान्तये । अपामार्जनपाठेन मंत्रितं सलिलं पिबेत् ॥ १४ ॥

भोजनं ब्राह्मणेभ्यः ।

नग्नां परस्त्रियं दृष्ट्वा सूर्यं चास्तमयोदितम् । नेत्रशूली भवेत्सोऽपि नेक्षितुं क्षमते दृशा ॥ १५ ॥
वर्चो मे देहि मंत्रेण होमः स्यादयुतम् । वयः सुपर्णा इति च नेत्रे सिञ्चेच्च वारिणा ॥१६॥

[ परस्त्रियं दृष्ट्वेति कामतः । तथा सूर्यमंत्रः'वर्चोदा असि वर्चो मे देहि' शान्तिदशाक्षरो मंत्रो होमकाले स्वाहान्तः । सर्वेषु शूलेषु भ्रमरान् परीतापेत जायते बहुधा ततः । ]

अक्षीभ्यां त इति जपेन्नेत्रशूलं प्रशाम्यति । मोक्षदानं प्रकुर्वीत तथा मंत्रं जपेद्बुधः ॥ १७ ॥
आतंकेषु च रोगेषु रोषाग्निज्वलितेक्षणम् । भुजङ्गभीषणां शक्ति शूलं पाशांकुशौ दधत् ॥ १८ ॥
चक्रखड्गगदावज्र शराकरधनूंषि च । साग्रे न्यस्तं च तर्जन्या तर्जयन्पारिपार्श्वगान् ॥ १९ ॥
दंष्ट्रादष्टाधरपुटं भ्रमत्पाणिमुदीक्षणम् । तत्तदभिमुखं धावन् प्रहर्तुः पार्श्वयोः समम् ॥ २० ॥
विशीर्णकेशरोमाणां प्रतिरूपं प्रकल्पयेत् । शतं तस्यार्धमर्धं वा हेम्नः काश्यप तेन तु ॥ २१ ॥
तदेव प्रतिमानं वै कुर्याच्छांतिश्चापि स्वतः । येये रोगाः सदा सन्ति देहस्थाः सततं तु मे ॥ २२ ॥
गृहाण प्रतिरूपं तु सह रोगैर्द्विजोत्तम । मंत्रेणानेन तं दद्यात्पूर्वरीत्या कदाचन ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्यधिकसप्तशततम ॥ ७७० ॥

---

श्रीसूर्य उवाच ।

ये पुनः क्रूरकर्माणः पापाः पिशुनचेतसः । ते भवेयुः सदा शीतज्वरवंतस्तदेनसा ॥ १ ॥
मंगलेषु च कार्येषु सतत कोपवान्नरः । उत्पन्नज्वराभिभूतः स्यात्पापस्यास्यापनुत्तये ॥ २ ॥
जातवेदसमंत्रेण ब्राह्मणान्भोजयेत्ततः । सुरामांसोपहाराद्यैर्बलिः सर्वत्र शस्यते ॥ ३ ॥
सहस्रकलशस्नानं शतभोजनमेव च ॥ ४ ॥

[ रोगगुरुलघुभावे जपे गुरुलघुभावः । इति सर्वत्र द्रष्टव्यम् । सुरादिभिर्बलिप्रकारभेदेन । उष्णज्वरे महेशस्य प्रकुर्यादभिषेचनं रुद्रेण शतरुद्रेण । अमुकामुकवाक्यैरित्यर्थः । अत्र मृत्युंजयस्याप्युपलक्षणम् । ]

देवस्वहरणाच्चैव जायते विविधज्वरः । ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च ॥ ५ ॥
ज्वरे रुद्रजपं कुर्यान्महारुद्रं महाज्वरे । महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ॥ ६ ॥

[ अथवा तच्छब्देन बुद्धिमद्भिर्वैष्णवानि विष्णुहृदयं स्तोत्राणि परामृश्यन्ते । ]

अगारदाही ज्वरवाञ्जायते तत्र निष्कृतिः । नवं कुम्भं समानीय मृन्मयं चाव्रणं दृढम् ॥ ७ ॥
लोहितं कार्ष्ण्यरहितं स्थापयेत्तण्डुलोपरि । परिमाणं तण्डुलानां द्रोणपंचकमिष्यते ॥ ८ ॥
विशुद्धास्तण्डुला ग्राह्याः श्वेतवस्त्रेण वेष्टयेत् । मधुनाऽप्यथवाऽऽज्येन खंडेनाथ गुडेन वा ॥ ९ ॥
तैलेनाप्यम्भसा वा तान् पूरयेच्छक्तितो नरः । श्वेतपुष्पैरर्चयेत्तान्गंधपुष्पैस्तथाऽर्चयेत् ॥ १० ॥
तस्मै हुतवते वृत्तः श्रुतशीलाय सत्कृते । मन्त्रेणानेन विधिवत्पूजयित्वा ज्वरी नरः ॥ ११ ॥

प्रार्थना ।

महेश देवदेवेश वासुदेव परात्पर । कुम्भेनानेन दत्तेन ज्वरः क्षिप्रं प्रशाम्यतु ॥ १२ ॥
एकान्तरं सन्निपातं तार्तीयिकचतुर्थकौ । पाक्षिकं मासिकं वाऽपि सांवत्सरिकमेव च ॥ १३ ॥
नाशयेतां च संक्षिप्रं वासुदेवमहेश्वरौ ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकसप्तशततमः ॥ ७७१. ॥

श्रीसूर्य उवाच ।

कृतघ्नो जायते मर्त्यः कफवाञ्छ्वासकासवान् । उष्णज्वरी च नित्यं हि पित्तरोगसमन्वितः ॥ १ ॥
चान्द्रायणत्रयं कुर्यात् पंचाशद्विप्रभोजनम् । अग्निदूतेन सूक्तेन जपं कुर्याद्द्विजोत्तमः ॥ २ ॥
पूजयेद्भोजयेद्यात्तन्मना नान्यमानसः । जपाकरणे गोदानं तद्विष्णोः परमं पदम् ॥ ३ ॥

[ इति तत्र देयानि मधुसर्पिर्हिरण्यवासांसि । ]

मंत्रः ।

"अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम्" ॥

कुरुक्षेत्रादिदेशेषु कालेषु ग्रहणादिषु । महादानानि गृह्णीयाद्विविधान्यथवा स्वयम् ॥ ४ ॥
अपात्रभूतो दातृभ्यो निषिद्धेभ्यश्च मानवः । पामाश्वासकासैश्च कुक्षिकंठाक्षिभिस्तथा ॥ ५ ॥
कण्डूत्या पीडने चैव तद्रोगस्य प्रशान्तये । महिषीं यमदेवत्यां दद्याद्वित्तानुसारतः ॥ ६ ॥

[ 'स्वयमपात्रभूतः' इति कर्मानुष्ठानादिरहित इत्यर्थः । निषिद्धेभ्यो दातृभ्यः । ]

मन्त्रः ।

'कालमृत्युस्वरूपां तां महिषीं रक्तभूषणाम् । सालङ्कारां प्रदास्यामि मम शान्तिं प्रयच्छतु"॥७॥
पिशुनो नरकस्यान्ते जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसंख्यया ॥ ८ ॥
दशांशतः जपः कार्यो होमश्चवाज्ययोरपि ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकसप्तशततमः ॥ ७७२ ॥

श्रीसूर्य उवाच ।

राजमार्गे नदीतीरे छायया जुषिते नरः । मूत्रं पुरीषं कुरुते पात्रे मंचे जलेऽपि वा ॥ १ ॥
स यथा व्याधिमाप्नोति शिरोऽर्ति गरुडाग्रज । सोऽपि कृच्छ्रत्रयं कुर्याद्गायत्र्या अयुतं जपम् ॥२॥

तिलहोमसहस्रं च जपेन्मृत्युंजयं तथा । विघ्नकर्ता भवेन्नरः सोऽपि भवति मानवः ॥ ३ ॥
तस्य कर्मविपाकेन व्याधिनाशनमुत्तमम् । क्षौमवस्त्रं समानीय बहुमूल्यं च यत्नवित् ॥ ४ ॥
मुक्ताफलानि बध्नीयाद् वसुप्रान्ते समन्ततः । कुंकुमेनाङ्कितं सम्यक् कर्पूरगुरुधूपितम् ॥ ५ ॥
तंडुलोपरि संस्थाप्य तंडुलैश्च समन्ततः । आचार्याय न्यस्य तद्वस्त्रं दद्यात्ता च सदक्षिणाम् ॥६ ॥
ऋषीणां प्रवरोऽगस्त्यो लोपामुद्रापतिः प्रभुः । क्षौमवस्त्रप्रदानेन तुष्टो व्याधिं व्यपोहतु ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायत्रिसप्तत्यधिकसप्तशततम ॥ ७७३ ॥

## श्रीसूर्य उवाच ।

देवद्विजद्रव्यहर्ता पाडुरोगी भवेन्नरः । कृच्छ्रातिकृच्छ्रे कुर्याच्च चान्द्रायणमतन्द्रितः ॥ १ ॥
कुर्यात्कूष्माण्डहोमं च स्वर्णचन्द्रे च वाससी । ब्राह्मणेभ्यो यथाशक्ति पाडुरोगस्य शान्तये ॥२॥
[ चन्द्रः रजतमित्यर्थः । ]
अग्निष्टोमादिकं कर्म प्रकल्प्य न समापयेत् । स पाडुरोगी भवति शिरोवेदनवांस्तथा ॥ ३ ॥
अन्त्यजागमने मर्त्यः पाडुरोगी प्रजायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुःसप्तत्यधिकसप्तशततम ॥ ७७४ ॥

## श्रीसूर्य उवाच ।

वृद्धान्यंत्राणि जायन्ते निस्सहतुस्ततः परम् । ज्वरशीर्षोऽष्टको दाह अथ स्याज्ज निवृत्तये ॥ १ ॥
कृच्छ्रातिकृच्छ्रे वै कुर्याच्छतब्राह्मणभोजनम् । उर्ध्वंति च जपः पश्चादयुतत्रयसंख्यया ॥ २ ॥
अन्ते सूक्तेनार्चयित्वा जुहुयाच्छतमष्ट च । अथवा महिषीं दद्यात्प्रतिरूपेण कांचनीम् ॥ ३ ॥
यज्ञविघ्नकरो मर्त्यो जायते चान्त्रवृद्धिमान् । कुर्यात्स्वर्णमयीं मूर्तिं शुभां नारायणस्य तु ॥ ४ ॥
व्यावहारिकनिष्काभ्यामेकेनापि तदर्द्धतः । नारायणं चतुर्बाहुं गदापद्मादिधारकम् ॥ ५ ॥
दक्षिणे तु गदा पद्मं नीलजीमूतसन्निभम् । वामे श्रीवत्सकं हस्ते पुष्टिपद्मे करे स्थिति ॥ ६ ॥
प्रक्षाल्य पञ्चगव्येन स्थापयेत्कुंकुमोपरि । श्वेतवस्त्रेण संवेष्ट्य गन्धमाल्यैस्समर्चयेत् ॥ ७ ॥
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः । सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासुनिष्ठितः ॥ ८ ॥
होमं चकारयेत्तत्र ह्याग्नेय्यां दिशि शाश्वतः । समिदाज्यतिलैश्चैव जुहुयान्मूलमन्त्रतः ॥ ९ ॥
रोगी तथार्चयेद्देवं नारायणमनामयम् । मूलमंत्रेण विधिवन्नैवेद्यं च सुसंस्कृतम् ॥ १० ॥
नमोऽनन्ताय सांकारो मूलमन्त्रः प्रकीर्तितः । ततस्तां प्रतिमां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ॥ ११

## प्रार्थना ।

नारायण जगन्नाथ शंखचक्रगदाधर । पूर्वजन्मनि यज्ञाद्यो विघ्नं यद्वै कृतं मम ॥ १२ ॥
अन्त्रवृद्धिमहारोगं दानेनानेन तोषितः । चक्रहस्तगदापाणे शमयाशु जगत्पते ॥ १३ ॥
विप्राणां भोजनं दद्यात्स्नात्वा भुंजीत बंधुभिः । एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि ॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचसप्तत्यधिकसप्तशततम ॥ ७७५ ॥

## श्रीसूर्य उवाच ।

जात्युत्तमस्त्रीगमनाज्जायते हृदयव्रणी । तत्पातकविशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ॥ १ ॥

अथ च ।

कामुकासक्तकुक्कुट च खराद्दीन्वा य ईक्षते । स नासिकाव्रणी च स्यादार्द्रनेत्रश्च जायते ॥ २ ॥
[ तत्र स्वर्णहारिणीदान धेनुदान वा । ]

स्वजातिजायागमने जायते हृदयव्रणी। तत्पातकविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥ ३ ॥
[स्वजातिजायागमनमित्यस्यार्थः ब्राह्मणस्य ब्राह्मणः, एवं क्षत्रियादेरपि क्षत्रियादिसवर्णपुरुषस्तद्भार्येत्यर्थः।]
जलाग्निबंधनंप्राप्य निमित्तेन मृते तु यः। भवेदुरसि दुष्टं हि व्रणं तस्यापि निष्कृतिः ॥ ४ ॥
स दद्याद्दोद्वयं तस्य पंचाशद्विप्रभोजनम्। दक्षिणां च यथाशक्ति मुक्तो भवति रोगतः ॥ ५ ॥
अग्न्यधिकरणाविहितमार्गेण जलादिमरणे।
पितृष्वस्राभिगमने वामाङ्गेन व्रणी भवेत्। तेन प्रतिः कृतिः कार्या सम्यग्दासीप्रदानतः ॥ ६ ॥
[शक्त्यनुसारेणाऽलंकृत्य दद्यादित्यर्थः।]
अदण्ड्यांस्तर्जयेद्यो वै स च गुल्मव्रणी भवेत्। तत्पातकविशुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥ ७ ॥
मृते भर्तरि या नारी ब्रह्मचर्याभिघातिनी। सा भवेद्व्रणरोगेण संभोक्तुं क्षमते न च ॥ ८ ॥
संभोगानन्तरं तीव्रवेदना पुरुषस्य च। दद्यान्नीलवृषांस्त्रीन्वै मधुसर्पिस्तिलानपि ॥ ९ ॥
[च शब्दात्स्त्रीपुंसयोरुभयोरपीति तीव्रवेदना भवति।]
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ १० ॥
यो गृहीत्वा द्विजो मोहान्नियुक्तो धर्मनिश्चये। भगन्दरो भवेत्तस्य ह्यधर्मं वदते मुखम् ॥ ११ ॥
आर्य्यभार्य्याभिगमने भगन्दरयुतो भवेत् ॥ १२ ॥

अथ प्रतिक्रियामाह।

माणिक्यं पद्मरागं च वज्रं वैडूर्यमेव च। गोमेदं च मरकतं पुष्परागं च मौक्तिकम् ॥ १३ ॥
हरितं नव चैतानि स्वर्णपात्रोपरि न्यसेत्। अथवा राजते ताम्रे गवाज्येन प्रपूरयेत् ॥ १४ ॥
स्वलिंगैश्चैव मंत्रैश्च होमः कार्यस्तु पूर्ववत्। ततो ब्राह्मणमाहूय वेदशास्त्रार्थकोविदम् ॥ १५ ॥
आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः। विनाशयन्तु मे हृष्टाः क्षिप्रमेव भगन्दरम् ॥ १६ ॥
अनेन कर्मणा नूनं यथावद्विहितेन तु। ततो नरुज्यमाप्नोति ह्यसन्दिग्धं भगन्दरम् ॥ १७ ॥
[हरितं हरितरत्नम्। यस्मिन् सुवर्णादिपात्रे च रत्नानि स्थापितानि तत्पात्रं गव्येन चान्येन पूरयित्वा इति ग्रहणम्।]
स्वगोत्रस्त्रीप्रसंगेन जायते च भगन्दरी। तेनापि निष्कृतिः कार्या मेषीदानेन यत्नतः ॥ १८ ॥
[तत्र रजतमयो मेषः स्वर्णखुरादिभिः।]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्सप्तत्यधिकसप्तशततमः ॥ ७७६ ॥

---

श्रीसूर्य उवाच।

अतिमानादतिक्रोधादतिस्नेहभयादपि। यो धर्मनिश्चयज्ञानमन्यथा कुरुते नरः ॥ १ ॥
स पूयशोणितव्रणी कुर्यात्तच्छान्तयेऽथ तु। तप्तकृच्छ्रं प्रकुर्याच्च तिलप्रस्थप्रदो भवेत् ॥ २ ॥
होमश्चरुघृताभ्यां च तिलैरष्टोत्तरं शतम्। सहस्रं वा व्याहृतिभिः कुर्याद्ब्राह्मणभोजनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकसप्तशततमः ॥ ७७७ ॥

---

श्रीसूर्य उवाच।

परेषां मर्मभेदेन मुष्टिपातेन चैव हि। असत्यवादनाच्चैव प्लीहालीहयुतो भवेत् ॥ १ ॥

नाडीव्रणश्च जायेत तद्रोगस्यापनुत्तये। चान्द्रायणं चातिकृच्छ्रं चातिचांद्रायणं चरेत् ॥ २ ॥
कूष्मांडहोमः कर्तव्यः सोमरुद्रजपस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकसप्तशततम ॥ ७७८ ॥

## श्रीसूर्य उवाच ।

गलगंडी गलद्रव्यहर्ता भवति मानवः। दानेन तत्प्रतीकारं वक्ष्यामि शृणु तत्त्वतः ॥ १ ॥
अध्यापयति शिष्यांस्तु यः प्रतार्य गुरुस्तथा। शिष्यो गुरुं वंचयित्वा योऽधीते तस्य तस्य च॥२॥
जायते गण्डमालाख्यो रोगस्तदुपशान्तये।

तथा च।

अभक्ष्यं भक्षयेद्यो वा गंडमाली भवेन्नरः ॥ ३ ॥
माणिक्यं पद्मरागं च वज्रं मौक्तिकमेव च। वैदूर्यं पुष्परागं च वज्रं मरकतं तथा ॥ ४ ॥
एभिर्मालां प्रकुर्वीत सूत्रमध्यत्र राजतम्। अलाभे मौक्तिकां मालां तस्मै दानं प्रकल्पयेत् ॥५॥
ताम्रपात्रे विनिक्षिप्य तिलानामुपरि न्यसेत्। तिलानां परिमाणं हि द्रोणपंचकमिष्यते ॥ ६ ॥
यद्वा तदर्धमेव स्यात्स्वशक्त्या वापि कारयेत्। महाशान्तिं तथा कुर्याद्ब्राह्मणैर्वेदपारगैः ॥ ७ ॥
आचार्यस्तु शुचिर्दक्षः सर्वशास्त्रार्थकोविदः। श्रुतवृत्तश्च संपन्नः सर्वप्राणिहिते रतः ॥ ८ ॥
एवंविधं पूजयित्वा वस्त्रमाल्यानुलेपनैः। होमं च कारयेत्तत्र समिदाज्यचरूंस्तकम् ॥ ९ ॥
[ असत्त्वेन तथा मंत्रः। सोमं राजानमित्यपि मंत्रः ]
मालेयं सर्वदेवत्या ब्रह्मविष्णुशिवादिभिः। इन्द्रादिलोकपालैश्च तथा सर्वामरैरपि ॥ १० ॥
इयं मे कंठमाला या धारिता प्रीतिपूर्वकम्। ब्राह्मणाय प्रदानेन गलगंडं व्यपोहति ॥ ११ ॥
गृहशान्तिः कृता यैस्तु तेभ्यो दद्याच्च दक्षिणाम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकसप्तशततम ॥ ७७९ ॥

## श्रीसूर्य उवाच।

चाण्डालादिवचः शृण्वन् यो भुंजानस्तथैव च। भुंक्ते च पाटलतनुं मित्रद्रोही च जायते ॥१॥
यशान्तिमाय वै दद्यात्तिलान्वेदविदे तथा। यमसूक्तेन विप्रेन्द्र सर्पिषा मधुसूदनम् ॥ २ ॥
सहस्रं जुहुयात्तत्र मम प्रीत्यर्थमेव च। चाण्डालादिवचः शृण्वन्भुक्तिकाले तु कामतः ॥ ३ ॥
[ अत्र वृद्धगौतमस्तु स्वर्णमजदानं प्रदर्शयति। ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकसप्तशततम ॥ ७८० ॥

## श्रीसूर्य उवाच।

खरकाकादिमांसानां भक्षकः स्फोटवान्भवेत्पार्श्वयोस्तन्निवृत्त्यर्थं कृच्छ्रचान्द्रायणं तथा ॥ १ ॥
चांडालकृतवापीषु तडागे कूपकादिषु। स्नात्वा पीत्वा च सर्वाङ्गदाहवान्हस्तपादयोः ॥ २ ॥
स्फोटयुक्तश्च स भवेत् कृच्छ्रं सांतपनं चरेत्। गां हिरण्यं च वासश्च दद्याच्छक्त्यनुसारतः ॥३॥
अवमन्य तु भर्तारं जारमालिङ्गते तु या। सार्द्धं क्रीडति या नारी तमेवानुस्मरत्यपि ॥ ४ ॥
तस्यास्तु स्तनयोः स्फोटा जायन्ते जन्मान्तरे। भगे च रक्तं स्रवति तद्रोगस्य प्रशान्तये॥ ५ ॥
दद्याद्गां पंचलवणं हरिद्रां धान्यमेव च। उमामहेश्वरं चैव पूजयेच्च धने सति ॥ ६ ॥
निष्कद्वादशकं दद्याज्जपेत्स साग्निसूक्तकम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकसप्तशततम ॥ ७८१ ॥

श्रीसूर्य उवाच।

अनिर्दशाया गोः पीत्वा पयो वै स्फोटवान्भवेत्। उपवासत्रयं कुर्याद्भोजयेद्विंशतिं द्विजान्॥ १॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्व्यशीत्यधिकसप्तशततमः॥ ७८२॥

श्रीसूर्य उवाच।

देवतानां ब्राह्मणानां धनापहरणात्तथा। स्वामिद्रोहाद्वातरोगी भवेदस्यापि निष्कृतिः॥ १॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथाचरेत्॥ २॥

अथ हिरण्यदानं कर्मविपाकेऽत्र।

गुरोः प्रत्यर्थितां याति वातरोगी भवेन्नरः। नानामंत्रश्च कुर्वीत जपं होमं च शान्तये॥ ३॥
होमयित्वा परान्नं तु भुंक्ते वस्तु विगर्हितम्। सोन्मादवातयुक्तः स्यात्कृच्छ्रं चान्द्रायणं स वै॥४॥
कुर्यात्सारस्वतं मंत्रं जपेद्ब्राह्मणतर्पणम्। अनिच्छन्तीं मक्षतां य उपभुंक्ते परस्त्रियम्॥ ५॥
बलादाक्रम्य स नरः सर्वसंधिषु वेदनाम्। प्राप्नोति चैव बंधे तु वातयुक्तो भवेन्नरः॥ ६॥
ज्वरी तदपनुत्यर्थं महिषीदानमाचरेत्। कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम्॥ ७॥
उद्यन्तद्य जपश्चैव शक्त्या ब्राह्मणभोजनम्। नामत्रयं जपेन्मर्त्यो रोगशान्त्यर्थमात्मनः॥ ८॥
सहस्रनामकं वापि स्तोत्रं सम्यग्विधानतः। अच्युतानन्त गोविन्द एतन्नामत्रयं द्विजः॥ ९॥
अच्युतं त्रितयावृत्त्या जपेद्रोगस्य शांतये। पुरुषसूक्तं जपेद्विद्वांस्ततो रोगात्प्रमुच्यते॥ १०॥

अत्र महिषीदानम्।

सभायां पक्षपाती यः पक्षघाती प्रजायते। स्याच्चतुर्माषकैर्हैमीं मूर्तिं दद्यात्प्रयत्नतः॥ ११॥
योऽकृत्वा ब्राह्मणो भुंक्ते स्नानहोमजपादिकम्। स हिक्कारोगसंयुक्तस्तत्पापस्यापनुत्तये॥ १२॥
चान्द्रायणत्रयं कुर्यात्रीन्कृच्छ्रांश्च समाचरेत्। तामग्निवर्णामिति च जपेत्सूक्तं समाहितः॥१३॥

[ अत्र स्वर्णमृगदानम्। ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्र्यशीत्यधिकसप्तशततमः॥ ७८३॥

श्रीसूर्य उवाच।

सवर्णागमने वातरक्तवाञ्जायते नरः॥ १॥

[ तत्र लक्ष्मीनारायणं स्वर्णरूपम्। यद्वा वातपित्तहरणार्थमिदं दानम्। ]

लशुनं गृंजनं तालफलं वाऽश्नोति यो द्विजः। स वातपित्तरोगी च भवेच्चान्द्रायणं चरेत्॥ २॥

[ औषधीव्यतिरेकेण लशुनादिभक्षणे चान्द्रायणं कामतश्चेद्द्विगुणम्। ]

तत्तद्रसप्रवालानां हारी स्याद्रक्तवातवान्। चान्द्रायणं द्विजः कुर्यात्तद्रोगस्य प्रशान्तये॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकसप्तशततमः॥ ७८४॥

श्रीसूर्य उवाच।

वैद्यशास्त्रं विना यस्तु कृतौषधमथान्यथा। प्रयोजयेदन्यथा हि रक्तपित्तयुतो भवेत्॥ १॥
कृच्छ्रचान्द्रायणे कार्ये ब्राह्मणेभ्यश्च भोजनम्। मद्यपो रक्तपित्ती स्यात्स दद्यात्सर्पिषाढकम्॥२॥
मधुयुक्तं घटं दद्यात्सहिरण्यं विशुद्धये॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकसप्तशततमः॥ ७८५॥

श्रीसूर्य उवाच ।

त्रपुहारी च पुरुषो जायते श्लेष्मलः सदा । उपोष्य दिवसं सोऽपि दद्याच्छतपलं त्रपु ॥ १ ॥
नित्यानुष्ठानविमुखः कफरोगी भवेन्नरः । पराभवं समाप्नोति इत्याह भगवान्यमः ॥ २ ॥
तच्छान्तये मासमेकं दधि वै भक्षयेन्नरः । सहस्रनामकं पाठ्यं होमश्चाष्टोत्तरायुतम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडशीत्यधिकसप्तशततम ॥ ७८६ ॥

श्रीसूर्य उवाच ।

घृतोऽपस्माररोगी स्यात्स तद्दोषस्य शान्तये । ब्रह्मकूर्चत्रयं कृत्वा धेनुं दद्यात्सदक्षिणाम् ॥ १ ॥
[ ब्रह्मकूर्चलक्षणं कृच्छ्रप्रकरणे दर्शितम् । ]
गुरौ यो रिपुवद्दृष्ट्या प्रतिकूलः समाचरेत् । सोऽपस्मारी भवेत्तेन कुर्याच्चान्द्रायणं स च ॥ २ ॥
[ विनायकप्रतिमादानम् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय सप्ताशीत्यधिकसप्तशततम ॥ ७८७ ॥

श्रीसूर्य उवाच ।

नागहारी च पुरुषो जायते शीर्षरोगवान् । सीसं शतपलं दद्यादुपोष्य शनिवासरे ॥ १ ॥
गुरूपरोधी शिरसि रोगवाञ्जायते नरः । कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापि वा ॥ २ ॥
औषधानि प्रदद्याच्च तिलपात्रं तथैव च ।

अत्र च ।

प्रायोपवेशनादीनां व्रतानां त्यागकारणात् ॥ ३ ॥
शिरोरोगयुतो भूयात्तन्निष्कृतिरथोच्यते । गोहत्याया व्रतं कुर्यात्पंचाशद्विप्रभोजनम् ॥ ४ ॥
कूष्मांडसंभवः ।
ब्रह्मचारी यदाश्नीयाद्भिन्नपात्रे विशेषतः । पक्वान्नेन शिरोरोगी भवतीत्याह नारदः ॥ ५ ॥
[ अक्षीभ्यां त इति च सूक्तमष्टोत्तरं जपेच्चरुघृताभ्यां यो जुहुयाच्च तथैव हि भिन्नपात्रं भिन्न-कांस्यपात्रभोजनमित्यर्थः । ]
औषधस्यापिहरणात्पूर्ववत्तु प्रजायते । तेन सूर्यः प्रदातव्यो निष्कैकस्य यथाविधि ॥ ६ ॥
[ अत्र चोपवीतदानं शमत्याचार्याः । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्यधिकसप्तशततम ॥ ७८८ ॥

श्रीसूर्य उवाच ।

धर्मं क्रमादुपक्रम्य मध्ये त्यजति यो नरः । अविद्यमान दोषं वा परेषां यः प्रकाशयेत् ॥ १ ॥
स भवत्यृतिचक्रस्तु कुर्याच्चान्द्रायणं नरः । धूपस्रक्चन्दनादीनि दद्यानि च स्वशक्तितः ॥ २ ॥
दद्याद्विप्राय पंचाशद्ब्राह्मणान्भोजयेत्तथा ।

अन्यच्च ।

परवाचा विघ्नकर्ता मुखरोगी प्रजायते ॥ ३ ॥
मर्मोद्घाटेन चाऽन्येषां मुखरोगी प्रजायते । श्वमार्जारादिभिः स्पृष्टं भुक्त्वा दुर्गन्धवान्भवेत् ॥४ ॥
पीत्वा त्रिरात्रं भूगोरं भोजयेद्ब्राह्मणत्रयम् ।

अनु च।

कूटसाक्षी भवेद्व्रणरोगी शोणितपित्तवान् । कृच्छ्रातिकृच्छ्रे कुर्वीत चांद्रायणमथापरम् ॥ ५ ॥
कुर्यात्कूष्मांडहोमं च गायत्रीमयुतं जपेत् । दद्याद्धिरण्यं शीर्हिं च मुखरोगस्य शान्तये ॥ ६ ॥
वाग्विरोधं च कुरुते मुखरोगी भवेन्नरः । तस्य दाने च विहितं गजरूपं च सांगतः ॥ ७ ॥
[ स्वर्णगजदानमित्यर्थः । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्यधिकसप्तशततमः ॥ ७८९ ॥

श्रीसूर्य उवाच।

पक्वान्नहरणे चैव जिह्वारोगः प्रजायते । गायत्रीं प्रजपेल्लक्षं दशांशं जुहुयात्तिलैः ॥ १ ॥

अनु च।

परेषां दुःखकरणात्सर्वदाऽनृतभाषणात् । जिह्वारोगस्तथाऽन्येषां पक्षपाताच्च संसदि ॥ २ ॥
जिह्वारोगी भवेदास्ये व्रणी चैवाभिजायते । पातकद्वितयं चैव होमः कूष्मांडसंज्ञकः ॥ ३ ॥
समायश्चित्रसूक्तस्य जपहोमस्तथैव च । व्रीह्यादीनां तथा दानमौपवस्य च संस्मृतम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो नवत्यधिकसप्तशततमः ॥ ७९० ॥

श्रीसूर्य उवाच।

विद्याऽमदश्छर्दिरोगी गां च दद्यात्पयस्विनीम् ॥ १ ॥
[ चकारादेकः कृच्छ्रः सौरमंत्रजपश्च समुच्चीयते । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकसप्तशततमः ॥ ७९१ ॥

श्रीसूर्य उवाच।

आमान्नहरणे चैवं दन्तपीडा प्रजायते । स दद्यादश्विनौ हेमनिष्कद्वयविनिर्मितौ ॥ १ ॥
सूकरे निहते चैवं दन्तुरो जायते नरः । स दद्यात्तद्विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् ॥ २ ॥
सुरापः श्यामदंतश्च प्राजापत्याष्टकं चरेत् । शर्करायास्तुलाः सप्त दद्यात्पापविशुद्धये ॥ ३ ॥
जपित्वा तु महारौद्रं दशांशं जुहुयात्तिलान् । ततोऽभिषेकः कर्तव्यो मंत्रैर्वारुणदैवतैः ॥ ४ ॥
[ आत्मसमां शर्करायास्तुलां दद्यादित्यर्थः । ]

मन्त्रः।

"त्वं तुले सर्वभूतानां प्रमाणं परिकीर्तितम् । मां तोलयसि संसारादुद्धरस्व नमोऽस्तु ते" ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकसप्तशततमः ॥ ७९२ ॥

श्रीसूर्य उवाच।

परेषां तर्ककरणान्निष्ठुरोक्तिः प्रजायते । खरोक्तिर्हास्यकरणाद्दद्यान्मौक्तिककांचने ॥ १ ॥
[ खरोक्तिर्निष्ठुरा नीरसोक्तिः । गर्दभस्वरवद्वा स्वस्य परोद्वेगजनकस्य वा । ]
मूको भ्रातृवधाच्चैव तस्येयं निष्कृतिः स्मृता । तेन कार्यं विशुद्ध्यर्थं व्रतं चान्द्रायणत्रयम् ॥ २ ॥
व्रतान्ते पुस्तकं दद्यात् सुवर्णपलसंयुतम् । ब्राह्मणाय यजुर्वेदविदे वस्त्रेण संयुतम् ॥ ३ ॥
इमं मंत्रं समुच्चार्य ब्राह्मणं च विसर्जयेत् ॥ ४ ॥

मंत्रः ।

" सरस्वति जगन्मातः शब्दब्रह्माधिदेवते । दुष्कर्मकारिणं पापं रक्ष मां परमेश्वरि " ॥ ५ ॥
खरोपघाती वाचां च हर्ता मूकः प्रजायते ॥ ६ ॥

[ वाचां हर्ता गुर्वनुज्ञामंतरेण वेदादिग्राही पुस्तकहर्ता च । ]

कुर्यात्स्वर्णमयं पद्मं पलार्द्धेन तदर्द्धतः । यथाविभवतः सम्यग् वित्तशाठ्यं न कारयेत् ॥ ७ ॥
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रे तिलोपरि । ताम्रपात्रपरीमाणं पलानामष्टकं विदुः ॥ ८ ॥
आढकद्वितयोन्मानं तिलराशौ प्रयत्नतः । उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ॥ ९ ॥
रक्तचन्दनपुष्पाद्यैर्मंत्रेणाऽनेन पूजयेत् । ब्रह्मणे तु नमस्तुभ्यं विष्णोरमितनाभिजः ॥ १० ॥
अतिभीतिकरो भानोस्तथारुद्रस्य चैव हि । पूजां मम गृहाण त्वं सर्वक्लेशहरो भव ॥ ११ ॥
आग्नेय्यां दिशि वै होमः कर्तव्यो मंत्रपूर्वकः । समिदाज्यतिलैश्चैव समिधाष्टाऽक्षरेण तु ॥ १२ ॥

.[ चित्रमित्यनयर्चया तस्मै हुतवते पद्मं दद्यात्स्मृत्वा चतुर्मुखम् । ]

यस्माद्वाचां विशेषेण वैरूप्यं मम देहजम् । स्वरोपघातजं तीव्रंदुःखं रोगाकरस्तथा ॥ १३ ॥
तत्सर्वं नाशयत्वत्र ब्रह्मविष्णुशिवाग्नयः । त्रिदशादयश्च ये देवा हविर्भुजस्तथा भुवि ॥ १४ ॥
एवं दत्त्वा तु तत्पद्ममाचार्यायातिभक्तितः । पूजितस्त्वनुव्रज्यं च स्वरभेदाद्विमुच्यते ॥ १५ ॥

[ आज्यहोमे चित्रं देवानामिति मन्त्रः । ]

वेदं वा धर्मशास्त्रं वा विक्रीणीयाद्द्विजोत्तमः । अधीतस्य न जानाति जिह्वायां शबलं भवेत् ॥१६॥
अपरिस्फुटवक्ता च जिह्वायां व्रणवानपि । कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापरम् ॥ १७ ॥
सूक्तं तमग्निवर्णाख्यं जपेच्चैवायुतत्रयम् । दद्याद्धिरण्यं विप्रेभ्यो भोजनं च स्वशक्तितः ॥ १८ ॥

[ वेदं वा धर्मशास्त्रं वा विक्रीणीयादिति भृतकाध्यापक इत्यर्थः । ]

वाग्विरोधं गुरोः कृत्वा भवेदन्धाग् नरः ॥ १९ ॥

[ तत्र स्वर्णसरस्वतीदानम् । ]

उष्ट्रे विनिहते चैव जायते विकृतस्वरः । स तत्पापविशुद्ध्यर्थं कृच्छ्रमेकं व्रतं ततः ॥ २० ॥
कर्पूरस्य पलं दद्यात्क्षीरद्रव्याणि शक्तितः ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकसप्तशततमः ॥ ७९३ ॥

---

श्रीसूर्य उवाच ।

लवणस्यापहर्ता च शीर्णवर्णाङ्घ्रिपाणिकः । बर्बरस्वरश्चैव जायते तस्य निष्कृतिः ॥ १ ॥
उदुत्यञ्चं च सम्यग् जपेदष्टोत्तरायुतम् । जुहुयाच्चरुद्रव्याभ्यां रक्तवासास्तथैव हि ॥ २ ॥
दद्याद्वै द्विजे गां वा कुर्यात्पूजां स्वशक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकसप्तशततमः ॥ ७९४ ॥

---

श्रीसूर्य उवाच ।

कुक्कुटे निहते चैव वक्रनासः प्रजायते । तेन निष्कः प्रदातव्यो ब्राह्मणाय हिरण्मयः ॥ १ ॥
परदृष्टिविघातेन भिषग्मिथ्याचरेण च । कामात्परस्त्रियं दृष्ट्वा नेत्ररोगी भवेन्नरः ॥ २ ॥
चान्द्रायणं पराकं च पंचाशद्विप्रभोजनम् । वर्चोदा इति मंत्रं तु जपेदाज्यं सकांचनम् ॥ ३ ॥
दद्याद्विप्राय विधिवन्नेत्ररोगः प्रशाम्यति ॥ ४ ॥

[ एतच्च भोजनं मुद्ग्यावान्यात् मुद्गान्नं ब्राह्मणेभ्यो दद्यात् नेत्ररोगापनुत्तय इति । ]

दम्पतिभ्यां प्रवृत्तं तु मैथुनं यो निरीक्षयेत्। स नेत्रपूययुक्तः स्यादक्षिभ्यामिति मंत्रतः ॥ ५ ॥
जपहोमौ च कुर्वीत शक्त्या ब्राह्मणभोजनम्। सहस्रकलशस्नानमेवं कुर्याद्द्विजोत्तमः ॥ ६ ॥
[ अतिप्रचुरतरं दूषिकं पूयमित्यभिधीयते। ]
घृतचौरस्तु पुरुषो जायते नेत्ररोगवान्। उपोष्य संप्रदद्याद्वै घृतधेनुं विधानतः ॥ ७ ॥
[ अंधत्वं नाम प्रतिबद्धदृष्टित्वं नोत्पादितनेत्रत्वं रात्र्यंधत्वं वा। ]
पितृहा चेतनाहीनो मातृहांऽधश्च जायते। नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ८ ॥
[ चेतनाहीनो निश्चेष्टो निर्बुद्धिश्च तस्यापि वक्ष्यमाणप्रायश्चित्तमेव रोगनिष्क्रांतिहेतुः नरकांतेऽधः प्रजायते इत्यन्वयः। ]
प्राजापत्यानि कुर्वीत त्रिंशच्छास्त्रविधानतः। व्रतान्ते कारयेन्नावं सुवर्णपलसंख्यया ॥ ९ ॥
स्तंभं रौप्यमयं चैव ताम्रपात्रं तु पूर्ववत्। नौका द्विजाय दातव्या सर्वोपस्करसंयुता ॥ १० ॥
[ नौकेत्युपलक्षणं स्तम्भोऽपि विष्णुप्रतिभाषितो दातव्यः। सर्वोपस्करसंयुतेति–उपस्करो नौकादण्डः सोऽपि सौवर्ण एव च। ]
वासुदेव जगद्वन्द्य सर्वभूताशयस्थितः। पापार्णवनिमग्नं मां तारयाश्रिततारकः ॥ ११ ॥
इत्युदीर्य प्रणम्याथ ब्राह्मणांतं विसर्जयेत् ॥ १२ ॥
[ इति चेतनाहीनत्वहरेऽपि। ]
शाकहारी च पुरुषो जायते नीललोचनः। ब्राह्मणाय प्रदातव्यं महानीलमणिद्वयम् ॥ १३ ॥
कपिलाक्षत्वेऽपि।
रीतिहृत्कपिलाक्षः स्यादुपोष्य दिवसद्वयम्। रीतिं पलशतं दद्यादलंकृत्य द्विजातये ॥ १४ ॥
[ रीतिर्नाम ताम्रप्रकृतिको धातुविशेषः। पित्तलमिति यावत्। ]
उच्छिष्टः सन् य आदित्यं पश्येदुद्यंतमम्बरे। मध्यंगतं तथाऽस्तं च यांतमुच्छिष्ट एव सन्॥१५॥
नक्षत्राण्यथवा चंद्रं स भवेन्मन्दहृष्टियुक्। घृतेन चारुणा नेत्ररश्मिहीनो हुताशने ॥ १६ ॥
जुहुयादयुतं सम्यगिति शास्त्रस्य निश्चयः। रक्तवासांसि वै दद्यादन्नं तद्व्याधिशान्तये ॥ १७ ॥
इति श्रीहरसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चनवत्यधिकसप्तशततमः ॥ ७९५ ॥

---

## श्रीसूर्य उवाच।

देवद्विजगृहे तीर्थे पुण्यस्याधिष्ठितं परम्। चतुर्भुजं तु द्विभुजं समं कुर्याद्विचक्षणः ॥ १ ॥
लक्षणैश्चैव पूर्वोक्तैः सर्वाङ्गसंस्कृतो भवेत्। वस्त्रैर्माल्यैस्तथा गन्धैर्मूलमंत्रेण पूजयेत् ॥ २ ॥
ततो ब्राह्मणमाहूय दरिद्रं धर्मकोविदम्। श्रुतवृत्तौ च संपन्नं तथा चैवात्मवेदिनम् ॥ ३ ॥
वस्त्रांगुलीयकैस्तस्य पूजां भक्त्या प्रकल्पयेत्। होमं च कारयेत्तत्र समिदाज्यतिलैरपि ॥ ४ ॥
मंत्रश्च रुद्रगायत्री सर्वत्रेति विनिश्चयः ॥ ५ ॥

रुद्रगायत्री लिङ्गपुराणेऽभिहिता यथा–

"सर्वेश्वराय विद्महे शूलहस्ताय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥"

यद्वा त्र्यंबकेनैव समिद्धे जुहुयात्सुधीः। कद्रुद्रायेति मंत्रेण जुहुयादाज्यमावृतः ॥ ६ ॥
[ मूलमंत्रः पंचाक्षरो वा रुद्रगायत्री वा। ]
कैलासवासी भगवानुमया सहितः परः। त्रिनेत्रश्च हरो दद्रुरोगमाशु व्यपोहतु ॥ ७ ॥

ततश्च ब्राह्मणं सम्यक् प्रणिपत्य क्षमापयेत् । ब्राह्मणान्भोजयेद्वापि स्वयं भुञ्जीत वाग्यतः ॥८॥
एवं दत्त्वा महादानं दद्रुरोगात्प्रमुच्यते । गोनहा तूलकी चैव प्राजापत्यं समाचरेत् ॥ ९ ॥
व्रतान्ते मेदिनीं दद्याच्छृणुयाच्चैव भारतम् ॥ १० ॥

[ भूमेरभावे मेदिनीप्रतिनिधित्वेन गां पयस्विनीं दद्यात् । भारतश्रवणं शास्त्रोक्तप्रकारेण इति ।

लोहहारी च पुरुषो भवेद्वै घर्घरांगकः । लोहं शतपलं दद्यादुपोष्य शनिवासरे ॥ ११ ॥
कारुकाणां वधे कृष्णो रूक्षांगश्च प्रजायते । तेन तत्पापशुद्ध्यर्थं दद्याद्वै वृषभं सितम् ॥१२॥

[ कारुकाः शिल्पिनः । ]

तैलचौरोऽपि भवति नरो कंडूयनं सदा । उपोष्य सोऽपि विप्राय दद्यात्तैलघटद्वयम् ॥ १३ ॥
वस्त्रहारी च शीर्णांगः सप्रदद्यात्सुशोभनम् । हेम निष्कत्रयमितं वस्त्रयुग्मं च दापयेत् ॥ १४ ॥
स्वाम्यगनाभिगमनं कृत्वा चान्द्रायणत्रयम् । व्रतान्ते पुस्तकं दद्यात्सुवर्णपलसंयुतम् ॥ १५ ॥
शय्यां दद्यात्स विप्राय सोपधानां सतूलिकाम् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षण्णवत्यधिकसप्तशततम ॥ ७९६ ॥

श्रीसूर्य उवाच ।

अश्वे विनिहते चैव वक्रकंठः प्रजायते । प्राजापत्यानि चत्वारि सप्तधान्यानि चोत्सृजेत् ॥ १ ॥
शतं पलानि मानेन दद्याच्चैव द्विजातये । चक्रघाती दीर्घगलो दद्याद्गां धवलां शुभाम् ॥ २ ॥
अभक्ष्यभक्षदोषात्तु कंठरोगः प्रजायते । कृच्छ्रत्रयं प्रकुर्वीत दद्याद्धेनुं सदक्षिणाम् ॥ ३ ॥
दद्याद्धि कंठरोगी तु कंबलं कनलोद्भवम् । ऊर्णाच्छादनं लोकानां शीतवातभयापहम् ॥ ४ ॥
सर्वदुःखहरं यस्मादतः शान्तिं प्रयच्छ मे ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तनवत्यधिकसप्तशततम ॥ ७९७ ॥

श्रीसूर्य उवाच ।

पारावते च निहते हीनपाणिः प्रजायते । पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् ॥ १ ॥
कन्दमूलस्य हरणाद्धतपाणिः प्रजायते । देवतायतनं कुर्यादुद्यानं तस्य शान्तये ॥ २ ॥
चान्द्रायणं प्रकुर्वीत ब्रह्मकूर्चं विधानतः । क्षीरहारी च पुरुषः खिन्नपाणिः प्रजायते ॥ ३ ॥
प्रदद्याच्चैव विप्राय काश्मीरं च पलत्रयम् । अयोनौ चैव गमनाद्भुजस्तम्भः प्रजायते ॥ ४ ॥
सहस्रकलशस्नानैः शंभुं पूज्य यथाविधि । कुनखी नरकस्यान्ते जायते विप्रहेमहृत् ॥ ५ ॥
स सुवर्णपलं दद्यात् कृत्वा चान्द्रायणत्रयम् । उदक्यावीक्षितं भुंक्ते जायते क्रिमिलोदरः ॥ ६ ॥
गोमूत्रयावकाहारः सप्तरात्रेण शुद्ध्यति । अभक्ष्यभक्षणे चैव जायन्ते क्रमयो हृदि ॥ ७ ॥
यथावत्तु विशुद्ध्यर्थमुपोष्य भीष्मपंचकम् ॥ ८ ॥

[ यथावत् व्रताङ्गभूतब्रह्मचर्यदक्षिणादानादियुक्तमित्यर्थः । ]

गजे विनिहते चैव कृमिकुक्षिस्तु जायते । मृते भर्तरि या नारी नीलवस्त्रं प्रधापयेत् ॥ ९ ॥
सा मृता नरकं याति कृमिकुक्षिस्ततः परम् ॥ १० ॥

[ पापभोगानन्तरं मनुष्यशरीरमासाद्येत्यर्थः । ]

स नीलवृषभान् यावद्द्याच्चान्द्रायणत्रयम् कुर्यात्त्रिंशद्द्विजा भोज्या दद्याच्छक्त्या तदौषधम् ॥ ११ ॥

[ नीलवृषभलक्षणं भगवद्गृह्यम् । ]

भुक्त्वा या प्राश्य संस्पृष्टं जायते ना कृशोदरः। त्रिरात्रं वैष्णवं कुर्यात्पातकादि प्रमुच्यते ॥१२॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकसप्तशततमः ॥ ७९८ ॥

श्रीसूर्य उवाच।

इक्षुविकारहारी च भवेदुदरगुल्मवान्। गुडधेनुः प्रदातव्या तस्य दोषस्य शान्तये ॥ १ ॥
गुरुमत्यर्थितां जातो गुल्मवाञ्जायते नरः। आरभेत्तत्रिवृत्त्यर्थं मासमेकं यथाव्रतम् ॥ २ ॥
[ वातगुल्मवानित्यर्थः। ]
मुंचेत्येतेन सूक्तेन आत्येवं चरुसर्पिषा। जुहुयादयुतं सम्यग् वात आयातभेषजम् ॥ ३ ॥
एतत्सूक्तं जपेद्धयादन्नदानं च शक्तितः॥ ४ ॥
[ अतिआयासेति सूक्तं तत्र विनायकदानम्। ]

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकसप्तशततमः ॥ ७९९ ॥

श्रीसूर्य उवाच।

गर्भपातनकारी यः यकृत्प्लीहजलोदरः। तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् ॥ १ ॥
एतेषु दद्याद्विप्राय जलधेनुं विधानतः। सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥ २ ॥
भृतकाध्यापकी यस्तु कन्यादूषणतत्परः। प्लीहावान्स भवेद्विप्रो जपेच्छ्रीसूक्तमत्र हि ॥ ३ ॥
अयुतत्रयसंख्याकं प्लीहोदरविमुक्तये। यो ब्रह्मविष्णुरुद्राणां विभेदं गरुडाग्रज ॥ ४ ॥
साधयेदुदरव्याधियुक्तो भवति मानवः। कुर्य्यात्कृच्छ्रातिकृच्छ्रं च चान्द्रायणमथापरम् ॥ ५ ॥
सहस्रकलशस्नानमीश्वरस्य तु कारयेत्। जपेदयुतसंख्याकमुग्यत्रयमृचं तथा॥ ६ ॥
राज्ञा कर्मातियुक्तेन नियुक्तो धर्मनिश्चये। पुरोहितश्चाधिकारात्सचिवश्चान्ययाचरेत् ॥ ७ ॥
जलोदरत्वमाप्नोति तस्य वक्ष्यामि निष्कृतिम्। पयसा वर्तयेन्मासत्रितयं व्रतमुत्तमम् ॥ ८ ॥
सहस्रकलशस्नानमीश्वरस्य तु कारयेत्। उदरव्याधियुक्तस्तु भवेद्वंगनागमे ॥ ९ ॥
कुर्य्यात्तु मकरं सम्यग् राजतं ताम्रमेव च ॥ १० ॥
[ कृत्वा मकरं ब्राह्मणाय देय इत्यर्थः। ]

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टशततमः ॥ ८०० ॥

श्रीसूर्य उवाच।

मंदोदराग्निर्भवति निर्द्रव्येण वै यजेत्। प्राजापत्यत्रयं कृत्वा भोजयेत्सततं द्विजान् ॥ १ ॥
[ श्रद्दत्तिर्द्रव्यकदर्थ्य इति वा पाठः। ]
गोमांसस्वादको मंदजठराग्निः प्रजायते। प्राजापत्यं चरेत्कृच्छ्रमतिकृच्छ्रं तथैव च ॥ २ ॥
अग्निमंत्रं जपेन्नित्यं श्रीसूक्तं च विचक्षणः। अकारणं गरं दत्त्वा प्रमारयति यो नरः ॥ ३ ॥
स मन्दाग्निर्भवेदेव मृतकस्वल्पकान्तिकः। अग्नेर्मान्द्यं भवेत्तस्य मन्त्रेणाऽग्निविनाशकः ॥ ४ ॥
[ तत्रेदं मकरदानं स्वर्णस्य तंडुलदानं च। ]

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकाष्टशततमः ॥ ८०१ ॥

श्रीसूर्य उवाच।

अन्नहर्ता त्वजीर्णार्तो भवेदस्य तु निष्कृतिः। उपवासत्रयं कृत्वा प्राजापत्यमथापि वा ॥ १ ॥

जुहुयाच्चरुसर्पिर्भ्यामग्निरश्मीत्यृचाऽनया । परान्नविघ्नकरणादजीर्णमपि जायते ॥ २ ॥
लक्षहोमं प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकाष्टशततमः ॥ ८०२ ॥

श्रीसूर्य उवाच ।

गुरुणा नानुज्ञातो यो वेदाध्ययनमाचरेत् । स जडः प्रज्ञया हीनः संसारे जायते नरः ॥ १ ॥
[ आचरेत्कुर्यादित्यर्थः । ]

वक्ष्यामि तत्प्रतीकारं शुद्धकांस्यमयीं दृढाम् । शोभनां कारयेद्धंटां शुभरेखाविभूषिताम् ॥ २ ॥
पलैस्तु कुर्याद्विंशत्या त्रिंशता वा तदर्धतः । सुवर्णाढ्यामतिश्लक्ष्णां पंचगव्येन स्नापयेत् ॥ ३ ॥
श्वेतवस्त्रेण संवीतां तंडुलोपरि विन्यसेत् । पितृहा चेतनाहीनो मातृहांधश्च जायते ॥ ४ ॥
[ ब्राह्मणाय देया तद्दानमंत्रस्तु ब्रह्मजज्ञानमिति । ]

नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥ ५ ॥

[ अस्य प्रायश्चित्तं नेत्ररोगप्रकरणेऽभिहरे प्रपंचितम् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकाष्टशततमः ॥ ८०३ ॥

श्रीसूर्य उवाच ।

गुरुजायाभिगमनान्मूत्रकृच्छ्रं प्रजायते । तेनापि निष्कृतिः कार्या शास्त्रदृष्टेन कर्मणा ॥ १ ॥
[ अनेन विधिना निष्कृतिरुच्यते, तत्रैका प्राजापत्यादिव्रतरूपा । अपरा प्रतिमादानजपहोमब्राह्मणभोजनरूपा । ]

थापयेत्कुंभमेकं तु पश्चिमायां शुभं दिशि । नीलवस्त्रसमाच्छन्नं नीलमाल्यादिभूषितम् ॥ २ ॥
तस्योपरि न्यसेद्देवं लोहपात्रे प्रचेतसम् । सुवर्णनिष्कपट्केन निर्मितं यादसां पतिम् ॥
जपेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् ॥ ३ ॥
[ वरुणमूर्तिश्च पाशवरदकरा मकरवाहना च भवति । ]

मन्त्रः ।

"यादसामधिपो देवो विश्वेषामपि पावनः । संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे" ॥ ४ ॥
इमं मंत्रं समुच्चार्य आचार्याय यथाविधि । दद्यादेवमलंकृत्य मूत्रकृच्छ्रप्रशान्तये ॥ ५ ॥
पशुयोनौ च गमनान्मूत्रकृच्छ्रं प्रजायते । तिलपात्रत्रयं चैव स दद्यादात्मशुद्धये ॥ ६ ॥

तत्र तिलपात्रदाने महाविष्णुः ।

ताम्रपात्रे तिलान्कृत्वा पलषोडशकल्पिते । सहिरण्यान्स्वशक्त्या वा विप्राय प्रतिपादयेत् ॥ ७ ॥

तत्र विष्णुप्रतिमाया यथोक्तदानम् ।

चक्रं सुदर्शनं यस्य चिह्नानि विविधानि च । प्रमेहं हरतु क्षिप्रं विष्णुर्गरुडवाहनः ॥ ८ ॥
तपस्विनीप्रसंगेन प्रमेहो जायते गदः । दानं रुद्रजपं कुर्याद् दद्याद्वत्तया च कांचनम् ॥ ९ ॥
[ प्रसंगेन गमनेनेत्यर्थः । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकाष्टशततमः ॥ ८०४ ॥

श्रीसूर्य उवाच।

मातृगामी भवेच्चेह लिंगं तस्य विनश्यति। चांडालीगमने चैव हीनकुष्ठी प्रजायते॥ १॥
तस्य प्रतिक्रियां कर्तुं कुम्भमुत्तरतो न्यसेत्। कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यानुलेपनम्॥ २॥
[उत्तरतः शुद्धलिप्तप्रदेशस्योत्तरभागे उदकादिपूरितं कलशं स्थापयेत्। कलशस्थापनविधिनेत्यर्थः।]
तस्योपरि न्यसेत्कांस्यपात्रं तत्र धनेश्वरम्। सुवर्णनिष्कपद्केन निर्मितं नरवाहनम्॥ ३॥
यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्॥ ४॥
[यजेत्पूजयेदित्यर्थः।]

मंत्रः।

"निधीनामधिपो देवः शंकरस्य प्रियः सखा। स वै धनपतिः श्रीमान् मम पापं व्यपोहतु"॥५॥
इमं मंत्रं समुच्चार्य आचार्याय यथाविधि। दद्यादेवं हीनकुष्ठी लिङ्गनाशी च शुद्धयति॥ ६॥
दुष्टवादी च पण्ढः स्यात्स दद्याच्च द्विजातये। रौप्यं पलत्रयं दुग्धघटत्रयसमन्वितम्॥ ७॥
नृपो भूत्वेह हस्तादिमपराधं विनैव यः। छेदयेद् भुजस्तम्भो वा भवेद्दग्ध इवाऽग्निना॥ ८॥
शिलापृष्ठसदृक्षश्च सव्रणश्चापि जायते। रुधिरं प्रस्रवेत्पश्चात्तस्येयं निष्कृतिः परा॥ ९॥
शतरुद्रं जपेत्सम्यगष्टोत्तरसहस्रकम्। व्रतं चान्द्रायणं चैव कुर्य्याद्दद्याच्च गां ततः॥ १०॥
जायते वृषणे तस्य व्याधिः परमदारुणः। जपित्वा दशसाहस्रं मुच्यते रुद्रसंहिताम्॥ ११॥
यानि चान्द्रायणादीनि व्रतान्युक्तानि तानि वै॥ १२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाधिकाष्टशततमः॥ ८०५॥

---

श्रीसूर्य उवाच।

सुरालये जले वापि शकृन्मूत्रं करोति यः। गुदरोगो भवेत्तस्य पापरूपः स दारुणः॥ १॥
मासं सुरार्चनेनैव गोदानद्वितयेन च। प्राजापत्येन चैकेन शाम्येद्द्विरुजाण्डज॥ २॥
[यद्यपि सुरार्चनमिति सामान्येनाऽभिहितं तथापि सूर्यप्रधान्येन विष्णुरुद्रौ पूज्यौ। 'आरोग्यं भास्करादिच्छेत्' इति श्रुतिः।]

प्रस्रवशुद्धौ।

विण्मूत्रोत्सर्जनं कृत्वा योऽकृत्वा शौचकर्म तु। भुंक्ते जन्मान्तरे मर्त्यो भवेत्स प्रस्रवाद्रुदी॥ ३॥
भवेच्च दारुणा पीडा तत्र कृच्छ्रातिकृच्छ्रकम्। चान्द्रायणं च कर्तव्यं तत्तथा क्षीरसर्पिषा॥ ४॥
अक्षीभ्यामिति सूक्तेन सहस्रं जुहुयाच्छुचिः। उद्वयत्यृचं चैव जपेत्पूर्वोक्तसंख्यया॥ ५॥
(गृहीत्वाऽथ वेतनं योऽध्यापयेत तदर्थवचनम्।)अध्यापयेच्च जुहुयाज्जपेद्वार्शोयुतो भवेत्॥ ६॥
निवृत्तौ च प्रकुर्वीत कृच्छ्रं चैवातिकृच्छ्रकम्। चान्द्रायणं चैव तथा जपेद्यत्सूक्तपौरुषम्॥७॥
उद्वयत्यृचं चैव श्रीविष्णुहृदयं तथा। तामग्निवर्णामिति च, जपेत्सूक्तं समाहितः॥ ८॥
हिरण्यं रजतं दद्याच्छ्रोत्रियाय कुटुम्बिने॥ ९॥

तत्र च धेनुदानं प्रशंसंति केचिच्च गोपालदानम्।

बर्हापीडकसंयुक्तं वेणुवादनतत्परम्। गोपीजनैः परिवृतं जातीपुष्पावतंसकम्॥ १०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकाष्टशततमः॥ ८०६॥

---

श्रीसूर्य उवाच ।

स्मार्ताग्निं शमयेद्यस्तु सोऽतीसारयुतो भवेत् । अग्निरश्मीत्यृचं जप्त्वा दशांशं जुहुयात्तिलान् ॥१॥
सर्पिषा तु युतं दद्याद्धिरण्यं ब्रह्मदैवतम् । दुर्मनाश्चैव जायेत तस्येयं निष्कृतिः परा ॥ २ ॥

[ दम्पत्योरनुकूले शुभे दिने स्वस्तिवाचनं कृत्वा स्वशक्त्यनुसारेण दानं विधाय पुत्रकामनया हरिवंशश्रवणमहं करिष्ये इति संकल्पयेत् । ]

दंपत्योः श्रवणकर्तृत्वे करिष्यावहे इति प्रयोगो वा । अन्यतरकर्तव्ये करिष्ये इत्येवं संकल्प्य श्रुत्यध्ययनसंपन्नं ब्राह्मणं विभवानुसारेण वस्त्रमुद्रिकाकुण्डलादिभिः संपूजितं श्रवणे वृणीतमेभिश्चन्दनताम्बूलादिभिर्हरिवंशश्रवणे त्वामहं वृण इति प्रयोगः ।

ततश्च प्रतिदिनमध्यसनेऽप्रतिबन्धे स्नातावलंकृतौ दम्पती तदेकचित्ततया शृणुयाताम् । नालिकेरपूजादिकुर्यात् । शमवान् प्रतिदिनमाचार्यं पुस्तकं च पूजयेत् ।

अन्ते च स्वलंकृतां गां पयस्विनीं सवत्सां स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्यदोहनां सवस्त्रां सदक्षिणां च दद्यात् ।

कल्पः—स्वर्णरत्नादीनि महादानानि दद्यात् । यथाशक्ति वा गोदानमत्र ।

गोदानविधौ विनायकशान्तिस्तु । प्रकृतमनुसरामः । ब्राह्मणोद्वाहनमेकं प्रायश्चित्तम्, अपरं हरिवंशश्रवणम्, परिशेषान्महारुद्रोऽपि तृतीयं प्रायश्चित्तम् । अत एव वचनस्थितश्चशब्दो वा शब्दार्थः । एतानि त्रीण्यपि शक्त्याद्यपेक्षया व्यस्तानि समस्तानि वा योज्यानि ।

महारुद्रलक्षणं दशांशहोमप्रकारो वा रुद्रानुवाकानामृष्यादि च सर्वं परिभाषायां रुद्रविधाने समुपवर्णितम् ।

[ एकादशपशून् पशुरत्र गौः रुद्राय गामितिश्रुतौ । ]

कृच्छ्रचान्द्रायणं कुर्याद्धोमः कूष्माण्डसंज्ञकः । कर्तव्यो होमविधिश्च स्वर्णदानं तथाऽपरम्॥३॥
कन्यादानं च पञ्चम्यां श्राद्धं कुर्वीत यत्नतः । सहस्रनामजापी च भवेदेवं विशुद्ध्यति ॥ ४ ॥

[ एतान्यष्टकादिश्राद्धरहितानि पञ्चापि पृथक् निर्मितानि अतो यावद्व्याधिप्रकोपस्तावत् सहस्रनामस्तोत्रं जपेत् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकाष्टशततमः ॥ ८०७ ॥

श्रीसूर्य उवाच ।

चतुर्विधा तु या वन्ध्या भवेद्वत्सवियोजनात् । वक्ष्ये तस्य प्रतीकारं तत्स्वरूपं निबोध वै ॥ १ ॥
मृतवत्सा भवेत्काचित् काचिदेकप्रसूतिका । वन्ध्याप्रसूतिरूपा च काकवन्ध्या चतुर्थिका ॥ २ ॥

[ काकवन्ध्याऽप्रसूतेत्यर्थः । ]

सर्वास्ता घोरपापेन जायन्ते पूर्वजन्मनि । मृतवत्सा द्रव्यहरणादेकसुतस्य घातनात् ॥ ३ ॥

तत्र स्वर्णधेनुदानम् ।

वन्ध्याप्रजा भ्रूणसम्बन्धात् काकवन्ध्या विरोधतः । हिरण्येन यथाशक्त्या सवत्सां कारयेद्गवाम्॥४॥
धेनुं रूप्यखुरां,रत्नं तस्याः पुच्छे नियोजयेत् । घंटां गले निबध्नीत सवत्सां प्राङ्मुखः शुचिः॥५॥
चन्दनागुरुकर्पूरगन्धमाल्यैः सुशोभनैः । उपचारैः षोडशभिर्नैवेद्यं पायसं भवेत् ॥ ६ ॥
मोदकं च तथापूपं गुडं लवणमेव च । जीरकं च तदापूर्यं शूर्पं वेणुमये दृढे ॥ ७ ॥

[ मोदकादिपरिपूर्णपात्राणि षडष्टौ दश वा दद्यात् । ]

धेनुरेयं प्रदातव्या ब्राह्मणस्त्रीषु चैव हि । ब्राह्मणं सर्वशास्त्रज्ञं कुशलं धर्मवेदिनम् ॥ ८ ॥
विद्याविनयसंपन्नं शान्तं चैव जितेन्द्रियम् । अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ॥ ९ ॥
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गन्धपुष्पकैः । तेनैव कारयेत्पूजां मन्त्रतो धेनुवत्सयोः ॥ १० ॥

पूजायां होमे च मंत्रः।

होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् । सोमो धेनुमिति मंत्रं समुच्चार्य ततः पुनः ॥ ११ ॥
[ अथ हिरण्यं यथाशक्त्या दद्यात् । ]

अत्र वह्निमूर्तिदानम्।

अतिसारी स भवति यत्रेताग्निविनाशकः । स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश ॥
दद्याच्च शर्कराधेनुं यजेच्च सततं द्विजान् ॥ १२ ॥

रक्तातिसारे।

दावाग्निदायकश्चैव रक्तातीसारवान् भवेत् । तेनोदपानं कर्तव्यं रोपणीयास्तथा वटाः ॥ १३ ॥
[ उदपानं कूपादिभिः । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टाधिकाष्टशततमः ॥ ८०८ ॥

श्रीसूर्य उवाच।

अनन्यगतिकां भार्यामदुष्टां कारणं विना । परित्यजति यः सोऽत्र ग्रहणीरोगवान्भवेत् ॥ १ ॥
धेनुं पयस्विनीं दद्याद्घण्टाभरणभूषिताम् । हेमशृंगीं रौप्यखुरां वासोभिः परिवेष्टिताम् ॥ २ ॥
नवधान्यैः समायुक्तामेकैकं द्रोणपंचकम् । सहिरण्यं तु तद्दद्याद्ब्राह्मणाय कुटुम्बिने ॥ ३ ॥
अलोलुपाय शान्ताय धर्मज्ञाय विशेषतः । होमं च पूर्ववत्कुर्यात्समिदाज्यचरूत्कटम् ॥ ४ ॥
तस्मै हुतवते दद्यात्पूजितायांगुलीयकैः । गां कृष्णां विश्वरूपाय मन्त्रेणानेन रोगवान् ॥ ५ ॥

मन्त्रः।

"देवकीपुत्र चाणूरकंसारिष्टविनाशक । नाशाय ग्रहणीरोगं गोपीजनमहोत्सव ॥ ६ ॥
कृतेनानेन दानेन ग्रहणीशांतिमृच्छति" । तस्मादेवं तु कर्तव्यं ग्रहणीरोगिणा सदा ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवाधिकाष्टशततमः ॥ ८०९ ॥

श्रीसूर्य उवाच।

हरिणे निहते खञ्जः शृगाले त्वर्द्धपादकः । अश्वस्तेन प्रदातव्यः सौवर्णो निष्कसंमितः ॥ १ ॥
जायते वक्रपादस्तु निहते शुनि मानवः । निष्कत्रयमितं दद्यात्सौवर्णं तद्विशुद्धये ॥ २ ॥
अजाविघातेन चैव अधिकांगः प्रजायते । अजा तेन प्रदातव्या विधिना स्वर्णसंमिता ॥ ३ ॥
[ अत्रापि खञ्जत्वहरोक्तप्रकारेण शिवपूजां कृत्वा ब्राह्मणाय दद्यात् । ]
मार्गहा पादरोगी स्यादश्वदानं समाचरेत् । पतितेन तु संपर्के वल्मीकव्याधिमान्भवेत् ॥ ४ ॥
गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति । सहिरण्यं प्रदद्याच्च तस्य पापस्य शुद्धये ॥ ५ ॥
जायते यदि तत्रापि कृमिर्ब्रह्मविदां वर । तत्र मूर्तिः स्वर्णमयी देया लक्षणसंयुता ॥ ६ ॥
स्वगोत्रजाभिगमनाच्छ्लीपदी जायते नरः । योन्यामश्मक्च स्रवति तत्र चान्द्रायणं चरेत् ॥ ७ ॥
[ स्वगोत्रस्येत्यत्र लिंगमविवक्षितम् । योनिशब्देन च मैथुनसाधनमिन्द्रियं लक्ष्यते । तत्र स्त्रीपुंसोरुभयोरपि कार्यं समम् ]

मासं पयोव्रतं चैव तस्माद्रोगात्प्रमुच्यते । पापस्य तन्निवृत्त्यर्थमुपवासत्रयं भवेत् ॥ ८ ॥
भोजयेच्च द्विजान्दानं पंचाशन्निष्कसंख्यया ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशाधिकाष्टशततम ॥ ८१० ॥

श्रीसूर्य उवाच ।

पुरुषो भाषते व्यर्थं स त्वग्दोषयुतो भवेत् । चान्द्रायणत्रयं कुर्यात् प्रदद्यादौषधानि च ॥ १ ॥
[ वैद्यकोक्तानि चक्रमर्दानीत्यर्थः । ब्राह्मणभोजनं च । ]
गुरुतल्पगदोषाच्च शुक्रमैथुनदोषतः । दुश्चर्मा स्यादसौ कुर्याद्गुरुतल्पादिदोषतः ॥ २ ॥
[ प्रायश्चित्तं कुर्यादित्यन्वयः । षाड्वार्षिकमित्यर्थः । ]
अनुलुम्पति योऽन्येषां विषयान् पूर्वजन्मनि । सोऽन्यजन्मनि पामावान् भवेत्स्रवति शोणितम् ॥ ३ ॥
[ अत्रापि व्याधेर्गुरुत्वं लघुत्वं च द्रष्टव्यम् । अनुलुम्पनं विनाशनमपहारो वा । विषयाः स्रक्चन्दनानुलेपादयः । इति पामात्वदूषणम् । ]

ब्राह्मणं घातयेद्यो हि दद्रुरोगी भवेन्नरः । तत्पापशमनं वक्ष्ये सुवर्णेन तदर्धतः ॥ ४ ॥
धेनुं हेममयीं कुर्याद्रौप्येणाप्यथवा पुनः । ओमं माहेश्वरं रूपं दृष्टभावेन च स्थितम् ॥ ५ ॥
प्रदीपं भञ्जयित्वा तु तिमिरव्याधिमान्भवेत् । रूपप्रकाशकैर्मन्त्रैरभिमन्त्र्य जलं ततः ॥ ६ ॥
गात्राणि प्रोक्षयेत्तस्मान्मुक्तो भवति किल्बिषात् । सहस्रकलशस्नानमीश्वरस्यापि कारयेत् ॥ ७ ॥
तत्र यथोक्तगरुडदानं च कामलत्वे ।
कामली नक्तचौरः स्यात्तस्य वक्ष्यामि निष्कृतिम् कुर्याच्च पक्षिराजानं विष्णोर्वाहनमुत्तमम् ८
सुवर्णेन यथाशक्त्या पक्षयोर्मौक्तिकद्वयम् । नासिकायां तथा वज्रमुत्तरीयं च राजतम् ॥ ९ ॥
एवं कृत्वा गरुत्मन्तं घृतद्रोणोपरि न्यसेत् । श्वेतवस्त्रेण संवेष्ट्य श्वेतमाल्यैः समर्चयेत् ॥ १० ॥
[ ब्राह्मणाय प्रदातव्यम् । होमादि ब्राह्मणभोजनं च । ]
तरक्षौ निहते चैव जायते केकरेक्षणः । दद्याद्रत्नमयीं धेनुं स तत्पापप्रशान्तये ॥ ११ ॥
मार्जारे निहते चैव जायते केकरेक्षणः । तेन वैडूर्यरत्नानि दातव्यानि स्वशक्तितः ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकाष्टशततम ॥ ८११ ॥

श्रीसूर्य उवाच ।

मातृपितृगुरूणां च देवब्राह्मणयोस्तथा । शृणोति निन्दां बुद्ध्या यः कर्णाभ्यां तस्य शोणितम् १
पूयं च प्रस्रवत्यस्य शान्तिः कृच्छ्रचतुष्टयम् । हिरण्यरक्तवस्त्राणां दानाद्ब्राह्मणभोजनात् ॥ २ ॥
होमाच्च सौख्यं भवति सौरमन्त्रेण शक्तितः । सर्वांगमर्मविहीनश्च प्रेतश्राद्धे सदादनात् ॥ ३ ॥
[ शक्तित इति सर्वत्र सम्बध्यते । ]
स भवेत्कृमिकर्णस्तु तत्पापस्यापनुत्तये । दद्यान्नीलवृषान् पञ्च यथोक्तविधिना ततः ॥ ४ ॥
[ नीलवृषलक्षणं भगवद्वरेणाभिहितम् । ]
वृषदाने शुभोऽनड्वान् सशुक्लाम्बरकाञ्चनः । स्वरघाती च पुरुषो बधिरो जायते नरः ॥ ५ ॥
तेन कार्या विशुद्धिश्चान्यया तु दद्रुमण्डलः । कृत्वा लोहमयीं धेनुं पलषष्टिप्रमाणतः ॥ ६ ॥

१ देशात इति-ख० पु० । २ ब्राह्मणस्य च यो द्रोही-ख० पु० । ३ सर्वाचार इति-ख० पु० ।

कार्य्या स्वर्णेन संयुक्ता सप्तधान्यसमन्विता। दद्याद्द्विजाय विदुषे पापं मे क्षीयतामिति ॥ ७ ॥
विश्वस्तभार्यागमने गजचर्म्मा प्रजायते । तत्पापस्य विनाशाय प्रायश्चित्तं विधीयते ॥ ८ ॥
[ विश्वस्तभार्यागमने गुरुतल्पगप्रायश्चित्तादिदोषवशात् पाड्वार्षिकम्। प्रायश्चित्तशब्देन निष्कृतिरभिधीयते सा च कृच्छ्रादिरूपा दानरूपा च । तत्र साङ्गगोदानम्। इति गजचर्महरम्। ]
मयूरघातेन चैव जायते कृष्णमण्डलः । निष्कत्रयमितो देयस्तेन स्वर्णमयः शिखी ॥ ९ ॥
हंसघाती भवेद्यस्तु तस्य स्याच्छ्वेतमण्डलः। रौप्यं पलत्रयमितं हंसं दद्याद्विशुद्धये ॥ १० ॥
अमेध्यस्य प्रदाता च विसर्पव्याधिमान्भवेत्। मासं पयोव्रतं कुर्य्याद् दद्यादन्ते पयस्विनीम् ११
[ तत्र सर्पमूर्तिदानम्। ]
सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते । लक्षमेकं तु पद्मानां जुहुयाज्जातवेदसम् ॥ १२ ॥
[ सौगन्धिकं तु कह्लारं सुगन्धिद्रव्यं वा। जातवेदसमंत्रेण जुहुयात्। ]

वस्तुगन्धहरे।

मधुचौरस्तु पुरुषो जायते वस्तुगन्धवान्। स दद्यान्मधु धेनुं च उपोष्य च द्विजातये ॥ १३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशाधिकाष्टशततमः ॥ ८१२ ॥

श्रीसूर्य उवाच।

ब्रह्महा नरकस्यान्ते पांडुकुष्ठी[१] प्रजायते । प्रायश्चित्तं प्रकुर्वीत तत्पातकविशुद्धये ॥ १ ॥
[ प्रायश्चित्तं पाड्वार्षिकं कर्तव्यं पापस्योपभोगेन कृत्वा पश्चात् कृते प्रायश्चित्ते । ]
चत्वारः कलशाः स्थाप्याः पञ्चपल्लवसंयुताः। पञ्चरत्नसमायुक्ताः श्वेतवस्त्रेण वेष्टिताः ॥ २ ॥
अश्वस्थानादिमृद्युक्तास्तीर्थोदकेन पूरिताः। कषायपञ्चकोपेता नानाविधफलान्विताः ॥ ३ ॥
सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं ततः। रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ॥ ४ ॥
[ पञ्च पल्लवाः—आम्राश्वत्थवटप्लक्षोदुम्बराणाम् । मृदश्च—गजाश्वरथ्यावल्मीकनदीसंगमह्रदगोकुलेभ्यो ग्राह्याः। कषायाः—अश्वत्थादीनां त्वचः। ]
तन्मध्ये कलशोपरि अष्टदलं रौप्यपद्मं निधाय तत्र वासुदेवं स्थापयेदित्याह।
तस्योपरि न्यसेद्देवं पुण्डरीकं चतुर्भुजम् । पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्मितम् ॥ ५ ॥
यजेत्पुरुषसूक्तेन त्रिकालं प्रतिवासरम् । यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि ॥ ६ ॥
पूर्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मवादिनः। स्थापयेयुः स्वकान्वेदानृग्वेदप्रभृतीञ् शनैः ॥ ७ ॥
दशांशेन ततो होमो गृहशान्तिपुरस्सरम्। तत्र कुंडे विधातव्यो घृताक्तैस्तु तिलैर्यवैः ॥ ८ ॥
द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः । भद्रासने यजमानस्याभिषेकं हि समाचरेत् ॥ ९ ॥
[ द्वादशदिनसाध्यमेतत्कर्म। तत्र प्रतिदिनं प्रातर्मध्यदिनसायंकाले ह्याचार्येण पूजितम्। एवं यजमानः पूजयेद्देवम्। वेदचतुष्टयाभावे यथा समशाखाध्यायिभिश्चतुर्भिर्ब्राह्मणैश्चत्वारि वेदपारायणानि कारयेत् पारायणं वा। होमद्रव्यं च घृताक्तास्तिलयवाः। प्रतिदिनं होमः पूजा च। अन्त्ये दक्षिणादीनि दद्यात्। द्विजपुंगव इति आचार्यः। ]
अभिषेकानन्तरं हि गोभूहेमतिलादिकम्। ब्राह्मणेभ्यस्तथादेयमाचार्याय निवेदयेत् ॥ १० ॥
एतत्प्रतिमादानमन्त्रमाह।
"आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः। प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम्"॥११॥

१ कंडुकुष्ठी इति–ख० पु०।

इत्युदीर्य मुहुर्भक्त्या तमाचार्यं क्षमापयेत्। एवं विधानैर्विविधैः श्वेतकुष्ठी विशुध्यति ॥ १२ ॥
कुष्ठी गोवधकारी स्यान्नरकान्तेऽस्य निष्कृतिः ॥ १३ ॥
[ तत्रापि गविधिः । ]

अत्र च ।

यो नरो हन्ति वै जन्तून्कुष्ठरोगी भवेत्तु सः । सान्तपनं प्रकुर्वीत भगवानाह शङ्करः ॥ १४ ॥
[ क्षुद्रजन्तूनामिदं प्रायश्चित्तम् । अत्र केचन—उमामहेश्वरेण सार्कं साङ्गवृषभदानं शंसन्ति । ]

हीनकुष्ठे शातातपः ।

मातृगामी भवेद्यस्तु तस्य लिङ्गं विनश्यति । बालायां गमने चैव हीनकुष्ठः प्रजायते ॥ १५ ॥
[ अत्र प्रतिक्रिया लिङ्गहानिरेव पूर्वमेव प्रसंगात्प्रदर्शिता इति । ]
दीक्षितस्त्रीप्रसङ्गेन जायते रक्तकुष्ठवान् । तत्पातकविशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ॥ १६ ॥
[ कुर्वीत इति शेषः । एतच्च प्रायश्चित्तं रोगस्याल्पत्वे प्रायश्चित्तस्य लघुत्वात् । रोगाधिक्ये तु त्रैमासिकमुपपातकप्रायश्चित्तं द्वैगुण्येन कार्यम् । ]

रक्तपीते कुष्ठे ।

स्वसृतागमने चैव रक्तकुष्ठं प्रजायते । भगिनीगमने चैव पीतकुष्ठं प्रजायते ॥ १७ ॥
तत्र प्रतिक्रिया कर्तुं पूर्वतः कलशं न्यसेत् ॥ १८ ॥

गुल्मादिकुष्ठे ।

भ्रातृजायाभिगमने गुल्मकुष्ठं प्रजायते । स्वश्रूगमने चैव कृच्छ्रकुष्ठं प्रजायते ॥ १९ ॥
[ स्वश्रूः स्वपुत्रभार्या इति भावः ]
तेन कार्यं विशुद्ध्यर्थं प्रागुक्तस्यार्धमेव च । दशांशहोमः सर्वत्र घृताक्तैः क्रियते तिलैः ॥ २० ॥
[ प्राक् पाड्वार्षिकं प्रस्तुतं तदर्धं त्रैवार्षिकम् । ]

कट्यादिकुष्ठे ।

पितृव्यपत्नीगमनात् कटिकुष्ठं प्रजायते । निष्कृतिस्तेन कर्तव्या कन्यादानेन यत्नतः ॥ २१ ॥

नेत्रकुष्ठे ।

मातुलान्यभिगमनान्नेत्रकुष्ठं प्रजायते । कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् ॥ २२ ॥
यदगम्यासु सम्बद्धं प्रायश्चित्तमुदीरितम् । तदेव मुनिभिः प्रोक्तं नियतं तत्सुतास्वपि ॥ २३ ॥
[ ससुवर्णं सव्रीहि कृष्णाजिनदानम् । ]
ताम्बूलहरणे चैव श्वेतोष्ठत्वं प्रजायते । दक्षिणासहितं दद्यात् स वैडूर्यमणिद्वयम् ॥ २४ ॥
रूपघ्नो नरकस्यान्ते जायते चित्रकुष्ठवान् । प्राजापत्यत्रयं कुर्याद्देयं रौप्यपलत्रयम् ॥ २५ ॥
उदुम्बरी ताम्रचोरो नरकान्ते प्रजायते । प्राजापत्यत्रयं कुर्यात्ताम्रं पलशतं दिशेत् ॥ २६ ॥

कुष्ठरूपम् ।

कुष्ठः सर्वाङ्गगामी च शूलयज्ञोपवीतधृक् । धावन् व्रणहरः शुद्धस्त्रिनेत्रः किङ्किणीयुतः ॥ २७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकाष्टशततमः ॥ ८१३ ॥

---

१ शातेन इति—उ० पु० ।

श्रीसूर्य उवाच।

क्षुत्पिपासातुरा नारी भर्तारमवमत्य या । मिष्टान्नं स्वयमश्नाति न सा पुष्पवती भवेत् ॥ १ ॥
मिथुनानि च पंचाशद्भोजयेत्तन्निवृत्तये । दद्यात्सौभाग्यवस्तूनि तेभ्यः शक्त्यनुसारतः ॥ २ ॥
इक्षवस्तवराजश्च हरिद्रा चैव धान्यकम् । विकारस्च गोक्षीरं कुसुम्भं लवणं तथा ॥ ३ ॥
[ एतत्सौभाग्याष्टकैस्तवराजः सौभाग्यं सुवर्णद्रावकं द्रव्यमुच्यते । कर्पूरो वा शर्करा वा । विकारवत् शिखरिणी । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकाष्टशततमः ॥ ८१४ ॥

श्रीसूर्य उवाच।

विधवागमनेनापि निरयं नारदव्रतिः । रक्तार्बुदी भवेत्कुर्यात्प्रायश्चित्तं प्रशान्तये ॥ १ ॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापि वा । एवमेवापि विधवा प्रकुर्याद्रोगशान्तये ॥ २ ॥
रक्तार्बुदी वैश्यहन्ता जायते धर्ममाचरेत् । प्राजापत्यानि चत्वारि सप्तधान्यानि चोत्सृजेत् ॥ ३ ॥
पित्रा वा गुरुणा वापि यो नरः शास्त्रनिर्णये । स्पर्द्धतेऽसौ प्रजायेत उदरव्याधिमान्भवेत् ॥ ४ ॥
चान्द्रायणं प्रकुर्वीत कृच्छ्रं चैवातिकृच्छ्रकम् । तद्विष्णोरिति च जपेदयुतत्रयसंख्यया ॥ ५ ॥
सर्पिर्मधुसमायुक्तमण्डकान्नेन भोजयेद् । विप्रांस्तत्पादसलिलैर्मार्जयेदुदरे तथा ॥ ६ ॥
असृग्दरी स भवति यस्तु हिंस्याद्वृथा पशून् । असृग्दरी द्वारयति तपोवृक्षानपि क्षतान् ॥ ७ ॥
[ तत्र गोदानं तारम् । तत्र रुद्रमूर्तिदानं च । ]
अन्नचोरो भवेद्यस्तु सोऽकस्माज्जायते कृशः । वक्ष्ये तस्य प्रतीकारं दानहोमाभिषेचनम् ॥ ८ ॥
पलेन वा तदर्द्धेन तदर्द्धेनाथ वा पुनः । सुवर्णेन प्रतिकृतिं कुर्याद्रुद्रस्य भक्तितः ॥ ९ ॥
तन्मूर्तिर्ब्राह्मणायैव देया शक्त्या विधानतः । न करोति महायज्ञानस्थिरोगी प्रजायते ॥ १० ॥
कृच्छ्रं चान्द्रायणं कुर्याच्छक्त्या विप्रांश्च भोजयेत्।ईप्सितान्नं प्रदद्याच्च हिरण्यं च स्वशक्तितः॥११
[ दक्षिणां हिरण्यं दद्यात् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशाधिकाष्टशततमः ॥ ८१५ ॥

श्रीसूर्य उवाच।

दधिचौरस्तु पुरुषो युक्तो भवति कल्मषात् । दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये ॥ १ ॥
दंतपातनकैर्युक्तः शूद्रहन्ता भवेन्नरः । प्राजापत्यं चरेदेकं दद्याद्धेनुं सदक्षिणाम् ॥ २ ॥
श्रुतिस्मृतिनिषिद्धानि यानि दानानि सन्ति वै । अजाश्वमहिषीदानं प्रतिग्रहणकारणात् ॥ ३ ॥
निषिद्धयोषिद्गमनाद्द्विजाप्यस्य वधादपि । देवस्य च परीक्षायां दस्युव्याघ्रादिनिर्मितैः ॥ ४ ॥
निषिद्धवनशास्त्राणि मरणाद्गुरुनिष्कृतेः । तडागादेश्च भङ्गाच्च बाह्यशास्त्रोपजीवनात् ॥ ५ ॥
ब्राह्मणस्वापहरणात्सर्वाङ्गेषु प्रजायते । वेदना दारुणा तद्वत्तस्याश्च शममृच्छयेत् ॥ ६ ॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापि वा । गोभूहिरण्यवासांसि दद्यात्कुर्याज्जपं तथा ॥ ७ ॥
तद्विष्णोरिति मंत्रेण कुर्याद्दत्रायुतत्रयम् । पानीयं पायसं मुद्गाः शर्करा मधुसंयुता ॥ ८ ॥
इदमावश्यकं देयं सर्वरोगादिशान्तये । प्रतिमाभङ्गकारी तु प्रमातिष्ठः प्रजायते ॥ ९ ॥
संवत्सरत्रयं सिञ्चेदश्वत्थं शनिवासरे । उद्वाहयेत्तमश्वत्थं शमीसाम्यविधानतः ॥ १० ॥

[ शमी चेत्तया सह शमी पार्श्वे न भवति तदा वृषोत्सर्गे इव साखा ये कुशास्तैरेव समानीय विधानतो विवाहः । ]

कुब्जो मूपकहा दद्यात् सप्तधान्यं सकाञ्चनम् । अनिवेद्य सुरादिभ्यो भुञ्जानो जायतेऽव्रनः॥११॥
स भोजयेत्सहस्रं तु शतं वा हि द्विजोत्तमान् ॥ १२ ॥

[ सुरादिभ्यो हरिहरादिभ्यो वैश्वदेवकर्मदेवताभ्यश्चादिशब्दादतिथिपुत्रादिभ्यः । श्रवणं द्वितीया निष्कृतिः । द्युत्युत्तरवाक्यस्यापि तेन विशुद्धयति इत्ययं विशेषः । तया च हरिवंशश्रवणं द्वितीया निष्कृतिः । ]

बभूव बाहुजः कश्चिद्देशे पंचनदे पुरा । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १३ ॥
विप्रसङ्गतः प्राप्तः प्रयागं गरुडाग्रज । सुस्नातो मृगगे भानौ धूर्तो धर्मक्रियोज्झितः ॥ १४ ॥
संप्राप्य स्वगृहं शीघ्रं कृतवान् कर्म दारुणम् ।ग्रामे निवसतोऽन्यस्य क्षत्रियस्य पतत्रिण ॥ १५ ॥
ददाह भवनं रम्यं वैरिभावात्पुराऽनघ । तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ १६ ॥
कालयोगेन संप्राप्तः स गत्वा यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥१७॥
पूर्वपुण्यप्रभावेण स जातः पाद्जोऽधुना । गंगायाः प्राक्परे देशे शतयोजनसंमिते ॥ १८ ॥
स मध्यरूपी वलवान् धर्मे स्वल्पमतिः शठः । वृद्धयाधिकः प्रचारी च पैत्तिकः स्वल्पवित्तभाक्१९
सकन्यकः सपत्नीको बन्धुभृत्यसुखान्वितः । पुण्यादिदं फलं प्रोक्तं पापादन्न शृणु त्वय ॥ २० ॥
गोबालवत्सकवधाज्जीवघातादपुत्रकः । सप्तवेदमिताब्दान्ते जातपुत्रविनाशवान् ॥ २१ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः । गोराशिगे शनौ सोमात्पष्ठे जीवे मृगास्थिते ॥ २२ ॥
लग्नेतदंडजश्रेष्ठ पृच्छकस्यात्र जन्मनि । पूर्वे या स्त्री सहायामीन्मृतवत्साऽत्र सा सुत ॥२३॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वपापनिषूदनीम् । पुत्रवृद्धिकरीं धन्यामन्यजन्मनि निश्चयात् ॥२४॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधनीम् । पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी॥२५॥
तदर्द्धमितिका वापि द्वयोर्वित्तानुसारतः । संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ २६ ॥
माषैर्वह्निमितैर्देयस्तथा पशुपतिः सुत । माषाभ्यां च तथा वह्निर्जीवा माषचतुष्कजाः ॥ २७ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये । जपेत्पशुपतेर्मन्त्रं सहस्रारिष्टनाशकम् ॥ २८ ॥
होमयेदष्टशतकं रुद्रस्याग्रे प्रयत्नतः । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ २९ ॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं त्रिधा मतम् । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया३०॥
नैवं कुर्यात्त्र यः शक्त्या त्रिष्वेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिन्संजीविते नात्र संशयः ३१
नवसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षोडशाधिकाष्टशततम ॥ ८१६ ॥

---

श्रीसूर्य उवाच ।

वणिक् पूर्वभवे कश्चिदासीद्धर्मपरायणः । द्विभार्यः सिद्धपीठस्थो धनधान्यसमन्वितः ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः । ब्राह्मणेषु दरिद्रेषु गृहस्थेषु विशेषतः ॥ २ ॥

अयापि कृतवान्पापं कामलोभेन नित्यशः । ज्येष्ठां त्यक्त्वा ऋतुस्नातां सुशीलां प्रियवादिनीम् ॥ ३ ॥
रतिं ददौ कनिष्ठायामनृतौ विधिमोहितः । ततो मृत्युवशं प्राप्तः ससहायो वणिक्सुतः ॥ ४ ॥
भुक्त्वा पापफलं पापात् पुण्यात्पुण्यफलं तथा । विधेर्वशात्त्वसौ जातोऽत्र शतद्रोः पूर्वभागजः ॥ ५ ॥
कुम्भस्थे भूसुते कीटे जीवे सिंहगते विधौ । स रक्तगौरो मतिमान् पितृमातृसुखान्वितः ॥ ६ ॥
भ्रातृमित्रधनैर्युक्तः सौम्यः पितृवचोनुगः । घृणी ह्रस्वोऽथ मितदो वर्णोत्तमसमुद्भवः ॥ ७ ॥
दानादिदं फलं सर्वं स्त्रीत्यागान्मृतपुत्रकः । स्त्रीत्यागी भ्रूणहा यस्मादिति वेदविदो विदुः ॥ ८ ॥
स्त्रीशापाद्वयप्युतः पूर्वं शृणुष्वाथ खगेश्वर । प्राग्भवे या कनिष्ठाऽभूत् सा ज्येष्ठाऽत्र मृतप्रजा ॥ ९ ॥
गर्भदोषरता चेति लक्षणैर्लक्षितासुत । वक्ष्यामि निष्कृतिं तस्य पूर्वपापापनोदनीम् ॥ १० ॥
कुर्य्यात्पलं रसोमितैर्ब्रह्माणं कमलोद्भवम् । विश्वमूर्तिं त्रिलोकेशं सौवर्णं निखिलं शुभम् ॥ ११ ॥
तदर्द्धार्द्धमितं देयं त्रिषु वित्तादिमं परम् ॥ १२ ॥
" त्यक्त्वा वराननां शुद्धां यत्पूर्वं पापमर्जितम् । तेनाहमत्र ब्रह्माणं प्रायश्चित्तं ददे द्विज" ॥ १३ ॥
गौरी तु राजती देया द्विपलार्कैश्च सन्मितः । माषपंचमिता विष्णोः सौवर्णी ब्राह्मणाय वै ॥ १४ ॥
हिरण्मयी तथा लक्ष्मीर्देया माषाष्टका शुभा । ब्राह्मणान् वरयेत्तत्र गृहयज्ञं समाचरेत् ॥ १५ ॥
भोजयेच्च यथाशक्त्या ब्राह्मणान्गरुडाग्रज । एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः ॥ १६ ॥
ज्येष्ठायां च कनिष्ठायां नात्र कार्या विचारणा । श्रुत्वेनं शक्तिमान्यस्तु न कुर्य्यात्पापशोधनम् १७
न जीवन्ति सुतास्तस्य रिष्टं वेश्मत्रिकेन्द्रके । प्रायश्चित्ते कृते तत्र पुत्रपौत्रविवर्द्धनम् ॥ १८ ॥
भविष्यति तथा ह्यायुः सप्तसप्तमिताः समाः । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥
इति श्रीसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशाधिकाष्टशततमः ॥ ८१७ ॥

---

श्रीसूर्य उवाच ।

सप्तदेशे त्वभूत्कश्चिच्छूद्रो धर्मक्रियारतः । विवाहं कृतवान् पूर्वं कन्यायाः कृतजन्मनि ॥ १ ॥
दाने स्वल्पमतिस्तस्मात्कन्यागलविधानतः । चौर्य्यकर्मरतः सोऽपि कदाचिद्दैवयोगतः ॥ २ ॥
चचार पर्वते सूत मार्गलुण्ठनतत्परः । अथो भाविवशात्तत्र प्राप्ता काचिद्वरानना ॥ ३ ॥
पूर्णगर्भसमायुक्ता नानाभरणभूषिता । सा लुण्ठिता भयत्रस्ता तेन क्रूरधियाऽण्डज ॥ ४ ॥
सहायैस्तु परित्यक्ता ताडनान्महदाकुला । तस्या गर्भच्युतौ तत्र कन्यापुत्रौ बभूवतुः ॥ ५ ॥
असहायेन तेनैव पापमाचारितं पुरा । ततो यमपुरं प्राप्तो धर्माधर्मसमन्वितः ॥ ६ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । कन्यादानप्रभावेण स जातोऽत्र वणिक्सुतः ॥ ७ ॥
कुरुक्षेत्रात्पश्चिमभागे त्रिंशद्योजनसंमिते । स रक्तकृष्णः क्षीणाङ्गः स्वल्पवित्तसमन्वितः ॥ ८ ॥
वातपित्तसमुद्भवो बहुपुत्रीभिरन्वितः । स्वयं स्त्रीसंयुतो लोभी पितृभक्तिसमन्वितः ॥ ९ ॥
जातपुत्रविहीनश्च पापात्पुण्यात्तथा फलम् । चिह्नमङ्गादिदं सूत चन्द्रो मिथुनराशिगः ॥ १० ॥
न पश्यति सुतं कन्यां लाभे शुक्रः प्रपश्यति । तस्माद्बहुत्वं कन्याया न च पुत्रसुखं क्वचित् ११ ॥
निष्कृतिं तस्य वक्ष्यामि पूर्वपापविशोधनीम् । शूद्रायाः प्रतिमा कार्या पलार्धार्द्धमितेन तु ॥ १२ ॥
लेख्यौ गर्भच्युतौ बालौ सौवर्णाभूषणान्वितौ । सा देया तु विप्रिज्ञाय पूर्वपापविशुद्धये ॥ १३ ॥
दद्यः पंचमितं माषैस्तथा वेदनिधिः सुत । जपेच्च वेधसो मन्त्रं वैष्णवं त्र्यम्बकं तथा ॥ १४ ॥

---

१ पूर्वभागे इति—पा० पु० । २ 'कन्या' इति—पा० पु० ।

पूर्वपापविशुद्धयर्थं सहस्रं प्रतिदैवतम् । होमयेच्च तिलांस्तत्र सघृतास्थण्डिले शुभे ॥ १५ ॥
स्वगृह्योक्तविधानेन स्थापयित्वा हुताशनम् । ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् १६
ततो रुद्रव्रतं कुर्यात्सर्वपापविशोधनम् । चतुर्दश्यां निराहारो रुद्रपूजनतत्परः ॥ १७ ॥
य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः । तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि वै ध्रुवम् ॥ १८ ॥
नैवं विधानं यः कुर्यान्न च पुत्रमुखं लभेत् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके॥१९॥
ह्यायुरब्दाश्चतुरशीतिः प्रायश्चित्ते कृतेऽण्डज ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकाष्टशततमः ॥ ८१८ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे कश्चिद्वंगदेशे द्विजो धनी । विद्याभ्यासयुतो नित्यं धर्मशास्त्रक्रियान्वितः ॥ १ ॥
दत्तानि तेन चाल्पानि दानान्यपि विधानतः । पर्वस्वपि च तेनैवाध्यापिता ब्राह्मणास्तथा ॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य गौरवात् । कालयोगेन संप्राप्य ब्राह्मणेन कुटुम्बिना ॥ ३ ॥
स्थापितं तद्गृहे द्रव्यं घटे ताम्रमये स्थितम् । पुनर्दत्तं न तत्तस्मै लोभोपहतचेतसा ॥ ४ ॥
सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह । ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः ॥ ५ ॥
भुक्त्वा पापफलं न्यायात्पुण्यात्पुण्यफलं तथा । विद्यादानादिपुण्येन जातोऽसौ ब्राह्मणोऽधुना ॥६॥
देशे पञ्चनदं प्राप्य गौरः पित्ताधिको घृणी । वाचा मधुरया युक्तो राजसश्चतुरः सुधीः ॥ ७ ॥
दर्शनीयो नातिह्रस्वो नात्युच्चः क्रोधवर्जितः । सुखस्त्रीमानसंयुक्तः सदा सोऽतिथिनर्युतः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । धूर्तः शठोऽल्पदो दम्भी स्वल्पधर्मक्रियान्वितः॥९॥
इष्टैर्मनोरथैर्हीनः पुत्रसन्ततिदुःखितः । प्रश्नस्य लक्षणात्पूर्वं फलमत्र विनिश्चितम् ॥ १० ॥
लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि । जन्मलग्नात्सुते राशौ घटः पापसमन्वितः ॥ ११ ॥
सहायलक्षणं सर्वं वक्ष्याम्यथ खगेश्वर । पुत्राभावो भ्रातृहीनः स्त्रीसुताल्पसमन्वितः ॥ १२ ॥
लक्षणैरेभिराढ्यस्य पृच्छकस्यात्र जन्मनि । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ १३ ॥
लक्ष्मीनारायणौ कार्यौ सुवर्णार्द्धमितौ शुभौ । तदर्धौ वाऽथ सौवर्णौ द्वयोर्वित्तानुसारतः॥ १४ ॥
स्थापयित्वा घटे ताम्रे सघृते वस्त्रवेष्टिते । संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणाय प्रदापयेत् ॥ १५ ॥
चतुर्विंशसहस्राणि गायत्रीं च जपेत्ततः । होमयेच्च यथाशक्त्या कुण्डे वा स्थण्डिले शुभे ॥ १६ ॥
घृतमिश्रांस्तिलांस्तत्र शक्त्या विप्रांश्च भोजयेत् । मम जन्मदिने पश्चादाचरेद्व्रतमुत्तमम् ॥१७॥
य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः । तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि ॥ १८ ॥
नैवं विधानं यः कुर्याद्विप्रद्रव्यापनाशनम् । न च पुत्रमुखं लब्ध्वा न तस्य परमा गतिः ॥ १९ ॥
प्रायश्चित्तेऽकृतेऽरिष्टं पंचाशन्मितकेऽब्दके । प्रायश्चित्ते कृते ह्यायुः सप्तसप्ततिताब्दकम् ॥ २० ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकाष्टशततमः ॥ ८१९ ॥

श्रीसूर्य उवाच ।

वङ्गदेशे ह्यभूत्कश्चिद् वाहुजो धर्मसंयुतः । ग्रामाधिपश्चोग्रदण्डो गुरुभक्तिपरो दृढः ॥ १ ॥
स गत्वा तु कुरुक्षेत्रे सर्वस्वं विधिनाऽददात् । प्राप्ते सूर्यग्रहे सूत विप्राय च कुटुम्बिने ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य गौरवात् । यौवने धर्षिता विप्रपत्नी चातिशुभानना ॥ ३ ॥

कामलोभेन सततं पतिस्तस्याः प्रपीडितः। एवं निवसतस्तत्र गतस्तु यमशासनम् ॥ ४ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा। पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना ॥ ५ ॥
ऐरावत्यास्तु निकटे त्रिंशद्योजनसंमिते। गौरः सुरूपो मतिमान् यशस्वी प्रियदर्शनः ॥ ६ ॥
पुत्रदारधनैर्युक्तो बहुमित्रः प्रतापवान्। राजसेवीति विख्यातः सुखैश्वर्ययुतो नृपः ॥ ७ ॥
देशे देशेऽधिकाराढ्य आद्यन्तसुखभागिह। दाता भोक्ता प्रधानश्च बहुपालनतत्परः ॥ ८ ॥
धर्मादिदं तथा पापात्क्रोधी दण्डरतो व्ययी। पूर्वस्त्रीसुखहीनस्तु मनोदुःखसमन्वितः ॥ ९ ॥
धर्षणाद्विजयोपायास्तत्पत्युस्तत्र ताडनात्। यौवने नेत्ररोगाढ्यश्चात्र जन्मनि निश्चयात् ॥१०॥
चिह्नमङ्गादिदं चन्द्रो भौमयुक्तस्तृतीयगः। वक्ष्यामि निष्कृतिं तस्य सर्वपापविशोधनीम् ॥ ११ ॥
हेम्नः पलैर्दशमितैः शिवः कार्यो विधानतः। सपत्नीको वृषस्थश्च सर्वाभरणभूषितः ॥ १२ ॥
तदर्द्धार्द्धमितो वापि त्रिषु वित्तानुसारतः। होमयेच्च तदग्रे तु त्र्यम्बकं तु सहस्रकम् ॥ १३ ॥
तिलाज्यमधुयुक्तेन कुण्डे वा स्थण्डिलेषु च। स च देयो विधिज्ञाय दद्रुरोगापनुत्तये ॥ १४ ॥
तन्मितं च तथा दद्याद्राजतं च गणेश्वरम्। संपूज्य विधिवन्मन्त्रैर्गन्धपुष्पोपचारकैः ॥ १५ ॥
य एवं कुरुते सूत विधिना पापशोधनम्। न तस्य दद्रुजा पीडा भविष्यति कदाचन ॥ १६ ॥
स्त्रीरिष्टं च तथा न स्यात्प्रायश्चित्ते कृतेऽधुना। प्रायश्चित्तेऽकृते त्वत्र दद्रुरोगो विवर्धते ॥ १७ ॥
नागसप्तमितायुः स्याद्रिष्टं चाकृतनिष्कृतेः। प्रणवाद्यस्तथा मन्त्रस्त्र्यम्बकाय नमस्तथा ॥ १८ ॥

मंत्रः—"ॐ त्र्यम्बकाय नमः" इति।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकाष्टशततमः ॥ ८२० ॥

श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद् यामुने गरुडाग्रजे। प्राग्भवे च द्विजश्रेष्ठो ग्रामाध्यक्षो धनाल्पकः ॥ १ ॥
विप्रैस्तडागजलस्त्वाज्यं प्रयागे स्नानमाचरत्। एकदा तु वने गत्वा ददाह सघनं वनम् ॥ २ ॥
तत्र दग्धा महाजीवा वनाग्निज्वालया भृशम्। तेन कर्मविपाकेन पुत्रसौख्यविवर्जितः ॥ ३ ॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन् पुत्रदुःखनिषूदनीम्। रिष्टात् मार्ग् दिवसाध्यक्ष लोकानां हितकाम्यया ॥४

श्रीसूर्य उवाच।

निष्कृतिं तस्य वक्ष्यामि जीवघातविमोचनीम्। यां कृत्वा विधिवत्सूत वंशवृद्धिः प्रजायते ॥५॥
पद्पले राजते पत्रे वेदाङ्गुलमिताब्दके। वनजीवास्तथा लेख्याः सुगन्धैः पञ्चभिर्युताः ॥ ६ ॥
सर्पवृश्चिकगोधाढ्याः पक्षिणां च तथालयाः। देया विप्राय विधिना पूजयित्वा कुटुम्बिने ॥७॥
तदर्धमितकैर्वापि द्वयोर्वित्तानुसारतः। वनदेवी तथा कार्या स्ववेदमितमापकैः ॥ ८ ॥
माषद्वयहिरण्येन तथा कुर्याद्धुताशनम्। संपूज्य दद्याद्विप्राय इमं मन्त्रमुदीरयेत् ॥ ९ ॥

मन्त्रः।

वनांतरगताः पूर्वं ये जीवा दाहिता मया। वनदेव्याः प्रदानात्तु गच्छन्तु मम पातकाः ॥ १० ॥
इत्युच्चार्य नरः सर्वं ब्राह्मणाय प्रदापयेत्। शृणुयाद्धरिवंशं वा त्रिरावर्त्य विधानतः ॥ ११ ॥
जपेत्सहस्रद्वितयं देव्या मंत्रं यथोक्तवत्। मम जन्मदिने पश्चादाचरेद्विधिना व्रतम् ॥ १२ ॥

मंत्रः—"ॐ ह्रीं वनान्तरगतायै नमः" इति।

१ दर्श इति—खपु०।

नैवं करोति यो मोहात् प्रायश्चित्तं त्रिया मतम् । न जीवन्ति सुतास्तस्मिन्नीविते नात्र संशयः॥२०॥
प्रायश्चित्ते कृते ह्यायुः षडशीतिमितान्दकम् । प्रायश्चित्तेऽकृते रिष्टं वर्षे षष्टिमिते ध्रुवम् ॥ २१ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकाष्टशततमः ॥ ८२४ ॥

## श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्ग्रामाध्यक्षो विराटजः । दत्तानि तेन दानानि गोभूम्यश्वादिकानि च ॥ १ ॥
ब्राह्मणेषु गृहस्थेषु सत्पात्रेषु विशेषतः । अथान्यग्रामपस्यापि क्षत्रियस्य महात्मनः ॥ २ ॥
एकपुत्रस्य पुत्रो वै भुजमूले पुराऽनघ । घातितस्तेन खड्गेन निशायां चौरकर्मणा ॥ ३ ॥
स मृतस्तेन दुःखेन भाविनोर्थस्य गौरवात् । तन्माता पुत्रदुःखेन मृता दुःखप्रपीडिता ॥ ४ ॥
वैरभावरतेनैव कृतं कर्मातिदारुणम् । एवं बहुतिथे काले गतोऽसौ यमशासनम् ॥ ५ ॥
भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गफलं तथा । पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना ॥ ६ ॥
शतद्रुनिकटे देशे मेषेऽर्के शनिसंयुते । कीटराशिगते जीवे सुते चापगते विधौ ॥ ७ ॥
गौरो धूर्तः प्रभुर्मध्यः क्वचित्पापरतः सुधीः । धनभोगसुखैर्युक्तो मितज्ञो लोभसंयुतः ॥ ८ ॥
पितृमातृसुखैर्हीनो भृत्यस्त्रीबन्धुसंयुतः । पात्रे दानादिदं सर्वं फलं पापफलं शृणु ॥ ९ ॥
पूर्वं बालवधात्पापादिह जन्मनि चाण्डज । द्विवेदमितवर्षान्तं जातपुत्रविनाशकः ॥ १० ॥
तथा प्राग् बाहुजवधाद्वामयाहुविवर्जितः । लक्षणैर्लक्षयेदेतैः पृच्छकं चात्र जन्मनि ॥ ११ ॥
निष्कृतिं तस्य वक्ष्यामि पूर्वपापविशोधनीम् । पुत्रवृद्धिकरीं धन्यां सर्वारिष्टविनाशनीम् ॥ १२ ॥
पलपंचमितं कुर्याद्बाहुजं च हिरण्मयम् । तन्मातरं च सौवर्णां सुवर्णकमितां शुभाम् ॥ १३ ॥
लक्ष्मीनारायणं तद्वद्राजतं त्रिपलात्मकम् । तन्मितां राजतीं गौरीं दद्यान्मन्त्रैः प्रपूजिताम्॥१४॥
गायत्र्यष्टसहस्रं तु जपेदष्टाक्षरं तथा । शृणुयाद्धरिवंशं वा शतावर्तविधानतः ॥ १५ ॥
लक्षरुद्रं त्रिगुणितं कुर्याद्वा विधिपूर्वकम् । यो न कुर्याद्विधानैकं त्रिष्वप्येतेषु निश्चितम् ॥ १६॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । वेदवेदमिते वर्षे रिष्टं चैव प्रकीर्तितम् ॥ १७ ॥
यः कुर्याद्विधिवत्तस्य प्रायश्चित्तं प्रयत्नतः । तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि निश्चयात् ॥१८॥
एकाशीतिसमायुः स्याच्चैत्रादौ भृगभे मृतिः । जन्मादिमरणान्तं हि सर्वं ते कथितं मया ॥ १९ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्यधिकाष्टशततम. ॥ ८२५ ॥

## श्रीसूर्य उवाच ।

कीरदेशे समुत्पन्नः कश्चित्क्षात्रे कुले सुधीः । विप्रोऽसङ्गतस्तत्र प्रयागे मकरे वसन् ॥ १ ॥
कृतवान्विधिवत्स्नानं दानं स्वल्पं च शक्तितः । दैवयोगाद्गृहं प्राप्य कृतवान्कर्म दारुणम् ॥२॥
कामलोभेन सततं शूद्रयां गर्भश्च धारितः । स्त्रीसाहाय्ययुतेनेदं पापमाचरितं तया ॥ ३ ॥
विविधैरौषधैस्तस्या गर्भपातः कृतः पुरा । एवं सर्वैर्मिलित्वा तु पातनं बहुधा कृतम् ॥ ४ ॥
ततो बहुतिथे काले गतास्ते यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
तीर्थराजप्रभावेण स जातो ब्राह्मणोऽधुना । सेज्ये शनौ सिंहगते सूर्ये कन्यागते कुजे ॥ ६ ॥
मृगे ह्यैरावतीतीरे नात्युच्चो न लघुः सुधीः । क्लिष्टवाक् स्वल्पधर्माढ्यः पितृमातृविवर्जितः ॥७॥
सहोदरधनैर्हीनो जातपुत्रविनाशकः । परदाराभिगमनाद्गर्भपातनदोषजात् ॥ ८ ॥
पापात्पूर्वकृतात्तस्य लक्षणैर्लक्षयेदिह । स्त्रीसाहाय्यात्तया सूत प्राक् पापं समुपार्जितम् ॥ ९ ॥

तनकाऽत्र हि पत्नी च तयोः पुत्रसुतान्विता । तथैका बहुपापत्वाद्भ्रातुः पत्न्यग्रजस्य च ॥१०॥
पुत्रभर्तृविहीनाऽत्र पूर्वपापात्प्रदृश्यते । वक्ष्यामि निष्कृतिं सुत पूर्वपापविशोधनीम् ॥ ११ ॥
सार्द्धवेदमितैः स्वर्णैः पद्मं कुर्याद्धिरण्मयम् । सनालमष्टपत्राढ्यं शुभं तद्ब्रह्मदैवतम् ॥ १२ ॥
पूरयेत्पारदेनैव तस्य नालं प्रयत्नतः । दद्याद्वेदविदे सूत विधिमन्त्रं पठन्सुधीः ॥ १३ ॥
"ब्रह्मयोनिरिदं पद्मं भाग्यं स्थानं च शाश्वतम् । गर्भवारणपापोत्थदोषनाशकरं परम् ॥ १४ ॥
ददेऽहं विप्रमुख्याय पूर्वपापविशुद्धये ।" इत्युच्चार्य नरो दद्यात्स्मादोषात्प्रमुच्यते ॥ १५ ॥
राजतं च ततो दद्याद् ब्रह्मार्णं तन्मितं सुत । रुद्राणामथवा लक्षं पूजयेद्विधिनाण्डज ॥ १६ ॥
गायत्रीं च यथाशक्त्या जपेच्चैवाघमर्षणम् । नैवं विधानं यः कुर्याल्लोभान्मोहाद्विशेषतः ॥१७॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । श्रुत्वैवं विधिवत्कुर्याद्विधानैकं समाहितः ॥ १८ ॥
न तस्य पुत्रमरणं भविष्यति ममाज्ञया । धनपुत्रान्वितो मध्ये ह्यायुरष्टाद्रिवर्षकम् ॥ १९ ॥
रिष्टं षष्टिमितेऽब्दे तु तस्य चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकाष्टशततमः ॥ ८२६ ॥

---

श्रीसूर्य उवाच ।

आसीद्राजकुलोत्पन्नः पूर्वजन्मनि यामुने । धनधान्यसमायुक्तो रुद्रभक्तिपरोऽण्डज ॥ १ ॥
दत्तानि तत्र दानानि पर्वस्वपि च शक्तितः । अथो भाविबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
तद्गृहे स्थापितं द्रव्यं पुनर्दत्तं न तेन च । सहायैकसुतेनैव ब्रह्मस्वं भक्षितं पुरा ॥ ३ ॥
स च कालवशं प्राप्य भुक्त्वा पापफलं महत् । पुण्यात्पुण्यफलं तत्र स शूद्रो जाङ्गलेऽधुना ॥ ४ ॥
देशे रामहृदाख्ये तत्त्वयोजनसंमिते । कृष्णस्तनौ सुते यस्मात् क्रूराः पश्यन्ति पापतः ॥ ५ ॥
ह्रस्वो मध्यो धनाढ्यस्तु श्रेष्ठो मतिसुखान्वितः । स्त्रीभृत्यभ्रातृसंयुक्तो मध्यान्ते सुखभागिह॥६॥
ब्रह्मस्वहरणात्पूर्वं चात्र सन्ततिवर्जितः । दाने स्वल्पमतिर्धूर्तः पापात्सर्वमिदं सुत ॥ ७ ॥
अथो भ्रातृसाहाय्यात्तु ब्राह्मणस्वं हृतं पुरा । तेन तत्सहजो ज्येष्ठः पुत्रहीनोऽत्र जन्मनि ॥ ८ ॥
लक्षितो लक्षणैरेभिः पृच्छको विनतासुत । निष्कृतिं च प्रवक्ष्यामि पूर्वपापविशोधनीम् ॥ ९ ॥
लक्ष्मीश्च राजती कार्या पलैर्दशमितैः शुभा । सर्वावयवसम्पन्ना पीतवस्त्रविभूषिता ॥ १० ॥
ब्राह्मणाय च सा देया मन्त्रेणानेन धीमता । "लक्ष्मि त्वं सर्वभूतानां कामदा मोक्षदायिनी ॥११॥
पूर्वजन्मार्जितात्पापान्मां रक्ष शरणागतम्" । इत्युच्चार्य नरो दद्याद्विप्रद्रव्याघनाशनम् ॥ १२ ॥
तथा पञ्चपलैः सौम्यो राजतश्चोक्तरूपवत् । पलद्वयमितौ तद्वद्धनाधिपदिनेश्वरौ ॥ १३ ॥
पूजयित्वा तु गन्धाद्यैर्दद्यात्सर्वान्द्विजोत्तमः । जपेत्पञ्चसहस्रं तु गायत्र्या होमयेत्तथा ॥ १४ ॥
ब्राह्मणान्भोजयेच्छक्त्या शिवभक्तान्विधानतः । अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत्॥१५॥
तस्याऽत्र पुत्रयुगलं कन्यैका च भविष्यति । न करोति च यो मोहाद्विधिवत्पापशोधनम् ॥ १६ ॥
तस्य पञ्चमिताब्दान्तं न च पुत्रसुखं त्विह । आयुश्चात्र तदब्दान्तं प्रायश्चित्तेऽकृते धुना ॥१७॥
प्रायश्चित्ते कृते त्वायुरधिका सप्ततिः समाः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकाष्टशततमः ॥ ८२७ ॥

---

श्रीसूर्य उवाच ।

अभूद्वैश्यकुलोत्पन्नो धनधान्यसमन्वितः । सरस्वत्याश्च निकटे विष्णुधर्मसमन्वितः ॥ १ ॥

स्नानि तेन दानानि ब्राह्मणेषु च शक्तितः । पर्वस्वपि च तेनैव श्रद्धाहीनेन चेतसा ॥ २ ॥
देवादजा द्विजस्याथ प्राप्ता वै गर्भसंयुता । वैरिभावाद्घातयित्वा मुक्ता तेन विजानता ॥ ३ ॥
तत्सुताश्च तथा सूत पापमाचरितं त्विदम् । धर्माधर्मफलं भुक्त्वा गत्वा तत्र यमालयम् ॥ ४ ॥
पूर्वपुण्यवशात्सूत स जातः पादजोऽधुना । सरस्वत्या याम्यभागे विंशद्योजनसंमिते ॥ ५ ॥
स रक्तकृष्णः क्षीणाङ्गो विष्णुभक्तिसमन्वितः । चिंताधिकः स्वल्पधनः स्त्रीभ्रातृसुखसंयुतः॥६॥
पुण्यादिदं तथा पापात्स्यातपुत्रविनाशकृत् । स्त्रीसाहाय्ययुतो यस्मात्स्या स्त्री त्वत्र प्रपीडिता ॥७॥
तस्य चिह्नमिदं ज्ञेयं मेषः पञ्चमभावगः । पापयुक्तस्तथा दृष्टो राहुरेकादशे स्थितः ॥
लक्षणैर्लक्षितः प्रोक्तैरवेहि गरुडाग्रज ॥ ८ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वारिष्टनिषूदनीम् । इह पुत्रकरीं धन्यां लोकानां हितकाम्यया ॥९॥

श्रीसूर्य उवाच ।

निष्कृतिं तत् प्रवक्ष्यामि येन पापक्षयो भवेत् ॥ १० ॥
पलैर्द्वादशभिः कार्या मेषी गर्भसमन्विता । राजती च तदर्द्धा वा द्वयोर्वित्तानुसारतः ॥ ११ ॥
मन्त्रमेतं समुच्चार्य देया विप्राय धीमते । मया पूर्वभवे मुक्ता मेषी गर्भसमन्विता ॥ १२ ॥
ब्राह्मणस्य ददाम्यस्मान्मेषीं रौप्यमयीं शुभाम् । देवो वैश्वानरो यस्मात् पशुघातात् प्रमुञ्चतु॥१३॥
तस्माद्वैश्वानरो देवो देयश्चार्द्धप्रमाणतः । जपेद्धीताशनं मन्त्रं सहस्रं पाशुपं तथा ॥ १४ ॥
होमः कार्यो दशांशेन स्थापयित्वा हुताशनम् । तण्डुलाज्ययवान्हुत्वा तिलान्संमिश्र्य यत्नतः॥१५॥
ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् । य एवं कुरुते सूत पूर्वपापविशोधनम्॥१६॥
तस्य वंशविवृद्धिः स्यादायुरब्दास्त्रिसप्ततिः । प्रायश्चित्तेऽकृते विद्धि खवेदमितकेऽब्दके ॥ १७ ॥
यदन्तरगतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकाष्टशततमः ॥ ८२८ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । कश्चिद्द्विजोऽभवत्पूर्वं वङ्गदेशेऽपि ग्रामपः ॥ १ ॥
धर्मशास्त्रक्रियाहीनः पित्रोः सुखसमन्वितः । दत्तानि तेन दानानि ब्राह्मणेषु च शक्तितः ॥२॥
सत्पात्रेषु गृहस्थेषु श्रद्धापूतेन चेतसा । मृगयार्थे गतो विप्रः कदाचिद्दैवयोगतः ॥ ३ ॥
घोरं कर्म कृतं तेन प्रारम्भे यौवनस्य च । लुण्ठितो ब्राह्मणस्तत्र प्रहारैर्पीडितो भृशम् ॥ ४ ॥
हतोऽप्यायुर्बलेनैव न ॥ मृत्युवशं गतः । ब्रह्मस्वमिति तज्ज्ञात्वा न भुक्तं केनचिद् गृहे ॥ ५ ॥
तेनैव भक्षितं सूत येन विप्रः प्रपीडितः । स गत्वा यमलोकं तु भुक्त्वा तु यमशासनम् ॥ ६ ॥
पात्रदानवशात्सूत स जातः क्षत्रियोऽधुना । देशे वैपाशिके लग्ने चापसंस्थेऽस्तगे रवौ ॥ ७ ॥
मेषगे राहुयुक्तेऽथ सौम्यर्क्षे विधुसंयुते । स गौरो दर्शनीयाक्षः सत्त्ववान्स्वल्पवित्तभाक् ॥ ८ ॥
धर्मे चाल्पमतिर्भ्रातृपितृमातृसमन्वितः । दानादिदं फलं सूत तथा पापफलं शृणु ॥ ९ ॥
यत्रयत्र कृता घाताः प्राग्भवे ब्राह्मणस्य च । इह जन्मनि तत्रास्ति बाल्ये कुष्ठगदान्वितः ॥१०॥
तथो स्त्रीपुत्रहीनोऽत्र जायते गरुडाग्रज । यौवनेऽपि च वार्द्धक्ये तस्येदं कर्मणः फलम् ॥११॥
एभिश्च लक्षणैः सूत लक्षणीयोऽत्र पृच्छकः । निष्कृतिं परमां सूत वक्ष्यामि शृणु तत्त्वतः॥१२॥
गायत्रीं विधिना जप्त्वा कोटिं शुद्धिमवाप्नुयात् । प्रयागे नियमन्वीगः काश्यां वा कुरुजाङ्गले १३

अथवाऽष्टसहस्राणि जप्त्वा कुर्यादिमं विधिम्। हिरण्मयौ सोमविष्णू कार्य्यौ सुपष्टकावुभौ॥१४॥
पत्रेऽथवा च तौ लेख्यौ सर्वलक्षणसंयुतौ। देयौ विप्राय विधिवत्पूजयित्वा प्रयत्नतः॥ १५॥
प्रायश्चित्ते कृते सूत कुष्ठहानिः प्रजायते। स्त्रीपुत्रसुखमत्रैव भवत्येव न संशयः॥ १६॥
प्रायश्चित्तं न कुर्याच्चेद्भवेद्रोगविवर्धनम्। न पुत्रसुखमाप्नोति स्वयं जीवन्कदाचन॥ १७॥
रिष्टं द्वात्रिंशदब्दे तु जीवनं वर्षसप्ततिम्। आनन्त्यात्सत्तु जीवानां विस्तरं नोदितं मया॥ १८॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदधिकाष्टशततमः॥ ८२९॥

---

श्रीसूर्य उवाच।

पृच्छको विधिना सूत दानधर्मरतो भवेत्। वैश्यः पूर्वभवे सूत व्यापारकुशलः सदा॥ १॥
दानयज्ञरतो नित्यं ब्राह्मणाऽतिथिपूजकः। तद्गृहे धान्यराशिं तु भक्षयन्ती क्षुधार्दिता॥ २॥
आसन्नप्रसवा सूत सुरभी कालमोहिता। भृशं तेन हता कुक्षौ लोभोपहतचेतसा॥ ३॥
बालवत्सो मृतस्तत्र गर्भस्थश्चातिताडनात्। तद्दुःखेन मृता सा तु धेनुराक्रन्दती पुरा॥ ४॥
एवं हि निवसंस्तत्र मृतोऽसौ यमशासनम्। प्राप्य स्वर्गे बहून्भोगान्भुक्त्वा पापफलं तथा॥५॥
शतद्रुनिकटे देशे जातोऽयं ब्राह्मणोऽधुना। धनुर्लग्नगते सौरौ गुरौ मीनेऽथवा रवौ॥ ६॥
कुलाग्रणीः कार्यकरो गुणी पित्तकफान्वितः। मध्यरूपयुतः श्रीमान् द्विभार्यो वित्तसंयुतः॥ ७॥
चन्द्रः पापयुतस्तत्र कन्यायां समवस्थितः। गोबालवत्सकवधात् पापात्पूर्वादपुत्रकः॥ ८॥
स्त्रीसाहाय्ययुतो यस्मात् पूर्वजन्मन्यभूदसौ। तेन कर्मविपाकेन स्त्री ज्येष्ठा पुत्रवर्जिता॥ ९॥
प्रायश्चित्ते कृते पुत्रः कनिष्ठायां भविष्यति॥ १०॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत्। कथ्यतां दिवसेशान लोकानां हितकाम्यया॥११॥

श्रीसूर्य उवाच।

प्रायश्चित्तं प्रवक्ष्यामि शृणुष्वाथ खगेश्वर। सुवर्णदशका सूत धेनुः कार्या सगर्भिका॥ १२॥
सर्वालंकारयुक्ता च पत्रे लेख्या यथोक्तवत्। तदर्धार्धप्रमाणा वा त्रिषु वित्तानुसारतः॥ १३॥
संपूज्य नाममन्त्रैस्तु सा देया ब्राह्मणाय गौः। "यन्मया पूर्वजनुषि पापं गोघाततः कृतम्॥१४॥
तदत्र पापनाशाय ददेऽहं गां हिरण्मयीम्"। मन्त्रमेनं समुच्चार्य्य दद्याद्विप्राय धीमते॥ १५॥
गायत्र्यष्टसहस्रं तु होमयेत्तदनन्तरम्। आसन्नप्रसवामेकां दद्याद्गां भोजयेद् द्विजान्॥ १६॥
अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत्। तस्य सन्ततिवृद्धिः स्यादत्र जन्मनि वै सुत॥१७॥
न करोति यदा श्रुत्वा प्रायश्चित्तं त्रिधा मतम्। इह जन्मन्यपुत्रः स्यान्मृते नरकमाप्नुयात्॥१८॥
एकहीनेऽथ पञ्चाशदब्देमृत्युर्ज्वरेण वै। प्रायश्चित्ते कृते ह्यायुः षष्टिरेकयुता समाः॥ १९॥
कन्यागते रवौ चन्द्रे मीनस्थे मरणं ध्रुवम्॥ २०॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकाष्टशततमः॥ ८३०॥

---

अरुण उवाच।

भूमिदेवकुलोत्पन्नः पूर्वजन्मन्यथात्र च। पृच्छको जगतां नाथ तस्य कर्म प्रकाशय॥ १॥

---

१ रंक इति–ख० पु०।

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे विप्रो गिरिवासी जितेन्द्रियः । विद्याभ्यासरतो नित्यं सत्यधर्मपरायणः ॥ २ ॥
दत्तानि तत्र दानानि ब्राह्मणेभ्यो हि शक्तितः । पर्वस्वपि च तेनैवाध्यापिता ब्राह्मणाः खग ॥३॥
अथ भाविबलात्तत्र ब्राह्मणेन तपस्विना । स्थापितं तद्गृहे स्वर्णं लोभयुक्तेन तेन च ॥ ४ ॥
ततो बहुतिथे काले कालधर्ममुपेयिवान् । स्वर्णापहारी सततं गतो हि यमशासनम् ॥ ५ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण जातोऽयं ब्राह्मणोऽधुना ॥ ६ ॥
सौराष्ट्रे च तुलालग्ने कुजो नातिलघुः सुधीः । धर्मकर्मक्रियायुक्तो लोभी दुःखसमन्वितः॥ ७ ॥
गौरवर्णः शनिर्यस्माल्लग्नगः सुतगः शशी । बहुकन्योऽल्पपुत्रश्च तस्माज्जीवोऽधुनाऽण्डज ॥ ८ ॥
यौवने स्त्रीसुखं त्यत्र द्विपञ्चाशन्मिताब्दके । भृशं पुत्रसुखं प्राप्तं पूर्वं ब्राह्मणपूजनात् ॥ ९ ॥
कर्कटस्थो सूर्यजीवौ तस्माद्राजोपसेवकः । सुवर्णहरणाद्दोषात्पूर्वजन्मनि मानद ॥ १० ॥
कुलस्त्री ह्यत्र विज्ञेयो लक्षणैस्तैर्विहंगैरसौ । अथो भ्रातृसाहाय्यात्तु ब्राह्मणस्वं हृतं पुरा ॥ ११ ॥
तेन तत्सहजो ज्येष्ठः पुत्रहीनोऽत्र जन्मनि । पृच्छकस्य तथा वर्षे पट्पञ्चाशन्मिते ध्रुवम् ॥१२॥
पुत्रारिष्टं विजानीयात् स्वदेहे वापि जायते ॥ १३ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् पुत्रारिष्टविनाशनीम् । त्वत्तोऽहं श्रोतुमिच्छामि सर्वलोकोपकारकम्॥१४॥

श्रीसूर्य उवाच ।

पलत्रयसुवर्णाढ्यां गां दद्याद्ब्राह्मणाय वै । तदर्धार्धमितां वापि श्रेष्ठमध्यकनिष्ठिकाम्[1] ॥ १५ ॥
निष्कं वित्तानुसारेण तत्पूजादिककल्पना । सुवर्णहरणात्पापात्तद्दानान्मुच्यतेऽधुना ॥ १६ ॥
षट्पञ्चाशन्मिते वर्षे रिष्टं चाकृतनिष्कृतेः । प्रायश्चित्ते कृते सूत पूर्णायुर्जायते नरः ॥ १७ ॥
सप्तसप्ततिवर्षाणि सपुत्रो जीवति ध्रुवम् । कार्तिके कृष्णपञ्चम्यां शशिन्यार्द्रागतेऽण्डज ॥ १८ ॥
वृषलग्ने च निधनं पृच्छकस्य भविष्यति ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकत्रिंशदधिकाष्टशततमः ॥ ८३१ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्कश्चिद् वैश्यो धर्मपरायणः । मथुरायां महाभाग भिषग्वृत्तिविशारदः ॥ १ ॥
भंजिताश्च महारोगा गवां तेन महात्मना । दत्तानि तत्र दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
पापमाचरितं तेन कामलुब्धेन चेतसा । स्वज्ञातिवनितायां वै व्यभिचारं चकार सः ॥ ३ ॥
तस्यास्तत्राभवद्गर्भः पातनं हि चकार सः । महौषधैः स्वेदनाद्यैः परीवादाद्भयाऽण्डज ॥ ४ ॥
सा मृता तेन दुःखेन गर्भपातेन निश्चितम् । पत्नीसाहाय्यात्ततं सर्वमेतदुपार्जितम् ॥ ५ ॥
ततो यमपुरं प्राप्तः सप्तद्वयोऽण्डजोत्तम । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ६ ॥
गवां दुःखापहारेण पुण्येनात्र वणिक्सुतः । जातो रामहृदग्रामे षष्टियोजनसंमिते ॥ ७ ॥
नात्युचः श्यामलो भव्यः स्वल्पवित्तसमन्वितः । चिह्नमज्ञातपक्षमेऽज्जे शुभदृष्टिविवर्जिते ॥ ८ ॥
चन्द्रे मिथुनराशिस्थे भौमदृष्टे च पुत्रक । साहाय्यलक्षणं सर्वं शृणुष्वाद्य खगेश्वर ॥ ९ ॥
या स्त्री पूर्वं सहायासीद् गर्भपातनकर्म्मणि । पृच्छकस्य तु सा नारी गर्भदुःखाऽऽकुलाऽत्र च॥१०॥

---

१ 'तन्न्यूनाधिकमध्यमा' इति ख० पु० । २ 'पित्त' इति--ख० पु० ।

वक्ष्यामि निष्कृतिं तस्य सर्वपापप्रणाशनीम्। माषैस्त्रिंशन्मितैरत्र कार्या वेश्या हिरण्मयी ॥ ११॥
अपि गर्भयुता लेख्या सुगन्धैश्चार्चिता सुत। तदर्धमितिका वाऽपि द्वयोर्वित्तानुसारतः ॥ १२ ॥
सा देया च विधिज्ञाय मन्त्रमेनमुदीरयेत्। गर्भपातनजाद्दोषात् पूर्वपापविशुद्धये ॥ १३ ॥
इत्युच्चार्य्य नरो दद्यात् सर्वपापविशोधनम्। सार्द्धं सहस्रद्वितयं गायत्रीं त्र्यम्बकं तथा ॥ १४ ॥
जपेद्धुत्वा दशांशेन पूर्वपापप्रणाशनम्। ब्राह्मणान्भोजयेच्छक्त्या दद्याच्चैव तु दक्षिणाम् ॥१५॥
एवं विधानं यः कुर्य्याद्विधिना पापशोधनम्। उत्पत्तिर्जायते तस्य सन्ततेर्नात्र संशयः ॥१६॥
न कुर्य्याद्विधिवत्तत्र लोभान्मोहाद्विशेषतः। इह जन्मन्यपुत्रत्वं जायते चान्यजन्मनि ॥ १७ ॥
पञ्चसप्तसमायुः स्यात्प्रायश्चित्ते कृते सति। चत्वारिंशन्मितेऽरिष्टं तस्य चाकृतनिष्कृतेः ॥१८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकाष्टशततमः ॥ ८३२ ॥

श्रीसूर्य उवाच।

राजपुत्रोऽभवत्पूर्वं क्रूरकर्म्मा प्रतापवान्। धनधान्यसमृद्धोऽपि वङ्गदेशे वसन्सदा ॥ १ ॥
याचकेभ्यः प्रदत्तानि गोभूम्यश्वादिकानि च। अथो भाविबलात्सूत लोभोपहतचेतसा ॥ २ ॥
सीम्नि वादे हृतं द्रव्यं ब्राह्मणानामधर्म्मतः। द्विजेन वै सहायेन कृतं तत्कर्म दारुणम् ॥ ३ ॥
भूमिवादे मृतस्तत्र सङ्ग्रामे कालनोदितः। भुक्त्वा भोगाञ्छुभान् स्वर्गे पापात्पापफलं तथा॥४॥
पूर्वपुण्यप्रभावेण स जातः पर्वतोऽधुना। भूमिपालकुलेऽरयुग्मे सिंहलग्ने गुरावजे ॥ ५ ॥
सूर्य्ये मेषगते चन्द्रे चापस्थे पापसंयुते। गौरः शूरो महोरस्तु बहुकन्यः कृती शुभः ॥ ६ ॥
ददाति शक्तितो धीमानात्पुत्रो बन्धुसंयुतः। बहुव्ययपरो नित्यं पैत्तिकः प्रियवाग्धृणी ॥ ७ ॥
बहुभार्यो यशस्वी च भृत्यवाहनसंयुतः। अष्टाविंशन्मिते वर्षे स्वल्पपुत्रः सुखान्वितः ॥ ८ ॥
अन्तरायोद्भवैः पुत्रैरतिदुःखप्रपीडितः। ब्रह्मस्वहरणात्पूर्वं धनहीनोऽत्र दृश्यते ॥ ९ ॥
सहायो यो द्विजः पूर्वं भवेऽभूद्विनतासुत। तुलायां सोऽनुजो जातश्चात्र जन्मन्यपुत्रकः ॥ १० ॥
शृणु सूत प्रवक्ष्यामि निष्कृतिं पापकर्मणः। यां कृत्वा विधिवज्जन्तुरिह पापात्प्रमुच्यते ॥११॥
पुण्येऽह्नि विमकथिते धेनूनां पञ्चकं सुत। दद्याच्च वृषभं गौरं पृष्ठे वस्त्रयुगान्वितम् ॥ १२ ॥
सुवर्णशृङ्गसहितं तथा क्षितियुतं शुभम्। मन्त्रेणानेन विधिवत्प्रथा श्रद्धासमन्वितः ॥ १३ ॥
भूमिभागयुतं गौरं वृषभं रुद्रदैवतम्। ददेऽहं सीम्नि द्रव्योत्थपापनाशाय वै द्विज ॥ १४ ॥
अथो स्वर्णद्वयाढ्यं तु शुभं दद्यात्तुरङ्गमम्। कर्मप्रकाशकायैव मन्त्रमेतमुदीरयेत् ॥ १५ ॥
"सोपस्करं काञ्चनाढ्यमश्वं तुभ्यमहं ददे। ब्रह्मस्वहरणात्पापान्मोक्षं कुरु ममानघ" ॥ १६ ॥
एवमुच्चार्य दद्याच्च पूजिताय द्विजातये। मुच्यते पूर्वपापाच्च ब्रह्मस्वहरणाद्ध्रुवम् ॥ १७ ॥
शृणुयाद्धरिवंशं च त्रिरावर्त्य विधानतः। होमयेद्दशसाहस्रं ब्राह्मणान्पञ्च भोजयेत् ॥ १८ ॥
य एवं कुरुते सूत विधिना पापशोधनम्। तस्य संततिवृद्धिः स्यादिहैव फलमश्नुते ॥ १९ ॥
नैवं कुर्य्याच्च विधिवत् तस्यारिष्टादिजं भयम् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकाष्टशततमः ॥ ८३३ ॥

श्रीसूर्य उवाच।

पृच्छकोऽयमयोध्यायामभूच्छूद्रश्च धार्म्मिकः। धनधान्यसमृद्धस्तु यशस्वी पितृवल्लभः ॥ १ ॥
गयायां द्वादशे वर्षे गतो मातृसाहाय्यतः। सानुजश्च सपत्नीकः सहायत्रयसंयुतः ॥ २ ॥

गत्वा च विधिवच्छ्राद्धं कृतवान्गरुडाग्रज । तस्य पुण्यप्रभावेण पितरश्च दिवं गताः ॥ ३ ॥
अथ गत्वा गृहे वर्षे चत्वारिंशन्मिते ध्रुवम् । कृतवान्दारुणं कर्म्म यौवने काममोहितः ॥ ४ ॥
स्वजातिजं धर्मशीलं शूद्रं हत्वा महौषधैः । पत्नीत्वे स्थापिता तत्र भार्या कामविमोहिता ॥ ५ ॥
सर्वस्वं तस्य यत्किंचित् गृहीतं विविधैश्छलैः । तस्य पुत्राश्च ये जातास्ते हतास्तस्य भार्यया ॥६॥
सपत्नीभावदुःखेन कृतं कर्म्मातिदारुणम् । पृच्छकस्य तु या माता तयाप्यनुकृतं त्विदम् ॥७॥
स्त्रीयुतोऽसौ मृतस्तत्र गतस्तु यमशासनम् पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा ॥ ८ ॥
गयाश्राद्धप्रभावात्तु स जातः पृथिवीपतिः । शतयोजनविस्तीर्णे देशे पर्वतमाश्रिते ॥ ९ ॥
पितृभक्तिविशेषात्तु चैहिकं लक्षणं त्विदम् । पितृभे जननं चास्य गुरुचन्द्रौ तु सिंहगौ ॥ १० ॥
वृषराशिगतो भानुर्भौमाज्ज्ञेया नभश्चराः । जन्मनो द्वादशे वर्षे राज्यप्राप्तिर्न संशयः ॥ ११ ॥
जातोऽत्र रक्तकृष्णोऽसौ देवब्राह्मणपूजकः । पितृभक्तिरतो विद्वान् गीतनृत्यप्रियः कविः॥ १२ ॥
देशेदेशेऽतिविख्यातो दाता भोक्ता बलान्वितः । सहोदरविहीनस्तु बहुपुत्रो बहुप्रजः ॥ १३ ॥
बहुनार्यो यशस्वी च क्षयवृद्धिधनान्वितः । पादजस्य यथापूर्वं पापादत्र च पृच्छकः ॥ १४ ॥
पादोदग्व्ययायुक्तो यौवने जायते ध्रुवम् । त्रिसहायैर्युतः पूर्वं शृणुष्वाथ खगेश्वर ॥ १५ ॥
या धर्मपत्नी पूर्वाऽऽसीत्सा ज्येष्ठाऽत्र मृतप्रजा । बालघातं कर्म्म यस्मात्पूर्वेऽत्र विनतासुत॥१६॥
योऽनुजः पूर्वजनुषि गयाया च सहायकः । स जातः कर्कटे जीवे पृच्छकस्य सुतोऽधुना ॥१७॥
वसुभे मिथुनेस्थेऽर्के सोऽपि राजा भविष्यति । याऽभवत्पूर्वजनुषि माताऽत्र जननी तु सा ॥ १८ ॥
प्राक् श्राद्धकर्मतोऽपापा जाता राज्ञी यशस्विनी । पापस्यानुमतात्पूर्वं ह्यत्र भर्तृविहीनता ॥ १९ ॥
पूर्वजन्मनि य शूद्रं हत्वाऽऽनीता शुभानना । शूद्रस्य चाथ सर्वस्वं तस्य कर्म्मफलं शृणु॥ २० ॥
अत्र जन्मनि सा नारी मृता त्रिंशन्मिताब्दके । कुचत्वारिंशके वर्षे शूद्रघातः कृतः पुरा ॥२१॥
जन्मतस्तन्मिते वर्षे मद्गुर्मृत्युर्भविष्यति । देशोत्पातो भृश तत्र हाहाकारो विलुण्ठनम् ॥ २२ ॥
अथवा सर्वज्येष्ठस्य सुतस्य मरणं भवेत् ॥ २३ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्नयो रिष्टनिषूदनी । कथ्यतां दिवसेशान लोकानां हितकाम्यया ॥२४॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं तस्य कर्म्मणः । यां कृत्वा विधिवज्जन्तुरिह रिष्टात्प्रमुच्यते॥२५॥
श्रुत्वेमं पुस्तकं पुत्र भ्रष्टा श्रद्धासमन्वितः । पूर्वं पापघटं दत्त्वा पश्चात्कर्म समाचरेत् ॥ २६ ॥
भ्रष्टा गृहे शुचिस्थाने स्नात्वा तु विमले जले । देवान्पितॄन्समभ्यर्च्य सुमनाः सुसमाहितः ॥२७॥
भक्त्या सपूज्येद्देवं ततः कार्य्यं समाचरेत् । शूद्रस्य प्रतिमा कार्य्या पलैः संप्रमितः शुभा॥२८॥
हिरण्मयी यथोक्ता हि तदर्धार्धेन वा पुनः । कालस्य शोभना मूर्तिः कार्य्या लोहमयी शुभा॥२९॥
द्विजाय विधिना देया मन्त्रेणानेन धीमता । काममोहात्कृतं पूर्वं यन्मया शूद्रघातनम् ॥ ३० ॥
तस्मात्तन्निष्कृतिं विप्र ददेऽहं तुभ्यमत्र च । "काल त्वं सर्वभूतानां भयदश्च क्षयंकरः ॥ ३१ ॥
मा रक्ष पूजितोऽसि त्वं रिष्टात्पापसमुद्भवात् ।"अथाष्ट मूर्तयः सत दिक्पालानां हिरण्यजाः॥३२॥
अष्टस्वर्णमिता देया विप्रेभ्यो दोषनाशकाः । अथ रुक्ममयी मूर्तिं विष्णोर्दद्यात्पलत्रिकाम्॥३३॥
विप्राय वेदविदुषे दत्त्वा विप्रांश्च भोजयेत् । शिवस्य पूजनं कुर्यात् पूर्वपापविशुद्धये ॥ ३४ ॥

१ 'शतमिते' इति-ग० पु० ।

पुत्रपौत्रधनैर्युक्त इह जन्मनि जायते। श्रुत्वेमं पुस्तकं सूत नेमां कुर्याच्च निष्कृतिम्॥ ३५॥
इह पुत्रविहीनः स्यादेकवेदमितेऽब्दके। द्विसप्ततिमिते वर्षे मृत्युश्च कृतनिष्कृतेः॥ ३६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुस्त्रिंशदधिकाष्टशततमः॥ ८३४॥

---

श्रीसूर्य उवाच।

आसीत्पूर्वभवे कश्चिद्विराटे ब्राह्मणोऽण्डज। विद्याभ्यासविहीनश्च कृषिकर्मरतः सदा॥ १॥
स्वल्पवित्तयुतस्त्यागी बन्धुमान्यो मिताशनः। स्ववर्णधर्मरहितोऽतिथीनां पूजने रतः॥ २॥
अथो तस्य गृहे कश्चिद्विप्रः स्थापितवान्धनम्। तस्मै द्विजाय लोभाद्वै पुनर्दत्तं न तद्धनम्॥ ३॥
दम्पतिभ्यां मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा। गत्वा धर्मपुरं देवाच्छुभं वा यदि वाऽशुभम्॥४॥
फलं भुक्त्वाऽधुना जातः शतद्रुनिकटे खग। रवौ केतुयुते चन्द्रे मेषराशिगतेऽण्डज॥ ५॥
मध्यमो रक्तगौरश्च पूर्वापरसहोदरैः। रहितो बाहुजस्त्यागी सुखी बन्धुरतः सदा॥ ६॥
धूर्तो व्ययान्वितो वाग्मी वातपित्तविवर्जितः। स्त्रीसाहाय्ययुतो यस्मात् पूर्वजन्मनि मानद॥७॥
कृतवान्दारुणं कर्म तस्य वक्ष्यामि लक्षणम्। तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः॥८॥
रक्तस्रावादिना पीडा जायते चोदरेऽनिलः। तस्याश्चोदरजं गर्भं पातयेच्चैव पृष्ठतः॥ ९॥
द्विवैस्तु पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तदा। केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत्॥ १०॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। व्यभिचारभयाद्वापि तया गर्भश्च पातितः॥ ११॥
अतिकष्टाद्वैनतेय गर्भपातकृतागसा। अपरं च कृतं कर्म व्यभिचारो यतस्ततः॥ १२॥
नानाद्रव्यमहर्घं च कुलटा वाक्यलङ्घनात्। भर्तुस्तु चौरिणीवृत्तिरिष्टसंगतिवर्जनात्॥ १३॥
तेन दुष्टेन यद् द्रव्यं हृतं तस्करबुद्धिना। भुक्तं ताभ्यां वैनतेय ब्रह्मस्वं तत्र जन्मनि॥ १४॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः। यातना बहुधा प्राप्ता पश्चान्मानुषतां गतः॥ १५॥
किंचित्पुण्यप्रभावेण सञ्जोऽयं जन्मतो भुवि। इंदुस्तृतीयो हि लग्नाद् गर्भपातोऽप्यतो भवेत्॥१६॥
उभाभ्यां हि कृतं कर्म भुज्यते जन्मजन्मनि॥ १७॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि विश्वेश येन गर्भः स्थिरो भवेत्॥१८॥

श्रीसूर्य उवाच।

सुशुभं भूप्रदेशं तु गोमयेनोपलेपयेत्। कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः॥ १९॥
तन्मध्ये स्थापयेत्तस्योपरि कुम्भं सुलक्षणम्। सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवैः॥ २०॥
तस्योपरि न्यसेत्पात्रं वेणवं वर्तुलाकृति। तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम्॥ २१॥
सुवर्णस्य विशुद्धां च दापयेद्देववादिने। प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम्॥ २२॥
संकटान्मोचयेद्देतुं स्त्रीयुतो भक्तिभावितः। एवं कृतविधेः सूत निश्चला संततिर्भवेत्॥ २३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदधिकाष्टशततमः॥ ८३५॥

---

१ ऽति तामसः' इति–ख० पु०। २'कन्यागते' इति ख० पु०। ३ अत्र किंचित्त्रुटितमिव प्रतिभाति।

श्रीसूर्य उवाच।

कश्चिदासीत्पुरा भोजे ब्राह्मणो ज्ञानदुर्बलः। स्वल्पाध्ययनयुक्तश्च सुबुद्धिरतिथिप्रियः ॥ १ ॥
दानधर्मरतः शक्त्या ब्राह्मणानां च पूजकः। परग्रामे स्थितस्तस्य शत्रुः सीमापहारकः ॥ २॥
स तेन रात्रौ सततं गत्वा चौर्येण घातितः। प्रहारैरतिविद्धस्तु गतः स यमशासनम् ॥ ३ ॥
संततिस्तस्य दुःखार्ताऽभक्ष्यपानहराकुला। सहायाढ्येन विप्रेण कृतं कर्मातिदारुणम् ॥ ४ ॥
ततो बहुतिथे काले सोऽपि प्राप्तो यमालयम्। भुक्त्वा च नरकान्घोरान् ब्रह्महत्यासमुद्भवान् ॥५॥
पुण्यात्स्वर्गफलं चापि ब्राह्मणातिथिपूजनात्। दानाच्च भूम्भवे सूत स जातो ब्राह्मणाद्द्विजः ॥ ६॥
बाहुजः क्षात्रधर्माच्च गतिं प्राप्तोऽत्र जन्मनि। कुरुक्षेत्रात्परे भागे त्रिंशद्योजनसम्मिते ॥ ७ ॥
स रक्तगौरो मतिमान् विधिज्ञो धनभोगभुक्। पितृभ्रातृसुखैश्वर्यमन्त्रीमित्रज्ञातिसंयुतः ॥ ८ ॥
नातिह्रस्वो नातिदीर्घो वाहनाढ्यः प्रभुः कृशः। आयन्नसुखभोगी च प्राग्दानाद्द्विजपूजनात् ॥९॥
लोभमोहरतः पापात्स कश्चित्पापयुग्भवेत्। यौवने ब्रह्मघातात्प्रागत्र जन्मनि चाण्डज ॥ १० ॥
क्षयरोगान्वितो पूनि तथा पुत्रविवर्जितः। सहायलक्षणं चात्र वक्ष्यामि गरुडाग्रज ॥ ११ ॥
यश्च प्राग्वै सहायोऽभूत्तत्परो ब्रह्मघातने। सोऽग्रजः भ्रातुरत्रासीद्यौवने हि क्षयं गतः ॥ १२ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। पलैरेकादशमितैः कृत्वा विप्रं हिरण्मयम् ॥ १३ ॥
सर्वावयवसंयुक्तं सुलेख्यं वस्त्रसंयुतम्। तद्वद् कदलीं कृत्वा शुभां लेख्यां सपल्लवाम् ॥ १४ ॥
दद्यादत्र विधिज्ञाय तदर्द्धं वा नियोजयेत्। सोमं दद्यात्पलैस्तत्त्वै राजतं शुभलक्षणम् ॥ १५ ॥
दिक्पालांश्च ततो दद्याद्राजतान्शक्रपूर्वकान्। पलैः षोडशभिस्सद्धिर्गन्धमाल्यैः प्रपूजितान् ॥१६॥
सुवर्णत्रिमितं सूर्यं दद्याद्दोषापनुत्तये। चत्वारिंशत्सहस्राणि गायत्रीं च जपेत्ततः ॥ १७ ॥
भोजयेच्च द्विजाञ्शक्त्या क्षयरोगाद्विमुच्यते। अथवा कोटिमेकां तु सावित्रीजपमाचरेत् ॥ १८ ॥
होमयेच्चाष्टसाहस्रं क्षयरोगोपशान्तये। य एवं कुरुते सूत प्रायश्चित्तं त्रिधा मतम् ॥ १९ ॥
न तस्य क्षयरोगोऽस्ति जन्मन्यत्र च वै ध्रुवम्। प्राक्कृतात्सर्वपापाच्च ब्रह्मघातात्प्रमुच्यते ॥ २० ॥
नाधयो व्याधयस्तस्य भविष्यन्ति तदुद्भवाः। नैवं करोति यो लोभाद्विभवे सति तत्क्षणात् ॥२१॥
क्षयरोगेण तन्मृत्युर्युवभावेऽत्र जन्मनि। प्रायश्चित्ते कृते ह्यायुश्चतुःसप्ततिवत्सरम् ॥ २२ ॥
स्थिरं तत्त्वमिते तस्य तथा चाकृतनिष्कृतेः ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदधिकाष्टशततमः ॥ ८३६ ॥

---

श्रीसूर्य उवाच।

ब्राह्मणस्य कुले कश्चित्पूर्वं कीरसमुद्भवः। धर्मशास्त्रक्रियायुक्तस्तेजस्वी कुलविश्रुतः ॥ १ ॥
दत्तानि तेन दानानि प्राप्ते सोमग्रहे सुत। पर्वस्वपि च विप्रेभ्यो दम्भयुक्तेन चेतसा ॥ २ ॥
पापमाचरितं तेन कामतस्तेन निश्चितम्। बाहुजायां धृतो गर्भो भाविनोऽयस्य गौरवात् ॥ ३ ॥
स्वज्ञातीयायां पक्षिवर कृतं तत्पातनं तथा। ततः किंचिद्गते काले स प्राप्तोऽन्तकशासनम् ॥ ४ ॥
भुक्त्वा पापाच्च नरकान्पुण्यात्स्वर्गफलं तथा। पूर्वधर्मप्रभावेण स जातः पादजोऽधुना ॥ ५ ॥
मीनराशिगते सौरौ देशे पञ्चनदाभिधे। गौरः कलानिधिः श्रेष्ठः स्त्रीभिन्नसुखसंयुतः ॥ ६ ॥
ऐश्वर्याढ्यो वाग्विनोदी धनभोगसमन्वितः। सभायां चतुरो धीरो मानवाहनकीर्तिभाक् ॥७ ॥
षड्विंशतिवर्षे तु मन्त्री मन्त्रवरस्तथा। सप्तत्रिंशद्गते चाब्दे जातपुत्रविनाशकः ॥ ८ ॥
बाहुजायां वीर्यदानात्तद्धान्मृतपुत्रकः। लक्ष्मैतदत्र स्याच्च सौरिः पापान्वितः सुत ॥ ९ ॥

स्त्रीगोविप्रवधाः पापाः सुतशान्तिकरा यतः । वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधनीम् ॥ १० ॥
बाहुजाप्रतिमा कार्या पलदंशमितैः शुभा । हिरण्मयी सुरूपा च पत्रे लेख्याऽतिसुन्दरी ॥ ११ ॥
तदर्द्धार्द्धमिता वापि त्रिषु वित्तानुसारतः । संपूज्य गन्धपुष्पाद्यैः सा देया मन्त्रपूर्विका ॥ १२ ॥
सुवर्णकविंशुं दद्यात्सर्वपापप्रणाशनम् । रौक्मं शुभं तया दद्यादिन्द्रं सार्धपलात्मकम् ॥ १३ ॥
गायत्र्यष्टसहस्रं तु होमयेत्तद्दशांशतः । ब्राह्मणान्भोजयेच्छक्त्या सर्वपापात्प्रमुच्यते ॥ १४ ॥
य एवं कुरुते सूत पूर्वपापप्रणाशनम् । तस्य पुत्रविशुद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि ॥ १५ ॥
नैवं करोति यो मोहात्प्रायश्चित्तं यथामतम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ॥ १६ ॥
प्रायश्चित्ते कृते त्वायुः पञ्चाशीतिमिताब्दकम् । प्रायश्चित्तेऽकृतेऽनिष्टं वेदव्यासमिते ध्रुवम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदधिकाष्टशततमः ॥ ८३७ ॥

---

## श्रीसूर्य उवाच ।

पूर्वेऽसौ वैश्यजः सूत गयायां चावसत्सुत । श्रुतिशास्त्रक्रियाहीनः पुत्रपौत्रैश्च संयुतः ॥ १ ॥
विप्रातिसङ्गतस्तत्र काशीस्नानं चकार सः । दुःखेन पाल्यते तेन कुटुम्बं तुरगेण वै ॥ २ ॥
एकदा तु वनं गत्वा ददाह वनमल्पकम् । तस्मिन्दाहे तु निर्दग्धा जन्तवस्तु खगाधिप ॥ ३ ॥
दुष्कृतं च कृतं कर्म कुटुम्बभरणाय च । स्त्रीपुत्रमित्रसंयुक्तो गतो यमपुरं प्रति ॥ ४ ॥
भुक्त्वा शुभाशुभं तत्र जातोऽयं बाहुजोऽधुना । विपाशरावतीमध्ये भ्रातृयुक्तोऽल्पवित्तभाक् ॥ ५ ॥
धनुःस्थे तु गुरावृक्षे रेवत्यां मृगभे शनौ । श्यामगौरस्तथा मध्ये दुःखदुःखोदयान्वितः ॥ ६ ॥
सकन्यो बहुभार्यश्च पुत्रहीनोऽत्र दृश्यते । आपञ्चपञ्चवर्षात्तु जातपुत्रविनाशकः ॥ ७ ॥
जीवदाहात्कृतात्पापात्स्वल्पपुत्रोऽत्र वै खग । स्त्रीसहाययुतो यस्मात्पतिस्त्वं च भविष्यति ॥ ८ ॥
सत्त्वघातात्पुरा चात्र कण्ठादूर्द्ध्वं रुजान्वितः । प्रायश्चित्ते कृते सूत तयोः पुत्रसुखं त्विह ॥ ९ ॥
प्रवक्ष्यामि खगाध्यक्ष शृणु पापविशोधनम् । राजताश्चटङ्काः कार्याः पत्रे लेख्या वनान्तिके १०
पलत्रिंशन्मिते यत्नाद्देहाङ्गुलिमिताधिके । तदर्धार्धमिते वापि न न्यूनाधिककल्पना ॥ ११ ॥
तत्र वृश्चिकसर्पौ तु कार्यौ यत्नाद्वनान्तरे । वनदेवी तथा कार्या माषपञ्चहिरण्मयी ॥ १२ ॥
वृक्षा लेख्या वने तस्मिल्लतापाथिसमन्विताः । सर्वं संपूज्य विधिवद्गन्धपुष्पाक्षतादिभिः ॥ १३ ॥
ब्राह्मणाय प्रदातव्यं पूर्ववन्मन्त्रमुच्चरेत् । "वनान्तरगताः सर्वे ये जीवा दाहिताः पुरा ॥ १४ ॥
वनदेव्यादिदानात्तु गच्छन्तु मम पातकाः ।" य एवं कुरुते सूत पुत्रसौख्यविवर्द्धनम् ॥ १५ ॥
भविष्यति न संदेहो दानस्यास्य प्रभावतः। नैवं करोति यो मोहान्नाशं प्राप्नोति तत्सुतः ॥ १६ ॥
यथाऽस्य भ्रातरो याता नाशं पुत्रस्तथैव च । रिष्टं पञ्चाशदब्दे तु प्रायश्चित्तेऽकृतेऽधुना ॥ १७ ॥
प्रायश्चित्ते कृते त्वायुरष्टषष्टिसमाः सुत । फाल्गुने पुष्यनक्षत्रे निर्याणं कथितं मया ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकाष्टशततमः ॥ ८३८ ॥

---

## श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि पूर्वकर्मविचेष्टितम् । प्रागासीद्ब्राह्मणो विद्वान्स्वदेशे धर्मवित्सुधीः ॥ १ ॥
विद्याभ्यासयुतो नित्यं धर्मकर्मरतः सदा । दत्तानि तेन दानानि स्वर्णान्यां श्रद्धयान्वितम् ॥ २ ॥
अथो पापं कृतं तेन कामलुब्धेन निश्चयात् । ब्राह्मण्यां धारितो गर्भो भाविनोऽर्थस्य वै बलात् ३

---

1 तथास्य भ्रातरो माता' इति—ख० पु० ।

यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम् । ततो लोकभयात्सूत विषं भुक्त्वा मृता तु सा ॥ ४ ॥
देव्या गृहे च वसती देवीपूजनतत्परा । तेन चान्यैर्हृतं तस्या देवस्वं तदुपार्जितम् ॥ ५ ॥
स्त्रीभ्यां युक्तेन विप्रेण भाकृतं कर्म दारुणम् । द्रव्यलोभभयात्सूत कामलोभात्तथैव च ॥ ६ ॥
ततो मृत्युवशं प्राप्तो ब्राह्मणो वेदपारगः । भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गफलं तथा ॥ ७ ॥
भाद्राष्टम्यां मेषलग्ने मृगस्थे च शनैश्चरे । इंदौ बुधे पर्वते हि स जातः क्षत्रियोऽधुना ॥ ८ ॥
दीर्घो मध्यमरूपाढ्यो देवब्राह्मणपूजकः । धर्मशास्त्रक्रियायुक्तो महोद्यमरतः सदा ॥ ९ ॥
तीर्थप्रियो यशस्वी च वन्धुमान्यः सुखी नरः । सुशीलो वाग्विलासी च धनवृद्धिक्षयान्वितः॥१०॥
स्त्रीभ्यां साहाय्ययुक्तेन पापमाचरितं पुरा । तस्मात्ते वनिते द्वे तु पुत्रहीने च पुत्रक ॥ ११ ॥
तयोश्चैका मृता पूर्वं पुत्रदुःखप्रपीडिता । या त्वन्या सापि पुत्रार्थेऽतिदुःखाकुलाऽण्डज ॥ १२ ॥
ब्राह्मण्यां प्राग्भुतो गर्भस्त्यक्त्वा सुकमलेक्षणाम् ।तस्मादत्र स्त्रियामन्यः स्थिरगर्भो न जायते॥१३॥
ब्रह्मस्त्रीगोवधाः पापाः पुत्रदुःखकरा यतः । योमिलित्वा धनं भुक्तं देवस्वं तदुपार्जितम् ॥ १४ ॥
नीचकर्मरताः पूर्वं जन्मन्यत्र द्विजादयः । ते मनुष्या भ्रष्टाः पुत्रहीना मृता ध्रुवम् ॥ १५ ॥
पृच्छकेन तु प्राग्भुक्तं देवस्वं हि यथा यथा । नात्र जन्मनि लोभाद्वै तद्भुक्तं बहुदुःखदम्॥१६॥
एवं सर्वसहायानां लक्षणैः सहितोऽण्डज । स्वर्कायैश्चापि विज्ञेयः पृच्छको नात्र संशयः ॥ १७ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापप्रणाशिनीम् । अत्र पुण्यकर्त्री पुण्यां सर्वदुःखविनाशनीम् ॥ १८ ॥

श्रीसूर्य उवाच ।

राजतं कमलं कुर्य्यात् पलाष्टकमितं शुभम् । ब्राह्मणं स्थापयेत्तत्र रौप्यं पद्मं पलैर्मितम् ॥१९॥
पलद्वयमितां कुर्य्याद्राजतीं ब्राह्मणीं शुभाम् । सपुत्री विधिवद्देया सर्वविद्याऽन्विताय च ॥ २० ॥
द्विजाय विधिना पुत्र मन्त्रमेतमुदीरयेत् ।"कारणं सृष्टिरुत्पत्तेर्ब्रह्मणो ब्राह्मणीं शुभाम् ॥ २१ ॥
पूर्वपापविशुद्ध्यर्थं गर्भधारणनाशजम् । ददेऽहं तु महाभाग तुभ्यं मां च शिवं कुरु" ॥ २२ ॥
इत्युच्चार्य नरो दद्यात्पूर्वपापापनुत्तये । होमयेच्च तिलांस्तत्र गायत्र्या शक्तितोऽण्डज ॥ २३ ॥
शृणुयाद्धरिवंशं तु दशावर्त्यं विधानतः ॥ २४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकाष्टशततमः ॥ ८३९ ॥

---

श्रीसूर्य उवाच ।

क्षात्रे कुले समुद्भूतश्चोग्रदण्डः प्रतापवान् । ग्रामाध्यक्षो महाभाग यमुनायां महाबलः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यतिशक्तितः । कुरुक्षेत्रादितीर्थेषु ग्रहणेषु विशेषतः ॥ २ ॥
पापमाचरितं तेन स्वकुले दुष्टचेतसा । ग्रामान्तरस्थितस्यान्यक्षत्रियस्य विजानता ॥ ३ ॥
वैरिभावेन वै रात्रौ घातितश्चोग्रकर्मणा । तत्पुत्रो ह्येकपुत्रस्य भाविनोऽर्थस्य गौरवात् ॥ ४ ॥
स ततस्तेन दुःखेन मृतः पूर्वमपुत्रकः । युवभावे महात्म्येन कृतं पापकर्म दारुणम् ॥ ५ ॥
स तेन कर्मणा युक्तो गतो यमपुरं प्रति । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ६ ॥
पूर्वपुण्यप्रभावेण स जातो धनिनां कुले । देशाद्ग्रामहदायाम्ये दशयोजनसंमिते ॥ ७ ॥
स वणिग्स्वर्णवर्णाढ्यः पितृभ्रातृसमन्वितः । नानासुखैश्वर्ययुतो गुणी रत्नसमन्वितः ॥ ८ ॥

साध्वी दानदयायुक्ता भार्या शीलवती सुत। पुण्याद्युक्तमिदं लक्ष्म पापात्पापफलं शृणु ॥ ९ ॥
लोभी पापरतः किञ्चिन्मात्रहीनः क्रियालसः। पित्ताधिकः शठो धूर्तो मनोदुःखसमन्वितः ॥१०॥
प्राग्बालघातात्सततं जातसन्ततिनाशकः। जन्मन्यत्र च तच्चिह्नं चन्द्रात्सौरी सुतस्थिते ॥ ११ ॥
कन्यास्थेऽङ्गात्सुते राहौ चन्द्रे केतुयुतेऽण्डज। बालघातः कृतो यस्मात्प्राग्भवे यौवनेऽत्र च॥१२॥
अष्टाविंशान्मिताब्दान्तमभूत्पुत्रविनाशनम्। लक्षणैर्लक्षयेदत्र पृच्छकं गरुडाग्रज ॥ १३ ॥
वक्ष्यामि निष्कृतिं तस्य सर्वपापविशोधनीम्। सुवर्णाद्विनिर्मिता कार्या प्रतिमा शैशवी शुभा॥१४॥
लक्ष्या तत्र सुगन्धेन पत्रे स्वर्णमयेऽण्डज। सर्वाभरणसंयुक्ता मन्त्रैः पूज्या विशेषतः ॥ १५ ॥
सा देया तु विधिज्ञाय मन्त्रेणानेन धीमता। "यत्कृतं पूर्वजनुषि स्वज्ञातिशिशुनाशनम्॥ १६ ॥
तज्जातपापनाशाय ददेऽहं स्वर्णजं शिशुम्।" इत्युच्चार्य नरो दद्याद्बालघाताद्प्रमुच्यते ॥ १७ ॥
ततः पञ्चदशांशं पदेयात्पशुपतिं द्विज। माषैः पञ्चमितैः सूर्यं दद्याद्धर्मं द्विजातये ॥ १८ ॥
गायत्र्ययुतसहस्रं तु त्र्यम्बकं त्रिसहस्रकम्। जपेच्च होमयेद्विप्र सर्वं बहुफलप्रदम् ॥ १९ ॥
दानं च भोजयेच्छक्त्या विप्रान्दद्याच्च दक्षिणाम्। लक्षरुद्रं त्रिगुणितं पूजयेद्वा विधानतः ॥२०॥
य एवं कुरुते सूत विधिना पापशोधनम्। अत्र पुत्रविशुद्धिः स्याज्जीविष्यन्ति च तत्सुताः ॥२१॥
नैवं कुर्यात्तयोरेकं लोभान्मोहाद्विशेषतः। न जीवन्ति सुतास्तस्मिन्नजीविते नात्र संशयः ॥ २२ ॥
रिष्टं षड्विंशदब्देऽत्र तस्य चाकृतनिष्कृतेः। प्रायश्चित्ते कृते ह्यायुः पदसप्तमितं ध्रुवम् ॥२३॥

इति श्रीसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदधिकाष्टशततमः ॥ ८४० ॥

---

## श्रीसूर्य उवाच।

प्रागासीद्वङ्गदेशेऽसौ द्विजो राजपुरोहितः। विद्याऽभ्यासयुतो नित्यं धर्मकर्मरतस्तथा ॥ १ ॥
दत्तानि तेन दानानि प्राप्ते सोमग्रहे सुत। पर्वस्वपि च विप्रेभ्यः श्रद्धापूतेन चेतसा ॥ २ ॥
अथो पापं कृतं तत्र कामलुब्धेन निश्चयात्। ब्राह्मण्यां धारितो गर्भो भाविनोऽर्थस्य गौरवात् ३
यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम्। ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥४॥
गर्भस्थोऽपि मृतस्तस्या बालको विनतासुत। स्त्रीभ्यां युतेन विप्रेण प्राक्कृतं कर्म दारुणम्॥५॥
ततो मृत्युवशं प्राप्तो ब्राह्मणो वेदपारगः। सहायाभ्यां युतस्तत्र सोमलोकं पुरा ययौ ॥ ६ ॥
सोमग्रहे महादानाद्भुक्त्वा भोगांश्च शाश्वतान्। ततो यमपुरं प्राप्तो भुक्त्वा पापफलं तथा ॥ ७ ॥
महापापकृताद्दोषाद्द्विविधं ब्राह्मणादधः। क्षात्रे कुले महाद्युष्टे पर्वताश्रयमाश्रिते ॥ ८ ॥
चन्द्रे पापगते लग्ने तुलाख्ये कर्कटे गुरौ। भानौ मकरराशिस्थे स जातोऽप्यत्र जन्मनि ॥ ९ ॥
गौरः सूक्ष्मः कृशो भोक्ता चपलो लोभसंयुतः। विद्याभ्यासरतो नित्यं सत्यधर्मपरायणः ॥ १० ॥
सुखैश्वर्ययुतः क्वापि कचित्पापयुतः क्षमी। शौर्याढ्यो गतियशस्वी च धर्मबुद्धिरतस्तदा ॥ ११ ॥
स्त्रीगर्भपातजाद्दोषान्मृतपुत्रोऽत्र जन्मनि। ब्राह्मण्यां वीर्यदानाच्च सुखं दुःखमथाण्डज ॥ १२ ॥
एतैर्लक्षणसंयुक्तः पृच्छकश्चाण्डजोत्तम। सहायाभ्यां युतो यस्मादासीत्स्त्रीभ्यां परे भवे ॥ १३ ॥
तेन पुत्रविहीने ते वनिते द्वे मृते सुत। बाल्ययौवनसंप्राप्ते पुत्रदुःखप्रपीडिते ॥ १४ ॥
गोस्त्रीब्रह्मवधाः पापाः पुत्रनाशकरा यतः ॥ १५ ॥

## अरुण उवाच।

पापेभ्यो मुच्यते जन्तुः प्रायश्चित्ती यतोऽनघ। तद्वदस्व महाभाग प्रायश्चित्तं प्रयत्नतः ॥ १६ ॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं प्रवक्ष्यामि पूर्वपापप्रणाशनम् । राजतं कमलं कुर्यात्पलत्रिकमितं शुभम् ॥ १७ ॥
ब्रह्माणं स्थापयेत्तत्र सौवर्णं स्वर्णाष्टकं विभुम् । अस्योपरि न्यसेत्सूर्यं राजतं पलपञ्चकम् ॥ १८ ॥
पलद्वयमितां कुर्याद्ब्राह्मणीं राजतीं शुभाम् । सपुत्रा विधिवद्देया कर्मप्रकाशकाय वै ॥ १९ ॥
द्विजाय विधिनापूज्य मन्त्रमेतमुदीरयेत् । "सूर्यं सहाश्वं ब्रह्माणं ब्राह्मणीं च सुतान्विताम् ॥२०॥
पूर्वपापविशुद्ध्यर्थं गर्भधारणनाशजम् । ददेऽहं तु महाभाग तुभ्यं मां च शिवं कुरु " ॥ २१ ॥
इत्युच्चार्य ततो दद्याद्धेनूनां पञ्चकं सुत । होमयेच्च तिलांस्तत्र गायत्र्या शक्तितोऽण्डज ॥ २२ ॥
बालवत्सयुतां दद्याद्धेनुं च कपिलां शुभाम् । शृणुयाद्धरिवंशं वा शतावर्त्यं विधानतः ॥ २३ ॥
लक्षरुद्रं त्रिगुणितं पूजयेद्वा प्रयत्नतः । नैवं करोति यः सूत प्रायश्चित्तं त्रिधा मतम् ॥ २४ ॥
इह जन्मन्यपुत्रः स्याद्दष्टपञ्चमितेऽब्दके । करोति विधिना यस्तु पुत्राढ्यो जायतेऽधुना ॥ २५ ॥
पष्टिरेकयुताऽब्दानां तस्य चायुः खगेश्वर । सौम्यामत्र सुशीलाभ्यां सुतवृद्धिर्भविष्यति ॥२६ ॥
नाधयो व्याधयस्तस्य प्रायश्चित्ते कृते सति । फाल्गुने कृष्णपञ्चम्यां स्यात्पक्षे मिथुनोदये॥२७॥
निर्याणं कथितं तस्य विस्तारं च विचारयेत् ॥ २८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदधिकाष्टशततमः ॥ ८४१ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे कश्चिद्विराटे क्षत्रियोऽण्डज । विद्याऽभ्यासविहीनश्च कृषिकर्मरतः सदा ॥ १ ॥
स्वल्पवित्तयुतस्त्यागी भ्रातृमान्योऽतितामसः । स्वाचारधर्मरहितोऽतिथिपूजनतत्परः ॥ २ ॥
वित्तैर्हीनार्थिकैर्युक्तो रक्तः श्यामोऽतिदुर्मतिः । अथो तस्य गृहे कश्चिद्द्विजः स्थापितवान्धनम् ॥३॥
तस्मै द्विजाय लोभाद्धि पुनर्दत्तं न तद्धनु । दम्पतिभ्यां मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा ॥ ४ ॥
गत्वा धर्मपुरं दैवाच्छुभं वा यदि वाऽशुभम् । फलं भुक्त्वाऽधुना जातः पुष्करे पञ्चयोजने ॥ ५ ॥
कर्कटस्थे गुरौ लग्ने वृश्चिके चन्द्रसंस्थिते । मध्यमो रक्तगौरश्च पूर्वापरसहोदरैः ॥ ६ ॥
रहितो बाहुजस्त्यागी सुखी दम्भरतस्तथा । धूर्तो विद्यान्वितो वाग्मी बाल्ये पित्रोर्विवर्जितः॥७॥
स्त्रीसाहाय्ययुतो यस्मात्पूर्वजन्मनि मानद । कृतवांश्चैव पापं तु तस्य वक्ष्यामि लक्षणम् ॥ ८ ॥
अत्र जन्मनि सा भार्या मृता सा बहुपुत्रिका । ततो द्विनार्यो भागाभ्यां सुताभ्यां विनतासुत॥९॥
हीनो ज्येष्ठकनिष्ठाभ्यामत्र चाकृतनिष्कृतेः । वदामि चिन्मयं तस्य पूर्वदुष्कृतनाशनीम् ॥ १० ॥
पलपञ्चदशाढ्यां वा द्वयोर्वित्तानुसारतः । सुरभीं दद्यात्सुवर्णेन घण्टाभरणभूषिताम् ॥ ११ ॥
सवत्सां विप्रमुख्याय पूजिताय प्रयत्नतः । ततः प्रभृति रोगाणां क्षय एव भविष्यति ॥ १२ ॥
धनधान्यसपुत्रश्च जायतेऽत्रैव जन्मनि । य एवं कुरुते सत प्रायश्चित्तं द्विधा मतम् ॥ १३ ॥
प्रोक्तफलमेवं तु सर्वथा भविष्यति । न करोति यदा श्रुत्वा प्रायश्चित्तं विधानतः ॥ १४ ॥
पञ्चवेदमिते वर्षेऽरिष्टं चात्र महाद्भुतम् । प्रायश्चित्ते कृते त्वायुः पञ्चाशीतिमिताः समाः ॥ १५ ॥
बहुलत्वात्तु जीवानां विस्तरो नोदितो मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकाष्टशततमः ॥ ८४२ ॥

श्रीसूर्य उवाच ।

कश्चिद्राजकुलोत्पन्नो देशेऽङ्गे पूर्वजन्मनि । बभूव नीतिधर्मज्ञो विवेकी चलसंयुतः ॥ १ ॥

१ निज इति—ख० पु० ।

दत्तं तेन तु सर्वस्वं ब्राह्मणेभ्यो विजानता । अथ भाविबलादन्यब्राह्मणेन तपस्विना ॥ २ ॥
तद्गृहे स्थापितं वित्तं पुनर्दत्तं न तेन च । द्विसहायैर्मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा ॥ ३ ॥
ततो बहुतिथे काले गतास्ते यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ४ ॥
पितृभक्तिप्रभावेन स जातो ब्राह्मणोऽधुना । देशे पञ्चनदे लग्ने तुलाख्ये रविसंयुते ॥ ५ ॥
शनौ पञ्चमगे तुर्ये चन्द्रे लाभगते गुरौ । स रक्तगौरो मतिमान् लोमी धूर्तः शठो घृणी ॥ ६ ॥
पूर्वपुत्रैर्विहीनश्च मातृसन्ततिसंयुतः । ब्रह्मस्वभक्षणात्पूर्वं पापादत्र च पृच्छक ॥ ७ ॥
चन्द्राग्निमितवर्षान्तं जातपुत्रविनाशकः । एभिश्च लक्षणैर्लक्ष्यो जायते गरुडाग्रज ॥ ८ ॥
सहायाभ्यां मिलित्वा तु सर्वस्वभक्षणं कृतम् । तेन तावत्र सहजौ भ्रातृ यो पृच्छकस्य च॥९॥
पुत्रहीनो मृतो ज्येष्ठः कनिष्ठोऽपि भविष्यति । वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधनीम् ॥ १० ॥
लक्ष्मीनारायणः कार्यः सुवर्णाष्टमितः शुभः । तथा पलद्वयमितौ राजतौ शुक्रभास्करौ ॥ ११ ॥
गायत्र्यष्टसहस्रं तु जप्त्वाऽत्र पापनाशनम् । भविष्यति न सन्देहः पुत्रवृद्धिर्भविष्यति ॥ १२ ॥
न करोति यथाशक्त्या प्रायश्चित्तमिदं सुत । सप्तवेदमिते वर्षे पुत्रारिष्टं न संशयः ॥ १३ ॥
प्रायश्चित्ते कृते सूत न भयं विद्यते क्वचित् । द्विसप्ततिमिताब्दान्तं जीवनं कथितं ध्रुवम् ॥ १४ ॥
शुक्लाष्टम्यां नभोमासे लग्ने वृश्चिकसंज्ञके । निर्याणं जननं तस्य स्वल्पमेवाऽत्र सूचितम् ॥ १५ ॥

इति श्रीगरुडसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्रिचत्वारिंशदधिकाष्टशततमः ॥ ८४३ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रो बभूव धनिनां कुले । धर्मकर्मक्रियायुक्तो ब्राह्मणानां च पूजकः ॥ १ ॥
अथो भाविबलात्तत्र ह्यग्निदाहः कृतः पुरा । तस्मिन्दाहे च निर्दग्धो नानापक्षिसमूहकः ॥ २ ॥
गरुडाद्यस्तथा गोधानागाद्या जीवराशयः । सहायाभ्यां मिलित्वा तु कृतवान्कर्म दारुणम् ॥ ३ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावात्तु स जातो बाहुजोऽधुना ॥ ४ ॥
सरस्वत्याः परे भागे विंशयोजनसंमिते । प्रायश्चित्ते कृते सूत तयोः पुत्रसुखं त्विह ॥ ५ ॥
प्रवक्ष्यामि महाभाग प्रायश्चित्तं शृणुष्व मे । रौप्यजाश्चाष्टकाः कार्याः पत्रे लेख्या वनान्तरे॥६॥
पञ्चत्रिंशन्मिते पत्रे त्वष्टांगुलमिताधिके । तदर्धार्धमिते पत्रे दिक्पतीनत्र कल्पयेत् ॥ ७ ॥
तत्र वृश्चिकसर्पौ च कार्यौ यत्नाच्च गह्वरे । वनदेवी तथा कार्या माषत्रयहिरण्मयी ॥ ८ ॥
वृक्षा लेख्या वने तस्मिन्वनोषधिलतादयः । संपूज्य सर्वं विधिवद्गन्धपुष्पाक्षतादिभिः ॥ ९ ॥
ब्राह्मणाय प्रदातव्यं पूर्ववन्मन्त्रमुच्चरन् ॥ १० ॥

मन्त्रः ।

"वनान्तरगताः सर्वे ये जीवा दाहिताः पुरा । वनदेव्यादिदानात्तु गच्छन्तु मम पातकाः"॥११॥
एवं कुरुते सूत पुत्रपौत्रविवर्द्धनम् । भविष्यति न सन्देहो दानस्याऽस्य प्रभावतः ॥ १२ ॥
नाशयेत्त्रिविधं पापं कायवाक्चित्तसंभवम् । तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम् ॥ १३ ॥
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत् । त्रिगुणं चोत्तमं तद्वत्सुवर्णं परिकीर्तितम् ॥ १४ ॥
मत्सरी गुरुणा यश्च विधवामपि गच्छति । स भवेन्मूत्रकृच्छ्री तु गुरुतल्पार्द्धमाचरेत् ॥ १५ ॥
[ गुरुतल्पार्द्धप्रायश्चित्तं षाड्वार्षिकमित्यर्थः । पद्मदानं च देयम् । ]

१ 'पृच्छक शृणु' इति प्रतिभाति । २ 'तत्र कल्पयेत्' इति भवेत् ।

श्रीसूर्य उवाच ।

प्रायश्चित्तं प्रवक्ष्यामि पूर्वपापप्रणाशनम् । राजतं कमलं कुर्यात्पलत्रिंशमितं शुभम् ॥ १७ ॥
ब्रह्माणं स्थापयेत्तत्र रौक्मं स्वर्णाष्टकं विभुम् । अब्जोपरि न्यसेत्सूर्यं राजतं पलपञ्चकम् ॥ १८ ॥
पलद्वयमितां कुर्याद्ब्राह्मणीं राजतीं शुभाम् । सपुत्रां विधिवद्देया कर्मप्रकाशकाय वै ॥ १९ ॥
द्विजाय विधिनापूज्य मन्त्रमेतमुदीरयेत् । 'सूर्यं सहार्घं ब्रह्माणं ब्राह्मणीं च सुतान्विताम् ॥२०॥
पूर्वपापविशुद्ध्यर्थं गर्भवारणनाशनम् । ददेऽहं तु महाभाग तुभ्यं मा च शिवं कुरु" ॥ २१ ॥
इत्युच्चार्य ततो दद्याद्धेनूना पञ्चकं सुत । होमयेच्च तिलास्तत्र गायत्र्या शक्तितोऽण्डज ॥ २२ ॥
बालवत्ससुतां दद्याद्धेनुं च कपिलां शुभाम् । शृणुयाद्धरिवंशं वा शतावर्तं विधानतः ॥ २३ ॥
लक्षरुद्रं त्रिगुणितं पूजयेद्वा प्रयत्नतः । नैवं करोति यः सूत प्रायश्चित्तं त्रिया मतम् ॥ २४ ॥
इह जन्मन्यपुत्रः स्यादष्टपञ्चमितेऽब्दके । करोति विधिना यस्तु पुत्राढ्यो जायतेऽधुना ॥ २५ ॥
पष्टिरेकयुताऽब्दाना तस्य चायुः खगेश्वर । सौम्यामत्र सुशीलाभ्यां सुखवृद्धिर्भविष्यति ॥२६ ॥
नाधयो व्याधयस्तस्य प्रायश्चित्ते कृते सति । फाल्गुने कृष्णपञ्चम्यां स्वात्यृक्षे मिथुनोदये॥२७॥
निर्याणं कथितं तस्य विस्तारं च विचारयेत् ॥ २८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदधिकाष्टशततमः ॥ ८४१ ॥

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे कश्चिद्विराटे क्षत्रियोऽण्डज । विद्याऽभ्यासविहीनश्च कृषिकर्मरतः सदा ॥ १ ॥
स्वल्पवित्तयुतस्त्यागी भ्रातृमान्योऽतिवामतः । स्वाचारधर्मरहितोऽतिथिपूजनतत्परः ॥ २ ॥
विवेकहीनाविवेकैर्युक्तो रक्तः श्यामोऽतिदुर्मतिः । अथो तस्य गृहे कश्चिद्द्विजः स्थापितवान्धनम् ॥३॥
तस्मै द्विजाय लोभाद्वै पुनर्दत्तं न तद्धनम् । दम्पतिभ्यां मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा ॥ ४ ॥
गत्वा धर्मपुरं दैवाच्छुभं वा यदि वाऽशुभम् । फलं भुक्त्वाऽधुना जातः पुष्करे पञ्चयोजने ॥ ५ ॥
कर्कटस्थे गुरौ लग्ने वृश्चिके चन्द्रसंस्थिते । मध्यमो रक्तगौरश्च पूर्वापरसहोदरैः ॥ ६ ॥
रहितो बाहुजस्त्यागी सुखी दम्भरतस्तथा । धूर्तो विद्यान्वितो वाग्मी बाल्ये पित्रोर्विवर्जितः॥७॥
स्त्रीसाहाय्ययुतो यस्मात्पूर्वजन्मनि मानद । कृतवाश्चोग्रपापं तु तस्य वक्ष्यामि लक्षणम् ॥ ८ ॥
अत्र जन्मनि सा भार्या मृता सा बहुपुत्रिका । ततो द्वितीयां भार्याभ्यां सुताभ्यां विनतासुत॥९॥
हीने ज्येष्ठकनिष्ठाभ्यामत्र चाकृतनिष्कृतेः । वदामि विन्मयं तस्य पूर्वदुष्कृतनाशनीम् ॥ १० ॥
पलपञ्चदशं वा द्व्योर्वित्तानुसारतः । सुरभीं दद्यात्सुवर्णेन घण्टाभरणभूषिताम् ॥ ११ ॥
सवत्सां विप्रमुख्याय पूजिताय प्रयत्नतः । ततः प्रभृति रोगाणां क्षय एव भविष्यति ॥ १२ ॥
अनयान्यसपुत्रश्च जायतेऽत्रैव जन्मनि । य एवं कुरुते सत प्रायश्चित्तं द्विधा मतम् ॥ १३ ॥
पूर्वोक्तफलमेव तु सर्वथा भविष्यति । न करोति यदा श्रुत्वा प्रायश्चित्तं विधानतः ॥ १४ ॥
पञ्चवेदमिते वर्षेऽरिष्टं चात्र महाद्भुतम् । प्रायश्चित्ते कृते त्वायुः पञ्चाशीतिमिताः समाः ॥ १५ ॥
बहुलत्वात्तु जीवानां विस्तरो नोदितो मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकाष्टशततमः ॥ ८४२ ॥

श्रीसूर्य उवाच ।

कश्चिद्राजकुलोत्पन्नो देशेऽङ्गे पूर्वजन्मनि । बभूव नीतिधर्मज्ञो विवेकी बलसंयुतः ॥ १ ॥

---

१ निज इति—ख० पु० ।

दत्तं तेन तु सर्वस्वं ब्राह्मणेभ्यो विजानता । अथ भाविवलादन्यब्राह्मणेन तपस्विना ॥ २ ॥
तद्गृहे स्थापितं वित्तं पुनर्दत्तं न तेन च । द्विसहायैर्मिलित्वा तु ब्रह्मस्वं भक्षितं पुरा ॥ ३ ॥
ततो वहुतिथे काले गतास्ते यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ४ ॥
पितृभक्तिप्रभावेन स जातो ब्राह्मणोऽधुना । देशे पञ्चनदे लग्ने तुलाख्ये रविसंयुते ॥ ५ ॥
शनौ पञ्चमगे तुर्ये चन्द्रे लाभगते गुरौ । स रक्तगौरो मतिमान् लोमी शूर्तः शठो घृणी ॥ ६ ॥
पूर्वपुत्रैर्विहीनश्च प्राप्तसन्ततिसंयुतः । ब्रह्मस्वभक्षणात्पूर्वं पापादत्र च पृच्छक ॥ ७ ॥
चन्द्राग्निमितवर्षान्तं जातपुत्रविनाशकः । एभिश्च लक्षणैर्लक्ष्यो जायते गरुडाग्रज ॥ ८ ॥
सहायाभ्यां मिलित्वा तु सर्वस्वभक्षणं कृतम् । तेन तावत्र सहजौ प्राक्तु यो पृच्छकस्य च॥९॥
पुत्रहीनो मृतो ज्येष्ठः कनिष्ठोऽपि भविष्यति । वक्ष्यामि निष्कृतिं तस्य पूर्वपापविशोधनीम् १०॥
लक्ष्मीनारायणः कार्यः सुवर्णाष्टमितः शुभः । तथा पलद्वयमितौ राजतौ शुक्रभास्करौ ॥ ११ ॥
गायत्र्यष्टसहस्रं तु जप्त्वाऽत्र पापनाशनम् । भविष्यति न सन्देहः पुत्रवृद्धिर्भविष्यति ॥ १२ ॥
न करोति यथाशक्त्या प्रायश्चित्तमिदं सुत । सप्तवेदमिते वर्षे पुत्ररिष्टं न संशयः ॥ १३ ॥
प्रायश्चित्ते कृते सूत न भयं विद्यते क्वचित् । द्विसप्ततिमिताब्दान्तं जीवनं कथितं ध्रुवम् ॥ १४ ॥
शुक्लाष्टम्यां नभोमासे लग्ने वृश्चिकसंज्ञके । निर्वाणं जननं तस्य स्वल्पमेवाऽत्र सूचितम् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्रिचत्वारिंशदधिकाष्टशततमः ॥ ८४३ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रो बभूव धनिनां कुले । धर्मकर्मक्रियायुक्तो ब्राह्मणानां च पूजकः ॥ १ ॥
अथो भाविबलात्तत्र ग्रामदाहः कृतः पुरा । तस्मिन्दाहे च निर्दग्धो नानापक्षिसमूहकः ॥ २ ॥
गरुडाद्यस्तथा गोधानागाद्या जीवराशयः । सहायाभ्यां मिलित्वा तु कृतवान्कर्म दारुणम् ॥ ३ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावात्तु स जातो बाहुजोऽधुना ॥ ४ ॥
सरस्वत्याः परे भागे विंशयोजनसंमिते । प्रायश्चित्ते कृते सूत तयोः पुत्रसुखं त्विह ॥ ५ ॥
प्रवक्ष्यामि महाभाग प्रायश्चित्तं शृणुष्व मे । शंकमजाश्चाष्टकाः कार्याः पत्रे लेख्या वनान्तरे॥६॥
पलत्रिंशन्मिते पत्रे त्वष्टांगुलमिताधिके । तदर्द्धार्द्धमिते पत्रे दिक्पतीनत्र कल्पयेत् ॥ ७ ॥
तत्र वृश्चिकसर्पौ च कार्यौ यत्नाच्च गह्वरे । वनदेवी तथा कार्या प्रापत्रयहिरण्मयी ॥ ८ ॥
वृक्षा लेख्या वने तस्मिन्वनौषधिलतादयः । संपूज्य सर्वं विधिवद्गन्धपुष्पाक्षतादिभिः ॥ ९ ॥
ब्राह्मणाय प्रदातव्यं पूर्ववन्मन्त्रमुच्चरन् ॥ १० ॥

### मन्त्रः ।

"वनान्तरगताः सर्वे ये जीवा दाहिताः पुरा । वनदेव्यादिदानात्तु गच्छन्तु मम पातकाः"॥११॥
य एवं कुरुते सूत पुत्रपौत्रविवर्द्धनम् । भविष्यति न सन्देहो दानस्याऽस्य प्रभावतः ॥ १२ ॥
नाशयेत्रिविधं पापं कायवाक्चित्तसंभवम् । तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम ॥ १३ ॥
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत् । त्रिगुणं चोत्तमं तद्वत्सुवर्णं परिकीर्तितम् ॥ १४ ॥
मत्सरी गुरुणा यश्च विधवामपि गच्छति । स भवेन्मूत्रकृच्छ्री तु गुरुतल्पार्द्धमाचरेत् ॥ १५ ॥
[ गुरुतल्पार्द्धप्रायश्चित्तं पाद्ववार्षिकमित्यर्थः । पञ्चदानं च देयम् । ]

१ 'पृच्छक शृणु' इति प्रतिभाति । २ 'तत्र कल्पयेत्' इति भवेत् ।

मातुः सपत्नीगमने जायते चाश्मरीगदः । स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ १६ ॥

[ प्रायश्चित्तमत्र त्रैमासिकम् । ]

दद्याद्विप्राय विदुषे मधुधेनुं यथोदिताम् । तिलद्रोणशतञ्चैव हिरण्येन समन्वितम् ॥ १७ ॥
दुग्धचोरस्तु पुरुषो जायते बहुमूत्रवान् । स दद्याद्दुग्धधेनुं च ब्राह्मणाय यथाविधि ॥ १८ ॥
सोदरीगमने रोगो जायते बहुमूत्रता । पराकत्रितयं चत्वारिंशद्ब्राह्मणभोजनम् ॥ १९ ॥
सहस्रमात्मसूक्तस्य पौरुषस्य स्वशक्तितः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकाष्टशततमः ॥ ८४४ ॥

श्रीसूर्य उवाच ।

चान्द्रायणत्रयं कुर्यादादि मध्यं तथा परम् । तिर्यग्गामी स शूलेन प्रमेहेण युतो भवेत् ॥ १ ॥
कुर्यात्सान्तपनादीनि प्रायश्चित्तं यथाविधि । सर्वस्त्रव्यायी मनुजः कन्यागामी तथैव च ॥ २ ॥
वातप्रमेहयुक्तः स्यात्कुर्याच्चान्द्रायणत्रयम् । मधुमेही मातृगामी सततं जायते नरः ॥ ३ ॥
पितृभार्याभिगामी च जलमेही तथाऽधमः । यो गच्छेद्भगिनीं नित्यमिक्षुमेहीति निश्चयः ॥ ४ ॥

[ पितृभार्या सपत्नीजननीत्यर्थः । ]

प्रायश्चित्तं क्रमादत्र षड्वर्षाण्यथ पञ्च च । अन्नदानं नित्यमाचरेत्सम्यक्ततो रोगात्प्रमुच्यते ॥ ५ ॥
ब्राह्मणस्वर्णहारी च प्रमेही जायते नरः । धेनुं स्वर्णमयीं कुर्यात्पूर्वेण विधिना ततः ॥ ६ ॥
प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः । मन्त्रेणानेन विधिवत्पुच्छं हस्ते निधाय च ॥ ७ ॥

ध्यानमन्त्रमाह ।

"धेनुर्याऽङ्गिरसा सत्रे प्रविष्टा सुरवेश्म या । दुहिता या तथा भानोरस्रेश्च वरुणस्य च ॥ ८ ॥
याश्च गावः प्रवर्तन्ते वनेषूपवनेषु च । प्रीणन्तु ता महादानात्पुत्रपौत्रप्रदाः सुखम् ॥ ९ ॥
प्रयच्छन्तु दिवारात्रमनिष्टस्य च शान्तये ।" एवं दत्त्वा च तद्दानं प्रणिपत्य विसर्जयेत् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चचत्वारिंशदधिकाष्टशततमः ॥ ८४५ ॥

अत्र कर्मणि स्त्रीपुंसयोर्मिलितयोः प्रत्येकं वा यथानिमित्तमधिकारः ।

अथ गर्भस्रावयज्ञोपवीतदानम् ।

श्रीसूर्य उवाच ।

स्रवद्गर्भा भवेत्सा तु बालकं हन्ति या विषैः । यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ॥ १ ॥
अत्यन्तवर्णयुक्तेन राजतं चोत्तरीयकम् । पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ॥ २ ॥
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव च । प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ॥ ३ ॥
द्रोणप्रमाणं तस्मिंस्तु निक्षिपेद्दधि मध्यतः । आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ॥ ४ ॥

[ दधि ताम्रभाजनोपरि आज्यं तत्प्रमाणं यथालाभोपपन्नं वा आज्यमुपवीतं स्थाप्यं महोत्तरीयम् । ]

गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरपि भक्तितः । ततो ब्राह्मणमाहूय होमं तत्र प्रकल्पयेत् ॥ ५ ॥
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् । तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ॥ ६ ॥
मन्त्रेणानेन विधिवत्प्राङ्मुखायोपवीतकम् ॥ ७ ॥

मंत्रमाह।

"उपवीतं परमिदं ब्रह्मणा विधृतं पुरा। नवनौकाऽस्य दानेन चर्मसन्धारणं स्वयम् ॥ ८ ॥

[ अयमर्थः—संसारं द्विजकर्मनिष्पादकत्वेन यतस्तारयत्युपवीतम्। ]

वरान्नं ब्राह्मणेभ्यस्तु तस्मिन्काले प्रदापयेत्। अनुव्रज्य तथा कार्यं प्रणिपत्य क्षमापयेत् ॥ ९ ॥

गर्भस्रावकराद्दोषादेवं कृत्वा विमुच्यते ॥ १० ॥

अस्मिन्कर्मणि स्त्रियोऽधिकारः।

मासोपवासिनी नारी यतेः प्रस्रावयेद्यदि। यदि संपर्कदोषेण जायते साऽन्यजन्मनि ॥ ११ ॥

स्रवद्रक्ता सदा योनौ तन्निष्कृतिरिहोच्यते। मासोपवासं कुर्वीत तथा मासं पयोव्रतम् ॥ १२ ॥

क्षीरं मुष्णाति या नारी पूर्वजन्मनि सुव्रत। जन्मान्तरे च तस्या वै क्षीरं न क्षरते स्तने ॥ १३ ॥

क्षीरान्नं भोजयेद्विप्रान्साज्यं समधु मण्डकम्। अनुशिष्टेन तेनैव तृप्तिरुच्छिष्टान्नेन रक्षितः ॥ १४ ॥

विप्रपादोदकेनाथ क्षालयेत्कुचमण्डलम्। सुरामांसघृतक्षीरैर्द्ध्यपूपैर्गन्धपुष्पकैः ॥ १५ ॥

भूतेभ्यश्च बलिं दद्याद्भूतानत्र च संस्मृणु। मधुश्च नवनीतश्च पिण्डमाल्यो हविस्तकः ॥ १६ ॥

भूतभव्यः स्वशक्तिश्च भूतानां पञ्चकं त्विदम् ॥ १७ ॥

[ स्वशक्तिरिति मध्वादीनां विशेषणम्। अत्र सुरादीनि बलिद्रव्याण्युक्तानि तेषु ब्राह्मणादिभिरनिषिद्धान्येव ग्राह्याणि। ]

ज्येष्ठभ्रातर्यनूढे तु यो न चोद्वहति स्वयम्। स भवेन्मृतपत्नीक उष्णज्वरसमन्वितः ॥ १८ ॥

प्राजापत्यत्रयं कुर्यादब्दानां त्रयमेव च। तामग्निरिति वाक्येन चरुणाष्टोत्तरायुतम् ॥ १९ ॥

जुहुयाद्भोजयेद्विप्रानेवं पापात्प्रमुच्यते। मित्रभार्याभिगामी च मृतभार्यः प्रजायते ॥ २० ॥

तस्य पापस्य शुद्धयर्थं द्विजमेकं विवाहयेत्। धर्मपत्न्यां सुव्रतायां सुखे मैथुनकारिणः ॥ २१ ॥

पत्न्यां विरक्तिर्भवति सुवर्णकलशेन सः। उमामहेश्वरं देवं रुद्रैकादशिनीजपैः ॥ २२ ॥

स्नापयेच्छ्रद्धया युक्तो ह्यविच्छिन्नांबुधारया ॥ २३ ॥

[ त्र्यम्बकं यजेति मन्त्रः। अथ यथाशक्ति सुवर्णेनोमामहेश्वरप्रतिमां रजतवृषभारूढां कारयित्वा ब्राह्मणाय दद्यात्। ]

अथ दारिद्र्यहरधनदमूर्तिदानम्।

दरिद्रो जायते मर्त्यो दानविघ्नं करोति यः। ऐश्वर्यं याचते येन कारणं तच्छृणु प्रभो ॥ २४ ॥

पलार्द्धेन तदर्द्धेन चतुर्थांशेन वा पुनः। धनदस्य प्रतिकृतिं कुर्याद्धातुमयीं शुभाम् ॥ २५ ॥

द्विभुजां वाहनोपेतां नयनानन्दकारिणीम्। शंखपद्मनिधिभ्यां च युक्तां वै स्कन्धपोर्द्वयोः ॥ २६ ॥

श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत्। तण्डुलानां परीमाणं भवेद्द्रोणमितं खग ॥ २७ ॥

ऋणं दत्त्वाधिकां वृद्धिं गृह्णीयाद्यः स्वपो भयम्। उत्पादयति चान्येषां पापाणेनाऽप्रदानतः ॥ २८ ॥

[ अधिकवृद्धिग्रहणं नाम शास्त्रवृत्तिवृद्धिग्रहणं विहायोत्पादयतीति निमित्तमन्तरेण भयोत्पादनम्। ]

तालमहारकृत्यैव जातोऽपि धनिनां कुले। धनेन रहितः प्रायो देशान्तरगतो भवेत् ॥ २९ ॥

महाक्लेशी बहुद्वेगी उदावर्ती भवेन्नरः। कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥ ३० ॥

---

१ गर्भमिति भवेत्। २ द्रोणचतुष्टयमिति–ख० पु०।

कुर्यादिष्टचरुभ्यां च होमं व्याहृतिभिस्तथा । यत्किंचिदमितं सक्तमयुतं वारुणं जपेत् ॥ ३१ ॥
अन्यायवृत्तिनृपतिसेवनाद्विप्रदर्शनात् । महादानसमादानाद् गुरुभार्याविमर्दनात् ॥ ३२ ॥
दंष्ट्रिभयश्चैव मरणादपमृत्योश्च निन्दया । वेदबाह्यस्य शास्त्रस्य पठनात्कर्मसेवनात् ॥ ३३ ॥
विप्रो बन्धनशस्त्राद्यैर्मरणादथ सौनिकः । उदासानः सभामध्ये कृत्वा स्त्रीगमनं तथा ॥ ३४ ॥
श्रुताध्ययनसंपन्नश्रोत्रियब्राह्मणस्य तु । उदासानः सभामध्ये कृत्वा भङ्गं तु दारुणम् ॥ ३५ ॥
परीक्षासमये प्राप्ते भृतकाध्यापकस्तथा । देवब्राह्मणराज्ञां तु स्वर्णापहरणात्तथा ॥ ३६ ॥
अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ॥ ३७ ॥

[ ब्रह्मराक्षसत्वं पिशाचत्वस्याप्युपलक्षणम् । ]

तत्र निष्कृतिर्वृहन्मनुप्रोक्ता पुत्रादिभिः कार्या ।

गयाश्राद्धं तु कृत्वापि जपहोमादिभिस्तथा । देवतातीर्थसेवाभिः कन्यादानेन चैव हि ॥ ३८ ॥
ब्रह्मराक्षसत्वपैशाच्यान्मुच्यते मनुरब्रवीत् ॥ ३९ ॥

[ जपेद्वेदपारायणं पावमानसूक्तजपश्च तथा सहस्रनामादिजपश्च वाऽयुतहोमादि, तत्र गोभू-हिरण्यदानं साङ्गम् । ]

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदधिकाष्टशततमः ॥ ८४६ ॥

श्रीसूर्य उवाच ।

परमौक्तिकहारी यः प्राग्भवे विनतात्मज । तस्य पुत्रसुखं नास्ति विना तत्पापशोधनम् ॥ १ ॥
तत्पापशोधनं मुख्यमत्र पार्थिवपूजनम् । ततो गोदशकं दद्यात्सर्वद्रव्यसमन्वितम् ॥ २ ॥
नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः । बन्धुभृत्याधिकाराढ्यो वस्त्रभूषणभूषितः ॥ ३ ॥
सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु । धूर्तो मिथ्याभिवादी च बहुलोभसमन्वितः ॥ ४ ॥
जातसन्ततिदुःखार्त्तो बालवत्सवधादिह । नेत्ररोगान्वितो नित्यं शृणु चिह्नं पतत्रिण ॥ ५ ॥
चत्वारिंशन्मिते वर्षे सर्वसन्ततिनाशनम् । गृहपातान्महाभाग वृष्टिरिष्टसमुद्भवात् ॥ ६ ॥
पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः ॥ ७ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्बालवत्सवधाशनीम् ॥ ८ ॥

श्रीसूर्य उवाच ।

तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते । दृष्टकर्मार्जितात्पापान्न चोक्तं पापशोधनम् ॥ ९ ॥
श्रवणाद्धरिवंशस्य वेशाखे विधिनाण्डज । माघे वा कार्तिके वापि दशावर्त्यं विधानतः ॥ १० ॥
ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः । कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा ॥ ११ ॥
धेनूनां दशकं दद्यात्सवत्साभरणान्विताम् । दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम् ॥१२॥
प्रायश्चित्तमिदं सूत स कुर्याद्विधिपूर्वकम् । तस्य पुत्रविवृद्धिः स्याद् विवाहादपरात्सुत ॥ १३ ॥
मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः । प्रायश्चित्ते कृते तत्र नवत्यब्दमितं तथा ॥ १४ ॥
द्विगुणमायुः कथितं तीर्थे पुण्याश्रयेऽण्डज । जीवे कर्कटके सूत मकरे चन्द्रराशिगे ॥ १५ ॥
त्रयोदश्यां दिवा भूमौ ऋक्षे मृगशिराभिधे । निर्याणं कथितं तस्य विष्णुपूजनजात्फलात्॥१६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदधिकाष्टशततमः ॥ ८४७ ॥

१ कार्याभिमर्दनादिति–ख०पु० ।

श्रीसूर्य उवाच।

पिङ्गलाक्षो भवेदत्र पूर्वं रीत्यपहारकः। तेन तत्पापशुद्ध्यर्थं देयं रीतिपलं शतम् ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्निर्माध्य भोजयेत्। मुच्यतेऽत्र महाभाग तद्रोगात्पापजात्ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकाष्टशततमः ॥ ८४८ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग खररोमा प्रजायते। पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः। निष्क्रयं हिरण्यं च दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गपारिणे ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकाष्टशततमः ॥ ८४९ ॥

श्रीसूर्य उवाच।

प्राग्भुक्तं गर्भपुष्ट्यर्थं कुक्कुटाण्डं खगेश्वर। अत्र जन्मनि सा जाता संकरा लोमसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज। न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥
कृत्वाण्डं विधिना तद्धैरण्यं द्विपलात्मकम्। तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः ॥ ३ ॥
दत्त्वा द्विजाय विधिना आचरेच्छांकरं व्रतम् ॥ ४ ॥
फाल्गुनादौ चतुर्दश्यां कृष्णायां मासिमासि तु। पूजयेच्छंकरं रात्रौ तथा जागरणेन च ॥ ५ ॥
भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदधिकाष्टशततमः ॥ ८५० ॥

श्रीसूर्य उवाच।

शृणु सूत महाभाग कर्म यत्कृतवान्पुरा। जीवोऽयं तत्फलं चात्र भवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः। राजप्रचारी बलवाञ्छूरो मंत्री महायशाः ॥ २ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदारुणम्। लुण्ठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः। स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥ ५ ॥
भुक्त्वाऽतिदारुणान्सूत नरकान्घोरदर्शनान्। तथापुण्यफलात् सूत प्राप्तपुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा। नानाचौर्यक्रियायुक्तो लोकवंचनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि। सुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः। वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा कार्यां स्थाप्य लिङ्गं सुशोभनम्। पूजयेत्तु त्रिवर्षान्तं मंत्रैस्तल्लिङ्गकैस्तथा ॥ १० ॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः। संपूज्य विधिवद्देवं वदन्ते भोजयेद् द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान् पूजयेद्बहुदक्षिणैः। नानाहिरण्यैर्विविधैस्तथा चाऽभरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः। ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापविनाशनम्। संप्राप्य तत्र निर्वाणं शिवलोकं हि गच्छति ॥ १४ ॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप। नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तत्रा शलका देया वै शूद्रकर्णेऽतिदारुणा। श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥

आयुरब्दाः शतं तस्य कृतनिष्कृतिचेतसः । प्रायश्चित्तेऽकृते रिष्टं जायते पष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदधिकाष्टशततम ॥ ८५१ ॥

## श्रीसूर्य उवाच ।

या नारी प्राग्भवे हन्याद् वत्सं चैव जन्मनि । खररोमसमानानि रोमाणि प्रभवन्ति च ॥ १ ॥
ब्राह्मणाय तदा दद्यात्स्वर्णनिष्कत्रयं सुत । जायते सूक्ष्मरोमा सा विनतानन्दवर्द्धन ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदधिकाष्टशततम ॥ ८५२ ॥

## श्रीसूर्य उवाच ।

या पुराऽपहरेद्रीतिं नारी सा च पतत्रिण । पिङ्गाक्षी जायते चात्र प्रायश्चित्तं पर शृणु ॥ १ ॥
रीतिं दद्याच्छतपलां तथा ब्राह्मणभोजनम् । गायत्र्या जुहुयाच्छतया तिलान् रोगविनाशनम् ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदधिकाष्टशततम ॥ ८५३ ॥

## श्रीसूर्य उवाच ।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी । साऽत्र जन्मनि रोगेण शूलेनैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनभ्योऽपि पतत्रिण । भिक्षुभ्यश्च तथा दानाद्रसदानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः । प्रायश्चित्तेऽकृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदधिकाष्टशततम ॥ ८५४ ॥

## श्रीसूर्य उवाच ।

उपघाती भवेत्पूर्वे जन्मन्यथ पतत्रिण । सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि । कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चपञ्चाशदधिकाष्टशततम ॥ ८५५ ॥

## श्रीसूर्य उवाच ।

वंध्येयं या महाभाग पृच्छति स्वं प्रयोजनम् । गर्भपातरता पूर्वं जन्मन्यत्र फलं त्विदम् ॥ १ ॥
सुखजा प्राग्भवे त्वत्र तत्पापाद्यवनी हि सा । निष्कृतिं तस्य वक्ष्यामि गङ्गाया हि पतत्रिण ॥ २ ॥
पूजयेल्लक्षरुद्राणां त्रिगुणार्द्धं तदर्द्धकम् । अन्त्याय भोजयेद्विप्रान्बान्धवांश्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना या च प्रायश्चित्तं समाचरेत् । जायते सन्ततिस्तस्या इह जन्मनि वै ध्रुवम् ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्पञ्चाशदधिकाष्टशततम ॥ ७५६ ॥

## श्रीसूर्य उवाच ।

कांस्यहारी च पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानात्पलशतादत्र सीसकाद्ण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदधिकाष्टशततम ॥ ८५७ ॥

---

१ 'जन्मन्यत्र' इति-ख० पु० ।

श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे कीराभिधे सुत। धर्मकर्माल्पको भक्तः पितृपुत्रधनान्वितः॥ १॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः। पर्वस्वपि च पात्रेभ्यो गोभूम्यश्वादिकानि च॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वैभवात्। स्ववंशजस्य कस्यापि गृहं शत्रोर्मनोहरम्॥ ३॥
निर्दग्धं वैरिभावेन रात्रौ भार्यासहायतः। तस्मिन्दाहे महाबाहो निर्दग्धं वृषभद्वयम्॥ ४॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा। ततो बहुतिथे काले गतः स यमशासनम्॥ ५॥
सस्त्रीकः स्वकर्मं भुक्त्वा पापादुद्धं शुभं तथा। पुण्यात्पंचनदे देशे ■ जातो बाहुजाधरः॥ ६॥
मध्यस्वरूपो मतिमान्कुलेष्टः पुरुषो दृढः। रक्तो नोच्चो नातिनीचो बहुकन्यः पृथुर्विभुः॥ ७॥
यौवनेऽन्ते सुखैश्वर्यधनधान्यैश्च संयुतः। मितदो लोभभाग्याढ्यः कृतिर्मानी जनप्रियः॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्॥ ८॥
चिन्तातुरोऽग्नो धूर्तश्च दुःखार्तो मानवर्जितः। गोघाताद्ग्निदाहाच्च जातपुत्रविनाशकः॥ ९॥
सहायलक्षणं सर्वं कथयामि खगेश्वर। या स्त्री पूर्वं सहायासीद्दाहकर्माणि चाण्डज॥ १०॥
सा ज्येष्ठा मृत्युरेवात्र मृतपुत्राऽत्र जन्मनि। लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गाद् वृषभे शनिः॥ ११॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। कारयित्वा शिवं साङ्गं पलवेदमितैः शुभैः॥ १२॥
हिरण्मये महाभाग पत्रे लेख्यं शिवान्वितम्। तदर्धार्धमितं वापि त्रिषु वित्तानुमानतः॥ १३॥
पूजयित्वा तु गन्धाद्यैः षोडशोरूपचारकैः। संस्थाप्य पशुपं पश्चाद्रोरथे सुमनोहरे॥ १४॥
सर्वोपस्करसंयुक्ते वितानाम्बरभूषिते। दद्याद्विधिज्ञाय मंत्रमेतमुदीरयन्॥ १५॥
मोहात्पूर्वं महापापमग्निदाहाद्यदर्जितम्। तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम्॥ १६॥
गोधिकाद्यास्तथा जीवाः पत्रे लेख्यास्तु राजते। शिवपत्रमितं दद्याच्च चाऽन्ये घातिताः पुरा१७
पञ्चमाषमितो वह्निर्देयो हैममयः शुभः। गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम्॥ १८॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद् द्विजान्। य एवं कुरुते सूत प्रायश्चित्तं विधानतः॥ १९॥
न तस्य पुत्रमरणं तदग्रे जायते क्वचित्। जायन्ते सुलभाः पुत्राश्चाविव्याधिविवर्जिताः॥ २०॥
नैवं करोति यो मोहाद्यात्र पुत्रविवर्जितः। चत्वारिंशन्मिते कूने वर्षे रिष्टं प्रकीर्तितम्॥ २१॥
पञ्चाशन्मितकेऽब्दे वाऽरिष्टं चाकृतनिष्कृतेः। प्रायश्चित्ते कृते ह्यायुश्चतुःसप्ततिमिताब्दकम्॥२२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपंचाशदधिकाष्टशततमः॥ ८९८॥

श्रीसूर्य उवाच।

कांस्यहारी तु पुरुषः प्राग्भवे विनतात्मज। शीर्षरोगेण सततं पीडितो जायतेऽधुना॥ १॥
दानाच्छतपलादत्र सीसकादण्डजोत्तम। विप्राय वेदविदुषे शीर्षरोगं न पश्यति॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्यधिकाष्टशततमः॥ ८९९॥

श्रीसूर्य उवाच।

वन्ध्यायाश्च महाभाग प्रायश्चित्तं शृणुष्व तत्। शूलोद्भिन्नतनुं चौरं मृतं प्राप्य रवेर्दिने॥ १॥
तत्तले तु तदा कुर्याद्वन्ध्या स्नानं शतौषधैः। पत्रैर्वृक्षोद्भवैः सूत तथा मृद्भिश्च सप्तकैः॥ २॥
तीर्थोदकैः समंत्रैश्च संपूज्य प्रथमं सुत। विधिनाऽनेन या कुर्याद्वन्ध्या पुत्रं लभेद् ध्रुवम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्यधिकाष्टशततमः॥ ८६०॥

श्रीसूर्य उवाच ।

सतीं स्वभार्यां परमां साध्वीं संत्यज्य दुर्मतिः । प्रमादात्प्राग्भवे गच्छेदन्यां स्त्रीं काममोहितः १
सोऽत्र जन्मनि भो सूत ग्रहणीरोगसंयुतः । जायते म्रियतेऽवश्यं ब्राह्मण्यां गमनादिह ॥ २ ॥
न तस्य पापशमनं मया प्रोक्तं खगाधिप । तस्मिन्वयसि तद्दृष्टं भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकाष्टशततमः ॥ ८६१ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । साऽत्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
दद्याच्छतपलं सीसं ब्राह्मणाय कुटुंबिने । तत्कालं शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकाष्टशततमः ॥ ८६२ ॥

श्रीसूर्य उवाच ।

यो नारी ह्यवधीत्पूर्वं मोहाद्दुष्टं खगाधिप । साऽत्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णीं राजतीं तथा । दद्याद्वेदविदे ज्ञाय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकाष्टशततमः ॥ ८६३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकाष्टशततमः ॥ ८६४ ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ग्रहणीरुग्युताऽत्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चषष्ट्यधिकाष्टशततमः ॥ ८६५ ॥

अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षदर्शनः । उदरे वातजा रोगाः किंचिच्छ्लेष्मप्रपातकाः ॥ १ ॥
किंचित्क्रोधश्च लोभश्च किंचिद्वित्तसमन्वितः । तस्य प्रिया सदाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्यं भवेत्तस्य जायते मृतपुत्रकः । आदिपुत्रो मृतस्तस्य अपत्यं नैव जायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वोद्भवे महाघोरे शूद्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन यत्कृतम् ॥ ५ ॥
व्यवहारादिना कृत्वा ब्रह्मवित्तेन वर्द्धितः । कालेनैव मृतो विप्रो धनं शूद्रेण वंचितम् ॥ ६ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणाच्चैव वर्षाणां च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे पच्यते चैव कर्मणा । पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ ९ ॥

१ कपुस्तकेऽयमध्याय उत्तराध्यायात्परमस्ति ।

इदं जन्म तृतीय तु ब्रह्मवंशसमुद्भवम् । निक्षेपहरणाद्यापि मृतपुत्रः प्रजायते ॥ १० ॥
ब्राह्मणस्य विशेषेण ब्रह्मस्वं विपताहशम् । ऋणं प्रसह्य वै भोक्तमपि कल्पशतादिकम् ॥ ११ ॥
तस्माद्विप्रऋणं प्रोक्तमसह्यं त्वभिजायते ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणां च निष्कृतिः सौख्यहेतवे ॥ १३ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामप्रदः प्रभुः । पूजनीयो महारुद्रः संततिश्रेय इच्छता ॥ १४ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । यजनैरथ मुच्येत पापादाकल्पसम्भवात् ॥ १५ ॥
रुद्रैकादशिनीभिस्तं रुद्रैकादशकेन वा । जपेन तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १६ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम् । केयूरकुण्डलाकल्पमंत्रपुस्तकमण्डलुः ॥ १७ ॥
प्रतिरुद्रं शतं विप्रान् भोजयेत्सुसमाहितः । निष्कं दद्यात्सुवर्णस्य दद्याद्वा मुख्यदक्षिणाम्॥१८॥
एवं रुद्रविधिं कृत्वा त्रिविधं पापशान्तिकृत् । इतिहासपुराणोक्तसूक्तानि विविधानि च ॥ १९॥
शृणुयाद्विधिवत्ताक्ष्यं समार्यः प्रीतितोन्वहम् । देवर्षिपितृमर्त्यानामृषीणां च महीक्षिताम् ॥ २०॥
देवदानवगन्धर्वपिशाचोरगरक्षसाम् । सर्वासां सर्वजातीनामुत्पत्तिं शृणुयादपि ॥ २१ ॥
ऋषीणामृषिपत्नीनां वंशान्सर्वानुदीरितान् । एवं स त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात्॥२२॥
गुरून्देयान्द्विजान्सम्यक् श्रद्धया समुपाचरेत् । एवं कृतविधेः सूत हरिवंशश्रुतार्थिनः ॥ २३ ॥
याचकोपरि संतुष्टो भूमिद्रविणवासकैः । मुद्राकर्णाङ्कितवरं गां दत्त्वा च पयस्विनीम् ॥ २४ ॥
भूमिद्रविणवासाद्यैस्तोषयेदन्यब्राह्मणान् । निष्कृतौ क्रियमाणायां सर्पिष्यात्मानमीक्षयेत् ॥२५॥
ऐहिकं लक्षणं तस्य शरीरे चोपजायते । जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः ॥ २६ ॥
कुष्ठरुक् चानपत्यस्य प्रमेहार्तोऽप्यकिंचनः । कुनखी दद्रुलः पाण्डुरोगी जन्मक्रमाद्भवेत् ॥ २७॥
जलाग्निभ्यां च चौरैश्च राज्ञा वित्तविनाशवान् । लकुटग्रावशस्त्राद्यैर्जायन्ते व्रणजार्तयः ॥ २८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्षष्टयधिकाष्टशततमः ॥ ८६६ ॥

श्रीसूर्य उवाच ।

अथ सूर्यदिने सूत प्राप्य भूमिं श्मशानजाम् । मृतमेतं समालोक्य रात्रौ गच्छेद्दतंद्रितः ॥ १ ॥
पूजयित्वा चितां तस्य बलिमष्टविधं सृजेत् । स्नानं कृत्वा मृदालंभैः पत्नीभृशोद्विग्नस्तया ॥ २ ॥
शतच्छिद्रघटे प्राप्य नानातीर्थोद्भवैर्जलैः । दीपमालादिने वापि प्रयोगं विधिनाऽऽचरेत् ॥ ३ ॥
हरिवंशं ततः पश्चाच्छृणुयाद्विधिपूर्वकम् । दत्त्वा विजेभ्यो विधिना नानाभक्ष्यफलानि च ॥ ४ ॥
स्वेच्छया भोजनं तेभ्यो दद्याद्दोषापनुत्तये । योगेनानेन नार्यत्र वन्ध्या याति सपुत्रताम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्टयधिकाष्टशततमः ॥ ८६७ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ क्षत्रा चात्र जन्मनि बाहुजः । देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनात् ॥ १ ॥
विंशद्वर्षे व्यतीते च नेत्रभङ्गः प्रजायते । तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥

---

१ पूर्वजातीनामिति–ख० पुस्तके । २ मुद्राकर्णेऽङ्कित ' इति–ख० पुस्तके समुपलभ्यते ।

कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धैः पुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकाष्टशततम ॥ ८६८ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
तेन कर्मार्जितेनात्र षण्ढश्चैवापवर्णजः । गवा पालनजात्पुण्यात्प्रागत्र सुरसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवात्र विस्मयम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकाष्टशततम ॥ ८६९ ॥

## श्रीसूर्य उवाच ।

या काचिद्योषितो पूर्वे मोहात्परघृतं हरेत् । साऽत्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नाऽत्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्यधिकाष्टशततम ॥ ८७० ॥

## श्रीसूर्य उवाच ।

महिषीमवधीत्पूर्वभवे पूर्वं नराधमः । सोऽत्र जन्मनि पक्षीन्द्र कृष्णगुल्मयुतो भवेत् ॥ १ ॥
स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषिताम् । सूक्ष्मकम्बलसंयुक्तां दद्याद्विधिविदे सुत ॥ २ ॥
कृष्णगुल्मोद्भवा पीडा नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकाष्टशततम ॥ ८७१ ॥

## श्रीसूर्य उवाच ।

प्राग्भवे याऽभवत्काचित् स्वर्णकारी पतत्रिण । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लकुटेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः । मृता च तेन दुःखेन गर्भजातसमन्विता ॥ ३ ॥
तत्कर्मणा समायुक्ता संप्राप्योचितशासनम् । पुनः शूद्रीसमा जाता गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यै (द्यै)र्नानाविभवसंयुता । पुत्रसंततिहीना सा प्राग्गोघातात्समुद्भवात् ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापक्षयंकरम् । कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा ॥ ६ ॥
मार्गे हि धर्मतो यत्नात्प्रतिष्ठां कारयेत्ततः । संस्थाप्य च शिवं तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच्च ततस्तत्र तिलान्नाऽयुतानिह । भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् ॥ ८ ॥
दद्याच्चैकां कपिलां सर्वपापप्रणाशनीम् । प्रायश्चित्तमिदं सुत पूर्वजन्माघनाशनम् ॥ ९ ॥
नैवं या कुरुते श्रुत्वा तस्याः संततिज भयम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकाष्टशततम ॥ ८७२ ॥

## श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले पापमेवात्र बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना त्वत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्रिसप्तत्यधिकाष्टशततम ॥ ८७३ ॥

---

१ अप चैव हन्तानामि युक्त्या दिशोतैपदिद गमेत् ।

श्रीसूर्य उवाच।

दुग्धं हरति या नारी कस्याचित्पापमोहिता। पूर्वजन्मनि सात्रैव बहुमूत्ररुजाऽऽकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गपारगे। विधिना काश्यपेयाऽत्र न पश्येद्बहुमूत्रताम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकाष्टशततमः ॥ ८७४ ॥

श्रीसूर्य उवाच।

यो मोहाद्धातयेत्सूत महिषीं नवयौवनाम्। प्राग्भवे नियतं सोऽपि कुष्ठगुल्मेन बाध्यते ॥ १ ॥
स नानारत्नदानेन विधिना गरुडाग्रज। नाशयेत्कुष्ठगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्द्विजाय विधिनाण्डज। महिषीपापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचसप्तत्यधिकाष्टशततमः ॥ ८७५ ॥

श्रीसूर्य उवाच।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकृन्तनम्। ब्रह्मपुत्रस्य पण्डः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृतं वापि निष्कृतिर्नात्र विद्यते। ब्रह्मघातान्महापापात्पण्डः स्याद्बहुजन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षट्सप्तत्यधिकाष्टशततमः ॥ ८७६ ॥

श्रीसूर्य उवाच।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत। पूर्वजन्मनि पुण्यापि बहुदानरता सती ॥ १ ॥
अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज। अत्र पुत्रविहीना सा फलहृत्पापजाद्दृढात्[3] ॥ २ ॥
फलानां बहुदानाच्च चातुर्मास्येऽत्र नित्यशः। भोजनं तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् ॥ ३ ॥
प्रायश्चित्तं परं तस्मात् फलहृत्पापनाशनम्। अमायां नारिकेलानि देयानि खलु शक्तितः ॥ ४ ॥
तत्कृते सुतवृद्धिः स्याज्जीवनं वर्षसप्ततिम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकाष्टशततमः ॥ ८७७ ॥

श्रीसूर्य उवाच।

दधिहारी पुमान्पूर्वं जन्मन्यप्रे खगेश्वर। जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः। तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकाष्टशततमः ॥ ८७८ ॥

श्रीसूर्य उवाच।

महिषीघातने नारी प्राग्भवे विनतासुत। अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन[1] पीड्यते ॥ १ ॥
दद्यात्सावरणां सूत महिषीं यमदेवताम्। युगकंबलसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत। तस्मिन्नुपगते तत्र कृष्णगुल्मं[2] न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकाष्टशततमः ॥ ८७९ ॥

---

१ कृष्णेति–ख० पु०। २ कृष्णेति–ख० पु०। ३ पापजाद्दृढादिति भवेत्। पापसम्भवादिति तु युक्तं प्रतिभाति।

श्रीसूर्य उवाच ।

वेधे प्राग्वृषभाणां च नासाग्रं गरुडाग्रज । नासाछेदो न तस्यास्ति शुभभावे विनिश्चयात् ॥ १ ॥
नास्ति तद्भिन्नमयं क्वापि दत्तेदानशतैरपि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकाष्टशततम ॥ ८८० ॥

---

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवान्नात्मघातनम् । परघाते कृते सूत स्वशरीरमथाऽत्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महाचौर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव लाटदेशेऽसौ पादजो धर्मकर्मवित् ॥ ६ ॥
राजमान्योऽतिकुशलो विष्णुभक्तिपरायणः । सत्पात्रेषु ददौ दानमन्नवस्त्रधनादिकम् ॥ ७ ॥
परोपकारनिरतो जनो धर्मोपदेशकः । पुत्रवान्धनवाञ्शूरो यशस्वी ज्ञानवाञ्शुचिः ॥ ८ ॥
शुभमप्यशुभं चैव यौवने कृतवान्सुत । शुभाख्यं कर्म तत्प्रोक्तमशुभं शृणु तत्त्वतः ॥ ९ ॥
धनिनो राजमान्यस्य वैश्यस्य प्रतिवेशिनः । पत्न्या दास्या च श्यालेन संयुक्तः स्त्रीसाहाय्यतः १०
विषप्रयोगात्तं वैश्यं हत्वा तद्द्रव्यमाहृतम् । ([१]मकराख्यं च निक्षेपं पञ्चकुम्भमयं तथा ॥ ११ ॥
तन्मध्ये कुम्भमेकं तु संकल्पार्थितव्यं ततः ।) पापं घोरं समाश्रित्य मृतः कतिपयैर्दिनैः ॥ १२ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यावशेषेण हिमवत्पार्श्वमाश्रिते ॥ १३ ॥
मायापुरीमहाक्षेत्रे गङ्गापश्चिमभागतः । धर्मकर्मसमायुक्तो जातोऽयं ब्राह्मणोऽधुना ॥ १४ ॥
इदं तु पञ्चमं जन्म ब्रह्मवंशसमाश्रितम् । तिर्यग्योनिषु भूभागे भुक्त्वा जन्मचतुष्टयम् ॥ १५ ॥
संकल्पितस्य हरणात्स्वर्भानुर्जन्मलग्नगः । मकराख्यस्य भूभागान्निधेश्च हरणादपि ॥ १६ ॥
लग्नतः पञ्चमे चैव मकरे भूमिनन्दनः । हरणात्पञ्चकुम्भस्य पञ्चग्रहसमाकुलः ॥ १७ ॥
आयस्थाने विशेषेण द्यूने केतुर्व्ययास्थितः । वातामयो गुप्तपित्तः कदाचित्कफरोगवान् ॥ १८ ॥
महदारम्भकश्चादौ परिणामे विरक्तभाक् । संसारदुःखभूयिष्ठां निवृत्तिं चिन्तयेत्सदा ॥ १९ ॥
राजमान्यो वदान्यश्च पितुः सुखविवर्जितः । धर्मे बुद्धिं सदा कुर्यान्मन्दस्तद्धानिकृन्मुहुः ॥२०॥
प्राग्भवे ये सहायास्तत्पापकर्मणि वै खग । तेऽत्र पत्नीसुता भूत्वा दुःखं दत्त्वा मृतिं गताः॥२१॥
प्राक्पत्नी या तु संजाता सैवेदानीं तथा भवेत् । निक्षेपद्रव्यहरणात्पापाद्दुःखी च सर्वदा ॥ २२॥
दासीप्रसङ्गजात्पापान्निर्यातः सुखवर्जितः । स्त्रीप्रसङ्गेनातिसौख्याच्चिन्ताक्रान्तो भवेत्सदा ॥२३॥
लक्ष्योऽत्र लक्षणैरेभिः प्रायश्चित्तं वदाम्यहम् । पलैर्दशमितैः कार्यो वैश्यो दुर्वर्णधातुतः ॥ २४ ॥
पत्रे लेख्यः शुभाकारः स्त्रीयुगेवमुदीरयेत् । "दुर्वर्णनिर्मितं त्वेनं सभार्य सोमदैवतम् ॥ २५ ॥
ददेऽहं विप्रमुख्याय पूर्वपापविशुद्धये" । घृतपूर्णान्पञ्चकुम्भान्पलरूप्यमुखान्पृथक् ॥ २६ ॥
पञ्चभ्यो ब्राह्मणेभ्यो वै दद्यात्पापविशुद्धये । धेनुं सालंकृतां दद्यादाचार्याय प्रयत्नतः ॥ २७ ॥
विप्रेभ्यो दक्षिणां दद्याद् भक्त्या विप्रांश्च भोजयेत् । य एवं कुरुते सूत शक्त्या पापविशोधनम् ॥
स पुत्रसुखमाप्नोति स्त्रिया चात्रैव जन्मनि । नाधयो व्याधयस्तस्य न वीर्यक्षयमाप्नुयात् ॥२९॥

---

१ इदमधिकमिव प्रतिभाति ।

न करोति यदा लोभात्मोक्तं वै पापशोधनम्। न जीवन्ति सुतास्तस्मिञ्जीविते नाऽत्र संशयः ३०
शून्यं पञ्चमिते वर्षे रिष्टं चाऽकृतनिष्कृतेः। प्रायश्चित्ते कृते तस्य सन्तानां वर्षसप्ततिम्॥ ३१॥
जीवनं कथितं त्वत्र न त्वरिष्टभयं भवेत्। न भवेत्पुत्रमरणं निर्य्याणत्वे च सद्गतिः॥ ३२॥
जन्मादिमरणांतं हि स्वल्पमेवात्र सूचितम्। यदन्तरगतं सूत तन्मच्छास्त्राद्विलोकयेत्॥ ३३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकाष्टशततमः॥ ८८१॥

## श्रीसूर्य उवाच।

कश्चिदासीन्महाभाग चारणोतिप्रियंवदः। कवित्वशक्तिनिरतो यद्दुचारणसंयुतः॥ १॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति। तत्सेवानिरतो नित्यं चिरकालमुपस्थितः॥ २॥
भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः। महाभूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम्॥३॥
सिन्धोः पश्चिमभागे तु शतयोजनसंमिते। देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते॥ ४॥
गौराङ्गः पृथुलो धूर्त्तः सर्वविद्याविशारदः। सुखैश्वर्यसमाक्रान्तो धनवाहनभोगभाक्॥ ५॥
शूरः सुवेशोऽतिक्रूरो बहुपालनतत्परः। पापाल्लोभरतः क्रोधी नानाभिरवशासनः॥ ६॥
रिष्टं षष्टिमिते वर्षे पञ्चहीने पतत्रिण। महाकालनरादानात्सुवर्णस्य पतत्रिण॥ ७॥
सर्ववित्तषडंशेन महारिष्टहरं परम्। पञ्चाशीतिमितायुः स्याद्दत्ते कालनरेऽण्डज॥ ८॥
प्रायश्चित्ते कृते ह्यत्र रिष्टं स्यात्प्रोक्तवत्सरे। कालरूपेण शस्त्रेण तत्क्षणं मरणं स्मृतम्॥ ९॥
महाघोराहवे सूत चात्मघातादिदं फलम्। चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम्॥ १०॥
हृदिस्थं लशुनं पुत्र षडङ्गुलमितं शुभम्। दम्पत्यं हरणान्नारी प्राग्भवे त्वत्र जन्मनि॥ ११॥
मेदसा पीड्यते सा तु विनतानन्दवर्द्धन। दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुंबने॥ १२॥
मुच्यतेऽत्र महारोगान्नात्र कार्या विचारणा॥ १३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो द्व्यशीत्यधिकाष्टशततमः॥ ८८२॥

## श्रीसूर्य उवाच।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज। अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते॥ १॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च। न पश्यत्यक्षिजं रोगं कातरोत्थं हि काश्यप॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्यधिकाष्टशततमः॥ ८८३॥

## श्रीसूर्य उवाच।

प्राग्भवे सुसुखी काचिद्रता देवालयेऽण्डज। दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया॥ १॥
सा शूद्राऽत्र महाभाग धनपुत्रसमन्विता। चन्द्रग्रहे महास्नानात्पापकृतात्तु पतत्रिण॥ २॥
तेन कर्मविपाकेन चक्षुःपीडाऽतिदारुणा। त्रिदोषैर्दूषिता चात्र युवभावे खगेश्वर॥ ३॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम्। दीपा देया घृतेनाऽत्र पूरयित्वा सुवर्णजाः॥ ४॥
सुवर्णाद्विमितं भव्यं संपूज्याथ महेश्वरम्। गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः॥ ५॥
दद्याद्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते॥ ६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकाष्टशततमः॥ ८८४॥

## श्रीसूर्य उवाच।

दुष्टगन्धयुतः सूत जायते सोऽत्र जन्मनि। मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु॥ १॥

१ तत्रेति–ख० पु०। २ 'फलेनैव' इति–ख० पु०।

मधुधेनुप्रदानाद्धि ब्राह्मणाय पतत्रिण । दुष्टगन्धिकृताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकाष्टशततमः ॥ ८८५ ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कातराक्षी प्रजायेत चक्षुरोगात्पतत्रिण ॥ १ ॥
धेनुं रत्नमयीं दद्यात्ससुवर्णां विधानतः । न पश्यत्यक्षिरोगं सा तद्दत्तेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकाष्टशततमः ॥ ८८६ ॥

श्रीसूर्य उवाच ।

प्राग्जन्मन्यंत्यभूत्कश्चिन्नरो राजकृपान्वितः । दण्डाधिकारवाञ्शूद्रो दृढो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र लोभाद्वापि विशेषतः । व्यभिचाररतस्त्वेकब्राह्मणस्य पतत्रिण ॥ २ ॥
लोभाच्चकारासौ तत्र ह्यण्डच्छेदं च तत्क्षणात् । स तेन कर्मणा युक्तो मुक्त्वाऽतियप्रशासनम् ३॥
देशे पश्चनदे ह्यत्र जातः शूद्रोऽस्ति चाधमः । स चास्त्यत्र विवर्णस्तु पण्ढः पापमतिः सुखी ॥४॥
सकलैश्वर्यसंपन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मन्यसौ पंढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्यधिकाष्टशततमः ॥ ८८७ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्यप्रशोधनी । राजमानविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते चोदरे भृशम् । वातरक्तादि शिरसि जायते पक्षसंख्यया ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी । प्रियभक्तिरता नित्यं दानदाक्षिण्यवर्तिनी ॥ ३ ॥
एकपुत्रप्रसूता चाप्यन्यपुत्रमुपागता । पश्चात्पुत्रं गतं शान्तिमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं नश्यति तत्त्वियः । विधानं च हितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातो धातुकांस्यादिकारकः । ब्राह्मणो मित्रसंजातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्त्ता च विप्रद्रव्येण वर्द्धितः । काले न महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
संचितं तद्धनं सर्वं न तु किंचित्प्रदापितम् । ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासन्ततिनाशनम् । यो वै तस्य मृतः पुत्रः स जातो ब्राह्मणस्य च ॥ ९ ॥
इदं जन्म चतुर्थं तु ब्रह्मवंशसमुद्भवम् । भार्या दुःखकरी होयं पुत्रहीना पतत्रिण ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश सन्ततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

ब्रह्मस्वं विषसंतुल्यं पुत्रपौत्रविनाशनम् । विषेणैकोऽपि म्रियते ब्रह्मस्वात्सुतसंततिः ॥ १२ ॥
तस्य सन्ततिनाशाय कारयेन्निष्कृतिं पराम् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः । तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सशीतसलिलैः पूर्णं ससर्वौषधिपल्लवम् । नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥

तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्त्तिं निष्कद्वयविनिर्मिताम् । सुवर्णस्य विशुद्धां च दापयेद्देववादिने ॥ १७ ॥
प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम् । शतमष्टोत्तरं पक्षिन् द्रोणाः सर्वेत्र निर्मिताः॥१८॥
जातीपुष्पसमुद्भूता लक्षपूजा शिवोपरि । संकष्टान्मोचयेद्धेनुं वस्त्रेण परिधापयेत् ॥ १९ ॥
एवं कृतविधेः सूत निश्चला सन्ततिर्भवेत् ॥ २० ॥

*इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्यधिकाष्टशततमः ॥ ८८८ ॥*

---

श्रीसूर्य उवाच ।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत् । साऽत्र जन्मनि पक्षीन्द्र दुर्गन्धाढ्या प्रजायते॥१॥
मधुधेनुप्रदानात्तु व्यतीपातादिपर्वसु । दुर्गन्धरोगात्सततं मुच्यतेऽत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्यधिकाष्टशततमः ॥ ८८९ ॥

---

श्रीसूर्य उवाच ।

पण्डोऽसि राजसन्मानी अत्र जन्मनि चाण्डज । महादुष्टक्रियायुक्तो धनधान्यनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यसमन्वितः । महामानी महाधूर्तः पण्डोऽगम्यागनिसेवनात् ॥ २ ॥
नाऽत्र जन्मनि भो सूत प्रायश्चित्तं मयोदितम् । अगम्यागमनं पापं प्रायश्चित्तविवर्जितम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकाष्टशततमः ॥ ८९० ॥

---

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा मया प्रोक्ता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं यस्माच्छृणुष्वात्र पतत्रिण ॥ १ ॥
अनया द्रव्यलोभेन सपत्न्या घातितः सुतः । प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥
तस्मादियं महादुष्टा बाल्ये कुष्ठान्विता सुत । अविवाह्या यतः सर्वा पितृगेहे स्थिताण्डज ॥ ३ ॥
चतुर्विंशमिते वर्षे मरणं कीर्तितं ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकनवत्यधिकाष्टशततमः ॥ ८९१ ॥

---

श्रीसूर्य उवाच ।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दन्तुरः सोऽपि काले तत्पापचिह्नितम् ॥ १ ॥
घृतकुम्भं यथा दद्याच्छक्त्या विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकाष्टशततमः ॥ ८९२ ॥

---

श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहात्खगाधिपः । गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकाष्टशततमः ॥ ८९३ ॥

---

श्रीसूर्य उवाच ।

अथ काचित्सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिना प्रेरिता पूर्वं शत्रोर्दग्धं तया गृहम् ॥ १ ॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । ब्राह्मण्येका सबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधस्तत्र किंचित्कालेन सा मृता । भुक्त्वा तत्र फलं पूर्वपुण्यपापसमुद्भवम् ॥ ३ ॥

सा शूद्री यमुनातीरे जाताऽत्र पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नाऽत्र कार्या विचारणा ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकाष्टशततमः ॥ ८९४ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतस्तदा । पूजकश्चातिमानी च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः । तेन तद्वृषभस्याऽपि प्राग्भवे विनतासुत ॥ २ ॥
छित्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम् । तत्र तज्जनितं भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते । पण्ढस्तु तेन पापेन स चास्त्यत्र पतत्रिण ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः । दृढपापार्जनात्सूत प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च तद्गतिः । तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पञ्चनवत्यधिकाष्टशततमः ॥ ८९५ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले घातसम्भवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोपशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षण्णवत्यधिकाष्टशततमः ॥ ८९६ ॥

श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्वैल्लोभात्पुराभवे । कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणेषु पतत्रिण । कण्डूरोगोपशमनं दानाचैलघटद्वयात् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्यधिकाष्टशततमः ॥ ८९७ ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ताधिविन्ना सा महारोपवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम् । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णनाशोऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मन्यसौ पापान्मुक्तो भवति चाण्डज ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकाष्टशततम. ॥ ८९८ ॥

श्रीसूर्य उवाच ।

स्वभक्षार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खञ्जोऽपि नात्र कार्या विचारणा ॥१॥
न तस्य विनमपं प्रोक्तमत्र जन्मनि चाण्डज । स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकाष्टशततमः ॥ ८९९ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहाद् गुडं हरति कस्य चित् । गुल्मोदरेण रोगेण पीड्यते चाऽत्र जन्मनि १
गङ्गायां हि महाभाग गुडधेनुप्रदानतः । तत्र स्नानान्महापुण्यात्तस्माद्रोगात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवशततमः ॥ ९०० ॥

श्रीसूर्य उवाच ।

कश्चिद्वैश्योऽभवत्पूर्वभवे नेपालविश्रुते । वहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः ॥ १ ॥
स तेन कर्मणा युक्तो गतो धर्मपुरं यतः । शुभं न्यायफलं भुक्त्वा वै जातोऽत्र महीधरे ॥ २ ॥
गौरो भव्यो महाज्ञानी महाविभवसंयुतः । देशेदेशेगविविख्यातो घृणी लघुमहायशाः ॥ ३ ॥
स्वस्त्रीत्यागान्महापापाज्जायते स्त्रीविवर्जितः ॥ ४ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तेः सौख्यकारिणीम् ॥ ५ ॥

श्रीसूर्य उवाच ।

पार्वतीप्रतिमां कृत्वा हैमिकां कार्यकारिणीम् । पलपञ्चमितां लेख्यां गन्धमाल्यैरलङ्कृताम् ॥६॥
दद्याद्वेदविदिज्ञाय स कुलीनाय चार्थिने । प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम् ॥ ७ ॥
ब्रह्मदैवतमंत्रेण गृह्णाति स महाद्विजः । पश्चादष्टाक्षरं मंत्रं सहस्रं पापशोधनम् ॥ ८ ॥
जपेदष्टसहस्रं तु सूर्यमंत्रं महाबलम् । होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् ॥ ९ ॥
य एवं कुरुते सूत पूर्वपापविनाशनम् । प्रायश्चित्तं परं त्वत्र तस्मात्पापात्प्रमुच्यते ॥ १० ॥
नैवं करोति यो मोहाज्जडधीर्दैवबाधितः । न तस्य स्त्रीसुखं त्वत्र रिष्टं पड्डेदकेऽन्दके ॥ ११ ॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकनवशततमः ॥ ९०१ ॥

श्रीसूर्य उवाच ।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतासुत । दद्यादश्वं नवं तत्र स्वर्णनिष्कयुतं शुभम् ॥ १ ॥
सहासनमलङ्कारं पूजयित्वा विधानतः । विधिज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ २ ॥
न स पश्यति खंजत्वं दानस्यास्य प्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकनवशततमः ॥ ९०२ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परतैलापहारिणी । साऽत्र जन्मनि पक्षीन्द्र कंडूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तैलघटद्वयात् । सुवर्णाढ्या तथा शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकनवशततमः ॥ ९०३ ॥

श्रीसूर्य उवाच ।

राजप्रचारी वै कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दधानोऽस्याश्चर्मकम् । गर्भं चकार कामेन भाविनोऽर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके पतत्रिण । शिवपूजनजात्पुण्यात्प्रागत्र धनभोगभाक् ॥ ३ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकनवशततमः ॥ ९०४ ॥

श्रीसूर्य उवाच ।

गर्भाढ्या याऽवधीत्पूर्वं मृगं हि विनतात्मज । स्वगर्भपालने दक्षा जन्मन्यत्र गतिं शृणु ॥ १ ॥
तद्घातकाले खंजा सा भविष्यति शुभानना । गर्भपातनदुःखार्ता तथैव महदेनसः ॥ २ ॥

मा शूद्री यमुनातीरे जाताऽत्र पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नाऽत्र कार्या विचारणा ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकाष्टशततमः ॥ ८९४ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतस्तदा । पूजकश्चातिमानी च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृङ्गो भयानकः । तेन तद्वृषभस्याऽपि प्राग्भवे विनतासुत ॥ २ ॥
छित्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम् । तत्र तज्जनितं भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते । षण्ढस्तु तेन पापेन स चास्त्यत्र पतत्रिण ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः । दृढपापार्जनात्सूत प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च तद्गतिः । तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पंचनवत्यधिकाष्टशततमः ॥ ८९५ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले घातसम्भवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्यधिकाष्टशततमः ॥ ८९६ ॥

श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्भवेल्लोभात्पुराभवे । कंड्वा रोगेण सततं पीडयते ऽत्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणेषु पतत्रिण । कंडूरोगोपशमनं दानाच्चैलवदद्भयात् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्यधिकाष्टशततमः ॥ ८९७ ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ताधिविन्ना सा महारोषवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम् । तेन पापप्रभावेण जातोऽप्ययं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मन्यसौ पापान्मुक्तो भवति चाण्डज ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकाष्टशततमः ॥ ८९८ ॥

श्रीसूर्य उवाच ।

स्वभक्षार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खंजोऽपि नात्र कार्या विचारणा ॥ १॥
न तस्य विनमयं मोक्षमत्र जन्मनि चाण्डज । स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकाष्टशततमः ॥ ८९९ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहाद् गुडं हरति कस्य चित् । गुल्मोदरेण रोगेण पीडयते चाऽत्र जन्मनि १
गङ्गायां हि महाभाग गुडधेनुप्रदानतः । तत्र स्नानान्महापुण्यात्तस्माद्रोगात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवशततमः ॥ ९०० ॥

श्रीसूर्य उवाच।

कश्चिद्वैश्योऽभवत्पूर्वभवे नेपालविश्रुते। बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः ॥ १ ॥
स तेन कर्मणा युक्तो गतो धर्मपुरं यतः। शुभं न्यायफलं भुक्त्वा वै जातोऽत्र महीधरे ॥ २ ॥
गौरो भव्यो महाज्ञानी महाविभवसंयुतः। देशेदेशेऽतिविख्यातो घृणी लघुमहायशाः ॥ ३ ॥
स्वस्त्रीत्यागान्महापापाज्जायते स्त्रीविवर्जितः ॥ ४ ॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तेः सौख्यकारिणीम् ॥ ५ ॥

श्रीसूर्य उवाच।

पार्वतीप्रतिमां कृत्वा हैमिकां कार्यकारिणीम्। पलपञ्चमितां लेख्यां गन्धमाल्यैरलङ्कृताम् ॥६॥
दद्याद्वेदविदे विप्राय स कुलीनाय चार्थिने। प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम् ॥ ७ ॥
ब्रह्मदैवतमन्त्रेण गृह्णाति स महाद्विजः। पश्चादष्टाक्षरं मंत्रं सहस्रं पापशोधनम् ॥ ८ ॥
जपेदष्टसहस्रं तु सूर्यमंत्रं महाबलम्। होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् ॥ ९ ॥
य एवं कुरुते सूत पूर्वपापविनाशनम्। प्रायश्चित्तं परं त्वत्र तस्मात्पापात्प्रमुच्यते ॥ १० ॥
नैवं करोति यो मोहाज्जडधीर्दैवघातितः। न तस्य स्त्रीसुखं त्वत्र रिष्टं षड्दर्केऽब्दके ॥ ११ ॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकनवशततमः ॥ ९०१ ॥

श्रीसूर्य उवाच।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतासुत। दद्यादश्वं नवं तत्र स्वर्णनिष्कयुतं शुभम् ॥ १ ॥
सहासनमलङ्कारं पूजयित्वा विधानतः। विधिज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ २ ॥
न स पश्यति खंजत्वं दानस्यास्य प्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकनवशततमः ॥ ९०२ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत परतैलापहारिणी। साऽत्र जन्मनि पक्षीन्द्र कंडूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तिलघटद्वयात्। सुवर्णाढ्या तथा शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकनवशततमः ॥ ९०३ ॥

श्रीसूर्य उवाच।

राजप्रचारी वै कश्चिच्चारणः पूर्वजन्मनि। भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दधानोऽसावधर्मकम्। गर्भं चकार कामेन भाविनोऽर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके पतत्त्रिण। शिवपूजनजातपुण्यात्प्रागत्र धनभोगभाक् ॥ ३ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकनवशततमः ॥ ९०४ ॥

श्रीसूर्य उवाच।

गर्भाढ्या याऽवधीत्पूर्वं मृगं हि विनतात्मज। स्वगर्भपालने दक्षा जन्मन्यत्र गतिं शृणु ॥ १ ॥
तद्धातकाले खंजा सा भविष्यति शुभानना। गर्भपातनदुःखार्ता तथैव महदेनसः ॥ २ ॥

तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ ३ ॥
स्वर्णनिष्कयुतं चाऽत्र पूर्वपापात्प्रमुच्यते । न पश्यति च गर्भोत्थां पीडामत्रैव जन्मनि ॥ ४ ॥
दानप्रभावात्पक्षीन्द्र खंजत्वं नाप्नुयादिह ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाविंशत्यधिकशततमः ॥ १०५ ॥

## अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मेहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
उर्ध्वं वातादिना पीडा बाल्ये स्याद्ग्रहणीगदः । तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः॥२॥
रक्तस्रावादिना पीडा जायते चोदरानिलः । उदरात्तस्या गर्भस्य पातं कुर्याच्च पृष्ठतः ॥ ३ ॥
द्वित्रैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा । केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । व्यभिचारभयाच्चापि तया गर्भश्च पातितः ॥ ५ ॥
क्षतिकष्टेऽहनतेय गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचारो यतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्री च कुलटा वाक्यलंघनात् । भर्तुस्तच्चारिणी वृत्तिर्दुष्टसङ्गतिधार्जनात् ( १ ) ॥७॥
तेन दुष्टेन यद् द्रव्यं हृतं तस्करबुद्धिना । भुक्तं ताभ्यां वैनतेय प्रत्यक्षं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः । यातना बहुधा प्राप्ता पश्चान्मानुष्यमाप्नुयात् ॥ ९ ॥
किंचित्पुण्यप्रभावेण क्षात्रोऽयं जन्मतो भुवि । इदं जन्म चतुर्थं तु गर्भपातो हि जायते ॥ १० ॥
उभाभ्यां हि कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

## अरुण उवाच ।

प्रायश्चित्तं कृतं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश येन गर्भः स्थिरो भवेत् ॥ १२ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी नानागर्भं जिघांसति । निष्कृत्या च तया शुद्धिः श्रूयतां कश्यपात्मज॥१३॥
नारी नियमसंवीता ध्रुवं सा व्रतकाङ्क्षिणी । सौम्यायने समापूर्यमाणपक्षे शुभेऽहनि ॥ १४ ॥
तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत् । पयः स्रवन्ती शान्ताङ्गसुरभीं शुभलक्षणाम् ॥ १५ ॥
गृहमानीय विधिवत् पूजयेत्तां समाहिता । इष्टैस्तु यवसैः पानैर्भक्ष्यैः कण्डूयनैरपि ॥ १६ ॥
रुचिरैश्च सुमिष्टान्नैः स तां परिचरेत्सदा । रात्रौ पुष्पावलीभिश्च दीपस्रक्चन्दनादिभिः ॥ १७ ॥
सुगीतमङ्गलध्वानैस्तदधःशायिनी भुवि । प्राणयात्रां प्रकुर्वीत तस्यास्तु पयसा हविः ॥ १८ ॥
तस्यास्तु पञ्चगव्यानि यथान्यायं यथाश्रुति । एवं व्रतपरा नारी मासिमासि तु संतता॥ १९ ॥
तस्या धेनोः सवत्साया इदं समभिकांक्षिणी । व्रतान्ते तु द्विजाचार्यं समस्तगुणशालिनम् ॥२०॥
अभ्यर्च्य पूजयेद्दत्तया वस्त्रस्रग्दामभूषणैः । सम्यगभ्यर्च्य तां धेनुं तनयं तत्स्तनंधयम् ॥२१ ॥
कृत्वा च विधिना तस्मै तां दद्यामितिभाषिणी । सुवर्णशृङ्गमाग्नेयं माषपाडशसंयुतम् ॥ २२ ॥
दापये गां सवत्सां च पूर्वपापापनुत्तये । यन्मया कुलटाकांक्षानानागर्भा जिघांसिताः ॥ २३ ॥
नानाभेदैः प्रपातं मे गर्भा वै बहवो भुवि । तस्य कर्मार्जितं पापं गर्भपातादि दूषणम् ॥ २४ ॥
एतत्समस्तनाशाय सवत्सां दानतस्त्वमाम् । इह जन्मनि वन्ध्यत्वं नाशयेत्तस्यतस्य तु ॥ २५॥

---

१ ' वाक्यरोपनात् ' इति–ख० पु० । वाक्यलङ्घनादिति तु युक्तम् ।

दानेनानेन सुरभेरनघा सातिसुव्रता । भवेयं त्वत्प्रसादेन गर्भो मे स्थिरतामियात् ॥ २६ ॥
एवमस्त्विति तां धेनुं समादाय सदक्षिणाम् । हिरण्यं रजतं ताम्रं फलानि च प्रदापयेत् ॥ २७ ॥
द्विजमुख्याय दत्त्वाऽथ भूरिद्रव्येण तोषयेत् । भोजयेच्च शतं विप्रान्नानान्नैः सकुपायसैः ॥२८॥
एवं कृतविधेः सूत नारी वा दुःखनाशिनी । वन्ध्यत्वान्मुच्यते सूत पुत्रप्राप्तियशस्विनी ॥ २९॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकनवशततमः ॥ ९०६ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चित्तुरगं घातयेन्नरः । वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विविधसर्वोपस्करसंयुतात् । वक्रकंठन संभूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकनवशततमः ॥ ९०७ ॥

श्रीसूर्य उवाच ।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि । पादहीनो भवेत्सूत भृशं चाकृतनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम् । ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टाधिकनवशततमः ॥ ९०८ ॥

श्रीसूर्य उवाच ।

संकरः प्राग्भवे सूत बभूव धनसंयुतः । तीर्थवासी विरक्तश्च लोभी धर्मक्रियान्वितः ॥ १ ॥
क्रूरं कर्म कृतं तेन दुष्टसङ्गेन चाण्डज । चौर्येण गां परां नीत्वा क्षुधितैर्भक्षिता पुरा ॥ २ ॥
मृतास्ते तेन पापेन नानायोनिमुपागताः । स तीर्थमृत्युवशतो गङ्गातीरेऽत्र पादजः ॥ ३ ॥
तीर्थमृत्युप्रसादाच्च धनपुत्रसमन्वितः । युवभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशसंयुताम् । लिखित्वा गां विधानेन पूजयित्वा विधानतः ॥ ५ ॥
सा देया वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियतं चायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्त्या भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिना चेदं स तद्दोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवाधिकनवशततमः ॥ ९०९ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । सा तत्र पुरुषं वापि घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वात्स्थानाच्च बहुवेकृतः । पादभंगो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥
करोति तस्य पापस्य चिन्मयं विधिनात्र चेत् । तस्मात्पापात्प्रमुच्येत न चोर्ध्वात्पतनं तथा ॥३॥
अश्वं निष्कसुवर्णाढ्य चिन्मयं पापशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशाधिकनवशततमः ॥ ९१० ॥

श्रीसूर्य उवाच ।

या नारी घातयेदश्वं प्राग्भवे सोऽत्र जन्मनि । महापर्वसु गन्धादि पुण्यतीर्थेषु दापयेत् ॥ १ ॥
सर्वोपस्करसंयुक्तं सुवर्णाढ्यं सुसंयता । सा मुच्यते वक्रकंठपीडनाद्दिनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकनवशततमः ॥ ९११ ॥

श्रीसूर्य उवाच ।

आसीत्स्त्री महाभाग पाञ्चाले देशके शुभे । नानाधनसमायुक्तो ग्रामणो विश्रुतो महान् ॥ १ ॥
दुष्कृतं चरितं तेन भाविनोर्थस्य वै बलात् । शूद्रायां च धृतो गर्भः कामलोभेन निश्चयात् ॥२॥
कृतो यत्नो महांस्तत्र नासीद्गर्भस्य पातनम् । सा तु हालाहलं पीत्वा लोकानां शंकया मृता॥३॥
महत्यां पीडया चैव बालकोऽपि मृतस्ततः । सहायानां पंचकेन कृतं भ्राकर्म दारुणम् ॥ ४ ॥
कर्मणां संग्रहं चेदं गर्भनाशसमुद्भवम् । ततो मरणसंप्राप्तो बाहुजोऽथ सहायभृत् ॥ ५ ॥
सूर्यलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्भकान्भुक्त्वा स्वकृताद् दृढकर्मजात्॥६॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । स जातो यमुनातीरे बाहुजोप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लम्बश्च धनसौख्यसमन्वितः । पितृमातृविहीनश्च मितदो लोभमोहितः ॥ ८ ॥
नैकस्त्रीसंयुतः कामी नानाविभवसंयुतः । आर्यतसुखयुक्तश्च बुद्धिमान्देशविश्रुतः ॥ ९ ॥
धर्मादिदं तथा पापात्क्रूरः पापरतः शठः । सकम्पो हृदि रोगश्च मनोदुःखसमन्वितः ॥ १० ॥
शूद्रायां वीर्यदानात्प्राक् तद्वधाज्जातपुत्रकः । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन् सर्वपापापनोदनीम् । तत्र धर्मकरीं धन्यां लोकानां हितकाम्यया ॥१२॥

श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सूत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भधारणनाशनीम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चमितः शुभा । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः॥१४॥
तदर्द्धार्धेन वा कार्या विप्र वित्तानुसारतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशनी ॥ १५ ॥
पंचमासमितो विष्णुः सर्वपापप्रणाशनः । प्रजापतिं तथा दद्यात्सौवर्णं पञ्चमाषकम् ॥ १६ ॥
राजतं च तथा दद्यात्सूर्यं सार्धरक्तात्मकम् । गायत्रीं दशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्षपैः सतिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये द्वादशाधिकनवशततम. ॥ ९१२ ॥

श्रीसूर्य उवाच ।

पिङ्गलाक्षो भवेदत्र पूर्वे रीत्यपहारकः । रीतेः पलानां च शतं देयं तत्पापशुद्धये ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद्ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकनवशततम. ॥ ९१३ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग खररोमा प्रजायते । पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयं हिरण्यं च दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गपारिणे ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकनवशततम ॥ ९१४ ॥

श्रीसूर्य उवाच ।

प्रभुक्तं गर्भगुप्त्यर्थं कुक्कुटाण्डं खगेश्वर । अत्र जन्मनि सा जाता संकरा लोमसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥

कृत्वाऽण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम् । तदर्धार्धमितं वापि त्रिषु वित्तानुमानतः ॥ ३ ॥
दत्त्वा द्विजाय विधिना स्वाचरेच्छांकरं व्रतम् । फाल्गुन्यादिचतुर्दश्यां कृष्णायां मासिमासि तु ॥४॥
पूजयेच्छंकरं रात्रौ तथा जागरणेन च । भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशाधिकनवशततमः ॥ ९१५ ॥

श्रीसूर्य उवाच ।

शृणु सूत महाभाग कर्म यत्कृतवान्पुरा । जीवोऽयं तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः । राजप्रचारी बलवाञ्शूरो मंत्री महायशाः ॥ २ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः । गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
निश्वासाद्राजकार्येषु कृतं कर्मातिदुष्कृतम् । लुंठितं वरपुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः । स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥५॥
भुक्त्वाऽतिदारुणान्सूत नरकान्घोरदर्शनान् । तथा पुण्यफलं पुण्यात्प्राप्य पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा । नानाचौर्यक्रियायुक्तो लोकवंचनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि । सुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः । वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वयवा काश्यां स्थाप्य लिङ्गं शुभोभनम् । पूजयेत्तु शिवपौर्वं मंत्रैस्तल्लिङ्गजैस्तथा॥१०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः । संपूज्य विधिवदेवं तदन्ते भोजयेद्द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्दक्षिणाभिश्च पूजयेत् । नानाहिरण्यैर्विविधवस्त्रैर्वाचरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः । ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम् । सत्यं प्राप्य तु निर्याणं शिवलोकं हि गच्छति ॥१४॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप । नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तस्मा शलाका देया वै शूद्रकर्णेऽतिदारुणा । श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुरब्दशतं तस्य कृतनिष्कृतिचेतसः । प्रायश्चित्ते कृते रिष्टं जायते पश्चिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशाधिकनवशततमः ॥ ९१६ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे हन्यात् खरमत्रैव जन्मनि । खररोमसमान्यस्या रोमाणि प्रभवन्ति च ॥ १ ॥
ब्राह्मणाय तदा दद्यात्स्वर्णनिष्कत्रयं सुत । जायते सूक्ष्मरोमा सा विनतानन्दवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशाधिकनवशततमः ॥ ९१७ ॥

श्रीसूर्य उवाच ।

या पुरा वै हरेद्रीतिं नारी सा च पतत्रिण । पिङ्गाक्षी जायते साऽत्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलस्रनं तथा ब्राह्मणभोजनम् । गायत्र्या जुहुयाच्छक्त्या तिलान् रोगविनाशनम्॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकनवशततमः ॥ ९१८ ॥

श्रीसूर्य उवाच ।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी । साऽत्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनेभ्योऽथ पतत्रिण । भिक्षुभ्यश्च तथा दानादसद्दानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः । प्रायश्चित्ते कृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकनवशततमः ॥ ९१९ ॥

श्रीसूर्य उवाच ।

उष्ट्रघाती भवेत्पूर्वे जन्मन्यथ पतत्रिण । सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि । कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्यधिकनवशततमः ॥ ९२० ॥

श्रीसूर्य उवाच ।

वन्ध्येयं या महाभाग पृच्छति स्वं प्रयोजनम् । गर्भपातरता पूर्वं जतुष्यत्र फलं त्विदम् ॥ १ ॥
मुखजा प्राग्भवे त्वत्र तत्पापाचरणी हि सा निष्कृतिं तत्प्रवक्ष्यामि गङ्गायां हि पतत्रिण ॥ २ ॥
पूजयेल्लक्षं रुद्राणां त्रिगुणार्थं तदर्थकम् । शतयाथ भोजयेद्विप्रान् होमयेच्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत् । जायते संततिस्तस्या इह जन्मनि वै ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्यधिकनवशततमः ॥ ९२१ ॥

श्रीसूर्य उवाच ।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानाच्छतपलादत्र सीसकस्याण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्यधिकनवशततमः ॥ ९२२ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे कीराभिधे पुरा । धर्मकर्मकरो भक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः पर्वस्वपि च पात्रेभ्यो गोभूम्यश्वादिकानि च ॥ २ ॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । स्ववंशजस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरिभावेन रात्रौ भार्यासाहाय्यतः । तस्मिन्दाहे महाबाहो निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा । ततो बहुतिथे काले गतः स यमशासनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा पापादुष्टं शुभं तथा । शुभात्पुण्यात्पश्चनदे स जातो बाहुजावरः ॥ ६ ॥
मध्यस्वरूपो मतिमान् कुलेष्टः पुरुषो दृढः । रक्तो नोच्चो नातिनीचो बहुकल्पः पृथुर्विभुः ॥ ७ ॥
यौवनेऽन्त्ये सुखैश्वर्यधनैः स्थानैर्युतोऽसुतः । मितदो भोगभाग्याढ्यः कृती मानी जनप्रियः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्तातुरो यो घूर्तश्च दुःखार्तो मानवर्जितः ॥ ९ ॥
गोघातादग्निदाहाच्च जातपुत्रविनाशकः । सहायलक्षणं सर्वं कथयामि खगेश्वर ॥ १० ॥
या स्त्री पूर्वं सहायासीदाहकर्मणि चाण्डज । सा ज्येष्ठा प्रभुरेवाऽत्र मृतपुत्राऽस्ति जन्मनि ॥ ११ ॥
लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गाद्गृषभे शनिः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कारयित्वा शिवं साङ्गं पलैर्वेदमितैः शुभे । हिरण्मये महाभाग पात्रे लेख्यं शिवान्वितम् ॥ १३ ॥

तदर्धार्धमितं वापि त्रिषु वित्तानुमानतः।[1] पूजयित्वा तु गन्धाद्यैः षोडशोरूपचारकैः ॥ १४ ॥
संस्थाप्य पशुपं पश्चाद्गोरथे सुमनोहरे। सर्वोपस्करसंयुक्तं वितानाम्बरभूषितम् ॥ १५ ॥
दद्याद्वेदविधिज्ञाय मन्त्रमेतमुदीरयेत्। मोहात्पूर्वे महाभाग अग्निदाहाद्यदर्जितम् ॥ १६ ॥
तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम्। गोधिकाद्यास्तथा जीवाः पत्रे लेख्यास्तु राजते॥१७॥
शिवपत्रमिदं दद्याद्ये त्वन्ये घातिताः पुरा। पञ्चमाषमितो वह्निर्देयो हेममयः शुभः ॥ १८ ॥
गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम्। अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान् ॥ १९ ॥
य एवं कुरुते सूत प्रायश्चित्तं विधानतः। न तस्य पुत्रमरणं तदग्रे जायते क्वचित् ॥ २० ॥
पश्चाद्रन्मितकेऽब्दे वा रिष्टं चाकृतनिष्कृतेः। प्रायश्चित्ते कृते ह्यायुः चतुर्युतशताब्दकम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्यधिकनवशततमः ॥ ९२३ ॥

---

श्रीसूर्य उवाच।

कांस्यहारी च पुरुषः प्राग्भवे विनतासुत। शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानाच्छतपलादत्र सीसकादण्डजोत्तम। विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्यधिकनवशततमः ॥ ९२४ ॥

श्रीसूर्य उवाच।

वन्ध्यायाश्च महाभाग प्रायश्चित्तं शृणुष्व तत्। शूलोद्भिन्नतनुं चौरं मृतं प्राप्य रवेर्दिने ॥ १ ॥
तत्तले तु तदा कुर्याद्वन्ध्या स्नानं शतौषधैः। पञ्चवृक्षोद्भवैः सूत तथा मृद्भिश्च सप्तभिः ॥ २ ॥
सप्तभिः सलिलैर्वापि संपूज्य प्रथमं सुत। विधिनाऽनेन या कुर्याद्वन्ध्या पुत्रं लभेद् ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्यधिकनवशततमः ॥ ९२५ ॥

---

श्रीसूर्य उवाच।

सतीं स्वभार्यां परमां साध्वीं संत्यज्य दुर्मतिः। प्रमादात्प्राग्भवे गच्छेदन्यस्त्रीकामलोभतः॥ १॥
सोऽत्र जन्मनि भो सूत ग्रहणीरोगसंयुतः। जायते म्रियतेऽवश्यं ब्राह्मण्यां गमनादिह ॥ २ ॥
न तस्य पापशमनं मया प्रोक्तं खगाधिप। तस्मिन्वयसि तद्दृष्टं भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्यधिकनवशततमः ॥ ९२६ ॥

श्रीसूर्य उवाच।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी। साऽत्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥१॥
दद्याच्छतपलं सीसं ब्राह्मणाय कुटुम्बिने। तत्काले शीर्षजाद्रोगान्मुच्यते नाऽत्र संशयः ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकनवशततमः ॥९२७॥

---

या नारी ह्यवर्धीत्पूर्वं मोहादुग्रं खगाधिप। साऽत्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णां राजतीं तथा। दद्याद्वेदविधिज्ञाय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकनवशततमः ॥ ९२८ ॥

---

१ 'सामन्त्रैश्च तं पूज्य प्रथमं विनतासुत' इति-ख० पुस्तके पाठः।

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदधिकनवशततमः ॥ ९२९ ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ग्रहणीरुग्युताऽत्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकनवशततमः ॥ ९३० ॥

अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षदर्शनः । उदरे वातजा रोगाः किंचिच्छस्त्रोपघातकृत् ॥ १ ॥
किंचित्क्रोधश्च लोभश्च किंचिद्वित्तसमन्वितः । आदिपुत्रो मृतस्तस्य अपत्यं नैव जायते ॥ २ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्म महाप्राज्ञ शूद्रवंशसमुद्भवम् । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन यत्कृतम् ॥ ४ ॥
व्यवहारादिना कृत्वा ब्रह्मवित्तेन वर्द्धितम् । कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् ॥ ५ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ६ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम् ॥ ७ ॥
निक्षेपहरणाद्वापि मृतपुत्रः प्रजायते । ब्राह्मणस्य विशेषेण ब्रह्मस्वं च विषोपमम् ॥ ८ ॥
ऋणं मत्सह्य वै मोक्तुमपि कालशतादिकम् । तस्माद्विप्रऋणं मोक्तुमसह्यं त्वभिजायते ॥ ९ ॥
ब्रह्मस्वभक्षणाच्चैव वर्षाणां च सहस्रकम् । पतितो नरके घोरे पच्यते चेह कर्मणा ॥ १० ॥
पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणां च निष्कृतिं सौख्यहेतवे ॥ १२ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामप्रदः प्रभुः । पूजनीयो महारुद्रः सन्ततिश्रेय इच्छता ॥ १३ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । यजनैरथ मुच्येत पापादाकल्पसंभवात् ॥ १४ ॥
रुद्रैकादशिनीभिस्तु रुद्रैकादशकेन वा । जपेन तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १५ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम् । विधिवज्जुहुयाद्वह्नौ तिलैस्त्रिमधुरप्लुतैः ॥ १६ ॥
हरितालैपलाशोत्थाः समिधोऽत्र हवे हुताः । प्रतिरुद्रं प्रदातव्यं गोयुग्मं रसनान्वितम् ॥ १७ ॥
केयूरकुण्डलाकल्पमन्त्रपुस्तककमंडलुः । प्रति रुद्रं शतं विप्रान्भोजयेत्सुसमाहितः ॥ १८ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा मुख्यदक्षिणाम् । एवं रुद्रविधिं कृत्वा त्रिविधं पापशान्तकृत् ॥ १९ ॥
इतिहासपुराणोक्तिसूक्तानि विविधानि च । शृणुयाद्विधिवच्चार्य्यं सभार्यः प्रयतोऽन्वहम् ॥ २० ॥
देवर्षिपितृमर्त्यानामृषीणां च महात्मनाम् । देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २१ ॥
सर्वासां जीवजातीनामुत्पत्तिं शृणुयादपि । ऋषीणामृषिपत्नीनां वंशान्सर्वानुदीरितान् ॥ २२ ॥
एवं स त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात् । गुरून्देवान्द्विजान्सम्यक् श्रद्धया समुपाचरेत् ॥ २३ ॥

एवं कृतविधेः सूत हरिवंशश्रुतार्थिनः । वाचकोपरिसंतुष्टो भूमिद्रविणवस्त्रकैः ॥ २४ ॥
मुद्राकर्णीकृतवते गां च दत्त्वा पयस्विनीम् । भूमिद्रविणदानाद्यैस्तोषयेद्दश ब्राह्मणान् ॥ २५ ॥
निष्कृतौ क्रियमाणायां सार्पिष्यात्मानमीक्षयेत् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २६ ॥
जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः । कुष्ठरुक् चानपत्यस्य ममेहार्तोऽप्यकिंचनः ॥२७॥
कुनखी दद्रुणः पाण्डुरोगी जन्मक्रमाद्भवेत् । जलाग्निभ्यां च चौरैश्च राज्ञा वित्तविनाशनात्॥२८॥
लकुटाद्यावशस्त्राद्यैर्जायन्ते व्रणजातयः ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकत्रिंशदधिकनवशततमः ॥ ९३१ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
तेन कर्मार्जितेनाऽत्र षण्ढश्चैवापवर्णजः । गवां पालनजात्पुण्यात्प्रागत्र सुखसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवाऽत्र विस्मयम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकनवशततमः ॥ ९३२ ॥

## श्रीसूर्य उवाच ।

या काचिद्योषिता पूर्वं मोहात्परघृतं पिबेत् । साऽत्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नाऽत्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकनवशततमः ॥ ९३३ ॥

## श्रीसूर्य उवाच ।

महिषीमपधीत्पूर्वे भवे यो वै नराधमः । सोऽत्र जन्मनि पक्षीन्द्र कृष्णगुल्मयुतो भवेत् ॥ १ ॥
स्वर्णशृङ्गीं रौप्यखुरीं घण्टाऽऽभरणभूषिताम् । सूक्ष्मकम्बलयुक्तां च दद्याद्वेदविदे सुत ॥ २ ॥
कृष्णगुल्मोद्भवां पीडां नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुस्त्रिंशदधिकनवशततमः ॥ ९३४ ॥

## श्रीसूर्य उवाच ।

प्राग्भवे याऽभवत्काचित्स्वर्णदेहा पतत्रिण । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लकुटेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः । मृता च तेन दुःखेन गर्भजातसमन्विता ॥ ३ ॥
पुत्रसन्ततिहीना सा प्राग्गोघाताच्च किल्बिषात् । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापक्षयंकरम् ॥ ४ ॥
कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा । मार्गे हि धर्मतोयार्थं प्रतिष्ठां कारयेत्ततः ॥ ५ ॥
संस्थाप्य च शिवं तत्र विधिना विनतासुत । होमयेच्च ततस्तत्र तिलाज्यायुतानिह ॥ ६ ॥
भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् । दद्यात्तेभ्यः कपिलां सर्वपापप्रणाशनीम् ॥ ७ ॥
प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् । नैवं या कुरुते श्रद्धा तस्याः सन्ततिजं भयम् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदधिकनवशततमः ॥ ९३५ ॥

## श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काल एव पापेन बहुमूत्री प्रजायते ॥ १ ॥

दुग्धधेनुप्रदानाच्च, विधिनात्वत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्त्रिंशदधिकनवशततम ॥ ९३६ ॥

श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कस्यचित्पापमोहिता । पूर्वजन्मनि साऽत्रैव बहुमूत्ररुजाकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गपारगे । विधिना काश्यपेऽत्र न पश्येद्बहुमूत्रताम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्रिंशदधिकनवशततम ॥ ९३७॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत महिषीं नवयौवनाम् । प्राग्भवे नियतं सोऽपि कृष्णगुल्मेन बाध्यते ॥ १ ॥
स नानारत्नदानेन विधिना गरुडाग्रज । नश्येत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्विप्राय विधिनाण्डज । महिषीवधजाद्रोगान्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदधिकनवशततम ॥ ९३८ ॥

श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकुट्टनम् । ब्रह्मपुत्रस्य षण्ढः स्यादत्र जन्मनि निश्चयात् ॥१॥
ज्ञानाऽज्ञानकृतं वापि निष्कृतिर्नाऽत्र विद्यते । ब्रह्मघातान्महापापात्षण्ढः स्याद्बहुजन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदधिकनवशततम ॥ ९३९ ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । पूर्वजन्मनि पुण्याऽपि बहुदानरता सती ॥ १ ॥
अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज । अत्र पुत्रविहीना सा फलहृत्किल्विषाद्ध्रुवात् ॥२॥
प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम् । अशनां नालिकेराणि देयानि खलु शक्तितः ॥ ३ ॥
तत्कृते सुतवृद्धिः स्याज्जीवनं वर्षमप्रतिम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदधिकनवशततमः ॥ ९४० ॥

श्रीसूर्य उवाच ।

दधिहारी पुमान्पूर्वे जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः । तस्माद्रोगात्प्रमुच्येत तत्काले गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदधिकनवशततमः ॥ ९४१ ॥

श्रीसूर्य उवाच ।

महिषीघातेन नारी प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदैवताम् । युगस्म्यलसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महारोगान्महिषीवधजात्सुत । तस्मिन्नपहृते तत्र कृष्णगुल्मं न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदधिकनवशततम ॥ ९४२ ॥

श्रीसूर्य उवाच ।

विध्येत्प्राग्वृषभानां च नासाग्रं गरुडाग्रज । नासाछेदोऽत्र तस्यास्ति युवभावे विनिश्चयात् ॥ १॥
नास्ति तद्विन्मयं क्वापि दत्तैर्दानशतैरपि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदधिकनवशततमः ॥ ९४३ ॥

श्रीसूर्य उवाच ।

कश्चिद्दासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परं प्रतिकृते सूत स्वशरीरमथाऽत्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महावीर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम् । सिन्धोः पश्चिमभागेऽत्र शतयोजनसंमिते ॥६ ॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्त्तः सर्वविद्याविशारदः ॥ ७ ॥
सुखैश्वर्यसमाक्रान्तो धनवाहनभोगभाक् । शूरः सुवेशोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापाल्लोभरतः क्रोधी नानाभेरवशासनः । रिष्टं षष्टिमिते वर्षे पंचहीने पतत्रिण ॥ ९ ॥
महाकालनरादानात् सुवर्णस्य पतत्रिण । सर्ववित्तषडंशेन महारिष्टहरं परम् ॥ १० ॥
पंचाशीतिसमायुः स्याद्दत्ते कालनरेऽण्डज । प्रायश्चित्ते ह्यरिष्टं स्यादकृते प्रोक्तवत्सरे ॥ ११ ॥
कालरूपेण शस्त्रेण तत्कृते मरणं स्मृतम् । महाघोराहवे सूत चात्मघातादिदं फलम् ॥ १२ ॥
चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् । हृदिस्थं लशुनं चिह्नं षडङ्गुलमिदं शुभम् ॥१३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकशततमः ॥ ९४४ ॥

श्रीसूर्य उवाच ।

दधिहर्त्री तु या नारी प्राग्भवे त्वत्र जन्मनि । मेदसा पीड्यते सा तु विनतानन्दवर्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने । मुच्यतेऽत्र महारोगाच्चात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचचत्वारिंशदधिकनवशततमः ॥ ९४५ ॥

श्रीसूर्य उवाच ।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्यत्यखिलं रोगं कातरोत्थं हि काश्यप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदधिकशततमः ॥ ९४६ ॥

श्रीसूर्य उवाच ।

प्राग्भवे सुमुखी काचिद्गता देवालयेऽण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा शूद्राऽत्र महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महादानात् प्रहृतास्तु पतत्रिण ॥ २ ॥
तेन कर्मफलेनैव चक्षुःपीडाऽतिदारुणा । त्रिदोषैर्दूषिता चाऽत्र युवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम् । दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥

द्विसुवर्णमिता भव्याः संपूज्याऽथ महेश्वरम् । गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तचत्वारिंशदधिकनवशततम ॥ ९४७ ॥

श्रीसूर्य उवाच ।

दुष्टगन्धयुतः सूत जायते सोऽत्र जन्मनि । मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु ॥ १ ॥
मधुधेनुप्रदानाद्वै ब्राह्मणानां च तर्पणात् । दुष्टगन्धयुताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकनवशततम ॥ ९४८ ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कातराक्षी प्रजायेत चक्षूरोगवती सुत ॥ १ ॥
धेनुं रत्नमयीं दद्यात्सुवर्णां विधानतः । न पश्यत्यक्षिरोगं सा तद्दानेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदधिकनवशततम ॥ ९४९ ॥

श्रीसूर्य उवाच ।

प्राग्जन्मन्यप्यभूत्कश्चिच्चरो राजकृपान्वितः । दण्डाधिकारवान्क्रूद्रो दृढो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र लोभाद्वापि विशेषतः । व्यभिचाररतश्चैव ब्राह्मणस्य पतत्रिण ॥ २ ॥
लोभाच्चकाराऽसौ तत्र ह्यण्डच्छेदं च तत्क्षणात् । स तेन कर्मणा युक्तो भुक्त्वाऽतियमशासनम् ३
देशे पंचनदे ह्यत्र जातः शूद्रोऽतिचाधमः । स चास्त्यत्र विवर्णस्तु पण्डः पापमतिः सुखी ॥ ४ ॥
सकलैश्वर्यसंपन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मन्यसौ पण्डो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाशदधिकनवशततम ॥ ९५० ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्ययशोधनी । राजमान्योऽविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते चोदरे भृशम् । वातरक्तादि शिरसि जायते पक्षमध्यगा ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी । प्रियभक्तिरता नित्यं दानधर्मप्रवर्तिनी ॥ ३ ॥
एकपुत्रप्रसूता चाप्यन्यपुत्रमुपागता । पश्चात्पुत्र गतं शान्तिमपत्यं नैव जायते ॥ ४ ॥
तेन कर्मविपाकेन पापं शाम्यति तत्खिवरः । विधानावहितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णान्तरे जातो धातुकार्यादिकारकः । ब्राह्मणो मित्रमंजातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्येण वर्धितः । कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
संचितं तद्धनं सर्वं न तु किंचित्प्रदापितम् । ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासन्ततिनाशनम् । यो वै तस्य मृतः पुत्रः स जातो ब्राह्मणोऽत्र च ॥९॥
इदं जन्म चतुर्थं तु ब्रह्मसंभ्रमसुद्भवः । भार्या दुःखकरी ह्येवं पुत्रहीना पतत्रिण ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश सन्ततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

ब्रह्मस्वं शिवसंकाशं पुत्रपौत्रादिनाशनम् । विशेषेण हि म्रियते ब्रह्मस्वात्सुतसंततिः ॥ १२ ॥

तस्य सन्ततिनाशाय कारयेद्विष्णुमूर्तिं शुभाम् । शुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥

कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः । तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥

सुशीतलजलैः पूर्णं सर्वौषधिसमन्वितम् । नानाफलाक्षतोपेतं पूर्णपात्रोपरि स्थितम् ॥ १५ ॥

तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥

तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम् । सुवर्णस्य विशुद्धां च दापयेद्द्वादिने ॥ १७ ॥

प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम् । शतमष्टोत्तरं विप्रान्द्रोणाः सर्वे निमंत्रिताः ॥ १८ ॥

जातीपुष्पसमुद्भूतां लक्षपूजां शिवोपरि । संकटान्मोचयेद्धेनुं दम्पती परिदापयेत् ॥ १९ ॥

एवं कृते विधौ सूत निश्चला सन्ततिर्भवेत् ॥ २० ॥

इति श्रीरुद्रसूर्यकसंवादे कर्मविपाकेऽध्याय एकपंचाशदधिकशततमः ॥ १५१ ॥

गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पंचाशदधिकनवशततमः ॥ ९५६ ॥

श्रीसूर्य उवाच ।

अथ काचित्सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिना प्रेरिता पूर्वं शत्रोर्दग्धं तथा गृहम् ॥ १ ॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । ब्राह्मण्येका सबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधस्तत्र किंचित्कालेऽपि सा मृता । भुक्त्वा तथा फलं सर्वं पुण्यपापसमुद्भवम् ॥ ३ ॥
सा शूद्री यमुनातीरे जाताऽत्र पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपंचाशदधिकनवशततमः ॥ ९५७ ॥

श्रीसूर्य उवाच ।

तद्गृहे वृषभो मत्तस्तीक्ष्णशृंगो भयानकः । तेन तद्वृषभस्याऽपि प्राग्भवे विनतासुत ॥ १ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्माऽतिदारुणम् । तत्र तज्जनितं भुक्त्वा फलं पापसमुद्भवम् ॥ २ ॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते । षण्ढस्तु तेन पापेन सवास्त्यत्र पतत्रिण ॥ ३ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः । दृष्टपापार्जनात्सूत प्रायश्चित्तं न विद्यते ॥ ४ ॥
पूजनाद्यतियीनां च भविष्यति च तद्गतिः । तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ५ ॥
आयुः षष्टिमिताब्दं तु रिष्टं पंचाशदब्दके ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपंचाशदधिकनवशततमः ॥ ९५८ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले घातसंभवे ॥ १ ॥
ताम्रकुंभं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैवं दद्यात्स्वच्छया विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकोनषष्ट्यधिकनवशततमः ॥ ९५९ ॥

श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्वैलोभात्पुराभवे । कंड्वा रोगेण सततं पीड्यते चाऽत्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणाय पतत्रिण । कण्डूरोगप्रशमनं दानात्तैलघटद्वयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्यधिकनवशततमः ॥ ९६० ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ताऽभिविन्ना सा महारोषवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पुंस्त्वं दूरीकृतं पतेः । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मन्यसौ पापान्मुक्तो भवति चाण्डज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकनवशततमः ॥ ९६१ ॥

श्रीसूर्य उवाच ।

भक्ष्यार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खंजोऽसौ नात्र कार्या विचारणा १॥

न तस्य विन्मयं प्रोक्तमत्र जन्मनि चाण्डज। स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकनवशततमः ॥ ९६२ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोहाद् गुडं हरति कस्यचित्। गुल्मोदरेण रोगेण पीड्यते साऽत्र जन्मनि १॥
गङ्गायां हि महाभाग गुडधेनुप्रदानतः। तत्र स्नानान्महापुण्यात्तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकनवशततमः ॥ ९६३ ॥

श्रीसूर्य उवाच।

कश्चिद्वैश्योऽभवत्पूर्वभवे नेपालविश्रुते। बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः ॥ १ ॥
आराधनं तु कृतवान् देव्या वै पूर्वजन्मनि। स्वस्त्रियं च सुरूपां च परित्यज्य शुभाननाम् ॥ २॥
अन्यस्त्रियां समभवद्व्यभिचारपरो दृढः। स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति ॥ ३ ॥
शुभं पापफलं भुक्त्वा स जातोऽद्य महीधरे। गौरो भव्यो महाज्ञानी महाविभवसंयुतः ॥ ४ ॥
देशेदेशेऽतिविख्यातो घृणी लघुमहायशाः। स्वस्त्रीत्यागान्महापापाज्जायते स्त्रीविवर्जितः ॥ ५ ॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन् स्त्रीप्राप्तेः सौख्यकारिणीम् ॥ ६ ॥

श्रीसूर्य उवाच।

पार्वतीप्रतिमां कृत्वा हैमिकां कार्यकारिणीम्। पलपंचार्पितां लेख्यां गन्धैर्माल्यैरलंकृताम् ॥७॥
दद्याद्वेदविधिज्ञाय सुकुलीनाय चार्थिने। प्रजापतिं तदा दद्याद्राजतं त्रिपलात्मकम् ॥ ८ ॥
ब्रह्मदैवतमंत्रेण गृह्णाति स महाद्विजः। पश्चादष्टाक्षरं मंत्रं सहस्रं पापशोधनम् ॥ ९ ॥
जपेदष्टसहस्रं तु सूर्यमंत्रं महाबलम्। होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् ॥ १० ॥
य एवं कुरुते सूत सर्वपापविनाशनम्। प्रायश्चित्तं परं त्वत्र तस्मात्पापात्प्रमुच्यते ॥ ११ ॥
नैवं करोति यो मोहाज्जडधीर्दैवघातितः। न लभेत्स्त्रीसुखं चोग्रं रिष्टं पश्येद्धकेन्द्रके ॥ १२ ॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकनवशततमः ॥ ९६४ ॥

श्रीसूर्य उवाच।

नृपं विना यो प्राग्हन्यान्मृगं हि विनतासुत। खंजः स्यादत्र जनुषि तत्काले मृगघातजे ॥ १ ॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत। दद्यादश्वं नवं तत्र स्वर्णनिष्कयुतं शुभम् ॥ २ ॥
सिंहासनैरलंकारैः पूजयित्वा विधानतः। विप्रज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ ३ ॥
न स पश्यति खंजत्वं दानस्याऽस्य प्रभावतः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्यधिकनवशततमः ॥ ९६५ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत परतैलापहारिणी। साऽत्र जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते महाभाग दानात्तैलघटद्वयात्। सुवर्णाढ्याद्यथा शक्त्या तैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्यधिकनवशततमः ॥ ९६६ ॥

श्रीसूर्य उवाच ।

राजप्रचारी वै कश्चिद्वारणः पूर्वजन्मनि । भग्नपूर्णेन्द्रो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दयाराखावधर्मतः । गभं च कामलोभेन भाविनोर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके पतत्रिण । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि पाण्डजः ॥ ३ ॥
देशे जाङ्गलके षण्ढः सर्वधर्मबहिष्कृतः । शिवपूजा रतो यस्मात्स्यात्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽयं प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्यधिकनवशततमः ॥ ९६७ ॥

श्रीसूर्य उवाच ।

गर्भोऽयं याऽस्वपीत्पूर्वं मृगं हि गरुडाग्रज । स्वगर्भपालने दक्षा जन्मन्यत्र गतिं शृणु ॥ १ ॥
तद्घातकाले खंजा सा भविष्यति शुभानना । गर्भपातनदुःखार्त्ता तथैव च तदेनसः ॥ २ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ ३ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न सा पश्यति गर्भोत्थां पीडामत्रैव जन्मनि ॥ ४ ॥
दानप्रभावात्पक्षीन्द्र खंजत्वं नाप्नुयादिह ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकनवशततमः ॥ ९६८ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मेहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्ववातादिना पीडा बाल्ये स्याद्ब्रणीगदः । तस्य भार्या सदाचारा सुस्नेहा भर्तृभक्तितः ॥ २ ॥
रक्तस्रावादिना पीडा जायते चोदरानिलः । उदरात्तस्या गर्भस्य पातं कुर्याच्च पृष्ठतः ॥ ३ ॥
द्विनैस्तु पंचभिर्मासैश्च भिः सप्तभिस्तथा । केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु चास्य विचेष्टितम् । व्यतीते जन्मन्यस्यापि तया गर्भश्च पातितः ॥ ५ ॥
अतिकष्टदिनेनेव गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचारी यतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्ता च कुरुते चान्यवञ्चनात् । भर्त्तुरद्वेषिणी वृत्तिर्दुष्टसंगतिका च सा ॥ ७ ॥
तेन दुष्टेन यद्दत्तं हृतं तस्करबुद्धितः । भुक्तं ताभ्यां वैनतेय प्राप्तस्तं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्गदैः । यातना बहुधा प्राप्ता पश्चात्पापानुरूपमात्मवान् ॥ ९ ॥
किंचित्पुण्यप्रभावेन क्षात्रोऽयं जन्मना भुवि । इह जन्म चतुर्थे तु गर्भपातोऽभिजायते ॥ १० ॥
उभाभ्यां च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि विश्वेश येन गर्भः स्थिरो भवेत् ॥ १२ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी नानागर्भं निजघ्नती । निष्कृत्या तस्य शुद्धिस्तु श्रूयतां कश्यपात्मज ॥ १३ ॥
नारी नियमसंयुक्ता ध्रुवं सा बालकांक्षिणी सीमन्तायने समापूर्यमाणपक्षे शुभे दिवा ॥ १४ ॥
देवस्तु यजेत्पात्रैर्नैवेद्यैः कम्बुभेदके । हविष्यभोजनैः सार्धं परिचोदितद्वैः ॥ १५ ॥
रात्रौ पुष्पावलीभिश्च दीपस्रक्चन्दनादिभिः । स्वगीतनृत्यवाद्यैश्च दधाज्ञातिनीभुवि ॥ १६ ॥

माणयत्नं प्रकुर्वीत तस्यास्तु पयसा हविः । तस्यास्तु पंचगव्यानि यथाचारं यथाश्रुति ॥ १७ ॥
एवं व्रतपरा नारी मासिमासि तु संयता। तस्या धेनोः सवत्सायाः इष्टं समभिकांक्षिणी ॥ १८ ॥
व्रतान्ते द्विजमाहूय समस्तगुणशालिनम् । अभ्यर्च्य पूजयेद्वस्त्रा वस्त्रस्रग्दामभूषणैः ॥ १९ ॥
सम्यगभ्यर्च्य तां धेनुं तनयं तं स्तनंधयम् । कृत्वा च विधिना तस्मै तां दद्यादभिभाषिणी२०॥
सुवर्णं शुद्धमाग्नेयं माषषोडशसंयुतम् । दापयेद्वा सवत्सां च पूर्वपापापनुत्तये ॥ २१ ॥
"यन्मया कुलदाकांक्षानानागर्भा जिघांसिताः । नानौषधः पातितास्ते गर्भा वै बहवो भुवि ॥२२॥
तस्य कर्मार्जितं पापं गर्भपातादिदूषणम् । पुनस्तस्य नाशाय सवत्सादानतस्त्वियाम् ॥ २३ ॥
इह जन्मनि वन्ध्यत्वं नाशयेद्दस्य तेन तु । दाने नानेन सुरभेरनघास्त्र हि सुव्रत ॥ २४ ॥
भवेयं त्वत्प्रसादेन गर्भो मे सुभगान्वितः ।" एवमस्त्विति तां धेनुं समादाय सदक्षिणाम् ॥२५॥
हिरण्यं रजतं ताम्रं तथा नानाफलानि च । दापयेद्विजमुख्याय भूरिद्रव्येण तोषयेत् ॥ २६ ॥
भोजयेच्च शतं विप्रान् नानान्नैः सकृपायसैः । एवंकृतविधेः सूत नारी वा दुःखनाशिनी ॥ २७ ॥
वन्ध्यत्वान्मुच्यते सूत पुत्रप्राप्तियशस्विनी ॥ २८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकनवशततमः ॥ ९६९ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चित्तुरगं घातयेन्नरः । वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विधिवत्स्वर्णैःसत्कारसंयुतात् । वक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्यधिकनवशततमः ॥ ९७० ॥

## श्रीसूर्य उवाच ।

सृगालघाती पुरुषः मानुजत्वमत्र जन्मनि । पादहीनो भवेत्सूत भृशं चाकृतिनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वसत्कारसंयुतम् । ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकनवशततमः ॥ ९७१ ॥

## श्रीसूर्य उवाच ।

सङ्करः प्राग्भवे सूत बभूव धनसंयुतः । तीर्थवासी विरक्तश्च लोभी कर्मक्रियान्वितः ॥ १ ॥
क्रूरकर्म कृतं तेन दुष्टसङ्गतितोऽण्डज । चौर्येण गां परां नीत्वा क्षुधितैर्भक्षिता पुरा ॥ २ ॥
मृतास्ते तेन पापेन नानायोनिषु आगताः । स तीर्थमृत्युवशतो गङ्गातीरेऽत्र पादजः ॥ ३ ॥
तीर्थतटप्रसादाच्च धनपुत्रसमन्वितः । पुण्यभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशसंमिता । लिखिता गौर्विधानेन पूजयित्वा विधानतः ॥ ५ ॥
देया वै वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं चायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्त्या भोजयेच्च तथा द्विजान् । यः कुर्याद्विधिना चेदं स तद्दोषात्प्रमुच्यते ॥७॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकनवशततमः ॥ ९७२ ॥

## श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । सा तत्र पुरुषं याति घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि चेदोर्भङ्गाच्च बहुदुःखकृतः । पादभंगो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥

करोति तस्य पापस्य विन्मयं विधिनात्र चेत्। तस्मात्पापात्प्रमुच्येत न चोर्ध्वात्पतनं तथा ॥३॥
अश्वं निष्कसुवर्णाढ्यं विन्मयं पापशोधनम् ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्यधिकनवशततमः ॥ ९७३ ॥

श्रीसूर्य उवाच ।

या नारी घातयेद्गर्भं प्राग्भवे साऽत्र जन्मनि । महापर्वसु गन्धादि पुण्यतीर्थं तु दापयेत् ॥ १ ॥
पूर्वोपस्करसंयुक्तं स्वर्णाश्वं विधिसंयुतम् । सा मुच्यते वक्रकण्ठपीडनाद्विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकनवशततमः ॥ ९७४ ॥

श्रीसूर्य उवाच ।

आसीत्क्षात्री महाभाग पांचाले देशके शुभे । धर्मकर्मसमायुक्तो ग्रामपो विश्रुतो महान् ॥ १ ॥
दुष्कर्माचरितं तेन भाविनोऽर्थस्य वै बलात् । शूद्रयां वै धारितो गर्भः कामलोभेन निश्चयात् ॥२॥
कृतो यत्नो महांस्तत्र नातीद्गर्भस्य पातनम् । तया हालाहलं पीतं मृता सा लोकशंकया ॥ ३ ॥
महत्या पीडया सूत बालकोऽपि मृतस्ततः । सहायपंचयुक्तेन कृतं भ्राकर्म दारुणम् ॥ ४ ॥
कर्मणां संग्रहश्चायं गर्भनाशसमुद्भवः । ततः स मरणं प्राप्तो बाहुजो गरुडाग्रज ॥ ५ ॥
सूर्यलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्नरकं भुक्त्वा स्वकृताद्दुष्कर्मणः ॥६॥
स पर्वणि महादानात्पूर्वजन्मनि मानद । जातोऽत्र यमुनातीरे बाहुजोऽप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लम्बश्च धनसौख्यसमन्वितः । पितृभ्रातृविहीनश्च लोभमोहरतः सदा ॥ ८ ॥
अनेकस्त्रीसंयुतश्च नानाविभवसंयुतः । आद्यन्तसुखयुक्तश्च बुद्धिमान्देशविश्रुतः ॥ ९ ॥
धर्मादिदं तथा पापाद्भूतः पापरतः शठः । सकल्पो हृदि रोगश्च मनोदुःखसमन्वितः ॥ १० ॥
शूद्रायां वीर्यदानात्माक् तद्वधान्मृतपुत्रकः । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापाऽपनोदनीम् । पुत्रवृद्धिकरा धन्यां लोकानां हितकाम्यया॥१२॥

श्रीसूर्य उवाच ।

निष्कृतिं तस्य वक्ष्यामि शृणु सूत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भधारणनाशनीम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पंचमितैः शुभा । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः॥१४॥
तदर्धेन वा कार्या त्रिंशु वित्तानुसारतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशनी ॥ १५ ॥
पंचमापमितो विष्णुः सर्वपापप्रणाशनः । प्रजापतिं तथा दद्यात्सौवर्णं पंचमापकम् ॥ १६ ॥
राजतं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्रीदशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्षपैः सलिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापाऽपनुत्तये ॥ १८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचसप्तत्यधिकनवशततम. ॥ ९७५ ॥

श्रीसूर्य उवाच ।

यः कामतश्चरेत्पूर्वं ब्रह्महत्यां नराधमः । क्षयरोगान्वितः सोऽपि जायते चाऽत्र जन्मनि ॥ १ ॥
घोराद्ब्रह्मवधात्पापाद्दृढादुष्कर्मणः सुत । प्रायश्चित्तं मया नोक्तं पापान्मुक्तिस्त्रिजन्मनि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्यधिकनवशततमः ॥ ९७६ ॥

श्रीसूर्य उवाच।

ब्राह्मणं घातयेद्यस्तु पूर्वजन्मनि मानवः। मोहादकामतः सोऽपि क्षयरोगसमन्वितः॥ १॥
क्षयेणाऽत्र क्षयं यान्ति धातवः सर्वदेहिनाम्। धातुक्षयेऽतिकष्टेन नष्टायुर्जायते पुमान्॥ २॥
सर्वस्वदानादत्रैव क्षयरोगः प्रशाम्यति। कुरुक्षेत्रादितीर्थेषु सत्पात्रेषु विधानतः॥ ३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकनवशततमः॥ ९७७॥

अरुण उवाच।

भगवन्देवदेवेश श्रुतमेतन्महाद्भुतम्। सहानुगामिन्योर्नायोर्गतिं मे ब्रूहि भास्कर॥ १॥

श्रीसूर्य उवाच।

मृतं समीक्ष्य भर्तारं या विशेद्धि हुताशनम्। तत्सार्धं सा महापुण्या ज्ञेयाऽत्र सहगामिनी॥ २॥
श्रुत्वा मृतपतिं याऽत्र विदेशस्थं पतिव्रता। तद्वस्त्रेण विशेदग्निं सा ज्ञेया चानुगामिनी॥ ३॥
पातिव्रत्याद्धि धर्माच्च भवेन्मोक्षगतिस्तयोः। तथैकाऽभून्महासाध्वी जाता ब्रह्महृदेऽण्डज॥ ४॥
ब्राह्मणी तपसा युक्ता सदा भर्तृपरायणा। दानशीलरता पुण्या पुण्यकर्मान्विता सती॥ ५॥
दृष्ट्वा मृतपतिं सा तु दिव्याभरणभूषिता। प्राप्ताऽग्निं विधिना सूत कृत्वा पूजां हरेर्भृशम्॥ ६॥
सा गता यमराजस्य स्कन्धे दत्त्वा पदांबुजम्। वैकुण्ठं चाण्डजश्रेष्ठ यद्गत्वा न निवर्तते॥ ७॥
तत्पत्तातलघातेन मूर्च्छितोऽभूद्यमाधिपः। तत्काले तत्र संपृष्टो नारदेन महात्मना॥ ८॥
धर्मराज वदैतन्मे त्वत्तः परतरश्च कः। दण्डभृद्वो महाभाग येन त्वं चालितोऽधुना॥ ९॥

यम उवाच।

पतिव्रतायाः धर्मस्तु सर्वदा सेवितोऽनया। तस्मात्पुण्यादपिश्रेष्ठ यातेयं वै शुभानना॥ १०॥
सती तत्पादभारेण पीडितोऽहं भृशं द्विज। मोक्षं गता महासाध्वी गृहीत्वा तु स्वकं पतिम्॥ ११॥
महापापसमाक्रान्तं नरकस्थं द्विजोत्तम। साऽऽगमिष्यति चैवाऽत्र पत्युः पापविशेषतः॥ १२॥
ब्राह्मणी योगयुक्ता च भविष्यति कलौ युगे। काश्यां मृत्युस्तयोर्यस्माच्छिवत्वमुपगच्छतः॥ १३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकनवशततमः॥ ९७८॥

श्रीसूर्य उवाच।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि। तेन तत्र द्विजः सूत घातितो भूमिलोभतः॥ १॥
सहायपंचयुक्तेन कृतं कर्मातिदारुणम्। तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान्॥ २॥
तत्राऽपि तिर्यक्कं सूत विमुच्याऽधर्मतः स्वयम्। कर्मक्षयेऽथ पुण्यात्प्राक् सोऽत्र जातो हि वाहुजः ३
क्षयरोगयुतः सोऽपि कृशो दुःखातुरो भृशम्। लग्ने कुम्भाभिधे सूत भौमश्चन्द्रयुतोऽण्डज॥ ४॥
रिष्टं षष्टिमिते वर्षे जायते कृतनिष्कृतेः। सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम्॥ ५॥
तदग्रे ते मृताश्चात्र पुत्राः क्षयरुजान्विताः। रिष्टेन वायुगो भङ्गो दृष्टपापात्र निष्कृतिः॥ ६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकनवशततमः॥ ९७९॥

श्रीसूर्य उवाच।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः। गत्वा स त्वरितं सूत कदाचिन्मदसंयुतः॥ १॥
ददाह च पुरं शत्रोस्तत्क्षणे लुण्ठितं पुनः। तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः॥ २॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम्। अथो यमाज्ञया सर्वा भुक्त्वा नरकयातनाः॥ ३॥

पुण्यशेषाद्याऽत्रापि स जातः क्षत्रियाघरः । देशेऽयोध्याभिधे गौरो रघुर्देशो महोद्यमी ॥ ४ ॥
युवभावे महाभाग राजयक्ष्मप्रपीडितः । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तां प्रवक्ष्यामि यां कृत्वा मुच्यतेऽधुना । कार्यास्तत्र त्रिदेवानां मूर्त्तयस्तु यथोदिताः ॥६॥
ब्रह्मविष्णुमहेशानां सर्वरोगविनाशकाः । सुवर्णजास्तथा कार्या कदली पत्रसंयुता ॥ ७ ॥
यथा वित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । दद्यात्तां विप्रमुख्येभ्यः क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृते महाबाहो क्षयस्तस्य प्रशाम्यति । नैवं कुर्यात्तु यो मोहादिष्टं विंशतिकेऽब्दके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्यधिकनवशततम ॥ ९८० ॥

---

श्रीसूर्य उवाच ।

कलिङ्गदेशे प्राक् सूत काचिद्द्विजवरानना । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
सा नार्यघातयत्पूर्वभवे मोहाच्च कुक्कुटम् । नासां वक्रत्वमाप्नोति साऽत्र जन्मनि निश्चयात् ॥२ ॥
हेमनिष्कत्रयं दद्यात्पूर्वं चैव प्रयत्नतः । ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकनवशततम. ॥ ९८१ ॥

श्रीसूर्य उवाच ।

या योषिदाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामथात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं मयोक्तं च पतत्रिण । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकनवशततम. ॥ ९८२ ॥

---

श्रीसूर्य उवाच ।

स्वसृघाती च पुरुषः पूर्वजन्मनि मानद । बधिरो जायते त्वत्र प्रायश्चित्तं च तच्छृणु ॥ १ ॥
चांद्रायणत्रयं कुर्यात् सुवर्णपलसंयुतम । पुस्तकं विधिवद्दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्त्या होमयेच्च स्वशक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायस्त्र्यशीत्यधिकनवशततम. ॥ ९८३ ॥

---

श्रीसूर्य उवाच ।

या काचिदाचरेन्नारी पापं प्राग्ब्रह्मघातजम् । अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापकृताद्घोराघस्मात्सर्वस्वदानतः । क्षयरोगात्प्रमुच्येत नाऽत्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि । काश्यां वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकनवशततम ॥ ९८४ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे पंचनदेऽण्डज । धनधान्यसमायुक्तः पापकर्मा महाधमः ॥ १ ॥
विप्रसङ्गतः सोऽपि प्रयागे गरुडाग्रज । स्नानो वै मृगये मानी धूर्तकर्मा क्रियोज्झितः ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान् कर्म दारुणम् । ग्रामे निवासितोऽन्यस्य क्षत्रियस्य पतत्रिण ॥३॥
ददाह भवनं रम्यं वैरिभावात्पुरान्तर । तत्रैव वत्सरी दग्धा औरग्राश्चापि विशेषतः ॥ ४ ॥
कालयोगेन संप्राप्तः स सूत यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥

पूर्वपुण्यप्रभावेन स जातो पादजोऽधुना। गङ्गायाः प्राक् परे देशे शतयोजनसंमिते ॥ ६ ॥
स मध्यरूपो बलवान् धर्मे स्वल्पमतिः शठः। वृद्धचाधिकप्रचारी च पैत्तिकः स्वल्पवित्तभाक्॥७॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः। पुण्यादिदं फलं प्राप्य पापादत्र शृणुष्व वै ॥ ८ ॥
गोवाल्यवत्सकवधाज्जीवघातादपुत्रकः। सप्तवेदमिताब्दान्तं जातपुत्रविनाशवान् ॥ ९ ॥
गोस्त्रीविप्रवधाः पापाः पुत्रनाशकरा यतः। गोराशिगे शनौ सौमात्पष्ठे जीवे मृगस्थिते ॥ १० ॥
लक्ष्मेतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि। पूर्वं या स्त्री सहायासीन्मृतवत्साऽत्र सा सुत ॥११॥
अरुण उवाच।
निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदनीम्। पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥
श्रीसूर्य उवाच।
शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधिनीम्। पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी॥१३॥
तदर्द्धमितिका वापि द्विजे वित्तानुसारतः। संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
माषैर्वह्निमितैर्देयस्तथा पशुपतिः सुत। माषाभ्यां च तथा वह्निर्जीवा माषचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये। जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेदष्टशतकं रुद्रस्यापि प्रयत्नतः। शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ १७ ॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं विधानतः। जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया ॥१८॥
नैवं कुर्याच्च यः शक्त्या त्रिष्वेकं पापशोधनम्। न जीवन्ति सुतास्तस्मिन्नजीविते नाऽत्र संशयः १९॥
नवतत्त्वसमायुः स्यात् प्रायश्चित्ते कृतेऽधुना। सप्तवर्षमिते वर्षे रिष्टं चाऽकृतनिष्कृतेः ॥ २० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकनवशततमः ॥ ९८५ ॥

श्रीसूर्य उवाच।
काश्मीरमण्डले पूर्वं काचिद्द्विजवराङ्गना। पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वैरिभावात्तया स्मृत्वा गृहं दग्धं द्विजस्य च। वैरिणस्तु सुतो दग्धो गृहदाहे पतत्रिण ॥ २ ॥
साहाय्यात्स्वामिनः सूत प्राग्भवे समुपार्जितम्। तत्पापजं महाघोरं फलं प्राप्य विशेषतः ॥ ३ ॥
सैव जाता विराटेऽत्र पतिशुश्रूषणात्सुत। क्षत्रिया धनधर्माढ्या पूर्वपुण्यात्तथा सती ॥ ४ ॥
क्षयरोगयुता बाल्ये बालघातादपुत्रिणी। महाग्निदाहपापाच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशन्मिते वर्षे रिष्टेनेत्राऽत्र नंक्ष्यति। साहाय्यात्तत्पतिश्चात्र पुत्रहीनः क्षयान्वितः ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकनवशततमः ॥ ९८६ ॥

श्रीसूर्य उवाच।
सारिकां यो महाभाग हन्यात्पापविमोहितः। तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥१॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम्। तथा च पुस्तकं दद्याच्छास्त्रस्य विधिनाऽण्डज ॥ २॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकिल्बिषः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः सप्ताशीत्यधिकनवशततमः ॥ ९८७ ॥

श्रीसूर्य उवाच।
सारिकां याऽवधीन्नारी पूर्वं पापविमोहिता। साऽत्र जन्मनि जायेत वचनस्खलिताऽण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय च। पूर्वपापाद्विमुच्येत तद्दानाद्विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्यधिकनवशततमः ॥ ९८८ ॥

श्रीसूर्य उवाच।

वकघाती च पुरुषः पूर्वजन्मनि मानद। लंबकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्वेतां सर्वाऽऽभरणभूषिताम्। मुच्यते कण्ठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्यधिकनवशततमः ॥ ९८९ ॥

श्रीसूर्य उवाच।

या नारी पूर्वजनुषि घातयेद्गरुडाग्रज। बकं स कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिना सूत श्वेतामत्र पयस्विनीम्। ययोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकनवशततमः ॥ ९९० ॥

अरुण उवाच।

कश्चिद्विप्रकुले जातो धर्मिष्ठो वित्तसंयुतः। उदरे वातजा रोगा गुल्मोर्शश्चापि हृद्व्यथा ॥ १ ॥
मेहाद्याः स्वल्पवीर्यश्च ह्यक्षिपांडूदरामयाः। जायंते शीर्षजा पीडा बाल्येऽस्य ग्रहिणीगदः ॥ २ ॥
शरीरे जायते वह्निरुपघातव्रणाकुलः। पुत्राणां मातुलानीनां विधवार्त्तिः स्वस्रादिषु ॥ ३ ॥
दायादाच्छत्रुवत्पीडा भूमेर्द्रव्यस्य लिप्सया। ऐहिकानि च लक्ष्माणि तस्य देहेऽत्र संति वै ॥ ४ ॥
तस्य भार्या सदाचारा कदाचिद्दोषवादिनी। गौरवर्णा शुभा वाण्याऽसन्तोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात्। दशमासानतिक्रम्य गर्भे चोदरसौख्यभाक् ॥ ६ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ७ ॥

श्रीसूर्य उवाच।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नाऽत्र संशयः। पूर्वजन्मनि सा क्षात्रा संजाताऽविनतासुत ॥ ८ ॥
अज्ञानतिमिरान्धेन स्त्रीणां कर्म दुरात्मकम्। अज्ञानानां कुलस्त्रीणामाचारश्च न शोभनः ॥ ९ ॥
सर्वभूतेषु सा क्रूरा स्थावरेषु चरेषु च। प्रमादाद्दीपिनं हत्वा सदा निष्ठुरमानसा ॥ १० ॥
तस्या गेहे श्रिता नित्यं मार्जारश्वादिर्जंतवः। पातालक्रीडनपरा गेहे संकुलिता भृशम् ॥ ११ ॥
तेषु वै वालुकाग्न्यंबुतप्तभस्मचयादयः। निक्षिप्ताश्च तया चाग्निः प्रक्षिप्तः पापचेतसा ॥ १२ ॥
आपाचन्धनमातॄणां वालगर्भाश्रितास्तदा। अन्ये तद्गर्भिणो ये च क्षिप्त्वा वै वह्निभस्मकम् ॥ १३ ॥
जंतून्प्रमादान्निघ्नन्ति ते च संततिदुःखिनः। संततेर्दुःखितायास्तु नानादुःखानि संति च ॥ १४ ॥
स्वनयाग्निं समाक्षिप्य तेषां वै नाशनं कृतम्। तथाविधेषु जीवेषु मृतेष्वपि च तद्वशात् ॥ १५ ॥
म्रियन्ते शिशवस्तेऽपि तस्यास्तत्पापदोषतः। पातालेऽपि च दग्धास्ते बहवो लघुजंतवः ॥ १६ ॥
गर्भयुक्ता मृतास्तत्र क्षामा आपि तयाऽस्त्रियः। मार्गं लभन्ते नो तत्र मृतास्ते लघुजन्तवः ॥ १७ ॥
तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजा। त्रिविधाऽपत्यजा बाधा प्राप्यते जनुरन्तरे ॥ १८ ॥
जन्तवो गर्भगाश्चैतत्स्वकृतं कर्मबन्धनम्। उभयोः कर्मणोर्हेतुरवश्यं च प्रयोजनात् ॥ १९ ॥
इदं जन्म तृतीयं तु ब्रह्मवंशसमुद्भवम्। स्थिरगर्भा मृतापत्या पुत्रहीना पतत्त्रिण ॥ २० ॥

अरुण उवाच।

भार्याश्चिंचं कथं नाथ येन गर्भः प्रजायते। ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २१ ॥

श्रीसूर्य उवाच।

सुदिष्टे समनुप्राप्ते सौम्यग्रहशुभोदये। प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २२ ॥

तत्रोपर्यांविकं स्तीर्त्वा नानाचित्रविचित्रकम् । द्रोणमानं तिलानां तु मध्ये गर्भं प्रपूरयेत् ॥२३॥
निष्कमानसुवर्णस्य शलाकां मध्यतः क्षिपेत् । तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपूरिते ॥ २४ ॥
शुद्धतोयैर्भृतं ताम्रपात्रं दशपलोन्मितम् । स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ २५ ॥
पूजयेच्च सपत्नीकं कश्यपं च प्रजापतिम् । दधानं दक्षहस्तेऽक्षं वामे चाथ कमण्डलुम् ॥ २६ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्त्तिं च शुभलक्षणाम् । अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २७ ॥
सम्यक्श्रद्धावती नारी त्रिविधापत्यदुःखिनी । विप्राय वेदविदुषे पूजयित्वा यथाविधि ॥ २८ ॥
दद्याच्चैव सपत्नीकान्ब्राह्मणांश्चैव भोजयेत् । सिसृक्षुणा जगत्स्रष्ट्रा ये सृष्टाः क्षुद्रजंतवः ॥२९॥
ते मया तिलसंख्याश्च दग्धा वै तीव्रवेदनम् । लंघिताः स्त्रीजनाचारा अजानंत्या दयात्मक॥३०॥
नाशयेत्तस्य पापस्य देवमार्गं विगर्हितम् । विप्राय वेदविदुषे प्रदद्यां गुणशालिने ॥ ३१ ॥
एवमाश्राव्य तां मूर्त्तिं समादाय पृथक्पृथक् । प्रदद्याद्दानविधिना श्रद्धया च सदक्षिणाम् ॥३२॥
दानान्ते कीर्तयेन्मत्रं तिष्ठन्ती विहिताञ्जलिः ॥ ३३ ॥

मन्त्रः।

"यन्मया पूर्वजनुषि दयारहितचित्तया । प्रांतं चात्राशुभं स्वामिंश्छिन्धि तत्कर्मकारणम्॥ ३४ ॥
दत्त्वा दानं च विप्राय सर्पिष्यात्मानमीक्षयेत् ॥ ३५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकनवशततमः ॥ ९९१ ॥

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेद्यस्तु भवे प्राङ् मानवोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते क्रिमिलोदरः ॥१॥
स भीष्मपञ्चकादत्र व्रतात्पुण्यसमर्जनात् । मुच्यते पूर्वरोगात्तु दुष्टाद्वै क्रिमिलोदरात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकनवशततमः ॥ ८९२ ॥

श्रीसूर्य उवाच ।

याऽभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः क्रमिजोत्था रुजा सुत ॥ १ ॥
तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम् । कार्तिके शुक्लपक्षे च प्रान्तस्थं दिनपञ्चकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकनवशततमः ॥ ९९३ ॥

श्रीसूर्य उवाच ।

दुष्टस्पर्शेन सततं साऽत्र जाता कृशोदरी । सा वैष्णवव्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते ॥ १ ॥
कृशोदरव्यथा नश्येत्तत्पापस्य विनाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायश्चतुर्नवत्यधिकनवशततमः ॥ ९९४ ॥

श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे दत्तं दानं हि तेन वै ॥ १ ॥
वेदवेदाङ्गयुक्तेषु सत्पात्रेषु विधानतः । अथ पापं भृशं चक्रे व्यभिचारसमुद्भवम् ॥ २ ॥
ज्येष्ठां त्यक्त्वा त्वृतुप्राप्तां धर्मशीलयुतां प्रियाम् । रतिं ददौ कनिष्ठायामनृतावपि मोहितः ॥३ ॥
ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥ ४ ॥

१ आश्राव्य—आदौ संकल्प्य—इत्यर्थः ।

श्रद्धादानवलात्सोऽत्र गङ्गायाः पूर्वभागतः । सिंहस्थेऽर्के सुखे राहौ जीवे कर्कलिगे भृगौ ॥ ५ ॥
स रक्तगौरो मतिमान् बन्धुस्त्रीसुखसंयुतः । लघुवृर्णी त्वमितदो द्विजवंशसमुद्भवः ॥ ६ ॥
सर्वमेतत्फलं दानात् स्त्रीत्यागान्मृतपुत्रकः । स्त्रीत्यागी भ्रूणहा लोके इति पौराणिका विदुः॥७॥
वक्ष्यामि निष्कृतिं तस्य पूर्वपापविनाशनीम् । स्वर्णपंचपलैः कृत्वा गणेशं विघ्ननाशनम् ॥ ८ ॥
तदर्द्धप्रमितो वाऽपि देयो मंत्रमिमं पठन् ॥ ९ ॥

मन्त्रः ।

" त्यक्त्वा वराननां शुद्धां पूर्वं पापं मयार्जितम् ॥
तदुग्रपापनाशाय ददेऽहं गणनायकम् " । माषसप्तमिता लक्ष्मीः शुभा लेख्या हिरण्मयी॥१०॥
ददेऽहं विप्रमुख्याय वेदशास्त्रार्थपारिणे । ब्राह्मणान्वरयेत्तत्र शक्त्या दद्याच्च दक्षिणाम् ॥ ११ ॥
एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः । श्रुत्वैवं शक्तिमान्यस्तु न कुर्याच्छोधनं सुत ॥
स पुत्रान्नैव चाप्नोति रिष्टं पञ्चाशदब्दके । प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम् ॥ १३ ॥
अन्यजन्मादिकं ज्ञेयं विस्तरं नोदितं मया ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पञ्चनवत्यधिकनवशततमः ॥ ९९५ ॥

श्रीसूर्य उवाच ।

देशे पञ्चनदे जाता बाहुजा पूर्वजन्मनि । साऽत्र जन्मनि वै विप्रा जाता पार्थिवपूजनात् ॥ १ ॥
प्राग्यत्तया कृतं कर्म शृणुष्वात्र खगेश्वर । ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न दत्तं च पुनस्तस्मै भुक्तं सर्वमशेषतः । मृतो द्विजस्तद्दुःखेन क्षुधितस्तु पतत्रिण ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तया । पञ्चत्ववशगा भाता भुक्त्वा तु यमशासनम् ॥ ४ ॥
पुत्रसन्ततिहीनाऽत्र युवभावे क्षयान्विता । निष्कृतिं परमां तस्या वक्ष्येऽहं पापनाशनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा । कदली पत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनाऽनेन सुप्रीता ब्रह्मविष्णुमहेश्वराः । क्षयनाशकराः सर्वे भविष्यंत्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्यधिकनवशततमः ॥ ९९६ ॥

श्रीसूर्य उवाच ।

योऽन्यजन्मनि भो सुत चोच्छिष्टं भक्षयेन्नरः । राज्यन्धो जायते सोऽपि जन्मन्यत्र च मानवः॥१
भोजयेद्ब्राह्मणान्भक्त्या गोमूत्रं प्राशयेत्तथा । मुच्यते तत्क्षणात्सूत नक्तान्धत्वान् न संशयः॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्यधिकनवशततमः ॥ ९९७ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि भो सूत याऽभक्ष्यं भक्षयेत्किल । रसलोभेन वै नारी चोच्छिष्टं सा शुभानना॥ १ ॥
नक्तान्धा जायते त्वत्र व्यथिता नेत्रपीडया । गोमूत्रप्राशनादत्र ब्राह्मणेभ्यश्च भोजनात् ॥ २ ॥
नक्तान्ध्यरोगान्मुक्ता स्यादत्र जन्मनि सुव्रत ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्यधिकनवशततमः ॥ ९९८ ॥

श्रीसूर्य उवाच ।

विडालोच्छिष्टभोजी तु राज्यन्धो जायतेऽधुना । स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत्॥१॥
भोजयेच्च तथा विप्रान्शक्त्या दद्याच्च दक्षिणाम् । राज्यन्ध्यरोगात्सततं मुक्तो भवति मानवः ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकनवशततमः ॥ ९९९ ॥

श्रीसूर्य उवाच ।

विडालोच्छिष्टभुग्नारी प्राग्भवे विनतासुत । रात्र्यन्ध्यरोगयुक्ता सा चाऽत्र जन्मनि जायते ॥ १ ॥
द्विजेभ्यो भोजनाच्चैव गोमूत्रप्राशनात्तथा । मुच्यते पूर्वपापात्तु विडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सहस्रतमः ॥ १००० ॥

श्रीसूर्य उवाच ।

चाण्डाल्यां गमने पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र दशावृत्त्या कृतात्सुत । स मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाधिकसहस्रतमः ॥ १००१ ॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनतासुत । चाण्डालं प्राप्नुयात्सा वाऽजगरी जायतेऽण्डज ॥ १ ॥
प्राजापत्यव्रतादत्र कृतात्पंचापवर्त्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यधिकसहस्रतमः ॥ १००२ ॥

श्रीसूर्य उवाच ।

परान्नविघ्नकारी यश्चाऽभवत्पूर्वजन्मनि । सोऽजीर्णनामतिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमेन कृतेन गरुडाग्रज । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यधिकसहस्रतमः ॥ १००३ ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सुत या नारी पूर्वजन्मनि । पारान्नेषु यदा मोहाच्छृणु तत्र पतत्रिण ॥ १ ॥
अजीर्णनैव रोगेण बाध्यते पीडया भृशम् । लक्षहोमेन सततं सा पापान्मुच्यतेऽधुना ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरधिकसहस्रतमः ॥ १००४ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यनिष्ठः सदाचारः साधुसेवनसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चाऽत्र जन्मनि । किलासदद्रुकंडूश्च नेत्ररोगो विरोशिमता ॥ २ ॥
किंचिद्रदः प्रजायेत तद् व्रते कारणं विना । तस्य भार्या सुतन्वङ्गी स्वीधर्मव्रतकारिणी ॥ ३ ॥
वातबाधोदरे तस्या स्तया मूर्ध्नि च जायते । मृतवत्सा कथं जाता पुत्राः पुत्र्यो मृताः कथम् ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वे वैश्यसमुत्पन्ना नारी शूद्रा प्रतारिता । बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ ६ ॥
परस्परस्य सम्बन्धे बहुकालो गतागतः । अन्योन्यप्रीतिवशतः किंचित्कालवशं गतः ॥ ७ ॥
उभयोः कर्मणोर्हेतुर्धनहर्त्ता स्थितस्ततः । मान्यकर्मकृता योऽसौ तेन तत्रैव जन्मनि ॥ ८ ॥
ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णाऽलंकरणैर्युतः । धनलोभाद्धतस्तेन भाविनोर्यस्य वै बलात् ॥ ९ ॥
तस्यापि मातापितरौ पुत्रदुःखेन दुःखितौ । द्विजैर्वैपस्तया मासैर्वयसा च समन्वितः ॥ १० ॥
धनलोभवशेनैव दुष्टचित्तेन दुर्मनाः । अचिराच्च मृतौ तत्र गतौ तौ यमशासनम् ॥ ११ ॥

तद्देहस्योद्भवो जातो ब्राह्मणस्य ततः खग । तेन कर्मविपाकेन नरके पातितो भृशम् ॥ १२ ॥
पश्चान्मानुषमापन्नो ब्रह्मदानप्रभावतः । इदं जन्म चतुर्थं तु मृतापत्यं खगेश्वर ॥ १३ ॥
द्वित्रादिमासजातानां मृतिर्द्वित्र्यादिहायनात् । मृताः पुत्रा भवंत्येव जाताजातास्तथैव च ॥ १४ ॥
इदं जीवेदिदं जीवेदित्याशामपि च ब्रुवन् । जाताजाता विनश्यंति तस्याथाकृतनिष्कृतेः ॥ १५ ॥
अचिराच्च भविष्यन्ति कुमाराश्चिरजीविनः । सुरोपमाः सुरूपाश्च लालनाच्चाटुकारिणः ॥ १६ ॥
नश्यत्सु जातजातेषु जन्मजन्मसुतेषु च । व्याधयन्तरे भवेद्व्याधिर्ग्रस्तो व्यसनवानयम् ॥ १७ ॥
नास्ति सौख्यस्य लेशोपि नानाशंकितचेतसः । भवेच्च वद्धनस्यापि परापत्यानि पश्यतः ॥ १८ ॥
लक्षणानि पुरोक्तानि तस्य नामापि कीर्त्तयेत् । स्वोदरे म्रियते बालः स वै ब्राह्मण उच्यते॥१९॥
मृतवत्सोद्भवं तस्य चिह्नं तत्प्रतिपादयेत् । स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः ॥ २० ॥
दौर्मनस्यं महाव्याधिः शोकश्चैवोपजायते । अदृष्टगुणलावण्या अदृष्टाननकान्तयः ॥ २१ ॥
म्रियन्ते जातमात्रा वै पुत्रा अकृतचाटवः । एवं तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत् ॥ २२ ॥

अरुण उवाच

का तस्य निष्कृतिः स्वामिन्निह कर्मनिषूदनी । कथ्यतां दिवसेशान नारीणां हितकाम्यया॥२३॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि मृतवत्सापनाशनीम् । निष्कृतिं विधिवच्चास्य सन्ततेः सौख्यहेतवे ॥२४॥
यजमानः सपत्नीको विधिवद्विधिमाचरेत् । पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित्॥२५॥
सिद्धार्थाक्षतदूर्वाभिः कृतरक्षं प्रतिष्ठितम् । स्थापयेद्दीपधेर्मन्त्रैर्वारुणैर्विष्णुसूक्तिभिः ॥ २६ ॥
सुदिष्टे सुशुभे देशे गोमयाद्युपलिप्तके । तत्रोपर्याविकं स्तीर्त्वा कृष्णाजिनमथापि वा ॥ २७ ॥
द्रोणमानं तिलानां तु कृष्णवस्त्रेण संयुतम् । स्थापयेन्नाजतं पद्मं तन्मध्ये पलनिर्मितम् ॥२८॥
सौवर्णां प्रतिमां तत्र बालगोपालमूर्तिताम् । कृत्वा प्रतिष्ठितप्राणां काश्यपे शुभलक्षणाम् ॥२९॥
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि । सम्यक् श्रद्धावती नारी मृतसन्ततिदुःखिनी ॥ ३० ॥
आहूय विदुषो विप्रान् तथा च वेदवादिनः । अलोलुपाः सदाचाराः पूज्या अर्घादिकैस्तथा॥३१॥

मन्त्रः ।

"यन्मयाद्य पुरा द्रोहमापाद्य परसूनुषु । भूमिद्रविणहेमाद्यै तल्लिप्सा नस्य नश्यतु" ॥ ३२ ॥
नाशयेत्तद्धि पापं मे मूर्त्तिस्ते शुभलक्षणा । तदस्तु महदप्यास्रं मृतसन्ततिरात्मनः ॥ ३३ ॥
तस्मात्तुष्ये महाभागार्पितगोदानतोषितः । इति तत्र परिक्रम्य त्रिस्तेनोक्तेव तिष्ठति ॥ ३४ ॥
अग्ने नयेतिमंत्रेण विसर्ज्यैतदुदीरयेत् । धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि ॥ ३५ ॥
सर्पिष्यात्मानमालोक्य भोजयेद्द्विजबन्धुभिः । इहैव लक्ष्म विज्ञेयं भ्रातृबन्धुसुखोज्झितम् ॥३६॥
स्वसुतासुतसौख्यानि न सन्त्यनिजपुत्रता । विरुध्यन्तेऽप्यपत्यानि तादृशानि मिथः क्रियत॥३७॥
विकारो विकृतीं लीयात्मने पादवैकृतम् । पितृजा मातुलानीनां सगुल्मार्तिस्त्वचो व्यथा ॥३८॥
मृतापत्यातिरप्येषा मनुर्मन्त्रादिभेदतः । तथातयाऽत्र दुःखानि जायन्तेऽस्य मुहुर्मुहुः ॥ ३९ ॥
पूर्वकर्मार्जितं पापं चिह्नं तस्य सहायकम् ॥ ४० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाधिकसहस्रतमः ॥ १००५ ॥

श्रीसूर्य उवाच ।

विप्राय यो विषं दद्याद्धातार्थं पूर्वजन्मनि । सोऽत्र जन्मनि पक्षीन्द्र च्छर्दिरोगेण बाध्यते ॥ १ ॥
निष्कृतिर्नास्ति तस्यात्र पापस्य दृढकर्मणः । छर्दिरोगेण सततं यौवने नाशमाप्नुयात् ॥ २ ॥
प्रायश्चित्तं न तस्यात्र दानैरपि सहस्रशः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडधिकसहस्रतमः ॥ १००६ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत विषं दद्याद्द्विजातये । छर्दिरोगेण सात्रैव निश्चितं नाशमाप्नुयात् ॥ १ ॥
न पापशोधनं प्रोक्तं तस्यास्तु गरुडाग्रज । ब्राह्मणस्य वधे सूत प्रायश्चित्तं न विद्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताधिकसहस्रतमः ॥ १००७ ॥

श्रीसूर्य उवाच ।

परस्य यो विषं दद्यात्पूर्वजन्मनि मानद । छर्दिरोगेण चात्रैव बाध्यते पीडया भृशम् ॥ १ ॥
धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् । मुच्यते छर्दिरोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाधिकसहस्रतमः ॥ १००८ ॥

श्रीसूर्य उवाच ।

मूकोऽत्र जायते जंतुर्यः पूर्वे भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायो नवाधिकसहस्रतमः ॥ १००९ ॥

श्रीसूर्य उवाच ।

या काचिन्मागधी ह्यासीज्जाता ब्रह्महृदे सुत । सा चात्र यवनी देशे शुभे पञ्चनदेऽण्डज ॥ १ ॥
पुत्राभिलाषिणी पूर्वमभजद्यवनं यतः । तस्मात्सा यवनी जाता पुत्रसन्ततिवर्जिता ॥ २ ॥
नानाधनयुता दानात्कुरुक्षेत्रे पुराऽनघ । शिवभक्तिपरा तस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
अत्र जन्मनि सा लक्षरुद्रपूजनजाच्छुभात् । पुत्रपौत्रयुता नारी भवत्येव न संशयः ॥ ४ ॥
अथवा हरिवंशस्य शतावृत्त्या विधानतः । श्रवणात्पूर्वजातपापान्मुच्यते विनतासुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशाधिकसहस्रतमः ॥ १०१० ॥

श्रीसूर्य उवाच ।

देवालये वसन्कश्चिद्ब्राह्मणः पूर्वजन्मनि । विष्णुपूजारतो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौर्येणापि हृतं द्रव्यं यत्स्थितं देवताश्रये । तेन दुष्टेन यत्सुत कृतं कर्मातिदारुणम् ॥ २ ॥
स तेन कर्मणा युक्तो भुक्त्वा तत्पापजं फलम् । जातो गङ्गाश्रये क्षत्री पर्वते पूजनाद्धरेः ॥ ३ ॥
बहुद्रव्यान्वितो भूपः सर्वसंपत्सुखान्वितः । बाल्ये हि पाण्डुरोगार्तश्चाऽत्र जन्मनि मानवः ॥४॥
देवद्रव्यापहारी तु पाण्डुरोगी प्रजायते । तत्पापनाशनं पुण्यमुपायं शृणु तत्त्वतः ॥ ५ ॥
कुर्याद्धिरण्मयीं पृथ्वीं सप्तवर्णां पलात्मिकाम् । सवनां सागरोपेतां सप्तद्वीपां वसुन्धराम् ॥ ६ ॥
गन्धपुष्पैरलंकृत्य दद्याद्विप्राय धीमते । पाण्डुरोगाद्विमुक्तः स्यादत्र जन्मनि मानवः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशाधिकसहस्रतमः ॥ १०११ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे प्रादाद्विषं कस्यापि काश्यप । साऽत्र जन्मनि रोगेण च्छर्दिसंज्ञेन पीड्यते ॥१॥
धेनूनां दशकं दद्यादशक्तौ गरुडाग्रज । सवत्सां कपिलां दद्यात्तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशाधिकसहस्रतमः ॥ १०१२ ॥

श्रीसूर्य उवाच ।

कश्चिद्विप्रो ह्यभूदङ्गे प्राग्भवे धर्मसंयुतः । परस्य कन्यकायाश्च विवाहमकरोत्सुधीः ॥ १ ॥
दानाल्पत्वान्महाभाग चकाराल्पविधानतः । चौर्यकर्मरतः सोऽपि कदाचिद्दैवयोगतः ॥ २ ॥
स चचार वने सूत मार्गलुण्ठनतत्परः । काचित्सुनयना तत्र प्राप्ता भाविबलाद्दृढात् ॥ ३ ॥
नानाभरणयुक्ता सा पूर्णगर्भसमन्विता । सा लुण्ठिताऽत्र त्रासिता तेन पापधियाण्डज ॥ ४ ॥
सहायैः सा परित्यक्ता ताडिता ह्याकुलाऽभवत् । तद्गर्भाद्धि च्युतौ पुत्रौ पापमाचरितं त्विदम् ॥५॥
ततो धर्मपुरं प्राप्तः पुण्यपापसमन्वितः । पुण्यात्पुण्यफलं भुक्त्वा पापात्पापं पतत्रिण ॥ ६ ॥
परकन्याविवाहेन स जातो वाहुजोऽधुना । गङ्गायाः पूर्वभागे तु दशयोजनसम्मिते ॥ ७ ॥
गौरः स्वरूपः क्षीणाङ्गो वहुद्रव्यपराक्रमः । पित्ताधिकोतिमतिमान् वहुपुत्रैरभिरन्वितः ॥ ८ ॥
जातपुत्रैर्मृतैस्तत्र पूर्वपापात्तथाण्डज । किमर्थं तत्र वक्ष्यामि येन पापात्प्रमुच्यते ॥ ९ ॥
पलार्धेन तदर्धेन कार्या वा घटिना सुत । वाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता ॥ १० ॥
पूर्वपापविनाशाय सा देया ब्राह्मणाय च । गन्धपुष्पैः समभ्यर्च्य मंत्रैः प्रणवपूर्वकैः ॥ ११ ॥
वेधसं तत्र सौवर्णं सुवर्णैकमितं शुभम् । दद्याज्जपेच्च मंत्रांश्च तल्लिङ्गान्विधिपूर्वकम् ॥ १२ ॥
होमयेच्च यवांस्तत्र सतण्डुलससर्षपान् । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्त्या विधानतः । गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते ॥ १४ ॥
तस्मात्पुत्रसुखं लेभे चात्र जन्मनि वै ध्रुवम् । रिष्टं पञ्चाशदब्दे तु प्रायश्चित्ते कृते शुभे ॥ १५ ॥
वेदसप्तसमायुः स्यात्प्रायश्चित्ते कृतेऽत्र च ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशाधिकसहस्रतमः ॥ १०१३ ॥

श्रीसूर्य उवाच ।

व्यभिचाररता पूर्वं याऽत्राऽपि व्यभिचारिणी । साऽऽगता नरकाद्घोरादसती पापजाऽण्डज ॥ १ ॥
न शुध्यत्यशुभाचारा प्रायश्चित्तैः शतैरपि । वाराणसीं गता चास्यां वासाच्च विनतासुत ॥ २ ॥
मुच्यते सर्वपापाच्च पूर्वजन्मकृताद्दृढात् । वाराणस्यां चतुर्दश्यां शिवपूजनजाग्रतात् ॥ ३ ॥
वाहुजेयं महाभाग पूर्वेप्यत्राऽपि वाहुजा । वन्ध्या च पापतो दुःखाकुला च दयितोज्झिता ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकसहस्रतमः ॥ १०१४ ॥

श्रीसूर्य उवाच ।

भ्रातृघातकरी नारी प्राग्भवे विनतासुत । साऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
ज्ञानान्महापापकृतात्र चोक्ता निष्कृतिर्मया । ज्ञात्वा ब्रह्मवधे सूत प्रायश्चित्तं च तत्समम् ॥२॥
सप्तजन्मनि मूकत्वं जायते च तदेनसः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचादशाधिकसहस्रतमः ॥ १०१५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि बाहुजः । देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनम् ॥ १ ॥
विंशद्वर्षे व्यतीते च नेत्रभंगः प्रजायते । तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग नेत्ररोगं न पश्यति । भोजयेच्छक्तितो विप्रान् वैष्णवाञ्श्रद्धया युतः॥ ४ ॥
कृत्वा तेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षोडशाधिकसहस्रतमः ॥ १०१६ ॥

श्रीसूर्य उवाच ।

सर्वस्नेहहरः कश्चिद्यो भवेत्पूर्वजन्मनि । सोऽत्र जन्मनि जायेत क्षयरोगप्रपीडितः ॥ १ ॥
प्रायश्चित्तं परं तस्य वित्तशाठ्यविवर्जितः । कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः । कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः ॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशाधिकसहस्रतमः ॥ १०१७ ॥

श्रीसूर्य उवाच ।

ब्रह्मवादरता ह्यत्र या पूर्वंऽभूत्पतिव्रता । पतिपापप्रभावाद्धि गतिं प्राप्य हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी पार्वत्या सह मोदते । भुक्त्वा भोगानशेषांस्तान्वै पतिं प्राप्य तपस्विनी॥२॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशाधिकसहस्रतमः ॥ १०१८ ॥

श्रीसूर्य उवाच ।

यो ज्ञानात्कृतवान्सूत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं भजते तेन कर्मणा ॥ १ ॥
तेन भीता तदा नारी त्रस्यन्ती च महावने । गर्भपातोऽभवत्तस्याः पर्वते च ततो मृतः ॥ २ ॥
तेन कर्मविपाकेन म्रियंते तस्य बालकाः । केचिज्जीवन्ति मासान्तं केचिद्वर्षाधिकं भृशम् ॥ ३ ॥
बहुकालं तु वै कश्चिच्चिह्नं तस्य च जायते ॥ ४ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ५ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्न एष सुदुर्लभः । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तमघापहम् ॥ ६ ॥
गोत्रयं वै सुवर्णाढ्यं सौवर्णनिष्कसंयुतम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ७ ॥
कर्मप्राकाशिकं विप्रं पूजयेद्विधिपूर्वकम् । एवं यः कुरुते वत्स निष्कृतिः कर्मणः फलम् ॥ ८ ॥
पुत्रपौत्रादिकैर्युक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्यधिकसहस्रतमः ॥ १०१९ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्कश्चिन्नारी भर्तृप्रियान्विता । दक्षा सर्वक्रियास्वेव चहुदानप्रदायिका ॥ १ ॥
पार्श्वस्थस्यान्यशूद्रस्य गृहात्नीतानि मानद । सर्वस्वेहानि चौर्येण सर्वशून्याद्गृहात्पुरा ॥ २ ॥

अरुण उवाच ।

कथयस्व दिवानाथ लोकानां हितकाम्यया । पृच्छामि तेऽत्र देवेश छिन्धि मे सर्वसंशयान् ॥ १ ॥
जात्युत्तमानां जनुषि सदा संपत्समृद्धिमान् । वन्धूनामतिसौख्यं च वैष्णवानातिवर्त्तते ॥ २ ॥
जातसन्ततिदुःखार्त्तः कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच ।

ब्राह्मणी गर्भयुक्ता च प्रयाणे भर्तृसंयुता सर्वाभरणभूषाढ्या नानारत्नसमन्विता ॥ ४ ॥
बहुभिर्मिलितैश्चोरैर्गृहीतं भूषणं तदा । तत्र कोलाहलो जातो गर्भपातोऽभवत्तदा ॥ ५ ॥
तेन पापेन बालानां गर्भनाशः प्रजायते ॥ ६ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन् येन पाप प्रणश्यति । एतेषां विस्तरं ब्रूहि लोकानां हितकाम्यया ७

श्रीसूर्य उवाच ।

एकवासा विधि चैव लक्षपूजा ततः परम् । सगर्भा गौः प्रदातव्या भोजनं मितिसंमितम् ॥ ८ ॥
सगर्भायाश्च गोः पश्चिन्नभिषेकः प्रपादतु । पञ्चमे वाऽथ षष्ठे वा मासि जातो मृतश्च यः ॥ ९ ॥
तयोः कर्मविशेषाश्च कथयिष्यामि योषितोः । सा चापि मृतकल्पा स्याद्यमजैः सुतकामयैः १० ॥
शोकदामोदरे दोषो भूतगौरविकंपनैः । रक्तस्रावो विवर्णस्य जायते कर्मणेरितः ॥ ११ ॥
रजतस्य पलाभ्यां तु कोशं गर्भाशयाकृति । कुसुंभेऽष्टितं येन रक्तवस्त्रेण वेष्टयेत् ॥ १२ ॥
मधुना पूरयेत्तत्र शलाका रूप्यवर्त्तिना । तन्मध्ये हेमशकलं क्षिपेत्तदपि यत्नतः ॥ १३ ॥
दद्याद्विप्राय विधिवद्यथाश्रुति निरूपितम् ॥ १४ ॥

मंत्रः ।

" यन्मया पूर्वतः स्वामिन् गर्भपातः कृतस्तु यः । एतद्दानं विशुद्ध्यर्थं गर्भकोशं ददाम्यहम् १५ ॥
महामूढेन यद्वेनोर्निषिक्तं परयोषिति । ततोऽन्नपरयं यस्मात्तं तस्मान्मां मोचय प्रभो" ॥ १६ ॥
एवं कृतविधेः सूत गर्भपाताघनाशनम् । ब्राह्मणान्भोजयेत्सम्यग्गां दद्याच्च सवत्सकाम् ॥ १७ ॥
सर्पिष्यात्मानमालोक्य भोजयेदिष्टबान्धवान् ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्यधिकसहस्रतम. ॥ १०२७ ॥

---

श्रीसूर्य उवाच ।

या नारी घातयेत्काचित् पुरुष प्राग्भवेऽण्डजं । साऽत्र जन्मनि रोगेण शूलेन प्रपीड्यते ॥ १ ॥
सुवर्णदानाद्विधिवत्तया रुद्रजपादिह । पूजनाच्छङ्करस्यापि शूलरोगात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्यधिकसहस्रतम. ॥ १०२८ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नानाश्रं वै घातयेत्सुत । मित्रं च वायुरोगेण पीड्यते चाऽत्र जन्मनि ॥ १ ॥
तत्र कुर्यान्महाभाग मंत्रस्तद्वायुदैवतैः । पूजनं वासुदेवस्य गन्धपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैस्तुभद्रयश्च वायुर्नश्यति तत्क्षणात् । इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदधिकसहस्रतमः ॥ १०२९ ॥

---

श्रीसूर्य उवाच ।

साऽत्र जन्मनि लूताढ्या भवत्येव मयोदितम् । तीर्थस्नानव्रतादीनि फलान्यत्र हि चाण्डज ॥१॥
ज्ञानपूर्वकृतात्पापाद्रोगादेव क्षयो भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदधिकसहस्रतमः ॥ १०३० ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी । व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु ॥ १ ॥
नीतं सर्वं रसं तेन मिलित्वा चार्द्धसीरिणाम् । कालेन तद्धृतं लोभात्स्नेहं मौल्याधिकं सुत ॥२॥
भुक्त्वा पापफलं घोरं भ्रमरत्वमुपागतः । ततः पुण्याच्छुभं भुक्त्वा पुण्याज्जातोऽत्र पर्वते ॥ ३ ॥
शूद्रः पुण्यकलायुक्तो भूमिदानात्सुरार्चनात् । स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहादिदानाद्धि स्ववित्तातुर्यभागतः । स्वर्णदानात्तथा चात्र क्षयरोगात्प्रमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदधिकसहस्रतमः ॥ १०३१ ॥

श्रीसूर्य उवाच ।

विषं दत्त्वा पतिं सूत भार्या जाराश्रिताऽसती । पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत ॥१॥
विष्णोराराधनादत्र गङ्गाया उपसेवनात् । गतिं शुभां सा प्राप्नोति व्रतकृष्णोपसेवनात् ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदधिकसहस्रतमः ॥ १०३२ ॥

श्रीसूर्य उवाच ।

देवागारं दहेद्यस्तु प्राग्जन्मन्यथ पुत्रक । रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देवदानाद्विप्राय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतिसाराद्विनिश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदधिकसहस्रतमः ॥ १०३३ ॥

श्रीसूर्य उवाच ।

मूर्द्धावसिक्तो यः कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगसूकराः । तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
गर्भाच्च्युतौ हतौ तत्र शुभौ द्वौ मृगशावकौ । सहायाभ्यां युतेनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तावमायां चाण्डजाधिप । सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा॥४॥
स शौर्यकर्मणा सूत घातयित्वा रिपून्बहून् । घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा । भुक्त्वा नानाविधान् भोगान् स जातो ब्राह्मणोऽधुनाऽ
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातः कर्कटगे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजात्पुण्यात् प्राक्कृतात्सकुलः सुखी ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि । राजप्रचार्यसुग्रश्च पुण्यात्पापात्फलं शृणु ॥ ९ ॥
धूर्त्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित् । सहायलक्षणं मत्तः शृणु पुत्र यथा तथा ॥ १० ॥
याभ्यां मिलित्वा भुक्तौ द्वौ मृगशावौ खगाधिप । जातौ तस्य च तौ पुत्रौ शुभौ ज्येष्ठकनिष्ठकौ११
अपस्मारेण रोगेण मृता चात्रैव जन्मनि । एवं सन्ततिदुःखार्त्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभुग्जनितात्पापात्प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलक्षं तु तदर्द्धं वा तदर्द्धकम् ॥ १३ ॥

इत्युच्चार्य नरो दद्यात्सर्वपापात्प्रमुच्यते । लक्ष्मीनारायणं तद्वत्सौवर्णं त्रिपलात्मकम् ॥ १७ ॥
जपेत् त्रिंशत्सहस्राणि गायत्रीं यत्नतः शुभाम् । भोजयेच्च द्विजान् शक्त्या गां दद्यात्कपिलां तथा १८
सूर्यव्रतं तदा कुर्यात्पुत्रपौत्रविवर्द्धनम् । य एवं कुरुते पूर्णं प्रायश्चित्तं प्रयत्नतः ॥ १९ ॥
तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि न क्षयः । वयस्यन्ते महाभाग धनैश्वर्यसुखान्वितः ॥ २० ॥
प्रायश्चित्तेऽकृते सूत न भविष्यन्ति तत्सुताः । पट्पञ्चैकोनपष्टिवर्षे रिष्टं चाकृतनिष्कृतेः ॥ २१ ॥
अष्टसप्ततिवर्षान्तमायुस्त्रैव जन्मनि । तीर्थमृत्युप्रभावाच्च मुक्तिर्जन्मत्रयेऽण्डज ॥ २२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽद्विचत्वारिंशदधिकसहस्रतमः ॥ १०४२ ॥

श्रीसूर्य उवाच ।

वातूल लक्षणाढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलैर्दशमितैः कार्या ब्राह्मणी च हिरण्मयी ॥ १ ॥
पत्रे लेख्या शुभाकारा तदर्द्धमितिकाथवा । पूजयित्वा तु गन्धाद्यैरिमं मंत्रमुदीरयेत् ॥ २ ॥

मंत्रः ।

"अज्ञानाद्यदि वा ज्ञानात्पूर्वं वा घातिता मया । ददाम्यहं द्विजां रौक्मीं हर पापं मम त्वरा" ॥३॥
सा च देया विधिज्ञाय पूर्वपापप्रनुत्तये । तथा वेदमितैः स्वर्णैर्देयस्तत्र प्रजापतिः ॥ ४ ॥
शिवस्तु तन्मितः कार्यो मंत्रैश्चापि विशेषतः । तद्दोषशमनायैव देयस्तत्र द्विजातये ॥ ५ ॥
देवौ तु तन्मितौ कार्यौ सूर्यविष्णू हिरण्मयौ । वेदस्वर्णमिताः कार्या वातज्वरकफाभिधाः ॥ ६ ॥
स्वस्वाकारसमायुक्ता मंत्रार्चनादिकैः । हेरंबो वेदमापश्च देयस्तद्दोषशान्तये ॥ ७ ॥
गायत्र्यष्टसहस्रं तु त्र्यम्बकं तन्मितं तथा । अष्टाक्षरं त्रिसाहस्रं कमलोत्थाष्टकं तथा ॥ ८ ॥
होमयेत्तद्दशांशेन मध्वाज्यतिलसर्षपैः । होमान्ते दक्षिणां दद्यात्सर्वकामफलप्रदाम् ॥ ९ ॥
हिरण्मयीं तु पक्षीन्द्र यथावित्तानुसारतः । ब्राह्मणान् भोजयेत्पश्चाद्विविधान्नैः सुपूजितान् ॥१०॥
शिवभक्तांस्तथा शान्तान्स्वयं भुञ्जीत वाग्यतः । य एवं कुरुते शक्त्या पूर्वपापविमोचनम् ॥ ११ ॥
न तस्य दुरितं किंचिज्जन्मन्यत्र प्रजायते । नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥ १२ ॥
रोगानथ न पश्येत्तु कृते प्राक्पापशोधने । बहुपुत्रसुखं लेभे स्त्रीरिष्टं नैव पश्यति ॥ १३ ॥
अष्टसप्तमितं चायुः कृतनिष्कृतिकस्य च । चत्वारिंशन्मिते रिष्टं पुंसश्चाकृतनिष्कृतेः ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदधिकसहस्रतम ॥ १०४३ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग कालिङ्गे बाहुजः पुरा । आधिव्याधियुतः सोऽपि विप्रद्रव्यापहारकः ॥ १ ॥
प्रायश्चित्तं ह्यभूत्तस्य काशीवासात्तथाण्डज । शिवपूजनदानाच्च देवतानां च पूजनात् ॥ २ ॥
प्रायश्चित्तं परं तत्तु सर्वपापप्रणाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदधिकसहस्रतम. ॥ १०४४ ॥

श्रीसूर्य उवाच ।

काचिदासीन्महाभाग बाहुजा पतिवल्लभा । धनपुत्ररता साध्वी देशे सिंहलके पुरा ॥ १ ॥
साऽददत्तत्र दानानि नारी भर्तृमहायतः । पक्षपर्वसु विप्रेभ्यो गोभूम्यश्वासनादिकम् ॥ २ ॥
सुवर्णं तिलपात्राणि नानापट्टाम्बराणि च । भक्ष्यभोज्यानि चान्नानि विविधानि फलानि च ३
ददौ घृतं च विधिना विभूतिद्वाःस्थीनतम् । कार्त्तिके शुक्लपक्षादौ विष्णोः साम्वत्सरं महत् ॥४॥

उर्वश्या यत्कृतं पूर्वं तत्कृतं च तथा सुत। तयोक्तं कृतवान्सर्वं राजमंत्री च तत्पतिः ॥ ५ ॥
अथ सापत्नरोषाच्च घोरं पापमुपार्जितम्। अपापायास्तया तस्याः कृतं गर्भस्य नाशनम् ॥६॥
विविधैरौषधैरुग्रैः सर्वं पतिबलात् सुत। सा मृता तेन दुःखेन गर्भपातेन चाण्डज ॥ ७ ॥
स्वभर्तृसुखलोभार्थं यथावद्द्रव्यमर्जितम्। परलोकं ततः प्राप्य भुक्त्वाऽशुभशुभं फलम् ॥ ८ ॥
विभूतिद्वादशीपुण्याज्जातौ राजकुले च तौ। सेयं खसभवा नारी तस्मै दत्ता च भूपतेः ॥ ९ ॥
गौरी मध्यस्वरूपाढ्या स्थूणा सत्पौत्रसंयुता। यशस्विनी कीर्तियुता बहुदानरता सती ॥१०॥
मुख्या नृपाङ्गना लोके सुखैश्वर्यसमाकुला। विख्याता धर्मतश्चात्र धनवाहनभागिनी ॥ ११ ॥
धर्मादिदं तथा पापाल्लोभाच्चानृतभाषिणी। क्रूरा पापरता क्वापि प्रजापीडनतत्परा ॥ १२ ॥
महानृपाश्रितभयैः क्लेशदुःखैर्महाव्ययैः। प्रपीडिता भूनि रोगैर्वातपित्तादिसंभवैः ॥ १३ ॥
आद्यंते सुखयुक्तापि युवभावेऽतिदुःखिता। प्राक्कृताद्गर्भपाताच्च स्त्रीघाताच्चाप्यपुत्रका ॥ १४ ॥
एकोनत्रिंशदब्दात्तु यावद्वर्षाष्टकं सुत। भर्तुरिष्टं विजानीयात्तत्सहायादिदं फलम् ॥ १५ ॥
लक्षणैरेभिराढ्या च शृणु तत्पापशोधनम्। कारयेद्ब्रह्मणो मूर्तिं पलैर्दशमितां शुभाम् ॥ १६ ॥
तदर्धार्धमितां वापि त्रिषु वित्तानुसारतः। पत्रे हिरण्मये लेख्यां सर्वाभरणभूषिताम् ॥ १७ ॥
संपूज्य गन्धपुष्पाद्यैर्विधिज्ञाय निवेदयेत्। पलाष्टकमितं तद्वद्ब्रह्माणं कारयेद्बुधः ॥ १८ ॥
सौवर्णं च शुभाकारं पूर्वपापप्रणाशनम्। तं दद्याद्वेदविदुषे स्त्रीवधान्मुच्यते ध्रुवम् ॥ १९ ॥
लक्ष्मीनारायणं वापि रुद्रं तद्वद्विधानतः। समुल्लिख्याथ सौवर्णे पत्रेऽष्टपलसंमिते ॥ २० ॥
स्त्रीपुत्रसहितं देवं दद्याद्विप्राय धीमते। चतुःपलैर्गजराजं सौवर्णं कारयेच्छुभम् ॥ २१ ॥
तद्वद्रविं तथा वायुं समुल्लिख्य विधानतः। बालं च तन्मितं हैमं पूजयित्वा विधानतः ॥ २२ ॥
पूर्वपापविशुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत्। अष्टादशसहस्रं तु मंत्रमष्टाक्षरं जपेत् ॥ २३ ॥
गायत्रीं तन्मितां सूत तथा मृत्युञ्जयं जपेत्। वायुब्रह्मगणेशार्कमंत्रान्पापहराञ्छुभान् ॥ २४ ॥
एकादशसहस्राणि चैकैकस्य जपेद्बुधः। होमयेद्दशांशं तद्वत्तथा विप्रांश्च भोजयेत् ॥ २५ ॥
य एवं कुरुते यत्नात्पूर्वपापविशोधनम्। न चारिष्टभयं तस्य नाधिव्याधिभयं क्वचित् ॥ २६ ॥
कुशमौलिमितायुः स्यात्पूर्वपापविशोधनात्। त्रिपञ्चाशन्मिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २७ ॥
त्रिषष्टिमितके वापि नात्र कार्या विचारणा। शरीरारोग्यमतुलं महदैश्वर्यमाप्नुयात् ॥ २८ ॥
स्वर्गलोके गतिस्तस्य प्रायश्चित्ते कृतेऽधुना। न करोति यदा लोभात्प्रायश्चित्तं प्रयत्नतः ॥२९॥
इह कष्टं भजेन्नित्यं न च सद्गतिमाप्नुयात्। कीटे जले शनौ याता निर्याणं मेषराशिके ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चचत्वारिंशदधिकसहस्रतमः ॥ १०४५ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ शूद्रो व्यापारकुशलो महान्। धनधान्यसमायुक्तो ब्राह्मणातिथिपूजकः ॥ १ ॥
अथ पापं कृतं तेन नानादोषसमुद्भवैः। क्लेशैर्भयैर्मनोदुःखैः क्वचित् क्षीणकलेवरः ॥ २ ॥
स्वज्ञातीनां वीर्यदानाद्गुह्ये चिह्नं महाव्रणम्। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ३ ॥
ब्रह्मणः कारयेल्लेख्यं पलैः पञ्चाशमितैर्विभुम्। हिरण्मयं यथाकारं सपत्नीकं प्रयत्नतः ॥ ४ ॥
तदर्धार्धमितं वापि त्रिषु वित्तानुसारतः। इमं मंत्रं समुच्चार्य दद्याद्विप्राय धीमते ॥ ५ ॥

मंत्रः।

"पितामह महाप्राज्ञ सृष्टेरुत्पत्तिकारण। पूर्वपापविनाशाय ददामि त्वां हिरण्मयम् ॥ ६ ॥

रोगविनाशाय क्षिप्रं तज्जं शुद्योद्भवं महत्।" संपूज्य गन्धपुष्पाद्यैर्विधिज्ञाय प्रदापयेत् ॥ ७ ॥
तथा पञ्चमितैर्माषैः स्त्रीं कुर्याद्गर्भसंयुताम् । लेख्या हिरण्मये पत्रे गन्धपुष्पैः सुपूजिता ॥ ८ ॥
ब्राह्मणाय च सा देया पूर्वपापापनुत्तये । तथा वेदमितैर्माषैः सौवर्णी प्रतिमा शुभा ॥ ९ ॥
वायोः कार्या शुभाऽलेख्या सा च देया कुटुम्बिने । पात्रं ताम्रमयं पुत्र घृतपूर्णं सदक्षिणम् १०॥
सर्वरत्नसमायुक्तं पट्टवस्त्रेण वेष्टितम् । मंत्रैः सूर्यादिखेटानां दद्याद्दोषोपशान्तये ॥ ११ ॥
गायत्र्यष्टसहस्रं च जपेद्दशाक्षरं तथा । त्र्यंबकं तु सहस्रैकं त्रह्मेतद्द्विगुणं तथा ॥ १२ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । य एवं कुरुते सूत विधिना पापशोधनम् ॥ १३ ॥
प्रागजन्मजान्महापापाद्व्यभिचारसमुद्भवात् । मुच्यते नात्र सन्देहो गोत्रजाच्चापि पातकात्॥१४॥
पुत्रसन्ततिवृद्धिः स्यात्प्रायश्चित्ते कृते त्विह । सप्तसप्ततिवर्षान्तं जीवनं कथितं त्विह ॥ १५ ॥
नैवं करोति यो मोहात्प्रायश्चित्तं प्रयत्नतः । तस्य रोगविवृद्धिः स्याद्वेदपंचाशदब्दके ॥ १६ ॥
स्वरिष्टं पुत्ररिष्टं वा नात्र कार्या विचारणा ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पट्चत्वारिंशदधिकसहस्रतमः ॥ १०४६ ॥

## अरुण उवाच ।

कन्याप्रजो ह्यप्रजश्च नानादुःखसमन्वितः । केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ १ ॥

## श्रीसूर्य उवाच ।

पूर्वं क्षात्रसमुत्पन्नः किंचिद्भूमिपतिस्तथा । अस्मिञ्जन्मनि वैश्यस्तु परवित्तापहारकः ॥ २ ॥
दूतिकाकर्मनिरतो नानालोभसमन्वितः । ग्रामार्धांशोऽभवत्सोपि सर्वं तेन च चोरितम् ॥ ३ ॥
एको ग्रामेऽवसद्विप्रः क्षान्तो दान्तः क्षमी सदा । पुत्राः पञ्च मृतास्तस्य चापुत्रो वित्तसंयुतः ॥४॥
कालेनैव मृतो विप्रो हृतं तेन धनं महत् । मिथ्याभिशंसनैर्वाक्यैः क्रोधात्ताडनतर्जनैः ॥ ५ ॥
अपुत्रश्च मृतो विप्रो सर्वस्वं नीतवान्वणिक् । निराधारा सुता जाता न कृतं द्विजभोजनम् ॥ ६ ॥
वृथा कर्म कृतं नैव सर्वं राज्ञा हृतं च तत् । एवं कृतापराधोऽसौ क्षत्रदूतीसहायवान् ॥ ७ ॥
मार्गेनैकेन पान्थानां वसु मुष्णन् द्विजाधमः । म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम्॥८॥
कैश्चित्कैश्चिद्विपच्यन्ते नरके भृशदारुणे । दानधर्मादिना कश्चिदिह जन्मनि मानद ॥ ९ ॥
विप्रवंशे समुत्पन्नो जायते चेह जन्मनि । इदं तु द्वितीयं जन्म विप्रियं जायते भुवि ॥ १० ॥
पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते । ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते ॥ ११ ॥
नानापत्यानि पच्यन्ते नानाकर्मसमुद्भवः । पुराकृतानि कर्माणि भुज्यन्ते जन्मजन्मनि ॥ १२ ॥

## अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पुत्रस्थिरो भवेत् । कन्यापत्यप्रशमनं बहुपुत्रः प्रजायते ॥ १३ ॥

## श्रीसूर्य उवाच ।

स शुभे भूमिदेशे तु गोमयाद्युपलिप्तके । तत्रोपर्याविकं स्तीर्यमथवा चाजिनं शुभम् ॥ १४ ॥
छादयेच्छुभ्रवस्त्रेण तण्डुलद्रोणपर्वतम् । तत्रोपरि न्यसेत्पात्रं ताम्रं दशपलात्मकम् ॥ १५ ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम् । मुक्तायज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् १६॥
दधानां करयुग्मेन चाक्षमालाकमण्डलू । कश्यपाद्वामभागे च त्वदितिं विश्वमातरम् ॥ १७ ॥
सौवर्णीं स्थापयेत्सूत सुवर्णद्वयनिर्मिताम् । आसने वै समास्थाय तत्र द्रोणादिशंदिशम् ॥ १८ ॥
हारकेयूरमुकुटं कुण्डलाभरणान्वितम् । एवं तौ दंपती सम्यगर्पयेत्पर्वतोपरि ॥ १९ ॥

कृत्वा प्रतिष्ठितप्राणां पूजयेद्विविधैर्गुणैः। नानार्घफलदानैश्च नानाकुसुमपूजनैः॥ २०॥
अभ्यर्च्य दंपती तौ तु मंत्रमेनमुदीरयेत्। "मया वै पूर्वजनुषि विप्राणां यद्धृतं धनम्॥ २१॥
दूतिकाकर्मनिरतो वाक्यदोषादि यत्कृतम्। क्षम्यतां देव तत्सर्वं तव मूर्त्तिं ददाम्यहम्" ॥ २२॥
अदितिं च प्रणम्याथ कृतांजलिरिदं ब्रुवन्। "अदिते विश्वमातस्त्वं शरण्ये शरणार्थिनम्॥ २३॥
प्रजादुःखौघसंतप्तहृदयं मामिहेश्वरि। संरक्षणाय दुःखस्य प्रजां देहि यशस्विनीम्" ॥ २४॥
एवं कृतविधिः सम्यग् ब्राह्मणान्भोजयेत्ततः। शालग्रामशिलां शुद्धां सोमकान्तमणिं तथा॥२५॥
चन्द्रसूर्योपरागे तु ब्राह्मणाय समर्पयेत्। एवं कृतविधिः सूत कृष्णां गां दापयेत्ततः॥ २६॥
सापिण्ड्यात्स्मानमालोक्य भोजयेच्च समृद्धिभिः। ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते॥ २७॥
काष्ठलोष्टादिशस्त्राद्यैः कपालादौ व्रणो भवेत्॥ २८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदधिकसहस्रतमः॥ १०४७॥

श्रीसूर्य उवाच।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेऽण्डज। स राजयक्ष्मरोगेण युक्तः स्यादत्र जन्मनि॥ १॥
अरिमन्वयसि पक्षीन्द्र सोऽपि प्राणैर्वियुज्यते। महापापोद्भवाद्रोगात्त्र चोक्तं विन्मयं मया॥ २॥
अपि ज्ञानकृतात्पापाद्दद्रूपेण काश्यप। नाशयत्यमरं सिद्धं पूर्णाशमपि च ध्रुवम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदधिकसहस्रतमः॥ १०४८॥

श्रीसूर्य उवाच।

ब्राह्मणोऽभूत् कुरुक्षेत्रे कृषिकृद्वेदपारगः। स्वज्ञातेयस्य लोभेन वृत्तिलोपं चकार सः॥ १॥
तत्संबन्धादभूद्युद्धं द्वयोरेको मृतस्तदा। वृत्तिलोभाद्द्विजः काले गतो हि यमशासनम्॥ २॥
भुक्त्वा तत्पापजं सर्वं शतद्रुनिकटेऽधुना। सोऽपि जातो द्विजश्रेष्ठ वेदाभ्यासाच्च पुत्रक॥ ३॥
कुष्ठक्षयान्वितश्चात्र युवभावे पतत्रिण। तत्पापनाशनं सर्वं प्रायश्चित्तं वदाम्यहम्॥ ४॥
वेदाभ्यासान्महापुण्यात् सावित्रीजपतस्तथा। गङ्गायां वसतेः सर्वात्पूर्वपापात्प्रमुच्यते॥ ५॥
न कुष्ठवृद्धिरत्रास्ति तत्कृतं शमनं भवेत्। जीवेत्षष्टिमिताब्दान्तं रिष्टं चैव प्रशाम्यति॥ ६॥
गतिस्तस्य महाभाग वेदाभ्यासाद्यथा तथा। भविष्यति शुभा लोके परत्र च खगेश्वर॥ ७॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकसहस्रतमः॥ १०४९॥

श्रीसूर्य उवाच।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा। बभूव भर्तृसुहृदां वाक्यपालनतत्परा॥ १॥
अत्र जन्मनि सा विप्रा काश्यां जाता हि सुव्रत। व्रतदानपरा सापि भर्तृतोषणसंयुता॥ २॥
पञ्चपञ्चाशदब्दान्ते प्रवेक्ष्यत्यत्र जन्मनि। स्वर्गकामा चिताग्नौ तु नात्र कार्या विचारणा॥ ३॥
सा गमिष्यति वै स्वर्गं चान्यजन्मनि वै सती। भविष्यति महाराजकुले राजातिधार्मिकः॥ ४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदधिकसहस्रतमः॥ १०५०॥

श्रीसूर्य उवाच।

पीड्यते वातरोगेण दारुणेन पतत्रिण। पूर्वजन्मनि योऽजस्रं भवेच्छूद्रगृहाश्रितः॥ १॥

प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं चरेत् । व्रतान्ते कपिलां दद्यात् सर्वपापापनुत्तये ॥ २ ॥
सर्वं पापं क्षयं याति रोगस्तत्पापजोऽपि च ॥ ३ ॥

। इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदधिकसहस्रतमः ॥ १०५१ ॥

## श्रीसूर्य उवाच ।

स्वगर्भं पातयेत्पूर्वं या नारी पापमोहिता । जलोदरकृता पीडा जायते त्वत्र जन्मनि ॥ १ ॥
रजतस्वर्णताम्राणां दानाद्रोगविनाशनम् । जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदधिकसहस्रतमः ॥ १०५२ ॥

## श्रीसूर्य उवाच ।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा । दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुभगा सगर्भा फललालसा । त्रोटित्वान्यफलं पक्वं भक्ष्यार्थं चौर्यकर्मणा ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि । भवन्ति खलु ये पुत्रा अर्वाक्पर्याप्तितोऽण्डज ॥ ३ ॥
पञ्चत्वमाप्नुवंत्यत्र यस्मादकृतनिष्कृतेः । निष्कृतिं तत्प्रवक्ष्यामि पूर्वपापप्रणाशिनीम् ॥ ४ ॥
रविवारेऽण्डजश्रेष्ठ निर्मन्थ्याश्वत्थकं सुत । तत्तले ब्राह्मणान् सूर्यदिने पञ्चाशं तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैर्मधुरै रससंयुतैः । फलानि निकिरेत्तत्र कृत्वाश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेत्तं महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपंचाशदधिकसहस्रतमः ॥ १०५३ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी घातयेद्ब्राह्मणं सुत । सात्र जन्मनि कुष्ठेन रोगेणैव प्रपीडिता ॥ १ ॥
जायते म्रियते सा च गलत्कुष्ठेन चाण्डज । पापाज्ज्ञानकृतात्पूर्वात्र चोक्तं विन्मयं मया ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदधिकसहस्रतमः ॥ १०५४ ॥

## श्रीसूर्य उवाच ।

देशे हि यामुनेऽप्यासीत् पूर्वं बाहुजसंज्ञकः । गङ्गास्नानं कृतं पूर्वं बाहुजानां सहायतः ॥ १ ॥
शकटेन कुटुम्बस्य पालनं तेन जानता । एकस्मिन्वै दिने गत्वा ददाह परसद्द्रुमम् ॥ २ ॥
बलं दैवस्य संप्राप्तो जीवा दाहान्महाकुलाः । यन्त्रोः सहायतस्तत्र कृतं कर्मातिदारुणम् ॥ ३ ॥
शुभाच्छुभफलं भुक्त्वा पापाच्च नरकांस्तथा । माघे तु जाह्नवीस्नानात्स जातः शूद्रसत्कुले ॥ ४॥
विपाशानिकटे देशे योजने सप्तसंमिते । भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥
बहुलोभी बहुस्त्रीको देवतातिथिपूजकः । मातृहीनः शठो धूर्तः पुत्रसन्ततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुर्भौमयुक्तोल्पसन्ततिः । लक्षणैर्लक्षितश्चोक्तैरेवैहि गरुडाग्रज ॥ ७ ॥
यन्त्रोः सहायतः पापात्पूर्वजन्मसमुद्भवात् । तस्माद्भ्राता पुत्रहीनो जायतेऽत्र जन्मनि ॥ ८ ॥

## अरुण उवाच ।

विन्मयं कथ्यतां देव सुतसौख्यविवर्द्धनम् । सर्वपापप्रशमनं लोकानां हितकारणम् ॥ ९ ॥

## श्रीसूर्य उवाच ।

विन्मयं तत्प्रवक्ष्यामि जन्तुदाहविनाशनम् । वनदेवी तथा कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी तदा लेख्या पत्रे च चतुरस्रके । वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥

प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः। राजतं पलमेकं तु गणाध्यक्षं शिवात्मजम् ॥ १२ ॥
संपूज्य गन्धपुष्पाद्यैः साधयेत्कार्यसाधिनीम्। देया वेदविधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रतिरूपस्तथा देयः सर्वकल्मषनाशनः। शृणुयाद्भारतं वापि नारायणसुभाषितम् ॥ १४ ॥
अष्टाक्षरं तथा मंत्रं जपेच्च विधिपूर्वकम्। दशायुतं तदर्धं वा होमयेत्तद्दशांशतः ॥ १५ ॥
तावन्मितं सूर्यमंत्रं विधिवत्प्रजपेत्ततः। विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते ॥ १६ ॥
य एवं कुरुते सूत पूर्वपापप्रणाशनम्। तस्यापूर्वविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ १७ ॥
अकृते तु यथाशक्ति रिष्टे षट्पञ्चकेन्द्रके। प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ १८ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचपंचाशदधिकसहस्रतमः ॥ १०५५ ॥

श्रीसूर्य उवाच।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत। सात्राजीर्णेन रोगेण दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यान्नानाविधं चान्नं रसैः सर्वैः समन्वितम्। विप्रेभ्यो भोजनं दद्याच्छक्त्या दद्याच्च दक्षिणाम् ॥२॥
होमयेच्च तथा चान्नान् गायत्र्या त्र्यम्बकेण तु। मुच्यते जीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पंचाशदधिकसहस्रतमः ॥ १०५६ ॥

श्रीसूर्य उवाच।

देवमूर्तिं च यः कश्चिद्देवागारे स्थितां सुत। भग्नां कुर्यान्नरो मोहात् परेण स्थापितां पुरा ॥ १ ॥
अप्रतिष्ठो भवेदत्र जन्मन्यथ खगाधिप। वर्षत्रयं तदाश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपंचाशदधिकसहस्रतमः ॥ १०५७ ॥

श्रीसूर्य उवाच।

यश्चाचरेद्ब्राह्मणवधं मोहात्पूर्वभवे नरः। प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः ॥ १ ॥
गोभूहिरण्यमिष्टान्नतिलवस्त्रादिदानतः। घृतधेनुप्रदानेन क्षयरोगः प्रणश्यति ॥ २ ॥
दानं यथानुमानेन सर्वस्वार्धमेव च। देयं द्विजवधादौ तु विचार्यात्र प्रयत्नतः ॥ ३ ॥
तत्क्षणे काश्यपेयात्र क्षयरोगः प्रशाम्यति। रिष्टस्य च विनाशः स्यान्नास्य चाकृतनिष्कृतेः ॥४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपंचाशदधिकसहस्रतमः ॥ १०५८ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचित्परगर्भं पतत्त्रिण। जलोदरेण रोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगस्थिते। तथा तज्जलपानेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्यधिकसहस्रतमः ॥ १०५९ ॥

श्रीसूर्य उवाच।

वाग्विरोधी भवेद्यश्च पूर्वजन्मनि वादिनः। सोऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
मोहादिदं चरेत्सूत देयं दानं द्विजातये। वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संघातबन्धने शुद्धैः क्षौमजैर्गरुडाग्रज। तत्पापनाशनं सर्वं प्रागजं प्रोक्तं परन्तप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्यधिकसहस्रतमः ॥ १०६० ॥

श्रीसूर्य उवाच ।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवेऽश्वमवस्तुत । यानयोषस्य सुमुखी धनभर्तृसमन्विता ॥ १ ॥
पूर्वपापप्रभावेन सपत्न्या गर्भनाशनात् । जातेयं पादजाऽत्रैव दुःखार्त्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणोदनम् । काश्यां गत्वा तु विधिना शिवमभ्यर्च्य शक्तितः ॥३॥
व्रतैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः । शिवरात्रौ ततः पश्चाद्दीपमाला दिनेऽण्डज ॥ ४ ॥
अर्धरात्रे च माघ्यां वा माघे स्नानं तु कारयेत् । मंत्रैर्वरुणसूक्तैश्च नौकायां च पतत्रिण ॥ ५ ॥
य एवं कुरुते सम्यक् तस्याः स्यात्सन्ततिर्ध्रुवम् ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्यधिकसहस्रतमः ॥ १०६१ ॥

श्रीसूर्य उवाच ।

परनिन्दां तु यः कश्चित्प्राग्भवे विनतासुत । कुर्याद्दुर्मतिमापन्नः खल्वाटो जायतेऽधुना ॥ १ ॥
दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम् । ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्यधिकसहस्रतमः ॥ १०६२ ॥

श्रीसूर्य उवाच ।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत । सात्र जन्मनि तत्काले क्षयरोगेण पीडिता ॥ १ ॥
यक्ष्मणात्र क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षये क्षयं याति तच्छरीरमशाश्वतम् ॥ २ ॥
दृढकर्मकृतं पापं तस्मान्नोक्तं पतत्रिण । पापनाशकरं किंचिदुपायं त्वत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्यधिकसहस्रतमः ॥ १०६३ ॥

श्रीसूर्य उवाच ।

या वाग्विरोधिनी नारी भर्तुः पूर्वभवे सुत । मूकत्वं जायते तस्याश्चात्र जन्मनि निश्चयात् ॥ १ ॥
तत्पापनाशनं दानं दद्याद्देद्स्य पुस्तकम् । ब्राह्मणे वेदविदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
पूजयेच्च द्विजान् भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्यधिकसहस्रतमः ॥ १०६४ ॥

श्रीसूर्य उवाच ।

या काचिद्भंजनं कुर्यान्नारी पूर्वं भवेऽण्डज । देवागारे स्थापितायाः प्रतिमायाः परेण च ॥ १ ॥
अप्रतिष्ठान्विता सात्र जायते वै पतत्रिण । वर्षत्रयं ब्रह्मकृच्छ्रं पूजयेत्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चषष्ट्यधिकसहस्रतमः ॥ १०६५ ॥

श्रीसूर्य उवाच ।

विधिना तत्र दत्तानि काम्यश्राद्धानि मानद । ततो भाविबलात्सुत ब्राह्मणेन तपस्विना ॥ १ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम् । संमिलित्वा तदुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥ २ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्सर्वफलं भुक्तं पापाच्च नरकं भृशम् ॥ ३ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ४ ॥
विशालाक्षो धनी मानी सुरूपोऽमितदो घृणी । बहुदेशाधिकाराढ्यः पुण्यात्सर्वं फलं त्विदम् ॥५॥
लोभी क्रूरो महाक्रुद्धः सदा चिन्तासमन्वितः । सन्तानसुखहीनस्तु सुरूपस्त्रीसुखोज्झितः ॥ ६ ॥

बन्धुहीनो व्ययी क्षीणः सर्वं तत्पापतः फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधिनीम्॥७
कुबेरप्रतिमां रौप्यमीं पञ्चस्वर्णमितां शुभाम् । लक्ष्मीनारायणं दद्यात्सुवर्णं स्वर्णनिर्मितम् ॥ ८ ॥
लेख्यं पत्रे पवित्रे च पुत्रसन्ततिवर्द्धनम् । य एवं कुरुते शक्त्या तस्यारिष्टं विनश्यति ॥ ९ ॥
प्रायश्चित्ते कृते तत्र चायुः सप्ततिवत्सरम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्यधिकसहस्रतमः ॥ १०१६ ॥

---

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो वाताधिकशरीरवान् । क्षामाङ्गः क्षीणवर्णोऽथ स्वल्पवृत्त्या च जीवनम् ॥ १ ॥
देवब्राह्मणभक्तश्च किंचिद्वादपरायणः । करे पादे कुशस्त्रेण दुष्टशृङ्गाभिघाततः ॥ २ ॥
व्रणो हि जायते दीर्घनेत्रतोदो ह्यरोग्यता । परेषामपवादं च स ब्रूते लोकतोऽन्वहम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं वै वदेत्किंचित्कार्कश्यस्य हि कारिणी ॥ ४ ॥
अपत्यानि म्रियन्ते न जातान्यपि हि कानिचित् । वर्षत्रयमिता बाला म्रियन्ते माससम्मिताः॥५॥
केन कर्मविपाकेन मृतापत्यत्वमेव च । उदरे हि स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
गृहगेहं कुभ्रातॄणां मृतापत्यं प्रजायते । गतो बहुतरः कालः कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वं वैनतेय तृतीयेऽत्रैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानव्रतदयायुक्तः प्रजाप्रीतिः परन्तपः । तस्य चैकोऽविनीतस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
द्वितीयः पादचारस्तु तृतीयश्च स्तनंधयः । गर्भयुक्तश्चतुर्थस्तु पिता मृत्युवशं गतः ॥ १० ॥
तस्यौर्ध्वदेहिकं कर्म पूर्ववित्तसमं कृतम् । मासैस्त्रिभिर्व्यतिक्रान्तैर्ज्येष्ठेनैव दुरात्मना ॥ ११ ॥
निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात् । पुत्रशोकातया मात्रा हृदयं ताडितं भृशम् ॥ १२ ॥
अभिघातव्यथाक्रान्ता गर्भयुक्ता दिवं गता । अचिरात्तेन पापेन ज्येष्ठश्चौरेण घातितः ॥ १३ ॥
द्वितीयं जन्म चेतद्धि मृतापत्यत्वकारकम् । पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । गर्भस्य पातनस्यापि बालव्यापादनस्य च ॥ १५ ॥

श्रीसूर्य उवाच ।

लघूनामलघूनां च हतां वै पूर्वजन्मनि । ततोन्वर्तं मया प्राप्तं दुःखं नानाविधं त्विदम् ॥ २६ ॥
तदेनःसंविनाशाय दानं संप्रददे त्विदम् ।" स्वस्त्यस्तु चेति तत्रोक्ता कोदादिति विसर्जनम् ॥२७॥
सर्पिष्यात्मानमालोक्य भुञ्जीत सह बन्धुभिः । ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिशंसनम् ॥ २८॥
काष्ठलोष्टादिशस्त्राद्यैर्घातः स्याद्वालक्रीडनात् । जलादग्न्यादिवाताद्वा व्रणस्तस्य हि जायते॥२९॥
स्त्रीणामङ्गविकारादि तिलव्रणरुगादिकम् । पैत्रीयमातुलान्यादिनेत्रतोदो रसाज्ञता ॥ ३० ॥
स्वसा मातृष्वसा वापि बाल्ये वैधव्यतामियात् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्यधिकसहस्रतमः ॥ १०६७ ॥

## श्रीसूर्य उवाच ।

या प्राग्भवे महामोहात्परनिन्दां च कारयेत् । खल्वाटदग्रुजा सात्र जायतेऽत्रैव जन्मनि ॥ १ ॥
धेनुं दद्यान्महाभाग विधियुक्तां सकम्बलाम् । तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्यधिकसहस्रतमः ॥ १०६८ ॥

## श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः । गण्डमालाख्यरोगेण संयुक्तो जायते त्विह ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । गृहीत्वा कम्बलं शुद्धं दद्यात्तद्वेदपारगे ॥ २ ॥
कुटुम्बिने दरिद्राय दद्याद्दोषापनुत्तये । गण्डमालाहरं चैतद्दानमुक्तं मया त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्यधिकसहस्रतमः ॥ १०६९ ॥

## श्रीसूर्य उवाच ।

कुलघ्नी या महादुष्टा पूर्वमासीत् पतत्त्रिण । अत्र पूर्वकृतात्पुण्यान्मानुषी संकरा स्मृता ॥ १ ॥
धनपुत्रैर्विहीना सा चात्र जन्मनि दृश्यते । निष्कृतिं तत्प्रवक्ष्यामि प्रयागे मरणं सुत ॥ २ ॥
वासात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्यधिकसहस्रतमः ॥ १०७० ॥

## श्रीसूर्य उवाच ।

पक्षाघातं च यः कुर्यात्सभार्यां ब्राह्मणस्य च । पक्षाघातेन रोगेण पीडितोऽत्रैव जायते ॥ १ ॥
भूरिभोगं विमतोयं दद्याद्दानं पतत्त्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्यधिकसहस्रतमः ॥ १०७१ ॥

## श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा । गण्डमालाख्यरोगेण संयुक्ता जायते त्विह ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । पूर्वपापहरं पुण्यं दद्यादत्र च कम्बलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते । द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्यधिकसहस्रतमः ॥ १०७२ ॥

## श्रीसूर्य उवाच ।

बालं जघान वै कश्चिद्ब्राह्मणस्य खगाधिप । वङ्गदेशे वसन्पूर्वं चात्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः । धनधान्ययुतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥

विद्यादानात् कृतात्पूर्वं शृणु पापफलं तथा। क्षयरोगाकुलः क्षीणः पुत्रसन्ततिवर्जितः ॥ ३ ॥
वालघातनजात्पापाद्ब्राह्मणस्य पतत्रिण। महालोभपरो मूढो नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्महत्याविमोचनीम्। प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान्। गन्धपुष्पैस्तथा धूपैर्लक्षसंख्याविधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा। षडस्रे चतुरस्रे वा कुण्डे चाज्यतिलाञ्छुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्रान् शैवान्कासारलड्डुकैः। नानाभक्ष्यफलैरेवं वस्त्रैर्माल्यैस्तथार्चयेत् ॥ ८ ॥
विविधां दक्षिणां दद्याद्द्विप्रीतिकरीं तथा। यश्चानेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
स बालघातजात्पापान्मुच्यतेऽत्र ममाज्ञया। चतुर्दश्यामथाष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः। पूजयेदर्घ्यपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तं नरं सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर। आयुस्तस्य शतं प्रोक्तं पञ्चहीनं च पुत्रक ॥ १२ ॥
प्रायश्चित्ते कृते यत्नात्पञ्चम्यां चंद्रवासरे। चिन्मये स्वकृते सूत चत्वारिंशन्मिताब्दके ॥ १३ ॥
रिष्टं स्यात् क्षयरोगेण बालघाताच्च निश्चितम्। ब्रह्मघातान्महापापात्पूर्वजन्मकृताद्दृढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि। बाध्यते क्षयरोगेण सप्तजन्मसु निश्चयात् ॥ १५ ॥
ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः। नहीदृशं महापुण्यं क्षयरोगविनाशनम् ॥ १६ ॥
पुत्रवृद्धिकरं चात्र यथा प्रोक्तं शिवार्चनम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्यधिकसहस्रतमः ॥ १०७३ ॥

## श्रीसूर्य उवाच।

यो द्विजं प्राग्भवे हन्यात्सुरां च त्रिविधां पिबेत्। मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जायते ॥ १ ॥
गृहवित्तानुसारेण पलेनार्द्धपलेन वा। कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥
आवाह्य तत्र ब्रह्माणमसुं सर्वोपचारकैः। पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥
दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्यधिकसहस्रतमः ॥ १०७४ ॥

## श्रीसूर्य उवाच।

वैकुण्ठादागतस्त्वत्र मथुरायां पतत्रिण। जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
घोरे कलियुगे प्राप्ते पापाक्रान्ते महाबले। भारावतरणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्यधिकसहस्रतमः ॥ १०७५ ॥

## श्रीसूर्य उवाच।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज। कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णशतकं दद्यात्स तद्दोषविनाशनम्। चान्द्रायणत्रयं कुर्यात्तद्दोषोपशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्यधिकसहस्रतमः ॥ १०७६ ॥

## श्रीसूर्य उवाच।

राजघातकरी प्रोक्ता या पूर्वं घातयेन्नृपम्। राजयक्ष्मान्विता सात्र तस्मिन्वयसि भामिनी ॥ १ ॥
प्रायश्चित्तं परं तस्याः शृणुष्वात्र खगेश्वर। यस्मिन्कृते हि विधिना पूर्वपूर्वाघनाशनम् ॥ २ ॥

स्वर्णगोभूमिमिष्टान्नं घृतधेनुतिलानि च । देयानि श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मिते वर्षे प्रायश्चित्तेऽकृतेऽधुना ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्यधिकसहस्रतमः ॥ १०७७ ॥

श्रीसूर्य उवाच ।

विनापराधं यः कश्चिद्वैश्यं हन्यात्पतत्रिण । प्राग्जन्मनि च युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥१॥
भविष्यति न सन्देहो तस्य मृत्युः खगाधिप । अपि दानशतैर्वापि दुस्तरोऽत्र जन्मनि ॥ २ ॥
त्रिंशद्वर्षे महारिष्टं रक्ताविक्रयान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्यधिकसहस्रतमः ॥ १०७८ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्वैश्यमन्यजन्मनि मानद । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥
प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग पापरोगक्षयो भवेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्यधिकसहस्रतमः ॥ १०७९ ॥

श्रीसूर्य उवाच ।

मेरोः समागता येयं प्राप्ता माथुरमण्डले । सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगेऽत्रैव सर्वपापविवर्जितम् । कृत्वा याद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय अशीत्यधिकसहस्रतमः ॥ १०८० ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । सात्र जन्मनि मूत्रेण कृच्छ्रेणातिप्रपीडिता ॥ १ ॥
प्रायश्चित्तं परं तस्या घोरपापहरं शृणु । कुर्याद्धिरण्मयं पद्मं विप्राग्र्याय निवेदयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्यधिकसहस्रतमः ॥ १०८१ ॥

अरुण उवाच ।

कश्चिद्विप्रोत्तमो जातः किञ्चिद्वित्तसमन्वितः । कासश्वासादिना बाधा उदराग्निश्च तस्य वै ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यशासनः । प्रिया प्रीतिपरा तस्य धनानामनुकांक्षिणी ॥ २ ॥
कदाचित्क्रोधवशगा दुर्वाक्यानाञ्च भाषिणी । उदरे वातजान् रोगान् शिरोर्त्ति दधती कदा ॥३॥
अपत्यानि म्रियन्ते च एको द्विश्चास्तथैव च । तेन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

भर्तृकर्म कृतं नव स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ५ ॥
व्रतानि विविधान्येव सा चक्रे भुवि मानद । स्वगृहे धान्यराशौ सा भक्षणार्थं समागताम् ॥ ६ ॥
सवत्सां ब्राह्मणस्याथ गां धान्यानि हि खादतीम् । गृहीत्वा लकुटीं कुर्शा भृशं ताडितवत्यसौ॥७॥
सगर्भासुरभीवत्सगर्भकृच्छ्रप्रपातनात् । प्रह्रोसौ गर्भमध्यस्थो प्रसवे भृशदुःखिता ॥ ८ ॥
शीर्पदुःखेन सुरभी भृशमाक्रंदती मृता । तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ ९ ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः । इदं तृतीयं तज्जन्म मृतापत्यस्य कारकम् ॥ १० ॥

सप्तजन्मसु जायन्ते गोस्त्रीब्रह्मप्रघातकाः। नानाप्रकारकर्माणां तेषां नानापत्यार्थदुःखिता ॥ ११ ॥
सपत्नीकः शुचिः स्नातो ह्यौषधैः स्नानमंत्रतः। उपोषणं दिवारात्रं त्रयोदश्यां विवर्जयेत्॥१२॥
पूर्णमासीदिनं प्राप्य प्रातश्चानुदिते रवौ। सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् ॥ १३ ॥
तत्रोपरि गवां स्थानं महाशोभासमन्वितम्। अर्हणाद्युपहारैश्च कुङ्कुमाद्यैश्च चर्चयेत् ॥ १४ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम्। तत्रोपरि न्यसेद्देवं माधवं कलशेऽर्चयेत् ॥ १५ ॥
सौवर्णं राजते पद्मे सायुधं सचतुर्भुजम्। उपचारैः शुभैर्गन्धैर्धूपैर्दीपैः प्रसूनकैः ॥ १६ ॥
ब्रह्मसूक्तेन सूक्तेन श्रियः सूक्तेन पूजयेत्। सुशुभैर्धूपगंधाद्यैरर्चयेद्विविधैर्गुणैः ॥ १७ ॥
रुद्रैकादशिनीभिश्च जपेद्रुद्रविधानतः। पूजा लक्ष्मीतैः पुष्पैर्वस्त्रपूतैश्च वारिभिः ॥ १८ ॥
शतमष्टोत्तरं हुत्वा चरुणा पायसेन च। रुद्रस्यायुतहोमश्च समध्वाज्यसमाहुतिः ॥ १९ ॥
एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम्। होमान्ते विप्रभोजान्ते मंत्रमेनमुदीरयेत् ॥ २० ॥
"यन्मया कर्मवशतः पुरा जन्मनि पाप्मना। सगर्भायास्तु गोर्घोरं लकुटचा ताडनं कृतम् ॥२१॥
तस्मात्कर्मवशात्प्राप्तं मृतगर्भादिनाशनम्। मृतसन्ततिरूपाणि प्राप्यन्ते च तदेनसः ॥ २२ ॥
तत्तदेनोविनाशाय शास्त्रदानी भवत्विदम्।" स्वस्त्यस्तु चेति तत्रोक्त्वा कोऽदादिति विसर्जनम्२३
सर्पिष्यास्यमानमालोक्य अन्यान्वै तोषयेद्द्विजान्। भूमिद्रविणवासांसि धनं दत्त्वा विधानतः २४॥
व्रतान्ते सुरभीं दद्याद्धेमद्रव्यादिं शक्तितः। अहःशेषं ततः सर्वं भोजयेदिष्टबन्धुभिः ॥ २५ ॥
ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते। काष्ठलोष्टादिशस्त्राद्यैर्घातैः स्याद्युपलेखनात् ॥ २६ ॥
शृङ्गिणां चोपघातश्च जायते व्रणजार्त्तयः। जलाकुलत्वं स्पर्शेभिस्ताडशस्तत्र जायते ॥ २७ ॥
नायंगे विकृतिर्व्याधी आस्ये व्रणतिलादिकम्। पैत्रेयीमातुलान्यादेर्वैधव्यार्तिर्भवेदपि ॥ २८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकसहस्रतमः ॥ १०८२ ॥

## श्रीसूर्य उवाच।

या काचिद्ब्राह्मणी पूर्वे भवे मोहात्सुरां पिबेत्। मदरोगातिदुःखेन सात्र जन्मनि पीड्यते ॥ १ ॥
प्रायश्चित्तं परं तस्याः मदरं नाशयेन्मदत्। दद्याद्रुक्ममयं पद्मं सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्यधिकसहस्रतमः ॥ १०८३ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि यो विप्रस्त्रिविधां वै सुरां पिबेत्। मूत्रावरोधरोगेण मूत्रकृच्छ्रेण नश्यति ॥ १ ॥
इद्वात् प्राक्पापजात् सूत प्रायश्चित्तं न विद्यते। पूर्वपापावशेषे च कृच्छ्रंसांतपनं चरेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्यधिकसहस्रतमः ॥ १०८४ ॥

## श्रीसूर्य उवाच।

अकामतश्च या नारी वैश्यघातनतत्परा। बभूव प्राक् च पक्षीन्द्र सात्र जन्मनि निश्चयात् ॥१॥
रक्तार्बुदसमाक्रान्ता दुष्टपापप्रयोजिता। महार्तिरेन सा याति यमलोकं पतत्रिण ॥ २ ॥
प्राक्पापाद्दुष्करात्सूत कण्ठपार्श्वादिसम्भवात्। निष्कृत्यै कदलीं दद्यात्सुवर्णत्रयसंयुताम् ॥ ३ ॥
पूजयेद्ब्राह्मणान्पश्चाच्छिवपूजनतत्परान्। यात्वेवं कुरुते भक्त्या कदलीदानमुत्तमम् ॥ ४ ॥
नश्येच्च क्षयरक्तस्या रोगशोकप्रणाशनम्। आयुर्वर्षाणि षट्शुक्रं यत्र सप्ततिसंख्यकम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्यधिकसहस्रतमः ॥ १०८५ ॥

श्रीसूर्य उवाच ।

यो नरोऽतिथिलोकपातपरस्त्रीं कामयेत्पुरा । जन्मन्यस्मिन् यौवने तु सोन्मादी जायते भृशम् ॥ १ ॥
दद्यात्प्रजापतिं देवं सौवर्णं शक्तितोऽण्डज । मृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणान् भक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत मोहादाशु प्रमुच्यते ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्यधिकसहस्रतमः ॥ १०८६ ॥

---

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी । सात्र जन्मनि रोगेण खल्वाटेन युता भवेत् ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यतेऽत्र जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासे तु कार्तिके ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्यधिकसहस्रतमः ॥ १०८७ ॥

---

श्रीसूर्य उवाच ।

वैश्यहन्त्री च या नारी भवे पूर्वे पतिव्रता । रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम् । सप्तधान्येन दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादेकर्मविपाकेऽध्यायोऽष्टाशीत्यधिकसहस्रतमः ॥ १०८८ ॥

---

श्रीसूर्य उवाच ।

रौप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते । स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे पतत्रिण । प्राजापत्यत्रयं कृत्वा प्रारंभे पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्यधिकसहस्रतमः ॥ १०८९ ॥

---

श्रीसूर्य उवाच ।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यसमन्वितः । सुधीः स्वधर्मनिरतो दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोत्साही देशे कल्पके सुत । स्वामी धर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः । दुष्टाः प्रजाः क्रोधयुक्ताः बभूवुर्विमुखास्तदा ॥ ३ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत । संग्रामभूमौ मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभाग साध्वी पतिपरायणा । पतिव्रतामहासत्त्वा भर्तुः प्राणावलंबिनी ॥ ५ ॥
घातयित्वा तु शस्त्रेण स्वशरीरं मनस्विनी । मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तदा ॥ ६ ॥
तद्गुणा ह्यन्तकालेऽपि दिवि प्राप्ता समर्तृका । भुक्त्वा तत्र महाभोगानपूर्वान्स्वामिधर्मतः ॥ ७ ॥
नानाप्रजाघातनजातपापात्पूर्वसमुद्भवात् । क्षीणात्पुण्यात्तथा सूत म्लेच्छदेशे बभूव सः ॥ ८ ॥
सिन्धोः पश्चिमभागेऽत्र शतयोजनसम्मिते । गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुखैर्युक्तो, गजयूथैः समावृतः । पत्त्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोक्षपुत्रपौत्राढ्यश्चात्यन्तसुखसंयुतः । देशेदेशेऽधिकाराढ्यः स म्लेच्छः पृथिवीपतिः ॥ ११ ॥
स्त्रीसहायान्महाभागः तथा पुत्रसहायतः । सुखैश्वर्ययुता सापि यवनी तद्वशाभवत् ॥ १२ ॥
सपुत्रः प्राक्सहायाच्च सोप्यत्रैव महाप्रभुः । एवं जन्मफलं प्रोक्तं ससहायं पतत्रिण ॥ १३ ॥
स्वामिधर्मकृतात्पुण्यात्तदर्थं मरणात्तथा । भविष्यति गतिस्तेषां पूर्वपुण्यात्पतत्रिण ॥ १४ ॥

पश्चाशीतिमितायुः स्यात्तत्र रिष्टं भवेन्मृतिः । रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत ॥ १५ ॥
प्रजापीडनजात्पापात्तद्रूपे नात्र संशयः । दद्यात्कालनरं तत्र ब्राह्मणाय कुटुम्बिने ॥ १६ ॥
तथा हिरण्मयं तद्वद्द्वजं शतपलात्मकम् । कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु ॥ १७ ॥
सर्वोपस्करसंयुक्तं द्वयमेतच्च पुत्रक । महारिष्टहरं प्रोक्तं दानात्कालनरात्क्वचित् ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्यधिकसहस्रतमः ॥ १०९० ॥

---

## श्रीसूर्य उवाच ।

या काचिद्यौवने नारी रमते स्वेच्छया परम् । बलात्कारेण पुरुषं सात्रोन्मादेन पीडिता ॥ १ ॥
तत्पापनाशनं सर्वमुपायं शृणु तत्त्वतः । कृत्वा सुवर्णजं वायुं मृगं हैमं च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्तं दद्याद्विप्राय धीमते । न प्राप्नोति महोन्मत्तभावं दानप्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्यधिकसहस्रतमः ॥ १०९१ ॥

---

## श्रीसूर्य उवाच ।

त्रपुहारी च यः पूर्वं जन्मन्यत्रच जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपुं विप्राय धीमते । पलानां त्रिशतं शुद्धं तस्माद्रोगात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्यधिकसहस्रतमः ॥ १०९२ ॥

---

## श्रीसूर्य उवाच ।

विद्यमाने हि पत्यौ या जाराद्गर्भं दधार वै । सा चात्र पादजा दुष्टा नच गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्ताद्यथोचितात् । प्रायश्चित्ते कृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दजीवनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्यधिकसहस्रतमः ॥ १०९३ ॥

---

## श्रीसूर्य उवाच ।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा । सोऽत्र जन्मनि जायेत सर्वकार्येषु सिद्धिकृत् ॥ १ ॥
तस्मिन्नेव हि काले च तस्य रिष्टं प्रकीर्तितम् । विंशन्मितेऽब्दे पक्षीन्द्र कालशस्त्रान्मृतिर्भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्यधिकसहस्रतमः ॥ १०९४ ॥

---

## श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी मोहाल्लोभाद्धरेत्त्रपु । सात्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपु तत्पापशुद्धये । तस्मिन्पापे क्षये सूत श्लेष्मरोगस्य नाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्यधिकसहस्रतमः ॥ १०९५ ॥

---

## श्रीसूर्य उवाच ।

विप्रवंशे समुत्पन्नः शक्तिमान् वेदपारगः । धनधान्यसमायुक्तश्श्रेष्ठशीलश्चार्जवान्वितः ॥ १ ॥
सुव्रतः शक्तिमान्धीरः किंचिद्व्याधिसमन्वितः । इन्द्रियाणां बलं हत्वा मेहवान्स व्यजायत ॥ २ ॥
उदरार्तिरसृग्बाधा किंचिद्देहे ह्यपद्यत । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥

सत्यवाक् सच्चरित्रा च व्रतानामनुकांक्षिणी । एकदाऽऽसूत सा पुत्रं दम्पती हर्षसंयुतौ ॥ ४ ॥
अथ सा मृतपुत्राभूत्कर्म्मणां परिपाकतः । तस्य गेहे च कन्यासीत्प्रौढा या न विवाहिता ॥५ ॥
भूरिद्रविणलोभेन वृद्धविप्राय सार्पिता । तद्गेहादाहृतं द्रव्यं सर्वस्वं स्ववशीकृतम् ॥ ६ ॥
यदा समुत्सुका प्रौढा वरार्थं गुणशालिनी । पतिभक्तिपरा नित्यं विषयेभ्यः सुखार्थिनी ॥ ७ ॥
पत्युः सा जरसा खिन्ना निर्विण्णाऽभूद्रुदानना । व्रततीर्थरता नित्यं सत्यानामनुकांक्षिणी ॥ ८ ॥
बहुवर्षैस्तया वत्स नियमैः शोषितं वपुः । पित्रा धनं गृहे भूरि त्वर्पितं तत्कृते भृशम् ॥ ९ ॥
अथ कालवशं प्राप्ता दीना सा ब्राह्मणी खग । सा पुत्री ह्युदरे भूत्वा ह्यगमज्जन्मजन्मनि ॥१०॥
कन्या बहुविधास्तस्य निराधारा मृताश्च वै । तेन कर्मप्रभावेण पूर्वकन्या बहुप्रजा ॥ ११ ॥
कन्याविक्रयकर्त्ता च रौरवं नरकं गतः । यातना बहुधा भुक्त्वा वर्षाणां च सहस्रकम् ॥ १२ ॥
पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः । इदं चतुर्थकं जन्म मृतपुत्रः प्रजायते ॥ १३ ॥
मृतपुत्रो मृतो गर्भः पूर्वकर्मप्रभावतः । भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद ॥ १४ ॥
भर्तृविद्वेषिणी नित्यं तथापत्यानुरागिणी । तेन कर्मविपाकेन कन्या भूरि मृताः सुत ॥ १५ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव पापं शाम्यति येन वै, । निष्कृतिं वद विश्वात्मन् पृथक्त्वं मे प्रकाशय॥१६॥

श्रीसूर्य उवाच ।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ १७ ॥
स्वकन्यां वरयोग्यां सा चिरापत्यमनागतम् । दशाब्दिकां स्वामानाय यथाभावं यथामति ॥१८॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । ब्राह्मेण विधिना सूत दद्याच्च बहुदक्षिणाम् १९॥
महापापौघशमनं कन्यादानमतंद्रितः । कन्याविवाहसमये महाशान्तिविधिं चरेत् ॥ २० ॥
एवं कृतविधिः सूत कन्यां दत्त्वा विधानतः । शान्तिकर्मणि सर्वत्र विस्तरेहोत्विगादिकम् ॥ २१॥
भूमिद्रविणवासांसि नानाभोज्यानि दापयेत् । गृहदानं ततो दद्याद्यथोपस्करसंयुतम् ॥ २२ ॥
वर्षेवर्षेऽपि संपूर्णं ह्यन्नवस्त्रादि दापयेत् । एवं कृतविधिः सूत बहुपुत्रो यशो लभेत् ॥ २३ ॥
पापं पुत्रविनाशाख्यं कन्यापत्यादिकं च यत् । तत्तत्पापप्रणाशार्थं कन्यादानादिशक्तितः ॥२४॥
कुर्यादसंशयं तस्य सुखं शान्तिः प्रजायते । यजन् यज्ञविधानेन ब्राह्मणान् स्वस्ति वाचयेत् २५॥
विनायकाम्बिकामूर्ति हेमनिष्कप्रमाणतः । आचार्याय ददेच्चाश्च नानाकर्माभिशान्तये ॥ २६ ॥
ऐहिकं लक्षणं तस्य शरीरे चोपजायते । जिह्वावदनदन्तोष्ठव्रणो वातादिदोषकृत् ॥ २७ ॥
नृपचौराग्निदाहाग्निश्च वित्तानि च यतस्ततः । तस्य ह्यानन्दमनसो दुःखं नश्यति चाधिजम् ॥२८॥
सर्पिष्पात्रमानमालोक्य भुञ्जीत सह बन्धुभिः ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्यधिकसहस्रतमः ॥ १०९६ ॥

---

श्रीसूर्य उवाच ।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीडयते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्यधिकसहस्रतमः ॥ १०९७॥

श्रीसूर्य उवाच।

गर्भवत्यानया भुक्ता पूर्वजन्मनि मानद। गर्भास्त्रा ह्यजा वद्धाविधिना गर्भवारिणी ॥ १॥
तेन कर्मविपाकेन वाहुजा सात्र कीर्तिता। पूर्वजन्मविपाकेन न च गर्भं दधात्यलम् ॥ २॥
प्रायश्चित्तमिदं तस्य चात्र सर्वाघमोचनम्। कृत्वाजां गर्भसंयुक्तां राजतीं पट्पलात्मिकाम् ॥३॥
वैश्वानरस्तथा कार्यः पञ्चमार्षैर्हिरण्मयः। पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४॥
येवं कुर्याद्विधानेन सर्वपापापनोदनम्। तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ ५॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायोऽष्टनवत्यधिकसहस्रतमः ॥ १०९८॥

श्रीसूर्य उवाच।

मृगयां प्राप्य पक्षीन्द्र गजराजवधे पुरा। जायते गजचर्मा वै स नरोऽत्रैव जन्मनि ॥ १॥
गणेशप्रतिमां दद्यात्सौवर्णीं द्विपलात्मिकाम्। गन्धपुष्पैश्च संपूज्य तस्माद्रोगाद्विमुच्यते ॥ २॥
कारयेद्गणनाथस्य लक्षजाप्यं विधानतः। होमयेच्चदशांशेन मुच्यते पूर्वकिल्बिषात् ॥ ३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्यधिकसहस्रतमः ॥ १०९९॥

श्रीसूर्य उवाच।

यो हरेत्परसिद्धान्नं क्षुत्पीडाभिःप्रपीडितः। सोऽत्र जन्मनि पक्षीन्द्र शूलरुक्पीडितोध्रुवम् ॥ १॥
अन्नदानेन विप्राणां रसदानाद्विशेषतः। मुच्यते शूलजाद्रोगान्नात्र कार्या विचारणा ॥ २॥
सुवर्णशूलदानं वा विप्रायात्र कुटुम्बिने। शूलदोषोपशमनमिह जन्मनि वै ध्रुवम् ॥ ३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः शताधिकसहस्रतमः ॥ ११००॥

श्रीसूर्य उवाच।

मूर्धाभिषिक्तः प्राक् सूत बभूव पुरुषोत्तमः। स्वज्ञातिषु महाभागः दृढकर्मक्रियापरः ॥ १॥
वैराटदेशे निवसन् राजकार्ये रतः सदा। कृतवान् गोग्रहं तत्र शत्रूणां भयदायकः ॥ २॥
बालवत्सामृता भूरि पुरे तस्मिन्खगोत्तम। पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३॥
ततो यमपुरं प्राप्तो भुक्त्वा भोगांस्तदुक्तवत्। विष्णुपूजनजात्पुण्यात्प्रागत्र यमुनातटे ॥ ४॥
चारणो धर्मनिरतो बहुपापं जहौ खलु। एवं कृतविधेः सूत सर्वपापविनाशनम् ॥ ५॥
तस्य पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम्। अकृते तु यथाशक्ति प्रायश्चित्ते यथोदिते ॥ ६॥
रिष्टं पष्टिमिते वर्षे दारुणं जायते किल। प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम् ॥ ७॥
जन्मादिमरणांतं हि स्वल्पमेवात्र सूचितम् ॥ ८॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरशताधिकसहस्रतमः ॥ ११०१॥

श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यतिकोविदः। ग्रामवासः सदा सौम्यः शकटुनिकरेऽण्डज ॥ १॥
शूद्रकन्या स तेनैव हृता षोडशवार्षिकी। भुक्तातिकामलोभेन बलात्कारेण दुःखिना ॥ २॥
सोऽनार्यो धर्मपुत्रस्य मुक्त्वा भैरवशासनम्। पूजनाच्छिवलिङ्गानां प्रागत्रापि च सङ्करः ॥ ३॥
षण्डस्तेन विपाकेन प्राप्तसर्वमनोरथः। महोत्साही महामानी महाविभवविस्तरः ॥ ४॥
मृत्युश्चास्यात्र गङ्गायां पुण्यायां शिवपूजनात्। भविष्यति महाभाग पापान्ते चास्य सद्गतिः ॥५॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरशताधिकसहस्रतमः ॥ ११०२॥

श्रीसूर्य उवाच ।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि । यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय पतत्रिण । न पश्यति महापीडां पादजां पापसंभवाम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायद्व्युत्तरशताधिकसहस्रतमः ॥ ११०२ ॥

श्रीसूर्य उवाच ।

अर्मवरमाभवे विप्रो ग्रामवासी वनाश्रितः । चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत ॥ गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान् घोरान् पापात्पुण्याच्च शाश्वतान् । स्वर्गात्पर्वतभागे तु स जातो वाडवोऽधुना ३
वामनो राजसन्मानी महोग्रो मंत्रपारगः । पुत्रहीनोप्यसौ सूत परवित्तस्य लुण्ठनात् ॥ ४ ॥
भवंत्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः । प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान् । तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोऽण्डज । रौद्रं व्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः । जायतेऽत्रैव पक्षीन्द्र कुर्याद्यः पुत्रवर्द्धनम् ॥ ८ ॥
आयुरष्टौ तथाशीतिसम्मितं कृतनिष्कृतेः ॥ ९ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरैकशताधिकसहस्रतमः ॥ ११०४ ॥

अरुण उवाच ।

क्षात्रवंशे समुत्पन्नो वातदेहो रुजाकरः । गुल्माद्या ह्युदरे बाधा शिरोर्तिस्तस्य सन्ततम् ॥ १ ॥
व्यापारो निष्फलस्तस्य किञ्चित्सेवादिनाऽभवत् । तस्य भार्याद्वयं गेहे किञ्चिद्भक्तिपरायणम् ॥ २ ॥
अन्योन्यद्वेषभावाच्च किंचित्प्रीतिकरा परा । मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
एकोदरं स्थिरीभूतं न प्रसूतिर्न पातनम् । केन पापप्रभावेण कथयस्व दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः । दानधर्मपरो नित्यं देवदेवपरायणः ॥ ५ ॥
अन्योन्यद्वेषभावाच्च वर्तते ब्राह्मणेन वै । कश्चिद्विप्रो धर्मपरो वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगेन भाविनोऽर्थस्य वै बलात् । तद्वित्तं ग्राहयामास शूद्रो म्लेच्छजनैः कुधीः ॥ ७ ॥
खुताप मति चक्रे ब्राह्मणो भार्यया सह । भर्त्सनैस्तर्जनाद्यैस्तु तद्धनं नालभत्तदा ॥ ८ ॥
दिनैः कतिपयैरेव शूद्रश्चाण्डालसरूपतः । ब्राह्मणं भर्त्सयामास ब्राह्मणः क्रोधसंकुलः ॥ ९ ॥
प्रतिकर्तुमशक्तश्च ह्यात्मघातं चकार ह । गर्भयुक्ता च तद्भार्या भर्तारं पृष्ठतोऽन्वगात् ॥ १० ॥
हृतं तस्यावशिष्टं स्वं म्लेच्छराजेन तत्तदा । गते कतिपये काले शूद्रो म्लेच्छेन घातितः ॥ ११ ॥
ततो वै निरये वत्स वर्षायुतसहस्रकम् । पपात नरके घोरे शूद्रः स्वाशुभकर्मणा ॥ १२ ॥
पश्चान्मानुष्यमापन्नो दानधर्मप्रभावतः । तृतीयं जन्म चैतद्धि तस्य विप्रापकारिणः ॥ १३ ॥
तेन वै कर्मणा तस्य ह्यपत्यं नैव जायते ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । निष्पातं सकलं ब्रूहि नारीणां हितकाम्यया ॥ १५ ॥

श्रीसूर्य उवाच।

तीर्थे संवत्सरं सेवा ह्येकचित्तेन दंपती। श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १६ ॥
तावन्निष्कृतयो भूयः क्रमेणानेन यास्तदा। सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १७ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम्। तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् ॥ १८ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम्। उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः ॥ १९ ॥
जनन्या सहितं भूयः प्रद्युम्नं हि समर्चयेत्। चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ २० ॥
श्रीवत्साङ्कं पीतवस्त्रं सुचारुं पूजयेत् क्रमात्। पूजनं ब्रह्मसूक्तेन तथा श्रीरसकोविदैः ॥ २१ ॥
पुष्पैः स्रग्गन्धधूपैश्च ह्यर्चयेद्विष्णुमर्हणैः। तद्विप्रासोऽथ तद्विष्णोः क्रमं संपश्य नित्यशः ॥ २२॥

मन्त्रः।

"इदंविष्णुर्विचक्रमे त्रेधानिदधे पदम्। समूढमस्यपांसुरे" ॥ २३ ॥
शतमष्टोत्तरं हुत्वा चरुणा पायसेन च। होमान्ते विप्रभोजान्ते मंत्रमेनमुदीरयेत् ॥ २४ ॥
यन्मया पापभावेन कर्मान्धेन दुरात्मना। म्लेच्छराज्ये च व्यापारे मत्या वै दुष्कृतं कृतम्॥२५॥
ब्राह्मणानां शुचि द्रव्यं नीतं भक्षणतर्जनैः। द्रव्यापहरणात्प्राप्तं सुखं नाना भवान्तरे॥ २६ ॥

मन्त्रः।

"स्थिरगर्भा मृतापत्या हत्वा कर्म सुदुःसहम्। तत्तदेनोविनाशाय दानं संप्रददे त्विदम्"॥२७॥
स्वस्त्यस्त्विति च तत्रोक्त्वा कोऽदादिति विसर्जनम्। सपिण्ड्यात्मानमालोक्य भोजयेद्विप्रबन्धुभिः॥२८
ऐहिकं लक्षणं तस्य शरीरे चोपजायते। हृद्दुःखं दीर्घनिश्वासो लोचने शस्त्रकांक्षिते ॥ २९ ॥
काष्ठलोष्ठादिशस्त्राद्यैर्घातः स्याद्रुपलेखनात्। जलाकुलत्वं स्पर्शोऽपिस्तादृशो व्रणसंभवः ॥ ३० ॥
भार्याङ्गे विकृतत्वाधिवंक्रे व्रणतिलादिकम्। पितृष्वसृमातुलानीस्वस्रादेर्विवयाप्यथा ॥ ३१ ॥
स्वकुले प्रेतजा पीडा दुःखं वै पश्वपत्यजम्। कर्मानुसारजो व्याधिश्चिह्नं तस्य सहायवत् ॥३२ ॥
स्वकुलेऽपि प्रवर्त्तन्ते पतिता धर्मचारिणः। एवं तु लक्षणैर्ज्ञात्वा प्रायश्चित्तं तदा भवेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचोत्तरशताधिकसहस्रतमः॥ ११०५ ॥

---

श्रीसूर्य उवाच।

पूर्वे ह्याभीरजा काचिदभूद्व्रतपरायणा। महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्त्ताः सततं प्रपायां प्रेरितास्तया। निदाघकाले संप्राप्ते बहिर्मांसकुलाश्रये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नपि जलाशये। शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्तास्तया गावो दृढेन लकुटेन च। तत्रैका तृषिता धेनुस्संतप्ता च भृशं तथा ॥ ४ ॥
न च त्यक्तं जलं सुत गर्भभारान्विता यतः। सदा तत्ताडनात्सुत पतितो गर्भसंस्थितः ॥ ५ ॥
वत्सो मर्मव्यथायुक्तो मृतश्चापि च तत्क्षणात्। विचेष्टितमिदं यस्याः सैषा वैश्याङ्गनाऽधुना ॥६॥
नानाविभूषणैर्युक्ता नानापशुभिरन्विता। सुखभोगवनैर्यान्यैर्वाञ्छितार्थान्विता सुत ॥ ७ ॥
प्राग्गोसेवनजात्पुण्यात्सर्वं पुण्यफलं त्विदम्। यत्वात्र पूर्णगर्भत्वे सुखभावे खगाधिप ॥ ८ ॥
न मोचयति सा गर्भं तद्दुःखेनाकुला भृशम्। एवं वर्षत्रयं दुःखं भुक्त्वा मोक्ष्यति चाण्डज॥ ९ ॥
रिष्टमन्त्रत्रयं सूत वाऽङ्गसत्तमवादिह ॥ १० ॥

---

१ अयं मंत्रो विचारणीयः।

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदर्शनः ॥ ११ ॥

श्रीसूर्य उवाच ।

दद्याद्गां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ १२ ॥
द्विसुवर्णमितां तद्धल्ख्यां गां गर्भसंयुताम् । दद्याद्वेदविद्विज्ञाय पूर्वपापात्प्रमुच्यते ॥ १३ ॥
भोजयेत्तु यथाशक्ति विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषान्नात्र कार्या विचारणा ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरशताधिकसहस्रतमः ॥ ११०६ ॥

श्रीसूर्य उवाच ।

बभूव पार्श्वजः कीश्चद्गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिपरो नित्यं दानादिविधिपूर्वकम् । स हि चक्रे विशिष्टेभ्यो ब्राह्मणेभ्यः स्वशक्तितः ॥ २॥
दैवाच्छत्रुगृहं गत्वा कृतं कर्म सुदारुणम् । वैरिपुत्रः पुरा सूत पादाघातेन घातितः ॥ ३ ॥
कुर्वता च सुतीक्ष्णेन दिवा वै चौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता ह्येकपुत्रिणी ॥ ४ ॥
पुनर्दुःखान्मृता सापि ददौ शापं हि दारुणम् । यथा पुत्रविहीनाऽहं गच्छामि च यमालयम् ॥५॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकांस्तथा । पूर्वपुण्यप्रभावेण स जातो मुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलग्ने स्थिते विधौ । श्यामांगो धूसरः क्षीणः प्रभुदेशाटने रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रप्रियगणान्वितः । मानभोगसुखैश्वर्यैः सुखी वै लोभसंयुतः ॥ ९ ॥
धर्मात्सर्वफलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातः पुत्रविहीनोऽस्मिन्नहजन्मनि भूतले । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मात्रा संयुतं चैव शुभलक्षणलक्षितम् । पूजयित्वा तु गन्धाद्यैः षोडशोपचारकैः ॥ १३ ॥
सूर्यभक्ताय शान्ताय तं दद्याद्वै कुटुंबिने । पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् ॥ १४ ॥
तथैव गाणनाथं च लेख्यं पञ्चोपचारकैः । संपूज्य विधिवद्द्यात्सर्वपापविशुद्धये ॥ १५ ॥
अष्टाक्षरं तथा मंत्रं वैदिकं सूर्यदैवतम् । जपेदष्टसहस्रं तु शुभं प्रणवपूर्वकम् ॥ १६ ॥
गायत्रीपञ्चसाहस्रं दुष्टपापविमोचनम् । कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् ॥ १७ ॥
एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि । न प्राप्नोति तदा रिष्टं षड्विंशाब्दे प्रकीर्तितम् ॥ १८ ॥
पञ्चवेदमिताब्दान्तमायुस्तस्य भविष्यति ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय. सप्तोत्तरशताधिकसहस्रतमः ॥ ११०७ ॥

श्रीसूर्य उवाच ।

अज्ञानाद्वर्षपर्यैश्च पूर्वजन्मन्यजां सुत । भविष्यत्यत्र पुरुषो ह्यधिकांगः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं सुवर्णाढ्यं मुच्यते च तदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायेऽष्टोत्तरशताधिकसहस्रतम. ॥ ११०८ ॥

श्रीसूर्य उवाच ।

लोहहारी च पुरुषः इह जन्मनि पीड्यते । घर्घरास्येन रोगेण महादुःखप्रदेन हि ॥ १ ॥

दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो वा पापनाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरशताधिकसहस्रतमः ॥ ११०९ ॥

श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीच्छुभानना । प्राग्भवेऽण्डज तत्सर्वं चेष्टितं शृणु सांप्रतम् ॥ १ ॥
नकुलानां बिले गत्वा चालितं तस्य बालकम् । पूरितं च तथा सर्वं तद्बालार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वा तियमशासनम् ॥ ३ ॥
पूर्वं शातद्रुके देशे ह्यभूदत्र च पर्वते । पूर्वं राजकुले जाताऽत्रापि राजकुले सुत ॥ ॥
प्राग्दानव्रतजात्पुण्याच्छृणु पापफलानि वै । सर्वे तद्वंशजाः सूत तदग्रे मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च सर्वमष्टोत्तरं शतम् । न मुच्यते महापापाद्दृढाज्जन्मत्रयेऽपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति सांप्रतम् ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरशताधिकसहस्रतमः ॥ १११० ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे पुत्र घातयेत्पक्षिनन्दनम् । सगर्भा गर्भपुष्ट्यर्थं जायते गोधिका सुत ॥ १ ॥
भोगादेव क्षयः प्रोक्तः समारब्धस्य कर्मणः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरशताधिकसहस्रतमः ॥ ११११ ॥

श्रीसूर्य उवाच ।

लोहं हरति यान्यस्य नारी बुद्धिविवर्जिता । अत्र जन्मनि सा नारी घर्घरास्यगुता भवेत् ॥ १ ॥
दद्यात्पलशतं लोहं सप्तवर्णं द्विजातये । मुच्यते पापजाद्रोगाद्घर्घराभिधकात्सुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरशताधिकसहस्रतमः ॥ १११२ ॥

श्रीसूर्य उवाच ।

मोहात्प्राग्भवयोत्स्नूत तीर्थजं विधिवर्जितम् । सा गोधिकात्र जनुषि भविष्यति वरानना ॥ १ ॥
धर्जं दद्याद्विधानेन कस्तूरीपलसंयुतम् । सवत्सं वेदविदुषे तद्दोषशमनं त्विह ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरशताधिकसहस्रतमः ॥ १११३ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयी । विरूपः कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
धनधान्यसुखोपेतः किंचिद्व्यापारवान् सुधीः । दायादाच्छत्रपीडश्च मिथः क्लेशश्च तस्य वै ॥२॥
तस्य नारीद्वयं चासीत्सञ्जातं चारुजन्मनि । बहुपुत्र्यः प्रसूताश्च न तु पुत्रो बभूव ह ॥ ३ ॥
कदाचिज्जायमानस्तु मृतः पुत्रोऽग्निभासकः । एकाऽपुष्पवती भार्या संजाता तस्य भास्कर ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय मे प्रभो ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि क्षत्रस्तु किंचिद्भूमिपतिस्तथा । अर्थलुब्धः प्रजातोऽयं ग्रामाधीशः प्रतापवान् ॥ ६ ॥
ग्रामे तस्य स्थितिं चक्रे ब्राह्मणः कोऽपि सत्तमः । पुत्र्यः पञ्च तथा सप्त ह्यपुत्रो वित्तसंयुतः ॥७॥
कालेन मृत्युमापन्नो धनलुब्धो निरामयः । तस्य भार्या महासाध्वी साहसं कृतवत्यथ ॥ ८ ॥
और्ध्वदेहिककर्मादि तया सम्यगनुष्ठितम् । क्षत्रियश्चिन्तयित्वाथ ह्यपुत्रस्य च जन्मनः ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । उपकाराय लोकाना यतस्त्वं सर्वदर्शनः ॥ ११ ॥

श्रीसूर्य उवाच ।

दद्याद्गां कपिलामेकां स्वर्णशृङ्गादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ १२ ॥
द्विसुवर्णमिता तद्वल्लिख्या गां गर्भसंयुताम् । दद्याद्देवविप्राय पूर्वपापात्प्रमुच्यते ॥ १३ ॥
भोजयेत्तु यथाशक्ति विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषात्रात्र कार्या विचारणा ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडुत्तरशताधिकसहस्रतम ॥ ११०६ ॥

श्रीसूर्य उवाच ।

बभूव पार्श्वजः कौश्चद्गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिपरो नित्यं दानादिविधिपूर्वकम् । स हि चक्रे विशिष्टेभ्यो ब्राह्मणेभ्यः स्वशक्तितः ॥ २ ॥
दैवाच्छत्रुगृहं गत्वा कृतं कर्म सुदारुणम् । वैरिपुत्रः पुरा सूत पादाघातेन घातितः ॥ ३ ॥
कुर्वता च सुतीक्ष्णेन दिवा वै चौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता ह्येकपुत्रिणी ॥ ४ ॥
पुत्रदुःखान्मृता सापि ददौ शापं हि दारुणम् । यथा पुत्रविहीनाऽहं गच्छामि च यमालयम् ॥ ५ ॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गपरं भुक्त्वा पापाच्च नरकांस्तथा । पूर्वपुण्यप्रभावेण स जातो मुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलग्ने स्थिते विधौ । श्यामाङ्गो धूसरः क्षीणः प्रभुर्देशाटने रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रप्रियगणान्वितः । मानभोगसुखैश्वर्यैः सुखी वै लोभसंयुतः ॥ ९ ॥
धर्मात्सर्वफलं सूत भूशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातः पुत्रविहीनोऽसाविह जन्मनि भूतले । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मात्रा सयुतं चैव शुभलक्षणलक्षितम् । पूजयित्वा तु गन्धाद्यैः षोडशोपचारकैः ॥ १३ ॥
सूर्यभक्ताय शान्ताय त दद्याद कुटुम्बिने । पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् ॥ १४ ॥
तथैव गणनाथं च हैरम्बं पञ्चोपचारकैः । संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये ॥ १५ ॥
अष्टाक्षरं तथा मन्त्र वैदिकं सूर्यदैवतम् । जपेदष्टसहस्रं तु शुभ प्रणवपूर्वकम् ॥ १६ ॥
गायत्रीपञ्चसाहस्रं दुष्टपापविमोचनम् । कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् ॥ १७ ॥
एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि । न प्राप्नोति तदा रिष्टं षड्विंशाब्दे प्रकीर्तितम् ॥ १८ ॥
पञ्चवेदमिताब्दान्तमायुस्तस्य भविष्यति ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तोत्तरशताधिकसहस्रतम ॥ ११०७ ॥

श्रीसूर्य उवाच ।

अज्ञानादवधीद्यश्च पूर्वजन्मन्यजा सुत । भविष्यत्यत्र पुरुषो ह्यधिकाङ्गः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं सुवर्णाढ्यं मुच्यते च तदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे धर्मविपाकेऽध्यायोऽष्टोत्तरशताधिकसहस्रतम ॥ ११०८ ॥

श्रीसूर्य उवाच ।

रोहशाली च पुरुष इह जन्मनि पीड्यते । घर्मराख्येन रोगेण महादुःखप्रदेन हि ॥ १ ॥

दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो वा पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरशताधिकसहस्रतमः ॥ ११०९ ॥

श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीच्छुभानना । प्राग्भवेऽण्डजं तत्सर्वं चेष्टितं शृणु सांप्रतम् ॥ १ ॥
नकुलानां बिले गत्वा चालितं तन्नवालुकम् । पूरितं च तथा सर्वं तद्धातार्थं पतत्रिण ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वातियमशासनम् ॥ ३ ॥
पूर्वं शातद्रुके देशे ह्यभूदत्र च पर्वते । पूर्वं राजकुले जाताऽत्रापि राजकुले सुत ॥ ॥
प्राग्दानव्रतजात्पुण्याच्छृणु पापफलानि वै । सर्वे तद्वंशजाः सूत तदग्रे मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च सर्वमष्टोत्तरं शतम् । न मुच्यते महापापाद्दशाजन्मत्रयेऽपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति सांप्रतम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरशताधिकसहस्रतमः ॥ १११० ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे पुत्र घातयेत्पक्षिनन्दनम् । सगर्भा गर्भपुष्ट्यर्थं जायते गोधिका सुत ॥ १ ॥
भोगादेव क्षयः प्रोक्तः समारब्धस्य कर्मणः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरशताधिकसहस्रतमः ॥ ११११ ॥

श्रीसूर्य उवाच ।

लोहं हरति यान्यस्य नारी बुद्धिविवर्जिता । अत्र जन्मनि सा नारी घर्घराल्ययुता भवेत् ॥ १ ॥
दद्यात्पलशतं लोहं ससुवर्णं द्विजातये । मुच्यते पापजाद्रोगाद्घर्घराभिधनात्सुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरशताधिकसहस्रतमः ॥ १११२ ॥

श्रीसूर्य उवाच ।

मोहात्प्राग्याययीत्स्नुत तीर्थजं विधिवर्जितम् । सा गोधिकात्र जनुषि भविष्यति वरानना ॥ १ ॥
अजं दद्याद्विधानेन कस्तूरीपलसंयुतम् । सवस्त्रं वेदविदुषे तद्दोषशमनं विदुः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरशताधिकसहस्रतमः ॥ १११३ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयी । वित्रपः कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
धनधान्यसुखोपेतः किञ्चिद्व्यापारवान् सुधीः । दायादाच्छन्नपीडश्च मिथः क्लेशश्च तस्य वै ॥२॥
तस्य नारीद्वयं चासीत्सज्ञानं चारुजन्मनि । बहुपुत्र्यः प्रसूताश्च न तु पुत्रो बभूव ह ॥ ३ ॥
कदाचिज्जायमानस्तु मृतः पुत्रोऽग्निभासकः । एकाऽपुष्पवती भार्या संजाता तस्य भास्कर ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय मे प्रभो ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि क्षत्ररतु किञ्चिद्भूमिपतिस्तथा । अर्थलुब्धः प्रजातोयं ग्रामाधीशः प्रतापवान् ॥ ६ ॥
ग्रामे तस्य स्थितिं चक्रे ब्राह्मणः कोऽपि सत्तमः । पुत्र्यः पञ्च तथा सप्त ह्यपुत्रो वित्तसंयुतः ॥७॥
कालेन मृत्युमापन्नो धनलुब्धो निरामयः । तस्य भार्या महासाध्वी साहसं कृतवत्यथ ॥ ८ ॥
सौर्ध्वदैहिककर्मादि तया सम्यगनुष्ठितम् । क्षत्रियश्चिन्तयित्वाथ ह्यपुत्रस्य च जन्मिनः ॥ ९ ॥

क्षत्रियो धर्मतः स्वामीत्येवं तेन हृतं धनम् । निराधाराः सुता जाताः पित्रभावेन दुःखिताः ॥
सर्वस्वहरणाद्वापि गताः कन्या इतस्ततः ॥ १० ॥
काचिन्मातुर्गता पक्षे काचित्पित्र्ये तथा गता । तदपस्तद्गृहे विप्र संजातस्तस्य कर्मणः ॥ ११ ॥
यो वै क्षत्रकुले पुत्रः स वै ब्राह्मण एव हि । एवं ब्रह्मस्वकं प्राप्तं युक्तं पुत्र मियस्तदा ॥ १२ ॥
पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः । तेन कर्मविपाकेन कन्यापत्यं मृतः सुतः ॥ १३ ॥
तस्य पापस्य नाशाय निष्कृतिः क्रियते शुभा ॥ १४ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येन पापक्षयो भवेत् । लभेत सन्ततिं सौख्यं लोकानुग्रहकृद्वद १५॥

श्रीसूर्य उवाच ।

शुभे त्ववसरे प्राप्ते हायने शुभवासरे । प्रारभेद्धरिभक्तश्च संवत्सरविधानवित् ॥ १६ ॥
प्रत्यहं परमेशानं विष्णुमव्यक्तमव्ययम् । पौरुषेणेह सूक्तेन अर्चयेन्मासमात्रकम् ॥ १७ ॥
कुंकुमागरुकर्पूरैश्चन्दनैस्तुलसीदलैः । अर्चयेद्विविधैः पुष्पैरुपचारैः पृथक्पृथक् ॥ १८ ॥
भौमाप्यमारुतशिखिव्योमकैः पञ्चभिस्तथा । एवं व्रतपरा नारी भर्तृभक्तिपरायणा ॥ १९ ॥
अर्चयन्ती हरिं पूर्णं वर्षावधि समाचरेत् । शुभे मासे शुभे पक्षे चैकादश्यामुपोषिता ॥ २० ॥
शुभनक्षत्रयुक्तायां द्वादश्यां पुत्रकाम्यया । पूर्ववद्धरिमभ्यर्च्य ऋग्भिः षोडशभिः प्रभुम् ॥ २१॥
विधिवद्वह्निमाधाय ह्यर्चयेद्वैष्णवं चरुम् । आज्यभागावसाने तु कपिलाज्याहुतिर्हविः ॥ २२ ॥
पौरुषेण तु सूक्तेन यावत्षोडशसंख्यया । अश्वत्थसमिधस्तिस्रो जुहुयात्षोडशैव तु ॥ २३ ॥
पुनराज्यं ततो हुत्वा जुहुयाच्च चरुं तथा । होमान्ते द्विजभोजान्ते दानमेतत्समाचरेत् ॥ २४ ॥
हिरण्यभूमिवासांसि धेनुं वत्ससमन्विताम् । विप्रस्योद्वाहनं कृत्वा कन्यां सालंकृतामपि ॥ २५ ॥
दक्षिणां प्रतिपद्याथ च्छलकौटिल्यवर्जिताम् । प्राशनीयात्तं हविः शेषं सह पत्न्या हरिं स्मरेत्॥२६॥
इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वैष्णवम् । सुभगा च सुरूपा च भवेद्विगतकिल्बिषा॥२७॥
ऐहिकं लक्षणं चिन्ह्यं पूर्वकर्मानुसारतः । गुल्मार्शरान्तु बाधा च गुदान्तर्व्रणजातयः ॥ २८ ॥
वातरक्तोऽक्षिशिरसोर्नेत्रकर्णान्वितो व्रणः । स्तनोपगौरवं दद्रुरन्ते वै पादवैकृतिः ॥ २९ ॥
जनश्रुतिं मानवा हि ब्रुयुर्वै कारणं विना । हानिस्तु सर्ववस्तूनां द्रव्यनाशनजं भयम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशाधिकसहस्रतमः ॥ १११४ ॥

---

श्रीसूर्य उवाच ।

अथ शूद्रकुले पूर्वमासीत्पुण्या वराङ्गना । तदा दानरता जाता कंकुक्षेत्रे पतत्रिण ॥ १ ॥
सर्वैः सुखैः समोपेता सर्वसंपत्तिसंयुता । तया कृतं महत्पापं भाविनोऽर्थस्य वै बलात् ॥ २ ॥
समीपे वसतश्चास्यां ब्राह्मणस्य नवं गृहम् । निर्दग्धं चाग्निहोतुर्वै वैरिभावे पतत्रिण ॥ ३ ॥
तत्र दग्धा महाभाग गौरपापा गृहं गता । कृत्वैतदद्भुतं कर्म भुक्त्वा तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्सात्र जाता हि वाहुजा । माथुरे मण्डले पुण्ये वृषलश्चोपलक्षिते ॥ ५ ॥
सुखदुःखसमाक्रान्ता जातसन्ततिनाशकृत् । दुःखैरनेकैर्युक्तात्र मध्यभागे खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गङ्गायां पितृतर्पणम् । कुरुक्षेत्रादिवासाच्च प्राक्पापानां विनाशनम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशोत्तरशताधिकसहस्रतमः ॥ १११५ ॥

श्रीसूर्य उवाच ।

चक्रपादरुजायुक्तश्चात्र जन्मनि जायते । पूर्वजन्मनि यो मोहाच्छ्वानंवध्यात्पतत्त्रिण ॥ १ ॥
निष्कत्रयं प्रदातव्यं सुवर्णं वेदपारगे । दानेनानेन विधिना पूर्वपापापनोदनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तरशताधिकसहस्रतमः ॥ १११६ ॥

श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दन्तपातनजाद्रोगात्पीडामाप्नोति निश्चयात् ॥ १ ॥
दद्याद्धेनुं सवत्सां च सर्वालङ्कारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरशताधिकसहस्रतमः ॥ १११७ ॥

श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीड्यते ॥ १ ॥
तया तत्पापशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपादप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरशताधिकसहस्रतमः ॥ १११८ ॥

श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता । सात्र जन्मनि दुःखार्ता दन्तपाताख्यया रुजा ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुम्बिने । प्राजापत्यव्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशोत्तरशताधिकसहस्रतमः ॥ १११९ ॥

श्रीसूर्य उवाच ।

कश्चिदासीत्पुरा सूत बाहुजो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वमवेऽण्डज । तत्र दानानि दत्तानि ब्राह्मणस्य करग्रहे ॥ २ ॥
स कदाचिन्महाभाग पापाचाररतो ह्यभूत् । स्वज्ञातया वै धृतो गर्भः कामलोभेन तेन वै ॥ ३ ॥
यत्ने कृतेऽपि तस्यास्तु नाभूद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चाण्डज ॥ ४ ॥
एवं बहुतिथे काले गतः स यमशासनम् । भुक्त्वा पापजदुःखानि पुण्याल्लोकाञ्शुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गोदावर्याः समीपे तु देशे रम्ये कलाश्रये ॥ ६ ॥
स रक्तकृष्णो मतिमान्नातिदीर्घः पृथुः सुधीः । आदिमागे धनी रोगी मध्यमे त्वतिसौख्यभाक् ७
पुण्यादिदं तथा पापाल्लोभी पापरतः कचित् । अतिचिन्तायुतश्चात्र दाने स्वल्पमतिः शठः ॥८॥
स्वज्ञात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लग्नेतदण्डजश्रेष्ठ जन्माङ्गात्पञ्चभावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहर्युतनिरीक्षितः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धार्धमिता वापि निजवित्तानुसारतः । संपूज्य वेदविद्विप्रे दद्याद्दोषापनुत्तये ॥ १२ ॥
माषैः सप्तमितैर्द्वयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यम्बकं तु सहस्रकम् ॥१३॥
होमयेत्तद्दशांशेन कपिलैकां प्रदापयेत् । य एवं कुरुते सूत प्रायश्चित्तं हि पापहृत् ॥ १४ ॥
तस्य पुत्रविवृद्धिस्तु जन्मन्यत्रैव जायते । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥ १५ ॥

न जीवंते सुतास्तस्मिञ्जीविते नात्र संशयः। आयुरष्टाद्रिवर्षाणि प्रायश्चित्ते कृतेऽधुना ॥ १६ ॥
प्रायश्चित्ते कृते रिष्टं पश्चाच्छन्मितमेन्दके।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरशताधिकसहस्रतमः ॥ ११२० ॥

श्रीसूर्य उवाच।

यश्च बभ्रुं महाभाग हन्यान्मोहान्नराधमः। बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयहिरण्यस्य कृत्वात्र नकुलं शुभम्। बभ्रुमण्डलनाशार्थं ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरशताधिकसहस्रतमः ॥ ११२१ ॥

श्रीसूर्य उवाच।

काचिद्ब्राह्मणजा नारी बभूव प्रियवादिनी। व्रतदानरता साध्वी पूर्वजन्मनि चाण्डज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं गह्वरं वनम्। निर्दग्धा बहवस्तु जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य तज्जनितं फलम्। तत्तद्दानव्रतात्पूर्वाद्विप्र सा पाटजाभवत् ॥ ३ ॥
जीववधात्तया पूर्वात्पापात्तत्रैव जन्मनि। जाता सन्ततिहीना सा कुष्ठरोगेण पीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन संपद्यते सुखम्। गृहं वित्तदशांशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपा गृहोरगाः। शक्त्या संपूज्य विप्रेन्द्रांस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरशताधिकसहस्रतमः ॥ ११२२ ॥

अरुण उवाच।

तुर्यामवस्थां संप्राप्य पुत्रशोकाकुलो नरः। जायते केन पापेन कथ्यतां दिवसेश्वर ॥ १ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव यामुने देशे क्षत्रियो धनवान् सुखी ॥ २ ॥
राजमंत्री महाप्राज्ञो धर्मशास्त्रार्थकोविदः। बुद्धिमान्नीतिमान्वाग्मी शूरो वीरो महायशाः ॥ ३ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। बहुग्रामाधिपो दक्षो भृत्यवाहनसंयुतः ॥ ४ ॥
दत्तानि तेन दानानि संवत्सरमितं खग। स्वाश्रमं पुनरागत्य धर्मवेत्तापि बाहुजः ॥ ५ ॥
कृतवान्दारुणं कर्म भाविनोऽर्थस्य वै बलात्। स्वस्वामिवशंगं तु पापमुग्रं खगेश्वर ॥ ६ ॥
तस्य स्वामी महाराजः कनिष्ठाया वशं गतः। ज्येष्ठां सुतद्वययुतां त्यक्तवान् विनतात्मज ॥ ७ ॥
राज्याधिकारिणमपि कनिष्ठावशगो नृपः। कनिष्ठायाः सुतायाभूद्राज्यदाने समुत्सुकः ॥ ८ ॥
ततो मंत्रिवरो राज्ञो ज्येष्ठपुत्रयुगेन वै। मिलित्वा कैश्चिदन्यैश्च तयोर्मातृसहोदरैः ॥ ९ ॥
विषादिकप्रयोगेन जघान च महीपतिम्। तज्ज्येष्ठाय ददौ राज्यं राजपुत्राय वै खग ॥ १० ॥
ततो बहुतिथे काले कनिष्ठस्य सहायतः। वधाय तस्य राज्ञोऽपि समुद्युक्तः स बाहुजः ॥ ११ ॥
तज्ज्ञात्वा नृपतिर्वैरं कृतवाञ्छोकाकुलं नरा। शस्त्रेण चात्मघातं हि कृतवान्कश्यपात्मज ॥ १२ ॥
यमलोकं समासाद्य भुक्त्वा पापफलं ततः। पुण्यात्स्वर्गफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ १३ ॥
हिमालये पुण्यदेशे भागीरथ्यास्तटे शुभे। जातो द्विजवरो धीमानुच्चः स्थूलो महायशाः ॥ १४ ॥
स तु मध्यमरूपाढ्यो रक्तगौरो विचक्षणः। स्वधर्मनिरतो दक्षो देवद्विजपरायणः ॥ १५ ॥
राजमान्यः प्रतापी च भृत्यवाहनसंयुतः। बहुग्रामाधिपः सर्वशास्त्रविच्छिवभक्तिमान् ॥ १६ ॥
परोपकारनिरतः सन्धिविग्रहसंयुतः। सर्वविद्यासुवेत्ता च नीतिविच्चापि चाण्डज ॥ १७ ॥

देशेदेशेतिविख्यातो भोक्ता सर्वजनप्रियः । स्मेरवक्त्रः सुमापी च सत्पात्रेण समन्वितः ॥ १८ ॥
वेदान्तवियोगवेत्ता सर्वदा कौतुकप्रियः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १९ ॥
बाल्ये पित्रोः सुखैर्हीनः कैशोरे युवभावके । सहोदरसुखैर्हीनो जायासुखविवर्जितः ॥ २० ॥
वार्धके पुत्रहीनश्च मनोदुःखसमन्वितः । गतागतश्रमैर्युक्तः सर्वसंगविवर्जितः ॥ २१ ॥
प्राग्भवे राजघाते च सहायौ यौ नृपात्मजौ । जातौ तावत्र जनुषि पितरौ निधनं गतौ ॥ २२ ॥
यामवस्थां तु संप्राप्तावभूतान्तौ सहायकौ । तामवस्थामिह प्राप्य पुत्री निर्वंशतां गता ॥ २३ ॥
वातरोगान्वितो गेहे सर्वदा कलहाकुलः । श्रद्धावानपि सर्वत्र स्वीयश्रद्धाविवर्जितः ॥ २४ ॥
प्रायाजयातजातपापात्सन्तानसुखवर्जितः । जन्मलग्नात्सुतस्थाने क्रूरग्रहसमन्विते ॥ २५ ॥
सप्तमे भवने क्रूरदृष्टिर्भृगुगते विधौ । लग्ने स्वेतादृशे चैव जातोऽयं ब्राह्मणोऽधुना ॥ २६ ॥
श्लेष्मलः सर्वदा वातपीडायुक्तस्त्रिकांघ्रिषु । कदाचित्कर्णपीडायुक् कदाचिन्नेत्ररोगयुक् ॥ २७॥
कदाचिज्ज्वरधांश्चैव तथाऽप्राप्तमनोरथः । राजलोकप्रियोऽपीह राजभीतिषु शङ्कितः ॥ २८ ॥
विचिकित्सापरो जायासंगमेष्वप्रसन्नधीः । दयावानपि लोकेषु कायात्रिगुणसंयुतः ॥ २९ ॥
हृत्पूर्वे वामभागेऽपि लशुनं दृश्यते जनैः । प्रागात्मघातजं चिह्नं स्फुटं हि विनतात्मज ॥ ३० ॥
यो राजा निहतोऽनेन प्राग्भवे कश्यपात्मज । तद्भार्यात्वत्र जनुषि पुत्र्यो जाताः सुदुःखदाः॥३१॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलप्रयेण कर्तव्यो बाहुजस्तु हिरण्मयः ॥ ३२ ॥
गन्धपुष्पैः समभ्यर्च्य देयो विधिविदे सुत । तदर्द्धकर्षान्महाभाग लक्ष्मीनारायणं शुभम् ॥ ३३॥
दद्याद्वेदविदे सूत दरिद्राय कुटुम्बिने । स्वात्मघातजपापाद्य मुच्यते नात्र संशयः ॥ ३४ ॥
गायत्रीं दशसाहस्रं त्र्यम्बकं द्विविधं तथा । अष्टोत्तरं महामंत्रं जपेद्द्विसहस्रकम् ॥ ३५ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । पार्थिवानां शिवानां च नियुतैकप्रमाणतः ॥ ३६ ॥
पूजयेद्विधिना सूत पूर्वपापानुतप्तये । य एवं कुरुते सूत पूर्वजन्माघनाशनम् ॥ ३७ ॥
न तस्य दुष्कृतं किंचिज्जायते व्याधयो न च । अशीतिमितवर्षं तु रिष्टं तस्य न जायते ॥ ३८ ॥
गजनागमिताब्दान्तं जीवनं तस्य निश्चितम् । पुत्रप्राप्तिर्भवेत्तस्य सर्वजीवद्दयावतः ॥ ३९ ॥
वार्धकेऽपि महाभाग जीवत्पुत्रो हि जायते । सद्गतिं समवाप्नोति यद्गत्वा न निवर्तते ॥ ४० ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । सप्तजन्मसु दुःखी स्यान्नात्र कार्या विचारणा॥४१॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत जन्मभात्तद्विलोकयेत् ॥ ४२ ॥
इति श्रीहरसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्रयोविंशत्युत्तरशताधिकसहस्रतमः ॥ ११२३ ॥

---

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे पञ्चनदे पुरा । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्सङ्गगतः सोऽपि प्रयागे गरुडाग्रज । स स्नातो मृगगे भानौ धूर्तो धर्मक्रियोज्झितः ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम् । ग्रामे निवसतोऽन्यस्य क्षत्रियस्य विशेषतः ॥ ३ ॥
ददाह भवनं रम्यं वैरिभावात्पुरानघ । तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन संप्राप्तः स गत्वा यमशासनम् । पापपुण्यफलान्येवं भुक्त्वा ह्यधमकर्मकृत् ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गङ्गायाः प्राक् परे देशे शतयोजनसंमिते ॥ ६ ॥
स मध्यरूपी बलवान्धर्मे स्वल्पमतिः शठः । वृद्धत्वे चिरमचारी च पैतृकस्वल्पवित्तभाक् ॥७॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः । पुण्यादिदं फलं पूर्वपापादथ फलं शृणु ॥ ८ ॥

गोबालवत्सकवधाद्गर्भपातादपुत्रकः । सप्तवेदमिताब्दान्तं जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधादीनि पापान्यर्भकहानि हि । गोराशिगे शनौ सोमात्पष्ठे जीवे मृगस्थिते ॥ १० ॥
लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि । पूर्वं या स्त्री सहायासीन्मृतवत्सा च सा सुत ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदिनीम् । पुत्रवृद्धिकरीं यन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधिनीम् । पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी ॥ १३ ॥
तदर्द्धार्द्धो च शक्त्या वै विधिज्ञाय प्रदापयेत् । मंत्रमेतं समुच्चार्य पूर्वपापात्प्रमुच्यते ॥ १४ ॥

मंत्रः ।

"स्वज्ञातिजेतिचपले यन्मया पापमर्जितम् । यद्गर्भघातनं घोरं ज्ञानाज्ज्ञानाच्च यत्कृतम् ॥ १५ ॥
तन्नाशनं च सुरभे तस्मात्त्वां तु हिरण्मयीम् । इदेऽद्यमत्र विप्राय तत्पापान्मां प्रमुंचतु" ॥ १६ ॥
सुवर्णैकमितं कुर्याद्ब्रह्माणं च हिरण्मयम् । क्षीराद्यैः पूज्य गन्धाद्यैर्दद्यात्पापापनुत्तये ॥ १७ ॥
तदर्धमितकं केतुं सौवर्णं च प्रदापयेत् । गायत्र्यष्टसहस्राणि सहस्रं त्र्यम्बकाभिधम् ॥ १८ ॥
अष्टाक्षरं त्रिसाहस्रं जपेन्मंत्रान्प्रयत्नतः । होमयेत्तद्दशांशेन शक्त्या दद्याच्च दक्षिणाम् ॥ १९ ॥
विप्रांश्च भोजयेत्पश्चात्स्वयं भुञ्जीत वाग्यतः । होमांते कपिलां दद्यात्पूर्वपापात्प्रमुच्यते ॥ २० ॥
य एवं कुरुते सत पूर्वपापविशोधनम् । स मुच्यते गर्भपाताद्व्यभिचारात्र संशयः ॥ २१ ॥
अनेन विधिना सूत यः कुर्यात्पापशोधनम् । तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्र न संशयः ॥ २२ ॥
नैवं विधानं यः कुर्याल्लोभान्मोहाद्विशेषतः । पञ्चवेदाब्दपर्यन्तं न च पुत्रसुखं लभेत् ॥ २३ ॥
पञ्चवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः । प्रायश्चित्ते कृते त्वायुश्चतुःसप्ततिवर्षकम् ॥ २४ ॥
नाधयो व्याधयस्तस्य नान्यरिष्टभयं भवेत् । जन्मत्रयमपुत्रः स्यात्प्रायश्चित्तेऽकृते धुना ॥ २५ ॥
पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृते सति । जननं युग्मगे जीवे निधनं कर्कटे स्थिते ॥ २६ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । अन्यदन्तर्गतं सूत जन्मशास्त्राद्विलोकयेत् ॥ २७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरशताधिकसहस्रतमः ॥ ११२४ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वं भवे मोहात्सुरां पिबेत् । मदरोगेण रोगेण जन्मन्यत्र प्रपीडिता ॥ १ ॥
काशीवासान्महाभाग तद्देशमरणात्तथा । मदरात्सा विमुच्येत पार्थिवानां प्रपूजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पर्चांवशत्युत्तरशताधिकसहस्रतमः ॥ ११२५ ॥

श्रीसूर्य उवाच ।

प्रागासीन्मुखजः कश्चिद्वेदशास्त्रसमन्वितः । देशे गुर्जरके सूत राजपूज्यो दृढव्रतः ॥ १ ॥
स्त्रीपुत्रधनसंपन्नः शिवभक्तिपरायणः । कृतवान्सोऽपि दानानि ब्राह्मणेभ्योऽल्पशक्तितः ॥ २ ॥
गोशय्याभूमिभक्ष्याणि विविधान्नानि पर्वसु । अध्यापितास्तथा विप्रास्तेन सर्वं विजानता ॥ ३ ॥
तिलधेनोस्तथा लोभात्कृतो ह्युग्रप्रतिग्रहः । न कृतं शोचनं मोहात्पापमुग्रमुपार्जितम् ॥ ४ ॥
स युक्तः पुण्यपापाभ्यां प्राप्तो धर्मपुरं प्रति । भुक्त्वा शुभाशुभाँल्लोकान्वियादनप्रभावतः ॥ ५ ॥
शतद्रुकासरस्वत्योर्मध्ये जातो द्विजोऽधुना । स रक्तगौरो मतिमान्विद्याभ्यासरतः क्षमी ॥ ६ ॥

स्त्रीपुत्रधनसंयुक्तः पितृभ्रातृसुखान्वितः। नातिदीर्घोऽतिलोभाढ्यो बहुमित्रः प्रियंवदः ॥ ७ ॥
लभालाभे समश्चात्र भृत्यवाहनभोगभाक्। कासरोगयुतश्चात्र तिलधेनोः पुराग्रहात् ॥ ८ ॥
चिह्नमत्र जनुर्लग्नाच्चन्द्रः पापान्वितो रिपौ। गुरुः सप्तमभावस्थः प्रष्टुरेव जन्मनि ॥ ९ ॥
लक्षणैरेभिराढ्यस्य वक्ष्येऽहं पापशोधनम्। धेनुं हिरण्मयीं कृत्वा पलपञ्चमितां शुभाम् ॥ १० ॥
द्रोणपञ्चमितैर्युक्तां गन्धपुष्पाद्यलंकृताम्। दद्याद्विप्राय विदुषे कासरोगप्रशान्तये ॥ ११ ॥
ब्रह्मविष्णुशिवार्कानामेकैकपलसंयुताम्। कृत्वा सुरूपां प्रतिमां पत्रे लेख्यां प्रयत्नतः ॥ १२ ॥
पूर्वपापविशुद्ध्यर्थं विधिज्ञाय निवेदयेत्। चतुर्विंशतिसहस्राणि गायत्रीं च जपेद्बुधः ॥ १३ ॥
होमयेच्च तिलैस्तद्दशांशतया विप्रांश्च भोजयेत्। अनेन विधिना यस्तु प्रायश्चित्तं समाचरेत् ॥ १४॥
कासश्वासान्महारोगान्मुच्यते नात्र संशयः। नाथयो व्याधयस्तस्य प्रायश्चित्ते कृते त्विह ॥१५॥
पञ्चपञ्चाशदब्दान्तमायुरत्र प्रकीर्तितम्। प्रायश्चित्ते कृते सूत सप्तविंशमितेऽब्दके ॥ १६ ॥
रिष्टं च दारुणं प्रोक्तं तस्य चाकृतनिष्कृतेः ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरशताधिकसहस्रतमः ॥ ११२६ ॥

श्रीसूर्य उवाच।

कुरुदेशे द्विजः कश्चिन्मृगं घातितवान्पुरा। तस्मान्मृगवधादत्र पाददुःखप्रपीडितः ॥ १ ॥
चिह्नमत्र मृगोऽस्ति रिष्टेशः पादभे स्थितः ॥ २ ॥

अरुण उवाच।

श्रुतमत्राद्भुतं देव पापपुण्यफलं त्विदम्। प्रमुच्यते पूर्वपापाद्यथा तद्वद शोधनम् ॥ ३ ॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि प्रायश्चित्तं परं त्विह। एकादशसहस्रं तु पार्थिवानां तु पूजयेत् ॥ ४ ॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्विविधैस्तथा। शतमेकादशमितं स्तोत्रं हैरण्यगर्भजम् ॥ ५ ॥
पठेद्भक्त्या च मत्प्रोक्तं पूर्वपापप्रणाशनम्। ततः पलैर्वेदमितैर्दद्या हैरण्मयी शुभा ॥ ६ ॥
सगर्भा ब्राह्मणी सूत तदर्द्धार्द्धमयापि वा। लक्ष्मीनारायणं दद्यात्सौवर्णं स्वर्णसंभवम् ॥ ७ ॥
संपूज्य विधिना मंत्रैः पुत्रपौत्रविवर्द्धनम्। हिरण्मयं मृगं कृत्वा पञ्चरत्नसमन्वितम् ॥ ८ ॥
पलैर्वेदमितैः सूत गन्धपुष्पैः प्रपूजयेत्। मंत्रमेतं समुच्चार्य विधिज्ञाय प्रदापयेत् ॥ ९ ॥

मन्त्रः।

"ज्ञानाज्ञानयुतं पापमर्जितं मृगघातनात्। तत्पापनाशनायैव ददेऽहं स्वर्णजं मृगम्" ॥ १० ॥
राजतं च तथा दद्यात्पवनं पादरोगनुत्। य एवं कुरुते सूत पूर्वपापविशोधनम् ॥ ११ ॥
तस्य सन्ततिवृद्धिः स्याज्जन्मन्यत्र पतत्रिण। पादरोगोपशमनं जायते पापशोधनात् ॥ १२ ॥
नैवं कुर्याच्च यो मोहात्प्रायश्चित्तं प्रयत्नतः। न भवन्ति सुतास्तस्मिन् जीविते नात्र संशयः १३॥
न च रोगोपशमनं जायतेऽत्र भवेण्डज। पञ्चत्रिंशन्मिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ १४ ॥
प्रायश्चित्ते कृते त्वायुर्वर्षाणां पञ्चसप्ततिम् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरशताधिकसहस्रतमः ॥ ११२७ ॥

श्रीसूर्य उवाच।

कैलासात्पतितः कश्चिद्रुद्रभक्तिपराङ्मुखः। शापान्नन्दिगणाद्दुष्टो भविष्यति महीतले ॥ १ ॥
प्रसादितस्तदा तेन स्तुतिभिर्नन्दिकेश्वरः। अपि स्वल्पतरे काले शापमुक्तिं ददौ प्रभुः ॥ २ ॥

तस्य शापान्महाभाग जन्मन्यत्र जनिः स्वयम् । महाभूमिभुजां वंशे म्लेच्छानां गरुडाग्रज ॥३॥
पुष्करात्पश्चिमे देशे शुक्रे स्वोच्चे शुभावगे । मालव्ययोगे विख्याते सचन्द्रे बहुभिर्युते ॥ ४ ॥
गौरो यशस्वी मतिमान्नानारत्नचर्ययुतः । गजयूथैः समाक्रान्तो बहुभूपालसेवनः ॥ ५ ॥
नानावाहनसंयुक्तो बहुभोगयुतस्तथा । सकलैश्वर्यवित्ताढ्यः स्वेच्छाद्रव्यान्वितस्तथा ॥ ६ ॥
दानानि शक्तितो दत्ते धर्मात्मा लोकविश्रुतः । रुद्रभक्तयन्तरायाच्च न तु पूर्णमथोरथः ॥ ७ ॥
बहुभृत्यैः समायुक्तो यावज्जीवसुखान्वितः । पञ्चवेदमिते वर्षे रिष्टं शश्वच्च बन्धनात् ॥ ८ ॥
हठकर्मकृतात्पापाद्रुद्रपूजनभङ्गजात् । प्रायश्चित्तं महाभाग नात्र जन्मनि विद्यते ॥ ९ ॥
चिह्नमङ्गात्तथा सूतेर्भौमो नीचोष्टमस्थितः । सूर्यसंगमवाच्छुक्रात्संगान्मालव्यसंज्ञकात् ॥ १० ॥
नायुर्दोषमवाप्नोति रिष्टान्तं जीवनं स्मृतम् ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरशताधिकसहस्रतमः ॥ ११२८ ॥

अरुण उवाच ।

भगवन्देवदेवेश श्रुतमेतन्महाद्भुतम् । सहानुगामिन्या नार्या गतिं मे ब्रूहि भास्कर ॥ १ ॥

श्रीसूर्य उवाच ।

मृतं मतीक्ष्य भर्तारं या विशेच्च हुताशनम् । तेन सार्द्धं महापुण्या ज्ञेयात्र सहगामिनी ॥ २ ॥
श्रुत्वा मृतं पतिं यात्र विदेशस्थं पतिव्रता । तद्वस्त्रेण विशेदग्नौ सा ज्ञेया चानुगामिनी ॥ ३ ॥
धर्मात्पातिव्रतात्पूर्वे भवेन्मोक्षगतिर्द्वयोः । अथैका सा महासाध्वी जाता ब्रह्महदेण्डज ॥ ४ ॥
ब्राह्मणी तपसा युक्ता सदा भक्तिपरायणा । दानशीलरता पुण्या पुण्यकर्मान्विता सती ॥ ५ ॥
दृष्ट्वा मृतपतिं सा तु दिव्याभरणभूषिता । प्रासादे विधिना सूत कृत्वा पूजां हरेर्भृशम् ॥ ६ ॥
सा गता यमराजस्य स्कन्धे दत्त्वा पदाम्बुजम् । वैकुण्ठे चाण्डजश्रेष्ठ यद्गत्वा न निवर्त्तते ॥ ७ ॥
तत्पादतलघातेन मूर्च्छितोऽभूद्यमाधिपः । तत्कालेऽपृच्छि धीरेण नारदेन महात्मना ॥ ८ ॥
धर्मराज वदैतन्मे त्वत्तः परतरश्च कः । दण्डधरो महाभाग येन त्वं चालितोऽधुना ॥ ९ ॥
तमुवाच मुनिश्रेष्ठं या गताद्य शुभानना । सती तत्पादभारेण पीडितोऽहं भृशं द्विज ॥ १० ॥
मोक्षं गता महासाध्वी गृहीत्वा तु स्वकं पतिम् । महापापसमाक्रान्तं नरकस्थं द्विजोत्तम ॥ ११ ॥
सा गमिष्यति चेत्तत्र पत्युः पापावशेषतः । ब्राह्मणी योगयुक्ता च भविष्यति कलौ युगे ॥१२॥
कास्या मृत्युस्तयोर्यस्माच्छिवत्वमुपगच्छतः ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११२९ ॥

श्रीसूर्य उवाच ।

यः कामतश्चेत्पूर्वं ब्रह्महत्यां नराधमः । क्षयरोगान्वितः सोऽपि जायते चात्र जन्मनि ॥ १ ॥
सुघोराद्ब्रह्महत्याख्यपापान्नास्त्यपरं त्वघम् । प्रायश्चित्तं मया नोक्तं पापान्मुक्तिस्त्रिजन्मनि ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३० ॥

अरुण उवाच ।

कश्चिद्विप्रो महासाधुश्चारुवर्णः प्रतापवान् । आचारकुलधर्मज्ञो देवाग्निगुरुवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किंचिद्विचारसन्वितः । तस्य भार्या सदाचारा किंचिच्च क्लेशकारिणी ॥२॥
पतिभक्ता पतिप्राणा ब्रतानामनुकांक्षिणी । पुत्रहीना कथं जाता कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच।

नारीणां जारगर्भाणामसतीनां कुलच्छिदाम्। यद्वाऽचिरप्रसूतानां शीघ्रं गर्भः समुद्भवेत् ॥ ४ ॥
औषधैः स्वेदनैरुष्मलेपैर्दुष्टभक्षणैः। संवाहनैस्तथा वातैरन्यैर्वा वस्तिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायं करोत्यपि च कीर्तितम्। पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥
नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि। पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
अनया ईर्ष्यया चैव सन्ततेर्नाशनाय च। औषधं छेदनार्थं तु तस्यार्थं कल्पितो गदः ॥ ८ ॥
सपत्न्यै प्रेरयामास विधिना चैव तद्गदम्। तया वै ऋतुभावाच्च परिपीतं तदौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद। ऋतावृत्तौ च संप्राप्ते जाता सा विविधातुरा॥१०॥
वेदना ह्यभवन्नित्यमसृग्वातोदरामयाः। पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भपातनम् ॥ ११ ॥
तया चैतत्कर्म कृतं त्रिविधं गर्भशोषकृत्। अन्यस्या अपि गर्भस्तु निभृतं नाशितस्तया ॥१२॥
ऋतुभावो दुष्टबुद्ध्या कृतो वै पूर्वजन्मनि। तेनैव कर्मणा वत्स विविधं पुष्पबन्धनम् ॥ १३ ॥
गर्भाशयमधिश्रित्य स्रवति शोणितं बहु। छिद्यन्त इव गात्राणि सूचीभिरिव नित्यशः ॥ १४ ॥
वेदना याः पुरा जाताः स्त्रीणां गर्भनिपातने। यावत्तथेह चान्या हि सर्वा जाता हि दुःसहाः॥१५॥
तद्दोषपरिहारार्थं प्रायश्चित्तं समाचरेत्। सपत्नीगर्भपातस्य निष्कृतिं प्राक्समाचरेत् ॥ १६ ॥
रजतस्य पलाभ्यां वै कोशं गर्भाशयाकृतिम्। निष्केण स्वर्णगर्भं च कृत्वा दद्याद्द्विजन्मने ॥१७॥

मन्त्रः।

"गर्भपातं प्रकुर्वन्त्या मया प्राक्तनजन्मनि। यद्य वन्ध्यकृतमासं तस्मान्मोचयेह जन्मनि"॥१८॥
यस्मात्प्रपातितो गर्भः सपत्न्याः पतिवर्जिता। दीनानाथविरोधश्च तेनेयमसुता त्विह ॥ १९ ॥
अनुमन्त्री प्रयोक्त्री च पितृमातृसुखोज्झिता। बन्धुसन्ततिदुःखाढ्या मर्यादाघनवासिता॥२०॥
शोकः स्यादुदरे बाधा तद्वत्स्त्रीहादिविक्रिया। अन्तरा स्पन्दमानोऽपि गर्भः सन्नोपलभ्यते ॥ २१ ॥
अथान्यागर्भपातस्य सञ्चितस्येह निष्कृतिः। विस्तरात्तां प्रकुर्वीत येन सर्वाघसंक्षयः ॥ २२ ॥
तावदेव पतेद्गर्भो नान्यथात्वस्य संभवः। सुशुभे भूमिदेशे तु पुराणोक्तविधानतः ॥ २३ ॥
संप्रणाशाय दुष्टस्य प्रायश्चित्तमिहैनसः। प्रौष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ २४ ॥
यत्नेन गर्भिकाख्यं हि उपोषणपरायणा। पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजां सतीम् ॥ २५ ॥
केतकैर्गर्भसंयुक्तैश्चम्पकैः कुमुदोत्पलैः। सौवर्णीं राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् ॥ २६ ॥
हारनूपुरकोटीरकुण्डलाभरणादिकैः। नैवेद्यैः शुभ्रकासारमोदकापूपपायसैः ॥ २८ ॥
उपतिष्ठेत विधिवद्भवानीमियवल्लभम्। पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता ॥ २९ ॥
रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम्। फलैर्नानाविधैरर्घं दद्यान्मंत्रपुरःसरम् ॥ ३० ॥
फलपुष्पाक्षतोपेतमंजनं मूर्ध्नि निक्षिपेत्। नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये ॥ ३१ ॥
गृहाणार्घमिमं देहि पुत्रान्मह्यं यशस्विनः। पतिपुत्रवती नारी गिरिजावरमश्नुते ॥ ३२ ॥
एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम्। ततः प्रभाते विमले कृतप्रातःक्रिया सती ॥ ३३ ॥
देवमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः। नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश ॥ ३४ ॥
प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम्। सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् ॥ ३५ ॥
दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया। सगर्भां च वृषोपेतां सिताङ्गां वस्त्रसंयुताम् ॥३६ ॥
सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ ३७ ॥

मन्त्रः

"अपातयं पुरा गर्भं दुष्टस्त्रीणां वशं गता ॥
यदत्र वन्ध्यताहेतुस्तस्मान्मोचय मामिके । तव दानेन पुत्रा मे भवेयुः सुभगाः सति" ॥ ३८ ॥
इमं मंत्रं समुच्चार्य दत्वा विप्रं विसर्जयेत् । एवं व्रतपरा नारी गर्भपातं न पश्यति ॥ ३९ ॥
लभते पुत्रपौत्राद्यान्स्वयं तैः सह मोदते । सपत्नीगर्भघातस्य प्रायश्चित्तेप्ययं विधिः ॥ ४० ॥
शुभार्थिन्या प्रकर्तव्यो नात्र कार्या विचारणा ॥ ४१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३१ ॥

श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सूत घातितो भूमिलोभतः ॥ १ ॥
सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् । तत्पापकर्मणो घोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तिर्यक्त्वं च तथा सूत विभुज्याधमतः स्वयम् । कर्मक्षयेऽथ पुण्यात्प्राक्सोऽत्र जातो हि बाहुजः ३
क्षयरोगयुतः सूत कृशो दुःखातुरो भृशम् । लग्ने कुम्भाभिधे सूत भौमचन्द्रयुतेऽण्डज ॥ ४ ॥
रिष्टं पष्ठमिते वर्षे जायतेऽकृतनिष्कृतेः । सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तदा ते तु मृताश्चात्र पुत्राः क्षयरुजान्विताः । रिष्टेन चायुषो भङ्गो दृढपापान्न निष्कृतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३२ ॥

श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः । गत्वा शत्रुपुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह तत्पुरं शत्रोस्तत्क्षणं लुण्ठितं पुनः । तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम् । अथो यमाज्ञया भुक्ता नाना नरकयातनाः ॥ ३ ॥
पुण्यशेषादथोऽत्रापि स जातः क्षत्रियाधरः । देशेऽयोध्याभिधे गौरो लघुदेहो महोद्यमी ॥ ४ ॥
युवभावे महाभाग राजयक्ष्मप्रपीडितः । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तस्य वक्ष्यामि यां कृत्वा मुच्यतेऽधुना । कार्यास्तत्र त्रिदेवानां मूर्तयस्तु यथोदिताः ॥ ६ ॥
ब्रह्मविष्णुमहेशाना सर्वरोगविनाशिकाः । सुवर्णजास्तथा कार्याः कदलीपत्रसंयुताः ॥ ७ ॥
यथा वित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । देयास्ता विप्रमुख्येभ्यः क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृते महाभाग क्षयस्तस्यात्र शाम्यति । नैवं कुर्यात्तु यो मोहाद्रिष्टं विशन्मितेऽब्दके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरशताधिकसहस्रतम ॥ ११३३ ॥

श्रीसूर्य उवाच ।

या काचिदाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामथात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं मयोक्तं च पतत्रिण । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरशताधिकसहस्रतम. ॥ ११३४ ॥

श्रीसूर्य उवाच ।

स्वसृघाती च पुरुषः पूर्वजन्मनि मानद । बधिरो जायते त्वत्र प्रायश्चित्तं च तच्छृणु ॥ १ ॥

चान्द्रायणव्रतं कुर्यात्सुवर्णपलसंयुतम् । पुस्तकं विधिवद्दद्यात्तस्मात्पुण्यात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्ति होमयेच्च स्वशक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३५ ॥

श्रीसूर्य उवाच।

या काचिदाचरेन्नारी पापकृद्ब्रह्मघातनम् । अज्ञानादन्यजनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापात्कृताद्घोरात्सा हि सर्वस्वदानतः। क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानात्त्वत्रैव जन्मनि। काश्या वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३६ ॥

श्रीसूर्य उवाच।

मूकः प्रजायते जन्तुर्यः पूर्वं भ्रातृघातकः। बभूव कामतः सूत प्रायश्चित्तं न तस्य हि ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३७ ॥

श्रीसूर्य उवाच।

कलिङ्गदेशे मायसूत काचिद्द्विजभवाङ्गना । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
सा नार्भघातयत्पूर्वभवे मोहाच्च कुक्कुटम् । पङ्गुतामासमाप्नोति साऽत्र जन्मनि निश्चयात् ॥ २ ॥
हेमनिष्कत्रयं दद्यात्पवित्राय प्रयत्नतः । ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३८ ॥

श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे पञ्चनदेऽण्डज । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्सङ्गगतश्चापि प्रयागे गरुडाग्रज। स जातो मृगगे भानौ धूर्तकर्मा क्रियोज्झितः ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान् कर्म दारुणम्। ग्रामे निवसतोऽन्यस्य मिश्रकस्य पतत्त्रिण ॥ ३ ॥
ददाह भवनं रम्यं वैरभावात्पुरानघ । तत्रैका वत्सरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन स प्राप्तः करालं यमशासनम्। फलानि पापपुण्यानां बुभुजे दुष्टधीश्च सः ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गङ्गायाः प्राक्परे देशे शतयोजनसम्मिते ॥ ६ ॥
स मध्यरूपो बलवान्धर्मे स्वल्पमतिः शठः। बुद्ध्याधिकप्रचारी च पैतृकस्वल्पवित्तभाक् ॥ ७ ॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः । पुण्यादिदं फलं पूर्वपापादथ फलं शृणु ॥ ८ ॥
गोवालदाहघाताच्च जीवघातादपुत्रकः । सप्तवेदमिताब्दान्ते जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधादीनि नाशयन्तीह बालकान्। गोराशिगे शनौ सोमात्षष्ठे जीवे मृगस्थिते ॥ १० ॥
लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि। पूर्वं या स्त्री सहायासीन्मृतवत्सा च सा पुनः ॥११॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदनीम्। पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधनीम्। पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी ॥१३॥
तदर्द्धमितिका वापि द्वयोर्वित्तानुसारतः । संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥

१ द्विजभवश्चन्द्रः ।

मापैर्वेदिमितैर्देयस्तथा पशुपतिः सुत । मासाभ्यां च तथा वह्निर्जीवा मापचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये । जपेत्पशुपतेर्मंत्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेदष्टशतकं रुद्रस्याग्रे प्रयत्नतः । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ १७ ॥
यः कुर्याद्विधिवत्तत्र प्रायश्चित्तं त्रिधा मतम् । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया॥१८॥
नैवं कुर्याच्च यः शक्त्या त्रिष्वेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः१९
नवसप्तमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरशताधिकसहस्रतमः ॥ ११३९ ॥

## श्रीसूर्य उवाच ।

काश्मीरमण्डले पूर्वं काचिद्द्विजवधानना । पतिप्रिया शीलयुता दानभोगरता सदा ॥ १ ॥
वैरभावात्तया साधो गृहं दग्धं द्विजस्य च । वैरिणश्च सुतो दग्धो गृहदाहे पतत्रिण ॥ २ ॥
माहात्म्यात्स्वामिनः सर्वं प्राग्भवे समुपार्जितम् । तत्पापजान्महाघोरात्पुण्यात्प्राप्य शुभाशुभम्॥३॥
सैव जाता विराटेऽत्र पतिशुश्रूषणात्सुता । क्षत्रियस्य च धर्माढ्या पूर्वपुण्यात्तथा सती ॥ ४ ॥
क्षयरोगयुता बाल्ये बालघातादपत्रिणी । महाग्निदाहपापाच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशन्मिते वर्षे रिष्टेनैवात्र नश्यति । सहायस्तत्पतिश्चात्र पुत्रहीनः क्षयान्वितः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरशताधिकसहस्रतमः ॥ ११४० ॥

## श्रीसूर्य उवाच ।

सारिकां यो महाभाग निहन्यात्पापमोहितः । तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥ १ ॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम् । तथात्र पुस्तकं दद्याच्छास्त्रस्य विधिनाण्डज ॥ २ ॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकल्मषः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरशताधिकसहस्रतमः ॥ ११४१ ॥

## श्रीसूर्य उवाच ।

सारिकां घातयेन्नारी पूर्वपापविमोहिता । सात्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय च । पूर्वपापाद्विमुच्येत सात्र वै विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरशताधिकसहस्रतम ॥ ११४२ ॥

## श्रीसूर्य उवाच ।

बकघाती च पुरुषः पूर्वजन्मनि मानद । लंबकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्वेतां सर्वाभरणभूषिताम् । मुच्यते कण्ठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरशताधिकसहस्रतमः ॥ ११४३ ॥

## श्रीसूर्य उवाच ।

या नारी पूर्वजनुषि घातयेत्स्त्वाग्रज । वकं सा कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिवत्तत्र श्वेतामत्र पयस्विनीम् । पयोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरशताधिकसहस्रतम. ॥ ११४४ ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजकुले जातो धार्म्मिको वित्तसंयुतः । उदरे वातजारोगा गुल्मायाश्चोर्ध्वहृद्व्यथाः ॥ १ ॥
मोहाद्याः स्वल्पवीर्यत्वं पाण्डुरोगोदरामयः । जायते शीर्षजा पीडा बाल्ये स्याद्ग्रहणीगदः ॥२॥
शरीरे जायते वह्निरुपघातो व्रणावलिः । पौत्राणां मातुलानां च स्वस्रादेर्विधवाव्यथा ॥ ३ ॥
दायादाच्छत्रुवत्पीडा भूमिद्रव्याभिलिप्सया । ऐहिकानि च लक्ष्माणि तस्य देहे स्थितानि हि ॥४॥
तस्य भार्या सदाचारा कदाचित्क्रोधवादिनी । गौरवर्णा शुभा वाणी सन्तोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात् । दश मासा अतीता हि गर्भे चोदरसौख्यभाक् ॥६॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ७ ॥

श्रीसूर्य उवाच ।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि सा क्षात्रा संजाता विनतासुत ॥ ८ ॥
अज्ञानतिमिरान्धत्वात्स्त्रीणां कर्म दुरात्मनाम् । अजानती कुलस्त्रीणामाचारमनुकंपकम् ॥ ९ ॥
सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च । प्रमादाद्द्वेषिणं सा वै जघान क्रूरसाहसा ॥ १० ॥
तस्या गेहाश्रिता नित्यं मार्जारशुनपूर्वकाः । पललक्रीडनपरा गेहे संकुलिता भृशम् ॥ ११ ॥
तत्रासु बालुकाग्न्यंबुतप्तभस्मचयादिषु । आविवेशास्तया चाग्नौ पापाकुलितचेतसा ॥ १२ ॥
बालगर्भांशयान्बालानविस्पष्टाखिलेंद्रियान् । तांस्त्यक्त्वा निर्जने तेषां मातृभिर्बालघातिनी १३
मायाबन्धनमात्रत्वाद्बालगर्भाश्रितास्तदा । तेरताः क्षिप्त्वा समिद्धेऽग्नौ भस्मसादकरोत्क्षणात् १४॥
विनिवेशन्ति प्रमादाद्धेर्मालादीन्पापचेतसः । संतप्तभावस्तेषां वै नानादुःखेष एव च ॥ १५ ॥
आनाय्याग्निं जनैस्ते वै भक्षिष्यन्ते गतायुषः । तथाविधेषु जीवेषु मृतेष्वपि च तद्वशात् ॥ १६ ॥
मृताश्च शिशवस्तेऽपि तदात्मदोषचिह्निताः । अनले ज्वालिता ये वै बहवो लघुबालकाः ॥ १७ ॥
गर्भयुक्ता मृता ये वै मातृयुक्तास्तथैव च । लभन्ते सद्गतिं नैव मृतास्ते दग्धजंतवः ॥ १८ ॥
तेन कर्मविपाकेनास्थिरगर्भा मृतप्रजा । त्रिविधापत्यजा बाधा प्राप्यते जनुरन्तरे ॥ १९ ॥
जन्तवो गर्भगा ये के स्वकृतात्कर्मबन्धनात् । उभयोः कर्मणां हेतूँल्लभन्ते नात्र संशयः ॥ २०॥
तृतीयं जन्म चैतद्धि ब्रह्मवंशसमुद्भवम् । स्थिरगर्भा न यस्माद्धि पुत्रहीना पतत्रिण ॥ २१ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते । ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २२ ॥

श्रीसूर्य उवाच ।

सुदिष्टे समनुप्राप्ते ग्रहेऽहनि शुभोदये । प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २३ ॥
तत्रोपजीविकं तीर्थं नानाचित्रविचित्रकम् । द्रोणमानतिलानां तु मध्ये गर्भं प्रपूरयेत् ॥ २४ ॥
निष्कमानसुवर्णस्य शकलं मध्यतः क्षिपेत् । तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपर्वतम् ॥ २५ ॥
शुद्धतोयभृतं ताम्रपात्रं दशपलोन्मितम् । स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ २६ ॥
पूजयेन्न सपत्नीकं कश्यपं हि प्रजापतिम् । करे साक्षकरे दक्षे वामे चाथ कमंडलुम् ॥ २७ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिं तां शुभलक्षणाम् । अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २८ ॥
सम्यक् श्रद्धावती नारी त्रिविधापत्यदुःखिनी । विप्रं हि वेदविद्वांसं पूजयेद्विविधैर्धनैः ॥ २९ ॥
ततस्तं तु सपत्नीकं मुनीनां प्रवरं शुचिम् । सदक्षिणं विधायाथ गोवासोभिः प्रपूजयेत् ॥ ३० ॥

"मया जन्मान्तरे यच्च कृतं कर्मातिदारुणम्। लंघितास्त्रीजनाचारा अज्ञानतया दयादिकम् ॥३१॥
तत्पापं नाशयस्वाद्य दैवमार्ग विगर्हितम्। सम्यक् श्रद्धावती नारी मृतसन्ततिदुःखिनी ॥ ३२ ॥
सपत्नीकस्य सौवर्णनिर्मितां मूर्तिमर्चिताम्। विप्राय वेदविदुषे मद्याद्गुणशालिने ॥ ३३ ॥
दानान्ते कीर्तयेन्मंत्रं तिष्ठन्वी विहितांजलिः। यन्मया पूर्वजनुषि दयारहितचित्तया ॥ ३४ ॥
कृतं संप्राप्तमशुभं स्वामिंस्तच्छिन्धि साम्प्रतम्। दत्त्वा दानं च विप्राय सांपिण्यात्मानमीक्षयेत् ३५

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पचचत्वारिंशदुत्तरशताधिकसहस्रतमः॥ ११४५॥

## श्रीसूर्य उवाच।

काकघाती महाभाग प्राग्भवे चात्र जन्मनि। कूर्चहीनो भवेन्मर्त्यः स च तत्पापलाञ्छितः॥१॥
कृष्णधेनुप्रदानेन विधिनात्र खगाधिप। मुच्यते दुष्टपापाच्च कूर्चयुक्चात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तरशताधिकसहस्रतमः॥ ११४६ ॥

## श्रीसूर्य उवाच।

या पूर्वं घातयेत्काकं विनतानन्दवर्धन। सात्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवेदलम्॥ १ ॥
कृष्णधेनुप्रदानेन यथोक्तं गरुडाग्रज। पूर्वपापविशुद्धिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदुत्तरशताधिकसहस्रतमः॥ ११४७ ॥

## श्रीसूर्य उवाच।

अभक्ष्यभक्षको यस्तु भवेत्प्राङ्मानवोऽण्डज। सोऽत्र जन्मनि पक्षीन्द्र जायते क्रिमिलोदरः॥ १ ॥
स भीष्मपञ्चकाद्य व्रतात्पुण्यसमर्जनात्। मुच्यते पूर्वरोगात्तु दुष्टात्सुत न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरशताधिकसहस्रतमः॥ ११४८ ॥

## श्रीसूर्य उवाच।

याऽभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज। जायते जठरे तस्याः क्रिमिश्रोत्या हि रुक्सुत ॥१ ॥
तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम्। कार्तिके शुक्लपक्षे च प्रान्तस्थदिनपञ्चके ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदुत्तरशताधिकसहस्रतमः॥११४९ ॥

## श्रीसूर्य उवाच।

दुष्टस्पर्शेन यो मोहाद्भक्षयेद्विधिवर्जितम्। सिद्धान्नं ना पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥
विष्णुव्रतान्महापुण्यात्सर्वपापप्रणाशनम्। तथा कृशोदरत्वं च क्षिप्रं नश्यति काश्यपे ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरशताधिकसहस्रतमः॥ ११५० ॥

## श्रीसूर्य उवाच।

भुक्तं यया पुरा सूत सिद्धान्नं द्विजभार्यया। दुष्टस्पर्शेन सततं साऽत्र स्याच्च कृशोदरी ॥ १ ॥
सा वैष्णवव्रतात्तु स्वात्तस्मात्पापात्प्रमुच्यते। कृशोदरव्यथा तस्यास्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदुत्तरशताधिकसहस्रतमः॥ ११५१ ॥

श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनसौख्यसमन्वितः ॥ १ ॥
कृतानि तेन दानानि नानापर्वसु शक्तितः । वेदयुक्तेषु विप्रेषु सत्पात्रेषु विधानतः ॥ २ ॥
अथोपापं भृशं चक्रे व्यभिचारसमुद्भवम् । ज्येष्ठां त्यक्त्वा ऋतुमतीं धर्मशीलयुतां प्रियाम् ॥ ३॥
रतिं ददौ कनिष्ठाया अनृतौ च विशेषतः । ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः ॥ ४ ॥
भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा । श्रद्धादानवशात्सोऽत्र गङ्गायाः पूर्वभागतः ॥ ५ ॥
सिंहस्थेऽर्के सुखे राहौ जीवे कर्केऽलिगे भृगौ । सरक्तगौरो मतिमान्बन्धुस्त्रीसुखसंयुतः ॥ ६ ॥
लघुघूर्णी त्वमितदो द्विजवंशसमुद्भवः । सर्वमेतत्फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ७ ॥
स्त्रीत्यागी भ्रूणहा लोक इति पौराणिका विदुः । योपासहायतः पूर्वं शृणुष्व विनतासुत ॥ ८ ॥
प्राग्भवे या कनिष्ठाभूत्सा ज्येष्ठात्र गतप्रजा । गर्भदोषयुता चेति लक्षणैर्लक्षयेत्खग ॥ ९ ॥
वक्ष्यामि निष्कृतिं तस्याः पूर्वपापप्रणाशिनीम् । कुर्यात्पलैर्वेदमितैर्गणेशं विघ्ननाशनम् ॥ १० ॥
तदर्धार्धमितं देयं त्रिषु विप्रादिमं पठन् ॥ ११ ॥

मंत्रः ।

त्यक्त्वा वराननां शुद्धां पूर्वं पापं समर्जितम् ॥
तदुग्रपापनाशाय ददेऽहं गणनायकम् । मापसप्तमितां लक्ष्मीं शुभाऽऽलेख्यां हिरण्मयीम् ॥१२॥
ददेऽहं विप्रमुख्याय वेदशास्त्रविदे मुदा । ब्राह्मणान्वरयेत्तत्र शक्त्या दद्याच्च दक्षिणाम् ॥ १३ ॥
एवं विधानं यः कुर्याज्जीविष्यन्ति च तत्सुताः । शक्त्वेन शक्तिमान्यस्तु न कुर्याच्छोधनं तदा १४
सपुमात्माप्नुयात्पुत्रान् रिष्टं पश्चाद्वदन्द्वके । प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम् ॥ १५ ॥
अन्यजन्मादितो ज्ञेयं विस्तरो नोदितो मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरशताधिकसहस्रतमः ॥ ११५२ ॥

श्रीसूर्य उवाच ।

देशे रामहृदे जाता पादजा पूर्वजन्मनि । साऽत्र जन्मनि वै विप्रा जाता प्राग्विप्रपूजनात् ॥ १ ॥
प्राग्यतया कृतं कर्म शृणुष्वात्र खगेश्वर । ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
तत्र दत्तं पुनस्तस्मै भुक्तं सर्वमशेषतः । मृतो द्विजस्तदुःखेन क्षुधितस्तु पतत्रिणा ॥ ३ ॥
पापमाचरितं तेन ब्रह्मघातसमं तथा । पञ्चत्ववशमापन्ना भुक्त्वातियमशासनम् ॥ ४ ॥
पुत्रसन्ततिहीनात्र युवभावे क्षयान्विता । निष्कृतिं परमां तस्या वक्ष्येऽहं पापनाशिनीम्॥ ५ ॥
सर्वस्वेन तदर्द्धेन कार्या स्वर्णमयी शुभा । कदलीपत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः । क्षयनाशकराः सर्वे भविष्यंत्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपंचाशदुत्तरशताधिकसहस्रतमः ॥ ११५३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि भोः सूत चोच्छिष्टं भुक्तवांस्तु यः । रात्र्यन्धो जायते सूत जन्मन्यत्र स मानवः ॥ १ ॥
भोजयेद्ब्राह्मणाञ्शक्त्या गोमूत्रं प्राशयेत्तथा । मुच्यते तत्क्षणात्सूत नक्तान्ध्यत्वान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुः पंचाशदुत्तरशताधिकसहस्रतमः ॥ ११५४ ॥

श्रीसूर्य उवाच ।

या भक्षयेत्पुरा नारी चोच्छिष्टं सा शुभानना । नक्तान्धा जायते त्वत्र व्यथिता नेत्रपीडया॥१॥
गोमूत्रप्राशनादत्र ब्राह्मणानां च भोजनात् । नक्तान्धरोगान्मुक्तिः स्यादत्र जन्मनि सुव्रत ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपञ्चपञ्चाशदुत्तरशताधिकसहस्रतमः ॥ ११५५ ॥

श्रीसूर्य उवाच ।

बिडालोच्छिष्टभोजी यो रात्र्यन्धो जायते त्विह । तत्पापस्य विशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥१॥
भोजयेच्च तथा विप्राञ्छक्त्या दद्याच्च दक्षिणाम् । रात्र्यन्धरोगात्सततं मुक्तो भवति मानवः॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्पञ्चाशदुत्तरशताधिकसहस्रतम ॥ ११५६ ॥

श्रीसूर्य उवाच ।

बिडालोच्छिष्टभुग्नारी प्राग्भवे विनतात्मज । रात्र्यन्धरोगयुक्ता सा ह्यत्र जन्मनि जायते ॥ १ ॥
द्विजानां भोजनाच्चैव गोमूत्रप्राशनात्तथा । मुच्यते पूर्वपापात्तु बिडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदुत्तरशताधिकसहस्रतम ॥ ११५७ ॥

श्रीसूर्य उवाच ।

चाण्डाल्यां गमने पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र दशावृत्त्या कृतात्सुत । स मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरशताधिकसहस्रतमः ॥ ११५८॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनतासुत । चाण्डालं प्राप्नुयात् सात्र ऽजगरा जायतेऽण्डज ॥१॥
प्राजापत्यव्रताचरनात्कृतात्पञ्चावर्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरशताधिकसहस्रतम ॥ ११५९ ॥

श्रीसूर्य उवाच ।

परान्नविघ्नकारी च यो भवेत्पूर्वजन्मनि । सोऽजीर्णेनातिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमे तु कृते वै गरुडाग्रज । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय षष्ट्युत्तरशताधिकसहस्रतम ॥ ११६० ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सुत या नारी पूर्वजन्मनि । परान्नेषु यदा मोहाच्छृणु तत्र पतत्रिण ॥ १ ॥
अजीर्णेनैव रोगेण बाध्यते पीडिता भृशम् । लक्षहोमेन सततं तत्पापान्मुच्यतेऽधुना ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरशताधिकसहस्रतम ॥ ११६१ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यं नित्यसदाचारः साधुमेवानुसंयतः॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि । किलासौ दद्रुकण्डूश्च नेत्रखेदं विषूचिकाम् ॥ २ ॥
किंचिज्ज्वरं प्रपद्येत पूर्वकर्मविपाकतः । तस्य भार्या सुतन्वङ्गी स्त्रीधर्मव्रतकारिणी ॥ ३ ॥

वातव्यथा तदुदरे मूर्ध्नि पीडा च जायते । मृतवत्सा कथं जाता मृतपुत्री तथा पुनः ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वैश्या समुत्पन्ना प्रिया शूद्रावतारिता । बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ ६ ॥
[redacted]ज्ञाता च संबन्धं बहुकालं रता भृशम् । अन्योन्यं प्रीतिवशतः किंचित्कालवशं गता ॥७॥
[redacted]तोर्धनहर्त्री यतस्ततः । तत्पत्या कर्मकृद्योऽसौ तेन तत्रैव जन्मनि ॥ ८ ॥
[redacted]श्रेष्ठः स्वर्णालंकरणैर्युतः । धनलोभाद्धतस्तेन भाविनोऽर्थस्य वै बलात् ॥ ९ ॥
[redacted]तौ पुत्रदुःखेन दुःखितौ । द्वित्रिवर्षैस्तथा मासैः पञ्चत्वं जग्मतुः किल ॥ १० ॥
[redacted]ौ वै दुष्टचित्तेन दुर्मदौ । अचिराच्च मृतौ तत्र गतौ वै यमसादनम् ॥ ११ ॥
[redacted]ण्डः संजातो ब्राह्मणस्य ततः खग । तेन कर्मविपाकेन नरके पाचितौ भृशम् ॥ १२ ॥
पश्चान्मानुषतां यातौ भवज्ञानप्रभावतः । पूर्वकर्मविपाकेन मृतपुत्रौ बभूवतुः ॥ १३ ॥
द्वित्र्यादिमासजा बाला मृता द्वित्र्यादिहायनाः । तस्यामभवन्मृताः पुत्रा जाताजातास्तथैव च १४
अयंजीवेदयं जीवेदित्याशागतचेतसोः । जाताजाता विनश्यन्ति तस्याश्चाकृतनिष्कृतेः ॥ १५ ॥
नैकोऽपि जीवति प्रायोऽचिरादेव विनश्यति । सगुणाश्च सुशीलाश्च लालनाह्लादकारिणः ॥
पूर्वकर्म विपाकेन सर्वे मरणमागताः ॥ १६ ॥
नश्यत्सु जातमात्रेषु जानुज्ञानं सुतेषु च । व्याध्यन्तरे भवेद्व्याधिग्रस्तो व्यसनभागयम् ॥ १७ ॥
नापि सौख्यं भवेत्तस्य नानाशंकितचेतसः । अभवच्चेतसो दाहः परापत्यानि पश्यतः ॥ १८॥
लक्षणानि पुरोक्तानि तस्येमान्यपि कीर्तये । स्वोदरे म्रियते बालः स वै ब्राह्मण उच्यते ॥१९॥
मृतवत्सोद्भवं चिह्नं पूर्ववत् प्रतिपादयेत् । स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः ॥ २० ॥
दौर्मनस्यं महानाधिः शोक एवोपजायते । अदृष्टगणमाहात्म्याद्भुज्यन्ते दुःखराशयः ॥ २१ ॥
म्रियते जातमात्रो वै पुत्रोऽकृतविनिष्कृतेः एवं तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत् ॥ २२ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्निह कर्मनिषूदनी । कथ्यतां दिवसेशान नारीणां हितकाम्यया२३॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि मृतवत्साघनाशिनीम् । निष्कृतिं विधिवत्तार्क्ष्य सन्ततेः सौख्यहेतवे ॥२४॥
यजमानः सपत्नीको विधिवद्विधिमाचरेत् । मूर्तिं बालस्य निर्माय सौवर्णीमथराजतीम् ॥
पठद्भिः शान्तियुक्तानि ब्राह्मणैः सहितोऽर्थवित् ॥ २५ ॥
सिद्धार्थाक्षतदूर्वाभिः कृतरक्षां प्रतिष्ठिताम् । स्नापयेदौषधैर्मन्त्रैर्वारुणैर्विष्णुसूक्तिभिः ॥ २६ ॥
सुदिष्टे सुशुभे देशे गोमयाद्युपलिप्तके । तत्रोपधापयेत्तीर्थे कृष्णाजिनमथापि वा ॥ २७ ॥
द्रोणमानतिलैर्युक्तं कृष्णवस्त्रेण संयुतम् । स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ २८ ॥
सौवर्णीं प्रतिमां तत्र बालगोपालमूर्तिजाम् । कृत्वा प्रतिष्ठितप्राणां मूर्तिं तां शुभलक्षणाम् ॥ २९ ॥
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि । सम्यक् श्रद्धावती नारी मृतसन्ततिदुःखिनी ॥ ३० ॥
आहूय कुलजान्विप्रान् विदुषो वेदवादिनः । अलोलुपाः सदाचाराःपूज्या अर्घ्यादिकैस्तथा॥३१॥
उपार्जितः पुरा द्रोहो मया वै परसूनुषु । भूमिद्रविणहेमादिलिप्सया तद्विनश्यतु ॥ ३२ ॥
गां सौवर्णीं ददाना तु विप्रायेदं ब्रुवीत सा । मया जन्मांतरेऽदृष्टवशादाचरितं तु यत् ॥ ३३ ॥

तस्मान्मुच्येय वै पापाच्छीघ्रं गोदानतोऽधुना । इति ता त्रिष्परिक्रम्य परिचर्यां विधाय च॥३४॥
अग्ने नयेति मंत्रेण विसर्जेत्तदुदीरयेत् । धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि ॥ ३५ ॥
सांनिध्यात्मानमालोक्य भोजयेदिष्टबन्धुकान् । इहैव लभते साध्वी सौख्यं पुत्रसमुद्भवम् ॥ ३६ ॥
व्याधयः प्रशमं यान्ति सद्यो वै कृतनिष्कृतेः ॥ ३७ ॥
विकारो विविधस्तस्य संपद्येताथ संशयम् । पित्तजो वातजो वान्या कासगुल्मार्तितन्व्यथा ॥३८॥
मृतापत्यार्तिजापीडोदरव्याधिरसंशयः । न निष्कृतिः कृता येन नरेण विभवे सति॥३९॥
तथा तथात्र दुःखानि जायन्तेऽस्य मुहुर्मुहुः पूर्वकर्मार्जितं पापं चिह्नं तस्य सहायवत् ॥ ४० ॥
॥इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्युत्तरशताधिकसहस्रतम ॥ ११६२ ॥

## श्रीसूर्य उवाच ।

परस्मै यो विषं दद्यात्पूर्वजन्मनि मानद । छर्दिरोगेण सोऽत्रैव बाध्यते पीडयाऽनिशम् ॥ १ ॥
धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् । मुच्यते छर्दिरोगाच्च जन्मन्यत्र पतत्रिण ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तरशताधिकसहस्रतम ॥ ११६३ ॥

## श्रीसूर्य उवाच ।

मूकोऽत्र जायते जंतुर्यः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय चतुःषष्ट्युत्तरशताधिकसहस्रतम ॥ ११६४ ॥

## श्रीसूर्य उवाच ।

या काचिन्मागधी ख्याताऽजाता ब्रह्महदे सुत । सा चात्र यवनी देशे शुभे पश्चनदेऽण्डज ॥ १ ॥
पुत्राभिलाषिणी पूर्वं ह्यभजद्यवनं पुरा । तस्मात्सा यवनी जाता पुत्रसन्ततिवर्जिता ॥ २ ॥
नानाधनयुता दानात्कुरुक्षेत्रे पुरानघ । शिवभक्तिपरा तस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
अत्र जन्मनि सा लक्ष्म्या रुद्रपूजनजाद्व्रतात् । पुत्रपौत्रयुता नारी भविष्यति न संशयः ॥ ४ ॥
अथवा हरिवंशस्य शतावृत्त्या विधानतः । श्रवणात्पूर्वजातपापान्मोक्ष्यते विनतासुत ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चषष्ट्युत्तरशताधिकसहस्रतम ॥ ११६५ ॥

## श्रीसूर्य उवाच ।

देवालयेवसत्कश्चिद्ब्राह्मणः पूर्वजन्मनि । विष्णुपूजारतो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौरेण निहृतं द्रव्यं यत्स्थित देवताश्रये । तेनेदं दुष्कृतं सूत कृतं कर्मातिदारुणम् ॥ २ ॥
स तेन कर्मणा युक्तो भुक्त्वा वै तत्फलानि हि । जातो गङ्गाश्रये क्षत्रः पर्वतैः पूजनाद्धरेः॥ ३ ॥
बहुद्रव्यान्वितो जातः सर्वसंपत्सुखान्वितः । बाल्ये हि पाण्डुरोगार्त्तश्चात्र जन्मनि मानवः ॥४॥
देवद्रव्यापहारीति पाण्डुरोगी बभूव ह । तत्पापनाशनं पुण्यमुपायं शृणु तत्त्वतः ॥ ५ ॥
कुर्याद्धिरण्मयीं पृथ्वीं ससमुद्रां पलाष्टिमकाम् । सवना सागरोपेतां सप्तद्वीपां वसुन्धराम् ॥ ६ ॥
गन्धपुष्पैरलंकृत्य दद्याद्विप्राय धीमते । पाण्डुरोगाद्विमुक्तः स्यादत्र जन्मनि मानवः ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय. षट्षष्ट्युत्तरशताधिकसहस्रतम. ॥ ११६६ ॥

## श्रीसूर्य उवाच ।

या नारी प्राग्भवे प्रमादाद्विषं कस्यापि यच्छति । सात्र जन्मनि रोगेण च्छर्दिसंज्ञेन पीड्यते ॥१॥

धेनूनां दशकं दद्यादशक्तौ गरुडाग्रज । सवत्सां कपिलां दद्यात्सा तद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तरशताधिकसहस्रतमः ॥ ११६७ ॥

श्रीसूर्य उवाच ।

कश्चिद्विप्रो ह्यभूद्वंगे प्राग्भवे धर्मसंयुतः । परस्य कन्यापाश्चात्सावुद्वाहमकरोत्सुधीः ॥ १ ॥
द्रव्याल्पत्वान्महाभाग चकाराल्पविधानतः । चौर्यकर्मरतः सोऽपि कदाचिद्दैवयोगतः ॥ २ ॥
चचार विपिने सूत मार्गलुण्ठनतत्परः । काचित्सुनयना तत्र प्राप्ता भाविवलाद्दृढात् ॥ ३ ॥
नानाभरणयुक्ता सा पूर्णगर्भसमन्विता । सा लुण्ठिताथ त्रासिता तेन पापधियाण्डज ॥ ४ ॥
सहायैः सा परित्यक्ता ताडनाद्व्याकुलाभवत् । तद्गर्भाद्वै च्युतौ पुत्री पापमाचरितं त्विदम् ॥५॥
ततो धर्मपुरं प्राप्तः पुण्यपापसमन्वितः । पुण्यात्पुण्यफलं भुक्त्वा पापात्पाप फलं तथा ॥ ६ ॥
परकन्याविवाहेन स जातो वाहुजोऽधुना । गङ्गायाः पूर्वभागे तु दशयोजनसंमिते ॥ ७ ॥
गौरः सुरूपः क्षीणांगो वहुद्रव्यपराक्रमः । पित्ताधिकोऽतिमतिमान्वहुपुत्रीभिरन्वितः ॥ ८ ॥
जन्मनैव मृतः पुत्रः पूर्वपापाच्चयाण्डज । विद्मयं तस्य वक्ष्यामि येन पापात्प्रमुच्यते ॥ ९ ॥
पलार्द्धार्धमितेनैव कार्या सुघटिताण्डज । वाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता ॥ १० ॥
पूर्वपापविनाशाय सा देया ब्राह्मणाय वै । गन्धैः पुष्पैः समभ्यर्च्य मंत्रैः प्रणवपूर्वकैः ॥ ११ ॥
वैधव्यं तत्र सौवर्णं सुवर्णोत्कथितं शुभम् । दद्याज्जपेच्च मंत्रांश्च तल्लिङ्गान्विधिपूर्वकम् ॥ १२ ॥
होमयेच्च यवांस्तत्र सतण्डुलससर्षपान् । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
शृणुयाद्धरिवंशं वा शतावृत्तिविधानतः । गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते ॥ १४ ॥
लभते तनयं चारुं चात्र जन्मनि वै ध्रुवम् । रिष्टं पञ्चाशत्तमेऽब्दे प्रायश्चित्ते कृते सुत ॥ १५ ॥
वेदसप्ततिरायुः स्यात्प्रायश्चित्ते कृतेऽत्र च ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्युत्तरशताधिकसहस्रतमः ॥ ११६८ ॥

श्रीसूर्य उवाच ।

व्यभिचाररता पूर्वं चात्रापि व्यभिचारिणी । सा घोरान्नरकान्याति पत्यनादरतोऽण्डज ॥ १ ॥
न शुद्ध्यत्यशुभाचारा प्रायश्चित्तैः शुभैरपि । वाराणस्यां चतुर्दश्यां शिवपूजोपवासतः ॥ २ ॥
तथा तत्रैव वसतेर्गंगाम्भःसेवनादपि । मुच्यते सर्वपापाच्च पूर्वजन्मकृताद्दृढात् ॥ ३ ॥
वाहुजेयं महाभाग पूर्वजन्मनि चेह वै । वन्ध्या प्राग्जायते दुःखाकुला च दयितोज्झिता ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरशताधिकसहस्रतमः ॥ ११६९ ॥

श्रीसूर्य उवाच ।

यः कृत्वा धूर्ततां पूर्वं वंचयेद्ब्राह्मणं सुत । सोऽत्रापस्माररोगेण पीड्यते वहुपीडया ॥ १ ॥
तेनैव पापरोगेण म्रियतेऽत्र पतत्रिण । प्रायश्चित्तं मया नोक्तं पापे ब्राह्मणवंचने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरशताधिकसहस्रतमः ॥ ११७० ॥

श्रीसूर्य उवाच ।

या भ्रातृघातिनी नारी प्राग्भवे विनतासुत । सात्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥

ज्ञानान्महापापकृतान्न चोक्ता निष्कृतिर्मया । ज्ञात्वा ब्रह्मवधे सूत प्रायश्चित्तं न चास्ति हि ॥२॥
सप्तजन्मनि मूकत्वं जायते च तदेनसः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरशताधिकसहस्रतम ॥ ११७१ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि बाहुजः । देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनम् ॥ १ ॥
विंशतिवर्षे व्यतीते नेत्रभङ्गो भविष्यति । तद्रक्षणोपायमहं वक्ष्ये दानं तु पापहृत ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग नेत्ररोगं न पश्यति । भोजयेच्छक्तितो विप्रान्वैष्णवाङ्कद्वया सुत ॥ ४ ॥
कृत्वानेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरशताधिकसहस्रतम ॥ ११७२ ॥

श्रीसूर्य उवाच ।

सर्वक्लेशकरः कश्चिद्नयत्पूर्वजन्मनि । सोऽत्र जन्मनि जायेत ज्वररोगेण पीडितः ॥ १ ॥
प्रायश्चित्तं परं तस्य वित्ततुर्यांशभागतः । कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः । कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरशताधिकसहस्रतम ॥ ११७३ ॥

श्रीसूर्य उवाच ।

अहावादरता ह्यत्र या पूर्वेऽभूत्पतिव्रता । पातिव्रत्यप्रभावाद्धि गतिं प्राप्ता हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी पार्वत्या सह मोदते । भुनक्ति भोगान्सकलान् पतिं प्राप्य तपस्विनी ॥२॥
गच्छेच्च परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्युत्तरशताधिकसहस्रतम ॥ ११७४ ॥

श्रीसूर्य उवाच ।

योऽज्ञानात्कृतवान्सूत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं प्राप्नोति क्वापि मानवः ॥१॥
चान्द्रायणत्रयं कुर्याद्विधिवत्पापशोधनम् । पुस्तकं च तथा दद्यात्सुवर्णपलसंयुतम् ॥ २ ॥
एवं यः कुरुते सूत स तत्पापात्प्रमुच्यते । न जायतेऽस्य मूकत्वं कदाचिद्विनतासुत ॥ ३ ॥
या तया वंचयेत्काचिल्लोकान्पूर्वभवेऽण्डज । साऽत्र जन्मनि रोगेणापस्मारेण प्रपीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं सुत । ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चसप्तत्युत्तरशताधिकसहस्रतम ॥ ११७५ ॥

अरुण उवाच ।

कश्चिद्वर्णोत्तमो जातो धर्मिष्ठो वित्तसंयुतः । उदरे वायुरल्पीयाञ्ज्वरोऽपिश्च प्रजायते ॥ १ ॥
शरीरे जायते चिह्नं किंचिद्व्रणसमन्वितम् । दद्रुकण्डूकिलासाद्या गमने पार्श्ववक्रगतिः ॥ २ ॥
कर्मानुसारतो व्याधिश्चिह्नं तस्य सहायिनी । भार्या प्रीतिपरा नित्यं कदाचित्कालयोगतः ॥ ३ ॥
रोगयुक्तापि पितातु मद्यार्धिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

स्वस्त्रिया सहितो विप्रः कुलीनो वदवाचकः । गताश्चैव महारण्ये भार्या तस्य हि गर्भिणी ॥ ५ ॥

बहुभिश्च समायातः शत्रुभिः परिवेष्टिता । तत्र भीता तु तत्पत्नी तत्रासाच्च महावने ॥ ६ ॥
गर्भपातोऽभवत्तस्या अपत्यं हि मृतं तदा । तेन कर्मविपाकेन म्रियन्ते तस्य बालकाः ॥ ७ ॥
कश्चिज्जीवति षण्मासं कश्चिद्वर्षाधिकं भृशम् । ततोऽधिकं तथा कश्चिन्न हि जीवति कश्चन ॥ ८ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ९ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्नश्चायं सुदुर्लभः । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तं हि पापहृत् ॥१०॥
गोद्वयं वै सवर्णं हि स्वर्णनिष्केण संयुतम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ११ ॥
कर्मप्रकाशकं विप्रं पूजयेद्विधिपूर्वकम् । एवं यः कुरुते वत्स निष्कृतिं कर्मणः शुभाम् ॥ १२ ॥
पुत्रपौत्रादिकैर्युक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥१३॥
बाध्यते पापदोषेण भुवि जन्मनि जन्मनि । एवं यः कुरुते भक्त्या लभते पुत्रपौत्रकम् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरशताधिकसहस्रतमः ॥ ११७६ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्काचिन्नारी भर्तृप्रियान्विता । दक्षा सर्वक्रियास्वेव बहुदानप्रदायिनी ॥ १ ॥
पार्श्वस्थस्यान्यशूद्रस्य गृहान्नीता हि मानद । सर्वस्नेहास्तु चौर्येण सर्वशून्यगृहे पुरा ॥ २ ॥
भुक्तानि बहुभिः सूत मिलित्वा च सुतादिकैः । पूर्वजन्मकृतात्सर्वकर्मणोऽत्रैव जन्मनि ॥ ३ ॥
सा जाता बाहुजा नारी धनभोगसमन्विता । पुत्रान्विता विचित्रा च भर्तृशुश्रूषणे रता ॥ ४ ॥
क्षयरोगाकुला चूनिभावे स्नेहहरी यतः । निष्कृतिं तस्य पापस्य पुण्यां पापौघनाशिनीम् ॥ ५ ॥
कथयामि प्रयत्नेन वित्ततुर्यांशभागतः । कृत्वा तु कदलीं रम्यां पुत्रयुक्तां सुवर्णजाम् ॥ ६ ॥
दद्याद्द्विविधिज्ञाय क्षयदोषोपशान्तये ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरशताधिकसहस्रतमः ॥ ११७७ ॥

---

श्रीसूर्य उवाच ।

यो लोकान्वंचयेत्कश्चित्पुरा धूर्तेन कर्मणा । सोऽत्र जन्मन्यपस्माररोगेण महताकुलः ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरशताधिकसहस्रतमः ॥ ११७८ ॥

श्रीसूर्य उवाच ।

ब्राह्मणी गर्भयुक्ता च प्रयाणे भर्तृसंयुता । सर्वाभरणभूषाढ्या नानारत्नसमन्विता ॥ १ ॥
बहुभिर्मिलितैश्चैव गृहीतं सर्वभूषणम् । तत्र कोलाहलो जातो गर्भपातो ऽभवत्तदा ॥ २ ॥
तेन पापेन बालानां गर्भनाशः प्रजायते ॥ ३ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येन पापं प्रणश्यति । एतेषां विस्तरं ब्रूहि लोकानां हितकाम्यया ॥४॥

श्रीसूर्य उवाच ।

एकवासो विधिश्चैव लक्षपूजा ततः परम् । सगर्भायै प्रदातव्यं भोजनं संभितं खग ॥ ५ ॥
गर्भाश्रयगतो नाशो निषेकसमयादनु । पञ्चमे चाथ षष्ठे वा मासि पातः स्मृतश्च यः ॥ ६ ॥
तयोः कर्मविशेषांश्च कथयिष्यामि सत्तम । सप्तमादिषु मासेषु नश्यति प्रसवस्त्रियाः ॥ ७ ॥

अथवा चाष्टमे मासे सूत सद्यो विपद्यते । सा चापि मृतकल्पा स्यादामयैः सूतकामयैः ॥ ८ ॥
शोकादामोदराऽऽद्योपशूलाङ्गस्वकंपनैः । रक्तस्रावो विवर्णत्वं जायते पवनेरितम् ॥ ९ ॥
रजतस्य पलाभ्यां तु कोशं गर्भाश्रयाकृतिम् । कुसुंभवेष्टितं चैव रक्तवस्त्रेण वेष्टयेत् ॥ १० ॥
मधुना पूरयेत्तत्र शलाकां रूप्यवर्तिना । तन्मध्ये हेमशकलं क्षिपेत्तदपि यत्नतः ॥ ११ ॥
दद्याद्विप्राय विधिवद्यथाश्रुति निरूपितम् ।

मंत्रः ।

यन्मया पूर्वतः स्वामिन् गर्भपातः कृतः स्वयम् । एतद्दानविशुद्ध्यर्थं गर्भकोशं ददाम्यहम् ॥ १२ ॥
पुरुषश्चेत्पापकर्ता मन्त्रमेतमुदीरयेत् ॥ १३ ॥

मंत्रः ।

मया मूढेन यद्देतो निषिक्तं परयोषिति । ततोऽनपत्यं यस्मात्तं तस्मान्मां मोचय प्रभो ॥ १४ ॥
एवंकृतेविधेः सूत गर्भपाताघनाशनम् । ब्राह्मणान्भोजयेत्पश्चाद्भुंजीत सह बन्धुभिः ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरशताधिकसहस्रतमः ॥ ११७९ ॥

---

श्रीसूर्य उवाच ।

या नारी घातयेत्काचित्पुरुषं मारुभेवण्डज । सात्र जन्मनि रोगेण शूलेनैव प्रपीड्यते ॥ १ ॥
सुवर्णदानादिविधिवत्तथा रुद्रजपादिह । पूजनाच्छंकरस्यापि शूलरोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरशताधिकसहस्रतम ॥ ११८० ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि यो ज्ञानाचरो वै घातयेत्सुत । मित्रं च वायुरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
तत्र कुर्यान्महाबाहो मंत्रैस्तैर्वायुदैवतैः । पूजनं वायुदेवस्य गन्धपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैर्बहुभक्ष्यैश्च वायुर्नश्यति तत्क्षणात् । इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरशताधिकसहस्रतम ॥ ११८१ ॥

---

श्रीसूर्य उवाच ।

गोत्रघातकरी या च पुराज्ञानेन काश्यप । साऽत्र जन्मनि लूताढ्या भवत्येव न संशयः ॥ १ ॥
तीर्थस्नानव्रतादीनि निष्फलान्यत्र चाण्डज । ज्ञानपूर्वकृतात्पापाद्रोगादेव क्षयो भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्यधिकशताधिकसहस्रतम ॥ ११८२ ॥

---

श्रीसूर्य उवाच ।

व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु । नीता सर्वरसास्तेन मिलित्वा चार्द्धसीरिणा ॥ १ ॥
कालेन तत्कृतं लोभात्स्नेहाद्यं भूरिसारवत् । भुक्त्वा पापफलान्याशु भ्रमरत्वमुपागतः ॥ २ ॥
ततः पुण्यफलं भुक्त्वा जातोऽत्रैव हि पर्वते । शूद्रः पुण्यकलायुक्तो भूमिदानात्सुरार्चनात् ॥ ३ ॥
स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः । सर्वस्नेहादिदानैस्तु स्ववित्तात्तुर्यभागतः ॥ ४ ॥
स्वर्णदानात्तथाचात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरशताधिकसहस्रतम ॥ ११८३ ॥

---

श्रीसूर्य उवाच।

विषं दत्त्वा पतिं सूत या प्राग्जाराश्रिताऽसती। पतिघ्नी सा महादुष्टा जाताऽत्र विवशा सुत ॥ १॥
विष्णोराराधनादत्र गंगाया ह्युपसेवनात्। गतिं शुभां सा प्राप्नोति व्रतकृच्छ्रोपवासतः ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरशताधिकसहस्रतमः ॥ ११८४ ॥

श्रीसूर्य उवाच।

देवागारं दहेद्यस्तु प्राग्जन्मन्यत्र पुत्रक। रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देवदानाद्विप्राय स्थापनाद्वा विधानतः। मुच्यते पापजाद्रोगादतिसाराच्च निश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्युत्तरशताधिकसहस्रतमः ॥ ११८५ ॥

श्रीसूर्य उवाच।

मूर्धाभिषिक्तो यः कश्चिन्मथुरायामभूत्सुत। राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगसूकराः। तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
गर्भगौ निहतौ तत्र शुभौ द्वौ मृगशावकौ। सहायाभ्यां सुतेनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तावमार्यां चाण्डजाधिप। सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा ॥४॥
स शौर्यकर्मणा सूत जघान च रिपून्बहून्। घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा। भुक्त्वा नानाविधान्भोगानत्र जातो ब्राह्मणोऽधुना॥६॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः। जातः कर्कटके जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः। शिवपूजनजात्पुण्यात्प्राक्कृतात्सकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि। राजप्रचारी तेजस्वी पुण्यात्पापफलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्ष्यः सर्वपापरतः क्वचित्। सहायलक्षणं मत्तः शृणु पुत्र यथा तथा ॥ १० ॥
याभ्यां मिलित्वा भुक्तौ तु मृगशावौ खगाधिप। पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ॥११॥
ह्यपस्मारेण रोगेण मृतौ चात्रैव जन्मनि। एवं सन्ततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभक्षणजात्पापात्प्रायश्चित्तं वदाम्यहम्। पूजयेच्छिवलक्षन्तु तदर्धं वा तदर्धकम् ॥ १३ ॥
अथवा भोजयेद्विप्रान्सहस्रद्वयसम्मितान्। पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृतेऽधुना ॥ १४ ॥
प्रायश्चित्तेऽकृते सूत न च पुत्रसुखं लभेत्। रिष्टेन मरणं चापि वर्षे वेदाग्निकेऽण्डज ॥ १५ ॥
प्रायश्चित्ते कृते तस्य जीवनं वर्षसप्ततिम्। चैत्राऽष्टम्यां च निधनं शुक्लायां गरुडाग्रज ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरशताधिकसहस्रतमः ॥ ११८६ ॥

श्रीसूर्य उवाच।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज। साऽत्रैव तेन पापेन गर्भस्थैर्यं न विन्दति ॥ १ ॥
विप्रकन्याविवाहाद्वै विधिवच्चात्र जन्मनि। मुच्येत तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम्। युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धार्धमितां वापि पूजयित्वा विधानतः। मुच्येत पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरशताधिकसहस्रतमः ॥ ११८७ ॥

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं पतत्त्रिण । साऽतिसारेण महता पीडयते ऽत्रैव जन्मनि ॥ १ ॥
शङ्करप्रतिमादानान्मूर्तेर्विष्णोः प्रदानतः । न जायते महापीडा घोरातीसारसम्भवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरशताधिकसहस्रतमः ॥ ११८८ ॥

श्रीसूर्य उवाच ।

ब्रह्महा प्राग्भवे सूत तिर्यक्त्वं प्राप्य निश्चयात् । नरकान्दारुणांश्चैव जायतेऽत्रैव जन्मनि ॥ १ ॥
कर्मक्षयेऽतिकुष्ठेन त्वस्मिन्वयसि पीडयते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरशताधिकसहस्रतमः ॥ ११८९ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी पत्युर्मित्रं च प्राग्भवे । नियतं वायुरोगेण पीडयते बहुपीडया ॥ १ ॥
पापं प्रतीक्ष्य विप्रादेः सर्वस्वार्द्धार्धजेन च । वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गन्धैर्वस्त्रैर्विशेषतः । मन्त्रैश्च वायुजैः सूत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगोपशमनं दानेनानेन जायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरशताधिकसहस्रतमः ॥ ११९० ॥

श्रीसूर्य उवाच ।

अज्ञानादैर्यजा[1] नारी गोत्रघातकरी पुरा । जायते सततं चात्र लूतारोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्यव्रतात्सुत । लूतारोगं न पश्येत साऽत्र जन्मनि चाण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरशताधिकसहस्रतमः ॥ ११९१ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नः किंचिद्विद्यसमन्वितः । संयुतो वायुपित्ताभ्यां नेत्रतोदशिरोर्त्तिमान् ॥ १ ॥
सद्वृत्तश्च सुखी धीमान्व्यग्रिष्ठः सत्यवाक्शुचिः । व्रणो रेखा ज्वरात्तस्य बाल्ये स्याद्ग्रहणीगदः॥२॥
कटिपृष्ठाभिधानाढ्यो वाक्यविग्रहजाद्भयात् । परोक्षमतिवादांश्च स ब्रूते कारणं विना ॥ ३ ॥
तस्य प्रिया शुभाचारा सती व्रतपरायणा । काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम्॥४॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि वैश्यस्तु भार्या विप्रस्य सात्त्विकीम् । प्रतिवेश्मस्थितां तस्याः कामतो बुभुजे कुधीः ५
अप्रसूतिः प्रिया सा हि चपला चारुलक्षणा । विप्रस्य सन्ततेर्लोभात्तया यौवनविभ्रमात् ॥ ६ ॥
अज्ञानाच्च सवीवृत्तेरुभयोर्वा बलीयसा । प्राक्कर्मणा कुमार्यस्तु ब्राह्मणो निन्द्यतां गतः ॥ ७ ॥
स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य वै बलात् । भृशं तां धर्षयामास बहुकालं खगेश्वर ! ॥ ८ ॥
व्यभिचारवशात्तत्र ह्यन्योन्यं सुखलिप्सया । गृहीतं तद्धनं तस्य धूर्तया लुब्धचेतसा ॥ ९ ॥
ब्राह्मणी सा धनाढ्याभूल्लोके वै प्राप विश्रुतिम् । तेन दुःखेन वै विप्रो ब्राह्मणीमत्यजत्तदा॥१०॥
निर्वेदः स हि संजातो ब्राह्मणस्तु खगेश्वर । तेन कर्मविपाकेन तादृशो वै तदाभवत् ॥ ११ ॥

---

१ वैश्यजा ।

पश्चान्मानुष्यमापन्नो बहुशोकाकुलो भृशम्। द्वितीयं जन्म चैतद्धि ब्रह्मवंशसमुद्भवम् ॥ १२ ॥
अत्रापि चानपत्यत्वमेकापत्यत्वमेव वा ॥ १३ ॥

अरुण उवाच।

प्रायश्चित्तं कथं स्वामिन्येन वंध्यत्वनाशनम्। एकापत्यभवं दुःखं न स्याद्वास्यानपत्यता ॥ १४ ॥

श्रीसूर्य उवाच।

मार्गशीर्षे शुभे मासे शुक्लपक्षादितः खग। मत्यर्न्दं सुखसौख्याप्तिव्रतं तु प्रतिवासरम् ॥ १५ ॥
षोडशानां तु नारीणां पूजनं विधिपूर्वकम्। गौरीव्रतमिदं सूत सुखसौख्यफलप्रदम् ॥ १६ ॥
प्रातर्नियममारभ्याय दन्तधावनपूर्वकम्। अद्याऽहं शिवयोः प्रीतिमाचरिष्ये शुभव्रतात् ॥ १७ ॥
स्नानोपवासनिरता निशि जागरतत्परा। ततो मध्याह्नसमये स्नात्वा कुंकुमवाससी ॥ १८ ॥
परिधायार्चयेद्गौरीं पतिपुत्रवतीं स्त्रियम्। कुंकुमैः कज्जलैश्चालंकरणैः पुष्पमाल्यया ॥ १९ ॥
ताम्बूलैरपि कर्पूरैः सौभाग्याष्टकवस्तुना। ततश्चास्तमिते भानौ वर्तिं षोडशतन्तुभिः ॥ २० ॥
विधाय तिलतैलेन दीपं कुर्याच्छिवाग्रतः। गीतवादित्रनिर्घोषैः पुराणश्रवणादिभिः ॥ २१ ॥
नैवेद्यं विधिवत्कुर्यादपूपान्नादितण्डुलैः। तथा षोडशसंख्यानि वेणुशूर्पाणि कारयेत् ॥ २२ ॥
सप्तधान्यफलोपेतं सौभाग्याष्टकसंयुतम्। प्रत्येकदीपं विन्यस्य गौर्यग्रे वै प्रकल्पयेत् ॥ २३ ॥
पतिपुत्रसुखायैव पूजयन्तीं गिरेः सुताम्। भोजयेत्षोडशैवाथ शुभास्ताः पतिसंयुताः ॥ २४ ॥
एवं विधिं समास्थाय पूजयेद्दंपती शुभान्। नानाभोज्यैस्तथा पुष्पैः पक्षिभ्यो बलिमाहरेत् ॥ २५ ॥
दीनान्धकृपणेभ्योऽन्नं सर्पिष्यात्मानमीक्षयेत्। एतद्गौरीव्रतं नाम मार्गशीर्षे समाचरेत् ॥ २६ ॥
एवंकृतविधेः सूत प्राप्यते पुत्रपौत्रकम्। नारी नियमसंपूर्णा व्रतं कुर्यात्प्रयत्नतः ॥ २७ ॥
सुखसौभाग्ययुक्ता सा पतिपुत्रसुखाप्तये। ऐहिकं लक्षणं तस्या नार्याः श्रीतत्त्वजायते ॥ २८ ॥
उदरासिरसस्रावः पार्श्वपादकरादिषु। मिथ्याभिशंसनं क्वापि वाक्यदोषाद्धनच्युतिः ॥ २९ ॥
ख्यातिनिन्दा च हीनत्वं परेभ्यो मर्मतोदनम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरशताधिकसहस्रतमः ॥ ११९२ ॥

---

श्रीसूर्य उवाच।

शकृन्मूत्रं सृजेद्यस्तु देवागारे नराधमः। गुदरोगमवाप्नोति सोऽत्र जन्मनि मानवः ॥ १ ॥
मासैकं पूजयेद्विष्णुं शिवं वा विधिनाण्डज। प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनं सुत ॥ २ ॥
न पश्यति तदा पीडां गुदजामत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरशताधिकसहस्रतमः ॥ ११९३ ॥

---

श्रीसूर्य उवाच।

घातयेद्यः पुमान्नारीमज्ञानात्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत कृशो वलिविवर्जितः ॥ १ ॥
शर्कराधेनुदानेन दशसंख्येन चाण्डज। विमुच्यते कृशत्वाच्च शतब्राह्मणभोजनात् ॥ २ ॥
होमात्स्वस्त्ययनात्पाठाद्गायत्रीजपतोऽत्र च। तीर्थस्नानादाज्यदानाद्बली भवति नान्यथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्णवत्युत्तरशताधिकसहस्रतमः ॥ ११९४ ॥

---

श्रीसूर्य उवाच।

बालानां घातिनी चेयमभवत्पूर्वजन्मनि। तेनाद्यान्दमितादर्पादर्वाग्बालो न जीवति ॥ १ ॥

वेदाभ्यामान्महाभूत सावित्रीजपतस्तथा । गङ्गायां वासत सर्वात्पूर्वपापाच्च्युतोऽभवत् ॥ ५ ॥
न कुष्ठवृद्धिरत्रास्ति तत्कृते शमनं नहि । जीवेत्षष्टिमिताब्दान्नं रिष्टं चैव प्रणश्यति ॥ ६ ॥
गतिस्तस्य महाभाग वेदाभ्यासाच्चपात्तथा । भविष्यति शुभा लोके परत्र च खगेश्वर ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरद्विशताधिकसहस्रतम ॥ १२०९ ॥

श्रीसूर्य उवाच ।

कुलद्वयानन्दकारी पूर्वजन्मनि वैश्यजा । बभूव भर्तृसुहृदामाज्ञापालनतत्परा ॥ १ ॥
अत्र जन्मनि सा विप्रा काश्यां जाता हि सुव्रता । व्रतदानपरा चापि भर्तृतोषणलालसा ॥ २ ॥
पश्चपश्चाशदब्दान्ते प्रवेक्ष्यत्यन जन्मनि । स्वर्गकामा चिताग्नौ तु नात्र कार्या विचारणा ॥ ३ ॥
सा गामव्याते वै स्वर्गं चात्र जन्मनि वै नरः । भविष्यति महाराजकुले राजातिधार्मिकः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरद्विशताधिकसहस्रतम ॥ १२१० ॥

श्रीसूर्य उवाच ।

पीड्यते वातरोगेण दारुणेन पतत्त्रिण । पूर्वजन्मनि यस्मादादन्नं शूद्रगृहाश्रितः ॥ १ ॥
प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं स्मृतम् । व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजस्त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरद्विशताधिकसहस्रतम ॥ १२११ ॥

श्रीसूर्य उवाच ।

स्वगर्भं पातयेत्पूर्वं या नारी पापमोहिता । जलोदरकृता पीडा जायते चात्र जन्मनि ॥ १ ॥
रजतस्वर्णपात्राणां दानाद्रोगविनाशनम् । जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरद्विशताधिकसहस्रतम ॥ १२१२ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा । दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीन्न मुखता सगर्भा फललालसा । त्रोटितं वै तया धान्यफलं भोक्तुं विनाशना ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि । भवन्ति खलु ये पुत्रा अर्वागष्टाब्दतोऽण्डज ॥ ३ ॥
पश्च वमाप्नुवत्यन यस्मादकृतनिष्कृतेः । निष्कृतिं ता प्रवक्ष्यामि पूर्वपापविशोधिनीम् ॥ ४ ॥
शनिवारेऽण्डजश्रेष्ठ निर्मलाश्वत्थकं सुत । तत्तले ब्राह्मणान्सूर्यदिने एषा तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैः सापूपैरससंयुतैः । फलानि विकिरेत्तत्र कृत्वाश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेत्तं महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरद्विशताधिकसहस्रतम ॥ १२१३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या काचिद्दानयेद्ब्राह्मणं सुतम् । सात्र जन्मनि कुष्ठेन पापरोगेण पीड्यते ॥ १ ॥
ततो वै त्रिरने सा च गलत्कुष्ठेन चाण्डज । पापाज्ज्ञानकृतात्पूर्वांवचोक्ता निष्कृतिर्मया ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरद्विशताधिकसहस्रतम ॥ १२१४ ॥

श्रीसूर्य उवाच ।

देशे हि यामुने स्वामीत्पूर्वं वाहुजमंज्ञकः । गङ्गास्नानं कृतं पूर्वं बाहुजानां सहायतः ॥ १ ॥

शकटेन कुटुम्बस्य पालनं ह्यकरोत्तदा। एकस्मिन्दिने गत्वा ददाह वनमद्भुतम् ॥ २ ॥
वशं दैवस्य संप्राप्तो जीवा दग्धा महाबलाः। वन्योः साहाय्यतस्तत्र कृतं कर्मातिदारुणम् ॥३॥
शुभाच्छुभफलं भुक्त्वा पापाच्च नरकांस्तथा। माघे तु जाह्नवीस्नानात्स जातः शूद्रजे कुले ॥ ४ ॥
विपाशानिकटे देशे योजने सप्तसप्तिमिते। भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥
बहुलोभी बहुस्त्रीको देवतातिथिपूजकः। भ्रातृहीनः शठो धूर्तः पुत्रसन्ततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुर्भौमयुक्तोऽल्पसन्ततिः। लक्षणैर्लक्षितश्चैतैरवेहि गरुडाग्रज ॥ ७ ॥
वन्योः साहाय्यतस्तत्र कृतं कर्मातिदारुणम्। पुत्रावरोधकं कर्म बलवच्चैतदेव हि ॥ ८ ॥

अरुण उवाच।

प्रायश्चित्तं वद प्रभो सुतसौख्यविवर्द्धनम्। सर्वपापप्रशमनं लोकानां हितकारणम् ॥ ९ ॥

श्रीसूर्य उवाच।

प्रायश्चित्तं प्रवक्ष्यामि जन्तुदाहविनाशनम्। वनदेवी तेन कार्या पलेनार्द्धपलेन वा ॥ १० ॥
हिरण्मयी शुभाऽऽलेख्या पत्रे वै चतुरस्रके। वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः। राजतं पलमानं तु गणाध्यक्षं शिवात्मकम् ॥ १२ ॥
संपूज्य पुष्पगन्धाद्यैः सा देवी कार्यसाधिनी। सा वै देया विधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रजापतिस्तथा देयः सर्वकल्मषनाशनः। शृणुयाद्भारतं वापि पारायणविधानतः ॥ १४ ॥
अष्टाक्षरं तथा मंत्रं जपेच्च विधिपूर्वकम्। दशायुतं तदर्द्धं वा जपेच्च विधिपूर्वकम् ॥ १५ ॥
होमयेत्तद्दशांशेन तद्दशांशेन भोजयेत्। तावज्जपेत्सूर्यमंत्रं विधिवत्तर्पणादिकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते। य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ १७ ॥
तस्य पुत्रविवृद्धिः स्यादिह जन्मनि निश्चितम्। अकृते तु यथाशक्ति रिष्टं षट्पञ्च हेऽष्टके ॥१८॥
प्रायश्चित्ते कृते सूत जीवनं नवसप्ततिम्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशोत्तरद्विशताधिकसहस्रतमः ॥ १२१५ ॥

श्रीसूर्य उवाच।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत। साऽत्राजीर्णेन रोगेण दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यान्नानाविधं चान्नं रसैः सर्वैः समन्वितम्। विप्रेभ्यो भोजनं दद्याच्छक्त्या दद्याच्च दक्षिणाम् ॥२॥
होमयेच्च तथा चान्नाज्ज्वालामुख्या ऋचकेन तु। मुच्यतेऽजीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तरद्विशताधिकसहस्रतमः ॥ १२१६ ॥

श्रीसूर्य उवाच।

देवमूर्तिं च यः कश्चिद्देवागारस्थितां कुधीः। भग्नां कुर्यान्नरो मोहात्परेण स्थापितां पुरा ॥ १ ॥
अप्रतिष्ठो भवेदत्र जन्मन्यथ खगाधिप। वर्षत्रयं तथाश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरद्विशताधिकसहस्रतमः ॥ १२१७ ॥

श्रीसूर्य उवाच।

यश्चाचरेद्राजवधं मोहात्पूर्वभवे नरः। स राजयक्ष्मी विज्ञेयो घोरपापयुतो नरः ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः। गोभूहिरण्यमिष्टान्नतिलवस्त्रप्रदानतः ॥ २ ॥
ग्रासधेनुप्रदानेन क्षयरोगं न पश्यति। दानं यथानुमानेन सर्वस्वाद्दर्धमेव च ॥ ३ ॥

देयं द्विजवधाद्यैः तु विचार्यात्र प्रयत्नतः । तत्क्षणं काश्यपेयात्र क्षयरोगः प्रशाम्यति ॥ ४ ॥
रिष्टेनैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरद्विशताधिकसहस्रतमः ॥ १२१८ ॥

## श्रीसूर्य उवाच ।

या नरी घातयेत्काचित्परगर्भं पतत्रिण । जलोदरेण रोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगे स्थिते । तथा तज्जलपानेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२१९ ॥

## श्रीसूर्य उवाच ।

वाग्विरोधी भवेद्यश्च पूर्वजन्मनि वादिनः । सोऽत्र जन्मनि मूकत्वं व्रजत्येव न संशयः ॥ १ ॥
मोहादिदं चरेत्सूत दद्याद्दानं द्विजातये । वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वस्त्रैः शुद्धैः क्षौमजैर्गरुडाग्रज । एतत्तन्मूकतायस्य नाशनं समुदाहृतम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२० ॥

## श्रीसूर्य उवाच ।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवेऽभूत्सुतान्विता । अयोध्यासंभवा सुभूर्धनभर्तृसमन्विता ॥ १ ॥
पूर्वपापप्रभावेण सपत्न्या गर्भनाशनात् । जातेयं पादजात्रैव दुःखार्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणाशनम् । काश्यां गत्वा सुविधिना शिवमाराध्य यत्नतः ॥ ३ ॥
श्रेनैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः । शिवरात्रौ ततः पश्चाद्दीपमालादिनेऽण्डज ॥ ४ ॥
अर्धरात्रे महानद्या मध्ये स्नानं तु कारयेत् । मंत्रैर्वरुणसूक्तैश्च नौकायां वा पतत्रिण ॥
या चैवं कुरुते सम्यक्तस्याः स्यात्सन्ततिर्ध्रुवम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२१ ॥

## श्रीसूर्य उवाच ।

परनिन्दां तु यः कश्चित्प्राग्भवे चिन्तयामुत । कुर्याद्दुर्मतिमापन्नः खल्वाटी जायतेऽधुना ॥ १ ॥
दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम् । ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२२ ॥

## श्रीसूर्य उवाच ।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत । सात्र जन्मनि तत्काले क्षयरोगनिपीडिता ॥ १ ॥
यक्ष्मणा वै क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षये क्षयं याति तच्छरीरमसांप्रतम् ॥ २ ॥
दुष्कर्मकृतात्पापात्तस्मात्प्रोक्तं पतत्रिण । पापनाशकरं किञ्चित्कर्म चात्रैव जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२३ ॥

## श्रीसूर्य उवाच ।

या वाग्विरोधिनी नारी भर्तुः पूर्वभवे सुते । मूकत्वं जायते तस्याश्चात्र जन्मनि निश्चयात् ॥ १ ॥
तत्पापनाशनं दानं दद्याद्वेदस्य पुस्तकम् । विप्राय वेदविदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
होमयेच्च तिलान्भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२४ ॥

श्रीसूर्य उवाच।

या काचिद्दंजनं कुर्यान्नारी पूर्वभवेण्डज । प्रतिमाया देवगृहे स्थापितायाः परेण च ॥ १ ॥
अप्रतिष्ठान्विता सात्र जायते वै खगाधिप । वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२५ ॥

श्रीसूर्य उवाच।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः । गयायां द्वादशे वर्षे कृतवाञ्छ्राद्धमुत्तमम् ॥ १ ॥
विधिना तेन दत्तानि काम्यश्राद्धानि तत्र वै । ततो भाविबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम् । सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥ ३ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्स्वर्गफलं भुक्तं पापाच्च नरकं भृशम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपो मितदो घृणी । बहुदेशाधिकाराढ्यः पुण्यात्सर्वं फलं त्विदम्॥६॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । सन्तानसुखहीनस्तु सुरूपास्त्रीसुखोज्झितः ॥ ७ ॥
बन्धुहीनो व्ययी क्षीणः सर्वं तत्पापतः फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधिनीम्
कुबेरप्रतिमां रौक्मीं पञ्चस्वर्णमितां शुभाम् । तदर्धार्धमितां वापि निजवित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च । लक्ष्मीनारायणं दद्याच्छुभं स्वर्णेन निर्मितम्॥१०॥
शुभं लेख्यं पवित्रं च पुत्रसन्ततिवर्द्धनम् । य एवं कुरुते भक्त्या तस्य रिष्टं न जायते ॥ ११ ॥
प्रायश्चित्ते कृते त्वत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२६ ॥

श्रीसूर्य उवाच।

कश्चिद्द्विजो महाभाग ह्यासीद्वंगे हि धार्मिकः । गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः ॥ १ ॥
विधानात्तेन दत्तानि काम्यश्राद्धानि मानद । ततो भाविबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम् । सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥ ३ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्स्वर्गफलं भुक्तं पापाच्च नरकं भृशम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपोऽमितदो घृणी । बहुदेशेऽधिकाराढ्यः पुण्यात्सर्वं फलं त्विदम्६॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । सन्तानसुखहीनस्तु सुरूपस्त्रीसुखोज्झितः ॥ ७॥
बन्धुहीनो व्ययी क्षीणः सर्वं तत्पापतः फलम्। वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधिनीम्८॥
कुबेरप्रतिमां रौक्मीं पञ्चस्वर्णमितां शुभाम् । तदर्धार्धमितां वापि निजवित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैस्तां दद्याद्ब्राह्मणाय वै । लक्ष्मीनारायणं दद्यात्सुवर्णसंमितं शुभम् ॥ १० ॥
लेख्यं पवित्रं परमं पुत्रसन्ततिवर्द्धनम् । य एवं कुरुते भक्त्या तस्य रिष्टं न जायते ॥ ११ ॥
प्रायश्चित्ते कृते त्वत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२७ ॥

अरुण उवाच।

मिदेवकुलोत्पन्नो वाताधिकशरीरवान् । क्षामाङ्गः क्षीणवर्णश्च स्वल्पवृत्तिर्विजोविकः ॥ १ ॥

देवब्राह्मणभक्तश्च किंचिद्वेदपरायणः । करे पादे कुशत्वेण दंष्ट्राश्रृङ्गविधानतः ॥ २ ॥
व्रणो हि जायते दीर्घो नेत्रतोदो विराऽमिता । परोक्षमपवादं च ब्रूते लोकस्य सोऽन्वहम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं भाषते किञ्चित्किञ्चित्क्लेशस्य कारिणी ॥ ४ ॥
अपत्यानि मृतानीह तस्याः कानिचिदेव हि । वर्षत्रयमिता बाला म्रियन्ते माससम्मिताः ॥ ५ ॥
केन कर्मविपाकेन मृतापत्यं प्रजायते । उदरे हि स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
पृथगेवं तु भ्रातॄणां मृतापत्यत्वमेव च । गतो बहुतरः कालः कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वे वैनतेय तृतीयेऽत्रैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानधर्मदयायुक्तः प्रियाप्रीतिः परस्परम् । तस्य चापरमातुस्तु पिता मृत्युवशं गतः ॥ ९ ॥
तदौर्ध्वदैहिकं पुत्रैर्वित्तेन सदृशं कृतम् । मासत्रये ह्यतिक्रान्ते ज्येष्ठेनैव दुरात्मना ॥ १० ॥
निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात् । पुत्रशोकार्तया माता हृदयं ताडितं भृशम् ॥ ११ ॥
अभिघाताच्छिलाभूतात्प्रमुक्ता दिवं गता । अचिरेणैव कालेन ज्येष्ठश्चोरेण घातितः ॥ १२ ॥
द्वितीयं जन्म चैतद्धि मृतापत्यं प्रजायते । पुरा कृतानि कर्माणि भुञ्जन्ते चेह मानवः ॥ १३ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । लघूनामलघूनां च गर्भस्थानां हि तत्त्वतः ॥ १४ ॥

श्रीसूर्य उवाच ।

सौम्योऽयने तु संप्राप्ते ह्यनुकूलग्रहे दिने । सपत्नीकः शुचिः स्नातः पञ्चगव्येन चाञ्जसा ॥ १५ ॥
उपोषणदिने रात्रौ प्रातश्चानुदिते रवौ । सुरभेर्वै सगर्भाया गोमयेनोपलेपयेत् ॥ १६ ॥
सुशुभे भूप्रदेशे तु कुंकुमाद्युपचर्चिते । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १७ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं सचतुर्भुजम् ॥ १८ ॥
उपचारैः शुभैर्गन्धधूपैश्च कुसुमादिभिः । जनन्यासहितान्देवान्प्रद्युम्नाद्यांस्तथाऽर्चयेत् ॥ १९ ॥
चारुदेहं सुवेशं च चारुगुप्तं यशोन्वितम् । इभवाहं चारुबाहुं सुचारुं पूजयेत्क्रमात् ॥ २० ॥
पूजनं विष्णुसूक्तेन तथा श्रीसूक्तकोविदैः । पुष्पसाधूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः ॥ २१ ॥
तद्विमासोऽथ तद्विष्णोरतो देवानभिपूजयेत् । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै ॥ २२ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् । "यन्मया पापकेनाघं कृतं वै पूर्वजन्मनि ॥ २३ ॥
स्वपत्न्या वै वधो मोहात्पुत्राणां तु तथैव च । स्वकन्याहननाच्चापि भूमिद्रव्यादिलिप्सया ॥ २४ ॥
लघूनामलघूनां च हननात्पूर्वजन्मनि । यच्चाघं वै मया प्राप्तं दुःखं नानाविधं त्विदम् ॥ २५ ॥
तत्तदेनोविनाशाय दानं संप्रददे त्विदम् । " स्वस्त्यस्तु चेति तत्रोक्त्वा कोऽदादिति विसर्जनम् ॥
सपिण्डान्मानमालोक्य भुञ्जीत द्विजबन्धुभिः । ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिदोषतः ॥ २७ ॥
काष्ठलोष्ठादिशस्त्राद्यैर्वातः स्याद्बालक्रीडनात् । जलादग्न्यादिना बाधा ब्राह्मणाश्मादिना तथा ॥
नार्यङ्गे विकृतिर्व्याधी मुखे तिलव्रणादिकम् । पत्नीयमातुलान्यादिनेत्रतोदादिकं तथा ॥ २९ ॥
स्वसुर्मातृष्वसुर्वापि बालवैधव्यतादिकम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरद्विशताधिकसहस्रतमः ॥ १२२८ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोहात्परनिन्दां समाचरेत्। पट्ट युता सा हि जायतेऽत्रैव जन्मनि ॥ १ ॥
धेनुं दद्यान्महाभाग विधियुक्तां सकम्बलाम्। तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२२९ ॥

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः। गण्डमालारुग्रोगेण संयुक्तो जायतेऽत्र वै ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। गृहीत्वा कम्बलं शुद्धं नवं वेदविदे च तत् ॥ २ ॥
कुटुम्बिने दरिद्राय दद्याद्दोषापनुत्तये। गण्डमालाहरं चैतद्दानमुक्तं मया त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२३० ॥

श्रीसूर्य उवाच।

कुलघ्नीयं महादुष्टा पूर्वमासीत्खगाधिप। अत्र पूर्वकृतात्पुण्यान्मानुषी संकरा स्मृता ॥ १ ॥
धनपुत्रविहीना सा चात्र जन्मनि दृश्यते। निष्कृतिं तु प्रवक्ष्यामि प्रयागे मरणात्पुनः ॥ २ ॥
वासात्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२३१ ॥

श्रीसूर्य उवाच।

पक्षपातं तु यः कुर्यात्सभायां ब्राह्मणस्य च। पक्षाघातेन रोगेण पीडितोऽत्रैव जायते ॥ १ ॥
दद्यान्निष्कत्रयं स्वर्णं ब्राह्मणाय कुटुम्बिने। तस्माद्रोगाद्विमुच्येत पक्षाघातात्पतत्त्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२३२ ॥

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा। गण्डमालारुग्रोगेण संयुक्ता जायतेऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। पूर्वपापहरं पुण्यं दद्यादत्र च कम्बलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते। द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२३३ ॥

श्रीसूर्य उवाच।

अवधीद्बालकं कश्चिद्ब्राह्मणस्य खगाधिप। वङ्गदेशे वसन्पूर्वं चात्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः। धनवान्परतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥
विद्यादानात्क्रतात्पूर्वं शृणु पापफलं तथा। क्षयरोगाकुलः क्षीणः पुत्रसन्ततिवर्जितः ॥ ३ ॥
विप्रबालकघातोत्थपातकाद्धि खगाधिप। महाक्रोधपरो लोभी नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य बालघातविमोचनीम्। प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेच्छिवमच्छिद्रम्। गन्धपुष्पैस्तथा धूपैर्लक्षसंख्याविधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा। षडस्रे चतुरस्रे वा कुण्डे चाज्यतिलाञ्शुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्रान्क्षैरान्नसारलड्डुकैः। नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥८ ॥
विविधां दक्षिणां दद्याद्रुद्रप्रीतिकरीं तथा। यथानेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥

स बालघातजा पापान्मुच्यतेऽत्र ममाज्ञया । चतुर्दश्यामथाऽष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः । पूजयेदर्घपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तमहं सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर । आयुस्तस्य शतं प्रोक्तं पञ्चवर्षाधिकं खग ॥ १२ ॥
प्रायश्चित्ते कृते यस्मात्पञ्चम्या चन्द्रवासरे । प्रायश्चित्तेऽकृते सूत चत्वारिंशन्मिताब्दके ॥ १३ ॥
रिष्टं स्यात् क्षयरोगेण सप्तजन्मनि निश्चयात् । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥१४॥
नहीदृशं महापुण्यं क्षयरोगविनाशनम् । पुत्रवृद्धिकरं चात्र यथा प्रोक्तं शिवार्चनम् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३४ ॥

## श्रीसूर्य उवाच ।

विनापराधं या नारी परपक्षं च घातयेत् । पक्षाघातेन रोगेण पीडिताऽत्रैव जायते ॥ १ ॥
तया निष्कमितं स्वर्णं देयं पापविशुद्धये । मुच्यतेऽत्र महारोगात्पक्षाघातान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चत्रिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३५ ॥

## श्रीसूर्य उवाच ।

कुण्ठादागतस्तत्र मथुराया खगाधिप । जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
योगे कलियुगे प्राप्ते पापानान्ते महाजले । भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्त्रिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३६ ॥

## श्रीसूर्य उवाच ।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज । कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
दद्यात्सुवर्णं सततं स तद्दोषविनाशनम् । चान्द्रायणत्रयं कुर्यात्तदा तद्दोषशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्रिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३७ ॥

## श्रीसूर्य उवाच ।

राजघातकरी प्रोक्ता या पूर्वे घातयेन्नृपम् । राजयक्ष्मान्विता सात्र तस्मिन्नयसि भामिनी ॥ १ ॥
प्रायश्चित्तं परं तस्याः शृणुष्वात्र खगेश्वर । यस्मिन्कृते हि विधिना पूर्वजन्माघनाशनम् ॥ २ ॥
स्वर्णगोभूमिमिष्टान्नतृणधेनुतिलानि च । देयानि श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्तेऽकृते त्विह ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३८ ॥

## श्रीसूर्य उवाच ।

विनापराधं यः कश्चिद्द्रव्यं हन्यात्खगाधिप । प्राग्जन्मन्यथ युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥१॥
भविष्यति न सन्देहस्तस्य मृत्युः खगाधिप । अपि दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥
त्रिंशे वर्षे महारिष्टं रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरद्विशताधिकसहस्रतम ॥ १२३९ ॥

## श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्द्रव्यमन्यजन्मनि मानवः । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥

प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग क्षयः पापरुजोऽपि हि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४० ॥

श्रीसूर्य उवाच।

मेरोः समागता येयं शक्तिर्मायुरमण्डले । सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगेऽप्येव सर्वपापविवर्जितम् । कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४१ ॥

श्रीसूर्य उवाच।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । सात्र जन्मनि मूत्रस्य कृच्छ्रेणाति प्रपीड्यते॥१॥
प्रायश्चित्तं परं तस्या घोरपापहरं सुत । सुवर्णपद्मदानं च सपत्रं अष्टदेयतम् ॥ २ ॥
ब्राह्मणाय विधिज्ञाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४२ ॥

अरुण उवाच।

कश्चिद्द्विजोत्तमो जातः किंचिद्वित्तसमन्वितः । कासश्वासादिना बाधा क्षुदरार्तिश्च तस्य वै ॥ १ ॥
क्रयविक्रयकर्तासौ कृषिवाणिज्यतत्परः । भिया प्रीतिपरा तस्य अन्नानामनुकांक्षिणी ॥ २ ॥
किंचित्क्रोधयुता सा वै कुवाक्यानाञ्च भाषिणी । उदरे वातजा रोगा शिरोर्तिर्नेत्रतोदनम् ॥३ ॥
नैकोऽपि दिवसस्तस्या यस्मिन्सा मुदिता भवेत् । रजोदोषात्प्रपीड्येत वेदनाभिस्तथातुरा ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच।

भर्तुः कृतं कर्म नैतत्स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि सा शूद्री द्विजभक्तिपरायणा ॥ ५ ॥
व्रतानि विविधान्येव चक्रे वै सुखकांक्षिणी । तद्गृहे धान्यराशेस्तु भक्षणाय समागताम् ॥ ६ ॥
ब्राह्मणस्य शुभां गां वै धान्यराशिं समश्नतीम् । गृहीत्वा लकुटं सा वै भृशं कुक्षावताडयत्॥७॥
सगर्भा सुरभिर्वत्स गर्भः कुक्ष्युपघातनात् । मृतः सा सुरभिर्वत्स प्रसवे दुःखिता भृशम् ॥ ८ ॥
शिशुदुःखेन सुरभिर्भृशमाक्रंदती मृता । तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ ९ ॥
पश्चान्मानुष्यमाप्ना व्रतदानप्रभावतः । तृतीयं जन्म चैतद्धि मृतापत्यत्वकारकम् ॥ १० ॥
सप्तजन्मनि चैवं हि गोस्त्रीगर्भवधाद्ध्रुवम् । नानाप्रकर्मणान्येषां नानापत्यार्थदुःखता ॥ ११ ॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन्येनापत्यं हि जीवति । अनुग्राह्योऽस्म्यहं देव लोकानां हितकाम्यया ॥१२॥

श्रीसूर्य उवाच।

मासे नभसि संप्राप्ते ह्यनुकूलेऽह्निऽहनि । सपत्नीकः शुचिः स्नात्वा औषधैः स्नानमंत्रतः ॥ १३ ॥
उपोषणं दिवारात्रौ प्रयोदश्यामतन्द्रितः । पूर्णमास्या दिनं प्राप्य प्रातर्भानूदिते सति ॥ १४ ॥
सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । तत्रोपरि गवां स्थानं चोदङ्मुखसमाश्रितम् ॥ १५ ॥
अर्हणाद्युपचारैश्च कुंकुमाद्यैः समर्चयेत् । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १६ ॥
तत्रोपरि न्यसेद्देवं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं सचतुर्भुजम् ॥ १७ ॥

उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । विष्णुसूक्तेन सूक्तेन श्रियः सूक्तेन पूजनम् ॥ १८ ॥
पुष्पैश्च गन्धधूपाद्यैरर्चयेद्विविधैर्गुणैः । रुद्रैकादशनीभिश्च जपेद्रुद्रविधानतः ॥ १९ ॥
तथा लक्षामितैः पुष्पैरर्चयेद्गन्धवारिभिः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वा ॥ २० ॥
रुद्रस्यायुतहोमश्च समिदाज्यादिभिश्चरेत् । एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥ २१ ॥
होमान्ते विप्रभोजान्ते मन्त्रमेतमुदीरयेत् ॥ २२ ॥

मन्त्रः ।

"यन्मया कर्मवशतः पुराजन्मनि दुर्धिया । गोः कृतो गर्भघातो हि लकुट्या कुक्षिघातनम्॥२३॥
तेन वै कर्मणा प्राप्तं मृतगर्भादिकं भृशम् । मृतसन्तानजदुःखानि प्राप्यन्ते च तदेनसः ॥ २४ ॥
तत्तदेनोपशान्त्यर्थं दानं संप्रददाम्यहम्" ॥ २५ ॥

स्वस्त्यस्तु तेति स प्रोक्तो कोशादिति विसर्जयेत् । सर्पिष्यात्मानमालोक्य शक्त्या वै तोषयेद्विजान्॥२६
भूमिद्रविणवासांसि दानं दत्त्वा विधानतः । व्रतान्ते सुरभिं दद्याद्धेम द्रव्यादि शक्तितः ॥ २७ ॥
अहःशेषं ततः सर्वं भोजयेदिष्टबन्धुभिः । ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ २८ ॥
काष्ठलोष्टादिशस्त्राद्यैर्घातः स्यादुपलेखनात् । श्रृंगिणां चोपघातानि जायन्ते प्रगजार्त्तयः ॥ २९॥
जलाकुलत्वं स्पर्शोविरत्नादत्र प्रजायते । नार्यंगे विकृतिव्याधी मुखे तिलव्रणादिकम् ॥ ३० ॥
पितृजामातुलान्यादेर्विधवार्त्तिश्च जायते ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४३ ॥

---

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । प्रदरेणातिदुःखेन सात्र जन्मनि पीड्यते ॥ १ ॥
प्रायश्चित्तं परं तस्याः प्रदरं नाशयेन्महत् । दद्याद्रत्नमयं पद्मं सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय यथाविधि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४४ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रस्त्रिविर्वा वै सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं व्रजेत् ॥ १ ॥
चिह्नेन श्यावदन्तेन लक्षितः पापजः सदा । सप्तजन्मनि रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
इत्यात्मकपापजातस्य न प्रायश्चित्तं न विद्यते । पापक्षयार्थं विधिवत्कृच्छ्रसान्तपनं चरेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४५ ॥

---

श्रीसूर्य उवाच ।

अकामतश्च या नारी वेश्यवातनतत्परा । पूर्वजन्मनि पक्षीन्द्र सात्र जन्मनि निश्चयात् ॥ १ ॥
रक्तार्बुदसमाक्रान्ता दुष्टपापप्रयोजिता । महारिष्टेन सा याति यमलोकं खगाधिप ॥ २ ॥
चत्वारिंशन्मिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४६ ॥

---

श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या सुरजाता च बाहुजा । देवी सारस्वते ख्याता सर्वकर्मान्विता सती ॥ १ ॥

क्षयरोगयुता चात्र युवभावे खगाधिप। प्राक्पापादुत्तरात्सुत कंठपादादिसम्भवात् ॥ २ ॥
निष्कृतिं कदलीं दद्यात्सुवर्णत्रयसंयुताम्। भोजयेद्ब्राह्मणान्पश्चाच्छिवपूजनतत्परान् ॥ ३ ॥
या त्वेवं कुरुते भक्त्या कदलीदानमुत्तमम्। नश्येच्च क्षयरुक्तस्याः सुखमाप्नोति वै ध्रुवम् ॥ ४ ॥
आयुर्वर्षाणि षष्टि स्यात्तथा सप्तादिसंख्यकम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४७ ॥

## श्रीसूर्य उवाच।

यो नरोऽतिचलोत्कर्षात्परस्त्रीं कामयेत्पुरा। इह वै यौवने प्राप्ते सोन्मादी जायते भृशम् ॥ १ ॥
दद्यात्प्रजापतिं देवं सौवर्णं शक्तितोऽण्डजः। मृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणान्भक्त्या होमयेच्च जपेत्तथा। गायत्रीं विधिना सूत सोन्मादान्मुच्यते त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४८ ॥

## श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी। साऽत्र जन्मनि रोगेण कुनखाख्येन बाध्यते ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज। सुवर्णस्तेयपापेन मुच्यतेऽत्रैव जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासि तु कार्तिके ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदुत्तरद्विशताधिकसहस्रतमः ॥ १२४९ ॥

## श्रीसूर्य उवाच।

वैश्यहा यो भवेत्पूर्वं भवे ना चात्र निःप्रजाः। रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम्। सप्तधान्यस्य दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पचाशदुत्तरद्विशताधिकसहस्रतमः ॥ १२५० ॥

## श्रीसूर्य उवाच।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यान्वितः सुधीः। स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोत्साही देशे केरलके सुत। स्वामिधर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः। दुष्टाः प्रजाः क्रोधयुक्ताः बभूवुर्विमुखास्तदा ॥३॥
तस्मिन्काले त्वभूद्युद्धं घोरं तस्मिन्पुरे तदा। संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभागा साध्वी पतिपरायणा। तस्मिन्मृते मृता सा तु भर्तुः प्राणावलंबिनी ॥५॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतिव्रता। मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तदा ॥ ६ ॥
तद्गुणैः सातकालेऽपि दिवि प्राप्ता सभर्तृका। भुक्त्वा तत्र महाभोगान्स्वामिप्राग्धर्मसम्भवान् ॥७॥
नानाप्रजाघातजानि पापान्यथ बुभोज सा। क्षीणात्पुण्यात्तथा जज्ञे म्लेच्छदेशे तु तत्पतिः ॥८॥
सिन्धोः पश्चिमभागे तु शतयोजनसम्मिते। गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुखैर्युक्तो गजयूथैः समावृतः। पत्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोग्रः पुत्रपौत्राढ्यश्चात्यंतसुखसंयुतः। देशेदेशेऽधिकारी च स म्लेच्छः पृथिवीपतिः ॥ ११ ॥
स्त्रीसाहाय्यान्महाभाग तथा पुत्रसमन्वितः। सुखैश्वर्ययुता साऽपि यवनी तद्वशा त्विह ॥ १२ ॥
सपुत्रः प्राक्सहाय्याच्च सोप्यत्रैव महाप्रभुः। एवं जन्मफलं प्रोक्तं ससाहाय्यात्खगाधिप ॥ १३ ॥
स्वामिधर्मकृतात्पुण्यात्तदर्थमरणादपि। भविष्यति गतिस्तेषां पूर्वपुण्यात्खगेश्वर ॥ १४ ॥

पञ्चाशीतिसमायुस्यात्रच रिष्टेन तन्मृतिः । रिष्टं पञ्चाशत्तमेब्दे स्वदेहान्तसमं सुत ॥ १५ ॥
शस्त्रप्रहारैर्विविधैः प्राप्स्यत्यत्र रणाङ्गणे । प्रजापीडनजातपापात्तद्वर्षे नात्र संशयः ॥ १६ ॥
दद्यात्कालनरं तत्र ब्राह्मणाय कुटुम्बिने । देयो हिरण्मयस्तद्ध्वजः शतपलात्मकः ॥ १७ ॥
कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु । सर्वोपस्करसंयुक्तः देयश्चायं तु पुत्रक ॥ १८ ॥
महारिष्टहर प्रोक्त प्रायश्चित्तमिदं महत् । नातः परतरं प्रोक्तं दानात्कालनरात्कचित् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५१ ॥

श्रीसूर्य उवाच ।

या काचिद्यौवने नारी रमयेत्स्वेच्छया परम् । बलात्कारेण पुरुषं सात्रोन्मादेन पीड्यते ॥ १ ॥
तत्पापनाशनं श्रेष्ठमुपायं शृणु यत्नतः । कृत्वा सुवर्णजं वायुं मृगं हैम च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्त दद्याद्धिमान धीमते । न प्राप्नोति वदोन्मत्तभाव दानप्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५२ ॥

श्रीसूर्य उवाच ।

त्रपुहारी च यः पूर्वं जन्मन्यत्रैव जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्या[illegible] [illegible] [illegible] गेम्ने । पलानां त्रिशनं शुद्धं तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५३ ॥

श्रीसूर्य उवाच ।

पत्या जीवति या जाराद्गर्भं धृतवती पुरा । सा चात्र पादजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्ताद्यथोदितात् । प्रायश्चित्ते कृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दमीविनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५४ ॥

श्रीसूर्य उवाच ।

आखेटकं विना यस्तु हस्तिनं प्राग्जघान वै । सोऽत्र जन्मनि जायेत सर्वकर्मस्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव तदा काले तस्य रिष्टं प्रकीर्तितम् । तस्य विंशतिमे वर्षे खग शस्त्रान्मृतिर्भवेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५५ ॥

श्रीसूर्य उवाच ।

यः कश्चिद्ब्राह्मणीं सूत बलोत्कर्षेण मन्दधीः । रमयेत्प्राग्भवे सोऽत्र महोन्मादी प्रजायते ॥ १ ॥
पापादसाध्यरोगाद्वै तस्य मुक्तिर्न जायते । म्रियते रिष्टयोगेन सोन्मादोऽत्र च जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्पञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५६ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी मोहाल्लोभाद्धरेत्त्रपु । सात्र जन्मनि पक्षींद्र श्लेष्मरुक्सयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपु तत्पापशुद्धये । तत्पापस्य क्षये सूत श्लेष्मरोगस्य नाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदुत्तरद्विशताधिकसहस्रतम ॥ १२५७ ॥

श्रीसूर्य उवाच।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः । धनधान्यसुखोपेतश्चेष्यालुश्च जनान्वितः ॥ १ ॥
सुव्रतः शक्तिमान्वीरः किश्चिद्व्याधिसमन्वितः। इन्द्रियाणां बलं हत्वा मेही वै जायते भृशम्॥२॥
उदरार्तिरसस्रवतः किञ्चिद्देहे प्रवर्तते । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक्सत्यपा लोके व्रतानामनुकांक्षिणी । वहुपुत्रान्हि सुषुवे कथञ्चित्कोऽपि जीवति ॥ ४ ॥
अथवा मृतपुत्रा च पुत्र्यो जीवन्ति वा सुत ॥ ५ ॥

अरुण उवाच।

केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ६ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि विप्रस्तु प्रतीच्यां समजायत। तस्य गेहे स्थिता कन्या प्रौढा साभूत्कियद्दिनैः ॥ ७ ॥
भूरिद्रविणलोभेन वृद्धविप्राय सार्पिता । धनं विप्रस्य तत्पित्रा हृतं कन्यावलेन वै ॥ ८ ॥
यावत्कन्या भवेत्प्रौढा पतिसङ्गमकांक्षिणी। पतिभक्तिपरा नित्यं यावत्कन्या सुतार्थिनी ॥ ९ ॥
किश्चिद्वर्षे व्यतिक्रान्ते वृद्धविप्रो मृतश्च वै। सा बाला विधवा जाता पत्यपत्यार्थदुःखिनी ॥ १०॥
व्रततीर्थरता नित्यं सत्यानामनुकांक्षिणी । बहुवर्षैस्तया वत्स नियमैः शोषितं वपुः ॥ ११ ॥
पित्रा धनं गृहे भूरि त्वर्पितं कन्यकाकृते । अथ कालवशात्प्राप्ता मृतिं वै ब्राह्मणी खग॥ १२ ॥
सा पुत्री ह्युदरे भूत्वा ह्यगमज्जन्मजन्मनि । कन्या बहुविधास्तस्या निराधारा मृताश्च वै ॥ १३॥
तेन कर्मप्रभावेण बहुकन्याजनिः किल । तद्भार्यायाश्च गर्भे वै जायते मृतिमिच्छति ॥ १४ ॥
पुनर्जन्म पुनर्मृत्युर्जायते निष्कृतिं विना । कन्याविक्रयकर्ता च रौरवे नरके गतः ॥ १५ ॥
यातना बहुधा भुक्ता वर्षाणाञ्च सहस्रकम् । पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ १६ ॥
इदं जन्म चतुर्थं वै पुत्रीजन्म हि यत्र वै । मृतपुत्रो मृतो गर्भस्तेन वै कर्मणा च सः ॥ १७ ॥
भार्या तस्याऽपि विप्रस्य पूर्वजन्मनि मानद । भर्तृविद्वेषिणी जाता न ह्यपत्याऽनुरागिणी ॥१८॥
तेन कर्मविपाकेन भूरि कन्या मृताः सुत ॥ १९ ॥

अरुण उवाच।

प्रायश्चित्तं कथन्देव येन पापं प्रणश्यति । निष्कृतिं वद मे स्वामिन्पृथक्त्वं मे प्रकाशय॥ २०॥

श्रीसूर्य उवाच।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मणा येन पापेन शृणु त्वं कश्यपात्मज ॥२१॥
स्वकन्यां वरयोग्यां वै चिंतयित्वा शुभे दिने । प्रयतेत विवाहार्थं यथाशक्ति यथामति ॥ २२ ॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । अलंकृतां यथाशक्ति वराय गुणशालिने ॥ २३ ॥
ब्राह्मेण विधिना सूत दद्याच्च बहुदक्षिणाम् । महापापोपशमनं कन्यादानमतन्द्रितः ॥ २४ ॥
कन्याविवाहसमये महाशान्तिविधिं चरेत् । एवं कृतविधौ सूत कन्यां दत्त्वा विधानतः ॥ २५ ॥
शांतिकर्मणि सर्वत्र वृणुयाद्दत्विगादिकान् । भूमिद्रविणवासांसि कन्यावासांसि वै ददेत् ॥ २६ ॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम् । वर्षेवर्षे तु सम्पूर्णे ह्यन्नवस्त्रादिकं ददेत् ॥ २७ ॥
एवंकृतविधौ सूत बहुपुत्रा यशस्विनः । पापं पुत्रविनाशाख्यं कन्यापत्यादिकं च यत् ॥ २८ ॥
तस्य सर्वस्य नाशार्थं कन्यादानं स्मृतं खग । नाशमेतेन पापं च द्विजानां विधिनार्चनात् ॥२९॥
यजन्यज्ञविधानेन ब्राह्मणान्स्वस्ति वाचयेत् । विनायकांबिकामूर्ती हेमनिष्कप्रमाणतः ॥ ३० ॥

आचार्याय ददेत्ते च नानादोषप्रशान्तये । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ३१ ॥
जिह्वारदनदन्तोष्ठव्रणो वातादितो भवेत् । नृपचौराग्निहानिश्च चिन्तादैश्च यतस्ततः ॥ ३२ ॥
तस्य मानेन मनसा दूयते भृशमाधिना । सर्पिष्यात्मानमालोक्य प्रायश्चित्तं समाचरेत् ॥ ३३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरद्विशताधिकसहस्रतमः ॥ १२५८ ॥

श्रीसूर्य उवाच ।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२५९ ॥

श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले जातः प्रागसौ चारणस्त्विह । गौरः कलानिधिर्धीरो धनपुत्रसमन्वितः ॥ १ ॥
द्विजाङ्घ्रिताडनात्पूर्वं दद्रुरोगनिपीडितः । उमामाहेश्वराद्दानात्सौवर्णाच्छक्तितोऽण्डज ॥ २ ॥
पूर्वपापविशुद्धिः स्यात्तिलाज्यमधुहोमतः । गायत्र्या दशसाहस्रजपाद्ब्राह्मणभोजनात् ॥ ३ ॥
तदन्ते कपिलादानात्सूर्यभक्तिप्रसादतः । नाशमायाति स क्षिप्रं दद्रुरोगोऽतिदारुणः ॥ ४ ॥
न चासौ रोगजं दुःखमाप्नोतीह ममाज्ञया । रिष्टमाप्नोति षष्ठ्यब्दे प्रायश्चित्तविवर्जनात् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२६० ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजवरो ह्यासीद्देशे मगधके पुरा । धनधान्यसमायुक्तश्चोग्रकर्मा महोद्यमी ॥ १ ॥
तीर्थयात्राप्रसंगात्स गयायामगमत्खग । स चकार गयाश्राद्धं प्रयागे स्नानमाचरत् ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम् । ग्रामे निवसतश्चान्यक्षत्रियस्य खगाधिप ॥ ३ ॥
ददाह भवनं रम्यं शत्रुभावात्स दुष्टधीः । तत्र जीवा भूरि दग्धास्तथा वत्सतरी शुभा ॥ ४ ॥
कालयोगेन स प्राप्तः यमसादनमद्भुतम् । पापाच्च नरकान्भुक्त्वा महात्रासकरान्खग ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः क्षत्रियोऽधुना । गंगायाः प्रान्तरे देशे नानापुण्यप्रदे शुभे ॥ ६ ॥
स शूरो बलवान्दुःधर्मे स्वल्पमतिः शठः । बुद्ध्याऽधिकः प्रचारी च पैतृकस्वल्पवित्तभाक् ॥ ७ ॥
सकन्यश्च सपत्नीको बंधुमृत्यसुखान्वितः । धर्मादिदं तथा पापात्फलमत्र शृणुष्व हि ॥ ८ ॥
गोबालवत्सकवधाज्जीवघातादपुत्रकः । पञ्चपञ्चमितब्दान्तं जातपुत्रविनाशकः ॥ ९ ॥
बालगोघातजान्याशु पापानि सुतहानि हि । गोत्राशिगे शनौ सोमात्पष्ठे जीवे मृगस्थिते ॥ १० ॥
चिन्त्यं लग्नादिदं सूत पृच्छ कस्यात्र जन्मनि । पूर्वं या स्त्री सहायासीन्मृतवत्साऽत्र सा सुत ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापविशोधिनीम् । सुतवृद्धिकरीं धन्यामिह जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधिनीम् । मतस्वर्णमिता कार्या सुरभी च हिरण्मयी ॥ १३ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
माषैः पञ्चमितैर्देयस्तथा पशुपतिः सुत । माषाभ्यां च तथा वह्निर्जीवा माषचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये । जपेत्पशुपतेर्मन्त्रं सहस्रं दिग्दिनावधि ॥ १६ ॥

होमयेत्तद्दशांशेन रुद्रस्याग्रे प्रयत्नतः। शृणुयाद्वा हरेर्वंशं दशावृत्त्या विधानतः॥ १७॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं त्रिधा मतम्। जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र खगाधिप॥१८॥
सप्तपञ्चमिताब्दान्तं प्रायश्चित्तेन जीवति। पञ्चपञ्चमिताब्दान्ते रिष्टं चाकृतनिष्कृतेः॥ १९॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरद्विशताधिकसहस्रतमः॥ १२६१॥

---

श्रीसूर्य उवाच।

आसीत्क्षत्रकुले कश्चिन्नीतिशास्त्रविशारदः। नासके राजमंत्री च स्वामिधर्मरतः सुधीः॥ १॥
शिवभक्तिपरो धीरः स्त्रीपुत्रधनसंयुतः। दत्तानि तेन दानानि ब्राह्मणेभ्यः स्वशक्तितः॥ २॥
भूशय्यावाहनादीनि विविधान्नानि पर्वसु। सुवर्णादिकपात्राणि वस्त्राणि विविधानि च॥ ३॥
नृपाज्ञया गतः सोऽथ नृपः शत्रुपुरं प्रति। गावो नीता महाभाग तेन शत्रुपुरात्ततः॥ ४॥
तत्रैका सुरभी सूत ह्यासन्नप्रसवा हृता। तेनाऽज्ञातेन तेनाऽपि ताडिता सा भृशाकुला॥ ५॥
गर्भपातोऽभवत्तस्या भृशं तत्परिताडनात्। मृता सा तेन दुःखेन गर्भपातेन चाण्डज॥ ६॥
तेन स्वामिरतेनाऽपि कृतं तत्कर्म दारुणम्। महापापं कृतं तेन भाविनोऽर्थस्य गौरवात्॥ ७॥
साहाय्यतश्च कस्यापि कृतं कर्म शुभाऽशुभम्। अथ किंचिद्गते काले प्राप्य धर्मपुरं प्रति॥ ८॥
पापाद्दुष्टफलं भुक्त्वा शुभाच्छुभफलं तथा। पुण्यपापविशेषाच्च स्वामिधर्मरतेस्तथा॥ ९॥
नानादानाद्वणिक्चात्र सन्निहत्यापुरेऽजनि। पञ्चयोजनविस्तीर्णे स च मध्यस्वरूपधृक्॥ १०॥
रक्तः श्यामोऽथ मतिमानायुष्यः समदेहधृक्। राजप्रचारी विधुषोऽभितदः स्त्रीसुखान्वितः॥११॥
पितृमातृसुखैर्हीनो नानास्थानाऽधिकारवान्। पित्तश्लेष्माधिको मानी यशस्वी बहुमित्रयुक्॥१२॥
सभायां चतुरो धीरो बहुमान्यः प्रियंवदः। धनधान्यसुखैश्वर्यबहुस्त्रीभोगभागिह॥ १३॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। हठी धूर्तोऽसौ द्वेषी स्वल्पसन्ततिसंयुतः॥१४॥
क्लेशैर्मर्मैर्मनोदुःखैर्भुज्यते च क्वचित्क्वचित्। गोबालवत्सकवधाक्रान्तपापाद्य चाण्डज॥ १५॥
अष्टपञ्चाशदब्दान्तं जातपुत्रविनाशकः। गोबालब्राह्मणवधात्स्त्रीपुत्राणां विनाशकः॥ १६॥
गोबालस्त्रीद्विजवधात्पापाद्वंशविनाशनम्। तद्यथालक्षणं सर्वं वक्ष्याम्यत्र खगेश्वर॥ १७॥
गोवधे ये सहायाः प्राक् तेऽत्र भर्तुः सुता मृताः। चित्रभंगे स्थिरं सूत्र मत्युरत्रैव जन्मनि॥ १८॥
गवां दण्डाभिघातादि ह्यत्रशाधिस्तनौ गतः। लक्षगोभिताडनस्य प्रायश्चित्तं वदाम्यहम्॥ १९॥
त्रिपलैर्निर्मितां चैव धेनुं कुर्याद्धिरण्मयीम्। पत्रे लेख्यं यथा चारं सगर्भाभरणान्विताम्॥ २०॥
तदर्धार्धमितां वापि निजवित्तानुसारतः। संपूज्य गन्धपुष्पाद्यैर्मन्त्रैश्चाऽपि विशेषतः॥ २१॥
तांश्च दद्याद्विविज्ञाय मन्त्रमेतदुदीरयन्॥ २२॥

मन्त्रः।

"मया ज्ञानात्तथाऽज्ञानात्पीडिता सुरभी पुरा।
तद्दोषशमनायैव ददेऽहं त्वां हिरण्मयीम्। देवि त्वं मम पापानि तत्क्षणाद्भस्मसात्कुरु"॥ २३॥
इत्युच्चार्य नरो दद्यात्पूर्वपापाद्विमुच्यते। सुवर्णकमितं तद्वद्दद्यात्पशुपतिं विभुम्॥ २४॥
स्त्रीपुत्रधनधान्यादेः सुखं वै भजते ध्रुवम्। नैवं विधानं यः कुर्यान्नच पुत्रसुखं भवेत्॥ २५॥
प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके। प्रायश्चित्ते कृते ह्यायुः चतुःसप्तति वै समाः॥२६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरद्विशताधिकसहस्रतमः॥ १२६२॥

---

श्रीसूर्य उवाच ।

आसीत्पूर्वभवे कश्चिद्ब्राह्मणो द्रव्यसंयुतः । विद्याभ्यासरतो नित्यं धर्मकर्मसमन्वितः ॥ १ ॥
दत्तानि तेन चान्यानि दानान्यपि विशेषतः । पापमाचरितं तेन गौरवादेव तस्य च ॥ २ ॥
कालयोगेन संप्राप्य ब्राह्मणेन कुटुंबिना । स्थापितं तद्गृहे द्रव्यं घटे लोहमये स्थितम् ॥ ३ ॥
पुनर्दत्तं न तत्तस्मै लोभोपहतचेतसा । कुटुंबैर्मिलित्वा तद्भुक्तं ह्यपरैश्चतदीयकैः ॥ ४ ॥
कालयोगेन संप्राप्तो ह्यन्त्यजो यमसादनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वदानप्रभावेण स जातः पाद्जोऽधुना । देशे प्रभासके रम्ये गौरः पित्ताधिको घृणी ॥ ६ ॥
वाचा मधुरया युक्तो राजकर्मरतः सुधीः । दर्शनीयो नातिह्रस्वः नात्युच्चः क्रोधवर्जितः ॥ ७ ॥
सुखी स्त्रीमानसंयुक्तः सदा सोऽतिधनैर्युतः । पुण्यादिदं तथा पापाल्लोभवान्परतः क्वचित् ॥ ८ ॥
धूर्तः शठोऽल्पदो दंभी स्वल्पधर्मा कृपान्वितः । द्रव्यैर्मनोरथैर्हीनः पुत्रसंततिदुःखदः ॥ ९ ॥
ब्रह्मस्वभक्षणात्पूर्वं फलमत्रास्ति निश्चितम् । लक्ष्मैतदंडजश्रेष्ठ पृच्छकस्यात्र जन्मनि ॥ १० ॥
जन्मलग्नास्तुते राशौ घटे पापसमन्विते । सहायलक्षणं सर्वं वक्ष्याम्यथ खगेश्वर ॥ ११ ॥
पुत्राऽभावो भ्रातृहीनो ह्यल्पस्त्रीसुखसंयुतः । लक्षणैरेभिराढ्यस्य पृच्छकस्यात्र जन्मनि ॥ १२ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् । लक्ष्मीनारायणः कार्यः सुवर्णद्वयनिर्मितः ॥ १३ ॥
तदर्धेन तदर्धेन निजवित्तानुसारतः । स्थापयित्वा घटे लौहे सघृते वस्त्रवेष्टितम् ॥ १४ ॥
संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणाय प्रदापयेत् । चतुर्विंशसहस्राणि गायत्रीं च जपेत्तत ॥ १५ ॥
होमयेच्च यथाशक्ति कुण्डे वा स्थण्डिले शुभे । घृतमिश्रांस्तिलान्शक्त्या तत्र विप्रांश्च भोजयेत् १६
मम जन्मदिने पश्चादाचरेद्व्रतमुत्तमम् । य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः ॥ १७ ॥
तस्य पुत्रविवृद्धिः स्यात्पृच्छकस्यात्र जन्मनि । नेवं विधानं यः कुर्याद्विप्रद्रव्यादिनाशने ॥ १८ ॥
नस्यात्पुत्रसुखं तस्य नापि स्यात्परमा गतिः । प्रायश्चित्तेऽकृते रिष्टं पश्चाशन्मितकेऽब्दके ॥ १९ ॥
प्रायश्चित्ते कृते ह्यायुः सप्तसप्तमिताब्दके । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्रिपष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२६३ ॥

श्रीसूर्य उवाच ।

वंगदेशे ह्यभूत् कश्चिच्छूद्रः स्थविरतायुतः । ग्रामाधिपश्चोग्रदण्डो विष्णुभक्तिपरो दृढः ॥ १ ॥
स गत्वा च कुरुक्षेत्रे सर्वस्वं विधिनाऽददात् । प्राप्ते सूर्यग्रहे सत विप्राय च कुटुंबिने ॥ २ ॥
पापमाचरितं तेन भाविनोर्थस्य गौरवात् । कौमारे धर्षिता विप्रपत्नी चागतिगुमानना ॥ ३ ॥
कामलुब्धेन धृष्टेन पतिस्तस्याः प्रपीडितः । दिनैः कतिपयैरेव गतस्तु यमशासनम् ॥ ४ ॥
पापात्पापफलं भुक्त्वा पुण्यात्पुण्यफलं तथा । पूर्वपुण्यप्रभावेण स जातो ब्राह्मणोऽधुना ॥ ५ ॥
क्षयरोगसमायुक्तो त्रिंशे वर्षे खगाधिप । प्रायश्चित्ताद्यकरणाद्दुःखाद्देहांतरं गतः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायचतुःषष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२६४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । बभूव बाहुजः कश्चित्पीठे जालंधर पुरा ॥ १ ॥
नृपतिश्चैकदेशस्य धर्मशास्त्रान्वितः । बहुस्त्रीपुत्रसंसक्तो धनधान्यसमृद्धिमान् ॥ २ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो विधानतः । भूम्यश्वहिरण्यादिगृहदानानि च पर्वस ॥ ३ ॥

गयाश्राद्धं कृतं चाऽपि यथाविभवविस्तरात् । अथाऽऽगत्य स्वके देशे भाविनोऽर्थस्य गौरवात् ॥४॥
कदाचिन्मृगयां प्राप तत्र तीर्थादुपागताः । स्वशत्रुपुरजाः प्राप्ता लुण्ठितास्तेन ते तदा ॥ ५ ॥
तत्रैको ब्राह्मणश्चापि सपत्नीको हि लुण्ठितः । तत्पत्न्या गर्भपातोऽभूत्ताडनात्सा विचेष्टिता ॥६॥
मृता वै तेन दुःखेन गर्भपातेन तत्क्षणात् । एवं बहुसहायाढ्यः पृच्छकोऽतीव दुष्टधीः ॥ ७ ॥
पापमाचरितं तेन दुष्कर्मप्रेरणादिना । स च तत्कर्मणा युक्तः काले धर्मपुरं गतः ॥ ८ ॥
भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा । गयाश्राद्धप्रभावेण स जातो बाहुजोऽधुना ॥ ९ ॥
ऐरावत्याः परे भागे पञ्चयोजनसम्मिते । देशे स गौरो मतिमान्सुरूपः प्रियवाग्घृणी ॥ १० ॥
दाता भोक्ता यशस्वी च बहुमान्यो जनप्रियः । पैत्तिको नाऽतिदीर्घश्च पुष्टांगो बहुमित्रभाक् ११
धनधान्यसुखैश्वर्यबहुस्त्रीभोगभागिह । देशेदेशेऽतिविख्यातः शूरो राजजनप्रियः ॥ १२ ॥
मध्यमे चैव वयसि धनवाहनभोगभाक् । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १३ ॥
शठो धूर्तोऽभिमानाढ्यो वृथा व्यापारकृत्तथा । क्लेशैर्भयैर्मनोदुःखैः कदाचिद्वै प्रपीड्यते ॥ १४॥
सकन्यापुत्ररहितः ब्राह्मण्या गर्भपातनात् । तद्भवाश्च महाभाग न हि जीवन्ति तत्सुताः ॥ १५ ॥
यैर्मिलित्वा सहार्थैः प्रायकृतं कर्माऽतिदारुणम् । प्राग्भवे ते पुत्रा मृता दुःखप्रदाः सदा ॥ १६ ॥
चिह्नमत्र जनुर्लग्नान्नोचराशिगतो गुरुः । चन्द्रश्चापेश्वरेणाढ्यः स्त्रीपुत्रसुखनाशनः ॥ १७ ॥
व्रणैर्नेत्ररोगैराढ्यस्य प्राप्तस्त्वत्र जन्मनि । प्रायश्चित्तं प्रवक्ष्यामि येन पापात्प्रमुच्यते ॥ १८ ॥
उमामहेश्वरौ कार्यौ सपुत्रौ च हिरण्मयौ । पलैः पञ्चमितैः पत्रे चतुष्कोणे प्रयत्नतः ॥ १९ ॥
तदर्धार्धमितैर्वाऽपि निजवित्ताऽनुसारतः । गन्धपुष्पादिकैः पूज्यः षोडशोपचारकैः ॥ २० ॥
देयास्ते च विधिज्ञाय मंत्रमेतमुदीरयेत् ॥ २१ ॥

मन्त्रः ।

श्रीसूर्य उवाच ।

राजमंत्री द्विजः कश्चित्प्रागभवे पृच्छकस्त्वसौ । कलिंगदेशे मतिमान्स्वामिधर्मरतोऽभवत् ॥ १ ॥
उग्रदंडो महातेजा बहुविद्याविशारदः । शिवभक्तिपरः शूरः स्त्रीपुत्रधनसंयुतः ॥ २ ॥
अददद्बहुदानानि ब्राह्मणेभ्यः स्वशक्तितः । ततः षड्विंशके वर्षे गयाश्राद्धं चकार सः ॥ ३ ॥
काम्यश्राद्धानि विधिवद्दत्तवान्गरुडाग्रज । पुनरागत्य त्वरितं कृतवान्कर्म दारुणम् ॥ ४ ॥
वैरभावाच्च सततं तेन वै विनतासुत । ध्वस्ता निजपुराद्विप्रास्तथा प्राक्तद्धनं हृतम् ॥ ५ ॥
सर्वं समर्पितं राज्ञेऽनीत्या किंचित्स्वकं कृतम् । राजसाहाय्यतः सर्वं पापमुग्रमुपार्जितम् ॥ ६ ॥
ततः किंचिद्गते काले प्राप्तो धर्मपुरं प्रति । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥ ७ ॥
पुण्यपापाऽविशेषाच्च गयाश्राद्धप्रभावतः । प्राक्तनक्षात्रसंस्काराज्जातः क्षात्रकुलेऽधुना ॥ ८ ॥
देशे वैपाशिके रम्ये रक्तगौरः सुरूपधृक् । बहुस्त्रीपुत्रमित्राढ्यो बहुभृत्यसमन्वितः ॥ ९ ॥
देशाध्यक्षोऽतितेजस्वी शूरो राज्याऽधिकारवान् । दाता भोक्ता कलाऽभिज्ञः स्वधर्मपरिपालकः १०
आदिमध्यावसानेषु सुखैश्वर्यसमन्वितः । वाचा मधुरया युक्तो नानावाहनभोगभाक् ॥ ११ ॥
गयाश्राद्धादिदं सर्वं पापात्पापफलं शृणु । धूर्तः शठोऽतिलोभाढ्यः कचित्पापरतस्तथा ॥ १२ ॥
क्लेशैर्भयर्यूनि भावे मनोदुःखसमन्वितः । धर्मकर्मणि सालस्यो बहुधर्मविचारवान् ॥ १३ ॥
विप्राणां प्राक्कृतात्पापात्तत्र पूर्णमनोरथः । जन्मलग्नादिदं चिह्नमत्र जन्मनि चाण्डज ॥ १४ ॥
गुरुत्वात्पूर्वपापाच्च वैरिभावगतो गुरुः । लक्षणैरेभिराढ्यस्य प्रभुरत्रैव जन्मनि ॥ १५ ॥
तत्पापशोधनं वक्ष्ये येन सौख्यं प्रजायते । लक्ष्मीः कार्या प्रयत्नेन सुवर्णाष्टकनिर्मिता ॥ १६ ॥
तदर्धार्धमिता वाऽपि निजवित्तानुसारतः । पत्रे लेख्या चतुष्कोणे सर्वाऽवयवसंयुता ॥ १७ ॥
संपूज्य पुष्पगंधाद्यैः षोडशोपचारकैः । सा च देया विधिज्ञाय ब्रह्मस्वाघविनाशिनी ॥ १८ ॥
सोमं च तन्मितं दद्यात्तदर्धं च धनाऽधिपम् । लक्षमेकं तु गायत्रीं जप्त्वा शुद्धिं समाचरेत्॥१९॥
विभवे द्विगुणं कुर्याद्येन स्यात्पापशोधनम् । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २०॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य लक्ष्मीकृतं दुःखं न कदाचित्प्रजायते ॥ २१ ॥
अकृतेऽत्र यथाशक्ति प्रायश्चित्ते खगाऽधिप । नेत्रपञ्चाशदब्दात्तु यावद्वर्षचतुष्टयम् ॥ २२ ॥
स्त्रीद्रव्ययोर्महारिष्टं तस्य देहेऽपि पीडनम् । पञ्चसप्ततिमिताब्दायुः प्रायश्चित्ते कृते त्विह ॥ २३ ॥
नच स्त्रीधनरिष्टं स्यान्न मनस्तापजं भयम् । नाधयो व्याधयस्तस्य न च दुःखं कचित्सुत॥२४॥
पुत्रपौत्रधनैश्वर्यं सुखमत्र भविष्यति । देवलोके गतिस्तस्य गयाश्राद्धप्रभावतः ॥ २५ ॥
जन्मादिनिधनांतं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तत्तच्छास्त्राद्विलोकयेत् ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये पञ्चनवत्युत्तरद्विशताधिकसहस्रतम ॥ १२९६ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग कौंकणे बाहुजः पुरा । धनधान्यसुखैर्युक्तो विष्णुभक्तिपरो दृढः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यः स्वशक्तितः । पापमाचरितं तेन लोभोपहतचेतसा ॥ २ ॥
धृतः स्वज्ञातिजाया वै गर्भस्तेनायतेर्बलात् । ततो लोकभयात्सूत कृतं तद्गर्भपातनम् ॥ ३ ॥
स्त्रीसाहाय्ययुतेनैव कृतं प्राक्कर्म दारुणम् । स गत्वा धर्मनगरं बुभोज सुखदुःखकम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि बाहुजः । सरस्वत्याः परे देशे पंचयोजनसम्मिते ॥ ५ ॥
गौरः सुरूपो मतिमान्धर्मापापरतो घृणी । कचित्पापरतो लोभी चिन्ताव्याधियुतस्तथा ॥ ६ ॥

या स्त्री पूर्वं सहायासीदत्र पुत्रविवर्जिता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ७ ॥
सुवर्णदशकात्सूत ब्राह्मणी च हिरण्मयी । संपूज्य गंधपुष्पाद्यैर्देया द्विजवराय च ॥ ८ ॥
पूर्वपापाद्विनिर्मुक्तो पुत्रसौख्यं लभेदिह । काशीवासान्महाभाग तद्देशे भ्रमणात्तथा ॥ ९ ॥
लभेत पुत्रात्स सुखं पार्थिवानां प्रपूजनात् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२६७ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । करहाटाऽभिधे देशे कश्चिदासीद्विजोत्तमः ॥ १ ॥
प्राग्भवे नृपतिर्विज्ञो वेदशास्त्रविशारदः । धर्मशास्त्रक्रियायुक्तः शिवभक्तोऽतिथीतिथिप्रिय ॥ २ ॥
बहुस्त्रीधनपुत्राढ्यो विप्रपूजनतत्परः । दत्तानि तेन दानानि ब्राह्मणेभ्यो विजानता ॥ ३ ॥
बहुपर्वसु भूम्यश्वकन्यावस्त्रगृहाण्यपि । सूर्यचन्द्रोपरागे च गजाश्वरथकांचनम् ॥ ४ ॥
बहुरत्नानि भाण्डानि महादानानि चांडज । अथो भाविबलात्सूत पापमाचरितं पुरा ॥ ५ ॥
सीमांतरे स्थितं तस्य विप्रस्याप्यधिकारिणः । स्त्रिया विरोधात्सततं कृतं कर्मातिदारुणम् ॥ ६ ॥
स्वस्त्रीभ्रातृसहायाच्च रात्रौ गत्वा तु तत्पुरम् । निर्दग्धं तत्पुरं चाऽपि मिलित्वा बहुभिर्जनैः ॥ ७ ॥
तस्मिन् दग्धे मातृयुक्ताः स्त्रियो बाला द्विजस्य हि । निर्दग्धा बालवत्साढ्या गौरेका जन्तवस्तथा ॥ ८ ॥
सर्वस्वं लुंठितं तस्याऽपराधरहितस्य च । गृहीत्वा विप्रसर्वस्वं ज्येष्ठपत्न्या निवेदितम् ॥ ९ ॥
महादानरता साऽपि बहुपुत्रा पतिप्रिया । तयाऽपि तत्स्त्रीसंवादात्क्रोधाद्विजकुलं हृतम् ॥ १० ॥
भुक्तं च तद्धनं लोभात्पापमुग्रमुपार्जितम् । धर्मज्ञेन नृपेणाऽपि न कृतं पापशोधनम् ॥ ११ ॥
अथ किंचिद्गते काले ■ प्राप्तो यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥१२॥
बहुपुण्यान्महादानात्स जातोऽत्राऽपि भूपतिः । गंगायाः प्रान्तरे देशे तत्त्रयोजनसम्मिते ॥ १३ ॥
स रक्तगौरो मतिमान्नात्युच्चो न लघुर्गुणी । वाचा मधुरया युक्तस्तेजस्वी लोकविश्रुतः ॥ १४ ॥
बहुज्ञो दर्शनीयाक्षो दाता भोक्ता कुलाग्रणीः । उपकारपरो विद्वान्बली सर्वजनाश्रयः ॥ १५ ॥
क्षात्रधर्मरतो मानी दण्डदाक्षिण्यतत्परः । सभार्यां चतुरो धीरो मंत्रविद्गूढचेष्टितः ॥ १६ ॥
बहुस्त्रीभोगसंयुक्तो धनधान्यसुतान्वितः । पित्तश्लेष्माधिकः शूरो बहुभूपजनैर्वृतः ॥ १७ ॥
गजाश्ववाहनैराढ्यो बहुरत्नैरलंकृतः । आदिमध्यावसानेषु सुखैश्वर्यसमाकुलः ॥ १८ ॥
शिवार्चनान्महादानात्प्राक्कृतात्तु फलं त्विह । सर्वमेतत्तथा पापात्सर्वं पापफलं शृणु ॥ १९ ॥
धूर्तः शठोऽतिदंभाढ्यो बहुचेष्टो भयान्वितः । लोभी पापरतः क्वापि पित्रोः सुखविवर्जितः॥२० ॥
प्राग्भवे जीवघाताच्च कफपित्तरुगन्वितः । बालवत्सवधात्पूर्वं पूर्वपुत्रशुचान्वितः ॥ २१ ॥
सहायलक्षणं सर्वं वक्ष्याम्यत्र खगेश्वर । या स्त्री पूर्वं सहायासील्लोभाद्ब्रह्मस्वभक्षणे ॥ २२ ॥
सा कनिष्ठा च संप्रत्यत्र पुत्रशुचान्विता । यौ भ्रातरौ सहायौ प्राग्भवेतां दाहकर्मणि ॥ २३ ॥
तस्या जातौ तु तावत्र पुत्रौ निर्वासितौ गतौ । गोस्त्रीबालवधात्पापात्प्रागत्र सुतनाशनम् ॥ २४ ॥
महापापस्य लक्ष्मेदं राहुर्गुरुगृहं गतः । लक्षणैरेभिराढ्यस्य प्रत्युत्रैव जन्मनि ॥ २५ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन पापात्प्रमुच्यते । पलैः षष्टिमितैः कार्या सुरभी वत्ससंयुता ॥ २६ ॥
पत्रे हिरण्मये देया सर्वांगाभरणान्विता । तदर्धार्धमिता वापि निजवित्तानुसारतः ॥ २७ ॥
संपूज्य गन्धपुष्पाद्यैरुपचारैर्विशेषतः । सा च देया विधिज्ञाय मंत्रमेतमुदीरयेत् ॥ २८ ॥

श्रीसूर्य उवाच ।

राजमंत्री द्विजः कश्चित्प्राग्भवे पृच्छकस्त्वसौ । कलिंगदेशे मतिमान्स्वामिधर्मरतोऽभवत् ॥ १ ॥
उग्रदंडो महातेजा बहुविद्याविशारदः । शिवभक्तिपरः शूरः स्त्रीपुत्रधनसंयुतः ॥ २ ॥
अददद्बहुदानानि ब्राह्मणेभ्यः स्वशक्तितः । ततः षड्विंशके वर्षे गयाश्राद्धं चकार सः ॥ ३ ॥
काम्यश्राद्धानि विधिवद्दत्तवान्गरुडाग्रज । पुनरागत्य त्वरितं कृतवान्कर्म दारुणम् ॥ ४ ॥
वैरभावाच्च सततं तेन वै विनतासुत । ध्वस्वा निजपुराद्विप्रास्तथा प्राक्तद्धनं हृतम् ॥ ५ ॥
सर्वं समर्पितं राज्ञेऽनीत्या किंचित्स्वकं कृतम् । राजसाहाय्यतः सर्वं पापमुग्रमुपार्जितम् ॥ ६ ॥
ततः किंचिद्गते काले प्राप्तो धर्मपुरं प्रति । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥ ७ ॥
पुण्यपापाऽविशेषाच्च गयाश्राद्धप्रभावतः । प्राक्तनक्षात्रसंस्काराज्जातः क्षात्रकुलेऽधुना ॥ ८ ॥
देशे वैपाशिके रम्ये रक्तगौरः सुरूपधृक् । बहुस्त्रीपुत्रमित्राढ्यो बहुभृत्यसमन्वितः ॥ ९ ॥
देशाध्यक्षोऽतितेजस्वी शूरो राज्याऽधिकारवान् । दाता भोक्ता कलाभिज्ञः स्वधर्मपरिपालकः १०
आदिमध्यावसानेषु सुखैश्वर्यसमन्वितः । वाचा मधुरया युक्तो नानावाहनभोगभाक् ॥ ११ ॥
गयाश्राद्धादिदं सर्वं पापात्पापफलं शृणु । धूर्तः शठोऽतिलोभाढ्यः कचित्पापरतस्तथा ॥ १२ ॥
क्लेशैर्भर्यर्यूनि भावे मनोदुःखसमन्वितः । धर्मकर्मणि सालस्यो बहुधर्मविचारवान् ॥ १३ ॥
विप्राणां प्राक्कृतात्पापान्नात्र पूर्णमनोरथः । जन्मलग्नादिदं चिह्नमत्र जन्मनि चाण्डज ॥ १४ ॥
गुरुत्वात्पूर्वपापाच्च वैरिभावगतो गुरुः । लक्षणैरेभिराढ्यस्य प्रभुत्त्वैव जन्मनि ॥ १५ ॥
तत्पापशोधनं वक्ष्ये येन सौख्यं प्रजायते । लक्ष्मीः कार्या प्रयत्नेन सुवर्णाष्टकनिर्मिता ॥ १६ ॥
तदर्धार्धमिता वाऽपि निजवित्तानुसारतः । पत्रे लेख्या चतुष्कोणे सर्वावयवसंयुता ॥ १७ ॥
संपूज्य पुष्पगंधाद्यैः षोडशोपचारकैः । सा च देया विधिज्ञाय ब्रह्मस्वापविनाशिनी ॥ १८ ॥
सोमं च तन्मितं दद्यात्तदर्धं च धनाऽधिपम् । लक्षमेकं तु गायत्रीं जप्त्वा शुद्धिं समाचरेत्॥१९॥
विभवे द्विगुणं कुर्याद्येन स्यात्पापशोधनम् । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २०॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य लक्ष्मीकृतं दुःखं न कदाचित्प्रजायते ॥ २१ ॥
अकृतेऽत्र यथाशक्ति प्रायश्चित्ते खगाऽधिप । नेत्रपञ्चाशदब्दात्तु यावद्वर्षचतुष्टयम् ॥ २२ ॥
स्त्रीद्रव्ययोर्महारिष्टं तस्य देहेऽपि पीडनम् । पञ्चसप्ततिमिताब्दायुः प्रायश्चित्ते कृते त्विह ॥ २३ ॥
नच स्त्रीधनरिष्टं स्यान्न मनस्तापजं भयम् । नाधयो व्याधयस्तस्य न च दुःखं कचित्सुत॥२४॥
पुत्रपौत्रधनैश्वर्यं सुखमत्र भविष्यति । देवलोके गतिस्तस्य गयाश्राद्धप्रभावतः ॥ २५ ॥
जन्मादिनिधनांतं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तत्पश्चाच्छास्त्राद्विलोकयेत् ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्षष्ट्युत्तरद्विशताधिकसहस्रतम ॥ १२६६ ॥

---

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग कोंकणे बाहुजः पुरा । धनधान्यसुखैर्युक्तो विष्णुभक्तिपरो दृढः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यः स्वशक्तितः । पापमाचरितं तेन लोभोपहतचेतसा ॥ २ ॥
धृतः स्वज्ञातिजायां वै गर्भस्तेनायतेर्बलात् । ततो लोकभयात्सूत कृतं तद्गर्भपातनम् ॥ ३ ॥
स्त्रीसाहाय्ययुतेनैव कृतं प्राग्धर्मं दारुणम् । स गत्वा धर्मनगरं बुभोज सुखदुःखकम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि बाहुजः । सरस्वत्याः परे देशे पंचयोजनसम्मिते ॥ ५ ॥
गौरः सुरूपो मतिमान्व्यापारनिरतो घृणी । कचित्पापरतो लोभी चिंताशाठ्यरतस्तथा ॥ ६ ॥

या स्त्री पूर्वं सहायासीदत्र पुत्रविवर्जिता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ७ ॥
सुवर्णदशकात्सूत ब्राह्मणी च हिरण्मयी । संपूज्य गंधपुष्पाद्यैर्देया द्विजवराय च ॥ ८ ॥
पूर्वपापाद्विनिर्मुक्तो पुत्रसौख्यं लभेदिह । काशीवासान्महाभाग तद्देशे भ्रमणात्तथा ॥ ९ ॥
लभेत पुत्रात्स सुखं पार्थिवानां प्रपूजनात् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तरद्विशताधिकसहस्रतमः ॥ १२६७ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । करहाटाऽभिधे देशे कश्चिदासीद्द्विजोत्तमः ॥ १ ॥
प्राग्भवे नृपतिर्विज्ञो वेदशास्त्रविशारदः । धर्मशास्त्रक्रियायुक्तः शिवभक्तोऽतिनीतिधृक् ॥ २ ॥
बहुस्त्रीधनपुत्राढ्यो विप्रपूजनतत्परः । दत्तानि तेन दानानि ब्राह्मणेभ्यो विजानता ॥ ३ ॥
बहुपर्वसु भूम्यश्वकन्यावस्त्रगृहाण्यपि । सूर्यचन्द्रोपरागे च गजाश्वरथकांचनम् ॥ ४ ॥
बहुरत्नानि भाण्डानि महादानानि चांडज । अथो भाविबलात्सूत :पापमाचरितं पुरा ॥ ५ ॥
सीमांतरे स्थितं तस्य विप्रस्याप्यधिकारिणः । स्त्रिया विरोधात्सततं कृतं कर्मातिदारुणम् ॥ ६ ॥
स्वस्त्रीभ्रातृसहायाच्च रात्रौ गत्वा तु तत्पुरम् । निर्दग्धं तत्पुरं चाऽपि मिलित्वा बहुभिर्जनैः॥ ७॥
तस्मिन् दग्धे मातृयुक्ताः स्त्रियो बाला द्विजस्य हि । निर्दग्धा बालवत्साढ्या गौरेका जन्तवस्तथा॥८
सर्वस्वं लुंठितं तस्याऽपराधरहितस्य च । गृहीत्वा विप्रसर्वस्वं ज्येष्ठपत्न्या निवेदितम् ॥ ९ ॥
महादानरता साऽपि बहुपुत्रा पतिप्रिया । तयाऽपि तत्स्त्रीसंवादात्क्रोधाद्द्विजकुलं हृतम् ॥ १० ॥
भुक्तं च तद्धनं लोभात्पापमुग्रमुपार्जितम् । धर्मज्ञेन नृपेणाऽपि न कृतं पापशोधनम् ॥ ११ ॥
अथ किंचिद्गते काले स प्राप्तो यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥१२॥
बहुपुण्यान्महादानात्स जातोऽत्राऽपि भूपतिः । गंगायाः प्रान्तरे देशे तत्त्रयोजनसम्मिते ॥ १३ ॥
स रक्तगौरो मतिमानायुष्यो न लघुर्घृणी । वाचा मधुरया युक्तस्तेजस्वी लोकविश्रुतः ॥ १४ ॥
बहुज्ञो दर्शनीयाक्षो दाता भोक्ता कुलाग्रणीः । उपकारपरो विद्वान्बली सर्वजनाश्रयः ॥ १५ ॥
क्षात्रधर्मरतो मानी दण्डदाक्षिण्यतत्परः । सभायां चतुरो धीरो मंत्रविद्गूढचेष्टितः ॥ १६ ॥
बहुस्त्रीभोगसंयुक्तो धनधान्यसुतान्वितः । पित्तश्लेष्माधिकः शूरो बहुभूपजनैर्वृतः ॥ १७ ॥
गजाश्ववाहनैराढ्यो बहुरत्नैरलंकृतः । आदिमध्यावसानेषु सुखैश्वर्यसमाकुलः ॥ १८ ॥
शिवार्चनान्महादानात्प्राक्कृतात्तु फलं त्विह । सर्वमेतत्त्वया पापात्सर्वं पापफलं शृणु ॥ १९ ॥
धूर्तः शठोऽतिदंभाढ्यो बहुचेष्टो भयान्वितः । लोभी पापरतः क्वापि विभोः सुखविवर्जितः॥२० ॥
प्राग्भवे जीवघाताच्च कफपित्तरुगान्वितः । बालवत्सवधात्पूर्वं पूर्वपुत्रशुचान्वितः ॥ २१ ॥
सहायलक्षणं सर्वं वक्ष्याम्यत्र खगेश्वर । या स्त्री पूर्वं सहायासील्लोभाद्ब्रह्मस्वभक्षणे ॥ २२ ॥
सा कनिष्ठा च संप्रष्टत्र पुत्रशुचान्विता । यौ भ्रातरौ सहायौ प्राग्भवेतां दाहकर्मणि ॥ २३ ॥
तस्या जातौ तु तावत्र पुत्रौ निर्वासितौ गतौ । गोस्त्रीबालवधात्पापात्प्रागत्र सुतनाशनम् ॥ २४ ॥
महापापस्य लक्ष्मेदं राहुर्गुरुगृहं गतः । लक्षणैरेभिराढ्यस्य प्रसुत्रैव जन्मनि ॥ २५ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन पापात्प्रमुच्यते । पलैः षड्भिर्मितैः कार्या सुरभी वत्ससंयुता ॥ २६ ॥
पात्रे हिरण्मये स्वस्था सर्वांगाभरणान्विता । तदर्धार्धमिता वापि निजवित्तानुसारतः ॥ २७ ॥
संपूज्य गन्धपुष्पाद्यैरुपचारैर्विशेषतः । सा च देया विधिज्ञाय मंत्रमेतमुदीरयेत् ॥ २८ ॥

मन्त्रः ।

"अज्ञानात्त्वं मया दग्धा यत्पापं घोरमर्जितम् । अतोऽहं देवि हैमीं त्वां ददेऽहं मच्छुभं कुरु"२९॥
इत्युच्चार्य नरो दद्यात्पापगोघाताप्रमुच्यते । तथा पशुपतिः कार्यः पलैः षोडशभिर्युतः ॥ ३० ॥
पत्रे हिरण्मये लेख्यः सपत्नीकः सपुत्रकः । शिवमन्त्रेण संपूज्य षोडशोरूपचारकैः ॥ ३१ ॥
स च देयो विधिज्ञाय पूर्वपापप्रशान्तये । तयात्र ब्राह्मणी कार्या पलैः षोडशभिर्मिता ॥ ३२ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । सा च देया विधिज्ञाय स्त्रीवधान्मुच्यते त्विह ॥ ३३ ॥
तद्दैवतं तथा सोमं हैम्नमष्टपलात्मकम् । लक्ष्मीनारायणं हैम्नं तद्वदघविनाशनम् ॥ ३४ ॥
प्रजापतिर्गणेशश्च दग्धजीवा हुताशनः । विप्रबालास्त्रयः कार्यास्त्रिपलैर्निर्मिताः खग ॥ ३५ ॥
हिरण्मयेषु पत्रेषु मन्त्रैर्लेख्या यथोक्तवत् । विप्रेभ्यो विधिवद्देयाः सर्वपापप्रणाशकाः ॥ ३६ ॥
पञ्चविंशतिसहस्राणि गायत्रीं विधिना जपेत् । सहस्रदशकं त्वत्र मंत्रमष्टाक्षरं तथा ॥ ३७ ॥
एकादशसहस्रं तु त्र्यंबकं द्विविधं जपेत् । ब्रह्माग्निसोमविप्रेशसौरिमंत्रांस्तथा जपेत् ॥ ३८ ॥
चत्वारिंशत्सहस्राणि चैकस्याष्टसहस्रकम् । होमयेच्चदशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ ३९ ॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य पुत्राभिवृद्धिः स्याज्जन्मन्यत्र खगेश्वर ॥ ४० ॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । महदैश्वर्यमाप्नोति विविधांश्च मनोरथान् ॥ ४१ ॥
सर्वपापविशुद्धात्मा स्वर्गे मोक्षमवाप्नुयात् । आयुः सप्ततिवर्षाणि प्रायश्चित्ते कृते त्विह ॥ ४२ ॥
प्रायश्चित्तेऽकृते रिष्टमूनत्रिंशन्मितेऽब्दके । त्रिचत्वारिंशदब्दे वा ध्रुवं पञ्चाशदब्दके ॥ ४३ ॥
चतुर्विधं महारिष्टं भवत्येव न संशयः । या च पृच्छति धर्मज्ञा तत्प्रिया कर्मपीडिता ॥ ४४ ॥
प्रायश्चित्तार्धतः पादाच्छुद्ध्यत्यत्र न संशयः । सेहाधिव्याधिरहिता राज्यं पुत्रसुखं लभेत्॥४५॥
शनौ कन्यागते जातो मेषस्थे निधनं भवेत् । जन्मादिनिधनान्तं हि स्वल्पमेवात्र सूचितम् ४६
यद्यदन्तर्गतं सूत तज्जन्माङ्गाद्विचिन्तयेत् ॥ ४७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९८ ॥

---

श्रीसूर्य उवाच ।

मृगयां प्राप्य पक्षीन्द्र मया गजवधः कृतः । प्राग्भवे गजचर्माऽसावत्र जाता द्विजोत्तमः ॥ १
गणेशप्रतिमां दद्यात्सौवर्णां द्विपलात्मिकाम् । गंधपुष्पैश्च संपूज्य तस्माद्रोगाद्विमुच्यते ॥ २ ॥
कारयेद्गणनाथस्य लक्षजाप्यं विधानतः । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ ३ ॥
विप्रेभ्यो दक्षिणान्दद्यात्सुवर्णमयुतं खग । सर्वपापविशुद्धस्तु मुच्यते सर्वकिल्बिषात् ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९९ ॥

वैराटदेशे निवसन् राजकार्ये रतः सदा । कृतवान्गोग्रहं तत्र शत्रूणां भयदायकः ॥ २ ॥
बालवत्सा तत्र पुरे मृता धेनुः खगोत्तम । पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३ ॥
ततो यमपुरं प्राप्तो भुक्त्वा च सदसत्फलम् । विष्णुपूजनजात्पुण्याज्जातोत्र यमुनातटे ॥ ४ ॥
चारणो धर्मनिरतो बहुद्रव्यसमन्वितः । गजादिवाहनैराढ्यो वस्त्रभूषणभूषितः ॥ ५ ॥
सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु । धूर्तो मिथ्यापवादी च बहुलोमसमन्वितः ॥ ६ ॥
जातिसंततिदुःखार्तो बालवत्सवधादिह । नेत्ररोगान्वितो नित्यं शृणु चिह्नं खगाधिप ॥ ७ ॥
चत्वारिंशन्मिते वर्षे सर्वसन्ततिनाशनम् । गृहपापान्महाभाग धूर्वंरिष्टसमुद्भवात् ॥ ८ ॥
पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः ॥ ९ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्बालवत्साघनाशिनीम् । यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते ॥ १० ॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं शृणुष्वात्र तद्रूपानन्तरं सुत । तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ ११ ॥
दृढकर्मार्जितात्पापाच्च चोक्तं पापशोधनम् । श्रवणाद्धरिवंशस्य वैशाखे विधिनाण्डज ॥ १२ ॥
माघे वा कार्त्तिके वाऽपि दशावृत्त्या विधानतः । ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ १३ ॥
कोटिलक्षायुतं पुत्र यः कुर्याद्विधिपूर्वकम् । तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत ॥ १४ ॥
मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः । प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं तथा ॥ १५ ॥
द्वियुक्तमायुः कथितं तीर्थे पुण्याश्रयेऽण्डज । जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे ॥ १६ ॥
त्रयोदश्यां दिवा भूमौ ऋक्षे मृगशिरोभिधे । निर्याणं कथितं तस्य विष्णुपूजनजात्फलात् ॥ १७ ॥
भविष्यति गतिस्तस्य पुनर्विष्णुप्रपूजनात् । तथा तृतीये जनुषि मरणं गोग्रहात्सुत ॥ १८ ॥
सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७१ ॥

श्रीसूर्य उवाच ।

पिङ्गलाक्षो भवेदत्र पूर्वं रीत्यपहारकः । तेन तत्पापशुद्ध्यर्थं दद्याद्रीतिपलं शतम् ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद्ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७२ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग खररोमा प्रजायते । पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयं हिरण्यस्य दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गवेदिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७३ ॥

श्रीसूर्य उवाच ।

प्राग्भुक्तं गर्भपुष्ट्यर्थं कुक्कुटाण्डं खगेश्वर । अत्र जन्मनि सा जाता संकरा लोमसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥
कृत्वाण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम् । तदर्धमितकं वापि निजवित्तानुमानतः ॥ ३ ॥

दत्त्वा विप्राय विधिना ह्याचरेच्छांकरं व्रतम् । फाल्गुनादौ चतुर्दश्यां कृष्णायां मासिमासि तु ४
पूजयेच्छंकरं रात्रौ तथा जागरणेन च । भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७४ ॥

श्रीसूर्य उवाच ।

शृणु सूत महाभाग कर्म यत्कृतवान्पुरा । जीवोयं तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः । राजप्रचारी बलवाञ्शूरो मंत्री महायशाः ॥ २ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः । गत्वा ह्यरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदुष्कृतम् । लुंठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः । तेन वै कर्मणा पुत्र प्राप्तं तु यमशासनम् ॥ ५ ॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनान् । पुण्यात्पुण्यफलं सूत प्राप्य पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा । नानाचौर्यक्रियायुक्तो लोकवंचनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि । सुखैश्वर्यधनैर्युक्तः कुटुंबभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः । वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम् । पूजयेत् त्रिवर्षान्तं मन्त्रैस्तांल्लिङ्गजैस्तथा॥१०॥
गंधपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः । संपूज्य विधिवद्देवं तदन्ते भोजयेद्द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्पूजयेद्वस्त्रद्रव्यतः । नानाहिरण्यैर्विविधैस्तथा चाभरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः । ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम् । संप्राप्य तत्र निर्याणं शिवलोकं हि गच्छति ॥१४॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यपे । नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तस्य शलाका देया वै शूद्रकर्णेतिदारुणा । श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुर्वर्षशतं तस्य कृतनिष्कृतिकस्य वै । प्रायश्चित्तेऽकृते रिष्टं जायते षष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७५ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे द्र्यात्खरमत्रैव जन्मनि । खररोमसमानि स्युस्तस्य रोमाणि सन्ततम् ॥ १ ॥
ब्राह्मणाय ततो दद्यात्स्वर्णनिष्कत्रयं सुत । जायते सूक्ष्मरोमा सा विनतानंदवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७६ ॥

श्रीसूर्य उवाच ।

या पुरा हरते रीतिं नारी सा च खगाधिप । पिंगाक्षी जायते तस्याः प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम् । गायत्रीं प्रजपेच्छक्त्या जुहुयाद्वै तिलांस्तथा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७७ ॥

श्रीसूर्य उवाच ।

प्राग्भवे चैव या नारी परसिद्धान्नभक्षिणी । सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥

सिद्धान्नस्य च विप्रेभ्यो दीनेभ्योऽथ खगाधिप। भिक्षुभ्यश्च तथा दानाद्वसदानाच्च शक्तितः॥२॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७८ ॥

## श्रीसूर्य उवाच।

राष्ट्रघाती भवेत्पूर्वं जन्मन्यथ खगाधिप। सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि। कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२७९ ॥

## श्रीसूर्य उवाच।

वधीयं या महाभाग पृच्छति स्वं प्रयोजनम्। गर्भपातरता सा तु जनुष्यत्र फलं त्विदम् ॥ १॥
मुखजा प्राग्भवे त्वत्र तत्पापौघवती हि सा। निष्कृतिं तत्र वक्ष्यामि गंगायां हि खगाधिप ॥२॥
पूजयेल्लक्षरुद्राणां त्रिगुणं वा तदर्द्धकम्। शक्त्या च भोजयेद्विप्रान् होमयेच्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना या च प्रायश्चित्तं समाचरेत्। जायते संततिस्तस्या इह जन्मनि वै ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८० ॥

## श्रीसूर्य उवाच।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत। शीर्षरोगेण सततं पीडितो जायते त्विह ॥ १ ॥
दानात्पलशतादत्र सीसकाद्ण्डजोत्तम। विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरद्विशताधिकसहस्रतमः॥ १२८१ ॥

## श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे केरामिधे सुत। धर्मकर्मात्मको भक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः। सर्वस्वमपि पात्रेभ्यो गोभूम्यश्वादिकं च यत्॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात्। स्ववंशजस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरिभावेन रात्रौ भार्यासहायतः। तस्मिन्दाहे महाबाहो निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा। ततो बहुतिथे काले गतः स यमशासनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा तत्र ताभ्यामशेषतः। पुण्यात्पश्चनदे देशे स जातो बाहुजाधरः ॥ ६ ॥
मध्यस्वरूपो मतिमान्कुलेष्टः पुरुषो दृढः। रक्तो नीचो नातिनीचो बहुकन्यः पृथुर्विभुः ॥ ७ ॥
यौवनेऽल्पसुखैश्वर्यधनैः स्यान्नैर्युतायुतः। मितदो भोगभाग्याढ्यः कृती मानी जनप्रियः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोमी पापरतः क्वचित्। चिंतारोगोतिधूर्तश्च दुःखार्तो मानवर्जितः ॥ ९॥
गोघातादग्निदाहाच्च जातपुत्रविनाशकः। सहायलक्षणं सर्वं कथयामि खगेश्वर ॥ १० ॥
या स्त्री पूर्वं सहायासीद्दाहकर्मणि चाण्डज। सा ज्येष्ठा पत्नीवात्र मृतपुत्रा हि जन्मनि ॥ ११ ॥
लक्ष्मैतदण्डजश्रेष्ठ जन्मांगाद्वृषभे शनिः। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कारयित्वा शिवं साम्बं पलैर्वेदमितैः शुभैः। हिरण्मयं महाभाग पत्रे लेख्यं सुसुन्दरम् ॥ १३ ॥
तदर्धमितकं वापि निजवित्तानुसारतः। पूजयित्वा तु गंधाद्यैः षोडशोपचारकैः ॥ १४ ॥
संस्थाप्य पशुपं पश्चाद्धेमरथे सुमनोहरे। सर्वोपस्करसंयुक्ते वितानांबरभूषिते ॥ १५ ॥
दद्याद्वेदविदे विप्राय मंत्रमेतमुदीरयेत् ॥ १६ ॥

मन्त्रः ।

" मोहात्पूर्वं महापापमज्ञिदाहाद्यदर्जितम् । तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम् " ॥ १७॥
गोधिकायास्तया जीवाः पत्रे लेख्यास्तु राजते । शिवपत्रमिदं दद्याद्ये चान्ये घातिताः पुरा॥१८॥
पञ्चमापमितो वह्निर्देयो हेममयः शुभः । गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम् ॥ १९ ॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान् । य एवं कुरुते सूत प्रायश्चित्तं विधानतः ॥ २० ॥
न तस्य पुत्रमरणं तदग्रे जायते क्वचित् । जायन्ते सुलभाः पुत्रा आधिव्याधिविवर्जिताः ॥ २१ ॥
नैवं करोति मोहाद्वा ह्यत्र पुत्रविवर्जितः । चत्वारिंशन्मितेऽब्दे वर्षे रिष्टं प्रकीर्तितम् ॥ २१ ॥
पञ्चाशन्मितकेऽब्दे वा रिष्टं चाकृतनिष्कृतेः । प्रायश्चित्ते कृते ह्यायुश्चतुःसप्तमिताब्दके ॥२३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८२ ॥

श्रीसूर्य उवाच ।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत । शीर्परोगेण सततं पीडितो जायते त्विह ॥ १ ॥
दानात्पलशतादत्र सीसकादंडजोत्तम । विप्राय वेदविदुषे शीर्परोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८३ ॥

श्रीसूर्य उवाच ।

वंध्यायाश्च महाभाग प्रायश्चित्तं शृणुष्व तत् । शूलोद्भिन्नतनुं चौरं मृतं प्राप्य रवेर्दिने ॥ १ ॥
तत्तले तु तदा कुर्याद्वंध्यास्नानं शतौषधैः । पत्रैर्वृक्षोद्भवैः सूत मृत्स्नाभिः सप्तभिस्तथा ॥ २ ॥
तीर्थोदकैः समन्त्रैश्च तं पूज्य प्रथमं सुत । विधिनानेन या कुर्याद्वन्ध्या पुत्रं लभेद्ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८४ ॥

श्रीसूर्य उवाच ।

शुद्धां स्वभार्यां परमां साध्वीं संत्यज्य दुर्मतिः । प्रमादात्प्राग्भवे गच्छेदन्यस्त्रीं काममोहितः ॥१॥
सोऽत्र जन्मनि भोः सूत ! ग्रहणीरोगसंयुतः । जायते म्रियतेऽवश्यं ब्राह्मण्यां गमनात्किल ॥ २॥
न तस्य पापशमनं मया प्रोक्तं खगाधिप । तस्मिन्वयसि तन्मृत्युर्भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८५ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत ! प्राग्भवे कांस्यहारिणी । सात्र जन्मनि पक्षीन्द्र शीर्परोगप्रपीडिता ॥१॥
दद्यात्पलशतं सीसं ब्राह्मणाय कुटुम्बिने । तत्काले शीर्पजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८६ ॥

श्रीसूर्य उवाच ।

या नारी त्ववधीत्पूर्वं मोहाद्गुरुं खगाधिप । सात्र जन्मनि पक्षीन्द्र ! जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णां राजतीं तथा । दद्याद्वेदविधिज्ञाय तदा स्यान्मुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८७ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिवद्वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र खगाधिप ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८८ ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ! ग्रहणीरुग्युतात्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२८९ ॥

अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षदर्शनः । उदरे वातजान्रोगान्किंचिच्छस्त्रोपघातकान् ॥ १ ॥
किंचित्क्रोधश्च लोभश्च किंचिद्वित्तसमन्वितः । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्यं भवेत्तस्य जायते मृतपुत्रकः । आदिः पुत्रो मृतस्तस्य ह्यपत्यं नैव जायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ! ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्ययं सूत शूद्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन यत्कृतम् ॥ ५ ॥
व्यवहारादिना भूयो ब्रह्मवित्तेन वर्धितम् । कालेनैवं मृतो विप्रो धनं शूद्रेण वंचितम् ॥ ६ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणाच्चैव वर्षाणां च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे पक्कस्तेन स्वकर्मणा । पश्चान्मानुष्यमापन्नः पीडितश्चेह कर्मणा ॥ ९ ॥
पूर्वजन्मार्जितैः पुण्यैर्व्रतदानादिभिः खग । तृतीयं जन्म चैतद्धि ब्रह्मवंशसमुद्भवम् ॥ १० ॥
निक्षेपहरणाद्वापि मृतपुत्रः प्रजायते । ब्राह्मणाय विषं दत्त्वा ब्रह्मस्वं यद्बुभोज वै ॥ ११ ॥
ऋणं प्रसह्य वै प्रोक्तमेतस्योपरि तन्महत् । तस्माद्विप्रधनं प्रोक्तमसह्यं त्वभिजायते ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणां च निष्कृतिं वद तां प्रभो ॥ १३ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामप्रदः प्रभुः । पूजनीयो महारुद्रः संततिश्रेय इच्छता ॥ १४ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । यजमानः प्रमुच्येत पापादाकल्पसंभवात् ॥ १५ ॥
रुद्रैकादशनीभिश्च रुद्रैकादशकेन वा । जप्त्वैवं तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १६ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम् । विधिवज्जुहुयाद्वह्नौ तिलैस्त्रिमधुराप्लुतैः ॥ १७ ॥
हरितालीपलाशोत्थाः समिधोऽत्र हुवेर्हुताः । प्रतिरुद्रं प्रदातव्यं गोयुग्मं रत्नान्वितम् ॥ १८ ॥
केयूरकुंडलाकल्पमंत्रपुस्तकमंडलु । प्रतिरुद्रं शतं विप्रान्भोजयेत्सुसमाहितः ॥ १९ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा मुख्यदक्षिणाम् । एवं रुद्रविधिं कृत्वा त्रिविधं नाशयेदघम् ॥ २० ॥
इतिहासपुराणोक्तसूक्तानि विविधानि च । शृणुयाद्विधिवत्तार्क्ष्य सभार्यः प्रीतितोऽन्वहम् ॥ २१ ॥

देवर्षिपितृमर्त्यानामृषीणां च महीक्षिताम् । देवदानवगंधर्वपिशाचोरगरक्षसाम् ॥ २२ ॥
सर्वेषां जीवजातीनामुत्पत्तिं शृणुयादपि । ऋषीणामृषिपत्नीनां वंशान्सर्वानुदारितान् ॥ २३ ॥
एवं स त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात् । गुरून्देवान्द्विजान्सम्यक्श्रद्धया समुपाचरेत् ॥२४॥
एवं कृत्वा ततः सूत हरिवंशं निशम्य वै । वाचकोपरि संतुष्टो भूमिद्रविणवासकैः ॥ २५ ॥
मुद्रिकाकर्णभूषादि गां दत्त्वा च पयस्विनीम् । भूमिद्रविणदानाद्यैस्तोषयेदन्यब्राह्मणान् ॥ २६॥
निष्कृतिं कुर्वतः पूज्यान्सर्पिष्यात्मानमीक्षयेत् । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २७ ॥
जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः । कुष्ठरुक्चानपत्यत्वं प्रमेहार्तिर्धनक्षतिः ॥ २८ ॥
कुनखित्वं दद्रुलत्वं पांडुरोगित्वमेव च । जन्मलग्नाच्च चोरत्वं राज्ञो वित्तव्ययादिकम् ॥ २९ ॥
लकुट्यावशस्त्राद्यैर्जायंते व्रणजातयः ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९० ॥

## श्रीसूर्य उवाच ।

अथ स्वप्न दिने सूत प्राप्य भूमिं श्मशानजाम् । मृतप्रेतं समालोक्य रात्रौ गच्छेद्वतान्द्रतः ॥ १ ॥
पूजयित्वा चितां तस्य बलिमष्टविधं सृजेत् । स्नानं कृत्वा मृदालम्भैः पत्रैर्वृक्षोद्भवैस्तथा ॥ २ ॥
शतच्छिद्रं घटं प्राप्य नानातीर्थोद्भवैर्जलैः । दीपमालादिने वापि प्रयोगं विधिना चरेत् ॥ ३ ॥
हरिवंशं ततः पश्चाच्छृणुयाद्विधिपूर्वकम् । दत्त्वा द्विजेभ्यो विधिना नानाभक्ष्यफलानि च ॥ ४ ॥
स्वेच्छया भोजनं तेभ्यो दद्याद्दोषापनुत्तये । एतत्प्रयोगात्कार्यत्र वंध्या याति सपुत्रताम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९१ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ वैश्यो चात्र जन्मनि वाहुजः । देवद्रव्यापहरणात्मागत्राक्षिप्रपीडनम् ॥ १ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गंधैः पुष्पैः समभ्यर्च्य दीपान्दद्यात्सुवर्णजान् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९२ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
कर्मणा तेन संजातः पंढश्चापवर्णजः । गवां पालनजात्पुण्यात्मागत्र सुखसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवात्र निष्कृतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरद्विशताधिकसहस्रतम ॥ १२९३ ॥

## श्रीसूर्य उवाच ।

या काचिल्ललना पूर्वं मोहात्परघृतं हरेत् । सात्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्युत्तरद्विशताधिकसहस्रतम ॥ १२९४ ॥

## श्रीसूर्य उवाच ।

महिषीमवधीत्पूर्वभवे चायं नराधिपः । सोऽत्र जन्मनि पक्षीन्द्र लघुगुल्मयुतो भवेत् ॥ १ ॥

स्वर्णशृंगीं रौप्यखुरीं घंटाभरणभूषिताम् । सूक्ष्मकम्बलयुक्तां च दद्याद्वेदविदे सुत ॥ २ ॥
कृष्णगुल्मोद्भवां पीडां नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९५ ॥

## श्रीसूर्य उवाच ।

प्राग्भवे याऽभवत्काचित्स्वर्णकारी खगाधिप । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लगुडेन तथा भृशम् ॥२ ॥
ताडनात्सा महादुःखं प्राप्ता गर्भातिचारतः । मृता च तेन दुःखेन गर्भपातसमन्विता ॥ ३ ॥
तेन कर्मविपाकेन संप्राप्योचितशासनम् । पुनः शूद्री हि संजाता गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यैर्नानाविभवसंयुता । पुत्रसंततिहीना सा प्राणघाताधसश्रयात् ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविनाशनम् । वापीं सा स्वेच्छया कुर्याद्देशे लोकाकुले तथा ॥ ६ ॥
मार्गे हि धर्मतो यत्नात्प्रतिष्ठां कारयेत्ततः । संस्थाप्य च शिवं तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच ततस्तत्र तिलानाज्ययुतानिह । भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् ॥ ८ ॥
दद्यात्तथैकां कपिलां सर्वपापप्रणाशिनीम् । प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् ॥ ९ ॥
नैवं या कुरुते श्रुत्वा तस्याः संततिजं भयम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९६ ॥

## श्रीसूर्य उवाच ।

यःकश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले सोऽन्यजनुषि बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच विधिना तत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९७॥

## श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कस्यचित्पापमोहिता। पूर्वजन्मनि चात्रैव बहुमूत्ररुजाऽऽकुला ॥ १ ॥
दुग्धधेनुप्रदानाच वेदवेदांगपारगे । विधिना काश्यपे सात्र न पश्येद्बहुमूत्रकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरद्विशताधिकसहस्रतमः ॥ १२९८ ॥

## श्रीसूर्य उवाच ।

यो मोहाद्धातयेत्सूत महिषीं नवयौवनाम् । प्राग्भवे नियतं सोत्र कृष्णगुल्मात्प्रबाध्यते ॥ १ ॥
स नानारत्नदानेन विधिना गरुडाग्रज । नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथ वा महिषीदानाद्द्विजाय विधिनाण्डज । महिषी पापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिशताधिकसहस्रतमः ॥ १२९९ ॥

## श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कानिकृन्तनम् । ब्रह्मपुत्रस्य पंढः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृतं वापि निष्कृतिर्नात्र विद्यते । ब्रह्मघातान्महापापात्पंढः स्याद्बहुजन्मसु ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिशताधिकसहस्रतमः ॥ १३०० ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । पूर्वजन्मनि पुण्यापि बहुदानरता सती ॥ १ ॥
अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियांडज। अत्र पुत्रविहीना सा फलचौर्यादि पातकात् ॥२॥
फलानां बहुदानाच्च चातुर्मास्येऽत्र नित्यशः । भोजनं तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् ३
प्रायश्चित्तं परं तस्य फलचौर्यस्य तत्स्मृतम् । अमायां नारिकेलानि देयानि खलु शक्तितः ॥४॥
एवं कृतेऽपत्यवृद्धिर्जीवनं सप्तसप्ततिम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरत्रिशताधिकसहस्रतमः ॥ १३०१ ॥

श्रीसूर्य उवाच ।

दधिहारी पुमान्पूर्वे जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यां माधवैशाख्योर्दधिधेनुप्रदानतः । तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ! ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरत्रिशताधिकसहस्रतमः ॥ १३०२ ॥

श्रीसूर्य उवाच ।

महिषी घातनान्नारी प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र ! कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात् साभरणां सूत ! महिषीं यमदैवताम् । कंबलद्वयसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत । प्रायश्चित्ते कृते त्वस्मिन्कृष्णगुल्मं न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तरत्रिशताधिकसहस्रतम ॥ १३०३ ॥

श्रीसूर्य उवाच ।

विध्यातमार्गो वृषानां च नासाग्रं गरुडाग्रज । नासाछेदोऽत्र तस्य स्यात्पूर्वभावे हि निश्चयात् ॥१॥
प्रायश्चित्तं न तस्यास्ति दत्तैर्दानशतैरपि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरत्रिशताधिकसहस्रतमः ॥ १३०४ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिसम्पन्नो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परघातकृते सूत ! स्वशरीरमथात्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महाचौर्येण चांडज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
अथ भूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम् । सिंधोः पश्चिमभागेऽत्र शतयोजनसम्मिते ॥६॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
सुखैश्वर्यसमाक्रान्तो धनवाहनभोगभाक् । शूरः सुवेषोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापाल्लोभरतः क्रोधी नानाभिरवशासनः । रिष्टं षष्टिमिते वर्षे पंचहीने खगाधिप ॥ ९ ॥
सुवर्णस्य महाकालनरस्य हि खगाधिप । सर्ववित्तषंडशेन दानाद्रिष्टक्षयो भवेत् ॥ १० ॥
पश्चाशीतिमितायुः स्यादन्ते कालनरेंडज । प्रायश्चित्तेऽकृते त्वत्र रिष्टं स्यात्प्रोक्तवत्सरे ॥ ११ ॥

कालरूपेण शस्त्रेण तत्क्षणे मरणं स्मृतम्। महाघोराह्वे सूत! चात्मघातादिदं फलम् ॥ १२ ॥
चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम्। हृदिस्थं लशुनं पुत्र षडंगुलमितं शुभम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तरत्रिशताधिकसहस्रतमः ॥ १३०५ ॥

श्रीसूर्य उवाच।

दधिग्रहरणान्नारी प्राग्भवे त्वत्र जन्मनि। मेदसा पीड्यते सा तु विनतानन्दवर्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने। मुच्यतेत्र महारोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरत्रिशताधिकसहस्रतमः ॥ १३०६ ॥

श्रीसूर्य उवाच।

तरक्षौ निहते पूर्वे भवे च गरुडाग्रज। अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च। न पश्यत्यक्षिजं घोरं कातरोत्थं हि काश्यप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरत्रिशताधिकसहस्रतमः ॥ १३०७ ॥

श्रीसूर्य उवाच।

प्राग्भवे सुमुखी काचिद्गता देवालयेंडज। दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
दीपा दत्ता मया सा हि धनपुत्रसमन्विता। चण्डीगृहे महादानात्प्राकृतात्तु खगाधिप ॥ २ ॥
हरणादपरस्यास्तु चक्षुःपीडातिदारुणा। त्रिदोषैर्दूषिता चात्र युवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम्। दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥
सुवर्णाद्विमितं भव्यं संपूज्याथ महेश्वरम्। गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्द्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरत्रिशताधिकसहस्रतमः ॥ १३०८ ॥

श्रीसूर्य उवाच।

दुष्टगंधयुतः सूत जायते सोऽत्र जन्मनि। मधुहारी च यः पूर्वे प्रायश्चित्तं परं शृणु ॥ १
मधुधेनुप्रदानाद्वै ब्राह्मणाय विपश्चिते। दुष्टगंधकृताद्रोगान्मुच्यते नात्र संशयः ॥ २

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरत्रिशताधिकसहस्रतमः ॥ १३०९ ॥

श्रीसूर्य उवाच।

तरक्षुं घातयेत्पूर्वे या नारी गरुडाग्रज। कचराक्षी प्रजायेत चक्षुरोगात्खगाधिप ॥ १ ॥
धेनुं रत्नमयीं दद्यात्ससुवर्णां विधानतः। न पश्यत्यक्षिरोगं सा तद्दानेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१० ॥

श्रीसूर्य उवाच।

प्राग्जन्मन्यप्यभूत्कश्चिन्नरो राजकृपान्वितः। दंडाधिकारवाञ्छूद्रो दृढो ब्राह्मणपूजितः ॥ १ ॥
नानादानरतस्तत्र लोभाढ्योऽपि विशेषतः। व्यभिचाररतस्त्वेकब्राह्मणस्य खगाधिप ॥ २ ॥
लोभाच्चकारासौ तत्र हस्तच्छेदं च तत्क्षणात्। स तेन कर्मणा युक्तो मुक्त्वातियमशासनम् ॥ ३ ॥
देशे पञ्चनदे ह्यत्र जातः शूद्रोऽतिचाधमः। सचास्त्यत्र विवर्णस्तु पंढः पापमतिः सुखी ॥ ४ ॥

सकलैश्वर्यसंपन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मस्वसौ पंढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरत्रिशताधिकसहस्रतमः ॥ १३११ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्ययशा धनी । राजमान्यो विरोधी च नानासौख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते तस्य चोदरे । सर्वदा वातरक्तादि जायते पक्षसंख्यया ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी । प्रियभक्तिरता नित्यं दानदाक्षिण्यशालिनी ॥ ३ ॥
एकपुत्रं प्रसूयाथ चान्यपुत्रमजीजनत् । पश्चात्पुष्पं गतं शांतिमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं शाम्यति तत्स्त्रियाः । विधानावहितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातो धातुकांस्यादिकारकः । स हि ब्राह्मणसख्येन बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्येण वर्धितः । कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
संचितं तद्धनं सर्वं न तु विप्राय चार्पितम् । ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासंततिनाशनम् । यो वै तस्य मृतः पुत्रः स जातो ब्राह्मणस्य च ॥ ९ ॥
इदं चतुर्थं वै जन्म ब्रह्मवंशसमुद्भवम् । भार्या दुःखयुता ह्येवं पुत्रहीना खगाधिप ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश संततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

ब्रह्मस्वं विषतुल्यं वै पुत्रपौत्रादिनाशनम् । विषेणैको हि म्रियते ब्रह्मस्वात्सकलं कुलम् ॥ १२ ॥
तस्याः संततिवृद्ध्यै हि कारयेन्निष्कृतिं शुभाम् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतंडुलैः । तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवम् । नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम् । सुवर्णस्य विशुद्धस्य च दापयेद्दशादिने ॥ १७ ॥
प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम् । शतमष्टोत्तरं विद्वान्द्रोणान्सैव निर्मितान् ॥ १८ ॥
जातीपुष्पसमुद्भूतां लक्षपूजां शिवोपरि । संकल्पान्मोचयेद्धेनुं दंपती परिधापयेत् ॥ १९ ॥
एवं कृतविधेः सुत निश्चला संततिर्भवेत् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१२ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत् । सात्र जन्मनि पक्षीन्द्र दुर्गंधाढ्या प्रजायते ॥ १ ॥
मधुधेनुप्रदानात्तु व्यतीपातादिपर्वसु । दुर्गंधिरोगात्सततं मुच्यतेऽत्र पतत्रिण ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१३ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा समाख्याता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं तस्याः शृणुष्वात्र खगाधिप ॥ १ ॥

अनया द्रव्यलोभेन सपत्न्या घातितः सुतः। प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥
तस्मादियं महापापा जातात्र यवनी खग। भविष्यति महारिष्टमग्निदाहेन चांडज ॥ ३ ॥
तस्या वर्षे चतुर्विंशे मरणं कीर्तितं ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१४ ॥

श्रीसूर्य उवाच।

षंढः स्त्रीराजसन्मानी ह्यत्र जन्मनि चांडज। महादुष्क्रियायुक्तो वधबंधनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यधनान्वितः। महामानी महाधूर्तः षंढोऽगम्यानिषेवणात् ॥ २ ॥
नात्र जन्मनि भोः सूत प्रायश्चित्तं मयोदितम्। अगम्यागमनं पापं प्रायश्चित्तविवर्जितम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१५ ॥

श्रीसूर्य उवाच।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत। जायते दंतुरः सोऽपि काले तत्पापचिह्नितः ॥ १ ॥
घृतकुम्भं यथाशक्ति दद्याद्विप्राय धीमते। सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१६ ॥

श्रीसूर्य उवाच।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः। गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानात्तु विधिना ब्राह्मणाय च। गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरत्रिशताधिकसहस्रतमः ॥ १३१७ ॥

श्रीसूर्य उवाच।

अथो काचित्सती नारी धर्मिष्ठा प्रियवादिनी। स्वामिना प्रेरिता पूर्वं शत्रोर्दग्धं तया गृहम् ॥१॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा। ब्राह्मण्येका सबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधात्तत्र किंचित्कालेऽपि सा मृता। भुक्त्वा पापफलं सर्वं पुण्यपापसमुद्भवम् ॥ ३ ॥
सा शूद्री यमुनातीरे जाता वै पतिसेवया। कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशिनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम्। कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरत्रिशताधिकसहस्रतमः॥ १३१८ ॥

श्रीसूर्य उवाच।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतस्तदा। पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तस्तीक्ष्णशृंगो भयानकः। तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम्। तत्र तज्जनितं भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिंधुमण्डले पर्वताश्रिते। षण्ढस्तु तेन पापेन स चास्त्यत्र खगाधिप ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः। पापाद्वाचया तस्य प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनां च भविष्यति च सद्गतिः। तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः षष्टिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३१९ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वाहनं गरुडाग्रज । दंतुरा सा भवेदत्र तत्काले घातकारणात् ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२० ॥

श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्भवे लोभात्पुरा भवेत् । कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणाय खगाधिप । कण्डूरोगस्य शमनं दानात्तैलघटद्वयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरत्रिशताधिकसहस्रतम. ॥ १३२१ ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ताधिविद्धा सा महारोषवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पुंस्त्वं पत्युर्विनाशितम् । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योतिदुःखार्तो न शुभं लभते गतिम् ॥ ३ ॥
बहुजन्मरवसौ पापान्मुक्तः स्याद्दिनतात्मज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरत्रिशताधिकसहस्रतम. ॥ १३२२ ॥

श्रीसूर्य उवाच ।

स्वभक्ष्यार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खंजः स्यान्नात्र कार्या विचारणा ॥ १ ॥
न तस्य विस्मयं प्रोक्तमत्र जन्मनि चांडज । स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२३ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहाद्गुडं हरति कस्यचित् । गुल्मोदरेण रोगेण पीड्यते सात्र जन्मनि ॥ १ ॥
गंगायां हि महाभाग गुडधेनुप्रदानतः । तत्र स्नानान्महापुण्यात्तस्माद्रोगाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरत्रिशताधिकसहस्रतम ॥ १३२४ ॥

श्रीसूर्य उवाच ।

कश्चिद्वैश्योऽभवत्पूर्वभवे नेपालदेशके । बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः ॥ १ ॥
आराधनं तु कृतवान्देव्या वै पूर्वजन्मनि । स्वस्त्रियं च सुरूपां च परित्यज्य शुभाननाम् ॥ २ ॥
अन्यस्त्रियं सोऽप्यगमद्व्यभिचारपरो दृढः । स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति ॥ ३ ॥
शुभं पापफलं भुक्त्वा स जातोऽत्र महीपतिः । गौरो भव्यो महाज्ञानी महाविभवसंयुतः ॥ ४ ॥
देशेदेशेऽतिविख्यातो घृणी स्वल्पो महायशाः । स्वस्त्रीत्यागान्महापापात्स जातः स्त्रीविवर्जितः ॥ ५ ॥
निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तेः सौख्यकारिणीम् । पार्वतीप्रतिमां कृत्वा हैमिकीं कार्यकारिणीम्
पलपञ्चमितां लेख्यां गंधैर्माल्यैरलंकृताम् । दद्याद्वेदविधिज्ञाय कुलीनाय तथार्थिने ॥ ७ ॥
प्रजापतिं ततो दद्याद्राजतं त्रिपलात्मकम् । ब्रह्मदैवतमंत्रेण गृह्णीयात्स महाद्विजः ॥ ८ ॥
पश्चादष्टाक्षरं मंत्रं सहस्रं पापशोधनम् । जपेदष्टसहस्रं तु सूर्यमंत्रं महाबलम् ॥ ९ ॥
होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् । य एव [illegible]ते सूत सर्वपापविनाशनम् ॥ १० ॥

प्रायश्चित्तं परं तत्र तस्मात्पापात्प्रमुच्यते। नवं करोति यो मोहाज्जडर्योर्विघातितः ॥ ११ ॥
लभते स्त्रीसुखं नात्र रिष्टं षड्वेदकेन्द्रके । प्रायश्चित्ते कृते सूत जीवनं पश्चसप्ततिम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२५ ॥

श्रीसूर्य उवाच।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतात्मज। खञ्जः स्यादत्र जनुषि तत्काले मृगघातनात् ॥ १॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत । दद्यादश्वं नवं तत्र स्वर्णनिष्कयुतं शुभम् ॥ २ ॥
सहासनं सालंकारं पूजयित्वा विधानतः । विधिज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ ३ ॥
न पश्यति स खंजत्वं दानस्यास्य प्रभावतः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२६ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत परतैलापहारिणी । सात्र जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता ॥ १ ॥
सा मुच्यते वै दानेन घटयोस्तैलपूर्णयोः । यथाशक्ति सुवर्णाढ्याचैलदानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२७ ॥

श्रीसूर्य उवाच।

राजप्रचारी वै कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्या महाबाहो रतिं चक्रे स मूढधीः । गर्भं दधार राज्ञी वै भाविनोर्यस्य वै बलात् ॥ २ ॥
तत्पापस्य फलं भुक्त्वा यमलोके खगाधिप । शिवपूजनजात्पुण्यात्सोत्र जातो हि पादजः ॥ ३ ॥
षण्ढो हि जाङ्गले देशे सर्वधर्मबहिष्कृतः । शिवपूजारतो यस्मात्प्रागत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३२८ ॥

श्रीसूर्य उवाच।

गर्भाढ्या याऽवधीत्पूर्वं मृगं हि विनतांडज । स्वगर्भपालने दक्षा जन्मन्यत्र गतिं शृणु ॥ १ ॥
तद्घातकाले खंजा सा भविष्यति शुभानना। गर्भपातेन दुःखार्ताऽवश्यमेव तदेनसा ॥ २ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं सुयानं भूषणान्वितम् ॥ ३ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते। न पश्यति च गर्भार्त्यां पीडामत्र च जन्मनि ॥ ४ ॥
दानप्रभावात्पक्षीन्द्र खंजत्वं नाप्नुयादिह ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३२९ ॥

अरुण उवाच।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः। मेहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्ववातादिना पीडा बाल्ये स्याद्ग्रहणीगदः। तस्य भार्या गताचारा भर्तृभक्तियुता सदा ॥ २ ॥
रक्तस्रावादिना पीडा जायते चोदरानिलः। गर्भोऽपि तस्या उदरे पातं कुर्याच्च दुष्टितः ॥ ३ ॥
द्वित्रैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा। केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु चास्या विचेष्टितम्। व्यभिचारभयाद्यापि तया गर्भश्च पातितः ॥ ५ ॥

अतिकष्टद्वैनतेय गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचारादिकं बहु ॥ ६ ॥
नानाद्रव्यापहरणं कुलटाकर्मतः कृतम् । भर्ता चास्या दुष्टबुद्धिर्दुष्टसङ्गादिदोषतः ॥ ७ ॥
तेन दुष्टेन यद्द्रव्यं हृतं तस्करबुद्धिना । भुक्तं ताभ्या वैनतेय ब्रह्मस्वं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः । यातना बहुधा प्राप्ताः पश्चान्मानुषतां गतः ॥ ९ ॥
किंचित्पुण्यप्रभावेण क्षात्रोऽयं जन्मतो भुवि । जन्म चेदं चतुर्थं वै गर्भपातोऽत्र जायते ॥१० ॥
उभाभ्या च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि विश्वेश यया गर्भः स्थिरो भवेत्॥१२॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी नानागर्भविनाशिनी । तस्याः शुद्धिं तु निष्कृत्या शृणु त्वं कश्यपात्मज १३
नारी नियमसंयुक्ता भूत्वं स्याद्व्रतकाङ्क्षिणी । सौम्यायने समापूर्यमाणपक्षे शुभेऽहनि ॥ १४ ॥
तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत् । पयः स्रवन्तीं शान्ता च सुरभीं शुभलक्षणाम् ॥१५॥
गृहमानीय विधिवत्पूजयेत्सुसमाहितः । इष्टैस्तु यवसैः पानैर्भक्ष्यैः कण्डूयनैरपि ॥ १६ ॥
रुचिरैश्च सुगोस्थानैः सती परिचरेत्सदा । रात्रौ पुष्पावलीभिश्च दीपस्रक्चंदनादिभिः ॥ १७ ॥
सुगीतमङ्गलध्यानैस्तदधःशायिनी भुवि । प्राणयात्रा प्रकुर्वीत तस्यास्तु पयसाऽहनि ॥ १८ ॥
तस्यास्तु पञ्चगव्यानि यथान्यायमथाश्नती । एवंव्रतपरा नारी मासमासीत संयता ॥ १९ ॥
तस्या धेनोः सवत्साया इष्टं सममिकाङ्क्षिणी । व्रतान्ते द्विजमाकार्य समस्तगुणशालिनम् ॥ २० ॥
अभ्यर्च्य पूजयेद्भक्त्या वस्त्रस्रग्दामभूषणैः । सम्यगभ्यर्च्य ता धेनुं तनयां तरस्तनन्धयाम् ॥२१॥
नत्वा च विधिवत्तस्मै ता दद्याद्धितिभाषिणी ॥ २२ ॥

मंत्रः ।

"सुवर्णं शुद्धमाग्नेयं माषपोडशसंमितम् । ददानि गा सवत्सां च पूर्वपापापनुत्तये ॥ २३ ॥
यन्मया कुलटावृत्त्या नानागर्भा विनाशिताः । नानाभेदैः प्रयाता मे गर्भा वै बहवो भुवि ॥ २४॥
कर्मणा तेन जनितं गर्भपातादिदूषणम् । एनसस्तस्य नाशाय दानमेतत्करोम्यहम् ॥ २५ ॥
इह जन्मनि वंध्यात्वं नाशमेतु ममानघे । दानेनानेन सुरभे सुप्रीता भव सुव्रते ॥ २६ ॥
"भवेच्च त्वत्प्रसादेन गर्भो मे सुभगासि भोः" ॥ २७ ॥

एवमरित्वति ता धेनुं समादाय सदक्षिणाम् । हिरण्यं रजतं ताम्रं फलानि विविधानि च ॥ २८ ॥
दापयेद्द्विजमुख्येभ्यो प्रार्थनाभिश्च तोषयेत् । भोजयेच्च शतं विप्रान्नानान्नैः सक्तुपायसैः ॥ २९ ॥
एवं कृतविधेः सूत नार्या दुःखं विनश्यति । वंध्यात्वं मुच्यते सूत पुत्रमाप्स्यति यशस्विनी ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३० ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चित्तुरंगं घातयेन्नरः । वक्रकंठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात् । वक्रकंठसमुद्भूता पीडा नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३१ ॥

---

श्रीसूर्य उवाच ।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि । पादहीनो भवेत्सूत भृशं चाकृतनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम् । ब्राह्मणाय प्रयत्नेन पूर्वपापप्रनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३३२ ॥

श्रीसूर्य उवाच ।

संकरः प्राग्भवे सूत बभूव धनसंयुतः । तीर्थवासी विरक्तश्च लोभाद्धर्मक्रियान्वितः ॥ १ ॥
क्रूरं कर्म कृतं तेन दुष्टसंगेन चांडज । चौर्येण गां परां नीत्वा क्षुधितोऽभक्षयत्पुरा ॥ २ ॥
मृतः स तेन पापेन नानायोनिमुपागतः । स तीर्थमृत्युवशतो गंगातीरेऽत्र पादजः ॥ ३ ॥
तस्यैव हि प्रभावाच्च धनपुत्रसमन्वितः । पुत्रमाविण्डजश्रेष्ठ चक्षुर्हीनो भविष्यति ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि सुवर्णदशकैर्मितम् । लिखित्वा गां विधानेन पूजयित्वा विधानतः ॥ ५ ॥
सा देया वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं चायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्ति भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिना सूत स तद्दोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३३३ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । आहोस्वित्पुरुषस्यापि घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वात्स्थानाच्च पतनात्किल । पादभंगो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥
करोति तस्य पापस्य प्रायश्चित्तं यथाविधि । या सा पापात्प्रमुच्येत नचोर्ध्वात्पतनं ध्रुवम् ॥ ३ ॥
अश्वं निष्कसुवर्णाढ्यं दद्यात्पापविशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३३४ ॥

श्रीसूर्य उवाच ।

या नारी घातयेदश्वं प्राग्भवे साऽत्र जन्मनि । महापर्वसु गंगादौ पुण्यतीर्थेषु दापयेत् ॥ १ ॥
सर्वोपस्करसंयुक्तं स्वर्णाढ्यं विधिसंयुतम् । सा मुच्यते वक्रकंठपीडाया विनतात्मज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३३५ ॥

श्रीसूर्य उवाच ।

आसीत्क्षात्रो महाभाग पाञ्चाले देशके शुभे । नानाधर्मसमायुक्तो ग्रामे वै विश्रुतो महान् ॥ १॥
दुष्कृतं चरितं तेन भाविनोर्थस्य वै बलात् । शूद्रयां च विधृतो गर्भो कामलोभेन निश्चयात्॥२॥
कृतो यत्नो महांस्तत्र नारीगर्भस्य पातने । तया हालाहलं पीतं मृता सा लोकशंकया ॥ ३ ॥
महत्या गर्भपीडाया बालकोऽपि मृतस्तदा । सहायैः पञ्चभिर्युक्तः कृतवत्येतमद्भुतम् ॥ ४ ॥
कर्मणां संग्रहं दृष्ट्वा गर्भपातसमुद्भवम् । ततः संप्राप्तमरणो बाहुजोऽथ सहाययुक् ॥ ५ ॥
सूर्यलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुमात्रकान्भुक्त्वा स्वकृतान्दृढकर्मजान् ६॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । जातो यमुनातीरे बाहुजोऽप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लम्बश्च धनसौख्यसमन्वितः । पितृभ्रातृविहीनश्च लोभमोहरतः सदा ॥ ८ ॥
नैकस्त्रीसंयुतः कामी नानाविभवसंयुतः । आयुषा स्वल्पयुक्तश्च बुद्धिमान्देशविश्रुतः ॥ ९ ॥

धर्मादिदं तथा पापाद्भूतः पापरतः शठ । सकन्यो हृदि रोगी च मनोदुःखसमन्वितः ॥ १० ॥
शूद्राया वीर्यदानात्प्राक् तद्वन्ध्याजातपुत्रकः । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापापनोदिनीम् । पुत्रवृद्धिकरीं धन्या लोकाना हितकाम्यया ॥१२॥

श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सूत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भधारणनाशिनीम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चमितैः शुभा । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः॥१४॥
तदर्धेनाथ वा कार्या निजवित्तानुमानतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशिनी ॥ १५ ॥
मापपञ्चमितो विष्णुः सर्वपापप्रणाशनः । प्रजापतिं तथा दद्यात्सौवर्णं पञ्चमापकम् ॥ १६ ॥
राजानं च तथा दद्यात्सोमं सार्द्धपलात्मकम् । गायत्रीदशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तंडुलैः साज्यैः सर्षपैः सतिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥
एवं कृतविधेः सूत सर्वपापविनाशनम् । पुत्रपौत्रविवृद्धिः स्यादिह जन्मनि निश्चयात् ॥ १९ ॥
अकृतं तु यथाशक्ति प्रायश्चित्तं यथोदितम् । रिष्ट पाष्टिमिते वर्षे दारुणं शङ्करकृतम् ॥ २० ॥
प्रायश्चित्ते कृते सत जीवन पञ्चसप्ततिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्त्रिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३६ ॥

श्रीसूर्य उवाच ।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यत्र कोविदः । ग्रामवासी सदा सौम्यः शतद्रुनिकटेऽण्डज ॥ १ ॥
शूद्रकन्या च तत्रैव हृद्या षोडशवार्षिकी । भुक्तातिकामलोभेन बलात्कारेण दूषिता ॥ २ ॥
स चाथ धर्मपुत्रस्य भुक्त्वा भैरवशासनम् । पूजनाच्छिवलिंगाना प्रागत्रापि च संकरः ॥ ३ ॥
पूर्वस्तेन विपाकेन प्राप्तसर्वमनोरथः । राजप्रचारको धीमान्गजाश्वप्रतिपालकः ॥ ४ ॥
महाधनो महोत्साहो महाविभवविस्तरः । मृत्युश्चास्यात्र गंगाया पुण्याच्च शिवपूजनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चात्र सद्गतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्रिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३७ ॥

श्रीसूर्य उवाच ।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि । यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानविधानेन ब्राह्मणाय खगाधिप । न पश्यति महापीडा पतत्रिन् पादसंभवाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३८ ॥

श्रीसूर्य उवाच ।

यो घातयेद्गजं जानन्प्राग्भवे विनतासुत । भक्ष्यार्थं सोऽत्र जनुषि पुरुषोगाधिको भवेत् ॥ १ ॥
न तस्य निष्कृतिर्दृष्टपापस्यात्र च काश्यपे । प्रारब्धस्य क्षयो नाऽत्र प्रायश्चित्तात्सहस्रशः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३३९ ॥

श्रीसूर्य उवाच ।

भगवन्प्राग्भवे विप्रो ग्रामवासी वनाश्रितः । चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत । गोभूम्यश्वादिकानीह ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥

स भुक्त्वा नरकान्घोरान्पापात्पुण्याच्च शाश्वतात्। स्वर्गान्पर्वतभागेषु संजातो बाहुजोऽधुना ॥ ३ ॥
धामनो राजसम्मानी महोशो मंत्रपारगः। पुत्रहीनो ह्यसौ सूत परवित्तस्य लुंठनात् ॥ ४ ॥
भवन्त्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः। प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान्। तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोंडज। रौद्रव्रतं चरन्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यो भक्त्या स नरः पुत्रवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्यात्पुत्रविवर्द्धनम् ॥ ८ ॥
आयुरष्टौ तथाशीतिवर्षाणि कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४० ॥

## अरुण उवाच।

प्राचवंशे समुत्पन्नो वातदेहरुजाकरः। गुल्माद्या ह्युदरे व्याधिः शिरोर्तिर्जायते तदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किंचित्सेवादिना भवेत्। तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् ॥
अन्योन्यद्वेष्यभावाच्च किंचिद्भक्तिकरी परा। मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
गर्भस्तस्याः स्थिरीभूतो न प्रसूतिर्न पातनम्। केन पापप्रभावेण कथयस्व दिवाकर ॥ ४ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि शूद्रस्तु धान्यविक्रयकारकः। दानधर्मपरो नित्यं देवदेवपरायणः ॥ ५ ॥
अन्योन्यद्वेषभावाच्च वर्तते च विधिस्ततः। कश्चिद्विप्रो धर्मपरो वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। तद्वित्तं ग्राहयामास शूद्रो म्लेच्छजनस्य च ॥ ७ ॥
धनाय मतिं चक्रे ब्राह्मणं भार्यया सह। मत्संनिस्तर्जनाद्यैस्तु तद्धनं च तदा दिनैः ॥ ८ ॥
कतिपयैश्च शूद्रेण चान्येभ्यो विनतासुत। म्लेच्छभीत्या स वै साधुर्ब्राह्मणः क्रोधसंकुलः ॥ ९ ॥
तदर्थमपि प्राप्तश्च ह्यात्मघातं चकार ह। गर्भयुक्ता च भार्या वै भर्तारं पृष्ठतोऽन्वगात् ॥ १० ॥
हृतं तस्यापि तत्सर्वं म्लेच्छराजेन तत्तदा। तावत्काले गते कश्चिच्छूद्रो म्लेच्छेन घातितः ॥ ११ ॥
ततो वै निरये वत्स वर्षायुतसहस्रकम्। पच्यते नरके घोरे शूद्रो देहेन वै तदा ॥ १२ ॥
पश्चान्मानुष्यमापन्नो दानधर्मप्रभावतः। जन्म चेदं तृतीयं वै शूद्रवंशसमुद्भवम् ॥ १३ ॥
तेनैव कर्मणा तस्य ह्यपत्यं नैव जायते ॥ १४ ॥

## अरुण उवाच।

प्रायश्चित्तं कथं स्वामिन्येन पापक्षयो भवेत्। निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया ॥ १५ ॥

## श्रीसूर्य उवाच।

तीर्थे संवत्सरं सेवा ह्येकचित्तेन दम्पती ॥ १६ ॥
श्रवणं हरिवंशस्य विप्रस्योद्यापनं तथा। तावन्निष्कृतयो भूयः क्रमेणानेन यास्तदा ॥ १७ ॥
सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते। कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १८ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत्। सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम् ॥ १९ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः। जनन्या सहितान्भूयः प्रद्युम्नाद्यांस्तथार्चयेत् ॥ २० ॥
चारुदेहं चारुबाहुं चारुगुप्तं सुशोभनम्। श्रीवत्सांकं पीतवासं सुचारुं पूजयेत्क्रमात् ॥ २१ ॥
पूजनं विष्णुसूक्तेन तथा श्रीरसकोविदैः। पुष्पैः सुगंधिधूपैश्च ह्यर्चयेद्विष्णुमव्ययम् ॥ २२ ॥
तद्विप्रासोऽस्य तद्विष्णोर्विष्णोः क्रमत इत्यसौ। इत्यादिमन्त्रैर्जुहुयाच्छतमष्टोत्तरं हविः ॥ २३ ॥
होमान्ते विप्रपूजान्ते मंत्रमेतमुदीरयेत् ॥ २४ ॥

मंत्रः ।

"यन्मया पापभावेन कृतं कर्म दुरात्मना । म्लेच्छराज्ये च व्यापारे मया वै दुष्कृतं कृतम् २५॥
ब्राह्मणानां हृतं द्रव्यं भीत्या ताडनतर्जनैः । द्रव्यापहरणात्प्राप्तं दुःखं नानाभवान्तरे ॥ २६ ॥
स्थिरगर्भमृतापत्यबालघातादि दुःसहम् । तत्तदेनोविनाशाय दानं संप्रददे त्वहम् " ॥ २७ ॥
स्वस्त्यस्त्विति च तत्रोक्त्वा कोदादिति विसर्जनम् । सांपप्यात्मानमालोक्य भोजयेद्दिष्टबंधुभिः २८
ऐहिकं लक्षणं तस्य शरीरे चोपजायते । हृद्दुःखं दीर्घनिःश्वासो लोचने साश्रुकर्शिते ॥ २९ ॥
काष्ठलोष्टादि शस्त्राद्यैर्घातः स्यादुपलेखनात् । जलाकुलत्वं स्पर्गोग्रेस्तादृशो व्रणसंभवः ॥ ३० ॥
नार्यङ्गे विकृतव्याधी मुखे तिलव्रणादिकम् । पितृजामातुलान्यादेर्विंधवार्तिः प्रजायते ॥ ३१ ॥
स्वकुले प्रेतजा पीडा दुःखं वैकल्यजं तथा । कर्मानुसारजो व्याधिश्चिह्नं तस्य सहायवत् ॥३२॥
स्वकुले केऽपि वर्तन्ते पतिताचारचारिणः । एवं तु लक्षणैर्व्याप्तैः प्रायश्चित्तं ततो वदेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४१ ॥

श्रीसूर्य उवाच ।

पूर्वं ह्याभीरजा काचिदभूद्धर्मपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां प्रेरितास्तया । निदाघकाले संप्राप्ते बहिर्ग्रामाज्जलाश्रये ॥ २ ॥
नैः पानं प्रकुर्वन्यो जलं शीतलमुत्तमम् । ताडितास्ता भृशं गावो लकुटेन दृढेन वै ॥ ३ ॥
तत्रैका तृषिता गौस्तु ताडिताऽपि भृशं तया । न च त्यक्तं जलं सूत गर्भाधानान्विता यतः ॥४॥
तस्मिन्काले च तस्यास्तु पतितो गर्भसंस्थितः । वत्सस्तत्ताडनात्सूत मृतश्चापि हि तत्क्षणात् ५॥
विचेष्टितमिदं यस्याः सैषा वैश्याङ्गनाऽधुना । नानाविभूतिसंयुक्ता नानापशुभिरन्विता ॥ ६ ॥
सुखभोगधनैर्धान्यैर्वाञ्छितार्थान्विता सुत । प्राग्गोसेवनजात्पुण्यात्सर्वं पुण्यफलं त्विदम् ॥ ७ ॥
अथात्र गर्भपूर्णत्वे प्रभावे खगाधिप । न मोचयति सा गर्भं तद्दुःखेनाकुला भृशम् ॥ ८ ॥
एवं वर्षत्रयादन्ते मोचयिष्यति वै सुत । रिष्टमब्दत्रये सूत बालवत्सवधादिह ॥ ९ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदृश्यभाक् ॥ १० ॥

श्रीसूर्य उवाच ।

दद्याद्गां कपिलामेकां स्वर्णशृंगादिकान्विताम् । विप्राय वेदविदुषे तद्दोषशमनाय च ॥ ११ ॥
द्विसुवर्णमितां तद्वत्सैरूप्यां गां गर्भसंयुताम् । दद्याद्वेदविधिज्ञाय पूर्वपापात्प्रमुच्यते ॥ १२ ॥
भोजयेत्तु यथाशक्ति विप्रान्वै होमयेत्तिलान् । मुच्यते गर्भजाद्दोषान्नात्र कार्या विचारणा ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४२ ॥

श्रीसूर्य उवाच ।

बभूव पार्श्वः कश्चिद्गुर्जरे विनतासुत । धर्मकर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिरतो नित्यं दानानि विधिपूर्वकम् । ददानि तेन शिष्टेभ्यो ब्राह्मणेभ्योऽतिशक्तितः ॥२ ॥
दैवाच्छत्रुगृहं गत्वा कृतं कर्म रुषा तु वै । वैरिपुत्रः पुरा सूत पादभागेषु घातितः ॥ ३ ॥
कुन्तायुधेन तीक्ष्णेन दिवा वै शौर्यकर्मणा । स मृतस्तेन दुःखेन तन्माता त्वेकपुत्रिणी ॥ ४ ॥
पुत्रदुःखान्मृता सापि ददौ शापं हि दारुणम् । यथा पुत्रविहीनाहं गच्छामि च यमालयम् ॥ ५॥

तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुविधे काले गतोऽसौ यमशासनम् ॥ ६ ॥
धर्मात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो मुरजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलश्रेऽब्जसंयुते । श्यामाङ्गो धूसरः क्षीणः प्रभुर्देशाटने रतः ॥ ८ ॥
बहुस्त्रीधनसंयुक्तो मित्रप्रियसमन्वितः । मानभोगसुखैश्वर्यो मितदो लोभसंयुतः ॥ ९ ॥
धर्मादिदं फलं सूत भृशं पापफलं शृणु । कृतचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसौ चिह्नं जन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मातरं च सौवर्णां पलैकेन मितां शुभाम् । पत्रे लेख्यां यथाकारां यथोपस्करसंयुताम् ॥ १३ ॥
पूजयित्वा तु गन्धाद्यैर्नैवेद्यैः सूपचारकैः । सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने ॥ १४ ॥
पलपञ्चमितं रौक्मं कुर्याद्धरिहरात्मकम् । तथैव गणनाथं च लेख्यं पञ्चोपचारकैः ॥ १५ ॥
संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये । अष्टाक्षरं तथा मन्त्रं वैदिकं सूर्यदैवतम् ॥ १६ ॥
जपेदष्टसहस्रं तु तथा प्रणवपूर्वकम् । गायत्रीपञ्चसाहस्रं दुष्टपापविमोचनम् ॥ १७ ॥
कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् । एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि ॥ १८ ॥
न प्राप्नोति तदा रिष्टं षट्त्रिंशाब्दे प्रकीर्तितम् । पञ्चवेदमिताब्दांतमायुस्तस्य प्रकीर्तितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४३ ॥

---

## श्रीसूर्य उवाच ।

अज्ञानादवधीद्यश्च पूर्वजन्मन्यजासुतम् । भविष्यत्यत्र पुरुषो ह्यधिकाङ्गो ह्यकिंचनः ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं च वस्त्राद्यैर्मुच्यते च तदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४४ ॥

---

## श्रीसूर्य उवाच ।

लोहहारी च पुरुष इह जन्मनि काश्यपे । वर्बरांगास्यरोगेण पीड्यते नास्ति संशयः ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो दानशतं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपञ्चचत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४५ ॥

---

## श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीच्छुभानना । प्राग्भवेऽण्डज तत्सर्वं चेष्टितं शृणु सांप्रतम् ॥ १ ॥
नकुलानां बिले कृत्वा चातितप्तां हि वालुकाम् । पूरितं च तथा सर्वं तद्धातार्थं खगाधिप ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वा तु यमशासनम् ॥ ३ ॥
पूर्वं शातद्रुजे देशे ह्यभूदत्र च पर्वते । पूर्वं राजकुले जाताऽत्रापि राजकुले सुत ॥ ४ ॥
प्राग्दानव्रतजात्पुण्यादथो पापफलं शृणु । सर्वे तद्वंशजाः सूत तदग्रे मरणं गताः ॥ ५ ॥
जीवनं चात्र तस्याश्च वर्षमष्टोत्तरं शतम् । न मुच्यते महापापाद्दशजन्मत्रयेऽपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति धर्मतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३४६ ॥

---

श्रीसूर्य उवाच ।

या नारी प्राग्भवे पुत्र घातयेद्जनन्दनम् । सगर्भा गर्भपुष्टचर्य जायते गोधिका तु सा ॥ १ ॥
भोगादेव क्षयः मोक्तः समारब्धस्य कर्मणः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तचत्वारिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३४७ ॥

श्रीसूर्य उवाच ।

लोहं हरति यान्यत्र नारी बुद्धिविवर्जिता । अग्रजन्मनि सा नारी बर्बरागान्विता भवेत् ॥ १ ॥
दद्यात् पलशतं लोहं समुद्दिश्य द्विजातये । मुच्यते पापजाद्रोगाद्बर्बरागाभिधात् सुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरत्रिशताधिकसहस्रतम ॥ १३४८ ॥

श्रीसूर्य उवाच ।

मोहात्प्राग्यापऽयधीस्तुत नार्यजं विधिवर्जिता । सा गोधिकायजनुषि भविष्यति तदेनसः ॥ १ ॥
अजं दद्याद्विधानेन कस्तूरीपलसंयुतम् । सवस्त्रं वेदविदुषे तद्दोषशमनं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदुत्तरत्रिशताधिकसहस्रतम ॥ १३४९ ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो गुल्मवातोदरामयः । वित्तथा कृपणश्चैव सहोदरसमन्वितः ॥ १ ॥
धनधान्ययुतश्चैव किञ्चिद्व्यापारवान्भुवि । दायादाच्छ्रवत्पीडा मिथः क्लेशश्च जायते ॥ २ ॥
तस्य भार्याद्वयं चापि सजातं चान जन्मनि । बहुपुत्र्य प्रसूताश्च न तु पुत्रः प्रजायते ॥ ३ ॥
कदाचिज्जातमात्रस्तु मृतः पुत्रोऽग्निमासकः । एका पुष्पवती भार्या संजाता तस्य भास्कर ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय तत्प्रभो ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि क्षात्रस्तु किंचिद्भूमिपतिस्तथा ॥ ६ ॥
अर्थलुब्धः स संजातो ग्रामाधीशः प्रतापवान् । ग्राममध्ये स्थितिं चक्रे ब्राह्मणो ज्ञानिसत्तमः ॥७॥
पुत्र्यः पंच तथा सप्त ह्यपुत्रो वित्तसंयुतः । कालेन मृत्युमापन्नो धनलुब्धो निराश्रयः ॥ ८ ॥
तस्य भार्या महासाध्वी गाहस्तं कृतवत्यथ । क्रियाकर्मादिकं तस्य चक्रे वै शक्तितः खग ॥ ९ ॥
क्षात्रेण हि हृतं सर्वमपुत्रस्य धनं बहु । निराधाराः सुता जाताः वित्तभावात्तु दुःखिताः ॥ १० ॥
सर्वस्वहरणाद्यापि गताः कन्या इतस्ततः । काचिन्मातुर्गता पक्षे काचिन्मात्रा सह स्थिताः॥११॥
मातृभावः क्षत्रगृहे संजातस्तस्य कर्मणः । यो वै क्षात्रगृहे पुत्रः सोऽजनि ब्राह्मणः स्वयम् ॥१२॥
योऽसौ तस्य मृतः पुत्रो धनलोभेन चागतः । एवं पुत्र ऋणी भूतस्तत्काले चर्णहत्स्वयम्॥१३॥
एवं ब्रह्मस्वकं प्राप्त पुत्रास्तस्य मृताः सदा । पुराकृतानि कर्माणि लुप्यन्ते चेह मानवैः ॥ १४॥
तेन कर्मविपाकेन कन्यापत्यं मृताः सुताः । तस्य पापस्य नाशाय निष्कृतिं क्रियते शुभा॥१५॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येन पापक्षयो भवेत् । संततिं लभते सोऽस्य लोकाना हितकाम्यया१६

श्रीसूर्य उवाच ।

शुभे त्वब्दे प्राप्ते शयने शुभवासरे । आरभेद्दक्षिणश्च सवत्सरविधिः स्मृतः ॥ १७ ॥
प्रत्यहं परमेशानं विष्णुमव्यक्तमव्ययम् । पौरुषेणेह सूक्तेन ह्यर्चयेन्मासमात्रकम् ॥ १८ ॥

कुंकुमागरुकर्पूरैश्चन्दनैस्तुलसीदलैः । अर्चयेद्विविधैः पुष्पैरुपचारैः पृथक्पृथक् ॥ १९ ॥
भौमाप्यनामसस्तेजोवायव्यैः पञ्चभिस्तथा । एवं व्रतपरा नारी भर्तृभक्तिपरायणा ॥ २० ॥
अर्चयन्ती हरिं पूर्णे वर्षावधि तथा चरेत् । शुभे मासे सिते पक्षे चैकादश्यामुपोषिता ॥ २१ ॥
शुभनक्षत्रयुक्तायां द्वादश्यां पुत्रकाम्यया । पूर्ववद्धरिमभ्यर्च्य ऋग्भिः षोडशभिः शुभम् ॥ २२ ॥
विधिवद्वह्निमास्थाप्य श्चर्ययेद्वैकृतं चरुम् । आज्यभागावसानेच कपिलाज्याहुतिर्हविः ॥ २३ ॥
पौरुषेण तु सूक्तेन यावत्षोडशसंख्यया । अश्वत्थसमिधस्तिस्रो जुहुयात्षोडशैव तु ॥ २४ ॥
पुनराज्यं ततो हुत्वा जुहुयाच्च चरुं तथा । होमान्ते द्विजभोज्यान्ते दानमेतत्समाचरेत् ॥ २५ ॥
हिरण्यभूमिवासांसि धेनुं वत्ससमन्विताम् । विप्रस्योद्वाहनं कृत्वा कन्यां चालंकृतामपि ॥ २६ ॥
दक्षिणां प्रदद्देवेवच्छलर्कौटिल्यवर्जिताम् । प्राश्नीयात्तु हविःशेषं सह पत्न्या हरिं स्मरन् ॥ २७ ॥
इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वैष्णवम् । सुभगा च सुरूपा च भवेद्विगतकिल्बिषा ॥ २८ ॥
ऐहिकं लक्षणं चिन्त्यं पूर्वकर्मानुसारतः । गुल्मार्शांसि तथा बाधा गुदे तस्यव्रणादयः ॥ २९ ॥
वातरक्तादि शिरसि नेत्रकर्णादिषु व्रणः । स्तनीयगौरवं दद्रुस्तथा वै पादवक्रतिः ॥ ३० ॥
जनश्रुतिरभूत्तत्र दुष्कृतो कारणं विना । हानिस्तु सर्ववस्तूनां द्रव्यनाशनजं भयम् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५० ॥

श्रीसूर्य उवाच ।

अथ शूद्रकुले पूर्वमासीत्पुण्या वरांगना । तदा दानरता जाता कुरुक्षेत्रे खगाधिप ॥ १ ॥
सर्वैः सुखैः सदोपेता सर्वसंपत्तिसंयुता । तथा कृतं महापापं भाविनोर्थस्य वै बलात् ॥ २ ॥
समीपवासिना चास्या ब्राह्मणेन च तद्गृहम् । निर्दग्धं चाग्निदाहेन वैरिभावात्खगाधिप ॥ ३ ॥
तत्र दग्धा महाभाग गौर्गपापा गृहंगता । कृत्वैवमद्भुतं कर्म भुक्त्वा तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्सात्र जाता हि बाहुजा । माथुरे मण्डले पुण्ये वृषलश्रोपलक्षिते ॥ ५ ॥
सुखदुःखसमाक्रान्ता जातसन्ततिनाशकृत् । दुःखैरनेकैर्युक्ताच मध्यभागे खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गयायां पितृतर्पणम् । कुरुक्षेत्राधिवासश्च पापनाशनमुत्तमम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५१ ॥

श्रीसूर्य उवाच ।

चक्रपादरुजा युक्तश्चात्र जन्मनि जायते । पूर्वजन्मनि यो मोहाद्भक्षेच्छ्वानं खगाधिप ॥ १ ॥
निष्कत्रयं प्रदातव्यं सुवर्णं वेदवादिने । दानेनानेन विधिना पूर्वपापापनोदनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५२ ॥

श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दंतपातनजाद्रोगात्पीडामाप्नोति निश्चयात् ॥ १ ॥
दद्याद्धेनुं सवत्सां च सर्वालंकारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५३ ॥

श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीड्यते ॥ १ ॥

तया तत्पापशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपाद्मणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतु पंचाशदुत्तरत्रिशताधिकसहस्रतम ॥ १३५४ ॥

श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वे या काचित्पापमोहिता । साऽत्र जन्मनि दुःखार्ता दंतपातरुजांडज ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुंबिने । प्राजापत्यव्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचपंचाशदुत्तरत्रिशताधिकसहस्रतम. ॥ १३५५ ॥

श्रीसूर्य उवाच ।

कश्चिद्दासीत्पुरा सुत चारणो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभेऽण्डज । तेन दानानि दत्तानि विप्रेभ्यो भास्करग्रहे ॥ २ ॥
कदाचित्तु महाभाग पापमाचरितं त्विदम् । स्वज्ञात्यां वै धृतो गर्भः कामलोभेन निश्चयात् ॥३॥
यत्ने कृतेऽपि तत्रैव नाभूद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चांडज ॥ ४ ॥
एवं बहुतिथे काले गतः स यमशासनम् । भुक्त्वा पापफलं दुःखं पुण्याल्लोकाञ्छुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजास्त्विह । गोदावर्याः समीपे तु देशे रम्ये जलाश्रये ॥ ६ ॥
रक्तः कृष्णोतिमतिमान्दीर्घो भव्यः पृथुः सुधीः ।आदिभागे धनी भोगी मध्यमेंत्येऽतिसौख्यभाक्॥७
पुण्यादिद तथा पापाल्लोभी पापरतः क्वचित् । अतिचितायुतश्चात्र दाने स्वल्पमतिः शठः ॥ ८ ॥
स्वजात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लक्ष्मेतदंडजश्रेष्ठ जन्माङ्गात्पष्ठभावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहैर्युतनिरीक्षितः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । संपूज्य वेदविदुषे दद्याद्धि पापनुत्तये ॥ १२ ॥
माषैः सप्तमितैर्देयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यंबकं तु सहस्रकम् ॥ १३ ॥
होमयेत्तद्दशांशेन कपिला गा प्रदापयेत् । य एवं कुरुते सुत प्रायश्चित्तं हि मानवः ॥ १४ ॥
तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्रैव काश्यपे । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥१५॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । आयुरष्टाद्विवर्षाणि प्रायश्चित्ते कृते त्विह ॥ १६ ॥
प्रायश्चित्तेऽकृते विद्धि पंचाशन्मितकेन्द्रके ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय॰ षट्पंचाशदुत्तरत्रिशताधिकसहस्रतम ॥ १३५६ ॥

श्रीसूर्य उवाच ।

यश्च बभ्रुं महाभाग हन्यान्मोहान्नराधमः । बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयहिरण्यस्य कृत्वात्र नकुलं शुभम् । बभ्रुमण्डलनाशार्थे ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपंचाशदुत्तरत्रिशताधिकसहस्रतम ॥ १३५७ ॥

श्रीसूर्य उवाच ।

काचिच्चारणजा नारी बभूव प्रियवादिनी । व्रतदानरता साध्वी पूर्वजन्मनि चांडज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं गह्वरं वनम् । निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य जन्मनि तं व्रतम् । तत्र दानवशात्पूर्वादत्र सा पादजा स्मृता ॥ ३ ॥
जीवघातात्तथा पूर्वात्पापादत्र जन्मनि । जातसंततिहीना वै कुष्ठरोगेण पीडिता ॥ ४ ॥

प्रायश्चित्तं प्रवक्ष्यामि येन संपद्यते सुखम् । गृहविचपदंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपान्गृहोरगान् । भोजयित्वा द्विजाञ्छक्त्या तस्मात्पापात्प्रमुच्यते॥६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५८ ॥

श्रीसूर्य उवाच।

शशघाती महाभाग! कुब्जवर्णः प्रजायते। निष्कृतिं तस्य पापस्य शृणु चात्र खगाधिप ॥ १ ॥
शक्त्या सोपस्करान्दद्याद्वेदवेदांगपारगे । तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरत्रिशताधिकसहस्रतमः ॥ १३५९ ॥

श्रीसूर्य उवाच।

कश्चिच्छूद्रोऽभवत्पूर्वे दानधर्मदयापरः । द्विजानां पूजको दक्षः सिन्धुमण्डलजोऽण्डज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्तत्कृतं कर्म चाधमम् । स्वपत्नी स्थापिता पण्यशालायां हि खगाधिप ॥ २॥
पण्यस्त्रीकर्मतश्चासौ चकार स्वोपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्रारब्धवशतः सोऽथ जन्मन्यत्र च पर्वते । शूद्राधमोऽथ वै षण्ढः पूर्वपापादतः शृणु ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्दढात्सुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षष्ट्युत्तरत्रिशताधिकसहस्रतमः ॥ १३६० ॥

श्रीसूर्य उवाच।

या नारी नकुलं पूर्वं घातयेद्विनतासुत। सात्र जन्मनि रोगेण बभ्रुमंडलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम् । तद्रोगनाशनं दद्याद्बभ्रुं निष्कद्वयेन च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरत्रिशताधिकसहस्रतमः॥ १३६१ ॥

अरुण उवाच।

कश्चित्क्षात्रकुले जातो नानावृत्त्या तु लाभवान् । नानासंधिषु पीडा स्यादुदरार्तिः प्रजायते॥ १ ॥
मेहो वै कुरुते नित्यं नेत्रस्वेदं विरश्मिताम् । कटिपृष्ठोरुवंशार्ति बाल्ये स्याद्ग्रहणी गदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया व्रतचारिणी । सौभाग्यसुखसम्पन्ना पितृमातृसुखोज्झिता ॥ ३ ॥
केन संततिहीना च कर्मणा कथय प्रभो ॥ ४ ॥

श्रीसूर्य उवाच।

पूर्वं वर्णाधमो जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय चौर्यकर्मकरोऽभवत् ॥ ५ ॥
वनानामंतरे प्राप्ते कश्चिद्विप्रः समागतः । गृहीत्वा तस्य सर्वस्वं यत्किंचिच्चार्जनात्स्थितम् ॥ ६ ॥
तेन वै निहतो विप्रो तस्करेण दुरात्मना । तस्करोऽसौ मृतश्चापि जातो वै वनपन्नगः ॥ ७ ॥
स पश्चान्नरके घोरे पतितोऽब्दायुतं खग । पश्चान्मानुष्यमापन्नः किंचित्पुण्यप्रभावतः ॥ ८ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । चतुर्थं जन्म चैतद्धि वैधव्यं यत्र चाजनि ॥ ९ ॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि । केन कर्मविपाकेन ह्यपत्यं जायते त्विह ॥ १० ॥
पुत्रहीना कथं चेयं वंध्यात्वं जन्मजन्मनि ॥ ११ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । संततेः सुखमाप्नोति वंध्या तद्वै वद प्रभो ॥ १२ ॥

तया तत्पापशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपादप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५४ ॥

श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता । साऽत्र जन्मनि दुःखार्ता दंतपातरुजांडज ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुंबिने । प्राजापत्यव्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपंचपंचाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५५ ॥

श्रीसूर्य उवाच ।

कश्चिदासीत्पुरा सत चारणो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभवेंडज । तेन दानानि दत्तानि विप्रेभ्यो भास्करग्रहे ॥ २ ॥
कदाचित्तु महाभाग पापमाचरितं त्विदम् । स्वज्ञात्यां वै धृतो गर्भः कामलोभेन निश्चयात् ॥३॥
यत्ने कृतेऽपि तत्रैव नाभूद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चांडज ॥ ४ ॥
एवं बहुतिथे काले गतः स यमशासनम् । भुक्त्वा पापफलं दुःखं पुण्याल्लोकाञ्छुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजास्त्विह । गोदावर्याः समीपे तु देशे रम्ये जलाश्रये ॥ ६ ॥
रक्तः कृष्णोतिमतिमान्दीर्घो मध्यः पृथुः सुधीः ।आदिभागे धनी भोगी मध्यमेंत्येऽतिसौख्यभाक्७
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । अतिचिंतायुतश्चात्र दाने स्वल्पमतिः शठः ॥ ८ ॥
स्वजात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लक्ष्मेतदंडजश्रेष्ठ जन्माङ्गात्पञ्चभावगः ॥ ९ ॥
भौमः सुतेश्वरः पापग्रहैर्युतनिरीक्षितः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । संपूज्य वेदविदुषे दद्याद्वैपापनुत्तये ॥ १२ ॥
मापः सप्तमितैर्देयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यंबकं तु सहस्रकम् ॥ १३ ॥
होमयेत्तद्दशांशेन कपिलां गां प्रदापयेत् । य एवं कुरुते सूत प्रायश्चित्तं हि मानवः ॥ १४ ॥
तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्रैव काश्यपे । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥१५॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । आयुरष्टाद्विवर्षाणि प्रायश्चित्ते कृते त्विह ॥ १६ ॥
प्रायश्चित्तेऽकृते रिष्टं पंचाग्निमितकेन्द्रके ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५६ ॥

श्रीसूर्य उवाच ।

यश्च चर्मं महाभाग हन्यान्मोहान्नराधमः । बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयहिरण्यस्य कृत्वात्र नकुलं शुभम् । बभ्रुमण्डलनाशार्थं ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५७ ॥

श्रीसूर्य उवाच ।

काचिच्चारणजा नारी बभूव मिथ्यावादिनी । व्रतदानरता साध्वी पूर्वजन्मनि चांडज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं गह्वरं वनम् । निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य जन्मनि तं व्रतम् । तत्र दानवशात्पूर्वादत्र सा पादजा स्मृता ॥ ३ ॥
जीवघातात्तया पूर्वात्पापादत्र जन्मनि । जातसततिहीना वै कुष्ठरोगेण पीडिता ॥ ४ ॥

प्रायश्चित्तं प्रवक्ष्यामि येन संपद्यते सुखम् । गृहवित्तषडंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपान्गृहोरगान् । भोजयित्वा द्विजाञ्छक्त्या तस्मात्पापात्प्रमुच्यते॥६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरत्रिशताधिकसहस्रतमः ॥ १३५८ ॥

श्रीसूर्य उवाच ।

शशघाती महाभाग! कुब्जवर्णः प्रजायते । निष्कृतिं तस्य पापस्य शृणु चात्र खगाधिप ॥ १ ॥
शक्त्या सोपस्करान्दद्याद्वेदवेदांगपारगे । तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरत्रिशताधिकसहस्रतमः ॥ १३५९ ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मदयापरः । द्विजानां पूजको दक्षः सिन्धुमण्डलजोऽण्डज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्तत्कृतं कर्म चाधमम् । स्वपत्नीं स्थापिता पण्यशालायां हि खगाधिप ॥ २॥
पण्यस्त्रीकर्मतश्चासौ चकार स्वोपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतः सोऽथ जन्मन्यत्र च पर्वते । शूद्राधमोऽथ वै षण्ढः पूर्वपापादतः शृणु ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्द्वतात्सुत ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः षष्ट्युत्तरत्रिशताधिकसहस्रतमः ॥ १३६० ॥

श्रीसूर्य उवाच ।

या नारी नकुलं पूर्वं घातयेद्विनतासुत । सात्र जन्मनि रोगेण वसुमंडलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम् । तद्रोगनाशनं दद्याद्वभ्रुं निष्कद्वयेन च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरत्रिशताधिकसहस्रतमः ॥ १३६१ ॥

अरुण उवाच ।

कश्चित्क्षात्रकुले जातो नानावृत्त्या तु लाभवान् । नानासंधिषु पीडा स्यादुदरार्तिः प्रजायते ॥ १ ॥
मेहो वै कुरुते नित्यं नेत्रस्वेदं विरश्मिताम् । कटिपृष्ठोरुवंशार्ति बाल्ये स्याद्ग्रहणी गदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया व्रतचारिणी । सौभाग्यसुखसम्पन्ना पितृमातृसुखोज्झिता ॥ ३ ॥
केन संततिहीना च कर्मणा कथय प्रभो ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णाधमो जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय चौर्यकर्मकरोऽभवत् ॥ ५ ॥
वनान्तरे प्राप्ते कश्चिद्विप्रः समागतः । गृहीत्वा तस्य सर्वस्वं यत्किंचिच्चार्जनान्वितम् ॥ ६ ॥
तेन वै निहतो विप्रो तस्करेण दुरात्मना । तस्करोऽसौ मृतश्चापि जातो वै वनपन्नगः ॥ ७ ॥
स पश्चान्नरके घोरे पतितोऽब्दायुतं खग । पश्चान्मानुष्यमापन्नः किंचित्पुण्यप्रभावतः ॥ ८ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । चतुर्थे जन्म चैतद्धि वैधव्यं यत्र चाजनि ॥ ९ ॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि । केन कर्मविपाकेन क्षयपत्यं जायते त्विह ॥ १० ॥
पुत्रहीना कथं चेयं वंध्यात्वं जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । संततेः सुखमाप्नोति वंध्या तद्वै वद प्रभो ॥ १२ ॥

श्रीसूर्य उवाच ।

शुभे त्ववसरे प्राप्ते शुभतीर्थादिसंगमे । विधिवद्विहितापूर्वं कृतं स्मृत्युग्रभाषितम् ॥ १३ ॥
विप्रस्योद्वाहनं कृत्वा गृहदानं यथाविधि । धनधान्यादिकं दत्त्वा तोषयेद्विप्रयाजकान् ॥ १४ ॥
विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणाहनि । पुण्याहे विधिमातिष्ठेदनपत्यायनाशनम् ॥ १५ ॥
सुशुभे भूमदेशे तु समे कम्नलविस्तृते । विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम् ॥ १६ ॥
परितोऽरत्निमात्रं तु द्रोणमानं सुतण्डुलैः । विदध्यात्पर्वतं रम्यं तृणद्रुमविभूषितम् ॥ १७ ॥
तत्र तौ दम्पती शुद्धौ स्नातावहतवाससौ । दधानौ शुभवेषाढ्यौ चिन्तयानौ प्रजापतिम् ॥१८ ॥
तस्यादितेश्च तत्पत्न्याः कुर्यान्मूर्तिं प्रजापतेः । शुद्धवर्णसुवर्णस्य निष्कद्वयमितस्य वै ॥ १९ ॥
हैमयज्ञोपवीतं च ह्यक्षमाला कमण्डलुः । अदितेरपि केयूरहारग्रैवेयभूषिताम् ॥ २० ॥
तदर्धमितिकां चापि प्रकुर्वीत शुभाकृतिम् । स शैवीमर्चयेन्मूर्तिं विष्णोर्वामनरूपिणः ॥ २१ ॥
तन्मूर्तित्रितयं सम्यक्कृतसंस्कारमर्चयेत् । कृत्वा प्रतिष्ठितप्राणं जातकर्माथ पुंस्त्रियोः ॥ २२ ॥
बाललीलाधरं विष्णुं वामनं सुविचिंतयेत् । मातरं द्रष्टुमिच्छन्तं हरिं तत्स्तनकांक्षया ॥ २३ ॥
ततस्तस्या दामतटादाप्लुत्य तिलपर्वतात् । प्रत्यंतगिरिमायातं मार्गैः स्वपदभूषितैः ॥ २४ ॥
अथ तं समपश्यन्ती विरहाकुलचेतसाम् । रुदन्तीमिति तं द्रष्टुमाहूय तत्परान्मुनीन् ॥ २५ ॥
एवं ध्यात्वाथ तां मन्त्रैर्मन्त्रार्थोदितलक्षणाम् । पुष्पस्रग्धूपगन्धाद्यैरर्चयेदतिविह्वलाम् ॥ २६ ॥
तद्विप्रासोऽथ तद्विष्णोर्विष्णोः कर्माणि पश्यत । ततस्तां वैष्णवीं मूर्तिं मातुरुत्संगगामिनीम् ॥२७॥
कृत्वा तस्याः प्रतिष्ठान्ते लब्धपुत्रान्विचिन्तयेत् । अपश्यन्तमिमं मन्त्रैर्मन्त्रार्थगुणलक्षणम् ॥२८॥
सुपुत्रसहितां देवीमर्चयेद्विविधैर्गुणैः । ततो ब्राह्मणमध्यात्तु समाहूय गुणान्वितम् ॥ २९ ॥
तस्मै तां प्रतिमां दद्यात्सपुत्रां मदितेः सुताम् ॥ ३० ॥

मंत्रः ।

" यन्मया निहतो विप्रो हत्वा तु तद्वसु वै वने । तस्करैस्सह यत्पापं प्राप्तमेवोल्वणं महत् ॥३१॥
तस्य पापस्य नाशाय दानमेतद्ददाम्यहम् । सौवर्णीं प्रतिमामेना भवेयमनघेति हि " ॥ ३२ ॥
भोजयेच्च शतं विप्रान्सर्पिष्यात्मानमीक्षयेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशत्त्रिशताधिकसहस्रतमः ॥ १३६२ ॥

---

श्रीसूर्य उवाच ।

उलूकघातने पूर्वं जन्मन्यत्र च पुत्रक । पांडुरोगेण सततं पीडितो वै भवेद्ध्रुवम् ॥ १ ॥
कस्तूरिकापलं चैकं दद्याद्विप्राय पर्वणि । उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तस्मिन्पापोपशमने पाडुरोगो विनश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपष्ट्युत्तरत्रिशताधिकसहस्रतम ॥ १३६३ ॥

---

श्रीसूर्य उवाच ।

या नारी घातयेत्काचिदुलूकं पूर्वजन्मनि । पांडुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यात्तत्र विविज्ञाय पलमेकं खगाधिप । कस्तूरिकाया विप्राय पाडुरुङ्नाशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतु षष्ट्युत्तरत्रिशताधिकसहस्रतम ॥ १३६४ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु प्राक्कर्मणः फलम् । कश्चिदासीत्कलिंगे वै द्विजो धर्मक्रियापरः ॥ १ ॥
बहुग्रीवलसंयुक्तो गोधनैश्च समन्वितः । गयायां विधिना श्राद्धं श्रद्धावित्तसमन्वितम् ॥ २ ॥
स ततः कृतवान्पापं कामलोभेन निश्चयात् । ज्येष्ठां त्यक्त्वा ऋतुमातां धर्मिष्ठां प्रियवादिनीम् ॥ ३ ॥
रतिं ददौ कनिष्ठायां घातितस्त्रीविमोहितः । जीवित्स हि चिरं कालं पश्चान्मृत्युमवाप्नुयात् ॥ ४ ॥
शुभाच्छुभफलं भुक्त्वा पापाद्दारुणनारकान् । गयाश्राद्धप्रभावेण जातश्चात्रापि वै द्विजः ॥ ५ ॥
देशे रम्यस्थले पुण्ये तदा लोहितसंज्ञके । मध्यरूपः प्रियायुक्तो धनबुद्धिसमन्वितः ॥ ६ ॥
शुभादिदं तथा पापान्नरो दुःखसमन्वितः । शूलयुक्तोदरो भीरुर्जातपुत्रविवर्जितः ॥ ७ ॥
कनिष्ठा या प्रिया पूर्वमासीद्दर्त्तुविमोहिनी । सात्र जन्मनि जाता वै पुत्रहीना हि दृश्यते ॥ ८ ॥
भर्तृमध्या शुभाचारा हृदि रोगप्रपीडिता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ९ ॥
रुक्मपंचपलैः कुर्याद्ब्राह्मणं कमले स्थितम् । पत्रे लेख्यं शुभाकारं सर्वावयवसंयुतम् ॥ १० ॥
पूजयित्वा तु गंधाद्यैः षोडशोरूपचारकैः । दद्याद्वेदविधिज्ञाय पूजिताय प्रयत्नतः ॥ ११ ॥
तन्निर्मितां राजतीं गौरीं लेख्यां च शुभलक्षणाम् । दद्याद्यत्नेन तां देवीं पूर्वपापप्रणाशिनीम् ॥ १२ ॥
गायत्रीपश्चसाहस्रं जपेत्पश्चाद्विधानतः । होमान्ते भोजयेद्विप्रांस्ततः शुद्धिं समाचरेत् ॥ १३ ॥
तदा संततिवृद्धिः स्यात्कुष्ठरोगात्प्रमुच्यते । नैवं करोति यो लोभात्प्रायश्चित्तं प्रयत्नतः ॥ १४ ॥
पंचविंशतिमेऽब्दे तु रिष्टं वै दारुणं स्मृतम् । पंचाशीतिमिताब्दांतं जीवनं कृतनिष्कृतेः ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचपष्ठ्युत्तरत्रिशताधिकसहस्रतमः ॥ १३१५ ॥

श्रीसूर्य उवाच ।

उलूकघातने पूर्वे जन्मन्यत्र खगाधिप । पांडुरोगेण सततं पीडितो वै भवेद्भृशम् ॥ १ ॥
कस्तूरिकापलं चैवं दद्याद्विप्राय पर्वणि । उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तस्मिन्पापोपशमने पांडुरोगो विनश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ठ्युत्तरत्रिशताधिकसहस्रतमः ॥ १३१६ ॥

श्रीसूर्य उवाच ।

कुक्कुटस्य वधे सूत प्राग्भवेऽत्रैव जन्मनि । नासावक्रत्वमाप्नोति नरश्चाकृतनिष्कृतिः ॥ १ ॥
दद्यान्निष्कत्रयं स्वर्णं विधिज्ञाय प्रयत्नतः । तद्दोषशमनार्थैव जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ठ्युत्तरत्रिशताधिकसहस्रतमः ॥ १३१७ ॥

श्रीसूर्य उवाच ।

या नारी घातयेत्कांचिच्चटकं पूर्वजन्मनि । पांडुरोगेण सततं पीडिता चात्र जन्मनि ॥ १ ॥
माषत्रयमितं दद्याच्चटकं हैमनं शुभम् । प्रायश्चित्ते कृते सूत पांडुरोगात्प्रमुच्यते ॥ २ ॥
प्रायश्चित्तं न कुर्याद्या नैरोग्यं नाप्नुयात्कचित् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ठ्युत्तरत्रिशताधिकसहस्रतमः ॥ १३१८ ॥

श्रीसूर्य उवाच ।

मार्जारघाती पुरुषः प्राग्जन्मन्यत्र चांडज । पिंगेक्षणो भवेत्सूत तत्काले पूर्वघाततः ॥ १ ॥

अत्र वैदूर्यरत्नानि देयानि विविधानि च । पिगाक्षिरोगस्तस्माच्च पुण्यान्न च विवर्धते ॥ २ ॥
इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३६९ ॥

---

अरुण उवाच ।

कश्चिद्वैश्यकुले जातो वातरक्तेन पीडितः । किलासी दद्रुकंड्वादि शरीरे धृतवान्पुरा ॥ १ ॥
तस्य भार्या सदाचारा किंचित्क्लेशस्य कारिणी । न सुखं मातृपित्रादेः पतिधर्मे सुखं महत् ॥२॥
नानायोनौ कथं जाता मृतवत्सा च सा कथम् । केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ३ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । पूर्वजन्मनि शूद्रस्तु दानधर्मपरायणः ॥ ४ ॥
क्रयविक्रयकर्ता च बहुद्रव्येण संयुतः । व्यापारं म्लेच्छराज्येऽपि चकार भुवि मानद ॥ ५ ॥
कदाचित्कालयोगेन म्लेच्छो देशांतरं गतः । गृहव्यापारकोपं च ह्यमात्ये वै समर्पितम् ॥ ६ ॥
व्यापारकुशलः शूद्रो ह्यमात्योऽभून्नृपस्य वै । व्यभिचारमतिश्चासीन्म्लेच्छस्त्रीरतितत्परः ॥ ७ ॥
एवं बहुतरं कालं म्लेच्छासङ्गं चकार सः । म्लेच्छस्त्रिया ह्यभूद्गर्भस्तेन शूद्रेण दारित ॥ ८ ॥
एवं कर्म कृतं ज्ञातं प्रतिवेशिद्विजेन वै । अथ किंचिद्गते काल आगतो म्लेच्छराङ्गृहे ॥ ९ ॥
विप्रः कथितवान्सर्वममात्येन च यत्कृतम् । प्रतिवेशस्थितेनाहो म्लेच्छश्चुकोध वै भृशम् ॥१०॥
तस्य पापं प्रगल्भस्य ज्ञात्वा सर्वे जनास्तदा । म्लेच्छा निरन्युस्तं शूद्रं सर्वस्वं जहुरेव च ॥११॥
स वै वर्षसहस्रं तु नरके तीव्रवेदनः । पश्चान्मानुष्यमापन्नः किंचिद्दानप्रभावतः ॥ १२ ॥
चतुर्थं जन्म चैतद्धि वैश्यवर्णोऽस्ति साम्प्रतम् ॥ १३ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येन वै निश्चला प्रजा । तां ब्रूहि कर्मणां साक्षिँल्लोकानां सौख्यहेतवे १४

श्रीसूर्य उवाच ।

सौम्यायने शुभे मासे सिते पक्षे शुभे दिने । सानुकूलग्रहे पुण्ये प्रारभेतविधिं ततः ॥ १५ ॥
गोमयेनोपसंलिप्ते संस्तरे मृदुकम्बले । स्थापयेद्विविधं धान्यं साश्मद्रुमभूमिकम् ॥ १६ ॥
तन्मध्ये स्थापयेत्तैलमयं द्रोणस्य पञ्चकम् । परितो विविधैर्धान्यैः प्रत्येकं द्रोणसम्मितैः ॥ १७॥
अर्चयेत्काननं रम्यं विविधद्रुमभूमिभिः । गोधूमशालिसुव्रीहिमुद्गमाषतिलादिभिः ॥ १८ ॥
चणकश्यामनीवारप्रियंगुप्रमुखैः शुभैः । मध्ये मेरुं प्रतिष्ठाप्य पञ्चद्रोणतिलार्चितम् ॥ १९ ॥
तस्योपरि न्यसेत्पात्रं ताम्रं दशपलात्मकम् । देवं तदुपरि स्थाप्य पञ्चस्वर्णविनिर्मितम् ॥ २० ॥
बालगोपालवेषं च बलोद्भवसमन्वितम् । मूर्तित्रयं समासाद्य प्रत्येकं पलनिर्मितम् ॥ २१ ॥
कृत्वा प्रतिष्ठितप्राणं पूजयेद्विविधैर्गुणैः । विष्णुसूक्तेन मन्त्रेण नैवेद्यार्घ्याचमादिभिः ॥ २२ ॥
ततो ब्राह्मणमाहूय विद्वांसं वेदवादिनम् । अलोलुपं सदाचारं सदा शांतं च सद्गुणम् ॥ २३ ॥
तस्मै तां प्रतिमां दद्याद्विधिवद्विहिताशिषम् ॥ २४ ॥

मन्त्रः ।

"यन्मया परदारासु कृतं गर्भविघातनम् । तत्पापेन मया प्राप्तं पुत्रसंततिनाशनम् ॥ २५ ॥
तत्तदेनोविनाशाय मूर्तित्रयं ददाम्यहम् । दानेनानेन भूदेव भवेयमनघः प्रभो" ॥ २६ ॥
एवं कृतविधिः सूत ययोक्तफलमश्नुते । प्रतिमां प्रतिगृह्णामि स्वस्तितेऽस्त्विति कीर्तयेत् ॥२७॥
ममार्थं चास्त्यसंख्यातं जननीवाल्यघातनम् । नानादुःखोधदं चापि तस्मान्मोच्यो हि सुव्रत ॥२८॥

कुलटावालनाशादिजनितार्थविवर्जनम् । त्रिमूर्तिसमुदायेन भवेदिति द्विजात्तमेत् ॥ २९ ॥
अष्टोत्तरशतं हुत्वा मधुत्रयसमन्वितम् । होमान्ते विप्रभोज्यान्ते सर्पिष्यात्मानमीक्षयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७० ॥

श्रीसूर्य उवाच।

मार्जारघाती पुरुषः प्राग्जन्मन्यत्र चांडज। पिंगेक्षणो भवेन्नूनं काले वै पूर्ववातजे ॥ १ ॥
इह वैदूर्यरत्नानि देयानि विविधानि च । पिंगाक्षिरोगस्तस्माच्च पुण्याच्च च विवर्धते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७१ ॥

श्रीसूर्य उवाच

या स्त्री काचिन्महाभाग मार्जारीं घातयेत्पुरा। सात्र जन्मनि पिंगाक्षी भवत्येव न संशयः ॥ १॥
वैदूर्यसंज्ञकं दद्यादुक्तपापविशुद्धये । अकृते रत्नदाने तु पिंगाक्षित्वान्न मुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७२ ॥

श्रीसूर्य उवाच।

योऽध्यधीत्पूर्वजनुपि शुकं पापविमोहितः। जायते स्वाहिता वाणी तस्य चात्रैव जन्मनि ॥ १ ॥
शास्त्राणां प्रतिमा देया तेन पापविमुक्तये। लिखित्वा पुस्तकान्यत्र सस्वर्णानि च काश्यपे ॥२॥
तत्पापान्मुच्यते जन्तुर्वाणी तस्य शुभा भवेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७३ ॥

श्रीसूर्य उवाच।

बभूव सूकरे कश्चिद्बाहुजः पूर्वजन्मनि । दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः ॥ १ ॥
पूर्वस्वमपि सकलं राजस्वर्णादिकानि च । अथो भाविबलात्पुत्र ब्राह्मणेन तपस्विना ॥ २ ॥
तद्गृहे स्थापितं हेम घटे मृण्मयजे शुभम् । पुनर्दत्तं न तत्तस्मै लोभोपहतचेतसा ॥ ३ ॥
स्त्रीपुत्राभ्यां मिलित्वा तु भक्षितं तद्धनं पुरा। एवं किंचिद्गते काले प्राप्य धर्मपुरं प्रति ॥ ४ ॥
भुक्त्वा तत्पापजं कर्म शुभं तत्पूर्वदानतः । क्षेत्रमृत्युप्रभावाच्च स जातोऽत्रापि बाहुजः ॥ ५ ॥
गोदावर्याः समीपे तु पंचयोजनसम्मिते । खर्वटे च शुभाकारः प्रधानपुरुषान्वितः ॥ ६ ॥
वाचा मधुरया युक्तो यशस्वी धर्मसंयुतः । भृत्यस्त्रीवाहनैर्युक्तः सुखभोगदयान्वितः ॥ ७ ॥
सर्वोपचारकुशलो धीरो मित्रसमाकुलः । सर्वं पुण्यफलादेव शृणु पापफलात्फलम् ॥ ८ ॥
मात्सर्यलोभमोहाद्यः क्वचित्पापरतस्तथा । धूर्तः शठो महोद्विग्नः प्रचारकुशलः क्षमी ॥ ९ ॥
मातृवित्तयुतो धीरः सबन्धुर्विभ्रमान्वितः । द्विजस्वभक्षणात्पापात्प्रागत्र मृतपुत्रकः ॥ १० ॥
चिह्नं लग्ने घटाध्यक्षः शनिः पुत्रेऽत्र जन्मनि। सहायलक्षणं सर्वं वक्ष्याम्यथ खगेश्वर ॥ ११ ॥
स्त्रीपुत्राभ्यां पुरा यस्माद्भक्षितं तद्धनं सुत। पुत्रनाशो महादुःखं पित्रोर्भून्यत्र जन्मनि ॥ १२ ॥
लक्षणैरेभिराढ्यस्य शृणु पापविशोधनम् । पलैः शतमितैः कुर्यात्कुम्भं ताम्रस्य यत्नतः ॥१३॥
सुवर्णाढ्ययुत साज्यं सक्षौमं रत्नसंयुतम्। अथो विचपदंशेन यद्वा वित्तानुसारतः ॥ १४ ॥
सूर्यभक्ताय वै दद्यान्मंत्रेणानेन भक्तितः ॥ १५ ॥

मंत्रः ।

" यद्दुक्तं ब्राह्मणद्रव्यमज्ञानात्पूर्वजन्मनि । तद्दामि घटं सर्वं विमद्रव्यापनाशनम् " ॥ १६ ॥
इत्युच्चार्य नरो दद्यात्सर्वपापात्प्रमुच्यते । लक्ष्मीनारायणं तद्वत्त्रिसुवर्णमितं शुभम् ॥ १७ ॥
जपेद्विंशतिसहस्राणि गायत्रीं यत्नतोण्डज । य एवं कुरुते सूत प्रायश्चित्तं प्रयत्नतः ॥ १८ ॥
सुखं पुत्रस्य लभते चात्र जन्मनि नान्यथा । प्रायश्चित्ते कृते पुत्र जीवनं नव सप्त च ॥ १९ ॥
वर्षाणि रिष्टमकृते पंचाशद्वत्सरे भृशम् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७४ ॥

श्रीसूर्य उवाच ।

शशकस्य वधाचारी पूर्वजन्मनि काश्यपे । कुब्जकर्णः प्रजायेत निष्कृतिं तस्य वच्म्यहम् ॥ १॥
शय्यां दद्याद्धि विप्राय वेदवेदांगवेदिने । सर्वोपस्करयुक्तां च सा तद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७५ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत प्राग्भवे मूषकं नरः । प्राग्घातकाले सोऽत्रैव कुब्जकर्णः प्रजायते ॥ १ ॥
तस्मात्तेनेह जनुषि सप्तधान्यानि चाण्डज । देयानि विप्रमुख्येभ्यो तत्पापस्यापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७६ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेत्पूर्वभवे मोहाच्च कुक्कुटम् । नासावक्रत्वमाप्नोति सात्र जन्मनि निश्चयात् ॥ १ ॥
हेमनिष्कत्रयं दद्यात्पर्वण्यसौ प्रयत्नतः । तद्दोषशमनायैव पापनाशकरं परम् ॥ २ ॥
प्रायश्चित्तमिदं रम्यं शूद्र्वां चैव नियोजयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७७ ॥

श्रीसूर्य उवाच ।

पारावतं च यो हन्यात्पूर्वजन्मनि मानवः । सोऽत्र जन्मनि पक्षीन्द्र पीतपाणिः प्रजायते ॥ १ ॥
निष्कत्रयहिरण्यस्य दानात्पारावतस्य तु । प्रमुच्यते पीतपाणिरोगाद्दानप्रभावतः ॥ २ ॥
आयुषस्तस्य वृद्धिः स्यान्महादानाच्च पुत्रक । सर्वारिष्टं क्षयं याति जीवनं नवसप्ततिम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७८ ॥

अरुण उवाच ।

कश्चिद्वैश्यकुले जातः सुविचारी विवेकवान् । विष्णुभक्तिरतो नित्यं नियतं ब्राह्मणप्रियः ॥ १ ॥
तस्य देहे भवेत्किंचिद्वायुना पीडनं भृशम् । शिरोऽर्तिर्जायते काचित्किंचिन्मोहादिविभ्रमः ॥ २ ॥
तस्य भार्या शुभा नित्यं पतिभक्तिपरायणा । व्रतदानतपा नित्यं सत्यवाक्सत्यभाषिणी ॥ ३ ॥
वंध्यात्वं जायते तस्याः किंचित्कर्मप्रभावतः । तत्कर्म वद मे स्वामिन्नार्जितं पूर्वजन्मनि ॥ ४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । पूर्वं वर्णोत्तरे जातः स्वर्णकारकुले तथा ॥ ५ ॥
सर्वेषामेव लोकानां हृतं तेन च कांचनम् । ब्राह्मणीक्षत्रियावैश्याशूद्राणां दुष्टबुद्धिना ॥ ६ ॥

गर्भस्य पातनोपायो बहुकालमकारि वै । व्यभिचाररतो नित्यं स्वर्णकारः सहायवान् ॥ ७ ॥
एवं काले व्यतिक्रान्ते मृतो यमपुरं ययौ । नरकं बहुविधं प्राप्य वर्षायुतसहस्रकम् ॥ ८ ॥
किंचित्पुण्यप्रभावेण इह जन्मनि मानवः । इदं चतुर्थकं जन्म वैश्यवर्यस्य वीश्वर ॥ ९ ॥
अनात्मजत्वं लभते पूर्वकर्मवशाद्भुवि । गर्भपातो भवेत्तस्य पत्न्यां दुःखं च जायते ॥ १० ॥
परद्रव्यापहरणाद्दुःखोद्रेकः प्रजायते ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन्येन पापं प्रशाम्यति । अपत्यं जायते येन लोकानां हितकाम्यया ॥१२॥

श्रीसूर्य उवाच ।

सौम्यायने शुभे प्राप्ते सानुकूलग्रहेऽहनि । पूर्यमाणे विधौ सौम्यग्रहदृष्टिशुभान्विते ॥ १३ ॥
सभर्तृका शुचिः स्नात्वा सौम्यालंकारभूषिता । उपोषणरता साध्वी स्वभर्तुर्वृतिमाचरेत् ॥ १४ ॥
माघमासस्य पूर्णायां वा कुर्याद्वै प्रयत्नतः । उपोषिता दिवा रात्रौ विधौ चाभ्युदिते सति ॥ १५ ॥
सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । सौवर्णस्य चतुर्भिश्च कारयेत्प्रतिमां शुभाम् ॥ १६ ॥
रुक्मिणीं राजते पद्मे सर्वालंकरणैः सुत । कृत्वा प्रतिष्ठितप्राणां विष्णुसूक्तेन केशवम् ॥ १७ ॥
श्रियः सूक्तैः श्रियं त्वर्चेन्नानापुष्पफलादिभिः । नैवेद्यैस्तोषयेद्विष्णुं नानान्नैर्घृतपायसैः ॥ १८ ॥
एतैः संपूज्य विधिवज्जुहुयात्तिलतंडुलैः । शतमष्टोत्तरं हुत्वा पूर्णान्ते शक्तमाचरेत् ॥ १९ ॥
सव्यपार्श्वे स्वभर्तुश्च पुनस्तामुपवेशयेत् । निष्कद्वयेन सौवर्णीं दक्षिणामयुतं ददेत् ॥ २० ॥
सुवृत्तं वैणवं पात्रं त्रयं वा पञ्च सप्त च । सप्तधान्यफलोपेतमष्टसौभाग्यवस्तुभिः ॥ २१ ॥
रक्तवस्त्रेण संछाद्य मालाकुसुमसंयुतम् । तत्रोपरि न्यसेद्दीपं घृतपूर्णं शिखाधरम् ॥ २२ ॥
कल्पयेद्विष्णुसूक्तेन प्रयच्छेद्विष्णुप्रीतये । भोजयेच्च शतं विप्रान्नानान्नैः सकुपायसैः ॥ २३ ॥
एवं कृतविधिः सूत व्रतान्ते दानमाचरेत् ॥ २४ ॥

मन्त्रः ।

" यन्मया पूर्वजनुषि दूतीकर्म कृतं बहु । कुलटात्वं गर्भपातो बालहत्यादिकं तथा ॥ २५ ॥
तस्मान्मोच्या महाभाग निष्पापां कुरु सुव्रत " ॥ २६ ॥
अनयैस्युच्चरन् विप्रः समादाय गृहं व्रजेत् । ततः समर्चयेद्देवं मंत्रमेनमुदीरयेत् ॥ २७ ॥
"यथाप्टपुत्रा त्वं देवि प्रद्युम्नादिसुतैर्भुवि । माधवस्य प्रसादेन चाष्टपुत्रा भवाम्यहम्" ॥ २८ ॥
वर्धमाने तथा गर्भे वंध्यात्वं विलयं व्रजेत् । एवं तु विधिवत्कृत्वा विसृज्य सकलं ततः ॥ २९ ॥
एवं व्रतपरा नारी गर्भांश्च सुलभान्व्रजेत् । ऐहिकं लक्षणं तस्याः शरीरे विनतासुत ॥ ३० ॥
उदरार्तिरसृक्स्रावः पार्श्वपादकरादिषु । पीडादाहादिवावैर्यमल्पनेत्रं भवेदिति ॥ ३१ ॥
मिथ्याभिशंसनं क्वापि वाचि दोषो धनच्युतिः ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३७९ ॥

---

श्रीसूर्य उवाच ।

सूपकं यावधीधारी पूर्वजन्मनि निश्चयात् । सात्र जन्मनि पक्षीन्द्र कुब्जकत्वं प्रपद्यते ॥ १ ॥
आक्पापशोधनी चैषा निष्कृतिर्जन्मनीह वै । सप्तधान्यानि देयानि सस्वर्णानि द्विजातये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८० ॥

---

श्रीसूर्य उवाच ।

मयूरघातने पूर्वभवे शृणु सुपुत्रक । चन्द्रमण्डलरोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
स्वर्णनिष्कत्रयस्यात्र मयूरं विधिनांडज । दद्याद्द्विजाय मुख्याय तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८१ ॥

श्रीसूर्य उवाच ।

शुकं हि घातयेन्नारी पूर्वजन्मनि याण्डज । अत्र जन्मनि सा योषा वाण्या वै स्खलिता भवेत् ॥१॥
दद्याच्छुकं सुवर्णस्य यथावित्तानुसारतः । मुच्यते तेन दानेन तत्पापात्पूर्वमर्जितात् ॥ २ ॥
अथ वा शास्त्रदानेन ब्राह्मणाय खगाधिप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८२ ॥

श्रीसूर्य उवाच ।

या काचिद्वधीन्नारी मयूरं मान्मवेण्डज । सात्र जन्मनि तत्काले पीड्यते कृष्णमण्डलात् ॥१॥
दद्याद्धेममयं त्वत्र मयूरं शुभलक्षणम् । निष्कत्रयस्य विधिना सा तद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८३ ॥

श्रीसूर्य उवाच ।

हंसघाती भवेद्यस्तु मोहात्प्राग्गरुडाग्रज । श्वेतमण्डलरोगेण युक्तः स्यादत्र जन्मनि ॥ १ ॥
तत्पापमोचनं सूत जन्मन्यत्रैव जायते । राजतेनैव हंसेन दानेनात्र प्रयत्नतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८४ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी पापात्पारावतान्सुत । जन्मन्यत्र च सा रोगात्पीतपाणेर्व्यथाकुला ॥ १ ॥
प्रमुच्यते पीतपाणिरोगाद्दानप्रभावतः । शुद्ध्यत्यत्र महारोगाद्घातात्पारावताच्छुभात् ॥ २ ॥
यथाशक्ति हिरण्यस्य दानतो विनतासुत ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८५ ॥

श्रीसूर्य उवाच ।

हंसं या घातयेन्नारी स्वाज्ञानात्पूर्वजन्मनि । श्वेतमंडलया सा तु पीडया पीड्यते त्विह ॥ १ ॥
लिखित्वा राजते पत्रे हंसं पलमितं शुभे । दद्यादत्र दरिद्राय ब्राह्मणाय विधानतः ॥ २ ॥
श्वेतमंडलजां पीडां नाशयेत्तत्क्षणादिह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८६ ॥

श्रीसूर्य उवाच ।

यः कश्चित्पितरं हन्यात्पूर्वजन्मनि सुव्रत । चेतनारहितश्चापि जायतेऽत्रैव जन्मनि ॥ १ ॥
प्राजापत्यत्रयं कुर्याद्दद्याद्धेममयं शुभम् । नौकां पलमितां सूत शुभ्रैराच्छादनैर्वृताम् ॥ २ ॥
विप्राय वेदविदुषे पूर्वपापापनुत्तये ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८७ ॥

## श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु चास्य विचेष्टितम्। करहाटाभिधे देशे कश्चिदासीद्द्विजोत्तमः ॥ १ ॥
माग्भवे नृपतिर्विज्ञो वेदशास्त्रविशारदः। धर्मशास्त्रक्रियायुक्तः शिवभक्तोऽतिनीतिवित् ॥ २ ॥
बहुस्त्रीधनपुत्राढ्यो विप्रपूजनतत्परः। दत्तानि तेन दानानि ब्राह्मणेभ्यो विजानता ॥ ३ ॥
बहुपर्वसु भूम्यश्वकन्यावस्त्रगृहाणि च। सूर्यचन्द्रोपरागे च गजाश्वरथकांचनम् ॥ ४ ॥
बहुरत्नानि भांडानि महादानानि चांडज। अथो भाविबलाद्गूनि पापमाचरितं पुरा ॥ ५ ॥
सीमान्तरस्थितस्यापि विप्रस्याप्यधिकारिणः। स्त्रिया विरोधात्सततं कृतं कर्मातिदारुणम् ॥६॥
स्वस्त्रीभ्रातृसहायैश्च रात्रौ गत्वा तु तत्पुरम्। निर्दग्धं तत्पुरं चापि मिलित्वा बहुभिर्जनैः ॥ ७ ॥
तस्मिन्दाहे मातृयुक्तास्त्रयो बाला द्विजस्य च। निर्दग्धा बालवत्साढ्या गावेका जंतवोऽपि च॥८॥
सर्वस्वं लुंठितं तस्यापराधरहितस्य च। गृहीत्वा विप्रसर्वस्वं ज्येष्ठपत्न्यै निवेदितम् ॥ ९ ॥
महादानरता सापि बहुपुत्रा पतिप्रिया। तयापि तत्स्त्रीसंवादात्क्रोधाद्द्विजकुलं हतम् ॥ १० ॥
भुक्तं च तद्धनं लोभात्पापमुग्रमुपार्जितम्। धर्मज्ञेन नृपेणापि न कृतं पापशोधनम् ॥ ११ ॥
अथ किंचिद्गते काले स प्राप्तो यमशासनम्। भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा ॥१२॥
बहुपुण्यान्महापापात्स जातोऽत्रापि भूपतिः। गंगायाः प्रान्तरे देशे तत्त्वयोजनसम्मिते ॥ १३ ॥
स रक्तगौरो मतिमान्नातिदीर्घो न लघुर्घृणी। वाचा मधुरया युक्तस्तेजस्वी लोकविश्रुतः ॥ १४ ॥
बहुज्ञो दर्शनीयाक्षो दाता भोक्ता कुलाग्रणीः। उपकारपरो विद्वान्बली सर्वजनाश्रयः ॥ १५ ॥
क्षात्रधर्मरतो मानी दंडदाक्षिण्यतत्परः। सभायां चतुरो धीरो मंत्रविद्गूढचेष्टितः ॥ १६ ॥
बहुस्त्रीभोगसंयुक्तो धनधान्यसुतान्वितः। पित्तश्लेष्माधिकः शूरो बहुभूपजनैर्वृतः ॥ १७ ॥
गजाश्ववाहनैराढ्यो बहुरत्नैरलंकृतः। आदिमध्यावसानेषु सुखैश्वर्यसमाकुलः ॥ १८ ॥
शिवार्चनान्महादानात्प्रायकृतात्तु फलं त्विदम्। सर्वमेतत्तथा पापात्सर्वं पापफलं शृणु ॥ १९ ॥
धूर्तः शठोतिदंभाढ्यो बहुद्वेषी भयान्वितः। लोभी पापरतः क्वापि विप्रैः सुखविवर्जितः ॥२०॥
प्राग्दाहे जीवघाताच्च पित्तवातरुगन्वितः। बालवत्सवधात्पूर्वं पूर्वपुत्रशुचान्वितः ॥ २१ ॥
ब्रह्मस्वभक्षणात्पूर्वं कुक्षिरोगसमन्वितः। ब्रह्मस्वभक्षणे गोप्यकरणाद्गुप्तरोगवान् ॥ २२ ॥
भिषग्वरकृतैर्यत्नैर्बहुपापैर्महौषधैः। निःशेषं तस्य रोगस्य निवृत्तिर्न च जायते ॥ २३ ॥
स्वस्त्रीसहोदराः पूर्वं सहाया दाहकर्मणि। ते त्वत्र तु सुता मृत्युवशं प्राप्ताः खगोत्तम ॥ २४ ॥
गोस्त्रीबालवधात्पापात्प्रागत्र सुतनाशनम्। लक्ष्मेदमेनसो राहुभौमौ गुरुगृहं गतौ ॥ २५ ॥
सुतस्थौ पुत्रमरणं द्वौ त्विज्यौ बुधरेऽभगौ। तमोयुक्तो विधुश्चास्य तद्दशांतर्दशासु च ॥ २६ ॥
महद्दुःखं समाप्नोति प्राणभीतिर्मुहुर्मुहुः। लक्षणैरेभिराढ्यस्य प्रभुरत्रैव जन्मनि ॥ २७ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन पापात्प्रमुच्यते। पलैर्दशमितैः कार्यं कालचक्रं हिरण्मयम् ॥ २८ ॥
मदध्यायोक्तविधिना संपूज्य परया मुदा। भक्त्या देयं विविज्ञाय रोगभीत्यपनुत्तये ॥ २९ ॥
राहुकेतुविधूनां च सौरेरपि विशेषतः। मृत्युञ्जयस्य देवस्य प्रतिमाश्च हिरण्मयीः ॥ ३० ॥
षड्भिःषड्भिः पलैः कृत्वा प्रतिष्ठाप्य सुपूज्य च। प्रयच्छेद्द्विजवर्येभ्यो स्वर्णमूर्तिं तथैव च॥३१॥
अग्निमूर्तिं प्रयच्छेत पलैर्वसुमितैः कृताम्। हिरण्मयीं तदाकारां ब्राह्मणाय कुटुम्बिने ॥ ३२ ॥
एवं कृत्वा खगश्रेष्ठ मृत्युञ्जयविधानकम्। कारयेज्जपहोमौ चाप्यपमृत्युविनाशनम् ॥ ३३ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छुद्धान्वित्तानुसारतः। दक्षिणापि तथा देया भक्त्या च विनतात्मज ॥३४॥

य एवं कुरुते सूत विधिना पापशोधनम् । तस्य पुत्रविवृद्धिःस्याज्जन्मन्यत्र खगेश्वर ॥ ३५ ॥
नांवयो व्यायपस्तस्य न च शत्रुभयं भवेत् । न कुक्षिरोगो न मृतिर्न मन्दाग्निर्न भीस्तथा॥३६॥
महदैश्वर्यमाप्नोति विविधांश्च मनोरथान् । सर्वपापविशुद्धात्मा स्वर्गं मोक्षमवाप्नुयात् ॥ ३७ ॥
सप्तसप्ततिरायुः स्यात्प्रायश्चित्ते कृते त्विह । प्रायश्चित्तेऽकृते रिष्टमूनत्रिंशन्मितेऽब्दके ॥ ३८ ॥
पंचत्रिंशन्मितेऽब्दे वा ध्रुवं पंचाशदब्दके । चतुर्विधं महारिष्टं भवत्येव न संशयः ॥ ३९ ॥
शनौ कन्यागते जातो मेषस्थे निधनं भवेत् । जन्मादिनिधनान्तं हि स्वल्पमेवात्र सूचितम्॥४०॥
यद्यदंतर्गतं सूत तन्मच्छास्त्रादिचिन्तयेत् ॥ ४१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८८ ॥

## श्रीसूर्य उवाच ।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः । द्विजानां पूजको दक्षः सिंधुमंडलजोंऽडज ॥ १ ॥
देवद्रव्यविहीनोऽभूत्सत्कृतं कर्म चाधमम् । स्वपत्नी स्थापिता पण्यशालायां हि खगाधिप ॥२॥
पण्यस्त्रीकर्मतश्चासौ चकार स्वोपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतश्चात्र जन्मन्यस्ति च पर्वते । शूद्राधमोऽथ वा पण्ढः पूर्वपापाच्छृणुष्व तत् ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्दृढात्सुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३८९ ॥

## श्रीसूर्य उवाच ।

या नारी नकुलं पूर्वं घातयेद्विनतात्मज । सात्र जन्मनि रोगेण बभ्रुमंडलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम् । तद्रोगनाशनं दद्याद्बभ्रुं निष्कत्रयात्मकम् ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९० ॥

## श्रीसूर्य उवाच ।

अज्ञानाद्घातयेन्नारी प्राग्भवे मातरं स्वकाम् । सात्र जन्मनि चक्षुर्भ्यां वर्जिता जायते भृशम् ॥१॥
प्राजापत्यत्रयं कुर्यात्सा तत्पापविशुद्धये । ब्राह्मणाय तथा नौकां हैम्रीं दद्यात्पलात्मिकाम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९१ ॥

## श्रीसूर्य उवाच ।

यो हरेत्सुखलोभेन पक्वान्नं परमं महत् । जिह्वापाकोद्भवा पीडा जायतेऽत्रैव निश्चयात् ॥ १ ॥
गायत्रीं प्रजपेल्लक्षं तद्दशांशेन होमयेत् । स्वगृह्योक्तविधानेन तिलैराज्यपरिप्लुतैः ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाज्जिह्वापाकात्प्रमुच्यते ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९२ ॥

## श्रीसूर्य उवाच ।

प्रागासीत्क्षत्रियः कश्चिद्ग्रामाध्यक्षो महाधनी । चिरंड्यां निवसन्विप्रो शिवाराधनतत्परः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः । गोभूस्वर्णाश्वशस्त्राणि रत्नादीन्यपि पर्वसु ॥ २ ॥
पापमाचरितं तेन ग्रामिनार्थस्य गौरवात् । ग्रामान्तरस्थितस्यान्यक्षत्रियस्य विजानता ॥ ३ ॥

वैरभावाच्च वै राज्ञो धावितश्चौर्यकर्मणा । तत्पुत्रो ह्येकपुत्रस्य बालभावे व्यवस्थितः ॥ ४ ॥
तत्पिता तेन दुःखेन मृत्युचक्रमुपागतः । युवभावे सहायाभ्यां युक्तेनोपार्जितं त्विदम् ॥ ५ ॥
स तेन कर्मणा युक्तः प्राप्य धर्मपुरं प्रति । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ६ ॥
शिवार्चनात्तथा दानात्तत्र जातो वणिक्सुतः । सौम्ययाम्याश्रिते देशे नार्मदे शतयोजने ॥ ७ ॥
स्वघुस्वरूपो मतिमान्स्वधर्माढ्यो धनाधिपः । वाचा मधुरया युक्तो रक्तगौरोऽतिपित्तभाक् ॥ ८
पितृबंधुसुखैश्वर्यस्त्रीभोगधनवाहनैः । संयुक्तो दानशीलश्च यशस्वी पितृवल्लभः ॥ ९ ॥
शैशवे युवभावे च चंद्रवत्सुखदुःखभाक् । मध्येऽत्यंतधनैर्युक्तः सुखैश्वर्यसमाकुलः ॥ १० ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । यौवनेऽतिशठो धूर्तो मत्तो दुःखसमन्वितः ॥११॥
प्राग्बालघातात्सततं जातपुत्रो न कर्मणि । प्रागत्र सहजौ मृतौ ज्येष्ठकनिष्ठकौ ॥ १२ ॥
पुत्रसंततिहीनौ द्वौ जन्मन्यत्र खगेश्वर । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १३ ॥
रुद्रानेकादश नित्यं पूजयेदुपचारकैः । तल्लिंगमंत्रैर्विधिवद्यावदेकादशं दिनम् ॥ १४ ॥
अह्नि द्वादशके नित्यं पूजयेदुपचारकैः । रुद्रं पलैर्वेदमितैः सौवर्णं शुभलक्षणम् ॥ १५ ॥
तदर्धमितकं वापि निजवित्तानुसारतः । संपूज्य गंधपुष्पाद्यैर्विधिज्ञाय प्रदापयेत् ॥ १६ ॥
माषाष्टकमितां दद्याद्गौरीं स्कंदं द्विमाषकम् । गणेशं तन्मितं हैमं बालघातोपशांतये ॥ १७ ॥
गायत्र्ययुतसहस्रं तु त्र्यंबकं तु सहस्रकम् । तावदष्टाक्षरं जप्त्वा होमयेद्भोजयेद्द्विजान् ॥ १८ ॥
शृणुयाद्धरिवंशं च सप्तम्यां व्रतमाचरेत् । य एवं कुरुते सूत विधिना पापशोधनम् ॥ १९ ॥
तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि वै ध्रुवम् । नैवं करोति यो मोहात्प्रायश्चित्तं प्रयत्नतः ॥२०॥
न तस्य पुत्रवृद्धिः स्याद्बालभावे शिशोर्मृतिः । पंचसप्ततिसंख्यायुः कृते प्राक्पापशोधने ॥२१ ॥
प्रायश्चित्ते कृते त्रिंशदष्टत्रिंशन्मितेऽब्दके ॥ २२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९३ ॥

## श्रीसूर्य उवाच ।

मातरं यो नरो हन्यात्प्राग्भवे कश्यपात्मज । जन्मान्धो जायते सोऽपि घोरान्मातृवधात्सुत ॥ १ ॥
न जायतेऽत्र पक्षीन्द्र पापान्मुक्तिर्दृढात्ततः । आ सप्तजन्मनो नूनं चक्षुर्हीनो भविष्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९४ ॥

## श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे ज्ञानवर्जिता । परमान्नं हरेल्लोभात्सात्रहीनात्र जन्मनि ॥ १ ॥
तया निष्कद्वयं स्वर्णं विधिना वेदपारगे । देयं तत्पापशुद्ध्यर्थमन्नाढ्या जायते ततः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९५ ॥

## श्रीसूर्य उवाच ।

अज्ञानाद्घातयेन्नारी प्राग्भवे मातरं स्वकाम् । सात्र जन्मनि चक्षुर्भ्यां वर्जिता जायते भृशम् ॥१॥
प्राजापत्यत्रयं कुर्यात्सा तत्पापविशुद्धये । ब्राह्मणाय तथा नौकां हैम्रीं दद्यात्पलात्मिकाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९६ ॥

## श्रीसूर्य उवाच ।

काचिदासीन्महाभाग बाहुजा पतिवल्लभा । बहुव्रतरता साध्वी देशे पाञ्चालसंज्ञके ॥ १ ॥
साददत्तत्र दानानि नारी पतिसहायतः । सर्वस्वं च कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ॥ २ ॥

अथो भाविबलात्सूत पापमाचरितं तया । धूर्तया भर्तुरुद्देशे कृतं कुलजनाशनम् ॥ ३ ॥
एवं गतसुतो राज्ञी तत्पतिश्चौर्यकर्मणा । ददाहारिपुरं रम्यं बहुलोकैर्निषेवितम् ॥ ४ ॥
तत्र दग्धो द्विजश्रेष्ठो कपिला च रिपोः सुतः । धर्मज्ञोऽपि प्रियाहेतोर्घोरपापं चकार सः ॥ ५ ॥
एवं बहुतिथे काले गतौ तौ यमशासनम् । भुक्त्वा पापाच्च नरकान्पापात्स्वर्गांश्च शाश्वतान् ॥ ६॥
पूर्वपुण्यप्रभावेण जातौ राजकुले च तौ । सेयमेव विपाशाख्ये देशे पर्वतमाश्रिते ॥ ७ ॥
स्त्रेः मृगाभिधे जाता महोग्रा प्रियवादिनी । दत्ता तस्मै च तत्पित्रा राजपुत्राय धीमते ॥ ८ ॥
प्राक्कर्मणां विभोगाय सदादीनामिह ध्रुवम् । गौरवर्णा सुपुत्राढ्या सदा दानरता सती ॥ ९ ॥
यशस्विनी कीर्तिमती सुखैश्वर्यसमाकुला । मुख्या नृपांगना लोके प्रसिद्धा कुलशीलतः ॥१० ॥
बहुद्रव्ययुता नारी रत्नवाहनभागिनी । धर्मादिदं तथा पापाल्लोभाढ्यानृतभाषिणी ॥ ११ ॥
क्रूरा क्वचित्पापरता प्रजापीडनतत्परा । महानृपाश्रितमयैः क्लेशैर्दुःखैर्महाव्ययैः ॥ १२ ॥
प्रपीडिता च तारुण्ये सापत्न्यारादिजैर्भयैः । आद्यंते सुखयुक्तापि ध्रुवभावेऽतिदुःखिता ॥ १३ ॥
सप्तविंशान्तथा वर्षादिष्टं वर्षाष्टकं महत् । पितृभर्तृभवं घोरं स्वदेहसुतजं तथा ॥ १४ ॥
एवं चतुर्विधात्पापाच्चिदमङ्गे महाव्रणः । लक्षणैरभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ १५ ॥
ब्रह्माणं कारयेल्लेख्यं पलैः पञ्चमितैर्विभुम् । हिरण्मयं यथाकारं सपत्नीकं प्रयत्नतः ॥ १६ ॥
तदर्धमितकं वापि निजवित्तानुसारतः । संपूज्य गंधपुष्पाद्यैर्विधिज्ञाय प्रदापयेत् ॥ १७ ॥
इमं सुमन्त्रमुच्चार्य भक्तिभावेन काश्यपे ॥ १८ ॥

मन्त्रः ।

" पितामह महाप्राज्ञ सृष्टेरुत्पत्तिकारण । पूर्वपापविनाशाय ददामि त्वां हिरण्मयम् ॥ १९ ॥
रोगं विनाशय क्षिप्रं तज्जं गुह्योद्भवं महत् " ॥ २० ॥

तथा पञ्चमितैर्माषैः कार्या स्त्री गर्भसंयुता । लेख्या हिरण्मये पत्रे गंधपुष्पैः प्रपूजिता ॥ २१ ॥
ब्राह्मणाय च सा देया पूर्वपापापनुत्तये । तथा वेदमितैर्माषैः सौवर्णी प्रतिमा शुभा ॥ २२ ॥
वायोः कार्या शुभा लेख्या सा च देया कुटुंबिने । पात्रं ताम्रमयं तद्वद्घृतपूर्णं सदक्षिणम्॥२३॥
सर्वरत्नसमायुक्तं पट्टवस्त्रेण वेष्टितम् । प्रीत्यै सूर्यादिखेटानां दद्याद्दोषोपशान्तये ॥ २४ ॥
गायत्र्ययुतसहस्रं तु जपेदष्टाक्षरं तथा । त्र्यंबकं च सहस्रैकं ब्राह्मं तद्द्विगुणं तथा ॥ २५ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । य एवं कुरुते सूत विधिना पापशोधनम् ॥ २६ ॥
प्राक्कर्मजान्महापापाद्व्यभिचारसमुद्भवात् । मुच्यते नात्र संदेहो रोगाच्चापि तदुद्भवात् ॥ २७ ॥
पुत्रसंततिवृद्धिः स्यात्प्रायश्चित्ते कृते त्विह । सप्तसप्ततिवर्षान्ते जीवनं कथितं त्विह ॥ २८ ॥
नैवं करोति यो मोहात्प्रायश्चित्तं प्रयत्नतः । तस्य रोगविवृद्धिः स्यात्पञ्चाशन्मितेऽब्दके॥२९॥
स्वारिष्टं पुत्रारिष्टं वा नात्र कार्या विचारणा ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९७॥

---

श्रीसूर्य उवाच ।

या दुष्टा प्राग्भवे गर्भं पातयेदिह यत्नतः । श्रवणं हरिवंशस्य कन्योद्वाहं शिवार्चनम् ॥ १ ॥
कृत्वा पुत्रसुखं पश्येज्जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९८ ॥

---

अरुण उवाच।

कश्चित्सुतो महासाधुश्चारुवर्णः प्रतापवान्। आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किंचित्क्लेशस्य कारिणी। तद्भार्या हि पतिप्राणा व्रतानामनुकांक्षिणी ॥२॥
ऋतुहीना कथं जाता कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच।

नारीणां जारगर्भाणामसतीनां कुलच्छिदाम्। यद्वाचिरप्रसूतानां शीघ्रं गर्भः समुद्भवेत् ॥ ४ ॥
औषधैश्छेदनैर्मानैः प्रलेपैर्दुष्टभक्षणैः। संवाहनैस्तथा पातैरन्यैर्वा बस्तिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायान्करोत्यपि च कीर्तयेत्। पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥
नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि। पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
अनया ईर्ष्यया चैव संततेर्नाशनाय च। औषधैश्छेदनार्थैस्तु तदर्थं कल्पितो गदः ॥ ८ ॥
सपत्न्यै प्रेरयामास विधिना चैव तद्वदम्। तया वै ऋतुभावाच्च परिपीतं महौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद। ऋतावृतौ च संप्राप्ते जाताश्च विविधा रुजः ॥१०॥
वेदना ह्यभवन्नित्यमसृग्वातोदरामयाः। पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भनाशनम् ॥ ११ ॥
तया चैतत्कर्म कृतं त्रिविधं गर्भदोषकृत्। तथापि फलहर्तॄणां द्वितीयं सुकृतं चरेत् ॥ १२ ॥
ऋतुत्वभावो दुष्टबुद्ध्या कृतो वै पूर्वजन्मनि। तेन वै कर्मणा वत्स! विविधाः पुष्पबंधनाः ॥ १३ ॥
गर्भाश्रयमधिश्रित्य स्रवते शोणितं बहु। क्षीयन्त इव चांत्राणि सूचीभिरिव तोदनम् ॥ १४ ॥
वेदना याः पुराऽभूवँस्त्रीणां गर्भनिपातने। यावत्कालं मदेशीयं तासां गर्भमपातयत् ॥ १५ ॥
तावानेव च तद्गर्भनाशस्यास्ति हि संभवः। एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत् ॥१६॥
एकवासोविधिं चैव दंपती तीर्थसंगमे। सुशुभे भूप्रदेशे तु पुराणोक्तविधानतः ॥ १७ ॥
संप्रणशाया दुष्टस्य प्रायश्चित्तमिहैनसः। प्रौष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ १८ ॥
यत्नेन गार्भिकं सौम्यमुपोषणपरायणा। पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियाम् ॥ १९ ॥
केतकैर्गर्भसंयुक्तैश्चंपकैः कुमुदोत्पलैः। सौवर्णीं राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् ॥ २० ॥
हारनूपुरकोटीरकुंडलाभरणादिकम्। नैवेद्यैः शुभकासारमोदकापूपपायसैः ॥ २१ ॥
उपतिष्ठेत विधिवद्भवानीं प्रियवल्लभाम्। पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता ॥ २२ ॥
रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम्। फलैर्नानाविधैरर्घ्यैर्दद्यान्मंत्रपुरस्सरम् ॥ २३ ॥
फलपुष्पाक्षतोपेतमंजनं मूर्ध्नि प्रक्षिपेत्। नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये ॥ २४ ॥
देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः। नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश ॥ २५ ॥
प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम्। सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् ॥ २६ ॥
दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया। सगर्भां च वृषोपेतां सितां गां वस्त्रसंयुताम् ॥२७॥
सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ २८ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तरत्रिशताधिकसहस्रतमः ॥ १३९९ ॥

श्रीसूर्य उवाच।

शशघाती महाभाग कुब्जकर्णः प्रजायते। निष्कृतिं तस्य पापस्य शृणु चात्र खगाधिप ॥ १ ॥
गां हि सोपस्करां दद्याद्वेदांगवेदिने। तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःशताधिकसहस्रतमः ॥ १४०० ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः । द्विजानां पूजको दक्षः सिन्धुमण्डलगोण्डजः ॥ १ ॥
देवद्रव्यविहीनोऽभूत्तत्कृतं कर्म चाधमम् । सपत्नी स्थापिता पण्यशालायां हि पतत्रिराट् ॥ २ ॥
पण्यस्त्रीकर्मतश्चासौ चकार स्वोपजीवनम् । ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम् ॥ ३ ॥
प्राग्दानवशतश्चेह जन्मन्यस्ति च पर्वते । शूद्रावमोऽथ वै पण्ढः पूर्वपापप्रभावतः ॥ ४ ॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्द्विजात्मज ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरचतुःशताधिकसहस्रतमः ॥ १४०१ ॥

श्रीसूर्य उवाच ।

या नारी नकुलं पूर्वं घातयेद्विनतासुत । सेह जन्मनि रोगेण वभ्रुमण्डलजेन च ॥ १ ॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम् । तद्रोगनाशने दद्याद्बभ्रुं निष्कद्वयस्य च ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरचतुःशताधिकसहस्रतमः ॥ १४०२ ॥

अरुण उवाच ।

कश्चित्क्षात्रकुले जातो नानावृत्तिः किलाभवत् । नानासंधिषु बाधा वै ह्युदरार्तिश्च तस्य हि ॥ १ ॥
मेहादिव्याधया नित्यं नेत्ररोगो विराश्रिता । कटिपृष्ठोरुवंशेर्तिर्बाल्ये च ग्रहणीगदः ॥ २ ॥
तस्य भार्या सदाचारा विज्ञेया प्रीतिकारिणी । सौभाग्यसुखसंपन्ना पितृमातृसुखोज्झिता ॥ ३ ॥
कथं संततिहीना च वदोपायं च सन्ततेः ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातस्तस्करो वस्त्रहारकः । निषादैः सह संभूय चौर्यकर्मणि तत्परः ॥ ५ ॥
वनानामन्तरे प्राप्ते कश्चिद्विप्रः समागतः । गृहीत्वा तस्य सर्वस्वं यत्किंचिद्वार्जनात्कृतम् ॥ ६ ॥
स तेन निहतो विप्रस्तस्करेण दुरात्मना । तस्मादसौ मृतश्चापि बभूव वनपन्नगः ॥ ७ ॥
पश्चान्नरके घोरे पतितोऽप्युतसंख्यया । तस्मान्मानुष्यमापन्नः किंचित्पुण्यप्रभावतः ॥ ८ ॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद । इदं चतुर्थकं जन्म वंध्यात्वं यत्र संस्थितम् ॥ ९ ॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि । तेन कर्मविपाकेन स्त्रीपुंसोर्जायते त्विह ॥ १० ॥
पुत्रहीनो भवस्त्वद्वद्वंध्यात्वं जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । संततेर्हि सुखं ब्रूहि वंध्यानां हितकाम्यया ॥ १२ ॥

श्रीसूर्य उवाच ।

शुभे त्ववसरे मासे शुभतीर्थादिसंभवे । विधिवद्धिहितं पूर्वं कृतं स्मृत्वाभिभाषयेत् ॥ १३ ॥
विप्रस्योद्वाहनं कृत्वा गृहदानं यथाविधि । धनधान्यादिकं दत्त्वा तोषयेद्द्विप्रयाजकान् ॥ १४ ॥
विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणाहनि । पुण्याहे विधिमातिष्ठेदनपत्याघनाशनम् ॥ १५ ॥
सुशुभे भूप्रदेशे तु समे कम्बलसंस्तृते । विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम् ॥ १६ ॥
परितोऽर्धनिमानं तु द्रोणमानं सुतंडुलैः । विदध्यात्पर्वतान्सुत देवद्रुमविभूषितान् ॥ १७ ॥
ततस्तौ दंपती शुद्धौ स्नातावहतवाससौ । दधानौ शुभवेषाढ्यौ चिंतयन्तौ प्रजापतिम् ॥ १८ ॥

तस्यादितेश्च तत्पत्न्याः कुर्यान्मूर्तिं प्रजापतेः। शुद्धवर्णसुवर्णस्य निष्कद्वयविनिर्मिताम् ॥ १९ ॥
हेमयज्ञोपवीतां च साक्षमालाकमंडलुम्। अदितेरपि केयूरहारग्रैवेयभूषिताम् ॥ २० ॥
यथावित्तविभागेन तनुं तस्याः शुभाकृतिम्। स दिव्यामर्चयेन्मूर्तिं विष्णोर्वामनरूपिणः ॥ २१ ॥
तन्मूर्तित्रितयं सम्यक्कृतसंस्कारमर्चयेत्। कृत्वा प्रतिष्ठितप्राणं ज्ञातकर्मादि पुंस्त्रियोः ॥ २२ ॥
बाललीलाधरं विष्णुं वामनं परिचिंतयेत्। मातरं द्रष्टुमिच्छंतं हरिं तत्स्तनकांक्षया ॥ २३ ॥
ततस्तदाश्रमाचैव सुमेरोस्तिलपर्वतात्। प्रत्यंतगिरिमिच्छंतं मार्गैः स्वपदभूषितैः ॥ २४ ॥
अदितिं समपश्यंतीं विरहाकुलचेतसम्। रुदतीमिति तं द्रष्टुं तत्परीन्समीक्षतीम् ॥ २५ ॥
एवं ध्यात्वा तथा मंत्रैर्मंत्रार्थोदितलक्षणाम्। पुष्पैश्च धूपगंधाद्यैरर्चयेददितिं विह्वलाम् ॥ २६ ॥
तद्विमासोऽथ तद्विष्णोः विष्णोः कर्माणि पश्यत। ततस्तां वैष्णवीं मूर्तिं मातुरुत्संगगामिनीम् २७
कृत्वा तस्याः प्रतिष्ठान्तं लब्धपुत्रान्विचिन्तयेत्। अपश्यन्तीमितिप्रोक्तमंत्रार्थगुणलक्षणाम् ॥ २८ ॥
सपुत्रां खलु तां देवीमर्चयेद्विविधैर्गुणैः। ततो ब्राह्मणमध्यात्तु समाहूय गुणान्वितम् ॥ २९ ॥
तस्मै तां प्रतिमां दद्यात्सपुत्रामदितेः सुताम् ॥ ३० ॥

मंत्रः।

"यन्मया निहतो विप्रो धनं हृत्वाध्वगस्य हि। तस्करैस्सह संप्राप्तं पातकं चोलवर्णं महत् ॥ ३१ ॥
तस्य पापस्य नाशाय दानमेतद्ददाम्यहम्" ॥ ३२ ॥
सौवर्णीं प्रतिमामेनां भवेयमनघेति च। भोजयेच्च शतं विप्रान्सर्पिष्यात्मानमीक्षयेत् ॥ ३३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तरचतुःशताधिकसहस्रतमः ॥ १४०३ ॥

श्रीसूर्य उवाच।

उलूकघातनात्पूर्वं जन्मन्यत्र च पुत्रक। पांडुरोगेण सततं पीडितो वै भवेद्भृशम् ॥ १ ॥
कस्तूरिकापलं चैकं दद्याद्विप्राय पर्वणि। उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तस्मिन्पापे विनष्टे तु पांडुरोगो विनश्यति ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरचतुःशताधिकसहस्रतमः ॥ १४०४ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचिदुलूकं पूर्वजन्मनि। पांडुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यादिह विधिज्ञाय पलमेकं खगाधिप। कस्तूरिकाया विप्राय पांडुरुङ्नाशनं परम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तरचतुःशताधिकसहस्रतमः ॥ १४०५ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु प्राक्कर्मणः फलम्। पुरा कश्चित्कलिंगेऽभूद्द्विजो धर्मक्रियापरः ॥ १ ॥
बहुस्त्रीकुलसंयुक्तो गोधनैश्च समन्वितः। गयायां कृतवान्सोऽथ श्राद्धं दानं विशेषतः ॥ २ ॥
तच्छ्राद्धदानबाहुल्याद्द्विजो जातो दशार्णके। प्राक्पापात्तु महाभाग व्यभिचाराद्पुत्रकः ॥ ३ ॥
प्रयागे मकरे स्नानाद्गायत्रीजपतो मृतिः। काश्यां जातो द्विजो वेदाभ्यासी धर्मपरायणः ॥ ४ ॥
स गृहस्थाद्वियुक्तश्च शिवार्चनरतः सदा। लब्ध्वा सर्वं सुखं चात्र शिवलोकमवाप्नुयात् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरचतुःशताधिकसहस्रतमः ॥ १४०६ ॥

### श्रीसूर्य उवाच ।

पृच्छकोसावभूत्पूर्वं राजपुत्रः प्रतापवान् । पुलिंददेश उत्पन्नो विष्णुभक्तिपरायणः ॥ १ ॥
स्त्रीपुत्रधनसंयुक्तो धर्मशास्त्रक्रियारतः । कृतवान्स गयाश्राद्धं यथाविभवविस्तरम् ॥ २ ॥
गोभूहिरण्यवस्त्राभरत्नाद्यादि विधानतः । भक्ष्यशय्यासनादीनि प्राददत्पंचपर्वसु ॥ ३ ॥
सत्पात्रेषु महाभाग विविधानि गृहाण्यपि । ततो भाविवलात्सूत कृतवान्कर्म दारुणम् ॥ ४ ॥
ग्रामान्तरे संस्थितस्य शत्रोः सीमापहारिणः । निर्दग्धं हि गृहं तेन रात्रौ चौर्येण कर्मणा ॥ ५ ॥
तस्मिन्दग्धे महाभाग दग्धश्चास्य सुतः शिशुः । स्त्रियौ च गौः सवत्सा च निर्दग्धा गृहसंततः॥६॥
यौवने स्त्रीसाहाय्याच्च पापमाचरितं पुरा । अथो किंचिद्गते काले स गतो यमशासनम् ॥ ७ ॥
पापात्पापफलं भुक्त्वा पुण्यात्स्वर्गफलं तथा । गयाश्राद्धप्रभावेण स जातो ब्राह्मणोऽधुना ॥ ८ ॥
यमुनाप्रान्तरे देशे पंचयोजनसम्मिते । गौरस्वरूपो मतिमान्दंडदाक्षिण्यतत्परः ॥ ९ ॥
नातिदीर्घो नातिह्रस्वो वातपित्तात्मको घृणी । सभायां चतुरो धीरो बहुस्थानेऽधिकारवान्॥१०॥
बहुस्त्रीको दृढो मानी पितृमातृसुखाल्पकः । चलः स्वधर्मनिरतो बहुभृत्यजनैर्वृतः ॥ ११ ॥
राजमान्यो महोत्साहोऽमितदो लोकविश्रुतः । धनवाहनभोगानां भोक्ता बहुजनप्रियः ॥ १२ ॥
आदिमध्यावसानेषु सुखैश्वर्यसमाकुलः । धर्मादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १३ ॥
धूर्तः शठोऽतिदंभाढ्यो परस्वहरणे रतः । क्लेशैर्भयैर्मनोदुःखैर्व्ययैश्चापि प्रपीडितः ॥ १४ ॥
गोबालवत्सकवधादग्निदाहात्पुराकृतात् । कन्यादुःखान्वितस्त्वत्र जातपुत्रविनाशकः ॥ १५ ॥
स्त्रीसाहाय्यात्पुण्यपापान्मृतस्यैवं विचारयेत् । लक्षणैरेभिराढ्यस्य प्रष्टुरत्रैव जन्मनि ॥ १६ ॥
गोस्त्रीबालवधान्नूनं पुत्रनाशकरा यतः । प्रायश्चित्तं प्रवक्ष्यामि येन पापात्प्रमुच्यते ॥ १७ ॥
दशभिस्तु पलैः कार्या सुरभी वत्ससंयुता । हिरण्मयी यथाकारा पत्रे लेख्या विधानतः ॥ १८॥
तदर्धमितिका वापि निजवित्तानुसारतः । संपूज्य गन्धपुष्पाद्यैर्मन्त्रैश्चापि विशेषतः ॥ १९ ॥
सा च देया विधिज्ञाय पूर्वपापापनुत्तये । तथा सुवर्णकमितः शिवः स्त्रीपुत्रसंयुतः ॥ २० ॥
संपूज्य विधिवद्दद्यात्सर्वपापहरो हरः । तदर्धमितिको ह्यग्निर्देयः पापविनाशकृत् ॥ २१ ॥
दशमाषमिता जीवा ग्रामदाहेऽपि ये मृताः । देया हिरण्मये पत्रे लिखित्वा बालकादयः ॥ २२॥
गायत्र्यष्टसहस्रं तु त्र्यम्बकं तन्मितं जपेत् । अष्टाक्षरं त्रिसाहस्रं जपेत्पापविशोधनम् ॥ २३ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । गामेकां विधिवद्दद्यात्सर्वपापविनाशिनीम् ॥ २४ ॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य पुत्रविवृद्धिः स्यादत्रजन्मन्यत्र न संशयः ॥ २५ ॥
नापमृत्युर्न्याधयस्तस्य न चारिष्टभयं भवेत् । पञ्चाशीत्यब्दपर्यन्तमायुः स्यात्पापशोधनात् ॥२६॥
न करोति यदा लोभात्त्रिष्वेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ॥२७॥
वर्षे षष्टिमिते रिष्टं देहान्तो वा धनक्षतिः । प्रायश्चित्ते कृते सूत स्त्रीपुत्रसुखमाप्नुयात् ॥ २८ ॥
न पश्यति तदा रिष्टं देहजं धनजं तथा । कर्कस्थिते शनौ जातो देहान्तो वृषभस्थिते ॥ २९ ॥
जन्मादिनिधनान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदंतर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरचतुःशताधिकसहस्रतमः ॥ १४०७ ॥

---

### श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । प्रदरेणैव रोगेण पीड्यतेऽत्रेह जन्मनि ॥ १ ॥

भास्करं चात्र सौवर्णं दद्यात्पलमितं सुत । संपूज्य गंधपुष्पाद्यैः प्रदानान्मुच्यते त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरचतुःशताधिकसहस्रतमः ॥ १४०८ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्वंगदेशसमुद्भवः । राजमंत्री महोग्रस्तु क्षात्रधर्मरतः सुधीः ॥ १ ॥
धर्मशास्त्रक्रियायुक्तः शिवभक्तिपरायणः । बहुवृत्तिधरो धीरो राजकार्येषु तत्परः ॥ २ ॥
सुखैश्वर्यसमाक्रांतो बहुस्त्रीपुत्रसंयुतः । स चकार महादानं शिवप्रियकरं परम् ॥ ३ ॥
वस्त्रभूषणभक्ष्याणि गोऽश्वशय्यासनानि च । अददत्प्राग्भवे सूत सर्वमेव स्वशक्तितः ॥ ४ ॥
स कदाचिद्गतो दैवादाज्ञप्तः प्रभुणा पुरा । यौवनेऽरिपुरं तेन प्राप्य गावः समाहृताः ॥ ५ ॥
तदाज्ञप्तजनैश्चात्र ताडिता व्याकुलीकृताः । तत्रैका सुरभी सूत ह्यासन्नप्रसवाऽभवत् ॥ ६ ॥
तद्गर्भपातो ह्यभवत्तदुःखेन च सा मृता । राजकार्येऽतिलोभाच्च पापमुग्रमुपार्जितम् ॥ ७ ॥
पापपुण्ययुतः प्राप्तो जीवनान्ते यमालयम् । तत्र भुक्त्वा शुभाँल्लोकान्पुण्यात्पापात्तथेतरान् ॥ ८ ॥
शिवयागप्रभावेण स जातो ब्राह्मणोऽधुना । युग्मे लग्ने धनोरंशेऽनलभे मेषगे रवौ ॥ ९ ॥
प्राग्भागे चंद्रभागाया ऐरावत्यास्तथोत्तरे । गौरो मध्यमरूपाढ्यो नात्युच्चैर्न लघुर्घृणी ॥ १० ॥
यशस्वी प्रियवाक्शान्तः पैत्तिकोऽतिजनैर्वृतः । सभायां चतुरो धीरो विख्यातो राजसेवकः ॥ ११ ॥
स्त्रीभ्रातृधनभोगाढ्यः पुत्रपौत्रसमन्वितः । देशेदेशेऽधिकाराढ्यो बहुवाहनभोगभाक् ॥ १२ ॥
यौवनांतेऽतिधनवान्सुखैश्वर्यसमाकुलः । शिवयागादिदं सर्वं पापात्पापफलं शृणु ॥ १३ ॥
क्वचित्पापरतो धूर्तो लोभमोहसमाश्रितः । शठः क्रोधरतो हीनः स्वाधिकाराच्चलाचलः ॥ १४ ॥
बाल्ये मातृसुखैर्हीनोऽमितदो बहुकन्यकः । क्लेशैर्भयैर्मनोदुःखैर्यून्यंते तापितः क्वचित् ॥ १५ ॥
गोदुःखजात्पूर्वपापाद्यौवनेस्त्रीवधो भवेत् । प्रसूरत्र कनिष्ठायां स्वल्पं पुत्रसुखं त्विह ॥ १६ ॥
चिह्नमङ्गादिदं सूत प्रसूरत्रैव जन्मनि । गवां दंडाहतात्पापादंडराशिगतो गुरुः ॥ १७ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । सुवर्णैः पञ्चभिः कार्या सवत्सा सुरभी सुत ॥ १८ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । संपूज्य गंधपुष्पाद्यैर्मंत्रैश्चापि विशेषतः ॥ १९ ॥
सा च देया विधिज्ञाय मंत्रमेतमुदीरयेत् ॥ २० ॥

मन्त्रः ।

" मया पूर्वं त्वमज्ञानात्पीडिता सुरभि पुरा ॥ २१ ॥
तद्दोषशमनार्थैव ददेऽहं त्वां हिरण्मयीम् । देवि त्वं मम पापानि तत्क्षणाद्भस्मसात्कुरु " ॥ २२ ॥
इत्युच्चार्य नरो दद्यात्पूर्वपापात्प्रमुच्यते । तस्मादर्धमितं हैमं दद्यात्पशुपतिं विभुम् ॥ २३ ॥
पुत्रपौत्रविवृद्ध्यर्थं पूर्वपापापनुत्तये । त्र्यंबकं लक्षमर्यं वा तदर्धं वा जपेद्बुधः ॥ २४ ॥
गायत्र्यष्टसहस्रं तु जपित्वा शुद्धिमाचरेत् । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २५ ॥
य एवं कुरुते सूत विधिना पापशोधनम् । तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्र न संशयः ॥ २६ ॥
स्वाधिकारप्रवृद्धिः स्यात्सुखैश्वर्यंविशेषतः । नाधयो व्याधयस्तस्य नच शत्रुभयं भवेत् ॥ २७ ॥
सप्तसप्ताब्दमायुः स्यात्प्रायश्चित्ते कृते त्विह । द्विपञ्चाशन्मिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २८ ॥
कन्यागते शनौ जातो निधनं मेषगे तथा । शुक्रैश्च शशिराशिस्थे रवौ मेषगते तथा ॥ २९ ॥
जन्मादिमरणांतं हि स्वल्पमेवात्र सूचितम् । यद्यदंतर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरचतुःशताधिकसहस्रतमः ॥ १४०९ ॥

## श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चित्पूर्वजन्मनि यामुने । स्त्रीपुत्रभ्रातृसंयुक्तो धनधान्यसमन्वितः ॥ १ ॥
क्षात्रधर्मरतः शूरो विष्णुभक्तिपरायणः । स च प्रादात्कुरुक्षेत्रे सर्वस्वं विधिनाऽण्डज ॥ २ ॥
महापर्वसु विप्रेभ्यो दरिद्रेभ्योऽपि शक्तितः । ततो बहुतिथे काले स्वस्थानं प्राप्य बाहुजः ॥ ३ ॥
स चकार महापापं भाविनोऽर्थस्य गौरवात् । ऋतुस्नातां स्त्रियं ज्येष्ठां संत्यज्य प्रियवादिनीम् ॥ ४॥
रतिं ददौ कनिष्ठायामनृतौ कामलोभतः । अथ केनापि विप्रेण स्थापितं तद्गृहे धनम् ॥ ५ ॥
यदस्य न पुनर्दत्तं तस्मै लोभाच्च तद्वसु । स्त्रीपुत्रभ्रातृभिः सर्वैर्भुक्तं तेनाप्यसद्धनम् ॥ ६ ॥
प्रायश्चित्तोज्झतः सोऽपि प्राप्तो मृत्युवशं तदा । स भुक्त्वा पापपुण्योत्थं फलं तत्र खगेश्वर ॥ ७ ॥
सर्वस्वदानात्प्रागत्र द्विजोऽसौ नृपपूजितः । चिह्नमत्र घटे लग्ने जातो ब्रह्मस्वभक्षणात् ॥ ८ ॥
गौरो मध्यमरूपाढ्यो मन्त्रविद्रक्तपित्तभाक् । धर्मज्ञो नीतिविद्विद्यास्त्रीपुत्रसुखसंयुतः ॥ ९ ॥
लघुर्दयालुर्विख्यातो बहूनां हितकारकः । क्लेशचिंतादिभीत्याढ्यः पापात्पापफलं त्विह ॥ १० ॥
स्त्रीत्यागाद्दूषणात्पापाज्जातपुत्रविनाशकः । सप्तपञ्चाशदब्दांतमपि ब्रह्मस्वभक्षणात् ॥ ११ ॥
या कनिष्ठा सहाया प्राक्सा ज्येष्ठात्र मृतात्मजा । बहवः प्राक्सहाया ये ते मृताः शिशवोऽत्र च १२
लक्षणैरेभिराढ्यस्य शृणु पापविशोधनम् । लक्ष्मीनारायणं कुर्यात्सौवर्णं द्विपलात्मकम् ॥ १३ ॥
समुल्लिख्य शुभे पत्रे तदर्धमितके तथा । तल्लिंगमंत्रैः संपूज्य षोडशोपचारकैः ॥ १४ ॥
दद्याद्विप्रवरायैव पूर्वपापप्रशुत्तये । शिवं च तन्मितं दद्यात्सपत्नीकं सुतान्वितम् ॥ १५ ॥
शतैः पलैस्तु ताम्रस्य घटं दद्यात्तदर्धकम् । वा स्वर्णस्य घटं शक्त्या गोघृतेन प्रपूरितम् ॥ १६ ॥
दद्याद्वेदविधिज्ञाय ब्रह्मस्वाघविनाशनम् । गायत्र्यष्टसहस्रं तु तद्दशाक्षरं जपेत् ॥ १७ ॥
त्र्यंबकं द्विगुणं चापि सर्वपापविशोधनम् । होमयेच्च तिलाञ्शक्त्या ब्राह्मणान्भोजयेच्छुभान्॥१८॥
एकादशसहस्राणि पश्चात्कुर्याच्च पार्थिवान् । दद्यात्सुवर्णभौमं च ऋतुदोषोपशांतये ॥ १९ ॥
मम जन्मदिने सूत व्रतं कुर्यात्प्रयत्नतः । अनेन विधिना यस्तु कुर्यात्पापविशोधनम् ॥ २० ॥
स्त्रीत्यागात्पूर्वजात्पापात्तथा ब्रह्मस्वभक्षणात् । मुच्यते नच संदेहो नचारिष्टभयं भवेत् ॥ २१ ॥
अशीतिमितवर्षान्तं जीवनं कथितं त्विह । गंगायां निधनं प्रोक्तं तस्य स्वर्गगतिर्ध्रुवम् ॥ २२ ॥
स्त्रीपुत्रसुखवृद्धिः स्यात्त्र च शत्रुविवर्धनम् । नाधिव्याधिभयं तस्य प्रायश्चित्ते कृतेऽत्र च ॥ २३ ॥
त्रिषष्टिमितके वर्षे पंचसप्ततिके तथा । चतुर्विधं महारिष्टं तस्य स्याकृतनिष्कृतेः ॥ २४ ॥
ध्वजे मेषगते जन्म निर्याणं वृश्चिके स्थिते ॥ २५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१० ॥

## श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । राजपुत्रोऽभवत्कश्चित्पृच्छकोऽसौ पुरानघ ॥ १ ॥
गंगासमाश्रिते देशे युग्मयोजनसम्मिते । ग्रामाध्यक्षो महातेजा धर्मशास्त्रक्रियायुतः ॥ २ ॥
शिवभक्तिपरो विद्वान्मंत्रविच्चारुचेष्टितः । पुत्रमित्रादिमानाढ्यो धनधान्यसमाकुलः ॥ ३ ॥
दत्तानि तेन दानानि प्रयागे मकरेऽपि च । अन्यपर्वसु विप्रेभ्यो वस्त्राण्याभरणानि च ॥ ४ ॥
गोभूशय्यासनादीनि भक्ष्याणि विविधानि च । सत्पात्रेषु गृहस्थेषु श्रद्धापूतेन चेतसा ॥ ५ ॥
अथो भाविबलात्तेन कामलुब्धेन यौवने । ब्राह्मण्यां धारितो गर्भः पापमाचरितं त्विदम् ॥ ६ ॥
यत्ने कृतेऽपि बहुशो नासीद्गर्भस्य पातनम् । ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥ ७ ॥

स्त्रीसहायेन तेनैव कृतं पापकर्म दारुणम्। ततो वह्नितिथे काले ससहायो हि वाहुजः ॥ ८ ॥
प्राप्य धर्मपुरं तत्र शुभाशुभविवेचनम्। पापात्पापफलं भुक्त्वा पुण्यात्स्वर्गांश्च शाश्वतान् ॥ ९ ॥
तीर्थराजप्रभावात्प्राग्दानाच्च विविक्तया। सरस्वत्याः परे देशे जांगले नखयोजने ॥ १० ॥
कुले महति पक्षीन्द्र जातो वन्दीजनोऽधुना। गौरः सुरूपो मतिमान्सुशीलश्च दयापरः ॥ ११ ॥
चंचलो दर्शनीयाक्षो नात्युच्चो न लघुः क्षमी। वाचां मधुरया युक्तो राजसेव्यथ मंत्रवित् ॥१२॥
उपकारपरो विद्वान्बली सर्वजनप्रियः। कुलाग्रणीर्यशस्वी च भृत्यवाहनभोगभाक् ॥ १३ ॥
धर्मादिदं तथा पापाल्लोभी पापरतः क्वचित्। धूर्तः शठोऽतिमितंद्रो पितृसौख्यविवर्जितः ॥ १४ ॥
किंचिद्रुजास्ति जठरे पित्ताधिक्योऽतिवीर्यभाक्। ब्राह्मण्यां वीर्यपातात्प्राग्गर्भपाताच्च तद्वधात् ॥१५॥
अत्र जन्मन्यसौ पक्षी पुत्रसौख्यविवर्जितः। या स्त्री पूर्वं सहायासीत्पापकर्मणि चांडज ॥ १६ ॥
सा प्रसूरत्र वनिता पुत्रदुःखात्मपीडिता। गोस्त्रीविप्रवधं पापं पुत्रदुःखकरं यतः ॥ १७ ॥
प्रसूर्लग्नादिदं चिह्नं सूर्यः क्षीराशिगः किल। अत्युग्रादि पूर्वपापाद्राहुरुच्चगृहे गतः ॥ १८ ॥
लक्ष्योऽत्र लक्षणैरेभिः प्रायश्चित्तं वदाम्यहम्। पलदशमितैः कार्या ब्राह्मणी च हिरण्मयी ॥१९॥
पत्रे लेख्या शुभाकारा सगर्भावयवान्विता। वा तदर्धहिरण्येन यथावित्तानुसारतः ॥ २० ॥
संपूज्य गंधपुष्पाद्यैर्मन्त्रैश्चापि विशेषतः। सा च देया विधिज्ञाय मंत्रमेतमुदीरयेत् ॥ २१ ॥

मन्त्रः।

"सौवर्णीं ब्राह्मणीमेनां सगर्भां सोमदैवताम्। ददेऽहं विप्रमुख्याय पूर्वपापविशुद्धये" ॥ २२ ॥
ब्राह्मणं हेमजं दद्यात्पलैर्युग्ममितैः शुभम्। तदर्धमितकं वापि निजवित्तानुसारतः ॥ २३ ॥
सोमं दद्यात्पलैकं तु हैमं पापविशुद्धये। पलेनार्धपलेनापि कमलं हेमजं शुभम् ॥ २४ ॥
संपूज्य गन्धपुष्पाद्यैर्मन्त्रैश्चापि विशेषतः। ब्राह्मणाय प्रदद्याच्च सर्वपापविशुद्धये ॥ २५ ॥
गायत्र्ययुतसहस्रं तु त्र्यम्बकं तन्मितं जपेत्। अष्टाक्षरं तदर्धं तु जपेद्दोषापनुत्तये ॥ २६ ॥
होमयेत्तद्दशांशेन तिलाज्ययवतण्डुलैः। विप्रेभ्यो दक्षिणां दद्याच्छक्त्या विप्रांश्च भोजयेत् ॥२७॥
यथाविधि हरेर्वंशं शृणुयाद्धि पुत्रदम्। य एवं कुरुते सूत शक्त्या पापविशोधनम् ॥ २८ ॥
लभतेऽसौ पुत्रसुखं स्त्रीभ्यामत्रैव जन्मनि। नाधयो व्याधयस्तस्य न वीर्यक्षयमाप्नुयात् ॥ २९ ॥
न करोति यदा लोभान्निष्पेकं पापशोधनम्। न जीवन्ति सुतास्तस्मिन्जीविते नात्र संशयः ॥३०॥
पञ्चवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः। प्रायश्चित्ते कृते तस्य वर्षाणां पञ्चसप्ततिम् ॥ ३१ ॥
जीवनं कथितं त्वत्र न चारिष्टभयं भवेत्। न भवेत्पुत्रमरणं निर्याणान्ते शुभा गतिः ॥ ३२ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ३३ ॥

इति श्रीगरुडसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरचतुःशताधिकसहस्रतमः ॥ १४११ ॥

### श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु चास्य विचेष्टितम्। कश्चित्क्षात्रकुले जातश्चोग्रकर्मा प्रतापवान् ॥ १ ॥
अंगदेशे धनाढ्यस्तु ग्रामाध्यक्षोऽतिधार्मिकः। बन्धुस्त्रीसंयुतो विप्रवंशाराधनतत्परः ॥ २ ॥
पितृभक्तिपरो विद्वान्बली मात्सर्यसंयुतः। स चकार गयाश्राद्धं यौवने विधिनाण्डज ॥ ३ ॥
काम्यश्राद्धानि दत्तानि विविधानि फलाप्तये। पर्वस्वपि च गोधान्यवस्त्राश्वासनकाञ्चनम् ॥ ४ ॥
अथो पापं कृतं तेन भाविनोऽर्थस्य गौरवात्। वैरभाववशाद्रात्रौ स्वकुले क्रूरचेतसा ॥ ५ ॥
अन्यग्रामाधिपस्यापि क्षत्रियस्य विजानता। ह्येकपुत्रस्य वै पुत्रो घातितश्चोग्रकर्मणा ॥ ६ ॥

तत्पिता तेन दुःखेन मृतः पूर्वमपुत्रकः । तत्स्त्री तेनैव दुःखेन पुत्रकष्टेन वै मृता ॥ ७ ॥
स्त्रीभ्यां सहाययुक्तेन कृतं कर्मातिदारुणम् । ततो बहुतिथे काले ससहायो हि बाहुजः ॥ ८ ॥
धर्माधर्मयुतस्तत्र गतो यमपुरं प्रति । पापात्पापफलं भुक्त्वा पुण्यात्स्वर्गांश्च शाश्वतान् ॥ ९ ॥
गयाश्राद्धप्रभावेण चान्नदानेन मानद । ऐरावतीप्रदेशे तु स जातो ब्राह्मणोऽधुना ॥ १० ॥
रक्तश्यामः सुशीलश्च नात्युच्चो न लघुर्घृणी । नानाभोगसुखैश्वर्यधनाढ्यो दानमानयुक् ॥ ११॥
सभायां चतुरो धीरो विद्वान्धर्मार्थसाधकः । बन्धुस्त्रीमित्रसंयुक्तो भृत्यवाहनभोगभाक् ॥ १२ ॥
धर्मविद्दं तथा पापाल्लोभी पापरतः क्वचित् । धूर्तः पित्ताधिकः शाठ्यमनोदुःखसमन्वितः ॥१३॥
पितृहीनोऽलसो भीरुश्चोदरे तु व्यथा क्वचित् । पूर्वं बाल्यवयःपापात्पुत्रसौख्यविवर्जितः ॥ १४ ॥
या स्त्री पूर्वं सहायाभूद्वधकर्मणि चाण्डज । सा ज्येष्ठा प्रसुरत्रासीन्मृता पुत्रविवर्जिता ॥ १५ ॥
बाल्ययौवनसंप्राप्ता पुत्रदुःखाकुला गता । या द्वितीया सहाया प्राक्सा कनिष्ठात्र जन्मनि॥ १६ ॥
प्रसूर्युवतिरत्रास्ति पुत्रशोकप्रपीडिता । स्त्रीबालद्विजघाताद्याः पुत्रनाशकराः स्मृताः ॥ १७॥
तस्य लग्नादिदं चिह्नं तन्नाबकों न संशयः । श्रुत्वैवं विधिवत्कुर्याद्विधानं हि समाहितः ॥ १८ ॥
न तस्य पुत्रमरणं भविष्यति ममाज्ञया । धनपुत्रान्वितो मध्ये ह्यायुरष्टाद्विवत्सरम् ॥ १९ ॥
रिष्टं पष्टिमिते वर्षे तु तस्य चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१२ ॥

## श्रीसूर्य उवाच ।

कीरदेशे समुत्पन्नः कश्चित्क्षात्रकुले सुधीः । विप्रोत्संगगतस्तत्र प्रयागे मकरे वसन् ॥ १ ॥
कृतवान्विधिवत्स्नानं दानं स्वल्पं च शक्तितः । दैवयोगाद्गृहं प्राप्य कृतवान्कर्म दारुणम् ॥ २ ॥
कामलोभेन सततं शूद्रयां गर्भं दधार वै । स्त्रीभ्यां सहाययुक्तेन पापमाचरितं तथा ॥ ३ ॥
विविधैरौषधैस्तस्या गर्भपातः कृतः पुरा । एवं सर्वैर्मिलित्वा तु पातकं बहुधा कृतम् ॥ ४ ॥
ततो बहुतिथे काले गतास्ते यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
तीर्थराजप्रभावेण स जातो ब्राह्मणोऽधुना । सौम्ये शनौ सिंहगते सूर्ये कन्यागते कुजे ॥ ६ ॥
मृगे ह्यैरावतीतीरे नात्युच्चो न लघुः सुधीः । स्निग्धवाक्स्वल्पधर्माढ्यः पितृमातृविवर्जितः॥ ७ ॥
सहोदरधनैर्हीनो जातपुत्रविनाशकः । परदाराभिगमनाद्गर्भपातनदोषजात् ॥ ८ ॥
पापात्पूर्वकृतात्सुत लक्षणैर्लक्ष्येदिह । स्त्रीसाहाय्यात्तथा सूत प्राक्पापं समुपार्जितम् ॥ ९ ॥
तेनैकास्त्यत्र पत्नी च तस्य पुत्रशुचान्विता । तथान्या बहुपापत्वाद्भ्रातुः पत्न्यग्रजस्य च॥१०॥
पुत्रभर्तृसुखैर्हीना नानारोगसमन्विता । पूर्वं यो यः सहायोऽभूत्स हि भ्राताग्रजस्त्विह ॥ ११ ॥
पृच्छकस्य समस्तास्ते क्षयरोगप्रपीडिताः । चान्द्रायणत्रयं कुर्याद्बालरूपं हरिं यजेत् ॥ १२ ॥
सर्वस्वदानात्सैव क्षयरोगः प्रशाम्यति । कुरुक्षेत्रादितीर्थेषु सत्पात्रेषु विधानतः ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१३ ॥

## अरुण उवाच ।

कश्चिद्विप्रो महासाधुश्चातुर्वर्ण्ये प्रतापवान् । आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किंचिद्वित्तसमन्वितः । तस्य भार्या सदाचारा किंचित्क्लेशस्य कारिणी ॥२॥
पतिभक्ता पतिप्राणा प्रनानामनुकांक्षिणी । पुत्रहीना कथं जाता कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच।

नारीणां जारगर्माणामसतीनां कुलच्छिदाम्। यद्वा चिरप्रसूतानां शीघ्रं गर्भः समुद्भवेत् ॥ ४ ॥
औषधैश्छेदनाद्यैस्तु प्रलेपैर्दुष्टभक्षणैः। संवाहनैस्तथा पातैरन्यैर्वा बलिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायान्करोत्यपि च कीर्तयेत्। पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥
नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि। पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
अनया ईर्ष्यया चैव संततेर्नाशनाय च। औषधैश्छेदनाद्यैस्तु तदर्थं कल्पितो गदः ॥ ८ ॥
सपत्न्यै प्रेरयामास विविधांश्चैव सा गदान्। तदा वै ऋतुभावाच्च तया पीतं तदौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद। ऋतावृतौ च संप्राप्ते जाता सा विविधातुरा ॥१०॥
वेदना ह्यभवन्नित्यमसृग्वातोदरामयाः। पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भपातनम् ॥ ११ ॥
तया चैतत्कर्म कृतं गर्भदोषकरं महत्। तथापि फलहंतॄणां द्वितीयं सुकृतं चरेत् ॥ १२ ॥
स्त्रीभावाद्दुष्टबुद्ध्या च यत्कृतं पूर्वजन्मनि। तेन वै कर्मणा वत्स विविधाः पुष्पबंधनाः ॥ १३ ॥
गर्भाश्रयमधिष्ठित्य स्रवति शोणितं बहु। छिद्यन्त इव चांगानि सूचीभिरिव वेदनाः ॥ १४ ॥
वेदना याः पुराऽभूवंस्त्रीणां गर्भनिपातने। यावत्कालं प्रदेशीयं तासां गर्भमपातयत् ॥ १५ ॥
तावानेव च तद्गर्भः पतेद्वा नास्य संभवः। एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत् ॥ १६ ॥
एकवासोविधिं चैव दंपती तीर्थसंगमे। सुसमे भूप्रदेशे तु पुराणोक्तविधानतः ॥ १७ ॥
संप्रणाशाय दुःखस्य प्रायश्चित्तमिहैनसः। प्रौष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ १८ ॥
यत्नेन गार्भिकं नाम ह्युपोषणपरायणा। पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियम् ॥ १९ ॥
केतकैर्गर्भसंयुक्तैश्चंपकैः कुमुदोत्पलैः। सौवर्णी राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् ॥ २० ॥
हारनूपुरमुकुटकुण्डलाभरणान्विताम्। नैवेद्यैः पुष्पकासारमोदकापूपपायसैः ॥ २१ ॥
उपातिष्ठेत विधिवद्धरार्धां प्रियवल्लभाम्। पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता ॥ २२ ॥
रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम्। फलैर्नानाविधैश्चैवार्घ्यं मन्त्रपुरःसरम् ॥ २३ ॥
फलपुष्पाक्षतोपेतमञ्जनं मूर्ध्नि निःक्षिपेत् ॥ २४ ॥

मंत्रः।

"नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये। गृहाणार्घ्यमिमं देवि पुत्रान्मह्यं यशस्विनः"॥ २५ ॥
पतिपुत्रवती नारी गिरिजावत्प्रसूयते। एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम् ॥ २६ ॥
ततः प्रभाते विमले कृतप्रातःक्रिया सती। देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः ॥ २७ ॥
नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश। प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम् ॥ २८ ॥
सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम्। दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया ॥ २९ ॥
सगर्भां च वृषोपेतां सितां गां वस्त्रसंयुताम्। सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ ३० ॥

मंत्रः।

"अपातयं पुरा गर्भं दुष्टस्त्रीणां वशं गता। यत्पापं वन्ध्यताहेतुस्तस्मान्मोचय चांबिके ॥ ३१ ॥
तव दानेन पुत्रो मे भवेच्च सुभगे सति" ॥ ३२ ॥

इमं मन्त्रं समुच्चार्य दत्वा विप्रं विसर्जयेत्। एवं व्रतपरा नारी गर्भपातं न पश्यति ॥ ३३ ॥
लभते पुत्रपौत्रादीन्प्रियेण सह मोदते। लभेत गर्भपातं नो पतिपुत्रसुखं भवेत् ॥ ३४ ॥
तृतीये वा चतुर्थे वा मासि गर्भं सुविन्दति। रक्तस्य पलाभ्यां वै कोशं गर्भाश्रयाकृतिम् ॥३५॥

निष्केण स्वर्णगर्भं च कृत्वा दद्याद्द्विजन्मने । गर्भपातं प्रकुर्वंत्या मया प्राक्तनजन्मनि ॥ ३६ ॥
यदघं वंध्यकृत्यार्थं तस्मान्मोच्येह सुव्रत । जन्मजात्यादिकं वत्स नरदेदिह कर्मणाम् ॥ ३७ ॥
इदं चतुर्थकं जन्म भूमिदेवकुलोद्भवम् । सपत्नीसादिता पूर्वं सा वै गर्भस्य दोषकृत् ॥ ३८ ॥
तस्येमानीह चिंत्यानि लक्षणानीह जन्मनि । यस्याः प्राक्पातितो गर्भः सपत्न्याः पतिवर्जिता३९
दीनानाथविरोधःस्यात्तद्विरोधतया सुत । अनुमंत्री प्रयोक्त्री सा पितृमातृसुखोज्झिता ॥ ४० ॥
बंधुसंततिदुःखं स्यान्मर्यादायनवस्थितिः । शोकः स्यादुदरे बाधा तद्वत्स्त्रीहादिविभ्रमः ॥ ४१ ॥
अंतरा स्यंदमानो वा गर्भः सत्रोपलक्ष्यते । इत्यादिलक्षणैर्ज्ञात्वा पूर्वोक्तां निष्कृतिं चरेत् ॥४२॥
ब्राह्मणान्भोजयेच्छक्त्या सर्पिष्यात्मानमीक्षयेत् ॥ ४३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१४ ॥

## श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सूत घातितो भूमिलोभतः ॥ १ ॥
महापातकयुक्तेन कृतं कर्मातिदारुणम् । तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तथातिकाल तिर्यक्त्वं विभुज्याधर्मजं स्वयम् । कर्मक्षयेऽस्य पुण्यात्प्राक्सोऽत्र जातो हि बाहुजः॥३॥
क्षयरोगयुतः सूत कृशो दुःखातुरो भृशम् । लग्ने कुम्भाभिधे सूत भौमचन्द्रयुतेण्डज ॥ ४ ॥
रिष्टं पष्टिमिते वर्षे जायतेऽकृतनिष्कृतेः । सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तदग्रे ते मृताश्चात्र पुत्राः क्षयरुजान्विताः । रिष्टेन वा सुखं भग्नं हठपापात्र निष्कृतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चदशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१५ ॥

## श्रीसूर्य उवाच ।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः । गत्वा शत्रुपुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह स पुरं शत्रोर्हृतवांस्तद्गतं वसु । तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम् । अथो यमक्षये सर्वा भुक्त्वा नरकयातनाः ॥ ३ ॥
पुण्यशेषादथोऽत्रापि स जातः क्षत्रियाधरः । देशेऽयोध्याभिधे गौरो लघुदंशो महोद्यमी ॥ ४ ॥
सुखभावे महाभाग राजयक्ष्मप्रपीडितः । ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तां प्रवक्ष्यामि यां कृत्वा मुच्यते त्विह । कार्यास्तत्र त्रिवेदानां मूर्तयस्तु यथोदिताः॥६॥
ब्रह्मविष्णुमहेशानां सर्वरोगविनाशिकाः । सुवर्णजास्तथा कार्याः कदल्यः पत्रसंयुताः ॥ ७ ॥
यथावित्तानुसारेण वित्तशाठ्यं विवर्जयेत् । देयास्ता विप्रमुख्येभ्यःक्षयरोगोपशांतये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृत्वा महाबाहो भयं तस्यात्र शाम्यति । नैवं कुर्यान्नरो मोहाद्रिष्टं विंशतिमेऽब्दके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१६ ॥

## श्रीसूर्य उवाच ।

या योषिद्वाचरेत्कामात्पूर्वजन्मनि निश्चयात् । ब्रह्महत्यामयात्रैव सा ज्ञेया क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं मयोक्तं च खगाधिप । महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१७ ॥

श्रीसूर्य उवाच।

स्वस्त्रीघाती च पुरुषः पूर्वजन्मनि मानद। बधिरो जायते ह्यत्र प्रायश्चित्तं शृणुष्व तत् ॥ १ ॥
चान्द्रायणव्रतं कुर्यात्सुवर्णपलसंयुतम्। पुस्तकं विधिवद्दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्ति होमयेच्चापि भक्तितः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरचतुःशताधिकसहस्रतमः ॥ १४१८ ॥

श्रीसूर्य उवाच।

या काचिदाचरेन्नारी पापं प्राग्देहघातजम्। अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
नानाकष्टवती सा हि निजसर्वस्वदानतः। क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि। काश्यां वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४१९ ॥

श्रीसूर्य उवाच।

मूकः प्रजायते जंतुर्यः पूर्वं भ्रातृघातकः। कामतो हि भवेत्सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२० ॥

श्रीसूर्य उवाच।

या नारी घातयेत्पूर्वभवे मोहाच्च कुक्कुटम्। नासावक्रत्वमाप्नोति सात्र जन्मनि निश्चयात् ॥ १ ॥
हेमनिष्कत्रयं दद्यात्सर्वत्रैव प्रयत्नतः। ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२१ ॥

श्रीसूर्य उवाच।

बभूव बाहुजः कश्चिद्देशे पञ्चनदे पुरा। धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोत्संगगतः सोऽपि प्रयागे गरुडाग्रज। स स्नातो मकरे भानौ धूर्तः कर्मक्रियोज्झितः ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम्। ग्रामे निवसतस्त्वन्यक्षत्रियस्य खगाधिप ॥ ३ ॥
ददाह भवनं रम्यं वैरभावात्पुरातनात्। एका वत्सतरी दग्धा जीवाश्चापि ह्यनेकशः ॥ ४ ॥
कालयोगेन संप्राप्तः स वै यमनिकेतनम्। भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजस्त्विह। गंगायाः प्रान्तरे देशे पंचयोजनसंमिते ॥ ६ ॥
मध्यरवरूपो मतिमान्धर्मे स्वल्पमतिः शठः। वृद्धयाधिकप्रचारी च पैत्रिकस्वल्पवित्तभाक् ॥ ७ ॥
सकन्यकः सपत्नीको बंधुभृत्यसमन्वितः। पुण्यादिदं फलं पूर्वात्पापाच्चैतत्फलं शृणु ॥ ८ ॥
गोबालवत्सकवधाज्जीवघातादपुत्रकः। सप्तवेदाब्दपर्यन्तं जातपुत्रविनाशकः ॥ ९ ॥
गोस्त्रीविप्रवधा लोके पुत्रनाशकरा यतः। गोराशिगे शनौ सोमात्पष्ठे जीवे मृगस्थिते ॥ १० ॥
लक्ष्मेतदण्डजश्रेष्ठ पृच्छकस्यात्र जन्मनि। पूर्वं या स्त्री सहायासीन्मृतवत्सात्र सा सुत ॥ ११ ॥
शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधिनीम्। पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी ॥ १२ ॥
तदर्धमितिका वापि निजवित्तानुसारतः। संपूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १३ ॥
माषवह्निमितैर्देयस्तथा पशुपतिः सुत। माषाभ्यां च तया वह्निर्जीवा माषचतुष्कजाः ॥ १४ ॥
देयाश्च विधिना सूत पूर्वपापापनुत्तये। जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १५ ॥
होमयेत्तद्दशांशेन रुद्रस्याग्रे प्रयत्नतः। शृणुयाद्धरिवंशं च दशावृत्तिविधानतः ॥ १६ ॥

यः कुर्याद्विधिवत्तत्र प्रायश्चित्तं त्रिधा मतम् । जीविष्यंति च तत्पुत्रा जन्मन्यत्र ममाज्ञया॥१७॥
नैवं कुर्याच्च यः शक्त्या त्रिष्वेकं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ॥१८॥
नवसप्ततिपर्यन्तमायुरेवं कृते त्विह । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२२ ॥

## श्रीसूर्य उवाच ।

काश्मीरमण्डले पूर्वं काचिद्द्विजवरांगना । पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वरभावात्तया भव्यं गृहं दग्धं द्विजस्य च । वैरिणस्तु सुतो दग्धो गृहदाहे खगाधिप ॥ २ ॥
साहाय्यात्स्वामिनः सर्वं प्राग्भवे समुपार्जितम् । तत्पापजान्महाघोरान्मृत्युमाप्य वियोनिजात्॥३॥
सैव जात्यविरोधेन पतिशुश्रूषणात्तथा । क्षत्रिया धनधर्माढ्या पूर्वपुण्यात्तथा सती ॥ ४ ॥
क्षयरोगयुता बाल्ये बालघातादपुत्रिणी । गृहाग्निदाहपापस्य प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशे मिते वर्षे रिष्टेनैवात्र नंक्ष्यति । सहायस्तत्पतिश्चात्र पुत्रहीनः क्षयान्वितः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२३ ॥

## श्रीसूर्य उवाच ।

सारिकां यो महाभाग निहन्यात्पापमोहितः । तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥१॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम् । तथात्र पुस्तकं दद्याच्छास्त्रस्य विधिनाण्डज ॥ २ ॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकिल्बिषः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२४ ॥

## श्रीसूर्य उवाच ।

सारिकां याऽवधीन्नारी पूर्वं पापविमोहिता । सात्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तया देया सुवर्णस्य सारिका ब्राह्मणाय च । पूर्वपापाद्विमुच्येत तद्दानाद्विनतासुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२५ ॥

## श्रीसूर्य उवाच ।

काकघाती च पुरुषः पूर्वजन्मनि मानद । लंबकंठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्रेष्ठां सर्वाभरणभूषिताम् । मुच्यते कंठजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरचतुःशताधिकसहस्रतमः॥१४२६॥

## श्रीसूर्य उवाच ।

या नारी पूर्वजनुषि घातयेद्गरुडाग्रज । बकं सा कंठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिवत्तत्र श्वेतामत्र पयस्विनीम् । यथोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२७ ॥

## अरुण उवाच ।

कश्चिद्द्विजकुले जातो धर्मिष्ठो वित्तसंयुतः । उदरे वातजा रोगा गुल्माद्याश्चोर्ध्वहृद्व्यथा ॥ १ ॥
मोहाद्याः स्वल्पवीर्यत्वमक्षिपांडुदरामयाः । जायते शीर्षजा पीडा बाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
शरीरे जायते वह्निर्मुखघातनणादिकम् । पात्राणां मातुलान्यादेर्विधवार्तिः स्नुषादिषु ॥ ३ ॥

दायादाच्छत्रुवत्पीडा भूमिद्रव्यविलिप्सया। ऐहिकानि च लक्ष्माणि जायन्ते तच्छरीरके ॥४॥
तस्य भार्या सदाचारा कदाचिद्रोषवादिनी। गौरवर्णा सुवाणी च संतोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाताऽस्थिरगर्भा च सा। कथम्। दशमासानतिक्रम्य गर्भे चोदरसौख्यभाक् ॥६॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ७ ॥

श्रीसूर्य उवाच ।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ८ ॥
पूर्वजन्मनि सा क्षत्री संजाता विनतासुत। अज्ञानतिमिरांध्येन स्त्रीणां कर्म दुरात्मनाम् ॥ ९ ॥
अजानती कुलस्त्रीणामाचारमनुकंपकम्। सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च ॥ १० ॥
प्रमादाद्धीपिनं हन्ति सदा निष्ठुरमानसा। तस्य गेहाश्रिता नित्यं मार्जारशुनपूर्वकाः ॥ ११ ॥
पलालक्रीडनपरा गेहे संकुलिता भृशम्। सा तप्तवालुकाम्यंतुतप्तभस्मचयादिषु ॥ १२ ॥
अविशिष्टा तदा साध्वी प्राक्षिपद्दुष्टचेतसा। बालगर्भाशयान्बालान्सुविस्पष्टाखिलेन्द्रियान् ॥ १३ ॥
तन्मातृभिः सा तत्याज ज्वलने बालघातिनी। पापा बंधनमात्रं सा बालघातादिकं त्विह ॥१४॥
परत्र यातना घोरा न व्यजानाद्दुराशया। विनिघ्नंति प्रमादाद्ये प्राणिनस्ते नराधमाः ॥ १५ ॥
रौरवे चिररात्राय पच्यंते यातनादिभिः। आनाय्यापि महीपस्तु प्रक्षिपेत्तान्नराधमान् ॥ १६ ॥
तथाविधेषु जीवेषु मृतेष्वपि च तद्वशात्। म्रियन्ते शिशवस्तेषां पूर्वदोषानुसारतः ॥ १७ ॥
अनले ज्वलिता याभिर्नद्यो लघुप्राणिनः। गर्भयुक्ता मृतास्ते ये मातृभिः सहिताः खग ॥१८॥
न लभंतेय ते भार्या मृता ये दुष्टजंतवः। तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजाः ॥ १९ ॥
त्रिविधापत्यजा बाधा प्राप्यते जनुरंतरे। जन्तवो गर्भगा ये ते स्वकृतं कर्म भुञ्जते ॥ २० ॥
उभयोः कर्मणोर्हेतुनाशायैव जनिर्भवेत्। इदं तृतीयं वै जन्म ब्रह्मवंशसमुद्भवम् ॥ २१ ॥
मृतापत्या पुत्रहीनाऽस्थिरगर्भा हि यत्र सा ॥ २२ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते। ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २३ ॥

श्रीसूर्य उवाच ।

सुदिने समनुप्राप्ते ह्यनुकूलग्रहे खग। प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २४ ॥
आसनं चाविकं शुद्धमास्तीर्य सुविचित्रकम्। द्रोणमानं तिलानां तु मध्ये गर्भं प्रपूरयेत् ॥ २५ ॥
निष्कमानं सुवर्णस्य शकलं मध्यमं क्षिपेत्। तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपर्वतम् ॥ २६ ॥
शुद्धतोयभृतं ताम्रं पात्रं दशपलात्मकम्। स्थापयेद्राजतं पद्मं तन्मध्ये फलनिर्मितम् ॥ २७ ॥
पूजयेच्च सपत्नीकं कश्यपं हि प्रजापतिम्। करेऽक्षमाला दक्षे हि वामे चाथ कमण्डलुम् ॥ २८ ॥
कृत्वा प्रतिष्ठितप्राणं मूर्तिं तां शुभलक्षणाम्। अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २९ ॥
तत्र श्रद्धावती नारी त्रिविधापत्यदुःखिनी। विप्रं हि वेदविद्वांसं पूजयेद्विविधैर्धनैः ॥ ३० ॥
ततस्तं तु सपत्नीकं मुनीनां प्रवरं यदेत् ॥ ३१ ॥

मंत्रः ।

"सिसृक्षुणेह सृष्टा वै पत्नी च तपसो बलात्। ता मया तिलसंख्याकैराधिभिरतीव्रवेदनैः ॥ ३२ ॥
लंघिताः स्त्रीजनाचारा अजानंत्या दयात्मिकम्। नाशयेतस्य पापस्य देवमासं विगर्हितम्" ॥३३॥
सम्यक्छ्रद्धावती नारी मृतसन्ततिदुःखिनी। सपत्नीकं तु सौवर्णनिर्मितं सम्यगर्चितम् ॥ ३४ ॥

विप्राय वेदविदुषे प्रदद्याद्गुणशालिने । एवमामाप्य तां मूर्तिं समादाय पृथक्पृथक् ॥ ३५ ॥
प्रदद्याद्दानविधिना श्रद्धया च सदक्षिणाम् । दानान्ते कीर्तयेन्मंत्रं तिष्ठन्ती विहिताञ्जलिः ॥३६॥

मन्त्रः ।

"यन्मया पूर्वजनुषि दयारहितचित्तया । प्राप्तं सुघोरमशुभं स्वामिंस्तच्छिन्धि पातकम्" ॥३७॥
दत्त्वा दानं च विप्राय सर्पिष्यात्मानमीक्षयेत् ॥ ३८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४२८ ॥

श्रीसूर्य उवाच ।

काकघाती महाभाग प्राग्भवे चात्र जन्मनि । कूर्चहीनो भवेन्मर्त्यः स च तत्पापलाञ्छितः ॥ १ ॥
कृष्णधेनुप्रदानेन विधिनात्र खगाधिप । मुच्यते दुष्टपापाच्च कूर्चयुक्चात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४२९ ॥

श्रीसूर्य उवाच ।

या नारी घातयेत्काकं विनतानंदवर्धन । सात्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवत्यलम् ॥ १ ॥
कृष्णधेनुप्रदानाच्च यथोक्ताद्गरुडाग्रज । पूर्वपापविशुद्धिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३० ॥

श्रीसूर्य उवाच ।

अभक्ष्यभक्षको यस्तु भवेत्प्राड्मानवोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते क्रिमिलोदरः ॥ १ ॥
स भीष्मपंचकादत्र व्रतात्पुण्यसमर्जनात् । मुच्यते पूर्वरोगात्तु दुष्टात्क्रिम्युदरात्खग ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३१ ॥

श्रीसूर्य उवाच ।

याऽभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः क्रिमिजोत्था हि रुक्सुत ॥१॥
तत्पापशमनं कार्यं भीष्मपंचकजं व्रतम् । कार्तिके शुक्लपक्षे च प्रान्तस्थं दिनपंचकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३२ ॥

श्रीसूर्य उवाच ।

दुष्टस्पर्शेन यो मोहाद्भक्षयेद्विधिवर्जितः । सिद्धान्नानि पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥
विष्णुव्रतान्महापुण्यात्सर्वपापप्रणोदनम् । तदा कृशोदराख्यां च रुजं नेह प्रपश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३३ ॥

श्रीसूर्य उवाच ।

भुक्तं यया पुरा सूत सिद्धान्नं द्विजभार्यया । दुष्टस्पर्शेन सततं सेह स्याच्च कृशोदरी ॥ १ ॥
सा वैष्णवाद्व्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते । कृशोदररुग्यया नश्येत्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३४ ॥

श्रीसूर्य उवाच ।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनसौख्यसमन्वितः ॥ १ ॥

कृतानि तेन दानानि नानापर्वसु शक्तितः। वेदयुक्तेषु विप्रेषु सत्पात्रेषु विधानतः ॥ २ ॥
अथो पापं भृशं चक्रे व्यभिचारसमुद्भवम्। ज्येष्ठां त्यक्त्वा ऋतुमतीं धर्मशीलयुतां प्रियाम् ॥ ३ ॥
रतिं ददौ कनिष्ठाया अनृतावपि मोहितः। ततो यमपुरं प्राप्तः ससहायो द्विजोत्तमः ॥ ४ ॥
भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा। श्रद्धादानवशात्सोऽत्र गंगायाः पूर्वभागजः ॥ ५ ॥
सिंहस्थेऽर्के सुते राहौ जीवे कर्कोऽलिगे भृगौ। स रक्तगौरो मतिमान्वन्ध्यास्त्रीसुखसंयुतः ॥ ६ ॥
लघुघूर्णी त्वमितदो द्विजवंशसमुद्भवः। सर्वमेतत्फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ७ ॥
स्त्रीत्यागी भ्रूणहा लोक इति पौराणिका विदुः। यो वा सहायतः पूर्वे शृणुष्व विनतासुत ॥ ८ ॥
प्राग्भवे या कनिष्ठाभूत्सा ज्येष्ठात्र गवमजा। गर्भशोषयुता चेति लक्षणैर्लक्षयेत्खग ॥ ९ ॥
वक्ष्यामि निष्कृतिं तस्य पूर्वपापप्रणाशनीम्। कुर्यात्पलैर्वेदमितैर्गणेशं विघ्ननाशनम् ॥ १० ॥
तदर्धमितकं वापि निजवित्तादिमं पठन् ॥ ११ ॥

मन्त्रः।

"पूर्वे वराननां शुद्धां त्यक्त्वा यत्पापमर्जितम्। तदुग्रपापनाशाय ददेऽहं गणनायकम्" ॥ १२ ॥
माससप्तमितां लक्ष्मीं शुभालेख्यां हिरण्मयीम्। ददेऽहं विप्रमुख्याय वेदशास्त्रार्थवेदिने ॥ १३ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम्। एवं विधानं यः कुर्याज्जीविष्यंति च तत्सुताः ॥ १४ ॥
श्रुत्वैतच्छक्तिमान्यस्तु न कुर्याच्छोधनं शुभम्। स पुत्रॉल्लभते नैव रिष्टं पञ्चाशदब्दके ॥ १५ ॥
प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम्। अन्यजन्मादिकाज्ज्ञेयं विस्तरो नोदितो मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३५ ॥

श्रीसूर्य उवाच।

देशे पंचनदे जाता बाहुजा पूर्वजन्मनि। सेह जन्मनि वै विप्रा जाता वै विप्रपूजनात् ॥ १ ॥
प्राग्यत्तया कृतं कर्म शृणु तच्च खगेश्वर। ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न तद्दत्तं पुनस्तस्मै भुक्तं सर्वं यथारुचि। मृतो द्विजस्तु दुःखेन क्षुधितश्च खगाधिप ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तया। पंचत्ववशगा सापि भुक्त्वा तु यमशासनम् ॥ ४ ॥
पुत्रसंततिहीनेह युवभावे क्षयान्विता। निष्कृतिं परमां तस्या वक्ष्येहं पापनाशिनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा। कदलीपत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः। क्षयनाशकराः सर्वे भविष्यन्त्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३६ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि भोः सूत चोच्छिष्टं भक्षयेत्तु यः। रात्र्यंधो जायते सोऽपि जन्मन्यत्र हि मानवः ॥ १ ॥
भोजयेद्ब्राह्मणाञ्छक्त्या गोमूत्रं प्राशयेत्तथा। मुच्यते तत्क्षणात्सूत नक्तान्धत्वान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३७ ॥

श्रीसूर्य उवाच।

बिडालोच्छिष्टभोजी च रात्र्यंधो जायते त्विह। स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥ १ ॥
भोजयेच्च तथा विप्राञ्शक्त्या दद्याच्च दक्षिणाम्। रात्र्यंधरोगात्सततं मुक्तो भवति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३८ ॥

श्रीसूर्य उवाच ।

विडालोच्छिष्टभुङ् नारी प्राग्भवे विनतासुत । राज्यंधरोगयुक्ता वै चेह जन्मनि जायते ॥ १ ॥
द्विजानां भोजनाच्चैव गोमूत्रप्राशनात्तथा । मुच्यते पूर्वपापात्तु विडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४३९ ॥

श्रीसूर्य उवाच ।

चांडालीगमने पूर्वभवे च गरुडाग्रज । जायतेऽजगरश्चात्र मूढो जन्मनि जन्मनि ॥ १ ॥
चान्द्रायणव्रतात्चेह दशावृत्त्या कृतात्सुत । मुच्यतेऽजगरत्वाच्छुद्धबुद्धिर्भवेदिह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४० ॥

श्रीसूर्य उवाच ।

या काचिदधमा नारी प्राग्भवे विनासुत । चांडालं प्राप्नुयात्सा चाऽजगरा जायतेऽडज ॥ १ ॥
प्राजापत्यव्रतात्पंचाशदावृत्त्या तु वर्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४१ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यनिष्ठः सदाचारो साधुसेवायुतः सुधीः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चेह जन्मनि । किलासो दद्रुकंडूश्च नेत्रतोदो विराडिमता ॥ २ ॥
किंचिद्रदः प्रजायेत कारणेन विना खग । तस्य भार्या सुतन्वंगी स्त्रीधर्मव्रतचारिणी ॥ ३ ॥
उदरे च व्यथा तस्या मूर्ध्नि पीडा प्रजायते । मृतवत्सा कथं जाता पुत्रपुत्र्यौ मृते कथम् ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वैश्यसमुत्पन्ना प्रिया शूद्राय तारिता । बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ ६ ॥
शूद्राज्जातश्च सम्बन्धो बहुकालं गतागतम् । अन्योन्यं प्रीतिवशतो रेमे सा तद्वशंवदा ॥ ७ ॥
चकार सा नान्यकर्म चौर्यकर्मरताऽभवत् । ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालंकरणैर्युतः ॥ ८ ॥
धनलोभाद्धतस्ताभ्यां भाविनोऽर्थस्य वै बलात् । तस्यापि मातापितरौ पुत्रदुःखेन दुःखितौ ॥ ९ ॥
त्रिभिर्वर्षैस्तथा मासैर्युतस्य शुभस्वस्य हि । धनलुब्धौ दुष्टचित्तौ घातकौ दम्पती च तौ ॥ १० ॥
अचिराच्च मृतौ तत्र गतौ वै यमशासनम् । पुनःशून्यं गृहं जातं ब्राह्मणस्य ततः खग ॥ ११ ॥
तेन कर्मविपाकेन नरके पातितौ भृशम् । पश्चान्मानुष्यमापन्नः कृतदानप्रभावतः ॥ १२ ॥
इदं चतुर्थकं जन्म मृतापत्यं च यत्र वै । त्रिवर्षमासजातस्य बालस्य हननादसौ ॥ १३ ॥
मृतपुत्रो हि सञ्जातो जाताजातस्तथैव च । अयं जीवेदयं जीवेदित्याशाबद्धचेतसः ॥ १४ ॥
जातंजातं नश्यति च तस्य चाकृतनिष्कृतेः । कदाचिदेकस्तिष्ठेद्वै ह्यचिरान्म्रियते परः ॥ १५ ॥
सुगुणश्च सुरूपश्च लालनाच्चाटुकारिणः । नश्यत्सु जातजातेषु जन्मजन्मावकारणात् ॥ १६ ॥
व्याध्यन्तरैर्भवेद्व्याधिग्रस्तो व्यसनवानयम् । न सौख्यं वै कदाप्यस्य नानाशंकितचेतसः ॥ १७ ॥
मवेच्च हतकस्यापि पश्यतोऽपि न पश्यतः । लक्षणानि पुरोक्तानि तस्येमानीह कीर्तयेत् ॥ १८ ॥
यस्तस्य म्रियते बालः स वै ब्राह्मण एव हि । मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत् ॥ १९ ॥

स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः। दौर्मनस्यं महानाधिः शोकस्यापि प्रजायते ॥ २०॥
अदृष्टगुणलावण्या अदृष्टाननकीर्तयः। म्रियन्ते जातमात्रा वै पुत्राश्च कृतचादवः ॥ २१ ॥
एवं तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत् ॥ २२ ॥

अरुण उवाच।

का तस्य निष्कृतिः स्वामिन्दृढकर्मनिषूदिनी। कथ्यतां दिवसेशान नारीणां हितकाम्यया॥२३॥

श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि मृतवत्सावनाशिनीम्। निष्कृतिं विधिवत्तार्क्ष्य संततेः सौख्यहेतवे ॥ २४ ॥
यजमानः सपत्नीको विधिवद्विधिमाचरेत्। पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित्॥२५॥
सिद्धार्थाक्षतदूर्वाभिः कृतरक्षं प्रतिष्ठितम्। स्नापयेदर्थधर्मैश्च वरुणैर्विष्णुसूक्तिभिः ॥ २६ ॥
सुदिष्टे सुशुभे देशे गोमयाद्युपलिप्तके। तत्रोपर्याविकं स्तीर्त्वा कृष्णाजिनमथापि वा ॥ २७ ॥
द्रोणमानं तिलानां तु कृष्णवस्त्रेण संयुतम्। स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मिताम् ॥ २८॥
सौवर्णीं प्रतिमां वत्स बालगोपालकस्य हि। कृत्वा प्रतिष्ठितप्राणां मूर्तिं तां शुभलक्षणाम् ॥२९॥
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि। सम्यक्छ्रद्धावती नारी मृतसंततिदुःखिनी ॥ ३० ॥
आहूय विदुषो विप्रान्छुचीन्वै वेदवादिनः। अलोलुपाः सदाचाराः पूज्या अर्घ्यादिभिस्तथा ३१॥

मन्त्रः।

" यो निर्मितः पुरा द्रोहः पापं व परसूनुषु। भूमिद्रविणदेहादैर्लिप्सा या वै मया कृता ॥ ३२॥
नाशयेत्तं महापापं मूर्तिरते शुभलक्षणा। दुःखं वै सुमहत्प्राप्तं मृतसंततिजं मया ॥ ३३ ॥
तस्मान्मुच्ये महाभागार्पितगोदानपुण्यतः " ॥ ३४ ॥

इति तं त्रिः परिक्रम्य त्रिरतेनोक्ते च तिष्ठति। अग्रे नयेति मंत्रेण विसर्ज्यैनयुर्दापयेत् ॥ ३५ ॥
धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि। ब्राह्मणान्भोजयेत्सम्यक् शतं सार्धं यथाविधि॥३६॥
सर्पिष्यात्मानमालोक्य भुंजीतैश्च बंधुभिः। इह्य लक्षणं ज्ञेयं मातृबंधुसुखाहतिः ॥ ३७ ॥
स्वसुतासुतसंख्यानां संतोषो निजपुत्रवत्। विरुध्यंते ह्यपत्यानि तादृशानि मिथः स्वयम्॥३८॥
विकारः प्रकृतौ स्याद्वै गमने पादवैकृतम्। पित्तजा वातजा वापि कासगुल्मार्तिहृद्व्यथा ॥ ३९ ॥
मृतापत्यार्तितस्तेषामनुमंत्रादिभेदतः। तथा चैवात्र दुःखानि जायंतेऽस्य मुहुर्मुहुः ॥ ४० ॥
पूर्वकर्मार्जितं पापं चिह्नं तस्य सहायवत् ॥ ४१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४२ ॥

श्रीसूर्य उवाच।

विप्राय यो विषं दद्याद्धातार्थं पूर्वजन्मनि। सोऽत्र जन्मनि पक्षीन्द्र च्छर्दिरोगेण बाध्यते ॥ १ ॥
निष्कृतिर्नास्ति तस्यात्र पापस्य दृढकर्मणः। छर्दिरोगेण सततं प्रतिनाशमवाप्नुयात् ॥ २ ॥
न पापशोधनं प्रोक्तं दानैरपि सहस्रशः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४३ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत विषं दद्याद्द्विजातये। छर्दिरोगेण सात्रैव निश्चितं नाशमाप्नुयात् ॥ १ ॥
प्रायश्चित्तं न तस्यात्र तस्यास्तु गरुडाग्रज। ब्राह्मणस्य वधारब्धे प्रायश्चित्तं न वै यतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४४ ॥

श्रीसूर्य उवाच ।

परस्य यो विषं दद्यात्पूर्वजन्मनि मानद । छर्दिरोगेण सोऽत्रैव बाध्यते पीडया सह ॥ १ ॥
धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् । मुच्यते छर्दिरोगाच्च जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४५ ॥

श्रीसूर्य उवाच ।

मूकोऽत्र जायते जंतुर्यः पूर्वं भ्रातृघातकः । बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४६ ॥

श्रीसूर्य उवाच ।

या काचिन्मागधी ह्यासीज्जाता जलह्रदे सुत । सा चात्र यवनी देशे शुभे पन्नगदंडज ॥ १ ॥
पुत्राभिलाषिणी पूर्वं त्यक्त्वा यवनं पुरा । तस्मात्सा यवनी जाता पुत्रसंततिवर्जिता ॥ २ ॥
नानाधेनुयुताद्दानात्कुरुक्षेत्रे पुरानघ । शिवभक्तिपरा तस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
इह जन्मनि सा लक्षरुद्रपूजाव्रतात्खग । पुत्रपौत्रयुता नारी भवत्येव न संशयः ॥ ४ ॥
अथवा हरिवंशस्य शतावृत्त्या विधानतः । श्रवणात्पूर्वजात्पापान्मुच्यते विनतासुत ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४७ ॥

श्रीसूर्य उवाच ।

देवालयेऽवसत्कश्चिद्ब्राह्मणः पूर्वजन्मनि । विष्णुपूजापरो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौर्येण निहितं द्रव्यं यत्स्थितं देवतालये । तेनेदं च कृतं सूत कर्म चात्यन्तदारुणम् ॥ २ ॥
स तेन कर्मणा युक्तो भुक्त्वा तत्पापजं फलम् । जातो गंगाश्रये क्षत्री पर्वते पूजनाद्धरेः ॥ ३ ॥
बहुद्रव्यान्वितो भूयः सर्वसंपत्सुखान्वितः । बाल्ये हि पाण्डुरोगार्तश्चेह जन्मनि मानवः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४८ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे प्रादाद्विषं कस्यापि काश्यपे। सात्र जन्मनि रोगेण च्छर्दिसंज्ञेन पीड्यते ॥ १ ॥
धेनूनां दशकं दद्यादशक्तौ गरुडाग्रज । सवत्सां कपिलां दद्यात्सा तद्दोषात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४४९ ॥

श्रीसूर्य उवाच ।

कश्चिद्विप्रस्त्वभूद्वंगे प्राग्भवे धर्मसंयुतः । परस्य कन्यकायाश्च स उद्वाहमकारयत् ॥ १ ॥
दानाल्पत्वान्महाभाग चकाराल्पविधानतः । चौर्यकर्मरतः सोऽभूत्कदाचिद्दैवयोगतः ॥ २ ॥
स चचार वने सूत मार्गलुण्ठनतत्परः । काचित्सुनयना तत्र प्राप्ता भाविबलाद्द्विजात् ॥ ३ ॥
नानाभरणयुक्ता सा पूर्णगर्भसमन्विता । पुण्यात्पुण्यफलं भुक्त्वा पापात्पापं खगाधिप ॥ ४ ॥
परकन्याविवाहेन स जातो बाहुजोऽस्त्विह । गंगायाः पूर्वभागे तु दशयोजनसम्मिते ॥ ५ ॥
गौरः सुरूपः क्षीणांगो बहुद्रव्यपराक्रमः । पित्ताधिकोऽतिमतिमान्बहुपुत्रीभिरन्वितः ॥ ६ ॥
जातपुत्रा मृताः सप्त पूर्वपापादिहाण्डज । निष्कृतिं तां प्रवक्ष्यामि येन पापात्प्रमुच्यते ॥ ७ ॥
पलेन च तदर्धेन कार्या सुघटिता सुत । बाहुजा गर्भसंयुक्ता सौवर्णी भूषणान्विता ॥ ८ ॥

पूर्वपापविनाशाय सा देया ब्राह्मणाय वै। गंधैः पुष्पैः समभ्यर्च्य मंत्रैः प्रणवपूर्वकैः ॥ ९ ॥
वेदसं तत्र सौवर्णं सुवर्णकमितं शुभम्। दद्याज्जपेच्च मंत्रांश्च तल्लिंगान्विधिपूर्वकम् ॥ १० ॥
होमयेच्च यवांस्तत्र सतंडुलससर्षपान्। भोजयेद्ब्राह्मणान्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ ११॥
शृणुयाद्धरिवंशं वा शतावृत्तिविधानतः। गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते ॥ १२ ॥
सुखं पुत्रस्य लभते चेह जन्मनि वै ध्रुवम्। रिष्टं पञ्चाशदब्दे तु प्रायश्चित्तेऽकृते सुत ॥ १३ ॥
वेदसप्ततत्यब्दमायुः प्रायश्चित्ते कृते भवेत् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५० ॥

श्रीसूर्य उवाच।

व्यभिचाररता पूर्वं यासीद्धि व्यभिचारिणी। सा गता नरकान्घोरानसती पापकृत्तम ॥ १ ॥
न शुद्धयत्यशुभाचारा प्रायश्चित्तैः शतैरपि। वाराणस्यां गतिश्चास्याः चतुर्दश्यां शिवव्रतात् ॥२॥
मोक्ष्यते सर्वपापाच्च पूर्वजन्मकृताद्दृढात्। बाहुजेऽयं महाभाग पूर्वेऽप्यत्रापि बाहुजा ॥ ३ ॥
वंध्या प्राक्पापतो दुःखाद्याकुला दयितोज्झिता ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५१ ॥

श्रीसूर्य उवाच।

यः कृत्वा धूर्ततां पूर्वं वंचयेद्ब्राह्मणं सुत। सोऽत्रापस्माररोगेण पीड्यते बहुपीडया ॥ १ ॥
तेनैव पापरोगेण म्रियतेऽत्र खगाधिप। प्रायश्चित्तं मया नोक्तं पापे ब्राह्मणवंचने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५२ ॥

श्रीसूर्य उवाच।

या भ्रातृघातिनी नारी प्राग्भवे विनतासुत। सात्र जन्मनि मूकत्वं जायत्येव न संशयः ॥ १ ॥
ज्ञानान्महापापकृताच्च चोक्ता निष्कृतिर्मया। ज्ञात्वा ब्रह्मवधे सूत प्रायश्चित्तं न तत्समम् ॥ २ ॥
सप्तजन्मनि मूकत्वं जायते च तदेनसः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५३ ॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ विप्रश्चेह जन्मनि बाहुजः। देवद्रव्यापहरणात्प्रागिहाक्षिप्रपीडनम् ॥ १ ॥
विंशतिवर्षावसाने नेत्रभंगः प्रजायते। तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम्। गंधपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग नेत्ररोगं न पश्यति। भोजयेच्छक्तितो विप्रान्वैष्णवाञ्छ्रद्धया सुत ॥ ४ ॥
कृत्वानेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५४ ॥

श्रीसूर्य उवाच।

सर्वस्वहरः कश्चिदभवत्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत क्षयरोगप्रपीडितः ॥ १ ॥
प्रायश्चित्तं प्रकुर्वीत वित्ततुर्यांशतः स वै। कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः। कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपंचपंचाशदुत्तरचतुःशताधिकसहस्रतमः ॥ १४५५ ॥

श्रीसूर्य उवाच ।

ब्रह्मचाररता ह्यत्र या पूर्वेऽभूत्पतिव्रता । पतिपापप्रमादाद्धि गतिं प्राप्ता हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी मोदतेऽग्निकया सह । भुनक्ति भोगान्सकलान्पतिं प्राप्य तपस्विनी ॥ २॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्पञ्चाशदुत्तरचतुः शताधिकसहस्रतम ॥ १४५६ ॥

श्रीसूर्य उवाच ।

योऽज्ञानात्कृतवान्सुत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं व्रजति ह्यपि मानवः ॥ १ ॥
चान्द्रायणत्रयं कुर्याद्विविधपापशोधनम् । पुस्तकं च तथा दद्यात्सुवर्णपलसंयुतम् ॥ २ ॥
एवं यः कुरुते सुत स तत्पापात्प्रमुच्यते । न प्राप्नोत्यत्र मूकत्वं कदाचिद्दिनतासुत ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तपञ्चाशदुत्तरचतुः शताधिकसहस्रतम ॥ १४५७ ॥

श्रीसूर्य उवाच ।

या धूर्ता वंचयेत्किंचिल्लोभात्पूर्वभवेऽग्रज । सेह जन्मनि रोगेणापस्मारेण प्रपीड्यते ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं सुत । ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरचतुः शताधिकसहस्रतम ॥ १४५८ ॥

अरुण उवाच ।

कश्चिद्वर्णोत्तमो जातो धर्मिष्ठो वित्तसंयुतः । उदरे वायुरल्पीयाञ्छिरोर्तिश्चैव जायते ॥ १ ॥
कपोले तिलकं तस्य मुखं व्रणसमन्वितम् । दद्रुकण्डूकिलासादि गमने पादवैकृतम् ॥ २ ॥
कर्मानुसारी वै व्याधिश्चिह्नं तस्य सहायकृत् । भार्या प्रीतिपरा नित्यं कदाचित्कलहप्रिया ॥ ३ ॥
रागयुक्ता भवेद्वापि प्रदर्तिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणःफलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

यः स्त्रिया सहितो विप्रः कुलीनो बहुवाचकः । गतश्चैव महारण्ये सा चासीद्गर्भसंयुता ॥ ५ ॥
बहवो हि समायाताः शत्रवः पर्यवेष्टयन् । स्त्रियं ते त्रासयामासुः परिगृह्य खला भृशम् ॥ ६ ॥
गर्भपातोऽभवत्तस्या मृतश्चैव शिशुः क्षणात् । तेन कर्मविपाकेन म्रियन्ते तस्य बालकाः ॥ ७ ॥
केचिज्जीवन्ति षण्मासं केचिद्वर्षावधि भृशम् । बहुकाले न वै कश्चिच्चिह्नमेतत्परीक्षयेत् ॥ ८ ॥

अरुण उवाच ।

देवदेव जगन्नाथ लोकानां हितकाम्यया । कथयस्व प्रसादेन कर्मणस्तस्य निष्कृतिम् ॥ ९ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्नश्चायं सुदुर्लभः । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तं हि पापहृत् ॥ १० ॥
गोत्रय वै सवर्णं हि सौवर्णं निष्कसंमितम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ ११ ॥
कर्मप्रकाशकं विप्र पूजयेद्विधिपूर्वकम् । एवं प्रकुरुते वत्स निष्कृतिं कर्मणा तु यः ॥ १२ ॥
पुत्रपौत्रादिकैर्युक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा पापनिष्कृतिम् ॥१३॥
स याति पापदोषेण भुवि जन्मनिजन्मनि । एवं यः कुरुते भक्त्या लभते पुत्रपौत्रकान् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरचतु शताधिकसहस्रतम ॥ १४५९ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यभूत्काचिन्नारी भर्तृसुखान्विता । दक्षा सर्वक्रियास्वेव बहुदानप्रदायिका ॥ १ ॥
पार्श्वस्थान्यस्य शूद्रस्य गृहान्नीता हि मानद । तया रसास्तु चौर्येण सर्वशून्यगृहात्पुरा ॥ २ ॥
भुक्ता हि बहुभिः सूत मिलित्वा च सुतादिकैः । पूर्वजन्मकृतात्सूत कर्मणाऽत्रैव जन्मनि ॥ ३ ॥
सा जाता बाहुजा नारी धनभोगसमन्विता । पुत्रान्विता विचित्रा च भर्तृशुश्रूषणे रता ॥ ४ ॥
क्षयरोगाकुला यूनि भावे स्नेहहरी यतः । निष्कृतिं तस्य पापस्य महतश्चाधनाशिनीम् ॥ ५ ॥
कथयामि प्रयत्नेन वित्ततुर्यांशमानतः । कृत्वा तु कदलीं रम्यां पत्रयुक्तां सुवर्णजाम् ॥ ६ ॥
दद्याद्वेदविदे विप्राय क्षयरोगोपशान्तये ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्यायः पञ्चषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६० ॥

श्रीसूर्य उवाच ।

यो लोकान्वंचयेत्कश्चित्पुरा चौर्येण कर्मणा । सोऽत्र जन्मन्यपस्माररोगेण महताकुलः ॥ १ ॥
धेनुं दद्यान्महाभाग सवत्सां विधिसंयुताम् । ब्रह्मकूर्चत्रयं कुर्यात्स तत्पापात्प्रमुच्यते ॥ २ ॥
न भवेत्तस्य रोगस्य वेदना पापशोधनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६१ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र चन्द्रवदना गौरांगी पतिवल्लभा । धनधान्यसमायुक्ता स्वर्णकारी सुखान्विता ॥ १ ॥
दक्षा भर्तृहिते नित्यं पूर्वे सा द्विजवल्लभा । स्वर्णापहारजात्पापात्प्राप्ता सा स्वर्णकारताम् ॥ २ ॥
पुत्रहीना महाभाग परद्रव्यापहारतः । कुरुक्षेत्रे चन्द्रग्रहे स्वर्णं दद्याच्च शक्तितः ॥ ३ ॥
तद्दत्त्वा सा लभेत्पुत्रानत्र जन्मनि वै सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६२ ॥

श्रीसूर्य उवाच ।

अन्नहृत्प्राग्भवे यस्तु ज्ञानादत्र खगाधिप । सोऽजीर्णेनैव रोगेण पीड्यते बहुपीडया ॥ १ ॥
अन्नदानाच्च विप्रेभ्यो रसदानाच्च शक्तितः । सावित्रीजपतो होमात्पूर्वपापात्प्रमुच्यते ॥ २ ॥
पापक्षये क्षयं यान्ति रोगाः पापसमुद्भवाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६३ ॥

श्रीसूर्य उवाच ।

या काचिन्मोहतश्चक्रे नारी भ्रातृवधं पुरा । सात्र जन्मनि मूकत्वं व्रजेत्कापि शुभानना ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्याश्चान्द्रायणं व्रतम् । वेदपुस्तकदानं च पलस्वर्णयुतं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६४ ॥

श्रीसूर्य उवाच ।

बालघाती भवेद्यस्तु पूर्वजन्मनि मानवः । वैनतेयात्र जनुषि मृतपुत्रः प्रजायते ॥ १ ॥
श्रवणाद्धरिवंशस्य विधिवच्चात्र जन्मनि । ब्राह्मणोद्वाहनाच्चैव पूजनाच्छंकरस्य च ॥ २ ॥
जीविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६५ ॥

श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे विप्रः सर्वविद्याविशारदः । वेदाभ्यासरतः श्रीमान्प्राप्तसर्वमनोरथः ॥ १ ॥
तुलाधृतं च स्नेहादि प्राणिनां चिरसंचितम् । गृहीतमतिचौर्येण लोभयुक्तेन चेतसा ॥ २ ॥
तस्माज्ज्ञानी ह्यभूद्विप्रः प्राग्भवे तत्फलं शृणु । स चेह च प्रयागेऽस्ति द्विजो वेदविदां वरः॥३ ॥
धनपुत्रसमायुक्तः क्षयरोगसमन्वितः । वेदाभ्यासाच्चयाः दानाचीर्थराजाधिसेवनात् ॥ ४ ॥
नाशः स्यात्क्षयरोगस्य ह्यन्यजन्मनि चांडज । दोषात्स्वल्पफलैर्युक्तो जीवेद्वर्षशतं ध्रुवम् ॥ ५ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्षष्ट्युत्तरचतुःशताधिकसहस्रतम. ॥ १४६६ ॥

---

श्रीसूर्य उवाच ।

पुरा हि ब्राह्मणः कश्चिद्वंगदेशेऽवसत्सुधीः । धर्मशास्त्रक्रियायुक्तो धनपुत्रादिसंयुतः ॥ १ ॥
दत्तानि तेन विप्रेभ्यो दानान्यल्पानि शक्तितः । सत्पात्रेभ्यः परं सूत सर्वस्वस्य विधानतः ॥२॥
पापमाचरितं तेन कामलोभेन चांडज । ब्राह्मण्यां धारितो गर्भो भाविनोर्यस्य गौरवात् ॥ ३ ॥
स्त्रीसाहाय्यात्तथा तत्र कृतं तद्गर्भपातनम् । ॥ मृता तेन दुःखेन गर्भपातभवेन च ॥ ४ ॥
एवं किंचिद्गते काले स प्राप्तो यमशासनम् । भुक्त्वा पापाच्च नरकं पुण्यात्स्वर्गांश्च शाश्वतान् ॥५॥
पूर्वपुण्यप्रभावेण स जातो ब्राह्मणाधमः । यमुनायां महाभाग गौरः पित्ताधिको घृणी ॥ ६ ॥
धनमित्रसुखैश्वर्यमतिस्त्रीभोगमाप्नरः । दक्षः कार्येषु चार्वंगो धार्मिष्ठो लाभसंयुतः ॥ ७ ॥
मानी यशस्वी विनयी कीर्तिमान्प्रियभाषणः । पुण्यादिदं तथा पपाल्लोभी पापरतः क्वचित् ॥ ८॥
धूर्तः शठः क्रोधपरो धनवृद्धिक्षयान्वितः । चिंतातुरः पापदोषादप्राप्तमनोरथः ॥ ९ ॥
ब्राह्मण्यां वीर्यदानात्प्रावतया तद्गर्भपातनात् । इह पंचाशदब्दान्ते जातपुत्रविनाशकः ॥ १० ॥
चिह्नमंगादद्वयये सूर्यश्चन्द्रः शुक्रगृहाश्रितः । पापाभ्यां पुत्रभावेऽपि समाक्रान्तोऽत्र जन्मनि ॥ ११ ॥
स्त्रीसहायतया पूर्वं सात्र संततिदुःखिता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कार्या वै ब्राह्मणी लेख्या सुवर्णाष्टपलैर्मिता । तदर्धमितिका वापि निजवित्तानुसारतः ॥ १३ ॥
पत्रे गर्भान्विता भव्या बहुभूषणसंयुता । गंधपुष्पाक्षतैर्वस्त्रैः पूजनीया प्रयत्नतः ॥ १४ ॥
सा देया वै विधिज्ञाय मंत्रमुच्चारयेदिमम् ॥ १५ ॥

मंत्रः ।

" ब्रह्मणा निर्मिते देवि पापमाचरितं त्वयि । तत्पापशमनायैव त्वां ददेऽहं हिरण्मयीम् ॥१६॥
ब्राह्मणाय महाभागे पापं गच्छतु तत्क्षयम् ॥ "

सोमं च राजतं दद्यात्तन्मितं पापशान्तये । लक्ष्मीनारायणं चापि हैमं सौवर्णसम्मितम् ॥ १७ ॥
गायत्र्यष्टसहस्रं तु त्र्यंबकं तन्मितं जपेत् । मंत्रमष्टाक्षरं जप्त्वा हुत्वा वै शुद्धिमाप्नुयात् ॥ १८ ॥
होमयेत्तद्दशांशेन तिलाज्ययवतंडुलैः । ब्राह्मणान्भोजयेत्पश्चात्पूजयेच्च विधानतः ॥ १९ ॥
लक्षरुद्रं त्रिगुणितं नानाविभवविस्तरैः । पूजयेद्वा विधानेन तस्मात्पापात्प्रमुच्यते ॥ २० ॥
य एवं विधिना सूत प्रायश्चित्तं समाचरेत् । तस्य संततिवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि॥२१॥
ब्रह्मलोकमवाप्नोति पूर्वपापविशोधनात् । प्रायश्चित्त द्वयोरेकं न कुर्याल्लोभमोहतः ॥ २२ ॥
न भवन्ति सुतास्तस्मिञ्जीविते शुद्धिवञ्चनात् । न च सद्गतिमाप्नोति पापस्यास्य प्रभावतः ॥ २३ ॥
प्रायश्चित्ते कृते रिष्टं वर्षे षष्टिमिते ध्रुवम् । आयुर्भवति वर्षान्तमिह पापविशोधनात् ॥ २४ ॥

जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । अष्टाक्षरं त्रिसाहस्रं जपित्वा शुद्धिमाचरेत् ॥ २५ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ २६ ॥
य एवं कुरुते सूत द्वयोः पापविशोधनम् । तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि ॥ २७ ॥
नाधयो व्याधयस्तस्य न चारिष्टमयं भवेत् । नैवं करोति यो मोहात्पूर्वपापविशोधनम् ॥ २८ ॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । पंचत्रिंशन्मिते वर्षे रिष्टं देहधनान्तकम् ॥ २९ ॥
त्रिसप्ततिमिताद्वायुः प्रायश्चित्ते कृते त्विह । गतिमप्युत्तमां याति त्वन्यथा त्वाततायिनाम् ॥ ३० ॥
जन्मादिमरणान्तं हि स्वल्पमेवा सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विचिन्तयेत् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःसप्तषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६७ ॥

श्रीसूर्य उवाच ।

यः प्रार्थयति धर्मात्मा सर्वपापविशोधनम् । सर्वस्वेन यजेद्देवान् पितॄंश्च श्रद्धयान्वितः ॥ १ ॥
गयाश्राद्धादिभिः कव्यैर्दानैर्हव्यैर्विधानतः । सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६८ ॥

श्रीसूर्य उवाच ।

कथयस्व दिवानाथ लोकानां हितकाम्यया । पृच्छामि त्वां तु देवेश छिंधि मे सर्वसंशयम् ॥ १ ॥
यः प्राक्तने वै जनुषि सदा सम्पत्समृद्धिमान् । दानधर्मादिकृच्चेह सुखसंपत्समन्वितः ॥ २ ॥
बन्धूनामतिसौख्यं च वैष्णवी तस्य वै मतिः । आत्मसंततिदुःखार्तः कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच ।

ब्राह्मणी गर्भसंयुक्ता प्रयाणे भर्तृसंयुता । सर्वाभरणभूषाढ्या नानारत्नसमन्विता ॥ ४ ॥
चन्द्रे निमीलिते चौरस्तस्या जग्राह भूषणम् । तत्र कोलाहलो जातो गर्भपातोऽभवत्तदा ॥ ५ ॥
तेन पापेन बालानां गर्भनाशः प्रजायते ॥ ६ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्यया पापं प्रणश्यति । ब्रूहि विस्तरतो देव लोकानां हितकाम्यया ७

श्रीसूर्य उवाच ।

एकवासोविधिश्चैव लक्षपूजा ततः परा । सगर्भा गौः प्रदातव्या हविष्यं मितभोजनम् ॥ ८ ॥
गर्भाशयगतो मासान्निषेकसमपादनु । पञ्चमे वाथ षष्ठे वा मासि जातो मृतश्च यः ॥ ९ ॥
तयोः कर्मविशेषांश्च कथयिष्यामि योषिताम् । सप्तमेषु च मासेषु जन्मतः प्रसवाक्षयहम् ॥ १० ॥
अथवा चाष्टमे मासि सूतः सद्यो विपद्यते । स चापि मृतकल्पः स्यादामयैः सूतिकामयैः ॥ ११ ॥
शोकादामोदराद्दोषाः शूलं गौरवकम्पने । रक्तस्रावो विवर्णत्वं जायते कर्मणेरितम् ॥ १२ ॥
रजतस्य पलाभ्यां तु कोशं गर्भाभयाकृतिम् । कुसुम्भवेष्टितं तं तु रक्तवस्त्रेण वेष्टयेत् ॥ १३ ॥
मधुना पूरयेत्तत्र शलाकां रूप्यनिर्मिताम् । तन्मध्ये हेमशकलं निक्षिपेद्दतियत्नतः ॥ १४ ॥
दद्याद्विप्राय विधिवद्यथाश्रुति निरूपितम् ॥ १५ ॥

मन्त्रः ।

"यन्मया पूर्वजनुषि गर्भघातः कृतः प्रभो । तत्पातकविशुद्ध्यर्थं गर्भकोशं ददाम्यहम् ॥ १६ ॥
मया मूढेन यद्रेतो निषिक्तं परयोषिति । ततोऽनपत्यं यज्जातं तस्मान्मां मोचय प्रभो" ॥ १७ ॥

एवं कृतविधेः सूत गर्भपातावनाशनम् । ब्राह्मणान्भोजयेत्पश्चाद्गां दद्याच्च सवत्सकाम् ॥ १८ ॥
सपिण्ड्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः ॥ १९ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४६९ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे काचित्पुरुषं ताडयेत्खग । सेह जन्मनि रोगेण शूलेनैव प्रपीड्यते ॥ १ ॥
सुवर्णदानाद्विधिवत्तथा रुद्रजपादिह । पूजनाच्छंकरस्यापि शूलरोगाद्विमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७० ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि योऽज्ञानान्नरो वै घातयेत्सुत । मित्रं च वायुरोगेण पीड्यते चेह जन्मनि ॥ १ ॥
तत्र कुर्यान्महाबाहो मन्त्रैर्वै वायुदैवतैः । पूजनं वायुदेवस्य गंधपुष्पैश्च धूपकैः ॥ २ ॥
नैवेद्यैर्बहुभक्ष्यैश्च वायुर्नश्यति तत्क्षणात् । इह जन्मनि पक्षीन्द्र पूजा वित्तानुसारतः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७१ ॥

श्रीसूर्य उवाच ।

गोत्रघातकरी या च पुरा ज्ञानेन काश्यपे । सात्र जन्मनि लूताढ्या भवत्येव मयोदितम् ॥१॥
तीर्थस्नानं व्रतादीनि तत्फलान्यत्र चांडज । ज्ञानपूर्वकृतात्पापाद्रोगादेव क्षयो भवेत् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७२ ॥

श्रीसूर्य उवाच ।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी । व्यापारनिरतो दक्षः क्रयविक्रयकर्मसु ॥ १ ॥
नीताः पूर्वं रसास्तेन मिलित्वा चार्थसीरिणा । कालेन ते हृता लोभात्स्नेहा मूल्याधिकाः सुत॥२॥
भुक्त्वा पापफलान्घोरान्भ्रमंस्तमुपागतः । ततः पुण्याच्छुभान्भुक्त्वा पुण्यशेषाच्च पर्वते ॥ ३ ॥
शूद्रोऽप्ययकलायुक्तो भूमिदानात्सुरार्चनात् । स्नेहहारी यतः पूर्वं राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहातिदानाद्वै स्ववित्ताचतुर्थभागतः । स्वर्णदानात्तथाचात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७३ ॥

श्रीसूर्य उवाच ।

विषं दत्त्वा पतिं सूत प्राग्या जाराश्रिता सती । पतिघ्नी सा महादुष्टा बाल्ये ह विधवा सुत ॥ १ ॥
विष्णोराराधनादत्र गंगाया उपसेवनात् । धर्मादिह महाभाग परत्र च शुभा गतिः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः चतुःसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७४ ॥

श्रीसूर्य उवाच ।

देवागारं दहेद्यस्तु प्राग्जन्मन्यत्र पुत्रक । रक्तातिसाररोगेण बाध्यते चेह जन्मनि ॥ १ ॥
तद्देवदानाद्विप्राय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतीसारादिनिश्चितम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७५ ॥

श्रीसूर्य उवाच ।

मूर्द्धाभिषिक्तो यः कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्धातिता मृगशूकराः । तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
गर्भगौ निर्गतौ तत्र शुभ्रौ द्वौ मृगशावकौ । महायाम्यां शुनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तावमायां चांडजाधिप । सोऽपि काले महाभाग प्राप्तः शत्रुवशं पुरा॥४॥
स शौर्यकर्मणा सूत घातयित्वा रिपून्बहून् । घातितः सोऽपि बहुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
संग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं सदा । भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणस्त्विह ॥६॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातः कर्कटगे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजात्पुण्यात्प्राक्कृतात्सकलैः सुखैः ॥ ८ ॥
नानामनोरथैश्चापि पूर्णश्चेह जन्मनि । शाठ्यप्रचार्यत्पुण्यश्च पुण्यात्पापात्फलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्ष्यः सर्वपापरतः क्वचित् । सहापलक्षणं चात्र शृणु पुत्र यथातथा ॥ १० ॥
याभ्यां मिलित्वा भुक्तौ द्वौ मृगशावौ खगाधिप । पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ११
अपस्मारेण रोगेण मृतौ चात्रैव जन्मनि । एवं संततिदुःखार्तः स विप्रो विधिवर्जनात् ॥ १२ ॥
मांसभक्षणजात्पापात्प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलक्षं तु तदर्धं वा तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ । पूजयेच्च तथा वायुं विधिना मृगदैवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यैर्विधानतः । प्रायश्चित्तं परं तस्य पापस्य क्षयकारकम् ॥ १५ ॥
अथवा भोजयेद्विप्रान्सहस्रद्वयसम्मितान् । पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृते त्विह ॥ १६ ॥
प्रायश्चित्तेऽकृते सूत न च पुत्रसुखं लभेत् । रिष्टेन मरणं चापि वर्षे वेदाब्धिकेऽण्डज ॥ १७ ॥
प्रायश्चित्ते कृते तस्य जीवनं पञ्चसप्ततिम् । चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७६ ॥

श्रीसूर्य उवाच ।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज । सा चेयं तेन पापेन गर्भपातनदुःखिनी ॥ १ ॥
विप्रकन्याविवाहार्द्धं विधिवच्चेह जन्मनि । मुच्यते तेन पापेन गर्भस्थैर्य भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम् । युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धमितिकां वापि पूजयित्वा विधानतः । मुच्यते पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७७ ॥

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं खगाधिप । सातिसारेण महता पीडया पीड्यतेऽधुना ॥ १ ॥
शंकरप्रतिमादानान्मूर्तेस्तस्य प्रपूजनात् । न जायते महापीडा रक्तातिसारजा क्वचित् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७८ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नो प्राग्भवे सूत तिर्यक्त्वं प्राप्य निश्चयात् । नरकान्दारुणांश्चैव प्राप्नोत्यत्रैव जन्मनि ॥ १ ॥
कर्मक्षयेऽर्तकुष्ठेन तस्मिन्वयसि पीड्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४७९ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी पत्युर्मित्रं च भाम्भवे । नियतं वायुरोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं प्रतीक्ष्य विप्रादेः सर्वस्वार्घार्जनेन च । वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गंधैर्वस्त्रैर्विशेषतः । मंत्रश्च वायुजैः सुत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगोपशमनं दानेनानेन जायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८० ॥

श्रीसूर्य उवाच ।

अज्ञानादथ या नारी गोत्रघातकरी पुरा । बभूव सततं चेह लूतिरोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्यव्रतात्सुत । लूतिरोगं न पश्येत साऽत्र जन्मनि चांडज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८१ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नः किंचिद्वित्तसमन्वितः । संयुतो वायुपित्ताभ्यां नेत्रतोदशिरोर्तिमान् ॥ १ ॥
सद्वृत्तश्च सुधीर्धीमान्धर्मिष्ठो धर्मवत्सलः । कदाचिदुदरे बाधा व्रणो वातादिदोषतः ॥ २ ॥
परोक्षमपवादं च ब्रुवतेः कारणं विना । तस्य प्रिया सदाचारा सती व्रतपरायणा ॥ ३ ॥
काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि वैश्यस्तु भार्यां विप्रस्य सात्त्विकीम् ॥ ५ ॥
प्रतिवेशिज्ञानिनिरतु चकमे काममोहितः । अप्रसूता हि सा तस्य चपला चारुलक्षणा ॥ ६ ॥
वैश्येनाकारिता सा वै लोभमोहादिविभ्रमैः । अज्ञानात्सङ्गमिच्छन्ती भाविनोऽर्थस्य वै बलात् ॥ ७ ॥
तावत्कालवशेनैव ब्राह्मणो जनतां गतः । स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य गौरवात् ॥ ८ ॥
सुतनुं धर्षयामास बहुकालं खगेश्वर । व्यभिचारवशात्तस्य बाहुजस्य हृतं धनम् ॥ ९ ॥
गृहीतं तद्धनं सर्वं धूर्तया लुब्धचेतसा । ब्राह्मणी निधनं प्राप्ता लोके दुष्कीर्तिमाप हि ॥ १० ॥
तेन दुःखेन विप्रो वै ब्राह्मणीमत्यजत्पुरा । निर्वंशो गृहदुःखार्तो ब्राह्मणस्तु खगेश्वर ॥ ११ ॥
तेन कर्मविपाकेन तादृशं च भवेदिह । पश्चान्मानुष्यमापन्नो बहुशोकाकुलो भृशम् ॥ १२ ॥
इदं तु द्वितीयं जन्म ब्रह्मवंशसमुद्भवम् । प्राप्यते चानपत्यत्वमेकापत्यत्वमेव वा ॥ १३ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन् येन वंध्यात्वनाशनम् । एकापत्यभवं दुःखमनपत्यत्वमेव ॥ ॥ १४ ॥

श्रीसूर्य उवाच ।

मार्गशीर्षे शुभे मासे शुक्लपक्षादितः खग । प्रत्यक्षं सुखसौख्यात्तिव्रतं तु प्रतिवत्सरम् ॥ १५ ॥
षोडशाब्दानि नारीणां कर्तव्यं विधिपूर्वकम् । गौरीव्रतमिदं सुत सुतसौख्यफलप्रदम् ॥ १६ ॥
प्रातर्नियममास्थाय दंतधावनपूर्वकम् । अथाहं शिवयोः प्रीतिमाचरिष्ये सुतव्रतम् ॥ १७ ॥
ध्यानोपवासनिरता निशि जागरतत्परा । ततो मध्याह्नसमये स्नात्वा कुंकुमवाससी ॥ १८ ॥
परिधायार्चयेन्नारी पतिपुत्रवतीं स्त्रियम् । कुंकुमैः कज्जलैश्चालंकरणैः पुष्पमालया ॥ १९ ॥
ताम्बूलैस्तु सकर्पूरैः सौभाग्याष्टकवस्तुना । ततश्चास्तमिते भानौ वर्तिं षोडशतन्तुभिः ॥ २० ॥

विधाय तिलतैलेन दीपान्कुर्याच्छिवाग्रतः। गीतवादित्रनिर्घोषैः पुराणश्रवणादिभिः ॥ २१ ॥
नैवेद्यं विधिवत्कुर्यादपूपतिलतंडुलैः । तथा षोडशसंख्यानि शूर्पाण्यभिनवानि च ॥ २२ ॥
सप्तधान्यफलोपेतसौभाग्याष्टकयुञ्जि हि। प्रत्येकं दीपकं न्यस्य गौर्यग्रे तु प्रकल्पयेत् ॥ २३ ॥
पतिपुत्रसुखार्थं पूजयन्ती गिरेः सुताम्। भोजयेत्षोडश स्त्रीर्वै शुभास्ताः पतिसंयुताः ॥ २४ ॥
एवं विधिं समास्थाय भोजयेतां तु दंपती। नानाभोज्यैस्तथा पुष्पैः पक्षिभ्यो बलिमाहरेत् ॥ २५ ॥
दीनान्धकृपणेभ्योऽन्नं समर्प्यात्मानमीक्षयेत्। एतद्गौरीव्रतं नाम मार्गशीर्षे समाचरेत् ॥ २६ ॥
एवं कृतविधेः सूत प्राप्यते पुत्रपौत्रकम्। नारीनियमसंपूर्णा व्रतं कुर्यात्प्रयत्नतः ॥ २७ ॥
सुखसौभाग्ययुक्ता सा पतिपुत्रसुखाप्तये। ऐहिकं लक्षणं तस्या नार्या वै संप्रजायते ॥ २८ ॥
स्वसुर्मातृष्वसुर्वापि सपत्न्याः शोक एव वा। उदरार्तिरसृक्स्रावः पार्श्वपादकरादिषु ॥ २९ ॥
मिथ्याभिशंसनं क्वापि वाक्यदोषभवच्युतिः। स्वजातिनिन्दाहीनत्वं परेभ्यो मर्मतोदनम् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८२ ॥

---

## श्रीसूर्य उवाच।

शकृन्मूत्रं सृजेयस्तु देवागारे नराधमः। गुदरोगमवाप्नोति सोऽत्र जन्मनि मानवः ॥ १ ॥
मासैकं पूजयेद्विष्णुं शिवं वा विधिनांडज। प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनं सुत ॥ २ ॥
न पश्यति तदा पीडां गुदजामत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८३ ॥

## श्रीसूर्य उवाच।

घातयेद्यः पुमान्नारीमज्ञानात्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत कृशो बलविवर्जितः ॥ १ ॥
शर्कराधेनुदानेन दशसंख्येन चांडज। विमुच्यते कृशत्वाच्च शतब्राह्मणभोजनात् ॥ २ ॥
होमात्स्वस्त्ययनाज्जाप्याद्गायत्रीजपतोऽत्र च। तीर्थस्नानादाज्यदानाद्बली भवति नान्यथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८४ ॥

---

## श्रीसूर्य उवाच।

बालानां घातिनी चैव या भवेत्पूर्वजन्मनि। तेनात्राब्दमितात्कालादर्वाग्बालो न जीवति ॥ १ ॥
इह जन्मनि भोः सूत वरमाता मृतपुत्रका। अयं जीवेदयं जीवेच्चिन्तयन्ती च वै ध्रुवम् ॥ २ ॥
न जीवन्ति च तत्पुत्राः पूर्वपापात्तथांडज। प्रायश्चित्तं शृणुष्वाथ येन जीवन्ति तत्सुताः ॥ ३ ॥
श्रवणाद्धरिवंशस्य दशावृत्त्या खगेश्वर। पञ्चब्येकमितावृत्त्या विशुद्धिः शिशुजाद्घात् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८५ ॥

---

## श्रीसूर्य उवाच।

यः कश्चिद्घातयेत्पूर्वं ब्राह्मणं ज्ञानवर्जितः। कुष्ठरोगान्वितः सोऽपि जायते चेह जन्मनि ॥ १ ॥
दद्यात्कालनरं सूत सर्वोपस्करसंयुतम्। सर्वस्वं च महापापे दानमुक्तं मनीषिभिः ॥ २ ॥
सर्वस्वदानात्कुष्ठस्य पीडा नश्यति तत्क्षणात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८६ ॥

श्रीसूर्य उवाच ।

देवद्रव्यं हरेत्सूत पूर्वजन्मनि यो नरः । सोऽत्र जन्मनि जायेत वायुपीडाभिरन्वितः ॥ १ ॥
प्रायश्चित्तं परं वायोर्नाशनं तस्य वच्म्यहम् । जपेन्मृत्युंजयं मन्त्रं सावित्रीं च विशेषतः ॥ २ ॥
होमयेत्तद्दशांशेन ब्राह्मणान्भोजयेत्तथा । वायुरोगोपशान्त्यर्थं शक्त्या दद्याच्च दक्षिणाम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८७ ॥

श्रीसूर्य उवाच ।

देवागारे तु या काचित्प्राग्भवे विनता सुत । सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारी पापप्रणाशनम् । वक्ष्ये गोमिथुनं दद्यात् प्राजापत्यं चरेद्व्रतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८८ ॥

श्रीसूर्य उवाच ।

बभूव मुखजः कश्चिद्विद्याधनसमन्वितः । नानाकलासु कुशलो विष्णुभक्तिपरायणः ॥ १ ॥
राहुग्रस्ते प्रयागे च सर्वस्वमददत्पुरा । तत्र भाविबलात्सूत पापमाचरितं शृणु ॥ २ ॥
धर्षिता क्षत्रिया यूनि कामलोभाच्छुभानना । प्रताडितः पतिस्तस्यास्तेन दैवहतेन तु ॥ ३ ॥
ततो मृत्युवशं प्राप्तो गत्वा तु यमशासनम् । शुभाच्छुभफलं भुक्त्वा पापादत्यन्तदारुणम् ॥ ४ ॥
अन्यजन्मनि दानेन स जातः क्षत्रियाधरः । देशे विपाशानिकटे सप्तयोजनसम्मिते ॥ ५ ॥
सुरूपदेहः सद्बुद्धिः स्त्रीपुत्रधनसंयुतः । शूरो दाता प्रधानश्च देशेदेशेऽतिविश्रुतः ॥ ६ ॥
किंचित्पापरतो धूर्तो मनोदुःखाकुलो भृशम् । धर्षणात्क्षत्रियायास्तु भर्तृसंताडनात्तथा ॥ ७ ॥
यार्थेके कंडुरोगार्तो निश्चयादिह जन्मनि । लक्ष्मैवदंडजश्रेष्ठ सूर्यशुक्रौ चतुर्थकौ ॥ ८ ॥
वक्ष्यामि तस्य पापस्य निष्कृतिं पापशोधिनीम् । लक्ष्मीनारायणं दद्यात्पलेनार्धपलेन वा ॥ ९ ॥
हिरण्मयं सुघटितं सर्वाभरणभूषितम् । पूजयित्वा तु गंधैश्च पुष्पैर्नानाविधैस्तथा ॥ १० ॥
दीपैर्विचित्रैर्विधिना दद्याद्विप्राय धीमते । गणनाथं तथा दद्याद्दशमाषसुवर्णजम् ॥ ११ ॥
एवं विधानं यः कुर्यात्पूर्वपापविशोधनम् । न तस्य दद्रुकंडूश्च तस्माद्दोषात्प्रमुच्यते ॥ १२ ॥
अकालमरणं तस्य प्रायश्चित्तेऽकृतेऽत्र च । प्रायश्चित्ते कृते त्वत्र सप्तत्यब्दं तु जीवनम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४८९ ॥

श्रीसूर्य उवाच ।

देवागारे जले वापि गोष्ठे वा विनतासुत । सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारी पापप्रणाशनम् । वक्ष्ये गोमिथुनं दद्यात्प्राजापत्यव्रतं चरेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९० ॥

श्रीसूर्य उवाच ।

घातयेद्यः स्त्रियं साध्वीं कामात्पापविमोहितः । प्राग्भवे नियतं सोऽत्र कार्श्यं भजति मानवः ॥ १ ॥
तेनैव मृत्युमाप्नोति रोगेण च खगाधिप । प्राप्ते रिष्टे च नश्यायुर्जायते च तदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९१ ॥

श्रीसूर्य उवाच ।

कन्यकाविक्रयजात्पूर्वपापात्कन्यामजा भवेत् । जन्मन्यत्र महाभाग पूर्वपापादिदं फलम् ॥ १ ॥
पूजनाल्लक्षरुद्राणां तदर्धार्धार्चनादिह । मुच्यते पूर्वपापाच्च घोरात्कन्याविक्रयादिह ॥ २ ॥
अथवा विधिना सूत तडागोत्सर्गपुण्यतः । विप्राणां भोजनात्तस्मिंस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापात्प्रमुच्येत नात्र कार्या विचारणा ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९२ ॥

श्रीसूर्य उवाच ।

या च पूर्वभवे नारी देवद्रव्यापहारिणी । सेह जन्मनि पक्षीन्द्र भवेद्वायुप्रपीडिता ॥ १ ॥
देवालयं स्थिरं कृत्वा तत्र स्थाप्याश्च देवताः । वायुरोगोपशमनं निश्चितं जायतेऽण्डज ॥ २ ॥
भोजयेत्तत्र वै विप्रान्वायुप्रीत्या खगाधिप । दानं वित्तानुसारेण वित्तशाठ्यं न कारयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९३ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु चास्य विचेष्टितम् । राजपुत्री भवेत्कश्चित्पृच्छकोऽसौ पुराभवे ॥ १ ॥
गंगासमाश्रिते देशे युग्मयोजनसम्मिते । ग्रामाध्यक्षो महातेजा धर्मशास्त्रक्रियायुतः ॥ २ ॥
शिवभक्तिपरो विद्वान्मन्त्रविद्यारुचेष्टितः । सुपुत्रमित्रमानाढ्यो धनधान्यसमाकुलः ॥ ३ ॥
दत्तानि तेन दानानि प्रयागे मकरेऽपि च । अन्यपर्वसु विप्रेभ्यो वस्त्राभरणानि च ॥ ४ ॥
गोभूशय्यासनादीनि भक्ष्याणि विविधानि च । सत्पात्रेषु गृहस्थेषु श्रद्धापूतेन चेतसा ॥ ५ ॥
अथो भाविबलात्तेन कामलुब्धेन यौवने । ब्राह्मण्यां धारितो गर्भः पापमाचरितं त्विदम् ॥ ६ ॥
यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम् । ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥ ७ ॥
स्त्रीसाहाय्येन तेनैव कृतं पापकर्म दारुणम् । ततो बहुतिथे काले ससहायो हि बाहुजः ॥ ८ ॥
प्राप्य धर्मपुरं तत्र शुभाशुभविवेचनम् । पापात्पापफलं भुक्त्वा पुण्यात्स्वर्गांश्च शाश्वतान् ॥ ९ ॥
तीर्थराजप्रभावात्माघदानात्तु विधिवत्तथा । सरस्वत्याः परे देशे जाङ्गले नवयोजने ॥ १० ॥
कुले महति पक्षीन्द्र जातो वन्दिजनोऽधुना । गौरः सुरूपो मतिमान्सुशीलश्च दयापरः ॥ ११ ॥
चञ्चलो दर्शनीयाक्षो नात्युच्चो न लघुः क्षमी । वाचा मधुरया युक्तो राजसेव्यथ मन्त्रवित् १२
उपकारपरो विद्वान्बली सर्वजनप्रियः । सभायां चतुरो धीरो सुखैश्वर्यसमाकुलः ॥ १३ ॥
सुधर्मा दानशीलश्च धनस्त्रीमित्रसंयुतः । कुलाग्रणीर्यशस्वी च भृत्यवाहनभोगभाक् ॥ १४ ॥
धर्मादिदं तथा पापाल्लोभी पापरतः क्वचित् । धूर्तः शठोऽथ मितदो पितृसौख्यविवर्जितः ॥ १५॥
किंचिद्रुगस्ति जठरे पित्तविकयोऽल्पवीर्यभाक् । ब्राह्मण्यां वीर्यदानात्प्रागगर्भपाताच्च तद्वधात् १६
अत्र जन्मन्यसौ मद्य पुत्रसौख्यविवर्जितः । या स्त्री पूर्वं सहायाभूत्पापकर्मणि चाण्डज ॥ १७ ॥
सा प्रसूरत्र वनिता पुत्रदुःखप्रपीडिता । गोसीपुत्रवधे पापं पुत्रदुःखकरं यतः ॥ १८ ॥
मद्गुर्लग्नादिदं चिह्नं सूर्यः स्त्रीराशिगः किल । महादुःखकृतात्पापाद्गुरुस्त्र्यगृहे गतः ॥ १९ ॥
लक्ष्योऽत्र लक्षणैरेभिः प्रायश्चित्तं वदाम्यहम् । पलैर्दशमितैः कार्या ब्राह्मणी च हिरण्मयी ॥ २०॥
पत्रे लेख्या शुभाकारा समग्रावयवान्विता । तदर्धेन हिरण्येन निजवित्तानुसारतः ॥ २१ ॥
संपूज्य गन्धपुष्पाद्यैर्मन्त्रैश्चापि विशेषतः । सा च देया विधिज्ञाय मन्त्रमेतमुदीरयेत् ॥ २२ ॥

॥ मन्त्रः ॥

"सौवर्णी ब्राह्मणीमेतां सगर्भां सोमदेवताम् । ददेऽहं 'विप्रमुख्याय पूर्वपापविशुद्धये" ॥ २३ ॥
ब्राह्मणं हेमजं दद्यात्पलैर्युग्ममितैः शुभम् । तदर्धमितिकं वापि द्वयोर्वित्तानुमानतः ॥ २४ ॥
सोमं दद्यात्पलैकं तु हैमं पापविशुद्धये । पलेनार्धपलेनापि कमलं हेमजं शुभम् ॥ २५ ॥
पूजयेत्पारदेनैव दद्यात्पापविमुक्तये ॥ सुवर्णद्वयमानेन विष्णुं रुद्रं च कारयेत् ॥ २६ ॥
वेदवेदमितैर्माषैर्गणेशार्कौ हिरण्मयौ । संपूज्य गन्धपुष्पाद्यैर्मन्त्रैश्चापि विधानतः ॥ २७ ॥
ब्राह्मणेभ्योऽपि ते देयाः सर्वपापविशुद्धये । गायत्र्यष्टसहस्रं तु त्र्यम्बकं तन्मितं तथा ॥ २८ ॥
अष्टाक्षरं तदर्धं तु जपेद्दोषापनुत्तये । होमयेत्तद्दशांशेन तिलाज्ययवतंडुलैः ॥ २९ ॥
विप्रेभ्यो दक्षिणां दद्याच्छक्त्या विप्रांश्च भोजयेत् । पश्चाद्वापि हरेर्वंशं शृणुयाद्वद्पुत्रदम् ॥३०॥
य एवं कुरुते सूत शक्त्या पापविशोधनम् । सुखं पुत्रस्य लभते स्त्रीभ्यामत्रैव जन्मनि ॥ ३१ ॥
नाथयो व्याधयस्तस्य न वीर्यक्षयमाप्नुयात् । न करोति च यो मोहात्त्रिष्वेकं पापशोधनम्॥३२॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । पञ्चवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ ३३ ॥
प्रायश्चित्ते कृते त्वायुर्वर्षाणां पञ्चसप्ततिम् । जीवनं कथितं त्वत्र न चारिष्टं भयं भवेत् ॥ ३४ ॥
न भवेत्पुत्रमरणं निर्याणान्ते च सद्गतिः । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ३५ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९४ ॥

---

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रो नर्मदायां वसन् सुत । धर्मशास्त्रक्रियाहीनः पुत्रपौत्रसमन्वितः ॥ १ ॥
विप्रोऽसंगतस्तत्र गङ्गास्नानमकारयत् । कष्टेन पाल्यतेऽनेन कुटुम्बः शकटेन वै ॥ २ ॥
कदाचित्स वनं गत्वा ददाह वनमल्पकम् । तस्मिन्दाहे तु निर्दग्धा जीवास्तत्र खगाधिप ॥ ३॥
पापं कृतं स्वकार्यार्थं कुटुम्बरक्षणाय च । स्त्रीसहाययुतस्तत्र गतो धर्मपुरं प्रति ॥ ४ ॥
भुक्त्वा शुभाशुभं तत्र जातोऽयं पादजस्त्विह । नर्मदापाश्चिमे देशे पर्वते मध्यरूपधृक् ॥ ५ ॥
वृश्चिकस्थे बुधे ऋक्षे रवौ वृषभगे तमे । रक्तगौरस्तथा बाल्ये भ्रातृहीनोऽल्पवित्तकः ॥ ६ ॥
स चादिकन्यापुत्रैस्तु रहितो दृश्यते सुत । कुचत्वारिंशदब्दान्तं न च पुत्रमुखं क्वचित् ॥ ७ ॥
जीवदाहात्कृतात्पापादल्पपुत्रोऽत्र वर्तते । स्त्रीसहाययुतो यस्मात्सापत्नत्वं भविष्यति ॥ ८ ॥
जीवघातातुरा चात्र पादादूर्ध्वं रुगन्वितः । प्रायश्चित्ते कृते सूत तयोः पुत्रसुखं त्विह ॥ ९ ॥
प्रवक्ष्यामि महाभाग प्रायश्चित्तमथो शृणु । राजताश्चटकाः कार्याः पत्रे लेख्या हिरण्मये ॥१०॥
पलत्रिंशन्मिते यस्माद्वस्वंगुलविधानके । तदर्धमितके वापि निजवित्तानुसारतः ॥ ११ ॥
तत्र वृश्चिकसूर्यौ तु कार्यौ यत्नाद्वनान्तरे । वनदेवी तथा कार्या पञ्चमाषैर्हिरण्मयी ॥ १२ ॥
वृक्षा लेख्या वने तस्मिँल्लतौषधिसमन्विताः । य एवं कुरुते सूत पुत्रसौख्यविवर्द्धनम् ॥ १३ ॥
भविष्यति न सन्देहो दानस्यास्य प्रभावतः । रिष्टं पञ्चाशदब्दे तु प्रायश्चित्तेऽकृतेऽत्विह ॥ १४ ॥
प्रायश्चित्ते कृतेत्वायुरष्टषष्ट्यब्दसंमितम् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९५ ॥

---

श्रीसूर्य उवाच।

मथुरामण्डले सूत वसन्क्षत्री प्रतापवान्। धर्मिष्ठो दानशीलश्च देवतातिथिपूजकः ॥ १ ॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात्। ब्राह्मण्यां धारितो गर्भः कामलोभेन निश्चयात् ॥२॥
यत्ने कृतेऽपि तत्रैव नाभूद्गर्भस्य पातनम्। ततो लोकभयात्सूत विषं भुक्त्वा तु सा मृता ॥ ३ ॥
अर्भकोऽपि मृतस्तस्या गर्भयात्तोत्यपीडनात्। सहायैकयुतेनैव नाभूद्गर्भस्य पातनम् ॥ ४ ॥
ततो मृत्युवशं प्राप्तः ससहायो हि बाहुजः। भुक्त्वा पापफलं त्वपात्पुण्यात्स्वर्गफलं तथा ॥ ५ ॥
महापापकृताद्दोषाद्धरितेर्वै बाहुजादधः। यमुनायां लामगे तु विंशयोजनसम्मिते ॥ ६ ॥
देशे जातः पूर्वपुण्यात्स शूद्रश्चेह जन्मनि। सुकर्मासमितद्दो दक्षो मतिमाँल्लोकविश्रुतः ॥ ७ ॥
ब्राह्मण्यां वीर्यदानात्प्रायतद्वधाच्चाप्यपुत्रकः। निष्कृतिं तां प्रवक्ष्यामि पूर्वपापविशोधिनीम् ॥ ८ ॥
शूद्रायाः प्रतिमा कार्या पलार्द्धस्वर्णनिर्मिता। लेख्या गर्भाच्च्युतैर्बालैः सौवर्णैर्भूषिता शुभा ॥९॥
सा देया तु विधिज्ञाय पूर्वपापविशुद्धये। देयः पञ्चमितैर्माषैस्तया वेदनिधिः सुत ॥ १० ॥
जपेच्च वेधसो मन्त्रं वैष्णवं त्र्यम्बकं सुत। पूर्वपापविशुद्ध्यर्थं सहस्रं प्रतिदैवतम् ॥ ११ ॥
होमयेच्च तिलांस्तत्र सघृतान् स्थंडिले शुभे। स्वगृह्योक्तविधानेन स्थापयित्वा हुताशनम् ॥१२॥
ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम्। ततः सूर्यव्रतं कुर्यात्सर्वपापविशोधनम् ॥१३॥
सप्तम्यां च निराहारः सूर्यपूजनतत्परः। तस्य पुत्रविवृद्धिः स्यादत्र जन्मनि वै ध्रुवम् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९६ ॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ शूद्रो धर्मकर्मसमन्वितः। विप्रोत्संगमतस्तत्र गंगास्नानमथाकरोत् ॥ १ ॥
दुःखेन पाल्यते तेन कुटुम्बस्तुरगेण वै। एकदा तु वनं गत्वा ददाह वनमल्पकम् ॥ २ ॥
तस्मिन्दग्धे तु निर्दग्धा जीवाश्चापि विशेषतः। कृतमाचरणं दुष्टं कुटुम्बभरणाय च ॥ ३ ॥
भ्रातृमित्रैश्च संयुक्तो गतो धर्मपुरं प्रति। भुक्त्वा शुभं तथा पापं जातोऽयं पादजाधरः ॥ ४ ॥
शतद्रुनिकटे देशे पुत्रपौत्रसमन्वितः। धनुस्थिते गुरौ ऋक्षे कन्या चन्द्रे वृषे रवौ ॥ ५ ॥
श्यामाङ्गो दिव्यशोभाढ्यः सुखदुःखाकुलो महान्। स्त्रीसहायसुतो यस्मात्पत्नीत्वं च भाविष्यति ६
सत्त्वघातात्पुरा चोग्रात्कटेरूर्ध्वं रुगन्वितः। प्रायश्चित्तं प्रवक्ष्यामि येन पापक्षयो भवेत् ॥ ७ ॥
पत्रं कृत्वा सुवर्णाढ्यं पलयुग्ममितं तथा। तस्मिन्हिरण्मये पत्रे चटकाद्याश्च लेख्यकाः ॥ ८ ॥
वनदेवी तथा कार्या नानासत्त्वसमन्विता। सा देया तु विधिज्ञाय पूर्वपापविमोचनात् ॥ ९ ॥
रौक्मं शुभ्रं तथा दद्यादिन्द्रं सार्धपलात्मकम्। गायत्र्यष्टसहस्रं तु होमयेत्तद्दशांशतः ॥ १० ॥
ब्राह्मणान्भोजयेच्छक्त्या सर्वपापात्प्रमुच्यते। य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ ११ ॥
तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि। नैवं करोति यो मोहात्प्रायश्चित्तं यथामतम् १२
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः। प्रायश्चित्ते कृते त्वायुर्वेदाशीतिमितान्दकम् १३॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९७ ॥

श्रीसूर्य उवाच।

कश्चिद्वन्दिजनः सूत सर्वविद्याविशारदः। वेदाभ्यासरतः श्रीमान्प्राप्तसर्वमनोरथः ॥ १ ॥
तुलाघृतादिस्नेहास्तु विप्राणां स्नेहभागिनाम्। गृहीता अविलोमेन चौर्येणैव तु तत्कृते ॥ २ ॥

यस्माज्ज्ञानकृतं चैतत्प्राग्भवे तत्फलं शृणु । स क्षत्रियः प्रयागेऽस्ति द्विजो वेदविदांवरः ॥ ३ ॥
धनमित्रसमायुक्तः कुष्ठरोगसमन्वितः । वेदाभ्यासात्तथा दानात्तीर्थराजाधिवासतः ॥ ४ ॥
नाशः स्यात्कुष्ठरोगस्य चात्रजन्मनि चांडज । दोषात्स्वल्पात्फलैर्युक्तो जीवेद्वर्षशतं ध्रुवम् ॥ ५ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९८ ॥

## श्रीसूर्य उवाच ।

कन्याघाती भवेद्यस्तु पूर्वजन्मनि मानवः । वैनतेयात्र जन्तुर्हि मृतपुत्रः प्रजायते ॥ १ ॥
श्रवणाद्धरिवंशस्य विधिवच्चात्र जन्मनि । हरिदानात्तथा चैव पूजनाच्छंकरस्य च ॥ २ ॥
भविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तरचतुःशताधिकसहस्रतमः ॥ १४९९ ॥

## श्रीसूर्य उवाच ।

सा मृगी याभवत्पूर्वं निषादी पुनरेव सा । वैश्याधमा पञ्चनदे जातात्र विनतासुत ॥ १ ॥
पुत्रपौत्रधनैर्धान्यैर्गजाश्वोष्ट्रादिवाहनैः । युक्ता सा यवनी सूत क्षेत्रराजस्य सेवनात् ॥ २ ॥
द्विजसंगयुतात्पूर्वे पूर्वं तद्धितवांछनात् । यवनी पूर्वपापाच्च तत्र तस्योपसेवनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चशताधिकसहस्रतमः ॥ १५०० ॥

## श्रीसूर्य उवाच ।

गते बहुविधे काले स जातो ब्राह्मणोऽधुना । गंगायमुनयोर्मध्ये क्रूरकर्मा महोद्यमी ॥ १ ॥
प्राक् शिवाराधनात्पुण्याद्ब्राह्मजः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य पूर्वपापौघनाशिनीम् ॥२॥
सर्वतस्त्वयुतः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्यो मृगाभ्यां संयुतो महान् ॥ ३ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ४ ॥
तस्माच्छिवप्रसादाद्धि कुष्ठस्तस्य प्रशाम्यति ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरपञ्चशताधिकसहस्रतमः ॥ १५०१ ॥

## श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मजा काचिद्व्रतैः प्रियरता सदा । दानधर्मरता साध्वी विप्राणां पूजने रता ॥ १ ॥
तदा दोषात्सा सुभगा द्रव्यलोभरताऽभवत् । सपत्नीपुत्रमवदद्दद्विषं चैतद्रसानुगम् ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तया । तद्दुःखेन पतिस्तस्य मृतः पुत्रद्युचान्वितः ॥ ३ ॥
पापमाचरितं घोरं स्वपुत्रवधसंज्ञकम् । प्राप्ता यमपुरं भुक्ता पूर्वपुण्यफलानि वै ॥ ४ ॥
फलानि तद्वत्पापानां घोरान्नरकसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता पर्वतेऽत्रिह ॥ ५ ॥
क्षात्रे कुले महापुण्ये राज्यशक्तिसमन्विते । सा रक्तगौरा धर्मज्ञा सदा पुण्यपरायणा ॥ ६ ॥
मध्या सुरूपा सिद्धार्था सुशीला गौरवान्विता । नातिव्ययपुता पापाल्लोभाढ्या स्वल्पपुत्रका॥७॥
स्वल्पपापरते काले चाधिव्याधिसमन्विता । यौवने भर्तृसंयुक्ता वार्धके पुत्रवर्जिता ॥ ८ ॥
सपत्नीपुत्रवधजात्पूर्वपापात्खगाधिप । लक्ष्मणेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ ९ ॥
विष्णुः कार्यः व्रतमार्गः सौवर्णोविंशयोनिभृत् । देयो विप्राय पात्राय पूर्वपापापनुत्तये ॥ १० ॥
जपेद्द्वादशार्णं मन्त्रमयुतं होममेव च । गायत्रीं च जपेत्तद्वद्यावद्वावस्तथा सुत ॥ ११ ॥

भोजयेच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् । एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् ॥ १२ ॥
न तस्याः पुत्रमरणं तदग्रे जायते ध्रुवम् । एवं या कुरुते नारी प्रायश्चित्तं विधानतः ॥ १३ ॥
विप्राणां पूजनाद्दानात्तस्याः सन्ततिवर्धनम् । जीवनं कथितं तस्या वर्षाणां सप्तसप्ततिम् ॥ १४ ॥
रिष्टं पष्टिमिते चाब्दे ध्रुवं चाकृतनिष्कृतेः ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५०२ ॥

## अरुण उवाच ।

कश्चिद्विप्रकुलोत्पन्नो देहीवन्ध्यः कृशानुवत् । सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किंचिद्विद्याद्विवान्भुवि । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षं न चायाति प्रीतिं वै भ्रातृमातुलैः । असृग्घातमदार्तानां वाल्ये स्याद्ग्रहणी गदः ॥ ३ ॥
काष्ठलोष्टाश्मशस्त्राद्यैर्घातः स्यात्करपादयोः । बहुपुत्राः प्रसूताश्च ह्यपुत्रा जायते भुवि ॥ ४ ॥
अथवा मृतपुत्रत्वं जायते केन मानद । जातमात्रा मृताः केचित्केचित्पोगण्डमाश्रिताः ॥ ५ ॥
केचिद्दृष्टानना वापि मृतः पुत्रोऽग्निमासकः । रक्तस्रावादभृशं पीडा मासेमासेऽभवत्किल ॥ ६ ॥
केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ७ ॥

## श्रीसूर्य उवाच ।

पूर्वं क्षात्रः समुत्पन्नः किंचिद्भूमिपतिस्तथा । तावज्जन्मनि वैश्यस्तु परवित्तापहारकः ॥ ८ ॥
दूतिकाकर्मनिरतो लोकचिन्तानुरञ्जकः । ग्रामार्धांशोऽभवत्सोऽपि स्वातन्त्र्यमगमत्परम् ॥ ९ ॥
एको ग्रामेऽवसद्विप्रः शान्तोदान्तः क्षमी सदा । पुत्र्यः पञ्च तथा सप्त न पुत्रो वित्तसंयुतः ॥ १० ॥
कालेनैव मृतो विप्रो हृतं तेन धनं घनम् । मिथ्याभिशंसनैर्वाक्यैः क्रोधभर्त्सनतर्जनैः ॥ ११ ॥
अपुत्रश्च मृतो विप्रो सर्वस्वमहरच्छठः । निराधाराः सुता जाता न कृतं द्विजभोजनम् ॥ १२ ॥
क्रियाकर्म कृतं नैव सर्वं राज्ञा हृतं च यत् । एवं कृतापराधोऽसौ क्षत्रियो दूतिकया सह ॥ १३ ॥
किञ्चित्कालानन्तरं वै दस्युकर्मरतोऽभवत् । म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम् ॥ १४ ॥
केचित्केचिद्विपच्यन्ते नरके भृशदारुणे । दृष्ट्वा भुक्त्वा यातना वा इह जन्मनि मानद ॥ १५ ॥
विप्रवंशे समुत्पन्नः कस्माच्चरसुकृतात्तु हि । इदं द्वितीयं वै जन्म विप्रत्वं यत्र तस्य वै ॥ १६ ॥
पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते । ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते ॥ १७ ॥
नानापत्यानि पच्यन्ते नानाकर्मार्जितानि हि । पुराकृतानि कर्माणि भुज्यन्ते जन्मजन्मनि ॥ १८ ॥

## अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन जीवेच्चिरं सुतः । कन्यापत्यप्रशमनं बहुपुत्रकरं तथा ॥ १९ ॥

## श्रीसूर्य उवाच ।

सुशुभे भूमिदेशे तु गोमयाद्युपलिप्तके । तत्रोपर्याविकं स्तीर्याथवा चाजिनकं शुभम् ॥ २० ॥
छादयेच्छुक्लवस्त्रेण तण्डुलद्रोणपर्वतम् । तत्रोपरि न्यसेत्पात्रं ताम्रं दशकपालिकम् ॥ २१ ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम् । मुक्तायज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् ॥ २२ ॥
दधानां करयुग्मेन चाक्षमालां कमण्डलुम् । काश्यपीं वामभागेन त्वदितिं विश्वमातरम् ॥ २३ ॥
सौवर्णीं स्थापयेत्तत्र सुवर्णद्वयनिर्मिताम् । आसने वै समास्थाय ततो द्रोणादिशांदिशम् ॥ २४ ॥
हारकेयूरमुकुटकुण्डलाभरणान्वितौ । एवं तौ दम्पती सम्यगर्चयेत्पर्वतोपरि ॥ २५ ॥

कृत्वा प्रतिष्ठितप्राणां पूजयेद्विविधैर्गुणैः । नानाफलयुतं चार्घ्यं दत्त्वा पुष्पैः प्रपूजयेत् ॥ २६ ॥
अभ्यर्च्य दम्पती तौ तु मन्त्रमेतमुदीरयेत् ॥ २७ ॥

मंत्रः ।

"यन्मया पूर्वजन्मापि विप्राणां वचनन्धने । कृते कृतं दौत्यमुग्रं वाक्यदोषादि यत्कृतम् ॥ २८ ॥
तत्सर्वं क्षम्यतान्देव तव मूर्तिं ददाम्यहम्" । अदितिं च प्रणम्याथ कृताञ्जलिरिदं ब्रुवन् ॥ २९ ॥
"अदिते विश्वमातस्त्वं शरण्या शरणार्थिनाम् । भियादुःखावसंतप्तहृदयं मामवेश्वरि ॥ ३० ॥
सम्प्रणाशाय दुःखस्य प्रजान्देहि यशस्विनि ।" एवं कृत्वा तु विप्रेन्द्रब्राह्मणान्भोजयेत्ततः॥३१॥
शालग्रामशिलां शुद्धां सोमकान्तमणिं तथा । चन्द्रसूर्योपरागे तु ब्राह्मणाय समर्पयेत् ॥ ३२ ॥
एवं कृतविधिः सूत कृष्णां गां दापयेत्ततः । सर्पिष्यात्मानमालोक्य भोजयेच्च समृद्धिभिः॥३३॥
ऐहिकं लक्षणं तस्य शरीरेष्युपजायते । काष्ठलोष्टादिशस्त्राद्यैः करपादव्रणं वदेत् ॥ ३४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५०३ ॥

---

श्रीसूर्य उवाच ।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेण्डज । स राजयक्ष्मरोगेण युक्तः स्यादिह जन्मनि ॥ १ ॥
तस्मिन्वयसि पक्षीन्द्र सोऽपि प्राणैर्वियुज्यते । महापापोद्भवाद्रोगात्त्रचोक्ता निष्कृतिर्मया ॥ २ ॥
अपि ज्ञानकृतंपापंपरिहररूपेण काश्यपे । नाशयत्यमरं सिद्धं पूर्णायुष्कमपि ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरपञ्चशताधिकसहस्रतमः ॥ १५०४ ॥

---

श्रीसूर्य उवाच ।

परगर्भन्तु यः कश्चिद्घातयेज्ज्ञानवर्जितः । जलन्धरेण सततं रोगेणेह प्रपीड्यते ॥ १ ॥
जलधेनुप्रदानेन विधिना गरुडाग्रज । ताम्ररूप्यसुवर्णानां दानात्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तरपञ्चशताधिकसहस्रतमः ॥ १५०५ ॥

---

श्रीसूर्य उवाच ।

ब्राह्मणोऽभूत्कुरुक्षेत्रे कृपिकृद्वेदपारगः । स्वज्ञातीयस्य चान्यत्र वृत्तिलोपं चकार सः ॥ १ ॥
तत्सम्बन्धेऽभवद्युद्धं द्वयोरेको मृतस्तदा । वृत्तिलोपी द्विजः काले गतो हि यमशासनम् ॥ २ ॥
भुक्त्वा तत्पापजं सर्वं शतद्रुनिकटे त्विह । स हि जातो द्विजश्चात्र युवभावे खगाधिप ॥ ३ ॥
तत्पापनाशनं सर्वं प्रायश्चित्तं प्रवच्म्यहम् । वेदाभ्यासाद्दानात्सूत सावित्रीजपतस्तथा ॥ ४ ॥
गङ्गायां वासतो वापि सर्वपापात्प्रमुच्यते । न कुष्ठवृद्धिरत्रास्ति स्थितस्य शमनं भवेत् ॥ ५ ॥
जीवितपर्यन्तमितान्दान्तं रिष्टं चैव प्रणश्यति । गतिस्तस्य महाभाग वेदाभ्यासाज्जपात्तथा ॥ ६ ॥
भविष्यति शुभा लोके परत्र च खगेश्वर ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरपञ्चशताधिकसहस्रतमः ॥ १५०६ ॥

---

श्रीसूर्य उवाच ।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा । बभूव भर्तुः सुखदा तदाज्ञापालिनी सती ॥ १ ॥
इह जन्मनि सा विप्रा काश्यां जाता हि सुव्रत । व्रतदानपरा चापि भर्तृतोषणसंयुता ॥ २ ॥

पञ्चपञ्चाशदब्दान्तं भविष्यत्यत्र जन्मनि। स्वर्गकामा चिताग्नौ तु नात्र कार्या विचारणा ॥ ३ ॥
सा गमिष्यति वै स्वर्गमन्यजन्मनि वै नरः। भविष्यति महाराजकुले राजातिधार्मिकः ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरपञ्चशताधिकसहस्रतमः ॥ १५०७ ॥

## श्रीसूर्य उवाच।

पीड्यते वातरोगेण दारुणेन खगाधिप। पूर्वजन्मनि यश्चान्याद्रसानिभ्यगृहाश्रितः ॥ १ ॥
प्रायश्चित्तं परं तस्य व्रतं चान्द्रायणं स्मृतम्। व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजस्त्विह ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरपंचशताधिकसहस्रतमः ॥ १५०८ ॥

## श्रीसूर्य उवाच।

स्वगर्भं पातयेत्पूर्वं या नारी पापमोहिता। जलोदरकृता पीडा जायते चात्र जन्मनि ॥ १ ॥
रजतस्वर्णताम्राणां दानाद्रोगविनाशनम्। जलधेनुप्रदानेन तथैव विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरपंचशताधिकसहस्रतमः ॥ १५०९ ॥

## श्रीसूर्य उवाच।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा। दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुखजा सगर्भा फललालसा। अोटितं चान्यस्य फलं भोक्तुं चौर्येण वै तथा ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि। भवन्ति खलु ये पुत्रा अर्वाग्वर्षाष्टतोण्डज ॥ ३ ॥
पञ्चत्वं प्राप्नुवन्त्यत्र कस्मादकृतनिष्कृतेः। निष्कृतिं तां प्रवक्ष्यामि पूर्वपापप्रणाशिनीम् ॥ ४ ॥
शनिवारेण्डजश्रेष्ठ यत्रास्तेऽश्वत्थकं सुत। तत्तले ब्राह्मणान्सूर्यदिने पञ्चान्तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैः सापूपैरससंयुतैः। फलानि विकिरेत्तत्र कृत्वाश्वत्थं प्रदक्षिणम् ॥ ६ ॥
पूजयेत्तं महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरपंचशताधिकसहस्रतमः ॥ १५१० ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि या काचिद्घातयेद्ब्राह्मणान्सुत। सात्र जन्मनि कुष्ठेन तस्मिन्वयसि पीडिता ॥ १ ॥
जायते म्रियते चात्र गलत्कुष्ठेन चाण्डज। पापाज्ज्ञानकृतात्पूर्वात्रचोक्ता निष्कृतिर्मया ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरपञ्चशताधिकसहस्रतमः ॥ १५११ ॥

## श्रीसूर्य उवाच।

देवो हि यामुने ह्यासीत्पूर्वं बाहुजसंज्ञके। गङ्गास्नानं कृतं तेन बाहुजानां सहायतः ॥ १ ॥
शकटेन कुटुम्बस्य पालनं वै चकार सः। एकस्मिन्वै दिने गत्वा ददाह सद्रुमं वनम् ॥ २ ॥
बलदेवस्य सम्प्राप्तो जीवा दग्धा भयाकुलाः। बन्धोः साहाय्यतस्तत्र कृतं कर्मातिदारुणम् ॥ ३ ॥
शुभाच्छुभफलं भुक्त्वा पापाच्च नरकांस्तथा। माघे तु जाह्नवीस्नानात्स जातः शूद्रसत्तमः ॥ ४ ॥
विपाशानिकटे देशे योजने सप्तसम्मिते। भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥
बहुलोभी बहुस्त्रीको देवतातिथिपूजकः। भ्रातृहीनः शठो धूर्तः पुत्रसन्ततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुर्भौमयुक्तोऽल्पसन्ततिः। लक्षणैर्लक्षितश्चोक्तैरवेहि गरुडाग्रज ॥ ७ ॥
बन्धोः साहाय्यतः पापात्पूर्वजन्मसमुद्भवात्। तस्माद्भ्रात्रा च पुत्रैश्च हीनश्चेहैव जन्मनि ॥ ८ ॥

अरुण उवाच ।

निष्कृतिं वद देवेश सुतसौख्यविवर्धनीम् । सर्वपापप्रशमनां लोकानां हितकाम्यया ॥ ९ ॥

श्रीसूर्य उवाच ।

निष्कृतिं तां प्रवक्ष्यामि जन्तुदाहविनाशनीम् । वनदेवी तदा कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी शुभालेख्या पत्रे वै चतुरस्रके । वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः । राजतं पलमानन्तु गणाध्यक्षं शिवात्मकम् ॥ १२ ॥
संपूज्य गन्धपुष्पाद्यैः सा देवी कार्यसाधिनी । देया वेदविधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रजापतिस्तथा देयः सर्वकल्मषनाशनः । शृणुयाद्भारतं वापि पारायणविधानतः ॥ १४ ॥
अष्टाक्षरं तथा मन्त्रं प्रजपेद्विधिपूर्वकम् । दशायुतं तदर्धं वा तदर्धं विनतासुत ॥ १५ ॥
होमयेत्तद्दशांशेन तद्दशांशेन भोजयेत् । तावन्मितं सूर्यमन्त्रं प्रजपेद्विधिपूर्वकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते । य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ १७ ॥
तस्य पुत्रविवृद्धिः स्यादिह जन्मनि निश्चितम् । अकृते तु यथाशक्ति रिष्टं षट्पञ्चकेन्द्रके ॥१८॥
प्रायश्चित्ते कृते सूत जीवनं नवसप्ततिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरपञ्चशताधिकसहस्रतमः ॥ १५१२ ॥

श्रीसूर्य उवाच ।

देवमूर्तिश्च यः कश्चिद्देवागारे स्थितां सुत । भग्नां कुर्यान्नरो मोहात्परेण स्थापितां पुरा ॥ १ ॥
अप्रतिष्ठा भवेत्तस्य जन्मनीह खगाधिप । वर्षत्रयं तथाश्वत्थपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरपञ्चशताधिकसहस्रतमः ॥ १५१३ ॥

श्रीसूर्य उवाच ।

यश्चाचरेद्राजवधं मोहात्पूर्वभवे नरः । स राजयक्ष्मी विज्ञेयो घोरपापसमुद्भवः ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः । गोभूहिरण्यमिष्टान्नतिलवस्त्रान्नदानतः ॥ २ ॥
घृतधेनुप्रदानेन क्षयरोगं न पश्यति । दानं यथानुमानेन सर्वस्वार्धं तदर्धकम् ॥ ३ ॥
देयं द्विजवधादौ तु विचार्यात्र प्रयत्नतः । तत्क्षणे काश्यपे चेह क्षयरोगप्रशान्तये ॥ ४ ॥
रिष्टेनैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरपञ्चशताधिकसहस्रतमः ॥ १५१४ ॥

श्रीसूर्य उवाच ।

या नारी घातयेत्काचित्परगर्भं खगाधिप । जलोदरेण रोगेण पीड्यते चेह जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगे स्थिते । तथा तज्जलपानेन तस्मात्पापाद्विमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चदशोत्तरपञ्चशताधिकसहस्रतमः ॥ १५१५ ॥

श्रीसूर्य उवाच ।

वस्तिरोधी भवेद्यश्च पूर्वजन्मनि वादकृत् । सोऽत्र जन्मनि मूकत्वं व्रजत्येव न संशयः ॥ १ ॥
मोहादिदं चरेत्सूत दद्याद्दानं द्विजातये । वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वस्त्रैः शुद्धैः सामजैर्गरुडाग्रज । तत्पापनाशनं सर्वं मार्गजं प्रोक्तं परन्तप ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षोडशोत्तरपञ्चशताधिकसहस्रतम. ॥ १५१६ ॥

श्रीसूर्य उवाच।

इह जन्मन्यसौ वन्ध्या प्राग्भवेऽभूद्व्रतान्विता। जातायोध्यायान्तु सुभूर्धनभर्तृसमन्विता॥ १॥
पूर्वपापप्रभावेण सपत्न्या गर्भनाशनात्। जातेयं पादजा चेह दुःखार्ता सुतवर्जिता॥ २॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापप्रणाशनम्। काश्यां गत्वा च विधिना शिवमाराधयेत्ततः॥ ३॥
व्रतैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः। शिवरात्रौ ततः पश्चाद्दीपमालादिनेऽण्डज॥ ४॥
अर्धरात्रे महानद्यां मध्ये स्नानन्तु कारयेत्। मन्त्रैर्वरुणसूक्तैश्च नौकायां वा खगाधिप॥ ५॥
या चैवं कुरुते सम्यक्तस्याः स्यात्सन्ततिर्ध्रुवम्॥ ६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरपंचशताधिकसहस्रतमः॥ १५१७॥

श्रीसूर्य उवाच।

परनिन्दान्तु यः कश्चित्प्राग्भवे विनतासुत। कुर्यादुर्मतिमापन्नः स्खल्पाङ्गो जायतेऽधुना॥ १॥
दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम्। ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरपंचशताधिकसहस्रतमः॥ १५१८॥

श्रीसूर्य उवाच।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत। सेह जन्मनि तत्काले क्षयरोगातिपीडिता॥ १॥
यक्ष्मणात्र क्षयं यान्ति धातवः सर्वदेहिनाम्। धातुक्षये क्षयं याति तच्छरीरमशाश्वतम्॥ २॥
दृढकर्मकृतं पापं प्रायश्चित्तं न विद्यते। पापनाशकरः कश्चिदुपायो नेह जन्मनि॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरपञ्चशताधिकसहस्रतमः॥ १५१९॥

श्रीसूर्य उवाच।

या वाग्विरोधिनी नारी भर्तुः पूर्वभवे सुत। मूकत्वं जायते तस्याश्चेह जन्मनि निश्चयात्॥ १॥
तत्पापशमनं दानं दद्याद्वेदस्य पुस्तकम्। ब्राह्मणे वेदविदुषे पूर्वपापात्प्रमुच्यते॥ २॥
पूजयेच्च तिलान्भक्त्या भोजयेद्ब्राह्मणांस्तथा॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः विंशत्युत्तरपञ्चशताधिकसहस्रतमः॥ १५२०॥

श्रीसूर्य उवाच।

या काचिद्व्रजनं कुर्यान्नारी पूर्वभवेऽण्डज। प्रतिमां देवतागारे स्थापितामपरेण च॥ १॥
अप्रतिष्ठान्विता सेह जायते वै खगाधिप। वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम्॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरपञ्चशताधिकसहस्रतमः॥ १५२१॥

श्रीसूर्य उवाच।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः। गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः॥ १॥
विधिना तत्र दत्तानि काम्यश्राद्धानि मानद। ततो भाविवलात्सुत ब्राह्मणेन तपस्विना॥ २॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम्। सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह॥ ३॥
ततो बहुतिथे काले गतो हि यमशासनम्। शुभात्स्वर्गफलं भुक्तं पापाच्च नरकं भृशम्॥ ४॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः। मथुरामण्डले देशे रम्ये पुण्यस्थले शुभे॥ ५॥
विशालाक्षो धनी मानी सुरूपोऽभिवदो घृणी। बहुदेशोऽधिकाराढ्यः पुण्यात्सर्वं फलं त्विदम्॥६॥

लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । सन्तानसुखहीनश्च सुरूपस्त्रीसुखोज्झितः ॥ ७ ॥
बन्धुहीनो व्ययी तीक्ष्णः सर्वं स्यात्पापवः फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधिनीम् ८
कुबेरप्रतिमां रौक्मीं पञ्चस्वर्णमितां शुभाम् । तदर्धमितिकां वापि निजवित्तानुसारतः ॥ ९ ॥
संपूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च । लक्ष्मीनारायणं दद्याद्देदस्वर्णपलात्मकम् ॥ १० ॥
शुभं लेख्यं पवित्रं च पुत्रसन्ततिवर्धनम् । य एवं कुरुते भक्त्या तस्यारिष्टं न लिप्यते ॥ ११ ॥
। प्रायश्चित्ते कृते तत्र चायुः सप्ततिवर्षकम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५३२ ॥

---

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो वाताधिकशरीरवान् । क्षामाङ्गः क्षीणवर्णश्च स्वल्पवृत्त्या च जीवनम् ॥ १ ॥
देवब्राह्मणभक्तश्च किञ्चिद्वेदपरायणः । करे पादे कुशस्त्रेण दंष्ट्रिशृङ्गिविघातनः ॥ २ ॥
व्रणोतिदीर्घस्तस्यास्ति नेत्रत्वोदो विरामिता । परोक्षमपवादश्च लोका ब्रूयुर्निरन्तरम् ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं भाषते किञ्चित्किञ्चित्क्लेशस्य कारिणी॥ ४ ॥
अपत्यानि म्रियन्ते च एकं द्वे त्रीणि वा सुत । वर्षत्रयमिता बाला म्रियन्ते मासतस्मिताः ॥५॥
केन कर्मविपाकेन मृतापत्यत्वतानघ । उदरे च स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
पृथगेवं कुभ्रातृणां मृतापत्यत्वमेव हि । गते बहुतिथे काले कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वं वैनतेय तृतीये चैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानव्रतदयायुक्तः प्रियाप्रीतिः परस्परम् । तस्य चापरमातुस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
एको वै पादचारस्तु तृतीयश्च स्तनन्धयः । गर्भयुक्तश्चतुर्थस्तु पिता मृत्युवशं गतः ॥ १० ॥
क्रियाकर्मकृतं पुत्रैः स्ववृत्तेः सदृशं खग । मासैस्त्रिभिर्व्यतिक्रान्तैर्ज्येष्ठेनैव दुरात्मना ॥ ११ ॥
निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात् । मात्रा शोकेनार्तया च हृदयं ताडितं भृशम् ॥१२॥
अभिघाताच्छिलीभूता गर्भयुक्ता दिवं गता । अचिरेणैव कालेन ज्येष्ठश्चोरेण घातितः ॥ १३ ॥
जन्म चेदं द्वितीयं वै मृतापत्यत्वकारकम् । पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । गर्भस्थस्य मृतस्याथ लघोरलघुकस्य च ॥ १५ ॥

श्रीसूर्य उवाच ।

सौम्यायने तु सम्प्राप्ते सानुकूलग्रहे दिने । सपत्नीकः शुचिः स्नातः पञ्चगव्येन चाञ्जसा ॥१६॥
उपोषणं दिवा रात्रौ प्रातश्चानुदिते रवौ । सुरभेर्वै सगर्भाया गोमयेनोपलेपयेत् ॥ १७ ॥
सुशुभे भूप्रदेशे तु कुंकुमाद्युपचर्चिते । कुर्यादष्टफलं पद्मं चित्रवर्णं सुशोभनम् ॥ १८ ॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पत्रे सायुधं सचतुर्भुजम् ॥ १९ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । जनन्या सह संभूतान्प्रद्युम्नाद्यांस्तथार्चयेत् ॥ २० ॥
चारुदेहं सुवेषश्च चारुगुप्तं यशोन्वितम् । इभवाहुं चारुवाहुं सुचारुं पूजयेत्क्रमात् ॥ २१ ॥
पूजनं विष्णुसूक्तेन तथा श्रीरसकोविदैः । पुष्पस्रग्धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः ॥ २२ ॥
तद्विप्रासोऽथ तद्विष्णोरतोदेवाभिपूजयेत् । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै ॥ २३ ॥
होमान्ते विप्रभोज्यान्ते मन्त्रमेतमुदीरयेत् ॥ २४ ॥

मन्त्रः।

"यन्मया पापकं कर्म कृतं वै पूर्वजन्मनि। सपत्न्यां चैकजायायां परपत्न्यां तथैव च॥ २५॥
स्वकुल्यहननाद्वापि भूमिद्रव्यादिलिप्सया। लघूनामलघूनां च हननात्पूर्वजन्मनि॥ २६॥
ततोऽथ वै मया प्राप्तं दुःखं नानाविधं त्विदम्। तत्तदेनोविनाशाय दानं सम्प्रददे त्विदम्"॥२७॥
स्वस्त्यस्तु चेति तत्रोक्ता कोऽदादिति विसर्जयेत्। सपिण्ड्यात्मानमालोक्य भुञ्जीत स्वेष्टबन्धुभिः२८
ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिसंशनम्। काष्ठलोष्टादिशस्त्राद्यैर्घातः स्याद्बालक्रीडनात्॥ २९॥
जलादग्न्यादिना बाधा व्रणो वा तस्य जायते। स्त्रीणां दैवकृतो व्याधिर्मुखे तिलव्रणादिकम्३०॥
पितृजामातुलान्यादेर्नेत्रतोदो विराशिमता। स्वसृमातृष्वस्रादीनां बाल्ये वैधव्यता तथा॥ ३१॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरपंचशताधिकसहस्रतमः॥ १९२३॥

श्रीसूर्य उवाच।

या नारी प्रागभवे मोहात्परनिन्दां चकार वै। खल्वाटरुग्युता सा च जायतेऽत्रैव जन्मनि॥ १॥
धेनुं दद्यान्महाभाग विधियुक्तां सकम्बलाम्। तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरपंचशताधिकसहस्रतमः॥ १९२४॥

श्रीसूर्य उवाच।

कुलटेयं महादुष्टा पूर्वमासीत्खगाधिप। नानापापवशात्सेयं मानुषी सङ्करा स्मृता॥ १॥
धनपुत्रविहीना सा चात्र जन्मनि दृश्यते। निष्कृतिं तु प्रवक्ष्यामि प्रयागे मरणं सुत॥ २॥
वासात्तत्पापस्य हानिः पूर्वजन्मकृतस्य वै॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्युत्तरपंचशताधिकसहस्रतमः॥ १९२५॥

श्रीसूर्य उवाच।

पक्षपातं तु यः कुर्यात्सभायां ब्राह्मणस्य च। पक्षाघातेन रोगेण पीडितोऽत्रैव जायते॥ १॥
दद्यान्निष्कत्रयं स्वर्णं ब्राह्मणाय कुटुम्बिने। तस्माद्रोगाद्विमुच्येत पक्षाघातात्पतत्रिप॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरपंचशताधिकसहस्रतमः॥ १९२६॥

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा। गण्डमालाख्यरोगेण संयुक्ता जायते त्विह॥ १॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। पूर्वपापहरं पुण्यं दद्यादत्र च कम्बलम्॥ २॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते। द्विजानामिच्छया दद्याद्भोजनं पापनाशनम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरपंचशताधिकसहस्रतमः॥ १९२७॥

श्रीसूर्य उवाच।

बालकं योऽवधीत्कश्चिद्ब्राह्मणस्य खगाधिप। वंगदेशे वसन्पूर्वं चेह जन्मनि सोऽण्डज॥ १॥
धीरः सर्वकलाभिज्ञो नाल्पशास्त्रविशारदः। धनधान्यरतश्चात्र बहुस्त्रीसुखभोगभाक्॥ २॥
विद्यादानात्कृतात्पूर्वं शृणु पापफलं तथा। क्षयरोगाकुलः क्षीणः पुत्रसन्ततिवर्जितः॥ ३॥
बालघातनजात्पापाद्ब्राह्मणस्य खगाधिप। महाकोपपरो लोभी नानादुःखैस्तथाकुलः॥ ४॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्मघातविमोचनीम्। प्रयागे वा कुरुक्षेत्रे पुष्करे वा महास्थले॥ ५॥

नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान् । गन्धपुष्पैस्तथा धूपैर्लक्षसंख्यान् विधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा । षडस्रे चतुरस्रे वा कुण्डे वाज्यतिलाञ्शुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्राञ्शैवान्कासारलड्डुकैः । नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥ ८ ॥
विविधां दक्षिणां दद्याद्रुद्रप्रीतिकरीं तथा । यश्चानेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
स बालघातजातपापान्मुच्यतेऽत्र ममाज्ञया । चतुर्दश्यां महाष्टम्यां नक्तं कुर्याद्विधानतः ॥ १० ॥
ममध्यानपरो सूत नित्यं भूत्वा ममाग्रतः । पूजयेदर्घ्यपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तं तु तत्सर्वपापेभ्यो मोचयामि खगेश्वर । आयुस्तस्य शतं प्रोक्तं पश्चाब्देरधिकं खग ॥ १२ ॥
प्रायश्चित्ते कृते तस्तु पञ्चम्यां चन्द्रवासरे । विन्मये त्वत्कृते सूत चत्वारिंशन्मिताब्दके ॥ १३ ॥
रिष्टं स्यात्क्षयरोगेण बालघाताद्विनिश्चितम् । ब्रह्मघातान्महापापात्पूर्वजन्मकृताद्दढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि । बाध्यते क्षयरोगेण सप्तजन्मानि निश्चयात् ॥ १५ ॥
ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः । नहीदृशं महापुण्यं क्षयरोगविनाशनम् ॥ १६ ॥
पुत्रवृद्धिकरं चात्र यथा प्रोक्तं शिवार्चनम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरपंचशताधिकसहस्रतमः ॥ १५२८ ॥

श्रीसूर्य उवाच ।

विनापराधं या नारी परपक्षं च घातयेत् । पक्षाघातेन रोगेण पीडिताश्चैव जायते ॥ १ ॥
तथा निष्कत्रयं स्वर्णं देयं पापविशुद्धये । मुच्यतेऽत्र महारोगात्पक्षाघातान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५२९ ॥

श्रीसूर्य उवाच ।

यो द्विजः प्राग्भवे मोहात्सुरां त्रिविधजां पिबेत् । मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जायते ॥१॥
गृहवित्तानुसारेण पलेनार्धपलेन वा । कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥
आमहान्निति ब्रह्माणं स प्रभुं चोपचारकैः । पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥
दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३० ॥

श्रीसूर्य उवाच ।

वैकुण्ठादागतस्तत्र मथुरायां खगाधिप । जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
घोरे कलियुगे प्राप्ते पापाक्रान्ते महाबले । भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३१ ॥

श्रीसूर्य उवाच ।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज । कुलघ्नो जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णदशकं दद्यात्स तद्दोषविनाशनम् । चान्द्रायणत्रयं कुर्यात्तद्वा तद्दोषशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३२ ॥

श्रीसूर्य उवाच।

राजघातकरी भोक्ता पूर्वं या घातयेत्तु तम्। राजयक्ष्मान्विता सात्र तस्मिन्चयसि भामिनी ॥ १ ॥
प्रायश्चित्तं परं तस्याः शृणु पुत्र खगेश्वर। यस्मिन्कृते च विधिना पूर्वजन्माघनाशनम् ॥ २ ॥
स्वर्णं गोभूमिमिष्टान्नं घृतधेनुतिलांस्तथा। देया वै श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्ते कृते त्विह ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३३ ॥

श्रीसूर्य उवाच।

मेरोः समागता चेयं प्राप्ता माथुरमण्डले। सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगेऽत्रैव सर्वं पापविवर्जितम्। कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३४ ॥

श्रीसूर्य उवाच।

यो मोहाद्घातयेद्वैश्यमन्यजन्मनि मानवः। सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥
प्राजापत्यचतुष्केण व्रतेन नियमेन च। सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग क्षयः पापरुजस्त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३५ ॥

श्रीसूर्य उवाच।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत्। सात्र जन्मनि मूत्रस्य कृच्छ्रेणातिप्रपीड्यते ॥१ ॥
प्रायश्चित्तं परं तस्याः घोरपापहरं सुत। सुवर्णपद्मदानं च सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय विधिज्ञाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५३६ ॥

अरुण उवाच।

कश्चिद्द्विजोत्तमो जातः किंचिद्वित्तसमन्वितः। कासश्वासादिना बाधा ह्युदरार्तिः प्रजायते ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यजीविकः। प्रिया प्रीतिपरा तस्य भर्तानामनुकांक्षिणी ॥ २ ॥
किञ्चिल्लोभाभिभूता च कुवाक्यानां च वादिनी। उदरे वातजा रोगाः शिरोऽर्तिर्नेत्रतोदकृत् ॥३॥
अपत्यानि म्रियन्ते च एको द्वौ त्रय एव वा। रजोदोषात्प्रपीड्येत वेदना विविधा स्तथा ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच।

भर्तृकर्मकृतं नैव स्त्रीकृतं नात्र संशयः। पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ६ ॥
व्रतानि विविधान्येव कृतानि भुवि मानद। स्वगृहे धान्यराशेस्तु भक्षणायागतां शुभाम् ॥ ७ ॥
सवत्सां गां ब्राह्मणस्य धान्यभक्षणतत्पराम्। सा वै गृहीत्वा लकुटं भृशं कुक्षावताडयत् ॥ ८ ॥
सगर्भा सुरभिर्वत्स गर्भः कुक्ष्युपघातनात्। मृतासावामगर्भस्य प्रसवाद्दुःखिता भृशम् ॥ ९ ॥
शिशुदुःखेन सुरभिर्भृशमाक्रन्दती मृता। तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ १० ॥
पश्चान्मनुष्यमापन्ना तत्र दानप्रभावतः। तृतीयं जन्म चैतद्धि मृतापत्यत्वकारकम् ॥ ११ ॥
सप्तजन्मसु दुःखी वै गोस्त्रीब्रह्मप्रघातकः। भवेन्नानाप्रकारेण नानापत्यार्थदोषकृत् ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येनापत्यं हि जीवति । अनुग्राह्योस्म्यहं देव लोकानां हितकाम्यया ॥१३॥

श्रीसूर्य उवाच ।

मासे नभसि संप्राप्ते सानुकूल्यग्रहेऽहनि । सपत्नीकः शुचिः स्नात औषधैः स्नानमन्त्रतः ॥ १४ ॥
उपोषणं दिवारात्रौ त्रयोदश्यामतन्द्रितः । पूर्णमास्या दिनं प्राप्य प्रातश्चानुदिते रवौ ॥ १५ ॥
सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । तस्योपरि गवां स्थान उदगास्यः समाविशेत् ॥ १६ ॥
अर्हणाद्युपहारैश्च कुंकुमैरुपचर्चयेत् । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १७ ॥
तस्योपरि न्यसेद्देवं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे सायुधं सचतुर्भुजम् ॥ १८ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । विष्णुसूक्तेन सूक्तेन श्रियः सूक्तेन पूजनम् ॥ १९ ॥
पुष्पैश्च धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः । रुद्रैकादशनीभिश्च जपेद्रुद्रविधानतः ॥ २० ॥
पूजालक्षमितैः पुष्पैरर्चयेद्दन्यवारिभिः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन च ॥ २१ ॥
रुद्रस्यायुतहोमश्च समध्वाज्यसमाहुतिः । एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥ २२ ॥
होमान्ते विप्रभोज्यान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

"यन्मया कर्मवशतः पूर्वजन्मनि दुर्धिया । सगर्भायाः कृतं गोश्च लकुट्या कुक्षिताडनम् ॥२४॥
तत्कर्मवशतः प्राप्तं मृतगर्भादिकं भृशम् । मृतसन्ततिदुःखानि प्राप्यन्ते बहुपातकात् ॥ २५ ॥
तत्तदेनोविनाशार्थं दानं सम्प्रददे त्विदम्" ॥ २६ ॥

स्वस्त्यस्तु चेति तत्रोक्त्वा कोऽदादिति विसर्जयेत् । सर्पिष्यात्मानमालोक्य ह्यन्यान्वै तोषयेद्द्विजान्
भूमिद्रविणवासांसि दानं दत्त्वा विधानतः । व्रतान्ते सुरभिं दत्त्वा देयं द्रव्यादिशक्तितः ॥ २८ ॥
अहःशेषं नयेत्सर्वमिष्टबन्ध्वादिभोजनैः । ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ २९ ॥
काष्ठलोष्टादिशस्त्राद्यैर्घातः स्यादुपलेखनात् । शृङ्गिणां चोपघातश्च जायन्ते व्रणजार्तयः ॥ ३०॥
जलाकुलत्वं स्पर्शोऽग्नेः कदाचित्तत्र जायते । नार्यङ्गे विकृतिर्व्याधी मुखे तिलव्रणादिकम् ॥३१॥
पितृजामातुलान्यादेर्वैधवार्तिःस्नुषादिषु ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३७ ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । प्रदरेणातितीव्रेण सात्र जन्मनि पीड्यते ॥ १ ॥
प्रायश्चित्तं परं तस्याः प्रदरस्य विनाशनम् । दद्याद्रुक्ममयं पद्मं सा तत्र ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय दरिद्राय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३८ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रस्त्रिविधां वै सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं व्रजेत् ॥ १ ॥
चिह्नं तस्य पदे तेन लक्षितः पादजः सदा । सप्तजन्मनि रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
दृढमावपातकस्यात्र प्रायश्चित्तं न विद्यते । पापक्षये च शेषे तु कृच्छ्रसान्तपनं चरेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५३९ ॥

श्रीसूर्य उवाच ।

अकामतस्तु या नारी वैश्यघातनतत्परा । बभूव प्राक्च पक्षीन्द्र सात्र जन्मनि निश्चयात् ॥ १॥
रक्तार्बुदसमाक्रान्ता दुष्टपापप्रपीडिता । महारिष्टेन सा याति यमलोकं खगाधिप ॥ २ ॥
चत्वारिंशन्मिते वर्षे सत्यंसत्यं वदाम्यहम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५४० ॥

श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या मुरजा चेह बाहुजा । देशे सारस्वते प्राप्ता सर्वधर्मान्विता सती ॥ १ ॥
क्षयरोगयुता चात्र युवभावे खगाधिप । प्राक्पापाद्दुस्तरात्सूत कण्ठपादादिसम्भवात् ॥ २ ॥
निष्कृतिं कपिलां दद्याद्दां स्वर्णत्रयसंयुताम् । भोजयेद्ब्राह्मणान्पश्चाद्देवपूजनतत्परान् ॥ ३ ॥
या त्वेवं कुरुते भक्त्या कपिलादानमुत्तमम् । न पश्येत्सा क्षयरुजमपि प्राणप्रणाशनीम् ॥ ४ ॥
आयुर्वर्षाणि सा भुंक्ते त्वब्दसप्ततिसंख्यकम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५४१ ॥

श्रीसूर्य उवाच ।

यो नरोऽतिथलोलक्ष्मात्स्वस्त्रियं कामयेत्पुरा । इह वै यौवने प्राप्ते स उन्मादी भवेद्भृशम् ॥ १ ॥
दद्यात्प्रजापतिन्देवं सौवर्णं शक्तितोऽण्डज । मृगं स्वर्णमयं तद्वत्पूजयित्वा विधानतः ॥ २ ॥
भोजयेद्ब्राह्मणाञ्छक्त्या होमयेच्च जपेत्तथा । गायत्रीं विधिना सूत सोन्मादान्मुच्यते त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५४२ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी । सेह जन्मनि रोगेण कुनखत्वेन बाध्यते ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यते चेह जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासे तु कार्तिके ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५४३ ॥

श्रीसूर्य उवाच ।

वैश्यहन्त्री च या पूर्वभवे नारी पतिव्रता । रक्तार्बुदेन रोगेण बाध्यते सेह जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम् । सप्तधान्येन दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५४४ ॥

श्रीसूर्य उवाच ।

रौप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते । स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे खगाधिप । प्राजापत्यत्रयं सूत चरेत्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपञ्चचत्वारिंशदुत्तरपंचशताधिकसहस्रतमः ॥ १५४५ ॥

श्रीसूर्य उवाच ।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्ययुतः सुधीः । स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोग्रश्च देशे केरलके सुत । स्वामिधर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥

प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः । दुष्टाः प्रजाः क्रोधयुक्ता बभूवुर्विमुखास्तथा ॥ ३ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत । संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभाग साध्वी पतिपरायणा । तस्मिन्मृते मृता सा तु भर्तुः प्राणावलम्बिनी ॥५॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतिव्रता । मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तदा ॥ ६ ॥
तद्गुणा चान्तकालेऽपि दिवि प्राप्ता सभर्तृका । भुक्त्वा तत्र महाभोगान्पूर्वं सा स्वामिधर्मतः ॥७॥
नानाप्रजाघातनजातपापात्पूर्वसमुद्भवात् । क्षीणात्पुण्यात्तथा सूत म्लेच्छदेशे ह्यजायत ॥ ८ ॥
सिन्धोः पश्चिमभागे तु शतयोजनसम्मिते । गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुखैर्युक्तो गजयूथैः समावृतः । पत्त्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोग्रः पुत्रपौत्राढ्यश्चाद्यन्तसुखसंयुतः । देशेदेशेऽधिकाराढ्यः स म्लेच्छः पृथिवीपतिः ॥ ११ ॥
स्त्रीसाहाय्यान्महाभाग तया पुत्रसहायतः । सुखैश्वर्ययुता सापि यवनी तद्दशा विहृ ॥ १२ ॥
अपुत्रः प्राक्सहायाच्च सोऽप्यत्रैव महाप्रभुः । एवं जन्मफलं प्रोक्तं ससहायं पतत्रिप ॥ १३ ॥
स्वामिकर्मयुतात्पुण्यात्तद्धर्ममरणात्तथा । भविष्यति गतिस्तेषां पूर्वपुण्यात्पतत्रिप ॥ १४ ॥
पञ्चाशीतिमितायुः स्यात्त च रिष्टेन तन्मृतिः । रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत ॥ १५ ॥
शस्त्रप्रहारैर्विविधैः प्राप्तं त्वत्र रणाङ्गणे । प्रजापीडनजातपापात्तदेवं नात्र संशयः ॥ १६ ॥
दद्यात्कालनरं तत्र ब्राह्मणाय कुटुम्बिने । देयं हिरण्मयं तत्र बहु शतपलात्मकम् ॥ १७ ॥
कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु । सर्वोपस्करसंयुक्तं देयमेतत्तुपुत्रक ॥ १८ ॥
महारिष्टहरं प्रोक्तं प्रायश्चित्तं परं खग । नातः परतरं प्रोक्तं दानात्कालनरात्क्वचित् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये षट्चत्वारिंशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५४६ ॥

---

## श्रीसूर्य उवाच ।

या काचिद्यौवने नारी रमते स्वेच्छया परम् । बलात्कारेण पुरुषं सा चोन्मादेन पीडिता ॥ १ ॥
तत्पापनाशनं सर्वमुपायं शृणु यत्नतः । कृत्वा सुवर्णजं वायुं मृगं हैमं च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्तं दद्याद्विप्राय धीमते । न प्राप्नोति तदोन्मत्तभावं दानप्रभावतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तचत्वारिंशदुत्तरपञ्चशताधिकसहस्रतम. ॥ १५४७ ॥

---

## श्रीसूर्य उवाच ।

त्रपुहारी च यः पूर्वजन्मन्यत्रैव जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपु विप्राय धीमते । पलानां त्रिशतं शुद्धं तस्माद्रोगात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरपञ्चशताधिकसहस्रतम. ॥ १५४८ ॥

---

## श्रीसूर्य उवाच ।

अविपन्ने यया पत्यौ जाराद्गर्भो धृतः पुरा । शापाच्च जारजाद्दुष्टाच्च च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्तान्मयोदितात् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दजीवनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५४९ ॥

श्रीसूर्य उवाच।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा। सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव हि काले च तस्य रिष्टं प्रकीर्तितम्। विंशेऽब्दे चैव पक्षीन्द्र कालशास्त्रान्मृतिर्भवेत् ॥ २॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरपंचशताधिकसहस्रतमः ॥ १५५० ॥

श्रीसूर्य उवाच।

यः कश्चिद्ब्राह्मणीं सूत बलोत्कर्षेण मन्दधीः। रमयेत्प्राग्भवे सोऽत्र महोन्मादी प्रजायते ॥ १ ॥
म्रियते रिष्टयोगेन सोन्मादश्चैव जन्मनि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदुत्तरपंचशताधिकसहस्रतमः ॥ १५५१ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि या नारी मोहाल्लोभाद्धरेन्मधु। सेह जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यान्मधु तत्पापशुद्धये। तस्मिन्पापे क्षयं याते श्लेष्मरोगस्य नाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरपंचशताधिकसहस्रतमः ॥ १५५२ ॥

अरुण उवाच।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः। धनधान्यसमायुक्तश्चैश्वर्यालुश्च जनान्वितः ॥ १ ॥
सुव्रतः शक्तिमान्धीरः किञ्चिद्व्याधिसमन्वितः। इन्द्रियाणां बलं हत्वा मेहरोगेण पीडयते ॥ २॥
उदरार्तिरसृग्वातः किंचिद्देहे प्रवर्तते। तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक्सत्यकृल्लोके व्रतानामनुकांक्षिणी। बहुकालं च सुषुवेऽपत्यानि शुभलक्षणा ॥ ४ ॥
सर्वाण्यपि मृतानीह ह्यपुत्रा जीविता सती। केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि विप्रस्तु सञ्जातः पश्चिमे किल। तस्य गेहे चिराज्जाता कन्या भुवनसुन्दरी ॥ ६ ॥
भूमिद्रविणलोभेन वृद्धविप्राय सार्पिता। तस्य गेहे स्थितं यच्च सर्वस्वं श्वशुरोऽहरत् ॥ ७ ॥
यावत्कन्या भवेत्प्रौढा वरार्थं गुणशालिनी। पतिभक्तिपरा नित्यं तावत्कन्या सुतार्थिनी ॥ ८ ॥
किंचिद्वर्षे व्यतिक्रान्ते वृद्धविप्रो मृतश्च वै। सा बालविधवा जाता पत्यपत्यार्थदुःखिनी ॥ ९ ॥
व्रततीर्थरता नित्यं सत्यानामनुकांक्षिणी। बहुवर्षैस्तया वत्स नियमैः शोषितं वपुः ॥ १० ॥
तस्या निर्धनतां प्रेक्ष्य पिता पुत्र्यै धनं ददौ। किञ्चित्काले व्यतीते वै मृता सा ब्राह्मणी खग ११
सा पुत्री ह्युदरे भूत्वा ह्यगमज्जन्मजन्मनि। कन्या बहुविधास्तस्य निराधारा मृताश्च वै ॥ १२॥
तेन कर्मविपाकेन पूर्वपापाद्धृतप्रजाः। तस्य भर्तृगृहे गर्भस्रावतो मृतिमिच्छति ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युरेवं वै निष्कृतिं विना। कन्याविक्रयकर्ता च रौरवे नरके गतः ॥ १४ ॥
यातना बहुधा भुक्त्वा वर्षाणाञ्च सहस्रकम्। पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ १५ ॥
इदं चतुर्थकं जन्म बहुपुत्री स वै स्मृतः। मृतः पुत्रो मृतो गर्भस्तेन पापेन तस्य वै ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद। भर्तृविद्वेषिणी नित्यं चिरात्पत्यनुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन कन्या भूरि मृताः सुत ॥ १८ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापं प्रशाम्यति। निष्कृतिं वद विश्वात्मन्पृथक्त्वं मे प्रकाशय ॥ १९ ॥

श्रीसूर्य उवाच ।

पुत्रिका यस्य जीवन्ति पुत्राणां नाशनं भवेत् । कर्मभेदेन येनेह शृणु त्वं कश्यपात्मज ॥ २० ॥
स्वकन्यां वरयुक्तां सा चिन्तयित्वा समागमम् । दशाब्दान्वितमानेन यथाभावं यथामति॥२१॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम् । अलंकृतां यथाशक्ति वराय गुणशालिने ॥२२॥
ब्राह्मेण विधिना सुत दद्याच्च बहुदक्षिणाम् । महापापौघशमनं कन्यादानमतन्द्रितः ॥ २३ ॥
कन्याविवाहसमये महाशान्तिविधिश्चरेत् । एवं कृतविधिः सुत कन्यां दत्त्वा विधानतः ॥ २४ ॥
शान्तिकर्मणि सर्वत्र विस्तरेद्दत्विगादिकान् । भूमिद्रविणवासांसि कन्यावासांसि दापयेत्॥ २५ ॥
गृहदानं ततो दद्याद्यथोपस्करसंयुतम् । वर्षवर्षे तु सम्पूर्णे व्रतं कृत्वा तु पोषयेत् ॥ २६ ॥
एवं कृतविधिः सुत बहुपुत्रा यशस्विनी । पापं पुत्रविनाशाय कन्यापरयादिषु त्रिषु ॥ २७ ॥
तत्पापस्य प्रणाशार्थं कन्यादानादिकं चरेत् । नाशयेत्तानि पापानि द्विजानां विधिपूजनात्॥२८॥
यजन्यज्ञविधानेन ब्राह्मणान्स्वस्ति वाचयेत् । विनायकाम्बिकामूर्तीर्हेमनिष्कप्रमाणतः ॥ २९ ॥
आचार्याय ददेत्ते तु नानाकर्मोपशान्तये । ऐहिकं लक्षणं तस्या शरीरे चोपजायते ॥ ३० ॥
जिह्वारदनदन्तेषु व्रणा वातादिदोषतः । नृपचौराग्निहानिश्च विचारां च यतस्ततः ॥ ३१ ॥
तप्यमानं मनश्चैव जायते भृशमाधिना । सर्पिष्यात्मानमालोक्य प्रायश्चित्तं तयोर्विधिः ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५५३ ॥

श्रीसूर्य उवाच ।

पात्रमहारिणी नारी लोभात्पूर्वभवे सुत । औदुम्बरेण रोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः । तस्माद्दानान्महाभाग पापं नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदुत्तरपञ्चशताधिकसहस्रतम ॥ १५५४ ॥

श्रीसूर्य उवाच ।

गर्भं तु वहती या वै भुक्ता पूर्वं हि मानद । गर्भसत्रमकृत्वैवाविधिना गर्भधारणात् ॥ १ ॥
तेन कर्मविपाकेन वाहुजा सा प्रकीर्तिता । पूर्वजन्मन्यमी विप्रा न च गर्भं दधात्यलम् ॥ २ ॥
प्रायश्चित्तमिदं तस्याः सर्वपापप्रमोचनम् । कुर्याच्च गर्भसंयुक्तां राजतीमचलामिह ॥ ३ ॥
वैश्वानरस्तया कार्यः पञ्चमाषाहिरण्मयः । पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज ॥ ४ ॥
एवं कुर्याद्विधानेन सर्वपापापनोदनम् । तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय.पञ्चपञ्चाशदुत्तरपञ्चशताधिकसहस्रतम. ॥ १५५५ ॥

श्रीसूर्य उवाच ।

मृगयां प्राप्य पक्षीन्द्र गजराजवधे पुरा । जायते गजचर्मा वै नरोऽत्रैव जन्मनि ॥ १ ॥
गणेशप्रतिमां दद्यात्सौवर्णीं द्विपलात्मिकाम् । गन्धपुष्पैश्च सम्पूज्य तस्माद्रोगाद्विमुच्यते ॥ २ ॥
कारयेद्गणनाथस्य लक्षजाप्यं विधानतः । होमयेच्च दशांशेन मुच्यते पूर्वकिल्बिषात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५५६ ॥

श्रीसूर्य उवाच ।

यो हरेत्परान्नं द्वात्रं क्षुत्पीडाभिः प्रपीडितः । सोऽत्र जन्मनि पक्षीन्द्र शूलरुक्पीडितो भवेत् ॥ १॥
अन्नदानेन विप्राणां रुद्रानादिनियोगतः । मुच्यते शूलजाद्रोगान्नात्र कार्या विचारणा ॥ २ ॥

सुवर्णशूलदानाद्वा विप्रायात्र कुटुम्बिने । शूलरोगोपशमनमिह जन्मनि वै ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तरपंचशताधिकसहस्रतमः ॥ १५५७ ॥

श्रीसूर्य उवाच।

मूर्धाभिषिक्तः प्रागासीत बभूव पुरुषोत्तमः । स्वजातिषु महाभाग दृढकर्मक्रियापरः ॥ १ ॥
वैराटदेशे निवसन्राजकार्ये रतः सदा । कृतवान्गोग्रहं तत्र शत्रूणां भयदायकः ॥ २ ॥
बालवत्सा मृतास्तत्र पुरे गावः खगोत्तम। पापमाचरितं तेन नृपाज्ञाकारिणा दृढम् ॥ ३ ॥
ततो यमपुरं प्राप्तो भुक्त्वा भोगांस्तु तत्र वै । विष्णुपूजनजात्पुण्याज्जातोऽत्र यमुनातटे ॥ ४ ॥
चारणो धर्मनिरतो बहुद्रव्यसमन्वितः । नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः ॥ ५ ॥
बन्धुभृत्याधिकाराढ्यो वस्त्रभूषणभूषितः । सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु ॥ ६ ॥
धूर्तो मिथ्यापवादी च बहुलोभसमन्वितः । जातसन्ततिदुःखार्तो बालवत्सवधादिह ॥ ७ ॥
नेत्ररोगान्वितो नित्यं शृणु चिह्नं खगाधिप । चत्वारिंशन्मिते वर्षे सर्वसन्ततिनाशनम् ॥ ८ ॥
गृहपापान्महाभाग वृद्धिरिष्टसमुद्भवा । पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः ॥ ९ ॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्बालवत्साघनाशिनीम् । यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते ॥ १० ॥

श्रीसूर्य उवाच।

प्रायश्चित्तं शृणोत्वत्र तद्दर्पानन्तरं सुत । तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ ११ ॥
दृढकर्माजितात्पापाच्च चोक्तं पापशोधनम् । श्रवणाद्धरिवंशस्य वैशाखे विधिनाण्डज ॥ १२ ॥
माघे वा कार्तिके वापि दशावृत्त्या विधानतः । ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ १३ ॥
कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा । धेनूनां दशकं दद्यात्सवत्साभरणान्वितम् ॥ १४ ॥
दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम् । प्रायश्चित्तमिदं वत्स चेत्कुर्याद्विप्रपूर्वकम् ॥ १५ ॥
तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत । मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः ॥ १६ ॥
प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं यथा । द्वियुक्तमायुः कथितं तीर्थं पुण्याश्रयेऽण्डज ॥ १७ ॥
जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे । त्रयोदश्यां दिवा भूमौ ऋक्षे मृगशिराभिधे ॥ १८ ॥
निर्याणं कथितं तस्य विष्णुपूजनजात्फलात् । भविष्यति न सन्देहः पुनर्विष्णुप्रपूजनात् ॥ १९ ॥
मृत्युस्तृतीये जनुषि भविता गोग्रहात्सुत । सर्वपापाद्विशुद्धिः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरपञ्चशताधिकसहस्रतमः ॥ १५५८ ॥

श्रीसूर्य उवाच।

पिङ्गलाक्षो भवेदत्र पूर्वं रीत्यपहारकः । तेन तत्पापशुद्ध्यर्थं देयं रीतिपलं शतम् ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद्ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५५९ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग खररोमात्र जायते । पूर्वजन्मनि यो हन्यात्खरं पापाद्विमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयं सुवर्णस्य दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गवेदिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्युत्तरपंचशताधिकसहस्रतमः ॥ १५६० ॥

श्रीसूर्य उवाच ।

प्राग्युक्तं गर्भवृद्ध्यर्थं कुक्कुटाण्डं खगेश्वर । इह जन्मनि सा जाता संकरा लोभसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं दधात्येषा प्राक्पापादण्डभक्षणात् ॥ २ ॥
कृत्वाण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम् । तदर्धमितिकं वापि निजवित्तानुसारतः ॥ ३ ॥
दद्याद्द्विजाय विधिना ह्याचरेच्छाङ्करं व्रतम् । फाल्गुनादौ चतुर्दश्यां कृष्णायां मासिमासि तु ॥४॥
पूजयेच्छङ्करं रात्रौ तथा जागरणेन च । भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५६१ ॥

---

श्रीसूर्य उवाच ।

शृणु सूत महाभाग कर्म यत्कृतवान्पुरा । जीवो हि तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः । राजप्रचारी बलवान्क्रूरो मन्त्री महायशाः ॥ २ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः । गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदुष्करम् । लुण्ठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलीकृताः । स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥५॥
भुक्त्वा तु दारुणान्सूत नरकान्घोरदर्शनान् । तथा पुण्यफलात्पुण्यं प्राप्य मोदं विशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा । नानाचौर्यक्रियायुक्तो लोकवञ्चनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि । सुखैश्वर्यधनैर्युक्तः कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः । वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम् । पूजयेत्तु त्रिवर्षान्तं मन्त्रैस्तल्लिङ्गजैस्तथा १०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः । संपूज्य विधिवद्देवं तदन्ते भोजयेद्द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्पूजयेद्दक्षिणादिभिः । नानाहिरण्यैर्विविधैस्तथा चाभरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः । ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापप्रणाशनम् । सम्प्राप्यात्र च निर्याणे शिवलोकं हि गच्छति ॥ १४ ॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यप । नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तप्ता शलाका देया वै श्रुते कर्णेऽतिदारुणा । श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुरब्दशतं तस्य कृतनिष्कृतिकस्य वै । प्रायश्चित्तेऽकृते रिष्टं जायते पष्ठवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५६२ ॥

---

श्रीसूर्य उवाच ।

या नारी प्राग्भवे हन्यात्खरमत्रैव जन्मनि । खररोमसमानानि रोमाणि प्रभवन्ति हि ॥ १ ॥
ब्राह्मणाय ततो दद्यात्स्वर्णं निष्कत्रयं सुत । जायते सूक्ष्मरोमा सा विनतानन्दवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५६३ ॥

---

श्रीसूर्य उवाच ।

या पुरा तु हरेद्रीतिं नारी सा च खगाधिप । पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥

रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम् । गायत्र्या जुहुयाच्छक्त्या तिलान्रोगविनाशनम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५६४ ॥

श्रीसूर्य उवाच ।

प्राग्भवे वनिता या च परासद्धान्नहारिणी । सेह जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नस्य च विप्रेभ्यो दीनेभ्योऽथ खगाधिप । भिक्षुभ्यश्च तथा दानाद्रसदानाच्च शक्तितः ॥२॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः । प्रायश्चित्ते कृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५६५ ॥

श्रीसूर्य उवाच ।

शृणु चात्र खगश्रेष्ठ प्राणिनश्च विचेष्टितम् । बभूव गौडदेशे तु शूरो धनसमन्वितः ॥ १ ॥
ग्रामाधिपो महाशूरो राज्यमान्यः प्रतापवान् । दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः ॥२॥
पुण्यतीर्थेषु स्नानानि कृतवान्धर्मबुद्धितः । अथो भाविवशात्सूत कृतवान्दुष्कृतं महत् ॥ ३ ॥
सहायैः पञ्चभिस्तेन मिलित्वा कर्म दारुणम् । कृतं यत्तदहं वक्ष्ये क्षेत्रकर्मणि लोभतः ॥ ४ ॥
ददाह क्रूरबुद्ध्या च वनं जन्तुसमाकुलम् । वनजीवास्तथा दग्धा मृगसर्पादिजातयः ॥ ५ ॥
पापमाचरितं तेन भाविनोऽर्थस्य गौरवात् । स तेन कर्मणा युक्तो गत्वा तु यमशासनम् ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा स जातो मुखजोऽधुना । पूर्वपुण्यविशेषेण गिरौ केदारमण्डले ॥ ७ ॥
हिमालये पुण्यदेशे गौरो मध्यश्च बुद्धिमान् । नातिह्रस्वो नातिदीर्घो सर्वकार्यविचक्षणः ॥ ८ ॥
गतागतधनैर्युक्तो वरवाञ्जनवल्लभः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ९ ॥
गूढचेष्टो महामानी दाक्षिण्यरहितैर्युतः । मनोदुःखसमाक्रान्तः कापट्येन च संयुतः ॥ १० ॥
प्राग्भवे वनदाहे तु ये स्युस्तस्य सहायकाः । अत्र जन्मनि ते पुत्रा मृतास्तत्प्राणिनोऽण्डज ॥ ११ ॥
तस्य प्रिया सदाचारा रोगक्लेशैश्च संयुता । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
वनदेवी तथा कार्या पलेनैकेन शोभना । हिरण्मयी तथा लेख्या पत्रे च चतुरस्रके ॥ १३ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । वनजीवास्तथा लेख्याः पत्रे रजतसम्भवे ॥ १४ ॥
पलमात्रे महाभाग गन्धैः पुष्पैश्च पूजयेत् । माषत्रयमितो वह्निस्तथा चैव हिरण्मयः ॥ १५ ॥
आहूय ब्राह्मणान्भक्त्या तेभ्यो देया विधानतः । गायत्रीमष्टसाहस्रं त्र्यम्बकं द्विविधं तथा ॥१६॥
अग्निन्दूतं द्विसाहस्रं जपेदष्टाक्षरन्तथा । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ १७ ॥
पार्थिवान्पूजयेद्यत्नान्महादेवान्प्रयत्नतः । अयुतं संख्यया भक्त्या आर्द्रके व्रतमाचरेत् ॥ १८ ॥
मन्मूर्तिं पूजयेन्नित्यं मम भक्तिपरायणः । प्रायश्चित्तमिदं प्रोक्तं पूर्वजन्माघनाशनम् ॥ १९ ॥
एवं कृते महाभाग प्रायश्चित्ते विधानतः । तस्य सन्ततिवृद्धिः स्याज्जायन्ते सम्पदश्च वै ॥२०॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । न पुत्रमरणं किञ्चिन्नच रिष्टभयं क्वचित् ॥ २१ ॥
द्व्यशीतिमितवर्षान्तं सुखी जीवति मानवः । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥२२॥
न सुखं लभते क्वापि रिष्टं नैव मृतिर्भवेत् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्युत्तरपंचशताधिकसहस्रतमः ॥ १५६६ ॥

श्रीसूर्य उवाच ।

बभूव यामुने देशे वैश्यो व्यापारवान्भुवि । विप्रभक्तिपरो नित्यं कृषिवाणिज्यतत्परः ॥ १ ॥

धनवान्राजसम्मानी भार्यापुत्रसुहृद्युतः । सहोदरयुतो मानी धर्मकर्मार्थसाधकः ॥ २ ॥
कृतवान्कपिलादानं ब्राह्मणेभ्योतिभक्तितः । कार्तिके मधुपुर्यां वै स्वर्णदानं चकार वै ॥ ३ ॥
घृतमज्वालितान्दीपान्दत्तवान्यमुनाजले । ब्राह्मणेभ्यो ददावन्नशय्यावसनकम्बलान् ॥ ४ ॥
अथो भाविवलात्सूत कृतं यत्कर्म दारुणम् । व्यभिचारभवं सूत भार्यायां प्रतिवेशिनः ॥ ५ ॥
ब्राह्मणस्य खगश्रेष्ठ सात्त्विकस्य महात्मनः । अप्रसूता प्रिया तस्य चपला चारुलक्षणा ॥ ६ ॥
वैश्यस्तां कामयामास लोभमोहादिविभ्रमैः । अज्ञानात्काममिच्छन्तावुभावपि बलीयसः ॥ ७ ॥
कामस्य वशमापन्नो ब्राह्मणो जनताङ्गतः । स वैश्यो दैवयोगाच्च भाविनोर्थस्य वै बलात् ॥ ८ ॥
सतीं वै धर्षयामास बहुकालं खगेश्वर । व्यभिचारवशात्तस्य चान्योन्यैरतत्कृतं धनम् ॥ ९ ॥
गृहीतं तद्धनं चैव तेन धूर्तेन मानद । ततो लोकापवादेन ब्राह्मणीमत्यजद्द्विजः ॥ १० ॥
ततः सा निधनं प्राप्ता ब्राह्मणी दुःखतोण्डज । निर्वंशो ह्यभवत्तस्य ब्राह्मणस्य खगेश्वर ॥ ११ ॥
ब्राह्मणोऽपि मृतस्तत्र तद्दुःखेन खगाधिप । ततो बहुतिथे काले वैश्यस्तु यमशासनम् ॥ १२ ॥
गत्वा पापफलं पापात्पुण्यात्स्वर्गञ्च शाश्वतम् । भुक्त्वा पुण्यप्रभावाच्च स जातो ब्राह्मणस्त्विह १३
हिमालये पुण्यदेशे गङ्गा वहति यत्र वै । इदं चतुर्थं वै जन्म ब्रह्मवंशसमुद्भवम् ॥ १४ ॥
मध्ये जन्मत्रये प्राप्तं यद्दुःखं तन्महोल्बणम् । नोक्तं मया खगश्रेष्ठ चतुर्थे जन्मनि ध्रुवम् ॥ १५ ॥
स्यात्कृष्णगौरो मतिमान्राजमान्यः प्रियंवदः । विद्यावान्मितवाक्शूरो नात्युच्चो न लघुर्घृणी १६ ॥
दयावान्वैदिकाचारो वेदद्विजपरायणः । ग्रामाधिपः सुभोक्ता च पौत्रभ्रातृसुतान्वितः ॥ १७ ॥
यशस्वी सत्यवाङ्मानी कृती बहुजनप्रियः । सन्धिविग्रहसंयुक्तो धनी बन्धुप्रियः सुखी ॥ १८ ॥
नैकस्त्रीसंयुतः कामी मितदो बहुमित्रभाक् । पुण्याद्दिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १९ ॥
मनोदुःखैः समाक्रान्तो ह्युदरे वातशूलयुक् । गतागतधनैर्युक्तो दायादकलहैर्युतः ॥ २० ॥
मिथ्यापवादशङ्काभिः शंकितः कपटैर्युतः । अनागसः स्वभार्यायास्त्यागात्सङ्गाद्द्विजस्त्रियाः ॥ २१ ॥
ब्रह्मस्वभक्षणात्पापाद्वंशच्छेदोऽत्र दृश्यते । भार्यावियोगमाप्नोति नैकभार्यां स विन्दति ॥ २२ ॥
महोद्विग्नमनाः सोऽपि न रतिं लभते क्वचित् । किं मया दुष्कृतं पूर्वं कृतं चिन्तयति स्वयम् ॥ २३ ॥
अहो दैवमहो दैवं चिन्तयन्मुहुर्दुःखभाक् । न सुखं भ्रातृपुत्रोत्थं न पित्रोर्नसुताभवम् ॥ २४ ॥
कुटुम्बकलहो दौस्थ्यं स्त्रिया दुःखं मुहुर्मुहुः । द्विपश्चाशदब्दके वै जातपुत्रविनाशकः ॥ २५ ॥
लग्नाद्गे पञ्चमे द्यूने क्रूरग्रहनिरीक्षिते । त्रिग्रहैरीक्षिते तत्र त्रिधा स्त्रीपुत्रनाशनम् ॥ २६ ॥
इदं जीवेदिदं जीवेदित्याशाखिन्नमानसः । ब्राह्मणतल्पगात्पापाल्लग्नाद्गे लक्ष्मसंयुतः ॥ २७ ॥
एवं तु लक्षणैर्युक्तः कुर्यात्पापविशोधनम् । प्रायश्चित्ते कृते सूत भार्यास्थितिर्भविष्यति ॥ २८ ॥
पुत्रपौत्राभिवृद्धिश्च वंशवृद्धिर्भवेत्तथा ॥ २९ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन्येन दुःखं विनश्यति । स्त्रियाः स्थितिर्भवेत्स्वामिन्वंशवृद्धिर्भवेत्प्रभो ॥ ३० ॥
संसारार्णवमग्नानां प्रसीद परमेश्वर । कथयस्व दिवानाथ भुक्तिमुक्तिप्रदो भव ॥ ३१ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो कथयिष्ये तवाखिलम् ॥ ३२ ॥
तस्येदं कर्ममानेन प्रायश्चित्तं यथोदितम् । तेनेदं मुनिभिः प्रोक्तं प्रायश्चित्तं यथा तथा ॥ ३३ ॥
उमामहेश्वरौ देवौ सौवर्णौ कारयेच्छुभौ । पलद्वयमितौ कार्यौ विधानेन प्रपूजितौ ॥ ३४ ॥

नानाचन्दनचर्चाभिः पुष्पधूपैर्मनोहरैः । सौभाग्याष्टकसंयुक्तपूजनाच्च शुभानना ॥ ३५ ॥
उमामहेश्वरप्रीत्यै दम्पती परिधापयेत् । ततो हिरण्मयीं देवीं ब्राह्मणाय समर्पयेत् ॥ ३६ ॥
यथा त्वमुमया देव सभार्योऽसि महेश्वर । तथा तव प्रसादेन सभार्यं कुरु मां प्रभो ॥ ३७ ॥
यथा त्वं पुत्रयुक्तो मां पुत्रवन्तं तथा कुरु । ततस्तिलाचले द्रोणे शुक्ले द्वादशमाषिकाम् ॥ ३८ ॥
तिलपूर्णे न्यसेन्नार्याः प्रतिमां वस्त्रसंयुताम् । सुवर्णप्रतिकां वापि सर्वभूषणभूषिताम् ॥ ३९ ॥
कृत्वा प्रतिष्ठितप्राणां विप्राय गुणशालिने । दद्याद्दक्षिणया युक्तां विधिवद्विदितार्हणाम् ॥
श्रद्धया देवविप्रोक्तं मन्त्रमेतं समुच्चरेत् ॥ ४० ॥

मन्त्रः ।

"यन्मया प्राचि जनुषि ब्राह्मणीं संयतेन्द्रियाम् ॥ ४१ ॥
पतिव्रतपरां नारीं बलेनाक्रम्य सुव्रता । पापं नार्या वियोगाख्यमिदं प्राप्तं सुदुःसहम् ॥ ४२ ॥
ब्रह्मस्वभक्षणाज्जातपुत्रनाशाख्यकिल्बिषम् । महेनसोऽस्य नाशाय सौवर्णी योषिताकृतिः॥ ४३ ॥
तिलाचलोपरि भ्राजच्छुक्लपात्रे तिलैर्भृते । समारोप्य मया दत्ता तुभ्यं विष्णुस्वरूपिणे ॥ ४४ ॥
दानेनानेन मे ब्रह्मन्महेनस्त्वद्विनश्यतु" । त्रिर्वदन्निति सम्पूज्य चैवमस्त्विति वादिनम् ॥ ४५ ॥
अग्रेनयेति मन्त्रेण प्रणिपत्य विसर्जयेत् । द्विसुवर्णेन मन्मूर्तिं दैवज्ञाय निवेदयेत् ॥ ४६ ॥
ततस्तु भोजयेत्तस्मिन्दिने नानाविधाङ्गनाः । एवं कृते सभार्यः स्यात्पुत्रपौत्रसमन्वितः ॥ ४७ ॥
भक्तियुक्तेन मनसा किल्बिषान्मुच्यतेऽचिरात् । गायत्रीमष्टसाहस्रं त्र्यम्बकन्तु तथा जपेत् ॥४८॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । श्रवणं हरिवंशस्य वंशवृद्धिकरं परम् ॥ ४९ ॥
अन्नैर्नानाविधैर्भक्ष्यैर्नवोढां द्विजदम्पतीन् । भोजयेद्विधिवत्तार्क्ष्य श्रद्धया परया सुतः ॥ ५० ॥
गामेकां दक्षिणां दद्यात्सर्वाभरणभूषिताम् । सपिण्ड्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः ॥५१॥
एवं कृतविधेः सूत पूर्वजन्माघनाशनम् । नाधयो व्याधयस्तस्य न च मृत्युभयं भवेत् ॥ ५२ ॥
नच शत्रुकृता पीडा न पुत्रमरणं भवेत् । न भार्यामरणं तत्र प्रायश्चित्ते कृतेऽधुना ॥ ५३ ॥
आयुष्यूनशताब्दान्तं भवत्येव न संशयः । अकृते तु यथाशक्त्या प्रायश्चित्ते खगाधिप ॥ ५४ ॥
भार्यापुत्रसुखं तस्य न भवेदत्र जन्मनि । सप्तपञ्चाशदब्दे तु रिष्टं भवति दारुणम् ॥ ५५ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥५६॥

इति श्रीवृद्धसूर्य लिण्संवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तरपंचशताधिकसहस्रतमः ॥ १५५७ ॥

## श्रीसूर्य उवाच ।

वैनतेय शृणु त्वं हि प्राणिनस्तस्य चेष्टितम् । आसीत्क्षत्री महाभाग प्रयागे देशके शुभे ॥ १ ॥
धनवान्भोगयुक्प्राज्ञो भृत्यवाहनसंयुतः । राजसेवापरो मन्त्री धर्मशास्त्रार्थकोविदः ॥ २ ॥
अहंयुः कीर्तिमाञ्छूरो ब्राह्मणातिथिपूजकः । परोपकारनिरतो वेदविद्याविशारदः ॥ ३ ॥
गोरोगभञ्जनश्चक्रे देशे मण्डलके तथा । दिव्यौषधीनां योगैश्च नानोपायैः प्रयत्नतः ॥ ४ ॥
दत्तानि तेन दानानि प्रयागे मृगगे रवौ । सुवर्णरत्नभूपान्नवसनाच्छादनानि च ॥ ५ ॥
अथो पापं भृशं चक्रे जात्यहंकारबुद्धितः । पितृमातृगुरूणाञ्च निन्दाञ्चैव चकार ह ॥ ६ ॥
बान्धवानाञ्च वृद्धानामवहेलनकर्मतः । बाल्यमारभ्य नियतं पित्रोरुल्लंघ्य शासनम् ॥ ७ ॥
उच्छृंखलतया चक्रे यद्यत्कर्म स बाहुजः । ततो मातिबलात्सूत गुरोरपि महात्मनः ॥ ८ ॥
विद्यामभ्यस्य तस्यैव निन्दाञ्चक्रेऽल्पबुद्धितः । ततो बहुतिथे काले सम्प्राप्य यमशासनम् ॥ ९ ॥

पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकांस्तथा । पूर्वपुण्यप्रभावेण स जातो ब्राह्मणोऽधुना ॥ १० ॥
वाराणसीमहाक्षेत्रे पुण्ये शम्भुसमाश्रिते । नात्युच्चो नातिदीर्घश्च रक्तवर्णः प्रतापवान् ॥ ११ ॥
बुद्धिमान्नीतिमान्वाग्मी धाता भोक्ता जनप्रियः । लग्नात्पञ्चमगैः क्रूरैः शुभैः पञ्चभिराश्रितः ॥ १२ ॥
ब्रह्मसंस्कारयुक्तश्च गुणी मानी यशोन्वितः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १३ ॥
पितृमातृगुरुभ्रातृबन्धुस्त्रीनिन्दया पुरा । वैरिहीनोऽत्र जनुषि पुत्रस्त्रीसुखवर्जितः ॥ १४ ॥
चतुर्थाश्रमसंयुक्तो नैकवासी जितेन्द्रियः ॥ १५ ॥

अरुण उवाच ।

प्रायश्चित्तं कथन्देव तस्य जन्तोरिह ध्रुवम् । किं कर्तव्यं समाचक्ष्व प्राणिनां हितकाम्यया ॥ १६ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं त्वया सूत वक्ष्ये तत्पापशोधनम् । गायत्रीदशसाहस्रं त्र्यम्बकं च तथा जपेत् ॥ १७ ॥
अष्टाक्षरं महामन्त्रं चतुर्विंशत्सहस्रकम् । जपेन्नियमयुक्प्राज्ञो गङ्गातीरे महौजसि ॥ १८ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । रुद्रैकादशिनीभिश्च रुद्रैकादशकेन च ॥ १९ ॥
पूजयेच्च महारुद्रं रुद्रमेकादशात्मकम् । एवं कृतविधेः सूत पूर्वजन्माघनाशनम् ॥ २० ॥
सद्गतिस्तस्य जायेत चान्ते मोक्षमवाप्नुयात् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ २१ ॥
त्रिहीने पष्टिसंख्येब्दे रिष्टेणैव मृतिर्भवेत् । सद्गतिं नैव चाप्नोति जन्मजन्मनि दुःखभाक् ॥ २२ ॥
प्रायश्चित्ते कृते पुत्र शतं च चतुरुत्तरम् । वर्षाणि जीवनं तस्य प्रोक्तं चैव महात्मनः ॥ २३ ॥
अन्ते सद्गतिमाप्नोति यत्र देवो महेश्वरः । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २४ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपष्ट्युत्तरपञ्चशताधिकसहस्रतम ॥ १५६८ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । गौडदेशे बभूवार्ता भार्गवे विनतात्मज ॥ १ ॥
बाहुजानां कुले प्राज्ञो धर्मवित्संयतेन्द्रियः । धनवाहनभोगाढ्यो राजसेवापरः सुखी ॥ २ ॥
सन्धिविग्रहसंयुक्तः क्लीबो धर्मविदुत्तमः । स्वगोत्रजातसहायाच्च प्रयागे गरुडाग्रज ॥ ३ ॥
मधुधेनुमहादानं ब्राह्मणाय प्रदत्तवान् । विष्णुपूजारतो नित्यं सर्वजीवदयापरः ॥ ४ ॥
अथो भाविवलात्सूत कृतवान्कर्म दारुणम् । राजाज्ञया रिपूणाश्च देशं लुण्ठितवान्खग ॥ ५ ॥
तत्र गोग्रहणं सूत कृतवान्पापरुपप्रियः । तत्रैका गौर्महाभाग ह्यासन्नप्रसवा स्थिता ॥ ६ ॥
शीघ्रं गन्तुमशक्ता सा ताडिता तेन वै भृशम् । तेन गर्भाच्च्युतो वत्सो मृता सा गर्भपीडया ॥ ७ ॥
गोघातनान्महाभाग घोरं पापमुपार्जितम् । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ८ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलन्तथा । पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना ॥ ९ ॥
केदारमण्डलप्रान्ते गङ्गातीरे हिमालये । स कृष्णगौरो मतिमान्सेनानीः प्रियदर्शनः ॥ १० ॥
नात्युच्चो नातिदीर्घश्च नातिस्थूलः कृशो न च । बहुग्रामाधिपः शूरो मितवाग्ब्राह्मणप्रियः ॥ ११ ॥
राजप्रियो नीतिविच्च नैकस्त्रीसङ्गसुखसुखी । सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियम्वदः ॥ १२ ॥
धनवान्वाहनोपेतो भृत्यैश्च परिवारितः । पशुदासीसुसंयुक्तो बन्धुमित्रसुसंयुतः ॥ १३ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । भार्गवे गोवधात्पापाज्जातपुत्रविनाशकः ॥ १४ ॥
द्विचत्वारिंशदब्दान्तं कदाचित्तनौयसंयुतः । गोवधाच्च महापापात्स्त्रीसुखं नैव विन्दति ॥ १५ ॥

गूढचेष्टो वक्रमतिः कुक्षौ गोताडनात्सुत । कुक्षिशूलयुतः क्वापि क्वापि दन्तरुजान्वितः ॥ १६ ॥
जन्माङ्गात्पञ्चमे ह्यूने क्रूरग्रहविलोकिते । कदाचित्कण्ठरुक्चास्य ह्यन्नपाकस्तथा न च ॥ १७ ॥
वातरुक्संयुतो वापि गृहे कलहसंयुतः । दाने या स्त्री सहायासीत्सात्र माता प्रकीर्तिता ॥ १८ ॥
यो वत्सो गोश्च्युतो गर्भात्स सुतोऽभून्मृतिं गतः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदामि ते॥१९॥
पलत्रयमिता कार्या सौवर्णी वत्ससंयुता । लेख्या पत्रे शुभे धेनुर्गन्धपुष्पार्चनादिभिः ॥ २० ॥
सम्पूज्य विधिना सूत सा देया ब्राह्मणाय वै । रजतेन च कर्तव्यो दण्डः पञ्चपलैः शुभः ॥२१ ॥
माषसप्तमितो यष्टिः सौवर्णी विधिना सुत । देयो विप्राय विदुषे दरिद्राय कुटुम्बिने ॥ २२ ॥
गायत्रीमष्टसाहस्रं त्र्यम्बकन्तु तथा जपेत् । अष्टाक्षरस्तथा जप्यश्चतुर्विंशतिसंख्यया ॥ २३ ॥
होमयेत्तद्दशांशेन तिलराज्यपरिप्लुतैः । ब्राह्मणान्भोजयेत्पश्चात्सर्पिष्यात्मानमीक्षयेत् ॥ २४ ॥
लक्षं पार्थिवलिङ्गानां पूजयेत्पुत्रवृद्धये । मद्दिने तु व्रतं कुर्यात्सर्वपापापनुत्तये ॥ २५ ॥
एवं कृतविधेः सूत पूर्वपापौघनाशनम् । नाधयो व्याधयस्तत्र न शत्रुभयमावहेत् ॥ २६ ॥
न पुत्रमरणं तस्य न स्त्रीमरणमेव च । सम्पदस्तस्य जायन्ते पुत्रपौत्राभिवृद्धितः ॥ २७ ॥
द्व्यशीतिमितवर्षान्तमायुस्तस्य प्रकीर्तितम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ २८ ॥
सुखं न लभते क्वापि नरकञ्च प्रपद्यते । पञ्चाशद्वर्षके रिष्टं तेनैव मरणं भवेत् ॥ २९ ॥
जन्मादिमरणान्तश्च स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तत्तच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १६६९ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । क्षत्रियस्य कुले भूत्वा सेनापत्यसुखान्वितः ॥ १ ॥
ब्राह्मणान्बाधते यो हि तत्फलं श्रूयतां खग । एकदाथ महालोभात्सेनापत्यमदान्वितः ॥ २ ॥
ब्राह्मणस्य गृहे गत्वा प्रार्थयामास तद्धनम् । तदा विप्रस्य गेहे वै वर्तते याज्ञिकी क्रिया ॥ ३ ॥
तत्तत्कर्माकुलत्वेन दत्तवानुत्तरं न सः । ततः सञ्जातकोपेन क्षत्रियेण दुरात्मना ॥ ४ ॥
महापातकिना तेन कृतो यज्ञस्य संक्षयः । ब्राह्मणास्तत्र होतारो वेदशास्त्रविशारदाः ॥ ५ ॥
हता यष्टिप्रहारेण यज्ञवाटीबहिःकृताः । सर्वांस्तत्रोपहारांश्च क्षिप्तवान्सर्वतो दिशः ॥ ६ ॥
रुद्रकुम्भः समुत्थाप्य निक्षिप्तः कुण्डमध्यतः । तत्कुम्भजलसम्पर्काच्छमितोऽग्निश्च संस्कृतः॥७॥
तदा स कुपितो वह्नी रुद्रेणापि समन्वितः । एवं स दारुणं कर्म कृत्वा तापमुपागतः ॥ ८ ॥
पश्चात्तापसमायुक्त आत्मानमशपत्ततः । हा देवि किं कृतं पापं मया दुर्बुद्धिना भृशम् ॥ ९ ॥
ब्राह्मणा निहताः कस्मात्कस्माद्वै ध्वंसितो मखः । कस्माद्रुद्रघटः क्षिप्तः कस्माद्वह्निर्विदूषितः॥१०
एवं सञ्चिन्त्य बहुधा ह्यात्मानमशपत्ततः । संन्यस्तः स ततो भूत्वा पुण्यं वै कृतवान्बहु ॥ ११ ॥
तीर्थानि बहुधा गत्वा मृतः कालविपर्ययात् । स तत्पुण्यवशेनाथ जातो वै धनिनां कुले ॥१२॥
तस्मिन्वयसि सम्प्राप्ते तत्कृतं तमनुव्रजेत् । महाज्वरो भवेत्तस्य ह्यन्तर्दाहसमन्वितः ॥ १३ ॥
हृन्मूर्छनाभराक्रान्तो न शर्म लभते क्वचित् । भूयो भूयो भवत्येष पुनः शान्तिमुपैति च ॥१४॥
अन्तर्हृत्स समाविश्य महादाहं करोत्यसौ । खदिराङ्गारवत्तीक्ष्णो मेदोमांसबलानि च ॥ १५ ॥
प्रत्यहं शोषयेज्जन्तुं यतमानं न मुञ्चति । दिनैर्मासैश्च गच्छद्भिः शोफो हस्तोदराङ्घ्रिषु ॥ १६ ॥
कासश्वासाग्निमान्द्यानि कृच्छ्रातीसारमेहकाः । पीनत्वमुदरे चास्य कृशत्वं हस्तपादयोः ॥ १७ ॥
अङ्गाराग्निरिवास्य हृदयं परितप्यते । मुहुस्तृषापि वमनं शेते पश्चान्मुहुर्मुहुः ॥ १८ ॥

औषधैर्याति यतते शान्तिं भिषग्भिरुपकल्पितैः । कर्मणा तेन तस्यैव पूर्वजन्मकृतेन वै ॥ १९ ॥
म्रियते च स रोगेण ज्वरेण दुःसहेन सः । एवं स वेदनायुक्तः सप्तजन्मनि वै खग ॥ २० ॥
यावन्न कुरुते तस्य निष्कृतिं कर्मणश्च सः । विधिवद्ब्राह्मणैः स्पृष्टा तावत्कर्म न मुञ्चति ॥ २१ ॥
एवं स कर्मणि ज्ञाते प्रायश्चित्तं समाचरेत् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ २२ ॥
आस्तीर्य कम्बलं प्रौढं स्थापयेत्तत्र पर्वतान् । मध्ये तिलाचलं दिक्षु प्रादक्षिण्येन चापरान् ॥२३॥
द्रोणद्वितयमानाढ्यान्फलपुष्पसमन्वितान् । मद्विधीन्द्रमहेशानवातूर्णां प्रतिमाः शुभाः ॥ २४ ॥
शुद्धवर्णसुवर्णस्य प्रत्येकं हस्तमानतः । यथोक्तेन विधानेन प्रतिष्ठापूजनादिभिः ॥ २५ ॥
देवज्ञादिकविप्रेभ्यो यथावत्प्रतिपादयेत् ॥ २६ ॥

मंत्रः ।

"यन्मया प्राचि जनुषि यज्ञलोपं वितन्वता । महादाहज्वरमयं दुःखमाप्तमरुन्तुदम् ॥ २७ ॥
भवन्मूर्तिप्रदानेन भवेयं ज्वरवर्जितः" । इत्युक्त्वाशिष आदाय विप्रानन्यांश्च दापयेत् ॥ २८ ॥
मृत्युञ्जयं जपेल्लक्षं जुहुयात्तद्दशांशतः । सहस्रकलशैरीशं स्नापयेन्मौनमुद्वहन् ॥ २९ ॥
त्र्यक्षरं त्र्यम्बकाख्यं ततोऽसौ विज्वरो भवेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५७० ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । गौडदेशेऽतिविरूपाक्षः क्षत्रियो विनतासुत ॥ १ ॥
देशेदेशेऽधिकाराढ्यः स्त्रीपुत्रधनसंयुतः । दत्तानि तेन दानानि ब्राह्मणेभ्यः खगाधिप ॥ २ ॥
शालग्रामहिरण्यानि वस्त्रान्नादीनि चाण्डज । अथो भाविबलात्सूत पापं चक्रेऽतिदारुणम् ॥ ३ ॥
ब्रह्मस्वहरणारूपन्तु ब्रह्मघातसमं सुत । यूनिभावे महाभाग केनचिद्ब्राह्मणेन च ॥ ४ ॥
धनं घटस्थं निक्षिप्तं तद्गृहे गरुडाग्रज । राजभीत्या गतः सोऽपि विदेशे द्विजसत्तमः ॥ ५ ॥
क्षत्रियेण सतस्तेनाप्यसहायेन लोभतः । भुक्तं तद्धनमज्ञानात्सर्वं हि गरुडाग्रज ॥ ६ ॥
ततो द्विजः समासाद्य धनं याचितवान्स्वकम् । वृद्धभावे खगश्रेष्ठ तेन दत्तं न तद्धनम् ॥ ७ ॥
क्षुधितः स मृतो विप्रो घोरं पापमुपार्जितम् । ब्रह्मघातसमं सूत भाविनोऽर्थस्य गौरवात् ॥ ८ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गांश्च शाश्वतान् ॥९॥
पूर्वपुण्यप्रभावेण जातः सोऽत्र महीतले । केदारदेशे विख्याते पुण्ये चोच्चकुले महान् ॥ १० ॥
स कृष्णगौरो मतिमान्राजमान्यः प्रियम्वदः । नात्युच्चो नातिह्रस्वश्च दृढाङ्गः सुन्दराननः॥११॥
शूरो मन्त्री महामानी देवद्विजपरायणः । सेनाधिपो महाप्राज्ञो राजसेवासु तत्परः ॥ १२ ॥
सन्धिविग्रहसंयुक्तो दाता मन्त्री विशालदृक् । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्॥१३॥
क्रोधी दुर्व्यसनैर्युक्तः क्वचित्कार्यस्य हानिकृत् । ब्रह्मस्वहरणात्पापात्तथा ब्राह्मणघातनात्॥१४॥
स्त्रीपुत्रसुखमत्रापि लभते नैव सर्वदः । उदरे वातजै रोगैः शूलेनापि च संयुतः ॥ १५ ॥
मन्दाग्निर्जायते तस्य जठरे क्रिमिभिः सदा । सदा चिन्तावृतो भूत्वा तथाऽप्राप्तमनोरथः ॥ १६ ॥
रोगक्लेशादिसंयुक्तः शत्रुपीडाभिरन्वितः । लग्नाद्व्ययपञ्चमे भावे जायास्थाने विशेषतः ॥ १७ ॥
क्रूरदृष्टियुतो वापि सौम्यैश्चापि च संयुतः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदामि ते ॥ १८ ॥
पलैः पञ्चमितैः कार्यो ब्राह्मणस्तु हिरण्मयः । लक्ष्मीनारायणश्चापि पलत्रयमितः शुभः ॥ १९ ॥
यजेत्तल्लिङ्गकैर्मन्त्रैः षोडशोपचारकैः । गणेशार्कमहेशाग्निमोमाः कार्या हिरण्मयाः ॥ २० ॥

त्रित्रिमाषमितैः सम्यक्पूर्ववत्परिपूज्य च। दैवज्ञादिद्विजेभ्यो वै देयाश्च विधिना खग ॥ २१ ॥
चतुर्विंशतिसाहस्रं गायत्रीं विधिना जपेत्। अष्टाक्षरं महामन्त्रं जपेदयुतसंख्यया ॥ २२ ॥
अन्यासां देवतानां च मन्त्रांस्त्रित्रिसहस्रकान्। होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् २३ ॥
ताम्रपात्रं शतपलसंमितं घृतपूरितम्। सुवर्णपञ्चसंयुक्तं दद्याद्विप्राय धीमते ॥ २४ ॥
ब्रह्मस्वहरणात्पापान्मुच्यते नात्र संशयः। नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥ २५ ॥
न पुत्रमरणं किंचिन्नरोगभयमुल्बणम्। नापमृत्युभयं तस्य स सर्वत्र जयी भवेत् ॥ २६ ॥
एधन्ते सम्पदस्तस्य शतं वर्षाणि जीवति। स सप्तदशकानीह चान्ते सद्गतिमाप्नुयात् ॥ २७ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। न सुखं लभते क्वापि चाधिव्याधिसमन्वितः २८ ॥
रिष्टेणैव मृतिस्तस्य त्रयस्त्रिंशाब्दके ध्रुवम्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २९ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरपंचशताधिकसहस्रतमः ॥ १५७१ ॥

## श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। गौडदेशेऽतिविख्यातो द्विजश्रेष्ठः पुराऽभवत् ॥ १ ॥
धर्मशास्त्रक्रियायुक्तो राजमान्यः प्रतापवान्। धनवाहनभोगाढ्यो ग्रामपो विश्रुतो महान् ॥ २ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ ३ ॥
विविधानि च गोदानं ब्राह्मणेभ्योऽतिशक्तितः। शिवपूजारतश्चैव ह्यतिथीनां च पूजनम् ॥ ४ ॥
कृतवाञ्छ्रद्धया युक्तो भक्ष्यभोज्यानि दत्तवान्। शृणु भावे खगश्रेष्ठ पापमुग्रमुपार्जितम् ॥ ५ ॥
राजाज्ञया गतः सूत राज्ञो दायादकं खग। क्षत्रियं हतवान्द्वाभ्यां सहायाभ्यां समन्वितः ॥ ६ ॥
छलेन महताविष्टो भाविनोऽर्थस्य वै बलात्। ततो यमपुरं प्राप्तो भुक्त्वा तु यमशासनम् ॥ ७ ॥
तथा पुण्यात्पुण्यफलं पूर्वपुण्यावशेषतः। जातोऽत्र पर्वते देशे पुण्ये केदारमण्डले ॥ ८ ॥
स रक्तवर्णो मतिमान् राजकार्येषु तत्परः। नात्युच्चो नातिदीर्घश्च नातिस्थूलशरीरवान् ॥ ९ ॥
राजप्रियो महात्यागी महाभोक्ता प्रियंवदः। नैकस्त्रीसंयुतः कामी तथा सर्वजनप्रियः ॥ १० ॥
देशे देशेऽतिविख्यातो बहुग्रामाधिपो महान्। राजकार्योपयुग्विद्याकुशलो धनवान्सुखी ॥ ११ ॥
बहुमित्रजनैर्युक्तो बहुभृत्यसमन्वितः। शत्रुतोऽपि भयाक्रान्तो भ्रातृणां सुखवर्जितः ॥ १२ ॥
बाल्ये पितृसुखैर्हीनो मध्ये मातृविवर्जितः। हठस्वभावयुक्तनित्यं तथाऽप्राप्तमनोरथः ॥ १३ ॥
ईर्ष्यालू राजघाताच्च पापात्सर्वविदूषकः। जनानामप्रियकरो बहुशत्रुभयान्वितः ॥ १४ ॥
स्वकार्यनिरतो नित्यं परकार्यविनाशकः। बहुपुत्रसुखैर्हीनोऽप्येकपुत्रेण संयुतः ॥ १५ ॥
जन्माङ्गात्पञ्चमे क्रूरग्रहयुक्तोऽत्र जन्मनि। गतागतवनैर्युक्तः शंकामात्सर्यसंयुतः ॥ १६ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं शृणुष्व वै। पलैरष्टमितैः कार्यो बाहुजस्तु हिरण्मयः ॥ १७ ॥
गन्धपुष्पैः समभ्यर्च्य विधानेन खगाधिप। कर्मप्रकाशिने भक्त्या देयो वै पूजकाय च ॥ १८ ॥
लक्ष्मीनारायणः कार्यः पलत्रयमितः शुभः। तथैवोमामहेशश्च हिरण्येन यथाविधि ॥ १९ ॥
षोडशोपचारैश्च पूजयित्वा विधानतः। माषत्रयमितो वह्निः सूर्यः सौवर्णसंमितः ॥ २० ॥
ब्राह्मणेभ्यो विधिज्ञेभ्यो देयाः श्रद्धाविधानतः। इदं सूक्तं जपेत्पश्चात्सहस्रावृत्तितो भृशम् ॥ २१ ॥
गायत्रीं दशसाहस्रीं त्र्यम्बकन्तु तथा जपेत्। उमामहेश्वरादीनां मन्त्रांस्तत्संख्यया जपेत् ॥ २२ ॥
होमयेत्तद्दशांशेन तिलैर्दद्याच्च दक्षिणाम्। ब्राह्मणान्भोजयेत्पश्चात्सार्पिष्यात्मानमीक्षयेत् ॥ २३ ॥

एवं कृतविधेः सूत प्रायश्चित्तं यथोदितम् । नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥ २४ ॥
पुत्रपौत्राभिवृद्धिश्च सम्पदो वृद्धिमाप्नुयुः । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ २५ ॥
प्रायश्चित्ते कृते तस्य जीवनं समुदाहृतम् । नवाशीतिमिताब्दान्तमन्ते सद्गतिमाप्नुयात् ॥ २६ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं तत्र जन्मशास्त्राद्विलोकयेत् ॥ २७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५७२ ॥

श्रीसूर्य उवाच ।

बभूव यामुने देशे पूर्वजन्मनि बाहुजः । राजमान्यः सुखैश्वर्यधनवाहनसंयुतः ॥ १ ॥
सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः । दत्तानि तेन दानानि पर्वस्वपि च भक्तितः ॥ २ ॥
वस्त्रान्नशय्यागोभूमासुवर्णानि यथाविधि । कार्तिक्यां पूर्णमास्यां च यमुनायां विशेषतः ॥ ३ ॥
दीपा दत्ताः खगश्रेष्ठ श्रद्धया घृतपूरिताः । अथो भाविवलात्सूत कृतं कर्मातिदारुणम् ॥ ४ ॥
द्विजस्य यज्ञविघ्नं हि कृतवान् दर्पमोहितः । ततो बहुतिथे काले मृतिं प्राप्य यमालये ॥ ५ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यावशेषेण स जातोऽत्र हिमालये ॥ ६ ॥
गंगायाः पूर्वभागे च पुण्यदेशेऽतिविश्रुते । राज्ञां वंशे खगश्रेष्ठ गौरवर्णः प्रतापवान् ॥ ७ ॥
नात्युच्चो नातिह्रस्वश्च नातिस्थूलो न सूक्ष्मकः । देवद्विजगुरूणाञ्च पितुर्भक्तोऽतिबुद्धिमान् ॥८॥
बहुभृत्यधनैश्वर्यसुखवाहनसंयुतः । देशेदेशेऽधिकाराढ्यः श्रीमान्भोक्ता प्रियंवदः ॥ ९ ॥
सन्धिविग्रहसंयुक्तो बहुविद्यासमाश्रयः । राजप्रियो नीतिविच्च सर्वशत्रुनिबर्हणः ॥ १० ॥
पुत्रमित्रकलत्राद्यैर्युक्तः सर्वजनप्रियः । नैकस्त्रीसंयुतः कामी मातुराज्ञानुवर्तकः ॥ ११ ॥
जन्माङ्गात्पञ्चमे ह्यूने शुभग्रहविलोकिते । यूकस्थे चन्द्रमसि च पितृस्थाने खगाधिप ॥ १२ ॥
क्रूरावलोकनयुते स जातो मानवोऽत्र च । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १३ ॥
यज्ञविघ्नोत्थपापाद्धि बाल्ये पितृसुखोज्झितः । विक्षिप्तोऽभूत्पिता तस्य यूनि भावे मृतोऽत्र च ॥ १४ ॥
पुण्यपापशतसंयुक्तस्तथा चिन्तासमन्वितः । शत्रुभीशङ्कया युक्तो गूढचेष्टोऽतिकोपनः ॥ १५ ॥
मानापमानसाम्यश्च चित्तक्लेशैः समन्वितः । चित्तस्थिरत्वरहितो गतागतधनैर्युतः ॥ १६ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलैस्त्रिस्त्रिर्मिताः कार्या ब्रह्मविष्णुमहेश्वराः ॥ १७ ॥
यजेत्तल्लिङ्गकैर्मन्त्रैर्गन्धपुष्पोपचारकैः । हिरण्मयविधानेन विधिज्ञेभ्यश्च शक्तितः ॥ १८ ॥
मद्याद्दिनतापुत्र पूर्वपापः प्रमुच्यते । रविर्माषमितो वह्निस्तथा सूर्यश्च वै खग ॥ १९ ॥
हिरण्मयश्च दातव्यस्तदर्द्धमितिकोऽपि वा । तत्तन्मन्त्राञ्जपेद्भक्त्या ह्ययुतस्य च संख्यया ॥ २० ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् । सर्पिष्यात्माननमालोक्य भोजयेदिष्टबन्धुभिः ॥ २१ ॥
एवं निष्कृतिमापन्नः सर्वपापापनोदिनीम् । नाधयो व्याधयस्तस्य न च शत्रुभयं क्वचित् ॥ २२ ॥
सर्वे मनोरथाः पूर्णा भविष्यन्तीह जन्मनि । चतुस्त्रिंशन्मिते वर्षे रिष्टं तस्य न जायते ॥ २३ ॥
पञ्चवेदमितेऽब्दे च रिष्टं नैव खगाधिप । द्विसप्ततिमितायुः स्यादन्ते सद्गतिरिष्यते ॥ २४ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । चतुर्विधं महारिष्टं भविष्यति न संशयः ॥ २५ ॥
उदरे वातशूलेन मृतिस्तस्य भवेद्ध्रुवम् । प्रायश्चित्ते कृते त्वत्र सर्वरोगैः प्रमुच्यते ॥ २६ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतञ्चैव तन्मच्छास्त्राद्विलोकयेत् ॥ २७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५७३ ॥

श्रीसूर्य उवाच ।

बभूव प्राग्भवे सूत देशे गौडाभिधे खग । बाहुजो धर्मकर्माढ्यो बहुद्रव्यसमन्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः । स्वर्णभूपणवस्त्रान्नगवादीनि प्रयत्नतः ॥ २ ॥
अथो भाविबलात्सूत ब्राह्मणेन तपस्विना । स्थापितं तद्गृहे द्रव्यं घटस्थं विनतात्मज ॥ ३ ॥
व्यतीते बहुकाले तु ब्राह्मणेन महात्मना । याचितं तद्धनं तेन न दत्तं लोभमोहतः ॥ ४ ॥
तदा तेन महाक्रोधयाच्छापो दत्तः सुदारुणः । जन्मजन्मनि ते पाप वंशहानिर्भविष्यति ॥ ५ ॥
ततोऽसौ मृतिमापन्नो ब्राह्मणो विनतात्मज । बाहुजोऽपि मृतस्तत्र कुष्ठेन च दिनान्तरे ॥ ६ ॥
यमलोकं समासाद्य भुक्त्वा पापफलं तथा । पुण्यात्पुण्यफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ७ ॥
हिमालये पुण्यदेशे जातः केदारमण्डले । बाहुजो राजसम्मानी किंचिद्वित्तसमन्वितः ॥ ८ ॥
नात्युच्चो नातिदीर्घश्च कृशाङ्गो रक्तपाण्डुरः । जनप्रियोऽतिमतिमान्सन्धिविग्रहसंयुतः ॥ ९ ॥
पुत्रभ्रातृसुखैर्युक्तो मितदो दीर्घदर्शनः । पुण्यादिदं तथा पापाल्लोमी पापरतः क्वचित् ॥ १० ॥
मनोदुःखैः समायुक्तो दीर्घमात्सर्यसंयुतः । गतागतधनैर्युक्तस्तथा प्राप्तमनोरथः ॥ ११ ॥
बाल्ये सुखसमायुक्तो युवभावेऽतिक्लेशभाक् । वार्धके सुखसंयुक्तो मध्ये मध्यसुखान्वितः ॥ १२ ॥
ब्रह्मस्वहरणात्पापस्तच्छापात्तन्मृतेरपि । अपुत्रः पुत्रदुःखार्तो मृतभार्यः कदाचन ॥ १३ ॥
जन्माङ्गात्पञ्चमे भावे द्यूने भाग्ये खगाधिप । क्रूरग्रहेण संयुक्तदृष्टे पुण्यस्थिते विधौ ॥ १४ ॥
जातोऽत्यन्तारिपुक्षेशोदरवातसमन्वितः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं शृणुष्व तत् ॥ १५ ॥
पलमात्रेण कर्तव्यो ब्राह्मणस्तु हिरण्मयः । गन्धपुष्पोपहारैश्च पूज्यो वै भक्तिभावतः ॥ १६ ॥
कर्मप्रकाशिने सूत देयोऽभ्यर्च्य विधानतः । घृतपूर्णं घटं ताम्रमयं पलशतात्मकम् ॥ १७ ॥
पलमात्रसुवर्णेन युक्तं पूजासमन्वितम् । दद्याद्वेदविदे सूत पूर्वपापापनुत्तये ॥ १८ ॥
गायत्रीमष्टसाहस्रं त्र्यम्बकन्तु तथा जपेत् । तथा वै ब्रह्मजज्ञानं जपेन्नियमपूर्वकम् ॥ १९ ॥
होमयेत्तद्दशांशेन तिलैराज्यपरिप्लुतैः । ब्राह्मणान्भोजयेत्तत्र शुभान्वेदविदस्तथा ॥ २० ॥
पार्थिवान्पूजयेल्लक्षमहादेवान्प्रयत्नतः । तद्दशांशेन होतव्यं तद्दशांशेन वै द्विजान् ॥ २१ ॥
भोजयेद्विधिवद्भक्त्या दद्याच्च बहुदक्षिणाम् । मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः ॥ २२ ॥
सर्पिष्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः । एवं कृतविधेः सूत पूर्वजन्माघनाशनम् ॥ २३ ॥
न तस्य प्राप्तदोषोऽपि न चारिष्टभयं क्वचित् । नाधयो व्याधयस्तस्य न वा शत्रुभयं भवेत् ॥ २४ ॥
न दारिद्र्यभयं किञ्चिन्न वातजभयं तथा । पुत्रपौत्राभिवृद्धिश्च जायते सम्पदेधते ॥ २५ ॥
स्त्रीसुखञ्च तथाप्नोति जन्मन्यत्रैव चाण्डज । आयुरारोग्यमैश्वर्यमित्रबन्धुसमाकुलम् ॥ २६ ॥
दासदासीपशुबहुघोटकैर्धान्यगोधनैः । महिषीछागवर्गैश्च सौभाग्यैरपि संकुलम् ॥ २७ ॥
जायते तद्गृहं रम्यं स भवेद्राजवल्लभः । सुपुत्रबन्धुमान्सोऽपि कीर्तिमाप्नोत्यचिरात् ॥ २८ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । न पुत्रसुखमत्रैव लभते विनतासुत ॥ २९ ॥
पश्चाशद्वर्षके रिष्टं स प्राप्नोति चतुर्विधम् । प्रायश्चित्ते कृते त्वायुः कुसप्ततिमिताब्दके ॥ ३० ॥
जन्मादिमरणान्तं च स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः चतुःसप्तत्युत्तरपंचशताधिकसहस्रतमः ॥ १५७४ ॥

श्रीसूर्य उवाच ।

सतीं स्वभार्यां परमां साध्वीं सन्त्यज्य दुर्मतिः । प्रमादात्प्राग्भवे गच्छेदन्यस्त्रीं काममोहितः॥१॥
सोऽत्र जन्मनि भोः सूत ग्रहणीरोगसंयुतः । जायते म्रियतेऽवश्यं ब्राह्मणीगमनादिह ॥ २ ॥
तदस्य पापशमनं मया नोक्तं खगाधिप । तस्मिन्वयसि तद्दिष्टं भविष्यति न संशयः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चसप्तत्युत्तरपञ्चशताधिकसहस्रतम. ॥ १५७५ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । सेह जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
दद्यात्पलशतं सूत ब्राह्मणाय कुटुम्बिने । तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्सप्तत्युत्तरपञ्चशताधिकसहस्रतम ॥ १५७६ ॥

श्रीसूर्य उवाच ।

या नारी ह्यवधीत्पूर्वं मोहादश्वं खगाधिप । सेह जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णीं राजतीं तथा । दद्याद्देविधिज्ञाय तदा स्यात्सुस्वराण्डज ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तसप्तत्युत्तरपंचशताधिकसहस्रतम ॥ १५७७ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परभृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र खगाधिप ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५७८ ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ग्रहणीरुग्युतात्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरपञ्चशताधिकसहस्रतम. ॥ १५७९ ॥

अरुण उवाच ।

विप्रवंशे समुत्पन्नो वातरक्तासदर्शनः । उदरे वातजान्रोगान्किञ्चिच्छ्लोपधातनम् ॥ १ ॥
किञ्चित्क्रोधश्च लोभश्च किञ्चिद्वित्तसमन्वितः । तस्य प्रिया सदाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्यं भवेत्तस्य जायते मृतपुत्रकः । आदिपुत्रो मृतश्चास्यापत्यं भूयो न जायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि मेधाविञ्शूद्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन स व्यधात् ॥ ५ ॥
व्यवहारादिना तद्वै ह्यवर्धयदतन्द्रितः । कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् ॥ ६ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणात्सूत वर्षाणां च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे यातना बहु भुक्तवान् ॥ ९ ॥
पश्चान्मानुष्यमापन्नो ब्रह्मद्रव्यप्रभावतः । इदं तृतीयं वै जन्म ब्रह्मवंशसमुद्भवम् ॥ १० ॥

निक्षेपहरणाद्वापि मृतपुत्रः प्रजायते। ब्राह्मणस्य विशेषेण ब्रह्मस्वं विपतोऽधिकम् ॥ ११ ॥
ऋणं प्रसह्य वै भुक्तमपि कल्पशताधिकम्। नरके पातयत्येव ब्राह्मणस्य विशेषतः ॥ १२ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते। नारीणाञ्च नराणाञ्च निष्कृतिं सौख्यहेतवे ॥ १३ ॥

श्रीसूर्य उवाच।

महापापहरो देवः स वै कामहरः प्रभुः। पूजनीयो महारुद्रः सन्ततिश्रेय इच्छता ॥ १४ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः। यजन्वै मुच्यते शीघ्रं पापादाकल्पसम्भवात् ॥ १५ ॥
रुद्रैकादशनीभिस्तु रुद्रैकादशकेन वा। जपेन तोषयेदेनं रुद्रमेकादशात्मकम् ॥ १६ ॥
तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम्। विधिवज्जुहुयाद्वह्नौ तिलैस्त्रिमधुराप्लुतैः ॥ १७ ॥
हरितालिपलाशाश्वत्थसमिधो हवे हुनेत्। प्रतिरुद्रं प्रदातव्यं गोयुग्मं रसनान्वितम् ॥ १८ ॥
केयूरकुण्डलाकल्पा मन्त्रपुस्तकमण्डलुः। प्रतिरुद्रं शतं विप्रान्भोजयेत्सुसमाहितः ॥ १९ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा सुख्यदक्षिणाम्। एवं रुद्रविधिं कृत्वा त्रिविधं नाशयेदघम् ॥२०॥
इतिहासपुराणोक्तसूक्तानि विविधानि च। शृणुयाद्विधिवत्तार्क्ष्य सभार्यः प्रीतिमावहन् ॥ २१ ॥
देवर्षिपितृमर्त्यानामृषीणाञ्च महीक्षिताम्। देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २२ ॥
सर्वेषां जीवजातानामुत्पत्तिं शृणुयादपि। ऋषीणामृषिपत्नीनां वंशान्सर्वानुदीरितान् ॥ २३ ॥
एवं स त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात्। गुरून्देवान्द्विजान्सम्यक्श्रद्धया समुपाचरेत् ॥२४॥
एवं कृतविधिः सूत हरिवंशश्रुतार्थवान्। वाचकोपरि सन्तुष्टो भूमिद्रविणवासकैः ॥ २५ ॥
मुद्राकर्णीकृतवरां गां दत्त्वा च पयस्विनीम्। भूमिद्रविणवासाद्यैस्तोषयेदन्यब्राह्मणान् ॥ २६ ॥
निष्कृतिं चैव कृत्वा तु सर्पिष्यात्मानमीक्षयेत्। ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ २७ ॥
जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः। दुष्टरुक्चानपत्यश्च प्रमेहार्तोऽप्यकिञ्चनः ॥ २८ ॥
कुनखी दद्रुलः पाण्डुरोगी जन्मक्रमाद्भवेत्। जलाग्निभीतिश्चौराच्च राज्ञो वित्तव्ययाधिकम् ॥२९॥
लकुटग्रावशस्त्राद्यैर्जायते व्रणजातयः ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरपंचशताधिकसहस्रतमः ॥ १९८० ॥

श्रीसूर्य उवाच।

अथ पूर्वदिने सूत प्राप्य भूमिं श्मशानजाम्। मृतप्रेतं समालोक्य रात्रौ गत्वा ह्यतन्द्रितः ॥१॥
पूजयित्वा चितां तस्य बलिमष्टविधं सृजेत्। स्नानं कृत्वा मृदालम्भैर्मन्त्रैर्लक्षोद्भवैस्तथा ॥ २ ॥
शताच्छिद्रघटं प्राप्य नानातीर्थोद्भवैर्जलैः। दीपमालादिनैवापि प्रयोगं विधिनाचरेत् ॥ ३ ॥
हरिवंशं ततः पश्चाच्छृणुयाद्विधिपूर्वकम्। दद्याद्द्विजेभ्यो विधिना नानाभक्ष्यफलानि च ॥ ४ ॥
स्वेच्छया भोजनं तेभ्यो दद्याद्दोषापनुत्तये। प्रयोगेऽनेन नार्यत्र वन्ध्या याति सपुत्रताम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरपंचशताधिकसहस्रतमः ॥ १९८१ ॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ वैश्यो ह्यत्र जन्मनि बाहुजः। देवद्रव्यापहरणात्यागत्राक्षिप्रपीडनम् ॥ १ ॥
विंशद्वर्षे व्यतीते तु नेत्रभङ्गः प्रजायते। तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम्। गन्धैः पुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरपंचशताधिकसहस्रतमः ॥ १९८२ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ शूद्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
तेन कर्मार्जितेनात्र षंढश्चैवापवर्णजः । गवां पालनजातपुण्यात्मागत्र सुखसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवात्र निष्कृतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५८३ ॥

श्रीसूर्य उवाच ।

या काचिद्योषित्पूर्वे वै मोहात्परघृतं हरेत् । सात्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरपंचशताधिकसहस्रतमः ॥ १५८४ ॥

श्रीसूर्य उवाच ।

महिषीमवधीत्पूर्वे भवे यो वै नराधिपः । सोऽत्र जन्मनि पक्षीन्द्र कृष्णगुल्मयुतो भवेत् ॥ १ ॥
स्वर्णशृङ्गीं रौप्यखुरां घंटाभरणभूषिताम् । सूक्ष्मवस्त्रयुक्तां च दद्याद्वेदविदे सुत ॥ २ ॥
कृष्णगुल्मोद्भवां पीडां नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचाशीत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५८५ ॥

श्रीसूर्य उवाच ।

प्राग्भवे यामवत्काचित्स्वर्णकारी खगाधिप । स्वधर्मनिरता सर्वदानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः समागता । ताडिता कुक्षिभागे तु लगुडेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः । मृता च तेन दुःखेन गर्भपातसमन्विता ॥ ३ ॥
तेन कर्मविपाकेन सम्प्राप्योचितशासनम् । पुनः शूद्रामवच्चैव गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यैर्नानाविभवसंयुता । पुत्रसन्ततिहीना सा प्राग्गोघातादिपापतः ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविनाशनम् । कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा ॥ ६ ॥
मार्गे तु धर्मतो यत्नात्प्रतिष्ठां कारयेद्बुधः । संस्थाप्य च शिवां तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच्च ततस्तत्र तिलानाज्ययुतानिह । भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् ॥ ८ ॥
दद्यात्सैव कपिलां सर्वपापप्रणाशिनीम् । प्रायश्चित्तमिदं सुत पूर्वजन्माघनाशनम् ॥ ९ ॥
नैवं या कुरुते श्रुत्वा तस्याः सन्ततिवर्जनम् ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडशीत्युत्तरपञ्चशताधिकसहस्रतम ॥ १५८६ ॥

श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सुत दुग्धं हरति मानवः । तत्काले पापवशतो बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना त्वत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५८७ ॥

श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कथञ्चित्पापमोहिता । पूर्वजन्मनि सात्रैव बहुमूत्ररुजाकुला ॥ १ ॥

दुग्धधेनुः प्रदातव्या वेदवेदाङ्गपारगे । विधिना काश्यपेयात्र न पश्येद्बहुमूत्रताम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरपंचशताधिकसहस्रतमः ॥ १५८८ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत महिषीं नवयौवनाम् । प्राग्भवे नियतं सूत कृष्णगुल्मैः स बाध्यते ॥ १ ॥
स नरो रत्नदानेन विधिना गरुडाग्रज । नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्द्विजाय विधिनाण्डज । महिषीपापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५८९ ॥

श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकृन्तनम् । ब्रह्मपुत्रस्य पण्ढः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृते चापि निष्कृतिर्नात्र विद्यते । ब्रह्मघातान्महापापात्पढः स्याद्बहुजन्मनि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९० ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । पूर्वजन्मनि पुण्यापि बहुदानरता सती ॥ १ ॥
इह सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज । इह पुत्रविहीना सा फलहृत्पापजाद्दृढात् ॥ २ ॥
फलानां बहुदानाच्च चातुर्मास्येऽत्र नित्यशः । भोजनन्तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् ॥३॥
प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम् । अमायां नारिकेलानि देयानि खलु शक्तितः ॥ ४ ॥
एवं हि सुतवृद्धिः स्याज्जीवनं चाब्दसप्ततिम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९१ ॥

श्रीसूर्य उवाच ।

दधिहारी पुमान्पूर्वे जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः । तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९२ ॥

श्रीसूर्य उवाच ।

महिषीं घातयेन्नारी प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदैवताम् । युगकम्बलसंच्छन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत । दानेन तेन वै सूत कृष्णगुल्मं न पश्यति ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९३ ॥

श्रीसूर्य उवाच ।

वेधात्प्राग्नृपभार्यां च नासाग्रस्य खगाधिप । नासाछेदोऽत्र तस्यास्ति यूनि भावे विनिश्चयात् ॥१॥
नास्ति तन्निष्कृतिः कापि दत्तैर्दानशतैरपि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्नवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९४ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभागश्चारणोऽतिमियंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्र वै निरतः सोथ चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परपक्षे कृते सूत स्वशरीरमथात्त्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महावीर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां चाजनि स्वयम् । सिन्धोः पश्चिमभागेऽत्र शतयोजनसम्मिते॥६॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
सुरैश्वर्यसमाक्रान्तो धनवाहनभोगभाक् । शूरः सुविद्योऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापाल्लोभरतः क्रोधी नानाभैरवशासनः । रिष्टं पष्टिमिते पञ्चहीने वर्षे खगाधिप ॥ ९ ॥
महाकालनराद्दानात्सुवर्णस्य खगाधिप । सर्वचित्तषडंशेन महारिष्टहरं परम् ॥ १० ॥
पञ्चाशीतिमितायुः स्याद्दत्ते कालनरेऽण्डज । प्रायश्चित्तेऽकृते तत्र रिष्टं स्यात्प्रोक्तवत्सरे ॥ ११ ॥
कालशेषेण रिष्टेन तत्क्षणे मरणं स्मृतम् । महाघोराहवे सूत चात्मघातादिदं फलम् ॥ १२ ॥
चिह्नं तत्र प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् । हृदि स्थलं शुभं पुत्र षडंगुलमितं शुभम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९५ ॥

श्रीसूर्य उवाच ।

दधिमहरणान्नारी प्राग्भवे त्वत्र जन्मनि । मेदसा पीड्यते सा तु विनतानन्दवर्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने । मुच्यतेऽत्र महारोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९६ ॥

श्रीसूर्य उवाच ।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्यत्यक्षिजं रोगं कातरत्वं हि काश्यप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरपञ्चशताधिकसहस्रतमः ॥ १५९७ ॥

श्रीसूर्य उवाच ।

प्राग्भवे सुमुखी काचिद्गता देवालयेऽण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा तद्दानान्महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महादानात्याक्कृतात्तु खगाधिप ॥ २ ॥
तेन कर्मफलेनात्र चक्षुःपीडातिदारुणा । त्रिदोषैर्दूषिता चात्र युवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम् । दीपा देया घृतेनात्र पूजयित्वा सुवर्णजाः ॥ ४ ॥
द्विसुवर्णमिता भव्याः सम्पूज्याथ महेश्वरम् । गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्द्विजेभ्यो वहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९८ ॥

श्रीसूर्य उवाच ।

दुष्टाग्नियुतः सूत जायते सोऽत्र जन्मनि । मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु ॥ १ ॥

मधुधेनुप्रदानाद्वै ब्राह्मणाय खगाधिप। दुष्टगन्धिकृताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तरपंचशताधिकसहस्रतमः ॥ १५९९ ॥

श्रीसूर्य उवाच।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज। कांतराक्षी प्रजायेत चक्षूरोगात् खगाधिप ॥ १ ॥
धेनुं रत्नमयीं दद्यात्सुवर्णां विधानतः। न पश्यत्यक्षिरोगं सा तद्व्रतेन महाद्भुतम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्शताधिकसहस्रतमः ॥ १६०० ॥

श्रीसूर्य उवाच।

यः प्राग्जन्मन्यभूत्कश्चिन्नरो गजक्रियान्वितः। नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ १ ॥
सप्तजन्मन्यसौ षण्ढो भविष्यति खगेश्वर ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरषट्शताधिकसहस्रतमः ॥ १६०१ ॥

अरुण उवाच।

क्षात्रे कुले समुत्पन्नः शौर्यौदार्ययशोधनी। राजमानविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किंचिद्वातादिना पीडा जायते तस्य चोदरे। वातरक्तादि शिरसि जायते पक्षसंख्यया ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी। प्रियभक्तिरता नित्यं दानदाक्षिण्यवर्तिनी ॥ ३ ॥
एकपुत्रप्रसूतिश्चाप्यन्यपुत्रमुपागता। पश्चात्पुण्यं गतं शान्तिमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं शाम्यति तत्स्त्रियाः। विधानं च हितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वं वर्णोत्तरे जातो धनुःकांस्यादिकारकः। ब्राह्मणो मित्रतां यातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता स विप्रद्रव्येण वर्धितः। कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
भुक्तं सर्वं धनं तेन न तु किंचित्समर्पितम्। ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासन्ततिनाशनम्। ये चैतस्य मृताः पुत्राः स जातो ब्राह्मणः स्वयम् ॥९॥
इदं चतुर्थं वै जन्म ब्रह्मवंशसमुद्भवम्। भार्या दुःखकरी ह्येवं पुत्रहीना खगाधिप ॥ १० ॥

अरुण उवाच।

प्रायश्चित्तं कथन्देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि देवेश सन्ततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच।

ब्रह्मस्वं विषतुल्यं हि पुत्रपौत्रादिनाशनम्। विषेणैकोऽपि म्रियते ब्रह्मस्वं कुलभक्षकम् ॥ १२ ॥
तस्य सन्ततिवृद्ध्यर्थं कारयेन्निष्कृतिं शुभाम्। सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः। तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवम्। नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति। सप्तधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेद्रुद्रमूर्तिं निष्कद्वयात्मिकाम्। सुवर्णस्य विशुद्धाश्च दद्याद्वै वेदवादिने ॥ १७ ॥
प्रतिष्ठां पूजनं कृत्वा ततो गां वै सवत्सकाम्। शतमष्टोत्तरं विप्रान्द्रोणाः सप्तैव निर्मिताः ॥ १८ ॥
जातीपुष्पैः शुभैश्चैव लक्षपूजां शिवोपरि। सद्रष्टान्मोचयेद्धेनुं दम्पती परिधापयेत् ॥ १९ ॥
एवंकृतविधेः सूत निश्चला सन्ततिर्भवेत् ॥ २० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरषट्शताधिकसहस्रतमः ॥ १६०२ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत् । सात्र जन्मनि पक्षीन्द्र दुर्गन्धाढ्या प्रजायते ॥१॥
मधुधेनुप्रदानात्तु व्यतीपातादिपर्वसु । दुर्गन्धरोगात्सततं मुच्यतेऽत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तरषट्शताधिकसहस्रतम ॥ १६०३ ॥

श्रीसूर्य उवाच ।

षण्ढस्तु राजसन्मानी चेह जन्मनि चाण्डज । महादुष्टक्षयान्मुक्तो वधबन्धनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यधनान्वितः । महामानी महाधूर्तः षण्ढोऽगम्यातिसेवनात् ॥ २ ॥
नात्र जन्मनि भोः सूत प्रायश्चित्तं मयोदितम् । अगम्यागमनं पापं प्रायश्चित्तविवर्जितम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरषट्शताधिकसहस्रतम ॥ १६०४ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा मया प्रोक्ता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं यस्माच्छृणु चात्र खगाधिप ॥१॥
अनया द्रव्यलोभेन सपत्न्या घातितः सुतः । प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥
तस्याः क्षिप्रं महादुष्टा बाल्ये कुष्ठान्विता सुता । अचिराज्जायते खर्जूः पितृगेहे स्थिताण्डज ॥३॥
महादोषवती पापाज्जाताच यवनी खगे । भविष्यति महारिष्टमग्निदाहेन चाण्डज ॥ ४ ॥
चतुर्विंशन्मिते चैव मरणं कीर्तितं ध्रुवम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तरषट्शताधिकसहस्रतम ॥ १६०५ ॥

श्रीसूर्य उवाच ।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दन्तुरः सोऽपि काले तत्पापचिह्नितः ॥ १ ॥
घृतकुम्भं यथाशक्ति दद्याद्विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरषट्शताधिकसहस्रतम ॥ १६०६ ॥

श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः । गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानाच्च ब्राह्मणाय च धीमते । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरषट्शताधिकसहस्रतम ॥ १६०७ ॥

श्रीसूर्य उवाच ।

मथो काचित् सती नारी कर्मिष्ठा प्रियवादिनी । स्वामिना प्रेषिता पूर्वं शत्रोर्दग्धं तया गृहम् ॥१॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । मृता सा यमराजस्य नियोगान्नरकं गता ॥ २ ॥
भुक्त्वा फलानि वै तत्र पुण्यपापोद्भवानि हि । सा शूद्री यमुनातीरे जाताऽत्र पतिसेवया ॥ ३ ॥
कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशिनीम् । वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् ॥ ४ ॥
कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरषट्शताधिकसहस्रतम ॥ १६०८ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चित्कृषिकर्मरतस्सदा । पूजकश्चातिथीनां च भिक्षुकाणाञ्च यत्नतः ॥ १ ॥

तद्वृहे वृष उन्मत्तस्तीक्ष्णशृङ्गो भयानकः। तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्वा नासाग्रपुच्छौ तु कृतं कर्मातिदारुणम्। तत्र जन्मनि तद्भुक्ता फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते। षण्ढस्तु तेन पापेन स च तत्र खगाधिप ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः। इदानींतस्य पापस्य प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनाञ्च भविष्यति च तद्गतिः। तीर्थाश्रयेऽत्र जनुषि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुः परिमिताब्दान्तं रिष्टं पञ्चाशदब्दके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरषट्शताधिकसहस्रतमः ॥ १६०९ ॥

श्रीसूर्य उवाच।

घातयेद्या पुरा नारी वराहं गरुडाग्रज। दन्तुरा सा भवेदिह तत्काले घातसम्भवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम्। तद्दोषशमनायैव दद्याच्छक्तया विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरषट्शताधिकसहस्रतमः ॥ १६१० ॥

श्रीसूर्य उवाच।

तैलहारी तु यः कश्चिद्भवेल्लोभात्पुराभवे। कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
स कुर्यात्तिलदानञ्च ब्राह्मणाय खगाधिप। कण्डूरोगप्रशमनं दद्यात्तैलवदद्वयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरषट्शताधिकसहस्रतमः ॥ १६११ ॥

श्रीसूर्य उवाच।

काचिच्छुभानना पूर्वभवे चारणवल्लभा। भर्तृत्यक्ताधिविन्ना सा महारोषवती भवेत् ॥ १ ॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम्। तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः। रोगयुक्तोऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मस्वसौ पापान्मुक्तो वै भविताण्डज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरषट्शताधिकसहस्रतमः ॥ १६१२ ॥

श्रीसूर्य उवाच।

स्वभक्ष्यार्थं महाभाग यो हन्याद्वायुवाहनम्। इह जन्मनि षण्ढः स्यान्नात्र कार्या विचारणा ॥१॥
न तस्य निष्कृतिः प्रोक्ता जन्मनीह खगाधिप। स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरषट्शताधिकसहस्रतमः ॥ १६१३ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोहाद्गुडं हरति कस्यचित्। गुल्मोदरेण रोगेण पीड्यते सेह जन्मनि ॥ १ ॥
गङ्गायां हि महाभाग गुडधेनुप्रदानतः। तत्र स्नानान्महापुण्यात्तस्माद्रोगात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरषट्शताधिकसहस्रतमः ॥ १६१४ ॥

श्रीसूर्य उवाच।

कश्चिद्वैश्योऽभवत्पूर्वभवे नैपालविश्रुते। बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः ॥ १ ॥
आराधनन्तु कृतवान्देव्या यः पूर्वजन्मनि। स्वस्त्रियं च गुरूणां च परित्यज्य शुभाननाम् ॥२॥
अन्यास्त्रियं वा अगमद्व्यभिचारपरो दृढः। स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति ॥ ३ ॥

शुभाशुभानि वै भुक्त्वा फलानीह महीतले । जातो भव्यो महाज्ञानी महाविभवसंयुतः ॥ ४ ॥
देशे देशेऽतिविख्यातो घृणी धीमान्महायशाः । स्वस्त्रीत्यागान्महापापाज्जायते स्त्रीविवर्जितः ॥५॥
निष्कृतिं च वदामीह स्त्रीप्राप्तिसुखकारिणीम् । पार्वतीप्रतिमां कृत्वा हैमिकां कार्यकारिणीम् ॥६॥
पलपञ्चमितां लेख्यां रत्नैर्माल्यैरलंकृताम् । दद्याद्वेदविदे विप्राय सत्कुलीनाय चार्थिने ॥ ७ ॥
प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम् । ब्रह्मदैवतमन्त्रेण गृह्णाति स महाद्विजः ॥ ८ ॥
पश्चाद्द्वादशाक्षरं मन्त्रं सहस्रं पापशोधनम् । जपेद्दशसहस्रन्तु सूर्यमन्त्रं महाबलम् ॥ ९ ॥
होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत् । एवं यः कुरुते सूत सर्वपापविनाशनम् ॥ १० ॥
प्रायश्चित्तं परं तत्र तस्मात्पापात्प्रमुच्यते । नैवं करोति यो मोहाज्जडधीर्दैवघातितः ॥ ११ ॥
स्त्रीसुखं लभते नैव रिष्टं षड्वेदकेन्द्रके । प्रायश्चित्ते कृते सूत जीवनं चान्दसप्ततिम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चदशोत्तरषट्शताधिकसहस्रतमः ॥ १६१५ ॥

---

श्रीसूर्य उवाच ।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतासुत । पण्डः स्यादत्र जनुषि तत्काले मृगघातजे ॥ १ ॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत । दद्याद्वृषं नवं तत्र स्वर्णनिष्कयुतं शुभम् ॥ २ ॥
सहासनं सालंकारं पूजयित्वा विधानतः । वेदज्ञाय महाबाहो नानाशास्त्रविधानतः ॥ ३ ॥
नाशमेष्यति षंडत्वं दानस्यास्य प्रभावतः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षोडशोत्तरषट्शताधिकसहस्रतम. ॥ १६१६ ॥

---

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परतैलापहारिणी । सेह जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता ॥ १ ॥
यथाशक्तिसुवर्णाढ्या तैलदानाद्विशेषतः । सा मोक्ष्यते महाभाग कण्डूरोगात्खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तदशोत्तरषट्शताधिकसहस्रतम ॥ १६१७ ॥

---

श्रीसूर्य उवाच ।

राजप्रचारी वै कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरः शिवपूजनतत्परः ॥ १ ॥
राजपत्न्या महाबाहो रतिं चक्रे ह्यधर्मतः । गर्भं दधार वै राज्ञी भाविनोऽर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके खगाधिप । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि पादजः ॥ ३ ॥
देशे जाङ्गलजे पण्डः सर्वधर्मबहिष्कृतः । शिवपूजारतो यस्मात्प्रागत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरषट्शताधिकसहस्रतमः ॥ १६१८ ॥

---

श्रीसूर्य उवाच ।

गर्भाढ्यां वडवां या वै हन्यात्पूर्वभवेऽण्डज । गर्भपातनदुःखार्ता खञ्जाऽपि स्यात्तदेनसः ॥ १ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ २ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न पश्यति च गर्भोत्थां पीडामत्रैव जन्मनि ॥ ३ ॥
दानप्रभावात्पक्षीन्द्र खञ्जत्वं नाप्नुयादिह ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६१९ ॥

---

अरुण उवाच।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः। मेहादिपीडितोऽत्यर्थं कृशाङ्गः पाण्डुरद्युतिः॥ १॥
ऊर्ध्वश्वासादिना पीडा बाल्ये स्याद्व्रणगदः। तस्य भार्या सदाचारा विनीता भर्तृभक्तितः॥ २॥
रक्तस्रावादिना पीडा जायते चोदरानिलः। गर्भश्च तस्या उदरे पिधानं प्रकरोति हि॥ ३॥
द्वित्रैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा। केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत्॥ ४॥

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु तस्या विचेष्टितम्। व्यभिचारभयाद्वापि तया गर्भश्च पातितः॥ ५॥
अतिकष्टाद्वैनतेय गर्भपातकृतागसः। अपरश्च कृतं कर्म व्यभिचार इतस्ततः॥ ६॥
नानाद्रव्यापहरणं कुलटावाक्यलङ्घनात्। चौर्यवृत्त्या च तद्भर्त्रा दस्युसङ्गाच्च वै बहु॥ ७॥
बहुवारं हि यद्द्रव्यं हृतं तस्करबुद्धिना। भुक्तं ताभ्यां वैनतेय अहस्त्वं तत्र जन्मनि॥ ८॥
कालेन तद्धनं भुक्त्वा पीडितौ दारुणैर्यमैः। यातना बहुधा प्राप्ताः पश्चान्मानुष्यतां गतौ॥ ९॥
किञ्चित्पुण्यप्रभावेण पापस्यास्य क्षयो भवेत्। निष्कृतिं तां वदामीह येन गर्भः स्थिरो भवेत्॥ १०॥
पूर्वजन्मनि या नारी नानागर्भान्निहन्ति वै साऽत्रस्यमिह संततं पापाद्वै निष्कृतिं चरेत्॥ ११॥
नारी नियमसंवीता ध्रुवं स्याद्व्रतकांक्षिणी। सौम्यायनं समासाद्य मासे पक्षे शुभेऽहनि॥ १२॥
तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत्। पयः स्रवन्तीं शान्तां वा सुरभिं शुभलक्षणाम्॥ १३॥
गृहमानीय विधिवत्पूजयेत्तां समाहिता। इष्टतृणवरैः पानैर्भक्ष्यैः कण्डूयनैरपि॥ १४॥
रुचिरैश्चैव गोष्ठानैः स तां परिचरेत्सदा। रात्रौ दीपावलीभिश्च गन्धस्रक्चन्दनादिभिः॥ १५॥
सुगीतमङ्गलस्नानैस्तदधःशायिनी भुवि। प्राणयात्रां प्रकुर्वीत तस्यास्तु पयसाहनि॥ १६॥
तस्यास्तु पञ्चगव्यानि यथान्यायं समश्नती। एवंव्रतपरा नारी मासिमासि तु संयता॥ १७॥
तस्या धेनोः सवत्सायां इष्टं समभिकाङ्क्षिणी। व्रतान्ते द्विजमाकार्य समस्तगुणशालिनम्॥ १८॥
अभ्यर्च्य पूजयेद्भक्त्या वस्त्रदानविभूषणैः। सम्यगभ्यर्च्य तां धेनुं मानयन्ती स्तनन्धयम्॥ १९॥
कृत्वा च विधिवत्तस्मै तां दद्यादितिभाषिणी॥ २०॥

मंत्रः।

"सुवर्णं शुद्धमाग्नेयं माषषोडशसंमितम्। ददेऽहं गां सवत्सां च सर्वपापापनुत्तये॥ २१॥
यन्मया कुलटावृत्त्या नाना गर्भा विघातिताः। नानाभेदैः पातिताश्च गर्भा वै बहवो भुवि॥ २२॥
कर्मभिस्तैश्च सम्प्राप्तं गर्भपाताख्यदूषणम्। एनसस्तस्य नाशाय सवत्सां गां ददे प्रभो॥ २३॥
इह जन्मनि वन्ध्यात्वं नाशमेतु समन्ततः। दानेनानेन सुरभेर्गोपालः प्रीयतां मम॥ २४॥
भवेच्च त्वत्प्रसादेन गर्भो मे सुभगा यतः"॥ २५॥

एवमस्त्विति तां धेनुं समादाय सदक्षिणाम्। हिरण्यं रजतं ताम्रं विविधानि फलानि च॥ २६॥
दापयेद्द्विजमुख्याय भूरिद्रविणदानतः। भोजयेच्च शतं विप्रान्नानान्नैः सक्तुपायसैः॥ २७॥
एवं कृतविधिः सूत नारी स्याद्दुःखनाशिनी। वन्ध्यात्वान्मुच्यते सूत पुत्रमाप्तिर्यशस्विनी॥ २८॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरषट्शताधिकसहस्रतमः॥ १६२०॥

---

श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चित्तुरगं घातयेन्नरः। वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते॥ १॥

स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात् । बक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२१ ॥

श्रीसूर्य उवाच ।

सृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि । पादहीनो भवेत्सूत भृशं वा कृतनिष्कृतिः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम् । ब्राह्मणाय प्रयत्नेन सर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२२ ॥

श्रीसूर्य उवाच ।

संकरः प्राग्भवे सूत बभूव धनसंयुतः । तीर्थवासी विरक्तश्च लोभी धर्मक्रियान्वितः ॥ १ ॥
क्रूरकर्म कृतं तेन दुष्टसङ्गेन चाण्डज । चौर्येण गां परां नीत्वा क्षुधितोऽभक्षयत्पुरा ॥ २ ॥
मृतः स तेन पापेन नानायोनिमुपागतः । स तीर्थमृत्युवशतो गङ्गातीरेऽत्र पादज: ॥ ३ ॥
तीर्थमृत्युप्रसादाच्च धनपुत्रसमन्वितः । पुत्रभाविण्डजश्रेष्ठ चक्षुर्हीनो भविष्यति ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि दशस्वर्णैस्तु सम्मिताम् । निर्मितां गां विधानेन पूजयित्वा विधानतः ॥ ५ ॥
दद्याद्वै वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं वायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्ति भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिनैवेदमात्मदोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२३ ॥

श्रीसूर्य उवाच ।

आसीत्क्षत्री महाभाग पाञ्चाले देशके शुभे । नानाधर्मसमायुक्तो ग्रामताविश्रुतो महान् ॥ १ ॥
दुष्कृतं चरितं तेन भाविनोऽर्थस्य वै बलात् । शूद्रायां च कृतो गर्भः कामलोभेन निश्चयात् ॥ २ ॥
यत्नः कृतो महांस्तेन नाभूद्गर्भस्य पातनम् । तया हालाहलं पीतं लोकभीतेस्तु सा मृता ॥ ३ ॥
गर्भपीडामहत्युग्रा बालकोऽपि मृतस्ततः । सहायपश्चकेनेदं कृतं प्राक्कर्म दारुणम् ॥ ४ ॥
कर्मणां संग्रहश्चायं गर्भनाशसमुद्भवः । ततो हि मरणं प्राप्तो बाहुजोऽद्य सहाययुक् ॥ ५ ॥
सूर्यलोकं ततो गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्नरकान्भुक्त्वा स्वकृताद्दृढकर्मजात् ॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । स जातो यमुनातीरे बाहुजोऽप्यत्र जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लम्बश्च धनसौख्यसमन्वितः । पितृमातृविहीनश्च लोभमोहरतः सदा ॥ ८ ॥
नैकस्त्रीसंयुतः कामी नानाविभवसंयुतः । धर्मादिदं तथा पापाद्भूतः पापरतः शठः ॥ ९ ॥
सकन्यो हृदि रुग्णश्च मनोदुःखसमन्वितः । शूद्रायां वीर्यदानात्प्राक्तद्वधाच्चाप्यपुत्रकः ॥ १० ॥
ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापापनोदिनीम् । पुत्रवृद्धिकरीं धन्यां लोकानां हितकाम्यया ॥ १२ ॥

श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सूत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भधारणकारिणीम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चमितैः शुभा । हिरण्मयी सगर्भा च पत्रलेख्या विधानतः ॥ १४ ॥
तदर्धेनाथवा कार्या निजवित्तानुसारतः । गन्धपुष्पैरलंकृत्य सा देया पापनाशिनी ॥ १५ ॥

मापपञ्चमितो विष्णुः सर्वपापप्रणाशनः। प्रजापतिं तथा दद्यात्सौवर्णं पञ्चमापकम् ॥ १६ ॥
राजतं च तथा दद्यात्सोमं सार्धपलात्मकम्। गायत्रीं दशसाहस्रं जप्त्वा तु विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्षपैः सतिलैस्तथा। ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥
एवं कृतविधेः सूत पूर्वपापविनाशनम्। तस्य पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम् ॥ १९ ॥
अकृते तु यथाशक्ति प्रायश्चित्ते यथोदिते। रिष्टं पष्टिमिते वर्षे दारुणं शत्रुवैकृतम् ॥ २० ॥
प्रायश्चित्ते कृते सूत जीवनं वर्षसप्ततिम्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२४ ॥

---

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम्। जाता सिंहलके देशे वैश्यपुत्री शुभानना ॥ १ ॥
पत्युः सहायतस्तत्र तया दत्तानि चाण्डज। कार्तिक्यां पौर्णमास्यां वै राहुग्रस्ते निशाकरे ॥ २ ॥
भक्ष्यभोज्यानि वस्त्राणि सुवर्णाभरणानि च। भक्तियुक्तेन मनसा ब्राह्मणेभ्योऽतिभक्तितः ॥ ३ ॥
ततो बहुतिथे काले व्यापारार्थं गतः पतिः। समुद्रे नौकया सार्धं निमज्य मरणं गतः ॥ ४ ॥
ततः सा स्त्रीसहायत्वात्प्रतिवेशिद्विजातिना। तद्ग्रामवासिनैकेन कामिता कामलोभतः ॥ ५ ॥
तथापि स्वीकृतो विप्रश्चान्योन्यप्रीतिभावतः। वैश्यायाः प्रीतिवशतो विप्रेण स्त्री विमानिता ॥ ६ ॥
अनादरेण महता ब्राह्मणी शोकपीडिता। मृता हालाहलं पीत्वा ततो लोकापवादतः ॥ ७ ॥
पूर्वस्त्रियाश्च साहाय्याद्विप्रस्त्यक्तस्तयाण्डज। ग्रामाध्यक्षो मृतस्तत्र तच्छोकाद्द्विजपुङ्गवः ॥ ८ ॥
तद्रूपं वर्णयन्तोऽपि पञ्चत्वं प्राप्तवान्खग। ततो बहुतिथे काले वैश्यापि निधनं गता ॥ ९ ॥
पुण्यात्पुण्यफलं भुक्तं पापाच्च नरकं तया। पूर्वपुण्यप्रभावेण सा जाता सुखजाधुना ॥ १० ॥
गङ्गायाः पूर्वभागे च स्वग्रामान्ते हिमालये। गौरा सुरूपा नात्युच्चा नातिह्रस्वा शुचिस्मिता ॥ ११ ॥
प्रियंवदा शुभाङ्गी च व्रतानामनुकाङ्क्षिणी। सुशीला चतुरा दक्षा पितृमातृसुखान्विता ॥ १२ ॥
भगिनीसोदरैर्युक्ता देवद्विजपरायणा। पुण्यादिदं तथा पापाल्लोभयुक्तात्पपापकृत् ॥ १३ ॥
मनोदुःखैः समायुक्ता तथाऽप्राप्तमनोरथा। प्राग्भवे ब्राह्मणीत्यागात्पापात्तन्मरणोद्भवात् ॥ १४ ॥
ब्रह्महत्यासमाद्घोरात्पतित्यक्ता किशोरके। ईर्ष्यामात्सर्ययुक्ता च गृहचेष्टाभिरन्विता ॥ १५ ॥
लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदामि ते। पलैनैकेन कर्तव्यो ब्राह्मणस्तु हिरण्मयः ॥ १६ ॥
गन्धपुष्पैरलंकृत्य स देयो ब्राह्मणाय वै। गायत्रीदशसाहस्रं जपेन्मृत्युंजयं तथा ॥ १७ ॥
होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत्। अश्वत्थसेवनं कुर्यान्मद्दिने व्रतमाचरेत् ॥ १८ ॥
पार्थिवान्पूजयेल्लक्षं महादेवान्विधानतः। एवंकृतविधेः सूत पूर्वजन्माघनाशनम् ॥ १९ ॥
पतिपुत्रवती चासाविहैव भवति ध्रुवम्। नैवं करोति या मोहाल्लोभाद्वा पापशोधनम् ॥ २० ॥
भर्तुः सुखं न लभते चान्ते च नरकं व्रजेत्। पञ्चचत्वारिंशकेऽब्दे रिष्टं चाकृतनिष्कृतेः ॥ २१ ॥
घटे भौमयुते लग्ने सूर्ये सुखसमाश्रिते। चापे राहौ च जननं चापे राहौ मृतिस्तथा ॥ २२ ॥
त्रिसप्तत्यब्दमायुः स्याद्ध्रुवं च कृतनिष्कृतेः। रिष्टेनैव मृतिस्तस्या भृशं चाकृतनिष्कृतेः ॥ २३ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्। यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२५ ॥

---

श्रीसूर्य उवाच ।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यत्र कोविदः । ग्रामवासी सदा सौम्यः शतद्रुनिकटे द्विजः ॥ १ ॥
शूद्रकन्या च तेनैव हृता षोडशवार्षिकी । भुक्तातिकामलोभेन बलात्कारेण दूषिता ॥ २ ॥
॥ चाथ धर्मपुत्रस्य भुक्ता भैरवशासनम् । पूजनाच्छिवलिङ्गानां प्रागत्रापि च सङ्करः ॥ ३ ॥
षण्ढस्तेन विपाकेन प्राप्तसर्वमनोरथः । राजप्रचारको धीमान्गजाश्वप्रतिपालकः ॥ ४ ॥
महाधनो महोत्साहो महाविभवविस्तरः । मृत्युश्चास्यात्र गङ्गायां पुण्याच्च शिवपूजनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चात्र सद्गतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२६ ॥

श्रीसूर्य उवाच ।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि । यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय खगाधिप । न पश्यति महापीडां पापजां पादसम्भवाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२७ ॥

श्रीसूर्य उवाच ।

यो घातयेदजं ज्ञानात्प्राग्भवे विनतासुत । भक्ष्यार्थं सोऽत्र जनुषि पुरुषोङ्गाधिको भवेत् ॥ १ ॥
न तस्य निष्कृतिर्दुष्टपापस्यात्र च काश्यपे । आरब्धस्य क्षयो नास्ति विन्मये शतधा कृते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरषट्शताधिकसहस्रतमः ॥ १६२८ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि पृच्छकस्य विचेष्टितम् । प्राग्भवे यामुने देशे याडुजो धर्मसंयुतः ॥ १ ॥
राजप्रचारी शूरश्च मन्त्रकार्यविचक्षणः । स्त्रीपुत्रधनसंयुक्तो भृत्यवाहनसंयुतः ॥ २ ॥
राजसेवापरो नित्यं सन्धिविग्रहसंयुतः । दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः ॥ ३ ॥
सिद्धान्नानि महाभाग भिक्षुकेभ्योऽतिभक्तितः । वदान्यो नीतिविन्प्राज्ञो वृद्धशिष्टैः समन्वितः ॥ ४ ॥
कृतवान्ब्राह्मणोद्वाहं विधानेन खगाधिप । अथो भाविवशात्सूत कृतं कर्मातिदारुणम् ॥ ५ ॥
बालकेनाष्टवर्षेण राजाश्रितपुरोधसः । क्रीडने प्रस्तरक्षेपान्मारितो राजबालकः ॥ ६ ॥
ततो राजाज्ञया क्षत्री विषदानेन बालकम् । ब्राह्मणस्य जघानाथ ब्राह्मणः पुत्रशोकतः ॥ ७ ॥
मृतस्तेन महाभाग घोरं पापमुपार्जितम् । स तेन कर्मणा युक्तो मृतो वै यमशासनम् ॥ ८ ॥
पुण्यात्पुण्यफलं भुक्तं पापात्पापफलं तथा । पूर्वपुण्यप्रभावेण स जातः पर्वते त्विह ॥ ९ ॥
राजपुत्रोऽयुसंज्ञो गङ्गायाः पूर्वभागतः । जन्मलग्नादितो राशौ रन्ध्रे पापग्रहान्वितः ॥ १० ॥
अजे शुभांशौ नीचस्थे जीवे वृषगते शनौ । नातिकृशो नातिगौरो वदान्यः प्रियभाषणः ॥ ११ ॥
सर्वैश्वर्ययुतो धीरः शोभनो राजवल्लभः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १२ ॥
कदाचिद्रोगयुक्तश्च चपलोऽल्पाशनोऽण्डज । लक्षणैरेभिराढ्यस्य प्रायश्चित्तमथो शृणु ॥ १३ ॥
पलमानं सुवर्णेन कुर्याद्ब्राह्मणबालकम् । तथा पञ्चपलैः सौम्यो रजतस्य नराधिप ॥ १४ ॥
दशमापमितः केतुर्विधानेन हिरण्मयः । षोडशोपचारैस्तु पूजयित्वा विधानतः ॥ १५ ॥
कर्मप्रकाशकं विप्रं पूजयित्वातिभक्तितः । तस्मै दद्यात्सुवर्णार्थैर्वस्त्राद्यैर्भूषिताय च ॥ १६ ॥
तदर्धमितकं वापि निजवित्तानुसारतः । महामृत्युञ्जयं मन्त्रं लक्षमानं जपेत्तथा ॥ १७ ॥

तदर्धं वा महाभाग सोममन्त्रं जपेत्तथा। गायत्रीमष्टसाहस्रं तद्दशांशेन होमयेत् ॥ १८ ॥
कुण्डे वा स्थण्डिले वापि तिलैस्त्रिमधुराप्लुतैः। ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् १९
प्रायश्चित्तमिदं प्रोक्तं पूर्वजन्माघनाशनम्। आयुःकीर्तिधनारोग्यविद्यालक्ष्मीयशःप्रदम् ॥ २० ॥
सर्वारिष्टहरं पुण्यमाधिव्याधिविनाशनम्। नैवं करोति यो मोहाल्लोभाद्वा पापमोहितः ॥ २१ ॥
तस्यारिष्टमयं घोरमष्टमेऽब्दे मृतिप्रदम्। नवाशीतिमितायुः स्यात्प्रायश्चित्ते कृते त्विह ॥ २२ ॥
भागीरथीतटे पुण्ये वंशासे निधनं ध्रुवम्। अकृते तु यथाशक्ति प्रायश्चित्ते खगाधिप ॥ २३ ॥
रिष्टेनैव विनाशः स्यान्न गतिं च शुभां लभेत्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् २४

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ ११२९ ॥

## श्रीसूर्य उवाच।

शृणु सूत प्रवक्ष्यामि कर्मणां कारणं महत्। पृच्छकस्य खगश्रेष्ठ पूर्वकर्मविचेष्टितम् ॥ १ ॥
जातोऽसौ यामुने देशे शूद्रवंशसमुद्भवः। धातुकांस्यादिकर्ता च कृषिवाणिज्यकारकः ॥ २ ॥
ब्राह्मणस्य धनेनैव सर्वं वै वर्धितं धनम्। ब्राह्मणे मित्रसम्भूते विनतानन्दवर्धन ॥ ३ ॥
पुण्यक्षेत्रेषु तीर्थेषु स्नानदानादिशक्तितः। कृतवानुपकारं च ब्राह्मणानां प्रयत्नतः ॥ ४ ॥
अथ तन्मित्रसम्भूतो द्विजो हि निधनं गतः। तद्धनं तस्य पुत्रेभ्यो न दत्तं द्रव्यलोभतः ॥ ५ ॥
ब्रह्मस्वहरणं तेन कृतं वै लुब्धचेतसा। महापापं कृतं तेन ब्रह्मस्वहरणाभिधम् ॥ ६ ॥
क्षुधया दुःखिता बाला द्विजस्य हि मृतिं गताः। ततो बहुतिथे काले शूद्रोऽपि निधनं गतः॥७॥
भुक्त्वा पापस्य पापफलं पुण्यात्स्वर्गं च शाश्वतम्। पूर्वपुण्यप्रभावेण जातोऽत्र स वणिक्सुतः ॥ ८ ॥
हिमालये पुण्यदेशे गङ्गायाः पूर्वभागतः। स कृष्णगौरो मतिमांस्तात्युच्चो न लघुर्घृणी ॥ ९ ॥
धनवाहनसंयुक्तो भृत्यदासीसुखान्वितः। स्वधर्मनिरतो दक्षो राजमान्यो बहुप्रियः ॥ १० ॥
सहोदरयुतो धीरो बन्धुस्त्रीमित्रसंयुतः। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ११ ॥
धूर्तः शठो महाक्रोधी मनोदुःखसमन्वितः। ब्रह्मस्वहरणात्पूर्वं जातपुत्रविनाशकः ॥ १२ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तमतः शृणु। लक्ष्मीनारायणं कुर्यात्त्रिपलैश्च हिरण्मयम् ॥ १३ ॥
तथा पलेन विघ्नेशं तथा सूर्यं खगाधिप। षोडशोपचारैश्च समभ्यर्च्य यथाविधि ॥ १४ ॥
दद्याद्विधिविदे सूत ब्राह्मणाय कुटुम्बिने। गायत्रीमष्टसाहस्रं जपेन्मृत्युञ्जयं तथा ॥ १५ ॥
अष्टाक्षरं तथा मन्त्रं गाणपत्यं खगेश्वर। तथा जपेत्सूर्यमन्त्रं तदन्ते होमयेत्तिलैः ॥ १६ ॥
तत्तद्दशांशतो विप्रान्भोजयेच्छक्तितोऽण्डज। पूजयेल्लक्षरुद्रान्वै पार्थिवान्विधिना खग ॥ १७ ॥
प्रदिने तु व्रतं कुर्याद्भक्तिश्रद्धासमन्वितः। एवं कृते खगश्रेष्ठ प्रायश्चित्ते विधानतः ॥ १८ ॥
न तस्य पुत्रमरणं नाधयो व्याधयोऽपि च। त्रिसप्ततिमितायुः स्याद्धनवाञ्जायतेऽत्र च ॥ १९ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। तस्य पुत्रा न जीवन्ति निर्धनोऽत्रैव जायते ॥२०॥
द्व्यूनपञ्चाशदब्दे तु रिष्टेनैव विनश्यति। प्रायश्चित्ते कृते सूत रिष्टं नैव प्रभावते ॥ २१ ॥
सिंहे शनौ तथा जातो मकरस्थे मृतिर्भवेत् ॥ २२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ ११३० ॥

## श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु चास्य विचेष्टितम्। प्राग्भवे यामुने देशे वैश्यो हि धनवान्सुधीः ॥ १ ॥
शिवपूजारतो नित्यमन्नदानादयानिधिः। व्यापारः फलितस्तस्य भृत्यवाहनसंयुतः ॥ २ ॥

स्त्रीभ्यां तत्सोदराभ्यां हि युक्तो नीतिविचक्षणः । पण्ढोऽपि पूर्वपापाच्च स्त्रीसङ्गतिविवर्जितः ॥३॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम् । ब्राह्मणस्य च शिष्टस्य साहाय्येन हि यः कृतः॥४॥
व्यापारो ब्राह्मणद्रव्यैः स्ववनं वर्धितं खग । ततोऽसौ वञ्चितो विप्रो धनं किञ्चिन्न दापितम् ॥५॥
स्त्रियोः सोदरयुग्मेन मिलित्वा पापमोहितः । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो मुखजस्त्विह ॥ ७ ॥
हिमालये पुण्यदेशे गङ्गायाः पूर्वभागतः । पापे पञ्चमभावस्थे जीवे कर्कटगे तनौ ॥ ८ ॥
द्वादशस्थे सुधांशौ तु नात्युच्चो न लघुर्घृणी । श्यामगौरस्वरूपश्च मितदो लोभवर्जितः ॥ ९ ॥
शिवपूजनजात्पुण्याद्राजमान्यो यशोन्वितः । पित्रोः सुखयुतो भृत्यदासीमित्रसुसंयुतः ॥ १० ॥
धनी वाहनभोगाढ्यो बहुग्रामाधिपः सुखी । अन्नदानान्महापुण्यो विद्यावान्नीतिविन्मम: ॥ ११ ॥
बहुस्त्रीसुखसंयुक्तो ब्रह्मण्योऽतिप्रियंवदः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १२ ॥
ब्रह्मस्वहरणात्पापाज्जातपुत्रविनाशकः । यौ सहायौ महाभाग ब्रह्मस्वहरणे खग ॥ १३ ॥
तौ तु गर्भाच्च्युतौ वत्स स्त्रियौ तेऽपि तथा मृते । ब्रह्मस्वं पक्षिशार्दूल स्त्रीपुत्राणां विनाशकम् ॥१४॥
हठी पापक्रियायुक्तो धूर्तो मानी रुजान्वितः । द्वाविंशतिमिताब्दे वै जातपुत्रविनाशकः ॥ १५ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तमतः शृणु । लक्षं पार्थिवलिङ्गानां पूजयेत्पुत्रपौत्रदम् ॥ १६ ॥
लक्ष्मीनारायणं कुर्यात्पलत्रयमितं शुभम् । हिरण्मये तथालेख्यपत्रे च चतुरस्रके ॥ १७ ॥
मापपञ्चमितो वह्निस्तथा चैव हिरण्मयः । गन्धपुष्पैस्तथा धूपैर्दीपैर्वस्त्रैर्विशेषतः ॥ १८ ॥
पूजयित्वा प्रतिष्ठाप्य श्रद्धाभक्तिसमन्वितः । ब्राह्मणाय प्रदद्याद्धि पूजयित्वा कुटुम्बिने ॥ १९ ॥
गायत्रीमष्टसाहस्रं जपेन्मृत्युञ्जयं तथा । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २० ॥
मद्दिने तु विशेषेण व्रतं कुर्यात्समाहितः । अथवा हरिवंशं तु दशावृत्त्या विधानतः ॥ २१ ॥
शृणुयाद्वाचकायापि गोभूवस्त्राणि दापयेत् । एवं कृतविधेः सूत न पुत्रमरणं भवेत् ॥ २२ ॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । जरायां यत्कृतं पापं ब्रह्मस्वहरणात्मवम् ॥ २३ ॥
तत्कृतं न महारिष्टं द्विचत्वारिंशकेऽब्दके । न प्राप्नोति गतिस्तस्य शुभा चैव भवेत्तथा ॥ २४ ॥
वेदाशीतिमिताब्दायुर्विनतानन्दवर्धन । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ २५ ॥
रिष्टेन निधनं याति न च पुत्रसुखं लभेत् ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३१ ॥

---

## श्रीसूर्य उवाच ।

भगवन्भारभवे विप्रो ग्रामवासी जनाश्रितः । चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत । गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान्पापात्पुण्याच्च शाश्वतान् । स्वर्गात्पर्वतभागे तु स जातः पादजोऽधुना ३ ॥
वामनो राजसम्मानी महोग्रो मन्त्रपारगः । पुत्रहीनोऽप्यसौ शूद्रः परवित्तस्य लुण्टनात् ॥ ४ ॥
भवन्त्यत्र च ये पुत्रा म्रियन्ते नात्र संशयः । प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान् । तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्गीचतोऽण्डज । गोदानं चोरतश्चात्पूर्वपापविशुद्धये ॥ ७ ॥

यो न कुर्यादिदं श्रुत्वा नरः पुत्रविवर्जितः । जायतेऽत्रैव पक्षीन्द्र कुर्याच्च सुतवर्धनम् ॥ ८ ॥
अष्टाशीत्यब्दमायुर्वै जायते कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३२ ॥

अरुण उवाच ।

क्षात्रवंशे समुत्पन्नो देहे वातरुजा युतः । गुल्माद्या ह्युदरे बाधा शिरोर्तिर्जायते तदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किञ्चित्तोयादिना भवेत् । तस्य भार्याद्वयं चास्ति किञ्चिद्भक्तिपरायणम् ॥२॥
अन्योन्यद्वेषभावाच्च किञ्चित्प्रीतिकरी परा । मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
एको गर्भे स्थिरीभूतो न प्रसूतिर्न पातनम् । केन पापप्रभावेण कथय त्वं दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः । दानधर्मपरो नित्यं देवदेवपरायणः ॥ ५ ॥
अन्योन्यद्वेषभावाच्च वर्तते च निरन्तरम् । कश्चिद्विप्रस्तदभ्याशे वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात् । तं द्विजं लंघयामास शूद्रो म्लेच्छजनैः सह ॥ ७ ॥
किंकर्तव्यविमूढस्तु ब्राह्मणो भार्यया सह । भर्त्सनैस्तर्जनाद्यैस्तु तद्धनं शूद्रकोऽहरत् ॥ ८ ॥
दिनैः कतिपयैरेव भूयो वै ब्राह्मणस्य हि । लंघनाय मतिं चक्रे ब्राह्मणो भार्यया सह ॥ ९ ॥
म्लेच्छभीतिसमाविष्टो विशेषक्रोधसंकुलः । तदर्थमपि प्राप्तश्च ह्यात्मघातं चकार ह ॥ १० ॥
गर्भयुक्ता ब्राह्मणी वै भर्तारं पृष्ठतोन्वगात् । हृतं तस्यापि सर्वस्वं म्लेच्छराजेन वै तदा ॥११॥
किञ्चित्कालानन्तरं वै शूद्रो म्लेच्छेन मारितः । तेनैव कर्मणा वत्स वर्षार्बुदसहस्रशः ॥ १२ ॥
पपात नरके घोरे शूद्रो पीडायुतस्तदा । पश्चान्मानुष्यमापन्नो दानधर्मप्रभावतः ॥ १३ ॥
इदन्तु तृतीयं जन्म शूद्रवंशसमुद्भवम् । तेन वै कर्मणा युक्तो ह्यपत्यं नैव जायते ॥ १४ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया ॥१५॥

श्रीसूर्य उवाच ।

तीर्थे सम्वत्सरं सेवां कुरुतं तौ च दम्पती । श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १६ ॥
तावन्निष्कृतयो भूयः कर्तव्याः क्रमतः शुभाः । सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १७ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् । तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेर्चयेत् ॥ १८ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम् । उपचारैः शुभैर्धूपैर्गन्धैश्च कुसुमादिभिः ॥ १९ ॥
जनन्या सहितं भूपं प्रद्युम्नाद्यांस्तथार्चयेत् । चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ २० ॥
श्रीवत्साङ्कं पीतवस्त्रं सुबाहुं पूजयेत्क्रमात् । पूजनं विष्णुसूक्तेन तथा श्रीरसिकोविदैः ॥ २१ ॥
पुष्पैः स्रग्गन्धधूपैश्च ह्यर्चयेद्विष्णुवारणैः । तद्विप्रासोथतद्विष्णोर्विष्णोः कर्माणि नित्यशः ॥२२॥
तद्विप्रासोथ तद्विष्णारतो देवास्तथा विभोः । अतो देवा अवंत्विति भावेनाष्टोत्तरं हुनेत् ॥
होमान्ते विप्रभोज्यान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

"यन्मया पापभावेन कर्माधेन दुरात्मना ॥ २४ ॥
म्लेच्छराज्ये तु व्यापारे बहु वै दुष्कृतं कृतम् । ब्राह्मणानां हृतं द्रव्यं भयभर्त्सनतर्जनैः ॥
द्रव्यापहरणात्प्राप्तं दुःखं नानाभवान्तरे ॥ २५ ॥

स्त्रीभ्यां तत्सोदराभ्यां हि युक्तो नीतिविचक्षणः । पण्ढोऽपि पूर्वपापाच्च स्त्रीसङ्गतिविवर्जितः ॥३॥
अयो भाविवलात्सूत कृतं कर्मातिदारुणम् । ब्राह्मणस्य च शिष्यस्य साहाय्येन हि यः कृतः॥४॥
व्यापारो ब्राह्मणद्रव्यैः स्वधनं वर्धितं खग । ततोऽसौ वञ्चितो विप्रो धनं किञ्चिन्न दापितम् ॥५॥
स्त्रियोः सोदरयुग्मेन मिलित्वा पापमोहितः । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो भुखजस्त्विह ॥ ७ ॥
हिमालये पुण्यदेशे गङ्गायाः पूर्वभागतः । पापे पञ्चमभावस्थे जीवे कर्कटगे तनौ ॥ ८ ॥
द्वादशस्थे सुधांशौ तु नात्युच्चो न लघुर्घृणी । श्यामगौरस्वरूपश्च मितदो लोभवर्जितः ॥ ९ ॥
शिवपूजनजात्पुण्याद्राजमान्यो यशोन्वितः । पित्रोः सुखयुतो भृत्यदासीमित्रसुसंयुतः ॥ १० ॥
धनी वाहनभोगाढ्यो बहुग्रामाधिपः सुखी । अन्नदानान्महापुण्यो विद्यावान्नीतिवित्तमः ॥ ११ ॥
बहुस्त्रीसुखसंयुक्तो ब्रह्मण्योऽतिप्रियंवदः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १२ ॥
ब्रह्मस्वहरणात्पापाज्जातपुत्रविनाशकः । यौ सहायौ महाभाग ब्रह्मस्वहरणे खग ॥ १३ ॥
तौ तु गर्भाच्च्युतौ वत्स स्त्रियौ तेऽपि तथा मृते । ब्रह्मस्वं पक्षिशार्दूल स्त्रीपुत्राणां विनाशकम्॥१४॥
हठी पापक्रियायुक्तो धूर्तो मानी रुजान्वितः । द्वाविंशतिमिताब्दे वै जातपुत्रविनाशकः ॥ १५ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तमतः शृणु । लक्षं पार्थिवलिङ्गानां पूजयेत्पुत्रपौत्रदम् ॥ १६ ॥
लक्ष्मीनारायणं कुर्यात्पलत्रयमितं शुभम् । हिरण्मये तथालेख्यपत्रे च चतुरस्त्रके ॥ १७ ॥
माषपञ्चमितो वह्निस्तथा चैव हिरण्मयः । गन्धपुष्पैस्तथा धूपैर्दीपैर्वस्त्रैर्विशेषतः ॥ १८ ॥
पूजयित्वा प्रतिष्ठाप्य श्रद्धाभक्तिसमन्वितः । ब्राह्मणाय प्रदद्याद्धि पूजयित्वा कुटुम्बिने ॥ १९ ॥
गायत्रीमष्टसाहस्रं जपेन्मृत्युञ्जयं तथा । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २० ॥
मद्दिने तु विशेषेण स्नानं कुर्यात्समाहितः । अथवा हरिवंशं तु दशावृत्त्या विधानतः ॥ २१ ॥
शृणुयाद्वाचकायापि गोभूवस्त्राणि दापयेत् । एवं कृतविधेः सूत न पुत्रमरणं भवेत् ॥ २२ ॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । जरायां यत्कृतं पापं ब्रह्मस्वहरणात्मकम् ॥ २३ ॥
तत्कृतं न महारिष्टं द्विचत्वारिंशकेन्द्रके । न प्राप्नोति गतिस्तस्य शुभा चैव भवेत्तथा ॥ २४ ॥
वेदाशीतिमिताब्दाग्र्यैविनतानन्दवर्धन । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ २५ ॥
रिष्टेन निधनं याति न च पुत्रसुखं लभेत् ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ ११३१ ॥

---

## श्रीसूर्य उवाच ।

भगवन्प्राग्भवे विप्रो ग्रामवासी जनाश्रितः । चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत । गोभूम्यश्वादिकान्येव ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान्पापात्पुण्याच्च शाश्वतान् । स्वर्गात्पर्वतभागे तु स जातः पादजोऽधुना ३ ॥
वामनो राजसम्मानी महोग्रो मन्त्रपारगः । पुत्रहीनोऽप्यसौ शूद्रः परवित्तस्य लुण्टनात् ॥ ४ ॥
भवन्त्यत्र च वै पुत्रा म्रियन्ते नात्र संशयः । प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान् । तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोऽण्डज । रौद्रव्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥

यो न कुर्यादिदं श्रुत्वा नरः पुत्रविवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्याच्च सुतवर्धनम् ॥ ८ ॥
अष्टाशीत्यब्दमायुर्वै जायते कृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३२ ॥

अरुण उवाच।

क्षत्रवंशे समुत्पन्नो देहे वातरुजा युतः। गुल्माद्या ह्युदरे बाधा शिरोर्तिर्जायते तदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किञ्चित्सेवादिना भवेत्। तस्य भार्याद्वयं चास्ति किञ्चिद्भक्तिपरायणम् ॥२॥
अन्योन्यद्वेषभावाच्च किञ्चित्प्रीतिकरी परा। मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
एको गर्भे स्थिरीभूतो न प्रसूतिर्न पातनम्। केन पापप्रभावेण कथय त्वं दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि शूद्रस्तु क्रयविक्रयकारकः। दानधर्मपरो नित्यं वेददेवपरायणः ॥ ५ ॥
अन्योन्यद्वेषभावाच्च वर्तते च निरन्तरम्। कश्चिद्विप्रस्तदभ्याशे वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। तं द्विजं लंघयामास शूद्रो म्लेच्छजनैः सह ॥ ७ ॥
किंकर्तव्यविमूढस्तु ब्राह्मणो भार्यया सह। भर्त्सनैस्तर्जनाद्यैस्तु वद्धनं शूद्रकोऽहरत् ॥ ८ ॥
दिनैः कतिपयैरेव भूयो वै ब्राह्मणस्य हि। लंघनाय मतिं चक्रे ब्राह्मणो भार्यया सह ॥ ९ ॥
म्लेच्छभीतिसमाविष्टो विशेषक्रोधसंकुलः। तदर्थमपि प्राप्तश्च ह्यात्मघातं चकार ह ॥ १० ॥
गर्भयुक्ता ब्राह्मणी वै भर्तारं पृष्ठतोन्वगात्। हृतं तस्यापि सर्वस्वं म्लेच्छराजेन वै तदा ॥११॥
किञ्चित्कालानन्तरं वै शूद्रो म्लेच्छेन मारितः। तेनैव कर्मणा वत्स वर्षायुदसहस्रशः ॥ १२ ॥
पपात नरके घोरे शूद्रो पीडायुतस्तदा। पश्चान्मानुष्यमापन्नो दानधर्मप्रभावतः ॥ १३ ॥
इदन्तु तृतीयं जन्म शूद्रवंशसमुद्भवम्। तेन वै कर्मणा युक्तो ह्यपत्यं नैव जायते ॥ १४ ॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत्। निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया ॥१५॥

श्रीसूर्य उवाच।

तीर्थे सम्वत्सरं सेवां कुरुतं तौ च दम्पती। श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १६ ॥
तावन्निष्कृतयो भूयः कर्तव्याः क्रमतः शुभाः। सुशुभे भूमदेशे तु गोमयाद्युपचर्चिते ॥ १७ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम्। तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेर्चयेत् ॥ १८ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम्। उपचारैः शुभैर्धूपैर्गन्धैश्च कुसुमादिभिः ॥ १९ ॥
जनन्या सहितं भूपं प्रद्युम्नाचार्यतस्तथार्चयेत्। चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ २० ॥
श्रीवत्साङ्कं पीतवस्त्रं सुबाहुं पूजयेत्क्रमात्। पूजनं विष्णुसूक्तेन तथा श्रीरसिकोविदैः ॥ २१ ॥
पुष्पैः सुगन्धधूपैश्च ह्यर्चयेद्विष्णुधारणैः। तद्विप्रासोथतद्विष्णोर्विष्णोः कर्माणि नित्यशः ॥२२॥
तद्विप्रासोथ तद्विष्णास्तो देवास्तथा विभोः। अतो देवा अवंत्विति भावेनाष्टोत्तरं हुनेत् ॥
होमान्ते विप्रभोज्यान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः।

"यन्मया पापभावेन कर्मांधेन दुरात्मना ॥ २४ ॥
म्लेच्छराज्ये तु व्यापारे बहु वै दुष्कृतं कृतम्। ब्राह्मणानां हृतं द्रव्यं भयभर्त्सनतर्जनैः ॥
द्रव्यापहरणात्तासां दुःखं नानाभवान्तरे ॥ २५ ॥

स्थिरगर्भमृतापत्यत्वादि शार्तं सुदुःसहम् । तत्तद्देनोविनाशाय दानं सम्प्रददे त्विदम् " ॥२६ ॥
स्वस्त्यस्त्विति च तत्रोक्त्वा कोदादिति विसर्जनम् । सर्पिष्यात्मानमालोक्य भोजयेदिष्टवन्धुभिः
ऐहिकं लक्षणं तस्य शरीरे चोपजायते । हृद्दुःखं दीर्घनिःश्वासो लोचने चाश्रुकर्षिते ॥ २८ ॥
काष्ठलोष्टादिशस्त्राद्यैर्घातः स्यादुपलेखनात् । जलाकुलत्वं स्पर्शाग्नेस्ताहशा व्रणसम्भवाः ॥ २९ ॥
नार्यङ्गे विकृतव्याधी मुखे तिलव्रणादिकम् । पितृष्वसृमातुलान्योर्वैधव्यार्तिः स्नुषादिषु ॥ ३० ॥
स्वकुले प्रेतजा पीडा दुःखं चैव ह्यपत्यजम् । कर्मानुसारजो व्याधिश्चिह्नं तस्य सहायवत् ॥ ३१ ॥
स्वकुले चापि वर्तन्ते पतिता ब्रह्मचारिणः । एवं तु लक्षणैर्व्याप्तं प्रायश्चित्तं ततो वदेत् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३३ ॥

श्रीसूर्य उवाच ।

पूर्वं ह्याभीरजा काचिद्भूद्धर्मपरायणा । महद्भिर्गोधनैर्युक्ता गवां पालनतत्परा ॥ १ ॥
गावस्तृषार्ताः सततं प्रपायां प्रेरितास्तया । निदाघकाले सम्प्राप्ते वहिर्ग्रामाज्जलाश्रये ॥ २ ॥
अथान्यगावः सततं तस्मिन्नेव जलाशये । शनैः पानं प्रकुर्वन्त्यो जलं शीतलमुत्तमम् ॥ ३ ॥
ताडितास्ता भृशं गावो लकुटेन दृढेन वै । तत्रैका तृषया युक्ता ताडितापि भृशं तदा ॥ ४ ॥
नच त्यक्तं जलं सूत गर्भभारान्विता यतः । तस्मिन्काले तदीयस्तु पतितो गर्भसंस्थितः ॥ ५ ॥
वत्सस्तत्ताडनादाशु मृतश्चाप्यवलः क्षणात् । विचेष्टितमिदं यस्याः सा वै जाता भवेऽधुना ॥ ६ ॥
नानाविभूतिसंयुक्ता नानापशुभिरन्विता । सुखभोगधनैर्धान्यैर्वाञ्छितार्थान्विता सुत ॥ ७ ॥
प्राग्गोसेवनजात्पुण्यात्सर्वं पुण्यफलं त्विदम् । अथात्र गर्भपूर्णत्वे युवभावे खगाधिप ॥ ८ ॥
न धारयति सा गर्भं तद्दुःखेनाकुला भृशम् । एवं वर्षत्रयं यावन्मोचयिष्यति वै सुत ॥ ९ ॥
रिष्टमब्दत्रये सूत बालवत्सवधादिह ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत् । उपकाराय लोकानां यतस्त्वं सर्वदर्शिवान् ॥ ११ ॥

श्रीसूर्य उवाच ।

दद्यात्तां कपिलामेकां स्वर्णशृंगादिकान्विताम् ॥ १२ ॥
विप्राय वेदविदुषे तद्दोषशमनाय च । सुवर्णार्धमितां तद्वत्सेरूप्यां गां गर्भसंयुताम् ॥ १३ ॥
दद्याद्वेदविधिज्ञाय पूर्वपापात्प्रमुच्यते । भोजयेत्तु यथाशक्ति विप्रान्वै होमयेत्तिलान् ॥ १४ ॥
मुच्यते गर्भदोषाच्च नात्र कार्या विचारणा ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३४ ॥

श्रीसूर्य उवाच ।

बभूव पादजः कश्चिद्गुर्जरे विनतासुत । धर्माधर्मसमायुक्तो देवतातिथिपूजकः ॥ १ ॥
पितृभक्तिरतो नित्यं दानानि विधिपूर्वकम् । ददाति तेन शिष्टेभ्यो ब्राह्मणेभ्योऽतिशक्तितः॥२॥
दैवाच्छत्रुगृहं गत्वा कृतं कर्म सुदारुणम् । वैरिपुत्रः पुरा सूत ! पादभागे तु घातितः ॥ ३ ॥
कुन्तेनापि च तीक्ष्णेन दिवा वै क्रूरकर्मणा । स मृतस्तेन दुःखेन तन्माता ह्येकपुत्रिणी ॥ ४ ॥
पुत्रदुःखान्मृता सापि ददौ शापं हि दारुणम् । यथा पुत्रविहीनाहं गच्छामि [redacted] यमालयम् ५ ॥
तथैव पुत्रशोकार्तो जन्मजन्मनि यास्यति । ततो बहुतिथे काले गतोऽसौ यमशासनम् ॥ ६ ॥

धर्मात्स्वर्गफलं भुक्ता पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो मुखजोऽधुना ॥ ७ ॥
विपाशानिकटे देशे वृषलग्रे विधौ स्थिते । श्यामाङ्गो धूसरः क्षीणः प्रमुर्देशाटने रतः ॥ ८ ॥
बहुसङ्गेन संयुक्तो मित्रप्रियसमन्वितः । मानमोगसुखैश्वर्यसम्पन्नो लोभसंयुतः ॥ ९ ॥
धर्मात्स्वर्गफलं सूत भृशं पापफलं शृणु । क्रूरचेष्टो महालोभी सदा मात्सर्यसंयुतः ॥ १० ॥
जातपुत्रविहीनोऽसाविह जन्मनि जायते । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविशोधनम् ॥ ११ ॥
लोकानामुपकाराय शृणु सूत प्रयत्नतः । पलैर्दशमितैः कुर्याद्राजतं बाहुजं सुत ॥ १२ ॥
तन्मातरं च सौवर्णी पलेकेन मितां शुभाम् । पत्रे लेख्यां शुभाकारां यथोपस्करसंयुताम् ॥ १३॥
पूजयित्वा तु गन्धाद्यैः षोडशोपचारकैः । सूर्यभक्ताय शान्ताय तां दद्याद्धि कुटुम्बिने १४ ॥
पलद्वयमितं रौक्मं कुर्याद्वरिहरात्मकम् । तथैव गणनाथं च लेख्यं पञ्चोपचारकैः ॥ १५ ॥
संपूज्य विधिवद्दद्यात्सर्वपापविशुद्धये । अष्टाक्षरं तथा मन्त्रं वैदिकं सूर्यदैवतम् ॥ १६ ॥
जपेद्दशसहस्रं तु यथाप्रणवपूर्वकम् । गायत्रीं पञ्चसाहस्रं दुष्टपापविमोचनीम् ॥ १७ ॥
कुर्याद्धोमं दशांशेन पश्चाद्ब्राह्मणभोजनम् । एवं कुर्याद्विधानेन प्रायश्चित्तं यथाविधि ॥ १८ ॥
न प्राप्नोति तदा रिष्टं षट्त्रिंशाब्दे प्रकीर्तितम् । पञ्चवेदमिताब्दान्तमायुस्तस्य प्रकीर्तितम् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३५ ॥

## श्रीसूर्य उवाच ।

अज्ञानादवधीद्यश्च पूर्वजन्मन्यजां शुभाम् । भविष्यत्यत्र पुरुषोऽभ्यधिकाङ्गः कदाचन ॥ १ ॥
कस्तूरिकापलं दद्यात्स तत्पापविनाशनम् । अजमेकं च वज्राय मुच्यते च तदेनसः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३६ ॥

## श्रीसूर्य उवाच ।

लोहहारी तु पुरुषश्चेह जन्मनि मानव । बर्बराङ्गारूयरोगेण पीड्यते नात्र संशयः ॥ १ ॥
दद्यात्पलशतं लोहं विधिना पापशोधनम् । प्राजापत्यं चरेदेकं ततो बानशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३७ ॥

## श्रीसूर्य उवाच ।

सर्वैर्मनोरथैर्युक्ता काचिदासीन्मनोरमा । प्राग्भवेऽण्डजः तत्सर्वं चेष्टितं शृणु साम्प्रतम् ॥ १ ॥
नकुलानां बिले गत्वा चालिता वह्निवालुका । पूरितं च तथा सर्वं तद्वद्धोद्दीप्तं तृणैः ॥ २ ॥
मृतः स तेन दाहेन नकुलः सकुलः खग । सापि मृत्युवशं प्राप्ता भुक्त्वा तु यमशासनम् ॥ ३ ॥
पूर्वं शातद्रुजे देशे ह्यभूत्तत्र च पर्वते । पूर्वं राजकुले जातात्रापि राजकुले सुत ॥ ४ ॥
दानव्रतादिजात्पुण्यादथ पापफलं शृणु । सर्वे तद्वंशजाः सूत तदग्रे मरणं गताः ॥ ५ ॥
जीवनं दुःखपूर्णाया वर्षमष्टोत्तरं शतम् । न मुच्यते महापापाद्दाजन्मत्रयेऽपि वा ॥ ६ ॥
कुरुक्षेत्रादिवासाच्च पापं नश्यति साम्प्रतम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६३८ ॥

## श्रीसूर्य उवाच ।

लोहं हरति या यस्य नारी बुद्धिविवर्जिता । इह जन्मनि सा नारी बर्बरांगान्विता भवेत् ॥ १ ॥

पौरुषेण तु सूक्तेन यावत्षोडशसंख्यया । अश्वत्थसमिधस्तिस्रो जुहुयात्षोडशैव तु ॥ २५ ॥
पुनराज्यं ततो हुत्वा जुहुयाच्च चरुन्तथा । होमान्ते द्विजभोज्यान्ते दानमेतत्समाचरेत् ॥ २६ ॥
हिरण्यमूर्तिं वासांसि धेनुं वत्ससमन्विताम् । विप्रस्योद्वाहनं कृत्वा कन्यां चालंकृतामपि ॥ २७ ॥
दक्षिणां प्रतिपद्याथ छलकैतिल्यवर्जितः । भाश्नीयात्तं हविश्शेषं सह पत्न्या हरिं स्मरेत् ॥ २८ ॥
इति कृत्वा विधिं नारी पुत्रं प्राप्नोति वैष्णवम् । सुभगा शुद्धरूपा च नेत्रं वै छिन्नविग्रहा ॥ २९ ॥
ऐहिकं लक्षणं चिन्त्यं पूर्वकर्मानुसारतः । गुल्मार्शसां तथा बाधा गुदान्तर्व्रणजोत्थिता ॥ ३० ॥
वातरक्तादिशिरसो नेत्रमर्मोत्थितो व्रणः । स्तनोपगौरवं दुःखं तत्पादवक्रतिः ॥ ३१ ॥
जनश्रुतिं हि लोका वै ब्रुवते कारणं विना । हानिस्तु सर्ववस्तूनां द्रव्यनाशनजं भयम् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४१ ॥

## श्रीसूर्य उवाच ।

काचिच्छूद्रकुले पूर्वमासीत्पुण्या वराङ्गना । सदा दानरता जाता कुरुक्षेत्रे खगाधिप ॥ १ ॥
सर्वैः सुखैः सदोपेता सर्वसम्पत्तिसंयुता । तदा कृतं महापापं भाविनोऽर्थस्य गौरवात् ॥ २ ॥
समीपे वासिनश्चास्या ब्राह्मणस्य नवं गृहम् । निर्दग्धं वह्निदाहेन वैरिभावात्खगाधिप ॥ ३ ॥
तत्र दग्धा महाभाग गौरपाथा गृहे स्थिता । कृत्वैवमद्भुतं कर्म भुक्त्वा तु नरकान्सुत ॥ ४ ॥
दानधर्मकृतात्पुण्यात्सात्र जाता हि बाहुजा । माथुरे मण्डले पुण्ये नृपलक्ष्मोपलक्षिते ॥ ५ ॥
सुखदुःखसमाक्रान्ता जातसन्ततिनाशकृत् । दुःखैरनेकैर्युक्ता च मध्यभागे खगाधिप ॥ ६ ॥
प्रायश्चित्तं परं चास्या गङ्गायां पितृतर्पणम् । कुरुक्षेत्रादिवसनं प्राक्पापानां विनाशनम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४२ ॥

## श्रीसूर्य उवाच ।

चक्रपादरुजा युक्तश्चात्र जन्मनि जायते । पूर्वजन्मनि यो मोहाद्वध्याच्छ्वानं खगाधिप ॥ १ ॥
निष्कत्रयं प्रदातव्यं सुवर्णं वेदवेदिने । दानेनानेन विधिना पूर्वपापपनोदनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४३ ॥

## श्रीसूर्य उवाच ।

यः शूद्रं घातयेन्मोहात्पूर्वजन्मनि मानवः । दन्तपातनजाद्रोगात्पीडामाप्नोति निश्चयात् ॥ १ ॥
दद्याद्धेनुं सवत्सां च सर्वालङ्कारभूषिताम् । प्राजापत्यं चरेदेकं विधिना रोगनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४४ ॥

## श्रीसूर्य उवाच ।

या नारी मोहतो हन्याच्छ्वानं हि गरुडाग्रज । पूर्वजन्मनि सा चात्र चक्रपादेन पीड्यते ॥ १ ॥
तथा तत्पापशुद्ध्यर्थं स्वर्णं निष्कत्रयं सुत । देयं विप्राय विधिना चक्रपादप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपञ्चचत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४५ ॥

## श्रीसूर्य उवाच ।

शूद्रघातकरी पूर्वं या काचित्पापमोहिता । सात्र जन्मनि दुःखाच्च दन्तपातनजात्कृशा ॥ १ ॥
विधिवद्धेनुदानाच्च ब्राह्मणाय कुटुम्बिने । प्राजापत्याद्व्रतादेकात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४६ ॥

श्रीसूर्य उवाच ।

कश्चिदासीत्पुरा सूत चारणो ज्ञानदुर्बलः । शिवभक्तिपरो नित्यं देवतातिथिपूजकः ॥ १ ॥
देशे मालवके पुण्ये स्थले पूर्वभवेण्डज । तत्र दानानि दत्तानि ब्राह्मणस्य करग्रहे ॥ २ ॥
स कदाचिन्महाभाग पापं वै कृतवान्भृशम् । दधार गर्भं स्वज्ञात्यां कामलोभेन निश्चयात् ॥ ३ ॥
यत्ने कृतेऽपि तत्रैव नासीद्गर्भस्य पातनम् । मृता सा तेन दुःखेन गर्भपातेन चाण्डज ॥ ४ ॥
एवं बहुतिथे काले गत्वा सा यमशासनम् । भुक्त्वा पापफलं दुःखं पुण्याल्लोकान्शुभानिह ॥ ५ ॥
पूर्वपुण्यप्रभावेण जातो वै पादजोऽस्त्विह । गोदावर्याः समीपे तु देशे रम्ये जलाश्रये ॥ ६ ॥
स रक्तकृष्णो मतिमान्दीर्घो मध्यः पृथुः सुधीः । आदिभागे धनी भोगी मध्यमेत्यन्तसौख्यभाक् ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः सदा । चिन्तादिसहितश्चात्र दाने स्वल्पमतिः शठः ॥ ८ ॥
स्वज्ञात्यां वीर्यदानाच्च जातपुत्रविनाशकः । लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गात्पञ्चभावगः ॥ ९ ॥
भौमः सुतेश्वरे पापग्रहैर्युतनिरीक्षितः । लक्षणैरेभिरारूढस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलद्वयमिता कार्या बाहुजा गर्भसंयुता । सर्वावयवसंयुक्ता सौवर्णी भूषणान्विता ॥ ११ ॥
तदर्धमितिका वापि निजवित्तानुसारतः । सम्पूज्य वेदविदुषे दद्याद्दोषापनुत्तये ॥ १२ ॥
माषसप्तमितो देयो भौमः स्वर्णमयः शुभः । गायत्रीमयुतं जप्त्वा त्र्यम्बकन्तु सहस्रकम् ॥ १३ ॥
होमयेत्तद्दशांशेन कपिलैकां प्रदापयेत् । य एवं कुरुते सूत प्रायश्चित्तं च पापनुत् ॥ १४ ॥
तस्य पुत्रविवृद्धिः स्याज्जन्मन्यत्रैव निश्चयात् । नैवं करोति यो मोहाल्लोभात्पापविशोधनम् ॥ १५ ॥
न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः । आयुरष्टाद्रिवर्षाणि प्रायश्चित्ते कृते त्विह ॥ १६ ॥
प्रायश्चित्तेऽकृते रिष्टं पञ्चाशाब्दमितकेन्द्रके ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय. सप्तचत्वारिंशदुत्तरषट्शताधिकसहस्रतम ॥ १६४७ ॥

श्रीसूर्य उवाच ।

यश्च बभ्रुं महाभाग हन्यान्मोहान्नराधमः । बभ्रुमण्डलरोगार्तः सोऽत्र जन्मनि जायते ॥ १ ॥
निष्कद्वयसुवर्णस्य कृत्वान नकुलं शुभम् । बभ्रुमण्डलनाशाय ब्राह्मणाय प्रदापयेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरषट्शताधिकसहस्रतम. ॥ १६४८ ॥

श्रीसूर्य उवाच ।

काचिच्चारणजा नारी बभूव प्रियवादिनी । व्रतदानरता साध्वी पूर्वजन्मनि चाण्डज ॥ १ ॥
तया ग्रामान्तरे गत्वा निर्दग्धं महद्वनम् । निर्दग्धा बहवस्तत्र जीवास्तस्याश्रयं गताः ॥ २ ॥
ततो बहुतिथे काले प्राप्य तज्जनितं फलम् । तत्र दानवशात्पूर्वमत्र सा पादजा स्मृता ॥ ३ ॥
जीवघाततया पूर्वपापादत्रैव जन्मनि । जातसन्ततिहीना सा कुष्ठरोगेण पीडिता ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि येन सम्पद्यते सुखम् । गृहवित्तपडंशेन देया जीवाः सुवर्णजाः ॥ ५ ॥
घटयित्वा विधानेन नानारूपा महोरगाः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६४९ ॥

श्रीसूर्य उवाच ।

शघाती महाभाग कुब्जवर्णः प्रजायते । निष्कृतिं तस्य पापस्य शृणु चात्र खगाधिप ॥ १ ॥

शय्यां सोपस्करां दद्याद्वेदवेदाङ्गपारगे। तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरषट्शताधिकसहस्रतमः॥ १६९०॥

श्रीसूर्य उवाच।

कश्चिच्छूद्रोऽभवत्पूर्वं दानधर्मक्रियापरः। द्विजानां पूजको दक्षः सिन्धुमण्डलजोऽण्डज॥ १॥
देवद्रव्यविहीनोऽभूत्कृतं कर्मातिदारुणम्। स्वपत्नीं स्थापितां पण्यशालायां हि खगाधिप॥ २॥
पण्यस्त्रीकर्मतश्चासौ चकार ह्युपजीवनम्। ततो मृत्युवशं प्राप्तो भुक्त्वा तत्पापजं फलम्॥ ३॥
प्राग्दानवशतश्चात्र जन्मन्यास्ते स पापकृत्। शूद्राऽधमोऽथ वै षंढः पूर्वपापात्खगेश्वर॥ ४॥
निष्कृतिस्तस्य पापस्य नोक्ता पापाद्धतात्सुत॥ ५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदुत्तरषट्शताधिकसहस्रतमः॥ १६९१॥

श्रीसूर्य उवाच।

या नारी नकुलं पूर्वं घातयेद्विनतासुत। सोऽत्र जन्मनि रोगेण वङ्गमण्डलजेन च॥ १॥
पापोद्भवेन सततं पीडिता भवति ध्रुवम्। तद्रोगनाशनं दद्याद्रूप्यं निष्कद्वयस्य च॥ २॥
ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापापनोदनम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरषट्शताधिकसहस्रतमः॥ १६९२॥

अरुण उवाच।

कश्चित्क्षात्रकुले जातो नानावृत्त्यातिलाभवान्। नानासन्धिभवा बाधा ह्युदरार्तिः प्रजायते॥ १॥
मेहो वै कुरुते नित्यं नेत्रतोदं शिरश्मिताम्। कटिपृष्ठोरुपीडा वै बाल्ये स्याद्ग्रहणीगदः॥ २॥
तस्य भार्या सदाचारा विज्ञेया व्रतकारिणी। सौभाग्यसुखसम्पन्ना पितृमातृसुखोज्झिता॥ ३॥
कथं सन्ततिहीना च कथं कर्मणि लिप्यते॥ ४॥

श्रीसूर्य उवाच।

पूर्वं वर्णोत्तरो जातस्तस्करो वस्त्रहारकः। निषादैः सह संभूय जातस्तत्कर्मतत्परः॥ ५॥
वनानामन्तरे प्राप्ते कश्चिद्विप्रः समागतः। गृहीत्वा तस्य सर्वस्वं यत्किञ्चिदर्जितं कृतम्॥ ६॥
तत्र वै निहतो विप्रस्तस्करेण दुरात्मना। तस्करोऽसौ मृतश्चापि जातो वै वनपन्नगः॥ ७॥
स पश्चान्नरके घोरे पतितोऽयुतसंख्यया। पश्चान्मानुष्यमापन्नः किञ्चित्पुण्यप्रभावतः॥ ८॥
स्वर्णकारगृहे जातः पूर्वजन्मनि मानद। इदं चतुर्थं वै जन्म वंध्यात्वं चोपजायते॥ ९॥
व्यभिचारवशाज्जातस्तस्करः पूर्वजन्मनि। केन कर्मविपाकेन स्त्रीपुंसोर्जायते त्विह॥ १०॥
पुत्रहीनत्वमिह वै वन्ध्यात्वं जन्मजन्मनि॥ ११॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। सन्ततेः सुखमाप्नोति वंध्या तद्ब्रूहि भास्कर॥ १२॥

श्रीसूर्य उवाच।

शुभे त्ववसरे प्राप्ते शुभतीर्थादिसङ्गमे। विधाय विधिवत्पूर्वं कृत्यं स्मृत्याभिभाषितम्॥ १३॥
विप्रस्योद्वाहनं कृत्वा महदानं यथाविधि। धनधान्यादिकं दत्त्वा तोषयेद्विप्रयाजकान्॥ १४॥
विष्टिपाते व्यतीपाते संक्रान्तौ ग्रहणादिने। पुण्याहविधिमातिष्ठेदनपत्याघनाशनम्॥ १५॥
सुशुभे भूप्रदेशे तु समे कम्बलविस्तृते। विदधीत तिलद्रोणैस्त्रिभिः पर्वतमुत्तमम्॥ १६॥

परितोऽरत्निमात्रं तु द्रोणमानं सुतण्डुलैः । विदध्यात्पर्वताराामान्देवद्रुमविभूषितान् ॥ १७ ॥
ततस्तौ दम्पती शुद्धौ स्नातावहतवाससी । दधानौ शुभभूषादि चिन्तयन्तौ प्रजापतिम् ॥ १८॥
तस्यादितेश्च तत्पत्न्याः कुर्यान्मूर्तिं प्रजापतेः । शुद्धवर्णसुवर्णस्य निष्कद्वयविनिर्मिताम् ॥ १९॥
हेमयज्ञोपवीतां च साक्षमालाकमण्डलुम् । अदितेरपि केयूरहारग्रैवेयभूषिताम् ॥ २० ॥
तदर्धस्य विभागेन तनुं तस्याः शुभाकृतिम् । स शैवीमर्चयेन्मूर्तिं विष्णोर्वामनरूपिणः ॥ २१ ॥
मन्मूर्तित्रितयं सम्यक्कृतसंस्कारमर्चयेत् । कृत्वा प्रतिष्ठितप्राणं जातकर्माथ पुंस्त्रियोः ॥ २२ ॥
बाललीलाधरं विष्णुं वामनं सुविचिन्तयेत् । मातरं द्रष्टुमिच्छन्तं हरिं नमनकांक्षया ॥ २३ ॥
ततस्तदाश्रमाच्चैव सुमेरोस्तिलपर्वतात् । प्रत्यन्तगिरिमायान्तं मार्गैः स्वपदभूषितैः ॥ २४ ॥
अदितिं समपश्यन्तीं विरहाकुलचेतसम् । रुदतीमिव तं दृष्ट्वा तत्पर्यन्तसमीक्षतीम् ॥ २५ ॥
एवं ध्यात्वाथ तां मन्त्रैर्मन्त्रार्थोदितलक्षणाम् । प्रसूनधूपगन्धाद्यैरर्चयेददितिविह्वलाम् ॥ २६ ॥
तद्विमासोऽथ तद्विष्णोर्विष्णोः कर्माणि पश्यत । ततस्तां वैष्णवीं मूर्तिं मातुरुत्सङ्गगामिनीम्॥२७॥
कृत्वा तस्याः प्रतिष्ठान्तं लब्धपुत्रान्विचिन्तयेत् । अपश्यन्ती त्विमं मन्त्रं मन्त्रार्थगतलक्षणम्॥२८॥
सुपुत्रसहितां देवीमर्चयेद्विविधैर्गुणैः । ततो ब्राह्मणमध्यात्तु समाहूय गुणान्वितम् ॥ २९ ॥
तस्मै तां प्रतिमां दद्यात्सुपुत्रां मुदिताननाम् ॥ ३० ॥

मन्त्रः ।

"यन्मया निहतो विप्रो धनं हृत्वा वने वने । तस्करासङ्गमे पापं प्राप्तमेतोऽल्वणं महत् ॥ ३१ ॥
तस्य पापस्य नाशाय दानमेतद्ददाम्यहम् । सौवर्णीं प्रतिमामेनामनघास्थामहं स्थिति" ॥ ३२ ॥
भोजयेच्च शतं विप्रान्सर्पिष्याात्मानमीक्षयेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५३ ॥

## श्रीसूर्य उवाच ।

उलूकघातने पूर्वजन्मनीह च पुत्रक । पाण्डुरोगेण सततं पीडितो वै भवेद्भृशम् ॥ १ ॥
कस्तूरिकापलं चैकं दद्याद्विप्राय पर्वणि । उलूकघातजं पापं सर्वं नश्यति तत्क्षणात् ॥ २ ॥
तत्पापस्योपशमने पाण्डुरोगो विनश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५४ ॥

## श्रीसूर्य उवाच ।

या नारी घातयेत्काचिदुलूकं पूर्वजन्मनि । पाण्डुरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
दद्यादत्र विप्राय पलमेकं खगाधिप । कस्तूरिकाया विप्रस्य पाण्डुरुङ्नाशनं परम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपंचपंचाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५५ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु मत्कर्मणः फलम् । पुरा कश्चित्कलिङ्गेऽभूद्द्विजो धर्मक्रियापरः ॥ १ ॥
बहुस्त्रीबालसंयुक्तो गोधनैश्च समन्वितः । गयायां कृतवाञ्छ्राद्धं विधिना च समन्वितम् ॥ २ ॥
स ततः कृतवान्पापं कामलोभेन निश्चयात् । ज्येष्ठां त्यक्त्वा ऋतुमतीं धर्मिष्ठां प्रियवादिनीम् ॥३॥
रतिं ददौ कनिष्ठायां पातितस्त्रीविमोहितः । जीवित्वा सुचिरं कालं पश्चान्मृत्युमुपागतः ॥ ४ ॥
शुभाच्छुभफलं भुक्त्वा पापान्नरकयातनाः । गयाश्राद्धप्रभावेण जातश्चात्रापि वै द्विजः ॥ ५ ॥

देशे रम्यस्थले पुण्ये नदे लोहितसंज्ञके । मध्ये वयसि स्त्रीयुक्तो धनबुद्धिसमन्वितः ॥ ६ ॥
शुभादिदं तथा पापात्तानादुःखसमन्वितः । मूलं तं नरकस्यैकं स्त्रीवशित्वं गमिष्यति ॥ ७ ॥
सहित्वा ह्यपमानं वै पूर्वपापावशेषतः । ब्राह्मणो योगयुक्तश्च भविष्यति कलौ युगे ॥ ८ ॥
काश्यां मृत्युवशादन्ते शिवत्वमुपयास्यति ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५६ ॥

---

श्रीसूर्य उवाच ।

यः कामतश्चरेत्पूर्वं ब्रह्महत्यां नराधमः । क्षयरोगान्वितः सोऽपि जायते चेह जन्मनि ॥ १ ॥
ब्रह्महत्यासमुद्भूतात्पापाद्दुःखप्रदात्सुत । प्रायश्चित्तं मया नोक्तं पापान्मुक्तिस्त्रिजन्मसु ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५७ ॥

---

श्रीसूर्य उवाच ।

ब्राह्मणं घातयेद्यस्तु पूर्वजन्मनि मानवः । मोहादकामतः सोऽपि क्षयरोगसमन्वितः ॥ १ ॥
क्षयेणात्र क्षयं यान्ति धातवः सर्वदेहिनाम् । धातुक्षयेऽतिकष्टेन नष्टायुर्जायते पुमान् ॥ २ ॥
सर्वस्वदानादत्रैव क्षयरोगः प्रशाम्यति । कुरुक्षेत्रादितीर्थेषु सत्पात्रेषु विधानतः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरषट्शताधिकसहस्रतमः ॥ १६५८ ॥

---

श्रीसूर्य उवाच ।

कश्चिद्विप्रो महासाधुश्चारुवर्णः प्रतापवान् । आचारकुलधर्मज्ञो देवाग्निद्विजवत्सलः ॥ १ ॥
संयुतो वायुपित्ताभ्यां किञ्चिद्वित्तसमन्वितः । तस्य भार्या सदाचारा किञ्चिच्च क्लेशकारिणी ॥ २ ॥
पतिभक्ता पतिप्राणा व्रतानामनुकांक्षिणी । ऋतुहीना कथं जाता कस्येदं कर्मणः फलम् ॥ ३ ॥

श्रीसूर्य उवाच ।

नारीणां जारगर्भाणामसतीनां कुलच्छिदाम् । यद्वाऽचिरप्रसूतानां शीघ्रं गर्भः समुद्भवेत् ॥ ४ ॥
औषधैश्छेदनैर्दुष्टैः प्रलेपैर्दुष्टभक्षणैः । संवाहनैस्तथा घातैरन्यैर्वा वस्तिकर्मभिः ॥ ५ ॥
गर्भस्य पातनोपायं करोत्यपि च कीर्तितम् । पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ६ ॥
नारी जन्मान्तरे प्राप्ते न सा गर्भं बिभर्ति हि । पूर्वं वैश्यकुले जाता सपत्नीसहिता खग ॥ ७ ॥
अनया चेर्ष्यया सूत सन्ततेर्नाशनाय च । औषधैश्छेदनाद्यैस्तु तस्यार्थं कल्पितो गदः ॥ ८ ॥
सपत्न्यै प्रेरयामास विधिना चैव तं गदम् । तया वै ऋतुभावाच्च परिपीतं तदौषधम् ॥ ९ ॥
पुष्पं प्रणाशितं तस्यास्तस्मिञ्जन्मनि मानद । ऋतावृतौ च सम्प्राप्ते जातासौ विविधातुरा ॥ १० ॥
वेदना वै समभवन्नस्वातोदरामयाः । पुष्पे नष्टे फलं नष्टं कदाचिद्गर्भपातनम् ॥ ११ ॥
एतत्कर्मकृतं चैव त्रिविधं गर्भदोषकृत् । तथापि फलहन्तॄणां द्वितीयं सुकृतं चरेत् ॥ १२ ॥
ऋतुघातो दुष्टबुद्ध्या कृतो वै पूर्वजन्मनि । तेनैव कर्मणा वत्स विविधं पुष्पबन्धनम् ॥ १३ ॥
गर्भाशयमधिश्रित्य स्रवति शोणितं बहु । छिद्यन्त इव चान्त्राणि सूचीभिरिव भिद्यते ॥ १४ ॥
वेदना याः पुराऽभूवंस्त्रीणां गर्भनिपातने । तावत्कालं तथैवेह तासां गर्भं निपातयेत् ॥ १५ ॥
तथाविधं सर्वदुःखं गर्भपातनजं भवेत् । एवं तु लक्षणैर्ज्ञात्वा कर्माणि स्त्री समाचरेत् ॥ १६ ॥
एकवासोविधिं चैव दम्पती तीर्थसङ्गमे । सुशुभे भूप्रदेशे तु पुराणोक्तविधानतः ॥ १७ ॥
सम्प्रणाशाय दुष्टस्य प्रायश्चित्तमिदैनसः । प्रौष्ठपद्यां तृतीयायां शुक्लायां व्रतमाचरेत् ॥ १८ ॥

एकवासोविधिं चैव दम्पती तीर्थसङ्गमे । यत्नेन गार्भिकं धीमानुपोषणपरायणः ॥ १९ ॥
पुष्पैर्नानाविधैः शुभ्रैरर्चयेद्गिरिजाप्रियम् । केनकैर्गर्भसंयुक्तैश्चम्पकैः कुमुदोत्पलैः ॥ २० ॥
सौवर्णी राजतीं ताम्रीं मूर्तिं गौर्याः प्रकल्पयेत् । हारनूपुरमुकुटकुण्डलाभरणादिकम् ॥ २१ ॥
नैवेद्यैः सुखकासारमोदकापूपपायसैः । उपातिष्ठेत विधिवद्भवानीप्रियवल्लभम् ॥ २२ ॥
पतिपुत्रवतीभिस्तु स्त्रीभिः सह शुचिस्मिता । रात्रौ जागरणं कुर्याद्गीतनृत्यादिपूर्वकम् ॥ २३ ॥
फलैर्नानाविधैरर्घ्यं दद्यान्मन्त्रपुरःसरम् । फलपुष्पाक्षतोपेतमंजलिं मूर्ध्नि निक्षिपेत् ॥ २४ ॥

मन्त्रः ।

"नमस्तेऽस्तु महादेवि नमस्ते गिरिशप्रिये । गृहाणार्घ्यमिमन्देहि पुत्रान्मह्यं यशस्विनः" ॥२५॥
पतिपुत्रवती नारी गिरिजावत्प्रसूयते । एवं रात्रौ विधानेन पूजयेत्परमेश्वरीम् ॥ २६ ॥
ततः प्रभाते विमले कृतप्रातःक्रिया सती । देवीमुद्दिश्य विधिवद्भोजयेत्षोडश स्त्रियः ॥ २७ ॥
नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानथ षोडश । प्रत्येकं वैणवं पात्रं सप्तधान्यसमन्वितम् ॥ २८ ॥
सौभाग्याष्टकसंयुक्तं वस्त्रयुग्मेन संयुतम् । दातव्यं गिरिजाप्रीत्यै पुत्रसौभाग्यकाम्यया ॥ २९ ॥
सगर्भां च वृषोपेतां सिताङ्गां वस्त्रसंयुताम् । सहिरण्यां ततो दद्याद्विप्राय गुणशालिने ॥ ३० ॥

दानमन्त्रः ।

"पातयन्ती पुरा गर्भं दुष्टस्त्रीणां वशं गता । स एव वन्ध्यताहेतुस्तन्मां मोचय चाम्बिके ॥
तव दानेन पुत्रा मे भवेयुः सुभगाः सति" ॥ ३१ ॥

इमं मन्त्रं समुच्चार्य दत्त्वा विप्रं विसर्जयेत् । एवं प्रपरा नारी गर्भपातं न पश्यति ॥ ३२ ॥
युज्यते पुत्रपौत्राद्यैः सा पत्या सह मोदते । न लभेद्गर्भपातं सा पतिपुत्रसुखं च वै ॥ ३३ ॥
तृतीये वा चतुर्थे वा मासि गर्भं सुविन्दति । रजतस्य पलाभ्यां वै कोशं गर्भाश्रयाकृतिम् ॥ ३४ ॥
प्रार्थयेत ततो भक्त्या ध्यायती गिरिजां सतीम् । सुवर्णनिष्कगर्भं च कृत्वा दत्त्वा द्विजन्मने ३५
"गर्भपातं प्रकुर्वन्त्या मया प्राक्तनजन्मनि । यदघं वन्ध्यकृत्प्राप्तं तस्मान्मोच्येह जन्मनि" ॥
जन्मजात्यादिकं वत्स न वदेदिह कर्मणाम् ॥ ३६ ॥

इदं चतुर्थं वै जन्म भूमिदेवकुलोद्भवम् । सपत्नीसादिता पूर्वं सा वै गर्भस्य दोषकृत् ॥ ३७ ॥
तस्या इमानि बोध्यानि लक्षणानीह जन्मनि । यस्याः प्राक्पातितो गर्भः सपत्न्याः पतिवर्जिता ३८
दीनानाथविरोधः स्यात्तद्विरोधात्त्वया सुत । अनुमन्ता प्रयोक्तापि पितृमातृसुखोज्झितः ॥३९॥
बन्धुसन्ततिदुःखी स्यात्सर्वस्तस्मै विरुद्ध्यति । शोकः स्यादुदरे बाधा तद्वत्प्लीहादिविभ्रमः॥४०॥
अन्तरा स्पन्दमानो वा गर्भः सत्नोपलक्ष्यते । पाणिमुष्टितलाघाताज्जानुनी विक्रांतिं गते ॥ ४१ ॥
दोषो ज्वराग्निजो वापि शस्त्रजोऽश्मादिजोऽपि वा । ब्राह्मणान्भोजयेद्भक्त्या सर्पिष्यात्मानमीक्षयेत्४२

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६५९ ॥

श्रीसूर्य उवाच ।

सीमावादरतः कश्चिद्ब्राह्मणः पूर्वजन्मनि । तेन तत्र द्विजः सुत घातितो भूमिलोभवः ॥ १ ॥
सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् । तत्पापजान्महाघोरान्नरकान्प्राप्य दारुणान् ॥ २ ॥
तथा चिरं च तिर्यक्त्वं विभुज्यापरमतः स्वयम् । कर्मक्षयेऽतिपुण्यात्प्राक्सोऽत्र जातो हि बाहुजः॥३॥
क्षयरोगयुतः सुत कृशोदरसमन्वितः । लग्ने कुम्भाभिधे सुत भौमश्चन्द्रयुतोण्डज ॥ ४ ॥

रिष्टं पंष्टिमिते वर्षे जायते विन्मयेऽस्कृते। सहायाः पूर्वजा ये तु तेषां वक्ष्यामि लक्षणम् ॥ ५ ॥
तदग्रे तु मृताश्चात्र पुनःक्षयरुजान्विताः । रिष्टेन वायुपो भङ्गो हयपापात्र निष्कृतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६० ॥

श्रीसूर्य उवाच।

राजपुत्रोऽभवत्कश्चिद्धर्मशास्त्रार्थकोविदः। गत्वा शत्रुपुरं सूत कदाचिन्मदसंयुतः ॥ १ ॥
ददाह तत्पुरं शत्रोस्तत्क्षणे लुण्ठितं पुनः। तत्रैको ब्राह्मणो दग्धो वृद्धो विद्याविशारदः ॥ २ ॥
पापमाचरितं तेन चाज्ञानाद्ब्रह्मघातजम्। अथो यमाज्ञया सर्वा भुक्त्वा नरकयातनाः ॥ ३ ॥
पुण्यशेषादयोऽत्रापि स जातः क्षत्रियाधमः। देशेऽयोध्याभिधे गौरो लघुदेहो महोद्यमी ॥ ४ ॥
युवभावे महान्धेन ब्राह्मणा वै मपीडिताः। ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः ॥ ५ ॥
निष्कृतिं तां प्रवक्ष्यामि यां कृत्वा मुच्यते त्विह। कार्यास्तत्र त्रिदेवानां मूर्तयस्तु यथोदिताः ॥६॥
ब्रह्मविष्णुमहेशानां सर्वरोगविनाशिकाः। सुवर्णजास्तथा कार्या कदली पत्रसंयुता ॥ ७ ॥
यथावित्तानुसारेण शाठ्यं द्रव्ये विवर्जयेत्। देयास्ता विप्रमुख्येभ्यो क्षयरोगोपशान्तये ॥ ८ ॥
ब्राह्मणान्भोजयेच्छक्त्या होमयेच्च जपेत्तथा। गायत्रीं विधिना सूत पूर्वपापापनुत्तये ॥ ९ ॥
एवं कृते महाबाहो क्षयस्तस्योपशाम्यति। नैवं कुर्यात्तु यो मृत्युरष्टाविंशन्मितेऽब्दके ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाके ऽध्याय एकषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६१ ॥

श्रीसूर्य उवाच।

या योषिदाचरेत्काचित्पूर्वजन्मनि निश्चयात्। ब्रह्महत्यां तु विज्ञेया सा चेह क्षयरुग्युता ॥ १ ॥
न तस्याः पापशमनं यथोक्तं च खगाधिप। महापापकृताद्रोगान्मृत्युरेव न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६२ ॥

श्रीसूर्य उवाच।

स्वसृघाती च पुरुषो पूर्वजन्मनि मानद। बधिरो जायते त्वत्र प्रायश्चित्तं च तच्छृणु ॥ १ ॥
चान्द्रायणं व्रतं कुर्यात्सुवर्णपलसंयुतम्। पुस्तकं विधिवद्दद्यात्तस्मात्पापात्प्रमुच्यते ॥ २ ॥
भोजयेच्च यथाशक्ति द्विजांस्तदनु होमयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६३ ॥

श्रीसूर्य उवाच।

या काचिदाचरेन्नारी पापं प्राग्ब्रह्मघातनम्। अज्ञानादत्र जनुषि क्षयरुक्पीडिता हि सा ॥ १ ॥
महापापकृताद्घोरात्तस्मात्सर्वस्वदानतः। क्षयरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ २ ॥
प्रयागे मकरस्थेऽर्के स्नानादत्रैव जन्मनि। काश्यां वासात्तथा सूत मुच्यते ब्रह्महत्यया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६४ ॥

श्रीसूर्य उवाच।

मूकः प्रजायते जन्तुर्यः पूर्वे भ्रातृघातकः। बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६५ ॥

श्रीसूर्य उवाच ।

कलिङ्गदेशे प्राक्सूत काचिद्द्विजवरा स्मृता । पतिप्रिया धर्मशीला दानभोगरता सदा ॥ १ ॥
सा नार्यघातयत्पूर्वभवे मोहाच्च कुक्कुटम् । नासावऋत्वमाप्नोति सात्र जन्मनि निश्चयात् ॥ २ ॥
हेमनिष्कत्रयं दद्याद्यावत्सैव प्रयत्नतः । ब्राह्मणाय महाभाग पापनाशकरं परम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६६ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे पञ्चनदे शुभे । धनधान्यसमायुक्तः पापकर्मा महोद्यमी ॥ १ ॥
विप्रोऽस्सङ्गतः सोऽथ प्रयागे गरुडाग्रज । सुस्नातो मृगगे भानौ धूर्तकर्मा क्रियोज्झितः ॥ २ ॥
स प्राप्य स्वगृहं शीघ्रं कृतवान्कर्म दारुणम् । ग्रामे निवासिनोऽन्यस्य क्षत्रियस्य खगाधिप ३ ॥
ददाह भवनं रम्यं वैरभावात्पुरानघ । एका वत्सवरी दग्धा जीवाश्चापि विशेषतः ॥ ४ ॥
कालयोगेन सम्प्राप्तः स गतो यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्पुण्यफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना । गङ्गायाः प्रान्तरे देशे शतयोजनसम्मिते ॥ ६ ॥
स मध्यरूपी बलवान्धर्मे स्वल्पमतिः शठः । वृद्धचाधिकप्रचारी च पैतृकस्वल्पवित्तभाक् ॥ ७ ॥
सकन्यश्च सपत्नीको बन्धुभृत्यसमन्वितः । पुण्यादिदं फलं पूर्वात्पापादथ फलं शृणु ॥ ८ ॥
स बालवत्सकवधाज्जीवघातादपुत्रकः । सप्तवेदमिताब्दान्तं जातपुत्रविनाशकः ॥ ९ ॥
गोरादिगे शनौ भानौ षष्ठे जीवे मृगास्थिते । लक्ष्मैतदण्डजश्रेष्ठ पृच्छकस्येह जन्मनि ॥ १० ॥
पूर्वं या स्त्री सहायासीन्मृतवत्सात्र सा सुत ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापनिषूदिनीम् । पुत्रवृद्धिकरीं धन्यामत्र जन्मनि निश्चयात् ॥ १२ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि निष्कृतिं पापशोधिनीम् । पञ्चस्वर्णमिता कार्या सुरभी च हिरण्मयी १३॥
तदर्धमितिका वापि निजवित्तानुसारतः । सम्पूज्य विधिवन्मन्त्रैर्देया विप्राय धीमते ॥ १४ ॥
माषैर्वेदैर्मितैर्देयस्तथा पशुपतिः सुत । माषाभ्यां च तया वह्निर्जीवा माषचतुष्कजाः ॥ १५ ॥
देयाश्च विधिना सूत पूर्वपापप्रनुत्तये । जपेत्पशुपतेर्मन्त्रं सहस्रं रिष्टनाशनम् ॥ १६ ॥
होमयेद्दशतकं रुद्रस्याग्रे प्रयत्नतः । शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः ॥ १७ ॥
यः कुर्याद्विधिवत्सूत प्रायश्चित्तं विधानतः । जीविष्यन्ति च तत्पुत्रा जन्मन्यत्र ममाज्ञया ॥१८॥
नैवं कुर्याच्च यः शक्त्या त्रिविधं पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीवितेनात्र संशयः ॥१९॥
नवसप्ताब्दमायुः स्यात्प्रायश्चित्ते कृते त्विह । सप्तवेदमिते वर्षे रिष्टं चाकृतनिष्कृतेः ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तरषट्शताधिकसहस्रतमः ॥ १६६७ ॥

श्रीसूर्य उवाच ।

काश्मीरमण्डले पूर्वं काचिद्द्विजवरांगना । पतिप्रिया शीलयुक्ता दानभोगरता सदा ॥ १ ॥
वैरिभावात्तया स्मृत्या गृहं दग्धं द्विजस्य च । वैरिणस्तु सुतो दग्धो गृहदाहे खगाधिप ॥ २ ॥
महापातस्वामिनः सर्वं भागमेवं मयूपार्जितम् । तत्पापजान्महाघोरात्फलं प्राप्य वियोनिजम् ॥ ३॥
सेत्र जाता विराटेऽद्य पतिशुश्रूषणात्सुत । क्षत्रिया धर्ममर्मज्ञा पूर्वपुण्यात्तथा सती ॥ ४ ॥

क्षयरोगयुता बाल्ये बालघातादपुत्रिणी । महाग्निदाहपापाच्च प्रायश्चित्तं न तत्समम् ॥ ५ ॥
त्रयोविंशमिते वर्षे रिष्टेनैवात्र नश्यति । सहायकः पतिश्चात्र पुत्रहीनः क्षयान्वितः ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्टयुत्तरषट्शताधिकसहस्रतमः ॥ १६६८ ॥

श्रीसूर्य उवाच ।

सारिकां यो महाभाग निहन्यात्पापमोहितः । तस्य च स्खलिता वाणी भवत्यत्रैव जन्मनि ॥ १ ॥
दद्याद्धिरण्मयीं तत्र सारिकां शुभलक्षणाम् । तथात्र पुस्तकं दद्यात्तस्य विधिनाण्डज ॥ २ ॥
पूर्वपापात्प्रमुच्येत नरोऽत्र गतकिल्बिषः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६६९ ॥

श्रीसूर्य उवाच ।

सारिकां घातयेन्नारी पूर्वं पापविमोहिता । सात्र जन्मनि जायेत वचनस्खलिताण्डज ॥ १ ॥
तथा देया सुवर्णस्य सारिका ब्राह्मणाय वै । पूर्वपापात्प्रमुच्येत प्रयत्नाद्विनतासुत ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७० ॥

श्रीसूर्य उवाच ।

बकघाती च पुरुषः पूर्वजन्मनि मानद । लम्बकण्ठः प्रजायेत सोऽत्र जन्मनि निश्चयात् ॥ १ ॥
गां दद्याद्विधिवच्छ्वेतां सर्वाभरणभूषिताम् । मुच्यते कण्ठजाद्रोगात्रात्र कार्या विचारणा ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७१ ॥

श्रीसूर्य उवाच ।

या नारी पूर्वजनुषि घातयेद्गरुडाग्रज । बकं सा कण्ठरोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
गां दद्याद्विधिना सूत श्वेतामत्र पयस्विनीम् । यथोपस्करसंयुक्तां तस्मात्पापात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७२ ॥

अरुण उवाच ।

कश्चिद्द्विजकुले जातो धर्मिष्ठो वित्तसंयुतः । उदरे वातजा रोगा गुल्माद्याश्चोर्ध्वहृद्व्यथाः ॥ १ ॥
मोहाद्याः स्वल्पवीर्याश्च नेत्रपाण्डूदरामयाः । जायते शीर्षजा पीडा बाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
शरीरे जायते चह्नेरुपघातो व्रणादिकम् । पौत्राणां मातुलानाञ्च स्वस्रादेर्विधवाव्यथा ॥ ३ ॥
दायादाच्छत्रुवर्गपीडा भूमिद्रव्यविलिप्सया । ऐहिकानि च लक्ष्माणि तस्य देहे भवन्ति हि ॥४॥
तस्य भार्या सदाचारा कदाचिद्रोषवादिनी । गौरवर्णा शुभा वाणी सन्तोषप्रियकारिणी ॥ ५ ॥
मृतवत्सा कथं जाता स्थिरगर्भमवाप्नुयात् । दशमासानतिक्रम्य गर्भश्चोदरसौख्यभाक् ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ६ ॥

श्रीसूर्य उवाच ।

पुंस्कृतं नैव तत्कर्म स्त्रीकृतं नात्र संशयः ॥ ७ ॥
पूर्वजन्मनि सा क्षात्रा राज्ञाता विनतासुत । अज्ञानतिमिरान्ध्येन स्त्रीणां कर्म दुरात्मनाम् ॥ ८ ॥
अजानती कुलस्त्रीणामाचारमनुकम्पकम् । सर्वभूतेषु चात्मानं स्थावरेषु चरेषु च ॥ ९ ॥
प्रमादाद्दीपिनं हत्वा सदा निष्ठुरमानसा । तस्या गेहाश्रिता नित्यं मार्जारश्वनपूर्वकाः ॥ १० ॥

पलालक्रीडनपरा गेहे सङ्कुलिता भृशम्। ते तप्तवालुकाम्न्यम्बुतुषभस्मचयादिषु ॥ ११ ॥
आविक्षिप्ता तया चाग्नौ दयारहितचित्तया। बालगर्भाशयान्वालानविरपथाखिलेन्द्रियान् ॥ १२ ॥
पापा प्रचिक्षेप वह्नौ पाषाणकठिनाशया। मातृभिः सहिता बाला बालगर्भगतास्तथा ॥ १३ ॥
अन्ये च बहवो जीवा भस्मसाद्वै कृतास्तया। विनिघ्नन्ति प्रमादाद्ये परांस्ते दुःखभागिनः ॥१४॥
सन्ततिर्दूषिता यैस्तु नानादुःखौघगाश्च ते। अनार्य्याग्नि च ये दग्धास्ते वै तन्नाशनाय हि॥१५॥
तथाभिषेषु जीवेषु जायन्तेऽपि च तद्वशात्। म्रियन्ते शिशवस्तेऽपि तस्मात्तद्दोषचिह्निताः ॥१६॥
पलालक्रीडनपरा बहवो लघुप्राणिनः। मारिता गर्भयुक्ताश्च मातृभिः सहितास्तथा ॥ १७ ॥
लभंते चैव नो मार्गं मृतास्ते दुष्टजन्तवः। तेन कर्मविपाकेन स्थिरगर्भा मृतप्रजा ॥ १८ ॥
त्रिविधापत्यजा बाधाः प्राप्यन्ते जनुरन्तरे। जन्तवो गर्भगा ह्येके सुकृतात्कर्मबन्धनात् ॥१९ ॥
यथा कर्म तथाऽपत्यमुभयोस्तत्प्रयोजनम्। इदन्तु तृतीयं जन्म ब्रह्मवंशसमुद्भवम् ॥ २० ॥
स्थिरगर्भा मृतापत्या पुत्रहीना खगाधिप ॥ २१ ॥

## अरुण उवाच।

प्रायश्चित्तं कथं नाथ येन गर्भः प्रजायते। ममोपरि कृपां कृत्वा सत्यं वद दिवस्पते ॥ २२ ॥

## श्रीसूर्य उवाच।

सुदिने समनुप्राप्ते सुग्रहे च शुभोदये। प्रागुदक्प्रवणे देशे गोमयाद्युपलिप्तके ॥ २३ ॥
तत्रोपर्यावितं स्तीर्य नानाचित्रविचित्रकम्। द्रोणमानं तिलानां च मध्ये गर्भं प्रपूरयेत् ॥ २४ ॥
निष्कमानसुवर्णस्य फलं वै मध्यतः क्षिपेत्। तस्य पूर्वे च दिग्भागे तण्डुलद्रोणपर्वते ॥ २५ ॥
शुद्धं सोमप्रभं ताम्रपात्रं दशपलोन्मितम्। स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मितम् ॥ २६ ॥
पूजयेच्च सपत्नीकं कश्यपं च प्रजापतिम्। करे साक्षकरे दक्षे वामे चाथ कमण्डलुम् ॥ २७ ॥
कृत्वा प्रतिष्ठितप्राणां मूर्तिं तां शुभलक्षणाम्। अर्चयेद्गन्धपुष्पाद्यैरुपचारैः पृथक्पृथक् ॥ २८ ॥
सम्यक्श्रद्धावती नारी त्रिविधापत्यदुःखिनी। विप्राय वेदविदुषे पूजयेद्विविधैर्धनैः ॥ २९ ॥
ततस्तं तु सपत्नीकं मुनीनां प्रवरं नमेत् ॥ ३० ॥

## मंत्रः।

"निर्मिता वै जगत्स्रष्टा पत्नी हि तपसो बलात्। ता मया तीव्रदाहे तु वह्नौ क्षिप्ता अनेकशः३१
रुंधिताः स्त्रीजनाचारा अजानन्त्या दयादिकान्। नाशयेस्तस्य पापस्य देवमार्तं विगर्हितम्" ३२
सम्यक्श्रद्धावती नारी मृतसन्ततिदुःखिनी। सपत्नीकं तु सौवर्णं कश्यपं सम्यगर्चितम् ॥ ३३ ॥
विप्राय वेदविदुषे प्रदद्याद्गुणशालिने। एवमाश्राव्य तां मूर्तिं समादाय पृथक्पृथक् ॥ ३४ ॥
प्रदद्याद्दानविधिना श्रद्धया च सदक्षिणाम्। दानान्ते कीर्तयेन्मन्त्रं तिष्ठन्ती विहिताञ्जलिः ३५॥

## मंत्रः।

"यन्मया पूर्वजनुषि दयारहितचित्तया। प्राप्तं वै ह्यशुभं स्वामिंश्छिन्धि तं कर्मकारणम्"३६॥
दत्त्वा दानञ्च विप्राय सौपिप्यात्मानमीक्षयेत् ॥ ३७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७३ ॥

---

## श्रीसूर्य उवाच।

काकघाती महाभाग प्राग्भवे चेह जन्मनि। कूर्चहीनो भवेन्मर्त्यः स च तत्पापलाञ्छितः ॥१ ॥

कृष्णधेनुप्रदानेन विधिनात्र खगाधिप । मुच्यते दुष्टपापाच्च कूर्चयुक्तात्र जन्मनि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः चतुःसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७४ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काकं विनतानन्दवर्धन । साऽत्र जन्मनि पक्षीन्द्र कूर्चयुक्ता भवेद्ध्रुवम् ॥ १ ॥

कृष्णधेनुप्रदानेन यथोक्तया गरुडाग्रज । पूर्वपापविशुद्धिः स्यादत्र जन्मनि निश्चयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७५ ॥

श्रीसूर्य उवाच।

अभक्ष्यभक्षको यस्तु भवेत्प्रागज्ञानतोऽण्डज । सोऽत्र जन्मनि पक्षीन्द्र जायते कृमिलोदरः ॥ १ ॥

स भीष्मपञ्चकादत्र व्रतात्पुण्यसमर्जनात् । मुच्यते पूर्वरोगात्तु दुष्टात्क्रिमयुदरात्खग ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७६ ॥

श्रीसूर्य उवाच।

याऽभक्ष्यं भक्षयेन्नारी प्राग्भवे गरुडाग्रज । जायते जठरे तस्याः क्रिमिजा रुग्भृशं सुत ॥ १ ॥

तत्पापनाशनं कार्यं भीष्मपञ्चव्रतं शुभम् । कार्तिके शुक्लपक्षे च प्रांतस्थदिनपञ्चके ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७७ ॥

श्रीसूर्य उवाच।

दुष्टस्पर्शेन यो मोहाद्भक्षयेद्विधिवर्जितः । सिद्धान्नं ना पुरा सूत जायतेऽत्र कृशोदरः ॥ १ ॥

विष्णुव्रतान्महापुण्यात्सर्वपापप्रणोदनम् । तदा कृशोदरत्वं च नात्र पश्यति पुण्यकृत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७८ ॥

श्रीसूर्य उवाच।

भुक्तं पापं पुरा सूत सिद्धान्नं द्विजभार्यया । दुष्टस्पर्शेन सततं साऽत्र स्याच्च कृशोदरी ॥ १ ॥

सा वैष्णवव्रतात्पुण्यात्तस्मात्पापात्प्रमुच्यते । कृशोदरव्यथा नश्येत्तत्पापस्य प्रणाशनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६७९ ॥

श्रीसूर्य उवाच।

द्विजः पूर्वभवे कश्चिदासीद्धर्मान्वितः सदा । सभार्यो नर्मदातीरे धनसौख्यसमन्वितः ॥ १ ॥

कृतानि तेन दानानि नानापर्वसु शक्तितः । वेदयुक्तेषु विप्रेषु सत्पात्रेषु विधानतः ॥ २ ॥

अथो पापं भृशं चक्रे व्यभिचारसमुद्भवम् । ज्येष्ठां त्यक्त्वा ऋतुप्राप्तां धर्मशीलयुतां प्रियाम् ॥ ३ ॥

रतिं ददौ कनिष्ठायामनृतावपि मोहितः । ततो यमपुरं प्राप स तत्पापाद्द्विजोत्तमः ॥ ४ ॥

भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गफलं तथा । श्राद्धदानवशात्सोऽत्र गङ्गायाः पूर्वभागतः ॥ ५ ॥

सिंहस्थेऽर्के सुखे राहौ जीवे कर्केऽलिगे भृगौ । स रक्तगौरो मतिमान्बंधुस्त्रीसुखसंयुतः ॥ ६ ॥

लघुर्घृणीति मितदो द्विजवंशसमुद्भवः । सर्वमेतत्फलं दानात्स्त्रीत्यागान्मृतपुत्रकः ॥ ७ ॥

स्त्रीत्यागी भ्रूणहा लोके इति पौराणिका विदुः । योषासहायतः पूर्वं शृणु त्वं विनतासुत ॥ ८ ॥

प्राग्भवे या कनिष्ठात्र सा ज्येष्ठात्र गतप्रजा । गर्भदोषयुता चेति लक्षणैर्लक्षयेत्खगः ॥ ९ ॥

वक्ष्यामि निष्कृतिं तस्याः पूर्वपापविनाशिनीम् । कुर्यात्पलैर्वेदमितैर्गणेशं विघ्ननाशनम् ॥

तदर्धमितकं देवं निजवित्तादिमं पठन् ॥ १० ॥

मन्त्रः ।

"त्यक्त्वा वराननां शुद्धां पूर्वं पापं समर्जितम् । तत्पापस्य विनाशाय ददेऽहं गणनायकम् ॥ ११ ॥
माषसप्तमिता लक्ष्मीः शुभा लेख्या हिरण्मयी । ददेऽहं विप्रमुख्याय वेदशास्त्रविशारद" ॥ १२ ॥
ब्राह्मणान्वरयेत्तत्र शक्त्या दद्याच्च दक्षिणाम् ॥ १३ ॥
एवं विधानं यः कुर्यात्स्त्रीविष्यन्ति च तत्सुताः । श्रुत्वैनं शक्तिमान्यस्तु न कुर्यात्पापशोधनम् १४
स पुत्रान्नोपलभते रिष्टं पञ्चाशदब्दके । प्रायश्चित्ते कृते त्वत्र जीवनं वर्षसप्ततिम् ॥ १५ ॥
अन्यज्जन्मादितो ज्ञेयं विस्तरान्नोदितं मया ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८० ॥

## श्रीसूर्य उवाच ।

देशे पञ्चनदे जाता बाहुजा पूर्वजन्मनि । सात्र जन्मनि वै विप्र संजाता विप्रपूजनात् ॥ १ ॥
सकृत्तया कृतं कर्म शृणु चात्र खगेश्वर । ब्राह्मणेन महद्द्रव्यं तद्गृहे स्थापितं च यत् ॥ २ ॥
न तद्दत्तं पुनस्तस्मै भुक्तं सर्वमशेषतः । मृतो द्विजस्तद्दुःखेन क्षुधितस्तु खगाधिप ॥ ३ ॥
पापमाचरितं पूर्वं ब्रह्मघातसमं तया । पञ्चत्ववशतां प्राप्ता भुक्त्वाथ यमशासनम् ॥ ४ ॥
पुत्रसन्ततिहीनात्र पूर्वभावे क्षयान्विता । निष्कृतिं परमां तस्याः वक्ष्येऽहं पापनाशिनीम् ॥ ५ ॥
सर्वस्वेन तदर्धेन कार्या स्वर्णमयी शुभा । कदली पत्रसंयुक्ता देया विप्राय धीमते ॥ ६ ॥
दानेनानेन सुप्रीता ब्रह्मविष्णुमहेश्वराः । क्षयनाशकराः पूर्वे भविष्यन्त्यत्र जन्मनि ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८१ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि मोः सूत चोच्छिष्टं भक्षयेत्तु यः । रात्र्यन्धो जायते सोऽपि जन्मन्यत्र च मानवः ॥ १ ॥
भोजयेद्ब्राह्मणाञ्छक्त्या गोमूत्रं प्राशयेत्तथा । मुच्यते तत्क्षणात्सूत नक्तान्ध्यत्वान्न संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८२ ॥

## श्रीसूर्य उवाच ।

या भक्षयेत्पुरा नारी शुनोच्छिष्टं शुभानना । नक्तान्धा जायते पुत्र व्यथिता नेत्रपीडया ॥ १ ॥
गोमूत्रप्राशनादत्र ब्राह्मणानां च भोजनात् । नक्तान्ध्यरोगान्मुक्तिः स्यादत्र जन्मनि सुव्रत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८३ ॥

## श्रीसूर्य उवाच ।

बिडालोच्छिष्टभोजी च रात्र्यन्धो जायतेऽधुना । स तत्पापविशुद्ध्यर्थं गोमूत्रं विधिवत्पिबेत् ॥ १ ॥
भोजयेच्च तथा विप्राञ्छक्त्या दद्याच्च दक्षिणाम् । रात्र्यन्धरोगात्सततं मुक्तो भवति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८४ ॥

## श्रीसूर्य उवाच ।

बिडालोच्छिष्टभुङ्नारी प्राग्भवे विनतासुत । रात्र्यन्धरोगयुक्ता सा चात्र जन्मनि जायते ॥ १ ॥
द्विजानां भोजनाच्चैव गोमूत्रप्राशनात्तथा । मुच्यते पूर्वपापात्सा बिडालोच्छिष्टभोजनात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशीत्युत्तरषट्शताधिकसहस्रतमः ॥ १६८५ ॥

श्रीसूर्य उवाच ।

चाण्डालया गमने पूर्वभवे चारुण जायते । मूढो ह्यजगरश्चापि जातो जन्मनिजन्मनि ॥ १ ॥
चान्द्रायणव्रतादत्र दशावृत्त्या कृतात्सुत । मुच्यतेऽजगरत्वाच्च शुभबुद्धिर्भवेदिह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरषट्शताधिकसहस्रतमः ॥ ११८६ ॥

श्रीसूर्य उवाच ।

या काचित्साहसान्नारी प्राग्भवे विनतासुत । चाण्डालगमनं कुर्यात्साऽत्राऽजगरतां व्रजेत् ॥ १ ॥
प्राजापत्यव्रतं कुर्याद्यत्नात्पश्चापवर्तनैः । मुच्यते पूर्वपापात्सा जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तरषट्शताधिकसहस्रतमः ॥ ११८७ ॥

श्रीसूर्य उवाच ।

परान्नविघ्नकारी तु यो भवेत्पूर्वजन्मनि । सोऽजीर्णेनार्तिरोगेण जन्मन्यत्र प्रपीड्यते ॥ १ ॥
विधिना लक्षहोमेन ब्राह्मणानाञ्च भोजनात् । मुच्यतेऽजीर्णजाद्रोगादत्र जन्मनि वै ध्रुवम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरषट्शताधिकसहस्रतमः ॥ ११८८ ॥

श्रीसूर्य उवाच ।

विघ्नं प्रकुरुते सूत या नारी पूर्वजन्मनि । परान्नेषु महामोहाच्छृणु तत्र खगाधिप ॥ १ ॥
साजीर्णेनैव रोगेण बाध्यते पीडया सदा । लक्षहोमेन विधिवत्तत्पापान्मुच्यते त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरषट्शताधिकसहस्रतमः ॥ ११८९ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो धर्मिष्ठो धर्मवत्सलः । सत्यनित्यसदाचारः साधुसेवनसंयुतः ॥ १ ॥
तस्य देहे भवेच्चिह्नं पापजं चात्र जन्मनि । किलासो दद्रुकण्डूश्च नेत्रतोदो विरश्मिता ॥ २ ॥
किंचिच्चिह्नानि जायन्ते स ब्रूते कारणं विना । तस्य भार्या सुतन्वङ्गी स्त्रीधर्मव्रतकारिणी ॥ ३ ॥
उदरे वै व्यथा वातान्मूर्ध्नि पीडा प्रजायते । मृतवत्सा कथं जाता पुत्रो पुत्री मृते तथा ॥ ४ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वैश्यसमुत्पन्ना काले शूद्रप्रतारिता । बहुव्यापारनिरता बहुद्रव्यसमन्विता ॥ ६ ॥
शूद्राज्जातश्च सम्बन्धो बहुकालं गतागतम् । अन्योन्यं प्रीतिवशतः किञ्चित्काले गतस्तयोः ॥ ७ ॥
उभयोर्लोलुपत्वाद्धि धनसंग्रहणे रतिः । व्यवर्धत ततस्तस्य पापबुद्धिरनूरुखग ॥ ८ ॥
ब्राह्मणस्य सुतः श्रेष्ठः स्वर्णालङ्करणैर्युतः । धनलोभाच्चया तेन मारितो भाविनो बलात् ॥ ९ ॥
तस्यापि मातापितरौ पुत्रदुःखेन दुःखितौ । द्वित्रिवर्षैस्तथा मासैः पुत्रशोकाद्दिवं गतौ ॥ १० ॥
धनलोभवशाच्चैव दुष्टचित्तो हि घातकः । अचिराच्च मृतस्तत्र गतो वै यमशासनम् ॥ ११ ॥
यद्घोरकर्मणा तेन ब्राह्मणस्य हतः सुतः । तेन कर्मविपाकेन नरके पाचितो भृशम् ॥ १२ ॥
पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः । इदं चतुर्थकं जन्म मृतापत्यकरं खग ॥ १३ ॥
द्वित्र्यादिमासजाता वै मृता द्वित्र्यादिहायनाः । मृतपुत्रो भवेद्धि ■ जाताजातसुतस्तथा ॥ १४ ॥
इदं जीवेदिदं जीवेदित्याशामयजीवने । जातंजातं विनश्यन्ति तस्य चाकृतनिष्कृतेः ॥ १५ ॥

एवं यदि चिरं तिष्ठेदचिरान्म्रियते तराम् । सुगुणश्च सुरूपश्च लालनाच्चाटुकारिणः ॥ १६ ॥
नश्यत्सु जातजातेषु जन्मजन्मसु तेषु च । व्याध्यन्तरे भवेद्व्याधिश्वासो व्यसनवानयम् ॥ १७ ॥
नास्ति सौख्यं क्वचित्तस्य नानाशंकितचेतसः । भवेच्च सुमहद्दुःखं परापत्यानि पश्यतः ॥ १८ ॥
लक्षणानि पुरोक्तानि तस्येमान्यपि कीर्तयेत् । उदरे म्रियते बालः स वै ब्राह्मण उच्यते ॥१९ ॥
मृतवत्सोद्भवं चिह्नं पूर्ववत्प्रतिपादयेत् । स्ववंशस्यापि विच्छेदो द्रव्यहानिर्यतस्ततः ॥ २० ॥
दौर्मनस्यं महानाधिः शोक एवोपजायते । अदृष्टगुणलावण्या ह्यदृष्टाननकान्तयः ॥ २१ ॥
म्रियन्ते जातमात्रा ये पुत्रा अकृतचाटवः । एवन्तु कर्मणि ज्ञाते प्रायश्चित्तमथाचरेत् ॥ २२ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्निह कर्मनिषूदनी । कथ्यतां दिवसेशान नारीणां हितकाम्यया २३ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि मृतवत्सात्वनाशिनीम् । निष्कृतिं विधिवत्तार्क्ष्य सन्ततेः सौख्यहेतवे ॥ २४ ॥
यजमानः सपत्नीको विधिवद्विधिमाचरेत् । पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सहितोऽर्थवित् २५॥
सिद्धार्थाक्षतदूर्वाभिः कृतरक्षं प्रतिष्ठितम् । स्नापयेदौषधैर्मन्त्रैर्विष्णुसूक्तादिभिस्तथा ॥ २६ ॥
सुदिने सुशुभे देशे गोमयाद्युपलिप्तके । तत्रोपर्याविकं स्तीर्य कृष्णाजिनमथापि वा ॥ २७ ॥
द्रोणमानं तिलानान्तु कृष्णवस्त्रेण संयुतम् । स्थापयेद्राजतं पद्मं तन्मध्ये पलनिर्मिताम् ॥ २८ ॥
सौवर्णीं प्रतिमां तत्र बालगोपालकस्य हि । कृत्वा प्रतिष्ठितप्राणां मूर्तिं तां शुभलक्षणाम् ॥२९ ॥
अर्चयेद्गन्धपुष्पाद्यैरुपचारैर्यथाविधि । सम्यक्श्रद्धावती नारी मृतसन्ततिदुःखिनी ॥ ३० ॥
अग्ने नयेति चावाह्य विदुषो वेदवादिनः । अलोलुपाः सदाचाराः पूज्या अर्घ्यादिकैस्तथा ॥३१॥

मन्त्रः ।

"यन्मयाचरितो द्रोहो मोहाद्वै परसूनुषु । भूमिद्रविणहेमादिलिप्सया स विनश्यतु ॥ ३२ ॥
नाशयेत्तं हि पापं वै मूर्तिस्ते शुभलक्षणा । यदनिष्टं मया प्राप्तं मृतसन्ततिकारकम् ॥ ३३ ॥
तस्मान्मोच्यो महाभागार्पितगोदानपुण्यतः " ॥ ३४ ॥

इति तं त्रिः परिक्रम्य त्रिस्तेनोक्तेऽवतिष्ठति । अग्ने नयेति मन्त्रेण विसृज्यैतदुदीरयेत् ॥ ३५ ॥
धेनुं दद्यात्सवत्सां च सहिरण्यां यथाविधि । ब्राह्मणान्भोजयेत्सम्यक्शतं साग्रं यथाविधि ॥ ३६॥
सपिण्ड्यात्मानमालोक्य भुंजीतेष्टैश्च बन्धुभिः । इहैव लक्षणं ज्ञेयं मातृबन्धुसुखोज्झितम् ॥ ३७ ॥
स्वसुतासुतसौख्यानां सन्तोषाभाव एव च । विरुध्यन्तेऽप्यपत्यानि तादृशानि मिथः कियत्॥३८॥
विकारः प्रकृतौ चैव गमने पादवक्रतम् । पितृष्वसुर्मातुलान्याः कासगुल्मार्तिस्वग्व्ययाः ॥ ३९ ॥
मृतापत्यार्तिदस्तेषामनुमन्त्रादिभेदतः । तस्यापत्यात्त्रदुःखानि जायन्ते च मुहुर्मुहुः ॥ ४० ॥
पूर्वकर्मार्जितं पापं चिह्नं तस्य सहायवत् ॥ ४१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९० ॥

---

श्रीसूर्य उवाच ।

विप्राय यो विषं दद्याद्धातार्थं पूर्वजन्मनि । सोऽत्र जन्मनि पक्षीन्द्र च्छर्दीरोगेण बाध्यते ॥ १ ॥
निष्कृतिर्नास्ति तस्यात्र पापस्य दृढकर्मणः । छर्दीरोगेण सततं पीडिता नाशमाप्नुयात् ॥ २ ॥
प्रायश्चित्तं न तस्यात्र दानैरपि सहस्रशः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९१ ॥

श्रीसूर्य उवाच।

सा नारी प्राग्भवे सूत विषं दद्याद्द्विजातये। छर्दीरोगेण सात्रैव निश्चितं नाशमाप्नुयात् ॥ १ ॥
न पापशोधनं प्रोक्तं तस्यास्तु गरुडाग्रज। ब्राह्मणस्य वधस्यैव प्रायश्चित्तं न विद्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९२ ॥

श्रीसूर्य उवाच।

परस्य यो विषं दद्यात्पूर्वजन्मनि मानद। छर्दीरोगेण सोऽत्रैव बाध्यते पीडया सदा ॥ १ ॥
न पापशोधनं प्रोक्तं तस्यास्तु गरुडाग्रज। धेनूनां दशकं दद्यात्सर्वोपस्करसंयुतम् ॥ २ ॥
मुच्यते सर्वरोगाच्च जन्मन्यत्र खगाधिप ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिणवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९३ ॥

श्रीसूर्य उवाच।

मूकोऽत्र जायते जन्तुर्यः पूर्वं भ्रातृघातकः। बभूव कामतः सूत प्रायश्चित्तं न तत्समम् ॥ १ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्णवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९४ ॥

श्रीसूर्य उवाच।

या काचिन्मागधी नारी जाता ब्रह्महदे सुत। सा चात्र पर्वते देशे शुभे पञ्चनदेऽण्डज ॥ १ ॥
पुत्राभिलाषिणी पूर्वं यामजयवनं पुरा। सा चेह यवनी जाता पुत्रसन्ततिवर्जिता ॥ २ ॥
नानाधनयुता दासी कुरुक्षेत्रे पुरानघ। शिवभक्तिपरा तस्मात्सुखैश्वर्यसमन्विता ॥ ३ ॥
इह जन्मनि सा साध्वी रुद्रपूजाव्रतादिना। पुत्रपौत्रयुता शान्ता भविष्यति न संशयः ॥ ४ ॥
अथवा हरिवंशस्य शतावृत्त्या विधानतः। श्रवणात्पूर्वजातपापान्मुच्यते विनतासुत ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९५ ॥

श्रीसूर्य उवाच।

देवालयेऽवसत्कश्चिद्ब्राह्मणः पूर्वजन्मनि। विष्णुपूजारतो नित्यं द्रव्यलोभेन चाण्डज ॥ १ ॥
चौर्येण निहितं द्रव्यं यत्स्थितं देवताश्रये। तेनेदं दुष्कृतं सूत कृतं कर्मातिदारुणम् ॥ २ ॥
स तेन कर्मणा युक्तो मुक्त्वातियमशासनम्। जातो गङ्गाश्रये क्षत्री पूर्वं विष्णोः प्रपूजनात् ॥ ३ ॥
बहुद्रव्यान्वितो भूयः सर्वरोगसमन्वितः। बाल्ये हि पाण्डुरोगार्तश्चात्र जन्मनि सुव्रत ॥ ४ ॥
देवद्रव्यापहारी तु पाण्डुरोगी प्रजायते। तत्पापनाशनं पुण्यं पक्षीन्द्र शृणु तत्त्वतः ॥ ५ ॥
कुर्याद्धिरण्मयीं पृथ्वीं सप्तमुद्रां पलात्मिकाम्। सवनां सागरोपेतां सप्तद्वीपां वसुन्धराम् ॥ ६ ॥
गन्धपुष्पैरलंकृत्य दद्याद्विप्राय धीमते। पाण्डुरोगाद्विमुक्तः स्यादत्र जन्मनि मानवः ॥ ७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९६ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोदाद्विषं कस्यापि काश्यपे। सात्र जन्मनि रोगेणच्छर्दिसंज्ञेन पीड्यते ॥ १ ॥
धेनूनां दशकं दद्यादशक्तौ गरुडाग्रज। सवत्सां कपिलां दद्यात्सा तद्दोषात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९७ ॥

श्रीसूर्य उवाच।

कश्चिद्विप्रो ह्यभूदङ्गे प्राग्भवे धर्मसंयुतः। स चचार वने सूत मार्गलुण्ठनतत्परः ॥ १ ॥
काचित्सुनयना तत्र प्राप्ता भाविवलाद्वदात्। नानाभरणसंयुक्ता पूर्णगर्भसमन्विता ॥ २ ॥
सा लुण्ठितात्र त्रसिता तेन पापाधियाण्डज। सहायैः सा परित्यक्ता ताडनादाकुला महत् ॥ ३ ॥
तद्गर्भाद्वै च्युतो बालः पापमाचरितं त्विदम्। ततो धर्मपुरं प्राप्तो पुण्यपापसमन्वितः ॥ ४ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापं खगाधिप। परकन्याविवाहेन स जातो बाहुजोऽधुना ॥ ५ ॥
गङ्गायाः पूर्वभागे तु दशयोजनसम्मिते। गौरः सुरूपः क्षीणाङ्गो बहुद्रव्यपराक्रमः ॥ ६ ॥
पित्ताधिकोऽतिमतिमान्बहुपुत्रीभिरन्वितः। जातपुत्रा मृताः सप्त पूर्वपापात्तथाण्डज ॥ ७ ॥
निष्कृतिं तां प्रवक्ष्यामि येन पापात्प्रमुच्यते। पलार्धमितिका कार्या भव्या सुघटिता सुत ॥ ८ ॥
बाहुजा गर्भसंयुक्ता सौवर्णैर्भूषणैर्युता। पूर्वपापविनाशाय सा देया ब्राह्मणाय वै ॥ ९ ॥
गन्धैः पुष्पैः समभ्यर्च्य मन्त्रैः प्रणवपूर्वकैः। वेयसं तत्र सौवर्णं सुवर्णैकमितं सुत ॥ १० ॥
जपेच्च ब्राह्मान्मन्त्रांश्च तल्लिङ्गान्विधिपूर्वकम्। होमयेच्च यवांस्तत्र सतण्डुलसुसर्षपान् ॥ ११ ॥
ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम्। शृणुयाद्धरिवंशं वा शतावृत्त्या विधानतः॥ १२ ॥
गायत्र्यष्टशतं जप्त्वा तस्माद्दोषात्प्रमुच्यते। लभते पुत्रसौख्यं स चात्र जन्मनि वै ध्रुवम् ॥ १३ ॥
रिष्टं पञ्चाशदब्दे तु प्रायश्चित्तेऽकृते सुत। सप्तसप्तमिताब्दायुः प्रायश्चित्ते कृतेऽत्र वै ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९८ ॥

श्रीसूर्य उवाच।

व्यभिचाररता पूर्वं यात्रापि व्यभिचारिणी। सा गता नरकान्घोरांश्चिरं दुःखं समश्नुते ॥ १ ॥
न शुद्ध्यत्यशुभाचारा प्रायश्चित्तैः शतैरपि। वाराणस्यां गतिश्चास्या वासाच्च विनतासुत ॥ २ ॥
मोक्ष्यते सर्वपापाच्च पूर्वजन्मकृताद्वदात्। वाराणस्यां चतुर्दश्यां शिवपूजाव्रतादिना ॥ ३ ॥
महापापान्महाभाग पूर्वं चेहापि बाहुजा। वंध्या जाता तथा दुःखाकुला च दयितोज्झिता ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तरषट्शताधिकसहस्रतमः ॥ १६९९ ॥

श्रीसूर्य उवाच।

यः कृत्वा धूर्ततां पूर्वं वञ्चयेद्ब्राह्मणं सुत। सोऽत्रापस्माररोगेण पीड्यते बहुपीडया ॥ १ ॥
तेनैव पापरोगेण म्रियतेऽत्र खगाधिप। प्रायश्चित्तं मया नोक्तं पापे ब्राह्मणवञ्चने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तशताधिकसहस्रतमः ॥ १७०० ॥

श्रीसूर्य उवाच।

या भ्रातृघातिनी नारी प्राग्भवे विनतासुत। सात्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
ज्ञानान्महापापकृतात्र चोक्ता निष्कृतिर्मया। ज्ञात्वा ब्रह्मवधात्सूत प्रायश्चित्तं न तत्समम् ॥२ ॥
सप्तजन्मनि मूकत्वं जायते च तदेनसः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरसप्तशताधिकसहस्रतमः ॥ १७०१ ॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यसौ विप्रश्चात्र जन्मनि बाहुजः। देवद्रव्यापहरणात्प्रागत्राक्षिप्रपीडनम् ॥ १ ॥
विंशे वर्षे व्यतीते च नेत्रभङ्गो जनिष्यते। तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥

कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥ ३ ॥
राजताश्च महाभाग न रोगं स हि पश्यति । भोजयेच्छक्तितो विप्रान्वैष्णवाञ्छ्रद्धया सुत ॥ ४ ॥
कृत्वानेन विधानेन रिष्टं नैव प्रपश्यति ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरसप्तशताधिकसहस्रतमः ॥ १७०२ ॥

श्रीसूर्य उवाच ।
ब्राह्मणं घातयेत्कश्चिद्दुष्टो यः पूर्वजन्मनि । सोऽत्र जन्मनि जायेत क्षयरोगप्रपीडितः ॥ १ ॥
प्रायश्चित्तं परं तस्य वित्ततुर्यांशभागतः । कालचक्राभिधं दानं दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणान्भोजयेत्पश्चाद्धोमयेच्च स्वशक्तितः । कालचक्राख्यदानेन रोगा नश्यन्ति पापजाः ॥३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तरसप्तशताधिकसहस्रतमः ॥ १७०३ ॥

श्रीसूर्य उवाच ।
ब्रह्मवादरता ह्यत्र या पूर्वेऽभूत्पतिव्रता । शापप्रभावाद्धि गतिं सा वै प्राप्ता हि मानुषीम् ॥ १ ॥
त्यक्त्वा शरीरं सा देवी मोदतेऽम्बिकया सह । भुनक्ति भोगान्सर्वान्वै पतिं प्राप्य तपस्विनी ॥२॥
गच्छेत्सा परमं स्थानं यत्र देवो महेश्वरः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरसप्तशताधिकसहस्रतमः ॥ १७०४ ॥

श्रीसूर्य उवाच ।
योऽज्ञानात्कृतवान्सूत प्राग्भवे भ्रातृघातनम् । सोऽत्र जन्मनि मूकत्वं व्रजति क्वापि मानवः ॥ १ ॥
चान्द्रायणव्रतं कुर्यात्सुवर्णपलसंयुतम् । एवं यः कुरुते सूत स तत्पापात्प्रमुच्यते ॥ २ ॥
न जायतेऽस्य मूकत्वं कदाचिद्विनतासुत ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तरसप्तशताधिकसहस्रतमः ॥ १७०५ ॥

श्रीसूर्य उवाच ।
या धूर्ता वञ्चयेत्काचिल्लोकान्पूर्वभवेऽण्डज । प्रायश्चित्तं प्रवक्ष्यामि पापनाशकरं सुत ॥ १ ॥
ब्रह्मकूर्चत्रयं कुर्याद्दद्याद्धेनुं पयस्विनीम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरसप्तशताधिकसहस्रतमः ॥ १७०६ ॥

श्रीसूर्य उवाच ।
कश्चिद्वर्णोत्तमो जातो धर्मिष्ठो वित्तसंयुतः । उदरे वायुरल्पीयाञ्छिरोर्तिश्चैव जायते ॥ १ ॥
शरीरे जायते चिह्नं किञ्चिद्वर्णसमन्वितम् । दद्रुकण्डूकिलासानां गमने पादवैकृतिः ॥ २ ॥
कर्मानुसारजो व्याधिश्चिह्नं तस्य सहायवत् । भार्या प्रीतिपरा नित्यं कदाचित्कलहप्रिया ॥ ३ ॥
दोषयुक्ता प्रायशस्तु प्रदरार्तिः प्रजायते । मृतवत्सा कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥
अरुण उवाच ।
स स्त्रिया सहितो विप्रः कुलीनो बहुयाचकः । गता चैव महारण्ये तत्रा.ी गर्भसंयुता ॥ ५ ॥
बहुभिश्च समायातैः शत्रुभिः परिवेष्टितौ । तत्रासाद्भिया बाला या वेदना ह्युदरेऽभवत् ॥ ६ ॥
गर्भपातोऽभवच्चापि मृतः पूर्णाङ्गकः शिशुः । तेन कर्मविपाकेन म्रियन्ते तस्य बालकाः ॥ ७ ॥
केचिज्जीवन्ति षण्मासं केचिद्वर्षाधिकं भृशम् । बहुकालं न कश्चिद्वै मृतानां स्थितिरीदृशी ॥ ८ ॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्नश्चायं सुदुर्लभः । तेनेह मुनिभिः प्रोक्तं प्रायश्चित्तं विशोधनम् ॥ ९ ॥
गां वै सवर्णवत्सां च सौवर्णं निष्कसंमितम् । पुष्पितं फलितं वृक्षं वस्त्रयुग्मं गुरोरपि ॥ १० ॥
कर्मप्रकाशकं विप्रं पूजयेद्विधिपूर्वकम् । एवं प्रकुरुते वत्स निष्कृतिं कर्मणः फलम् ॥ ११ ॥
पुत्रपौत्रादिसंयुक्तो धनधान्यसमन्वितः । न करोति च यो मोहाल्लोभाद्वा कर्मनिष्कृतिम् ॥१२॥
स याति पापदोषेण भुवि जन्मनि जन्मनि । एवं यः कुरुते भक्त्या प्राप्नोति पुत्रपौत्रकम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरसप्तशताधिकसहस्रतमः ॥ १७०७ ॥

श्रीसूर्य उवाच ।

यो लोकान्वञ्चयेत्कश्चित्पुरा चौर्येण मानवः । सोऽत्र जन्मन्यपस्माररोगेण महताकुलः ॥ १ ॥
धेनुं दद्यान्महाभाग सवत्सां विधिसंयुताम् । ब्रह्मकूर्चत्रयं कुर्यात्स तत्पापात्प्रमुच्यते ॥ २ ॥
न भवेत्तस्य रोगस्य वेदना पापशोधनात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरसप्तशताधिकसहस्रतम. ॥ १७०८ ॥

श्रीसूर्य उवाच ।

अस्त्यत्र चन्द्रवदना गौराङ्गी पतिवल्लभा । धनधान्यसमायुक्ता स्वर्णकारी सुखान्विता ॥ १ ॥
रता भर्तृहिते नित्यं पूर्वं सा हितवल्लभा । स्वर्णापहारजातपापात्प्राप्ता सा स्वर्णकारताम् ॥ २ ॥
पुत्रहीना महाभाग परद्रव्यापहारतः । कुरुक्षेत्रे शशिग्रस्ते स्वर्णं दद्याच्च शक्तितः ॥ ३ ॥
तद्दत्त्वाशु लभेत्पुत्रानत्र जन्मनि वै सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरसप्तशताधिकसहस्रतमः ॥ १७०९ ॥

श्रीसूर्य उवाच ।

अन्नहृत्प्राग्भवे वत्स ज्ञानादत्र खगाधिप । सोऽजीर्णेनैव रोगेण पीड्यते बहुपीडया ॥ १ ॥
अन्नदानाच्च विप्रेभ्यो रसदानाच्च शक्तितः । सावित्रीजपतो होमात्पूर्वपापात्प्रमुच्यते ॥ २ ॥
पापक्षये क्षयं यान्ति रोगाः पापसमुद्भवाः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरसप्तशताधिकसहस्रतमः ॥ १७१० ॥

श्रीसूर्य उवाच ।

या काचिन्मोहतश्चक्रे नारी भ्रातृवधं पुरा । सात्र जन्मनि मूकत्वं भजेत्कापि शुभानना ॥ १ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्याश्चान्द्रायणं व्रतम् । वेदपुस्तकदानञ्च पलस्वर्णयुतं त्विह ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरसप्तशताधिकसहस्रतम ॥ १७११ ॥

श्रीसूर्य उवाच ।

बालघाती भवेद्यस्तु पूर्वजन्मनि मानवः । तेनैवात्र जनुषि मृतपुत्रः प्रजायते ॥ १ ॥
श्रवणाद्धरिवंशस्य विधिवच्चात्र जन्मनि । ब्राह्मणोद्वादनाच्चैव पूजनाच्छङ्करस्य च ॥ २ ॥
जीविष्यन्ति च तत्पुत्रा नात्र कार्या विचारणा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरसप्तशताधिकसहस्रतम ॥ १७१२ ॥

श्रीसूर्य उवाच।

शूकरी याऽभवत्पूर्वं निषादी पुनरेव सा। शूद्राधमा पञ्चनदे जाता विनतासुत॥ १ ॥
पुत्रपौत्रधनैर्धान्यैर्गजाश्वोष्ट्रादिवाहनैः। युक्ता सा यवनी सूत तीर्थराजस्य सेवनात्॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरसप्तशताधिकसहस्रतमः॥ १७१३॥

श्रीसूर्य उवाच।

कश्चित्प्रागभवद्विप्रः सर्वविद्याविशारदः। वेदाभ्यासरतः श्रीमान्प्राप्तसर्वमनोरथः॥ १ ॥
तुलाधृतानि चिह्नानि विप्राणां स्नेहभागिनाम्। गृहीतान्यतिचौर्येण लोभयुक्तेन चेतसा॥ २ ॥
यस्माज्ज्ञानकृते चैव प्राग्भवे तत्फलं शृणु। सोऽत्र जन्मनि विप्रस्तु द्विजो वेदविदां वरः॥ ३ ॥
धनपुत्रसमायुक्तः क्षयरोगसमन्वितः। वेदाभ्यासात्तथा दानात्तीर्थराजाधिवासनात्॥ ४ ॥
नाशः स्यात्क्षयरोगस्य चात्र जन्मनि चाण्डज। दोषात्स्वल्पात्फलैर्युक्तो जीवेद्वर्षशतं ध्रुवम्॥५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरसप्तशताधिकसहस्रतमः॥ १७१४॥

श्रीसूर्य उवाच।

पूर्वजन्मन्यभूत्कश्चिद्बाहुजो धर्मसंयुतः। ग्रामाध्यक्षः प्रतापाढ्यो भ्रातुः पुत्रसमाकुलः॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिशक्तितः। पर्वस्वपि च भूस्वर्णगोऽश्वशय्यासनादिकम्॥२॥
तिलपात्राणि भक्ष्याणि वस्त्राणि विविधानि च। सर्वरत्नानि पात्राय हव्यकव्यानि चाण्डज॥३॥
पापमाचरितं चापि भाविनोऽर्थस्य गौरवात्। ग्रामान्तरे स्थितस्यास्य शत्रोः सीमापहारिणः॥४॥
निर्दग्धं भवनं तस्य रात्रौ वै चौर्यकर्मणा। तस्मिन्दग्धे महाभाग दग्धः क्षात्रशिशुस्तथा॥ ५॥
बहवो गृहजा जीवा दग्धाश्चैव मृता ध्रुवम्। वैरभावात्सहायाढ्यैः पापपुत्रमुपार्जितम्॥ ६ ॥
एवं बहुतिथे काले सम्प्राप्ते यमशासनम्। पुण्यात्स्वर्गेश्च विविधान्भुक्त्वा पापात्तथेतरान्॥ ७ ॥
पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना। कुरुक्षेत्रात्परे भागे दशयोजनसम्मिते॥ ८ ॥
॥ रक्तगौरो मतिमान्स्वच्छो बहुधनैर्युतः। यशस्वी भ्रातृमित्राढ्यः पितृभक्तो दयापरः॥ ९ ॥
सुस्त्रीभृत्यसुखैश्वर्यनानावाहनभोगभाक्। बुद्ध्याधिकप्रचारी च पितृभाग्यविवृद्धिदः॥ १० ॥
ह्रस्वः कृशोदरो बन्धुमान्यो वै मितदः प्रभुः। आदिमध्यावसाने च सुखैश्वर्यसमाकुलः॥ ११ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। बहुचिन्तातुरो धूर्तो दाने चाल्पमतिस्तथा॥ १२ ॥
पीड्यमानस्तथा रोगैर्मूनि वाय्वादिसम्भवैः। नानाभयैर्मनोदुःखैः क्वापि क्षीणो विकारवान्॥ १३॥
बालघातात्पुरा पापाज्जातपुत्रविनाशकः। चिह्नमत्र जनुर्लग्नाद्गुरुभावस्तु पञ्चमे॥ १४ ॥
गुरुत्वादेनसश्चन्द्रो नीचः केन्द्रे शुभान्वितः। सहायलक्षणं सर्वं वक्ष्याम्यत्र खगाधिप॥ १५ ॥
या स्त्री पूर्वं सहायासीद्ग्रामदाहेऽतिनिष्ठुरा। सा ज्येष्ठा प्रसूरत्रास्ति मृतवत्सा खगेश्वर॥ १६ ॥
योऽभूदुत्साहकः पूर्वभवे स मृतबालकः। सहाया येऽपरे तेत्र मृतपुत्रीभिरन्विताः॥ १७ ॥
अन्ये ये बान्धवा भृत्याः सहायाः पण्मिताः पुरा। प्रसूस्तेऽत्र सुता जाता मृतापत्यत्वदुःखदाः॥
लक्षणैरेभिराढ्यस्य प्रसूरत्रैव जन्मनि। प्रायश्चित्तं प्रवक्ष्यामि येन पापक्षयो भवेत्॥ १९ ॥
पुण्यक्षेत्रेऽष्टभिर्विप्रैः पञ्चभिस्त्रिभिरेव च। कारयेत्पार्थिवाँल्लिङ्गानेकादशशतैर्मितान्॥ २० ॥
गन्धपुष्पोपचारैस्तु मन्त्रैरेव प्रपूजयेत्। ततश्चाष्टपलैः रुद्रं कुर्याद्धि हेमजं शुभम्॥ २१ ॥
सपत्नीकं यथाकारं सर्वावयवसंयुतम्। तदर्धमितकं वापि निजवित्तानुसारतः॥ २२ ॥

पूजयित्वा तु गन्धाद्यैर्विधिज्ञाय प्रदापयेत् । हिरण्मयं तथा चाग्निं मापपञ्चमितैः शुभम् ॥ २३ ॥
राजते च तथा पत्रे पलद्वयमिते शुभे । लेख्या जीवास्तथाकारा दग्धा ये च गृहाश्रिताः ॥२४॥
ब्राह्मणाय ततो देया दाहदोषोपशान्तये । लक्ष्मीनारायणं तद्वत्पलाष्टकमितं सुत ॥ २५ ॥
राजतं विधिवद्दद्यात्सर्वदोषापनुत्तये । गायत्र्यष्टसहस्रं तु सहस्रं द्वादशाक्षरम् ॥ २६ ॥
अष्टाक्षरं त्रिसाहस्रं जप्त्वा शुद्धिं समाचरेत् । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ २७ ॥
शृणुयाद्धरिवंशं वा दशावृत्त्या विधानतः । य एवं कुरुते सूत द्वयोः पापविशोधनम् ॥ २८ ॥
तस्य पुत्रविवृद्धिः स्यात्स्त्रीभ्यामत्रैव जन्मनि । नाधयो व्याधयस्तस्य नवा रिष्टभयं क्वचित् २९
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । न जीवन्ति सुतास्तस्मिञ्जीविते नात्र संशयः ३० ॥
पञ्चत्रिंशन्मिते वर्षे रिष्टं देहधनादिजम् । त्रिसप्ततिमिताब्दायुः प्रायश्चित्ते कृते त्विह ॥ ३१ ॥
गतिस्तस्योत्तमा लोके ह्यन्यथा त्वाततायिनाम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्॥३२॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विचिन्तयेत् ॥ ३३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चदशोत्तरसप्तशताधिकसहस्रतमः ॥ १७१५ ॥

---

श्रीसूर्य उवाच ।

यस्तु पृच्छति धर्मात्मा सर्वपापविशोधनम् । यजेद्देवानृषींश्चैव पितॄन्वै श्रद्धयान्वितः ॥ १ ॥
गयाश्राद्धादिभिः सर्वैर्नैर्दैवैर्विधानतः । पूर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तरसप्तशताधिकसहस्रतमः ॥ १७१६ ॥

---

श्रीसूर्य उवाच ।

कश्चिच्छूद्रो महाभाग बभूव प्राग्भवे धनी । व्यापारनिरतो दक्षो क्रयविक्रयकर्मसु ॥ १ ॥
नीता सर्वरसास्तेन मिलित्वा चार्धसीरणा । कालेन ते हृता लोभात्स्नेहान्मौल्याधिकाः सुत॥२॥
भुक्त्वा पापफलं घोरं भ्रमरत्वमुपागतः । ततः पुण्याच्छुभं भुक्त्वा पुण्याज्जातोऽत्र पर्वते ॥ ३ ॥
शूद्रो पुत्रकलत्रयुक्तो भूमिदानात्सुरार्चनात् । स्नेहहारी यतः पूर्वे राजयक्ष्मप्रपीडितः ॥ ४ ॥
सर्वस्नेहादिदानाद्धि स्वबिचात्तुर्यभागतः । स्वर्णदानात्तथा चात्र क्षयरोगाद्विमुच्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरसप्तशताधिकसहस्रतमः ॥ १७१७ ॥

---

श्रीसूर्य उवाच ।

विषं दत्त्वा पतिं सूत प्राग्या जाराश्रिताऽसती । पतिघ्नी सा महादुष्टा बाल्येऽत्र विधवा सुत ॥१॥
विष्णोराराधनादत्र गङ्गायाश्चैव सेवनात् । गतिं शुभां सा प्राप्नोति व्रतकृच्छ्रोपसेवनात् ॥ २ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तरसप्तशताधिकसहस्रतमः ॥ १७१८ ॥

श्रीसूर्य उवाच ।

देवागारं दारयेत्तु प्राग्जन्मन्यथ पुत्रक । रक्तातिसाररोगेण बाध्यतेऽत्रैव जन्मनि ॥ १ ॥
तद्देवदानाद्विप्राय स्थापनाद्वा विधानतः । मुच्यते पापजाद्रोगादतीसाराद्धि निश्चितम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१९ ॥

---

श्रीसूर्य उवाच ।

मूर्धाभिषिक्तो यः कश्चिन्मथुरायामभूत्सुधीः । राजसेवी महाशूर आखेटकरतः सदा ॥ १ ॥
मृगयायां गतो दैवाद्घातिता मृगशूकराः । तत्रैका हरिणी सूत घातिता गर्भसंयुता ॥ २ ॥
तद्गर्भजौ हतौ तत्र शुभौ द्वौ मृगशावकौ । सहायाभ्यां युतेनैव कृतं कर्म दुरात्मना ॥ ३ ॥
ताभ्यां मिलित्वा तौ भुक्तावमायां चाण्डजाधिप । सोऽथ काले महाभाग प्राप्तः शत्रुपुरं पुरा ४॥
स शौर्यकर्मणा सूत घातयित्वा रिपून्बहून् । घातितश्चापि रिपुभिः प्रहारैरतिदारुणैः ॥ ५ ॥
सङ्ग्रामभूमौ स मृतः प्राप्तः स्वर्गपुरं तदा । भुक्त्वा नानाविधान्भोगान्स जातो ब्राह्मणस्त्विह॥६॥
देशे प्रयागनिकटे सर्वशास्त्रार्थकोविदः । जातः कर्कटगे जीवे लग्नस्थे हि महातपाः ॥ ७ ॥
धनैर्नानाविधैर्युक्तो गौराङ्गो रक्तलोचनः । शिवपूजनजात्पुण्यात्प्राक्कृतात्सकलैः सुखैः ॥ ८ ॥
महामनोरथैश्चापि पूर्णश्चात्रैव जन्मनि । राज्यमचार्यत्पुत्रमथ पुण्यात्पापफलं शृणु ॥ ९ ॥
धूर्तः शठः सर्वभक्षः स्वल्पपापरतः क्वचित् । सहायलक्षणं सूत शृणु पुत्र यथातथा ॥ १० ॥
द्वाभ्यां मिलित्वा भुक्तौ द्वौ मृगशावौ खगाधिप । पृच्छकस्य च तौ पुत्रावुभौ ज्येष्ठकनिष्ठकौ ११
अपस्मारेण रोगेण मृतौ चात्रैव जन्मनि । एवं सन्ततिदुःखार्तः स विप्रो विधिवर्जनात् ॥१२॥
प्रतिमासोत्थपापस्य प्रायश्चित्तं वदाम्यहम् । पूजयेच्छिवलिङ्गानां लक्षमर्धं तदर्धकम् ॥ १३ ॥
हिरण्मयौ तथा देयौ द्वावत्र मृगशावकौ । पूजयेच्च तथा वायुं विधिना मृगदैवतम् ॥ १४ ॥
तन्मन्त्रैर्धूपगन्धाद्यैर्नानाभक्ष्यैर्विधानतः । प्रायश्चित्तं परं तस्य पापस्य क्षयकारकम् ॥ १५ ॥
अथवा भोजयेद्विप्रान्सहस्रद्वयसंमितान् । पुत्रपौत्रविवृद्धिः स्यात्प्रायश्चित्ते कृते त्विह ॥ १६ ॥
प्रायश्चित्तेऽकृते सूत नच पुत्रसुखं लभेत् । रिष्टेन मरणं चापि वर्षे वेदाब्धिकेऽण्डज ॥ १७ ॥
प्रायश्चित्ते कृते तस्य जीवनं चाब्दसप्ततिम् । चैत्राष्टम्यां च निधनं शुक्लायां गरुडाग्रज ॥१८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२० ॥

श्रीसूर्य उवाच ।

गर्भपातनपापाढ्या बभूव प्राग्भवेऽण्डज । सेह वै तेन पापेन गर्भपातनदुःखिनी ॥ १ ॥
विप्रकन्याविवाहाद्वै विधिवच्चात्र जन्मनि । मुच्यते तेन पापेन गर्भस्थैर्यं भवेदिह ॥ २ ॥
अथवा पार्वतीं दद्याद्देवीं दशसुवर्णजाम् । युक्तां गणेशस्कन्दाभ्यां नानाभरणभूषिताम् ॥ ३ ॥
तदर्धमितिकां वापि पूजयित्वा विधानतः । मुच्यते पूर्वपापाच्च गर्भपातनजात्सुत ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२१ ॥

श्रीसूर्य उवाच ।

या काचिद्दाहयेन्नारी देवागारं खगाधिप । सातिसारेण महता पीड्यते चेह भामिनी ॥ १ ॥
शङ्करप्रतिमादानान्मूर्तेर्विष्णोर्द्विजार्पणात् । न जायते महापीडा रक्तातीसारसंभवा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२२ ॥

श्रीसूर्य उवाच ।

ब्रह्महा प्राग्भवे सूत तिर्यक्त्वं प्राप्य निश्चयात् । सम्पर्कान्दारुणांश्चैव भुनक्त्यत्रैव जन्मनि ॥ १ ॥
कर्मक्षये तु कुष्ठेन सोऽत्र जन्मनि पीड्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२३ ॥

श्रीसूर्य उवाच।

या काचिद्वातयेन्नारी पत्युर्मित्रं च प्राग्भवे। नियतं वायुरोगेण पीड्यते बहुपीडया ॥ १ ॥
पापं प्रतीक्ष्य विप्रादेः सर्वस्वार्धतदर्धजम्। वायुं हिरण्मयं कुर्यान्मृगं विहितलक्षणम् ॥ २ ॥
पूजयित्वा विधानेन गन्धैर्वस्त्रैर्विशेषतः। मन्त्रैश्च वायुजैः सूत दद्याद्विप्राय धीमते ॥ ३ ॥
वायुरोगस्य शमनं दानेनानेन जायते ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरसप्तशताधिकसहस्रतमः॥ १७२४ ॥

श्रीसूर्य उवाच।

अज्ञानादथ या नारी गोत्रघातकरी पुरा। बभूव सततं चात्र लूतारोगप्रपीडिता ॥ १ ॥
श्रवणादितिहासानां प्राजापत्याद्व्रतात्सुत। लूतारोगं न पश्येत सात्र जन्मनि चाण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्युत्तरसप्तशताधिकसहस्रतमः॥ १७२५ ॥

अरुण उवाच।

भूमिदेवकुलोत्पन्नः किञ्चिद्वित्तसमन्वितः। संयुतो वायुपित्ताभ्यां नेत्रतोदशिरोर्तिमान् ॥ १ ॥
सद्वृत्तश्च सुखी धीमान्धर्मिष्ठो धर्मवत्सलः। व्रणो रेखा शराद्वापि बाल्ये स्याद्ग्रहणीगदः ॥ २ ॥
कटिपृष्ठाभिघाताद्वा व्रणो वाताग्निदर्शनम्। परोक्षमविवादं च ब्रुवते कारणं विना ॥ ३ ॥
तस्य प्रिया शुभाचारा सती व्रतपरायणा। काकवन्ध्या कथं जाता कस्येदं कर्मणः फलम् ॥ ४ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि रूपाढ्या भार्या विप्रस्य सात्त्विकी। प्रतिवेशस्थितो वैश्यो ब्राह्मणो ज्ञानिसत्तमः॥५॥
अप्रसूता प्रिया तस्य चपला चारुलक्षणा। वैश्येन कामिता सा वै लोभमोहादिविभ्रमैः ॥ ६ ॥
अज्ञानात्काममिच्छन्ती भाविना वै बलीयसा। तावत्कालवशेनैव ब्राह्मणो जनतां गतः ॥ ७ ॥
स वैश्यो दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। सुतनुं धर्षयामास बहुकालं खगेश्वर ॥ ८ ॥
व्यभिचारवशात्तत्र ह्यन्योन्यं तदृतं धनम्। गृहीतं तद्धनं सर्वं धूर्तया लुब्धचेतसा ॥ ९ ॥
ब्राह्मणो धनितां प्राप्तो लोके जग्राह विश्रुतिम्। पुंश्चल्या निन्द्यवृत्त्या वै विप्रोऽयं धनवानिति ॥
तेन दुःखेन विप्रो वै ब्राह्मणीमत्यजत्पुरा। सा चापि कुलटा दुष्टा भास्करेः सदनं गता ॥ ११॥
निर्वंशो जायते तत्र ब्राह्मणस्य खगेश्वर। तेन कर्मविपाकेन तादृशं च भवेदिह ॥ १२ ॥
पश्चान्मानुष्यमापन्नो बहुशोकाकुलो भृशम्। इदं द्वितीयं वै जन्म ग्रहसंग्रसमुद्भवम् ॥ १३ ॥
एकापत्यभवं दुःखमनपत्यत्वमेव वा ॥ १४ ॥
मार्गशीर्षे शुभे मासे शुक्लपक्षादितः खग। प्रत्यक्षं भाग्यसौख्याप्तिप्रदं तु प्रतिवत्सरम् ॥ १५ ॥
षोडशाब्दानि नारीभिः कर्तव्यं विधिपूर्वकम्। गौरीव्रतमिदं दीक्षाक्षतसौख्यफलप्रदम् ॥ १६ ॥
प्रातर्नियममास्थाय दन्तधावनपूर्वकम्। अद्याहं शिवयोः प्रीतिमाचरिष्ये शुभव्रतम् ॥ १७ ॥
स्थानप्रवासनिरतं निशि जागरतत्परा। ततो मध्याह्नसमये स्नात्वा कुंकुमवाससी ॥ १८ ॥
परिधायार्चयेद्गौरीं पतिपुत्रवतीं स्त्रियम्। कुंकुमैः कज्जलैश्चालंकरणैः पुष्पमालया ॥ १९ ॥
ताम्बूलैस्तु सकर्पूरैः सौभाग्याष्टकवस्तुना। ततश्चास्तमिते भानौ वर्तिं षोडशतन्तुभिः ॥ २० ॥
विधाय तिलतैलेन दीपं कुर्याच्छिवाग्रतः। गीतवादित्रनिर्घोषपुराणश्रवणादिभिः ॥ २१ ॥
नैवेद्यं विविधवस्तु यादपूपैस्तिलतण्डुलैः। तथा षोडशसंख्यानि वेणुशूर्पाणि कारयेत् ॥ २२ ॥

सप्तधान्यफलोपेतान्यष्टसौभाग्यवन्ति हि। एवं विधिं समास्थाय भोजयेद्दम्पतीञ्शुभान् ॥ २३ ॥
दानभोज्यैस्तथा पुष्पैः पक्षिभ्यो वलिमाहरेत्। दीनान्धकृपणेभ्योऽन्नं सर्वेभ्यात्मानमीक्षयेत् २४
एतद्गौरीव्रतं नाम मार्गशीर्षे समाचरेत्। एवं कृतविधेः सूत प्राप्यते पुत्रपौत्रकम् ॥ २५ ॥
नारी नियमसम्पूर्णा व्रतं कुर्यात्प्रयत्नतः। सुतसौभाग्ययुक्ता सा पतिपुत्रसुखाप्तये ॥ २६ ॥
ऐहिकं लक्षणं तस्या नार्या वै जायते त्विह। स्वसुर्मातुश्वसुर्वापि सपत्न्याः शोक एव च ॥२७॥
उदरार्तिरसृग्वातः पार्ष्णिपादादिवेदना। वाक्याभिशंसनं चापि वाक्पदोषो धनच्युतिः ॥ २८ ॥
स्वशक्तिनिन्दा हीनत्वं परेभ्यो मर्मतोदनम् ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२६ ॥

---

श्रीसूर्य उवाच।

शकृन्मूत्रं सृजेयस्तु देवागारे नराधमः। गुदरोगमवाप्नोति सोऽत्र जन्मनि मानवः ॥ १ ॥
सोऽप्येकं पूजयेद्विष्णुं शिवं वा विधिनाण्डज। प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनं सुत ॥ २ ॥
न पश्यति तदा पीडां गुदजामत्र जन्मनि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२७ ॥

श्रीसूर्य उवाच।

घातयेद्यः पुमान्नारीमज्ञानात्पूर्वजन्मनि। सोऽत्र जन्मनि जायेत कृशो बलविवर्जितः ॥ १ ॥
शर्कराधेनुदानेन दशसंख्येन चाण्डज। विमुच्यते कृशत्वाच्च शतब्राह्मणभोजनात् ॥ २ ॥
होमात्स्वस्त्ययनाज्जापाद्गायत्रीजपतोऽत्र च। तीर्थस्नानादाज्यदानाद्वलीभवति नान्यथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७२८ ॥

श्रीसूर्य उवाच।

देवद्रव्यं हरेत्सूत पूर्वजन्मनि यो नरः। सोऽत्र जन्मनि जायेत वायुपीडाभिरन्वितः ॥ १ ॥
प्रायश्चित्तमिदं वायोर्नाशनं तस्य वच्म्यहम्। जपेन्मृत्युञ्जयं मन्त्रं सावित्रीं च विशेषतः ॥ २ ॥
होमयेत्तद्दशांशेन ब्राह्मणान्भोजयेत्तथा। वायुरोगोपशान्त्यर्थं शक्त्या दद्याच्च दक्षिणाम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७२९ ॥

श्रीसूर्य उवाच।

देवागारे तु या काचित्प्राग्भवे विनतासुत। सृजेन्मूत्रं पुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगयुता सा वै भविष्यति न संशयः। गुदरोगविनाशाय पूर्वपापक्षयाय वै ॥ २ ॥
सा वै गोमिथुनं दद्यात्प्राजापत्यं चरेद्व्रतम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३० ॥

श्रीसूर्य उवाच।

बभूव सुरवजः कश्चिद्विद्याधनसमन्वितः। नानाकलासु कुशलो विष्णुभक्तिपरायणः ॥ १ ॥
राहुग्रस्ते प्रयागे तु सर्वस्वं दत्तवान्सुत। तत्र भाविवलात्सूत पापमाचरितं त्विदम् ॥ २ ॥
धर्षिता क्षत्रिया यूनि कामलोभाच्छुभानना। प्रताडितः पतिस्तस्यास्तेन दैवहतेन तु ॥ ३ ॥
ततो मृत्युवशं प्राप्तः स गत्वा यमशासनम्। शुभाच्छुभफलं भुक्त्वा चाशुभादतिदारुणम् ॥ ४ ॥

अन्यजन्मनि दानेन स जातः क्षत्रियाधरः । देशे विपाशानिकटे सप्तयोजनसम्मिते ॥ ५ ॥
सुरूपदेहः सद्बुद्धिः स्त्रीपुत्रधनसंयुतः । शूरो दाता प्रधानश्च देशेदेशेऽतिविश्रुतः ॥ ६ ॥
किञ्चित्पापरतो धूर्तो मनोदुःखाकुलो भृशम् । धर्षणात्क्षत्रियायास्तु भर्तृसन्ताडनात्तथा ॥ ७ ॥
वार्धके कण्डुरोगार्तो निश्चयादत्र जन्मनि । लक्ष्मैतदण्डजश्रेष्ठ सूर्यशुक्रौ चतुर्थगौ ॥ ८ ॥
वक्ष्यामि तस्य पापस्य निष्कृतिं पापशोधिनीम् । लक्ष्मीनारायणं दद्यात्पलेनार्धपलेन वा ॥ ९ ॥
हिरण्मयं सुघटितं सर्वाभरणभूषितम् । पूजयित्वा तु गन्धैश्च पुष्पैर्नानाविधैस्तथा ॥ १० ॥
दीपैर्विचित्रैर्विधिना दद्याद्विप्राय धीमते । गणनाथं तथा दद्यात्सौवर्णं दशमाषकम् ॥ ११ ॥
एवं विधानं यः कुर्यात्पूर्वपापविशोधनम् । न तस्य दद्रुः कण्डूश्च तस्माद्दोषात्प्रमुच्यते ॥ १२ ॥
अकालमरणं तस्य प्रायश्चित्तेऽकृतेऽत्र च । प्रायश्चित्ते कृते त्वत्र जीवनं सप्तसप्ततिम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३१ ॥

## श्रीसूर्य उवाच ।

देवागारे तु या काचित्प्राग्भवे विनतासुत । सृजेन्मूत्रपुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारीपापप्रणाशनम् । वत्सगोमिथुनं दद्यात्प्राजापत्यव्रतं चरेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३२ ॥

## श्रीसूर्य उवाच ।

धावयेद्यः स्त्रियं साध्वीं कामात्पापविमोहितः । प्राग्भवे नियतं सोऽत्र कासं भजति जन्मतः॥१॥
तेनैव मृत्युमाप्नोति रोगेण हि खगाधिप । प्राप्ते रिष्टेऽथ पञ्चाब्दे प्रायश्चित्तं न तत्समम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरसप्तशताधिकसहस्रतम ॥ १७३३ ॥

## श्रीसूर्य उवाच ।

कन्यकावधजात्पूर्वं तस्मात्कन्या प्रजायते । जन्मन्यत्र महाभाग पूर्वपापादिदं फलम् ॥ १ ॥
पूजनाल्लक्षरुद्राणां तदर्धानां तथार्चनात् । मुच्यते पूर्वपापाच्च घोरात्कन्यावधादिह ॥ २ ॥
अथवा विधिना सत तडागोत्सर्गपुण्यतः । विप्राणां भोजनात्तस्मिंस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापात्प्रमुच्येत नात्र कार्या विचारणा ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरसप्तशताधिकसहस्रतम ॥ १७३४ ॥

## श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले सूत पूर्वजन्मन्यभूद्ध्रुवम् । गिरिवासी महादुष्टश्चौर्यैककर्मरतो दृढः ॥ १ ॥
लुण्ठितो ब्राह्मणस्तेन मार्गे सन्ताडितो भृशम् । तत्ताडनान्महाबाहो मृतः काले द्विजोत्तमः २॥
गते बहुतिथे काले स जातो ब्रह्महाऽधुना । गङ्गायमुनयोर्मध्ये क्रूरकर्मा महोग्रभी ॥ ३ ॥
प्राक्शिवाराधनात्पुण्याद्ब्राह्मजः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य सर्वपापौघनाशिनीम् ॥ ४ ॥
तेन सर्वस्वतः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्यः शृङ्गाभ्यां संयुतो महान् ॥ ५ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ६
तस्माच्छिवप्रसादेन सुखं तस्य प्रजायते ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चत्रिंशदुत्तरसप्तशताधिकसहस्रतम. ॥ १७३५

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मजा काचिद्भर्तुः प्रियरता सदा । दानधर्मरता साध्वी विप्राणां भोजने रता ॥ १ ॥
तदा दैवात्सा सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रमदददिषं चैतद्दशानुगम् ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तथा । तद्दुःखेन पतिस्तस्या मृतः पुत्रशुचान्वितः ॥ ३ ॥
पापमाचरितं चोग्रं स्वपुत्रवधघातजम् । गतो यमपुरं भुक्त्वा पूर्वपुण्यफलं शुभम् ॥ ४ ॥
तद्वत्पापफलं सूत घोरान्नरकसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता वर्ततेऽधुना ॥ ५ ॥
क्षात्रे कुले महापुण्ये राज्यत्रास्ति खगाधिप । सा रक्तगौरा धर्मज्ञा सदा पुण्यपरायणा ॥ ६ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नातिव्ययुता पुण्यात्स्वकुलेष्टा प्रियंवदा ॥ ७ ॥
पतिप्रियरता धीरा सुखैश्वर्यधनान्विता । पुण्यादिदं तथा पापाल्लोभाढ्या नष्टपुत्रका ॥ ८ ॥
स्वल्पसौख्ययुता काले कुष्ठव्याधिसमन्विता । यौवने भर्तसंयुक्ता वार्धके सुखवर्जिता ॥ ९ ॥
सपत्नीपुत्रवधजात्पूर्वपापात्खगाधिप । लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
विष्णुः कार्यः शतैर्माषैः सौवर्णैर्विश्वयोनिभूत् । तद्वन्महेश्वरं कुर्याद्गन्धैः पुष्पैरलङ्कृतम् ॥ ११ ॥
देयौ विप्रेषु पात्रेषु पूर्वपापापनुत्तये । जपेदष्टाक्षरं मन्त्रमयुतं होमयेत्ततः ॥ १२ ॥
गायत्रीं च जपेत्तद्वद्द्याद्गावस्तथा सुत । भोजयेच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् । न तस्याः पुत्रमरणं तदग्रे जायते ध्रुवम् ॥ १४ ॥
नैवं या कुरुते नारी प्रायश्चित्तं विधानतः । प्राक्सपत्नीसुतावातात्तस्याः पुत्रविनाशनम् ॥ १५ ॥
विप्राणां पूजनाद्दानात्तस्याः सन्ततिवर्द्धनम् । जीवितं कथितं तस्या वर्षाणामष्टसप्ततिम् ॥ १६ ॥
रिष्टं पष्टिमिताब्दे तु ध्रुवं चाकृतनिष्कृतेः ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३६ ॥

---

अरुण उवाच ।

कश्चिद्विप्रकुलोत्पन्नो देहावयवकार्श्ययुक् । सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किञ्चिद्व्यापारवान्भुवि । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षमनास्तस्याः प्रीतिर्वै मातुलादिषु । असृग्वातगदार्ता सा बाल्ये स्याद्व्रणगदः ॥ ३ ॥
काष्ठलोष्टाश्मशस्त्राद्यैर्घातः स्यात्करपादयोः । बहुपुत्राः प्रसूताश्च ह्यपुत्रस्तु तथाप्यसौ ॥ ४ ॥
एतस्य मृतपुत्रत्वं कर्मणा केन जायते । जातमात्रा मृताः केचित्केचित्स्योगण्डमाश्रिताः ॥ ५ ॥
केचिद्दुष्टाननाश्चैव मृतः पुत्रोऽग्रिमासकः । असृक्स्रावाद्भृशं पीडा जायते मासिमासि च ॥ ६ ॥
केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ७ ॥

श्रीसूर्य उवाच ।

पूर्वं क्षात्रात्समुत्पन्नः किञ्चिद्भूमिपतिस्त्वया । तावज्जन्मनि वैश्यस्तु परवित्तापहारकः ॥ ८ ॥
एको ग्रामेऽवसद्विप्रः शान्तो दान्तः क्षमी सदा । पुत्र्यः पञ्च तथा सप्त ह्यपुत्रो मित्रसंयुतः ॥ ९ ॥
कालेनासौ मृतो विप्रो हृतं तेन धनं महत् । क्रियाकर्म कृतं नैव सर्वं राज्ञा हृतश्च तत् ॥ १० ॥
एवं कृतापराधोऽसौ दूत्या सह स क्षत्रियः । किञ्चित्कालानन्तरं च देशान्तरगतीच्छया ॥ ११ ॥
म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम् । केचित्केचिद्विपच्यंते नरके भृशदारुणे ॥ १२ ॥
दानधर्मादिना किंचिदिह जन्मनि मानद । विप्रवंशे समुत्पन्नो जातो वै चेह जन्मनि ॥ १३ ॥

अन्यजन्मनि दानेन स जातः क्षत्रियाधरः । देशे विपाशानिकटे सप्तयोजनसंमिते ॥ ५ ॥
सुरूपदेहः सद्बुद्धिः स्त्रीपुत्रधनसंयुतः । शूरो दाता प्रधानश्च देशेदेशेऽतिविश्रुतः ॥ ६ ॥
किंचित्पापरतो धूर्तो मनोदुःखाकुलो भृशम् । धर्षणात्क्षत्रियायास्तु भर्तृसन्ताडनात्तथा ॥ ७ ॥
वार्धके कण्डुरोगार्तो निश्चयादत्र जन्मनि । लक्ष्मैतदण्डजश्रेष्ठ सूर्यशुक्रौ चतुर्थगौ ॥ ८ ॥
वक्ष्यामि तस्य पापस्य निष्कृतिं पापशोधिनीम् । लक्ष्मीनारायणं दद्यात्पलेनार्धपलेन वा ॥ ९ ॥
हिरण्मयं सुघटितं सर्वाभरणभूषितम् । पूजयित्वा तु गन्धैश्च पुष्पैर्नानाविधैस्तथा ॥ १० ॥
दीपैर्विचित्रैर्विधिना दद्याद्विप्राय धीमते । गणनाथं तथा दद्यात्सौवर्णं दशमाषकम् ॥ ११ ॥
एवं विधानं यः कुर्यात्पूर्वपापविशोधनम् । न तस्य दद्रुः कण्डूश्च तस्माद्दोषात्प्रमुच्यते ॥ १२ ॥
अकालमरणं तस्य प्रायश्चित्तेऽकृतेऽत्र च । प्रायश्चित्ते कृते त्वत्र जीवनं सप्तसप्ततिम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३१ ॥

## श्रीसूर्य उवाच ।

देवागारे तु या काचित्प्राग्भवे विनतासुत । सृजेन्मूत्रपुरीषं च मोहादत्रैव जन्मनि ॥ १ ॥
गुदरोगान्विता सा तु नारी पापप्रणाशनम् । वत्सगोमिथुनं दद्यात्प्राजापत्यव्रतं चरेत् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये द्वात्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३२ ॥

## श्रीसूर्य उवाच ।

घातयेद्यः स्त्रियं साध्वीं कामात्पापविमोहितः । प्राग्भवे नियतं सोऽत्र क्षयं भजति जन्मतः॥१॥
तेनैव मृत्युमाप्नोति रोगेण हि खगाधिप । प्राप्ते रिष्टेऽस्य पष्ठवर्षे प्रायश्चित्तं न तत्समम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३३ ॥

## श्रीसूर्य उवाच ।

कन्यकावधजात्पूर्वं तस्मात्कन्या प्रजायते । जन्मन्यत्र महाभाग पूर्वपापादिदं फलम् ॥ १ ॥
पूजनाल्लक्षरुद्राणां तदर्थानां तथार्चनात् । मुच्यते पूर्वपापाच्च घोरात्कन्यावधादिह ॥ २ ॥
अथवा विधिना सत तडागोत्सर्गपुण्यतः । विप्राणां भोजनात्तस्मिंस्तडागे गोप्रदानतः ॥ ३ ॥
पूर्वपापात्प्रमुच्येत नात्र कार्या विचारणा ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३४ ॥

## श्रीसूर्य उवाच ।

कश्चित्क्षात्रकुले सूत पूर्वजन्मन्यभूद्ध्रुवम् । गिरिवासी महादुष्टश्चौर्यकर्मरतो दृढः ॥ १ ॥
लुण्ठितो ब्राह्मणस्तेन मार्गे सन्ताडितो भृशम् । तत्ताडनान्महाबाहो मृतः काले द्विजोत्तमः ॥ २ ॥
गते बहुतिथे काले स जातो ब्रह्महाऽधुना । गङ्गायमुनयोर्मध्ये क्रूरकर्मा महोग्रमी ॥ ३ ॥
प्राक्शिवाराधनात्पुण्याद्ब्राह्मजः कुष्ठसंयुतः । वक्ष्यामि निष्कृतिं तस्य सर्वपापौघनाशिनीम् ॥ ४ ॥
तेन सर्वस्वतः कार्यो वृषभोऽत्र हिरण्मयः । क्षौमवस्त्रयुतो भव्यः शृङ्गाभ्यां संयुतो महान् ॥ ५ ॥
स देयो वेदविदुषे कुष्ठदोषोपशान्तये । दानेनानेन सततं प्रीतो भवति वै शिवः ॥ ६ ॥
तस्माच्छिवप्रसादेन कुष्ठं तस्य प्रशाम्यति ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३५

श्रीसूर्य उवाच ।

प्रागासीद्द्विजा काचिद्भर्तुः प्रियरता सदा । दानधर्मरता साध्वी विप्राणां भोजने रता ॥ १ ॥
तदा दैवात्सा सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रमददद्विषं चैवद्धशानुगम् ॥ २ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तथा । तद्दुःखेन पतिस्तस्या मृतः पुत्रशुचान्वितः ॥ ३ ॥
पापमाचरितं चोग्रं स्वपुत्रवधघातजम् । गतो यमपुरं मुक्ता पूर्वपुण्यफलं शुभम् ॥ ४ ॥
तद्भूतपापफलं सूत घोरान्नरकसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता वर्ततेऽधुना ॥ ५ ॥
क्षाद्ये कुले महापुण्ये राज्यत्रारिते खगाधिप । सा रक्तगौरा धर्मज्ञा सदा पुण्यपरायणा ॥ ६ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नातिव्ययधुता पुण्यात्स्वकुलेष्टा प्रियंवदा ॥ ७ ॥
पतिप्रियरता धीरा सुखैश्वर्यधनान्विता । पुण्यादिदं तथा पापाल्लोभाढ्या नष्टपुत्रका ॥ ८ ॥
स्वल्पसौख्ययुता काले कुष्ठव्याधिसमन्विता । यौवने भर्तृसंयुक्ता वार्धके सुखवर्जिता ॥ ९ ॥
सपत्नीपुत्रवधजात्पूर्वपापात्खगाधिप । लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
विष्णुः कार्यः शतैर्माषैः सौवर्णैर्विधयोनिभृतं । तद्वन्महेश्वरं कुर्याद्वन्द्यैः पुष्पैरलङ्कृतम् ॥ ११ ॥
देयौ विप्रेषु पात्रेषु पूर्वपापापनुत्तये । जपेदष्टाक्षरं मन्त्रमयुतं होमयेत्ततः ॥ १२ ॥
गायत्रीं च जपेत्तद्वद्द्याद्गावस्तथा सुत । भोजयेच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् ॥ १३ ॥
एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् । न तस्याः पुत्रमरणं तदग्रे जायते ध्रुवम् ॥ १४ ॥
नैवं या कुरुते नारी प्रायश्चित्तं विधानतः । प्राक्सपत्नीसुताघाताच्चस्याः पुत्रविनाशनम् ॥ १५ ॥
विप्राणां पूजनाद्दानाच्चस्याः सन्ततिवर्द्धनम् । जीवितं कथितं तस्या वर्षाणामष्टसप्ततिम् ॥ १६ ॥
रिष्टं षष्टिमिताब्दे तु ध्रुवं चाकृतनिष्कृतेः ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३६ ॥

---

अरुण उवाच ।

कश्चिद्विप्रकुलोत्पन्नो देहावयवकार्श्ययुक् । सदाचारः सुशोभाढ्यो दयानियमतत्परः ॥ १ ॥
क्रयविक्रयकर्ता च किञ्चिद्व्यापारवान्भुवि । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
मातृपक्षमनास्तस्याः प्रीतिर्वै मातुलादिषु । असृग्वातगदार्ता सा बाल्ये स्याद्ग्रहणीगदः ॥ ३ ॥
काष्ठलोष्टाश्मशस्त्राद्यैर्घातः स्यात्करपादयोः । बहुपुत्राः प्रसूताश्च ह्यपुत्रस्तु तथाप्यसौ ॥ ४ ॥
एतस्य मृतपुत्रत्वं कर्मणा केन जायते । जातमात्रा मृताः केचित्केचिद्योगण्डमाश्रिताः ॥ ५ ॥
केचिद्दष्टाननाश्चैव मृतः पुत्रोत्रिमासकः । असृक्स्रावाद्भृशं पीडा जायते मासिमासि च ॥ ६ ॥
केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ७ ॥

श्रीसूर्य उवाच ।

पूर्वं क्षात्रसमुत्पन्नः किञ्चिद्भूमिपतिस्तथा । तावज्जन्मनि वैश्यस्तु परवित्तापहारकः ॥ ८ ॥
एको ग्रामेऽवसद्विप्रः शान्तो दान्तः क्षमी सदा । पुत्र्यः पञ्च तथा सप्त ह्यपुत्रो मित्रसंयुतः ॥९॥
कालेनासौ मृतो विप्रो हृतं तेन धनं महत् । क्रियाकर्म कृतं नैव सर्वं राज्ञा हृतश्च तत् ॥ १० ॥
एवं कृतापराधोऽसौ दूत्या सह स क्षत्रियः । किञ्चित्कालान्तरं च देशान्तरगतीच्छया ॥ ११ ॥
म्लेच्छैर्विनिहतो मार्गे गतोऽसौ यमशासनम् । केचित्केचिद्विपच्यंते नरके भृशदारुणे ॥ १२ ॥
दानधर्मादिना किंचिदिह जन्मनि मानद । विप्रवंशे समुत्पन्नो जातो वै चेह जन्मनि ॥ १३ ॥

इदं द्वितीयं वै जन्म विप्रत्वं यत्र तस्य वै । पूर्वकर्मविपाकेन कन्यापत्यं प्रजायते ॥ १४ ॥
ब्रह्मस्वहरणाच्चैव मृतपुत्रः प्रजायते । नानापत्यानि पच्यन्ते नानाकर्मानुगानि हि ॥ १५ ॥
पुराकृतानि कर्माणि भुज्यन्ते जन्मजन्मनि ॥ १६ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येन सौख्यं चिरम्भवेत् । कन्यापत्यप्रशमनं बहुपुत्रप्रदायकम् ॥ १७ ॥

श्रीसूर्य उवाच ।

सुशुभे भूप्रदेशे तु गोमयाद्युपलेपयेत् । तत्रोपर्याविकं स्तीर्यमथवाजिनकं शुभम् ॥ १८ ॥
छादयेच्छुक्लवस्त्रेण कुर्याद्धै द्रोणपर्वतम् । तस्योपरि न्यसेत्पात्रं ताम्रं दशकपालिकम् ॥ १९ ॥
स्थापयेत्काश्यपीं मूर्तिं सौवर्णीं शुभलक्षणाम् । मुक्तायज्ञोपवीताढ्यां निष्कसौवर्णनिर्मिताम् ॥२०॥
दधानां करयुग्मेन चाक्षमालां कमण्डलुम् । कश्यपाद्वामभागे च त्वदितिं विश्वमातरम् ॥ २१ ॥
सौवर्णीं स्थापयेत्सूत सुवर्णद्वयनिर्मिताम् । आसने च समास्थाय ततो द्रोणा दिशं दिशम् ॥२२॥
हारकेयूरमुकुटकुण्डलाभरणादिकम् । एवं तौ दम्पती सम्यगर्चयेत्पर्वतोपरि ॥ २३ ॥
कृत्वा प्रतिष्ठितप्राणौ पूजयेद्विविधैर्गुणैः । नानार्घफलपुष्पादि चार्पयेत्सुसमाहितः ॥ २४ ॥
अभ्यर्च्य दम्पती तौ तु मन्त्रमेतमुदीरयेत् ॥ २५ ॥

मंत्रः ।

" यन्मया पूर्वजनुषि विप्राणां च धनं हृतम् । दूतिकाकर्मनिरतो वाक्यदोषादि यत्कृतम् ॥
तत्सर्वं क्षम्यतां देव तव मूर्तिं ददाम्यहम् " ॥ २६ ॥

अदितिं च प्रणम्याथ कृताञ्जलिरिदं ब्रुवन् । अदिते विश्वमातस्त्वं शरण्या शरणार्थिनाम् ॥२७॥
प्रजादुःखौघसन्तप्तहृदयं मामवेश्वरि । सम्प्रणाशय दुःखं मे प्रजां देहि यशस्विनीम् ॥ २८ ॥
एवंकृतविसर्गस्तु ब्राह्मणान्भोजयेत्ततः । शालग्रामशिलां शुद्धां सोमकान्तमणिं तथा ॥ २९ ॥
चन्द्रसूर्योपरागे तु ब्राह्मणाय प्रदापयेत् । एवंकृतविधिः सूत कृष्णां गां दापयेत्ततः ॥ ३० ॥
सर्पिष्प्यात्मानमालोक्य भोजयेच्च समृद्धिभिः । ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ ३१ ॥
काष्ठलोष्टाश्मशस्त्राद्यैः करपादव्रणं वेदत् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३७ ॥

---

श्रीसूर्य उवाच ।

राजानं घातयेद्यस्तु पुरुषः प्राग्भवेण्डज । स राजयक्ष्मरोगेण युक्तः स्यादत्र जन्मनि ॥ १ ॥
तस्मिन्वयसि पक्षीन्द्र सोऽपि प्राणैर्वियुज्यते । महापापेतथरोगस्य न चोक्ता निष्कृतिर्मया ॥२॥
अपि ज्ञानकृतं पापं रिष्टरूपेण काश्यपे । नाशयत्यमरं सिद्धं पूर्णायुष्कमपि ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३८ ॥

---

श्रीसूर्य उवाच ।

परगर्भं तु यः कश्चिद्घातयेज्ज्ञानवर्जितः । जलोदरेण सततं रोगेणात्र प्रपीड्यते ॥ १ ॥
जलधेनुप्रदानेन विधिना गरुडाग्रज । ताम्ररूप्यसुवर्णस्य दानात्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७३९ ॥

---

श्रीसूर्य उवाच।

ब्राह्मणोऽभूत्कुरुक्षेत्रे कृषिकृद्वेदपारगः। स्वज्ञातीयस्य चान्यस्य वृत्तिलोपमकारयत् ॥ १ ॥
तत्सम्बद्धमभूद्युद्धं द्वयोरेको मृतस्तदा। वृत्तिलोपी द्विजः काले गतो हि यमशासनम् ॥ २ ॥
भुक्त्वा तत्पापजं सर्वं शतद्रुनिकटेऽधुना। सद्द्वि जातो द्विजश्चात्र वेदाभ्यासाच्च पुत्रक ॥ ३ ॥
कुष्ठक्षयान्वितश्चात्र सुखभावे खगाधिप। तत्पापनाशनं सर्वं प्रायश्चित्तं प्रवच्म्यहम् ॥ ४ ॥
वेदाभ्यासाच्च महतः सावित्रीजापतस्तथा। गङ्गायां वासतो वापि सर्वपापात्प्रमुच्यते ॥ ५ ॥
न कुष्ठवृद्धिरत्रास्ति तद्व्रतैः शमनं भवेत्। जीवेत्पष्टिमिताब्दान्तं रिष्टं चैव प्रशाम्यति ॥ ६ ॥
गतिस्तस्य महाभाग विद्याभ्यासाच्च या तथा। भविष्यति शुभा लोके परत्र च खगेश्वर ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४० ॥

श्रीसूर्य उवाच।

कुलद्वयानन्दकरी पूर्वजन्मनि वैश्यजा। बभूव भर्तृसुहृदामाज्ञापालनतत्परा ॥ १ ॥
अत्र जन्मनि सा विप्र काश्यां जाता हि सुव्रत। व्रतदानपरा चापि भर्तृतोषणसंयुता ॥ २ ॥
पञ्चपञ्चाशदब्दान्तं भवेद्यत्यत्र जन्मनि। स्वर्गकामा चितायां तु नात्र कार्या विचारणा ॥ ३ ॥
सा गमिष्यति वै स्वर्गं भुक्त्वा भोगांस्तु तत्र वै। भविष्यति महाराजकुले राजातिधार्मिकः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४१ ॥

श्रीसूर्य उवाच।

पीड्यते वातरोगेण दारुणेन खगाधिप। सोऽत्र जन्मनि यश्चायात्पूर्वे शूद्रगृहाश्रितः ॥ १ ॥
प्रायश्चित्तं परं वै स व्रतं चान्द्रायणं चरेत्। व्रतान्ते कपिलां दद्यात्सर्वपापापनुत्तये ॥ २ ॥
पापक्षये क्षयं याति रोगस्तत्पापजस्त्विह ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४२ ॥

श्रीसूर्य उवाच।

अस्त्यत्र सुमुखी सूत सदा भर्तृपरायणा। दानधर्मरता भव्या सुभगा पुत्रवर्जिता ॥ १ ॥
पूर्वमासीच्च सुतजा सगर्भा फललालसा। त्रोटितान्यफलं पक्वं भक्ष्यार्थं चौर्यकर्मणा ॥ २ ॥
तेन कर्मविपाकेन फलहीनात्र जन्मनि। भवन्ति खलु ये पुत्रा अर्वाक्पञ्चाष्टतोऽण्डज ॥ ३ ॥
प्राप्स्यन्ति चैव पञ्चत्वं तस्याश्चाकृतनिष्कृतेः। निष्कृतिं तां प्रवक्ष्यामि पूर्वपापप्रणाशिनीम् ॥ ४ ॥
शनिवारेऽण्डजश्रेष्ठ निमन्त्र्याश्वत्थकं सुत। तत्तले ब्राह्मणी सूर्यदिने पञ्चाशत्तु भोजयेत् ॥ ५ ॥
नानाफलैस्तथा पक्वैरपूपैरससंयुतैः। फलानि विकिरेत्तत्र कृत्वाश्वत्थप्रदक्षिणाम् ॥ ६ ॥
पूजयेच्च महाभाग जीवेत्तस्याश्च वै सुतः ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४३ ॥

श्रीसूर्य उवाच।

देशे हि यामुने ह्यासीत्पूर्वं वाहुजसंज्ञकः। गङ्गास्नानं कृतं तेन वाहुजानां सहायतः ॥ १ ॥
शकटेन कुटुम्बस्य पालनं ह्यकरोत्सदा। एकस्मिन्वै दिने गत्वा ददाह वनमद्भुतम् ॥ २ ॥
वल दैवस्य सम्प्राप्य जीवा दग्धा अनेकशः। वन्योः सहायतस्तेन कृतं कर्मातिदारुणम् ॥ ३ ॥
शुभाच्छुभफलं भुक्त्वा पापाच्च नरकांस्तथा। माघे तु जाह्नवीस्नानात्स जातः शूद्रवंशके ॥ ४ ॥

विपाशानिकटे देशे योजने सप्तसम्मिते। भव्यो महोद्यमी गौरः कृशाङ्गो लोचनेऽल्पदृक् ॥ ५ ॥
राजमान्यो बहुस्त्रीको देवतातिथिपूजकः। भ्रातृहीनः शठो धूर्तः पुत्रसन्ततिवर्जितः ॥ ६ ॥
पञ्चमे भवने राहुर्भौमयुक्तोऽल्पसन्ततिः। लक्षणैर्लक्षितश्चोभैरेवैहि गरुडाग्रज ॥ ७ ॥
बन्धोः साहाय्यतः पापात्पूर्वजन्मसमुद्भवात्। तस्माज्जातः पुत्रहीनो स पापोऽत्रैव जन्मनि ॥८॥

अरुण उवाच।

निष्कृतिः कथ्यतां देव सुखसौख्यविवर्धिनी। सर्वपापप्रशमनी लोकानां हितकारिणी ॥ ९ ॥

श्रीसूर्य उवाच।

निष्कृतिं तां प्रवक्ष्यामि जन्तुदग्धविनाशिनीम्। वनदेवी तत्र कार्या पलेनार्धपलेन वा ॥ १० ॥
हिरण्मयी शुभालेख्या पत्रे तच्चतुरस्रके। वनजीवास्तथा लेख्याः सर्वे तद्रूपसंज्ञकाः ॥ ११ ॥
प्रजापतिस्तथा कार्यो माषत्रयविनिर्मितः। राजतं पलमेकं तु गणाध्यक्षं शिवात्मकम् ॥ १२ ॥
सम्पूज्य गन्धपुष्पाद्यैः सा देवी कार्यसाधिनी। देया वेदविधिज्ञाय सर्वपापापनुत्तये ॥ १३ ॥
प्रजापतिस्तथा देयः सर्वकल्मषनाशनः। शृणुयाद्भारतं चापि पारायणसुभाषितम् ॥ १४ ॥
अष्टाक्षरं तथा मन्त्रं जपेच्च विधिपूर्वकम्। दशायुतं तदर्धं वा तदर्धं विनतासुत ॥ १५ ॥
होमयेत्तद्दशांशेन तद्दशांशेन भोजनम्। तावन्मितं सूर्यमन्त्रं जपेत्प्रणवपूर्वकम् ॥ १६ ॥
विप्रेभ्यो दक्षिणां दद्यात्तस्मात्पापात्प्रमुच्यते। य एवं कुरुते सूत पूर्वपापप्रणाशनम् ॥ १७ ॥
तस्य पुत्रविवृद्धिः स्यादिह जन्मनि निश्चितम्। अकृते तु यथाशक्ति रिष्टं षष्टिमितेऽब्दके॥ १८ ॥
प्रायश्चित्ते कृते सूत जीवनं चाब्दसप्ततिम्। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥१९॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरसप्तशताधिकसहस्रतम ॥ १७४४ ॥

श्रीसूर्य उवाच।

परान्नं या हरेन्नारी पूर्वजन्मनि सुव्रत। सात्र रोगेण जीर्णेन दुःखिता जायते ध्रुवम् ॥ १ ॥
कुर्यान्नानाविधं चान्नं रसैः सर्वैः समन्वितम्। विप्रेभ्यो भोजनं दद्याच्छक्त्या दद्याच्च दक्षिणाम्॥२
होमयेच्च तथा चात्र गायत्र्या त्र्यम्बकेण तु। मुच्यते जीर्णरोगाच्च पूर्वपापाच्च पुत्रक ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चचत्वारिंशदुत्तरसप्तशताधिकसहस्रतम. ॥ १७४५ ॥

श्रीसूर्य उवाच।

देवमूर्तिं च यः कश्चिद्देवागारस्थितां सुत। भग्नां कुर्यान्नरो मोहात्परेण स्थापितां पुरा ॥ १ ॥
अप्रतिष्ठो भवेदत्र जन्मन्यथ खगाधिप। वर्षत्रयं तदाशून्यपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्चत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४६ ॥

श्रीसूर्य उवाच।

यश्चाचरेद्राजवधं मोहात्पूर्वभवे नरः। स राजयक्ष्मी विज्ञेयो घोरपापसमुद्भवः ॥ १ ॥
प्रायश्चित्तं महाभाग शृणु चात्र प्रयत्नतः। गोभूहिरण्यमिष्टान्नतिलवस्त्रान्नदानतः ॥ २ ॥
घृतधेनुप्रदानेन क्षयरोगं न पश्यति। दानं यथानुमानेन सर्वस्वार्धतदर्धकम् ॥ ३ ॥
देयं द्विजवधादौ हि विचार्यात्र प्रयत्नतः। तत्क्षणे काश्यपे चात्र क्षयरोगः प्रशाम्यति ॥ ४ ॥
रिष्टेनैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तचत्वारिंशदुत्तरसप्तशताधिकसहस्रतम ॥ १७४७ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचित्परगर्भं खगाधिप। जलोदरेण रोगेण पीड्यते चात्र जन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगस्थिते। तथा तज्जलपानेन तस्मात्पापाद्विमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४८ ॥

श्रीसूर्य उवाच।

या नारी घातयेत्काचित्परगर्भं खगाधिप। जलोदरेण रोगेण पीड्यते बहुजन्मनि ॥ १ ॥
गङ्गास्नानेन सततं विधिनार्के मृगस्थिते। तथा तज्जलपानेन तस्मात्पापाद्विमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपंचाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७४९ ॥

श्रीसूर्य उवाच।

यः कश्चिद्वाग्विरोधी च पूर्वजन्मनि वादिनः। सोऽत्र जन्मनि मूकत्वं भजत्येव न संशयः ॥ १ ॥
मोहादिदं चरेत्सूत देयं दानं द्विजातये। वेदानां पुस्तकं रम्यं पूजयित्वा विधानतः ॥ २ ॥
संछाद्य वस्त्रैः शुद्धैः क्षौमजैर्गरुडाग्रज। प्राग्जतत्पापशमनं सर्वं प्रोक्तं परन्तप ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५० ॥

श्रीसूर्य उवाच।

अत्र जन्मन्यसौ वन्ध्या प्राग्भवेऽभूत्सुतान्विता। अयोध्यायान्तु सुमुखी धनभ्रातृसमन्विता ॥ १ ॥
पूर्वपापप्रभावेण सपत्न्या गर्भनाशनात्। जातेयं पादजात्रैव दुःखार्ता सुतवर्जिता ॥ २ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वं पापप्रणोदनम्। काश्यां गत्वा च विधिना शिवमाराध्य यत्नतः ॥ ३ ॥
व्रतैर्दानैर्महापुण्यैर्नानाविभवविस्तरैः। शिवरात्रौ ततः पश्चाद्दीपमालादिनेऽण्डज ॥ ४ ॥
तत्र रात्रौ महानद्यां मध्ये स्नानं तु कारयेत्। मन्त्रैर्वरुणसूक्तैश्च नौकायां वा खगाधिप ॥ ५ ॥
य एवं कुरुते सम्यक्तस्याः स्यात्सन्ततिर्ध्रुवम् ॥ ६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५१ ॥

श्रीसूर्य उवाच।

परनिन्दान्तु यः कुर्यात्प्राग्भवे विनतासुत। दद्यात्स कपिलां धेनुं सर्वोपस्करसंयुताम् ॥ १ ॥
ब्राह्मणाय दरिद्राय तस्माद्दोषात्प्रमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५२ ॥

श्रीसूर्य उवाच।

या काचित्प्राग्भवे नारी कुर्याद्राजवधं सुत। सात्र जन्मनि तत्काले क्षयरोगनिपीडिता ॥ १ ॥
यक्ष्मणात्र क्षयं यान्ति धातवः सर्वदेहिनाम्। धातुक्षये क्षयं याति तच्छरीरमशाश्वतम् ॥ २ ॥
दृढकर्मकृतं पापं तस्मान्नोक्तं खगाधिप। पापनाशकरं किञ्चित्प्रायश्चित्तं हि काश्यपे ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५३ ॥

श्रीसूर्य उवाच।

या वाग्विरोधिनी भर्तुः पूर्वभावे खगाधिप। मूकत्वं जायते तस्याश्चेह जन्मनि निश्चयात् ॥ १ ॥

तत्पापनाशनं दानं दद्याद्वेदस्य पुस्तकम् । ब्राह्मणे वेदविदुषे पूर्वपापात्प्रमुच्यते ॥ २ ॥
होमयेच्च तिलान्भक्त्या भोजयेद्ब्राह्मणांस्तथा ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपञ्चाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५४ ॥

श्रीसूर्य उवाच ।

या काचिद्भञ्जयेन्नारी पूर्वभावे खगाधिप । प्रतिमां देवतागारे स्थापितामपरेण च ॥ १ ॥
अप्रतिष्ठान्विता सात्र जायते वै खगाधिप । वर्षत्रयं ब्रह्मवृक्षपूजनात्पापनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपंचपंचाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५५ ॥

श्रीसूर्य उवाच ।

कश्चिद्द्विजो महाभाग ह्यासीद्वङ्गे हि धार्मिकः । गयायां द्वादशे वर्षे कृतं श्राद्धं विधानतः ॥ १ ॥
विधिना च प्रदत्तानि काम्यश्राद्धानि मानद । ततो भाविबलात्सूत ब्राह्मणेन तपस्विना ॥ २ ॥
स्थापितं तद्गृहे द्रव्यं लोभाद्दत्तं न तद्धनम् । सर्वैर्मिलित्वा तद्भुक्तं स्त्रीपुत्रभ्रातृभिः सह ॥ ३ ॥
ततो बहुतिथे काले गतो हि यमशासनम् । शुभात्स्वर्गफलं भुक्त्वा पापाच्च नरकं भृशम् ॥ ४ ॥
पूर्वपुण्यप्रभावेण स जातोऽत्रापि वै द्विजः । मथुरामण्डले देशे पुण्ये रम्यस्थले शुभे ॥ ५ ॥
विशालाक्षो धनी मानी सुरूपो मितदो घृणी । बहुदेशाधिकाराढ्यः पुण्यात्स्वर्गफलं त्विदम् ॥ ६ ॥
लोभी क्रूरो महाक्षुद्रः सदा चिन्तासमन्वितः । सन्तानसुखहीनस्तु परुषः स्त्रीसुखोज्झितः ॥ ७ ॥
बन्धुहीनो व्ययी क्षीणः सर्वं तत्पापतः फलम् । वक्ष्यामि निष्कृतिं तस्य पवित्रां पापशोधिनीम् ॥ ८ ॥
कुबेरप्रतिमां रौक्मीं पञ्चस्वर्णमितां शुभाम् । तदर्धमितिकां वापि निजवित्तानुसारतः ॥ ९ ॥
सम्पूज्य गन्धपुष्पाद्यैः सा देया ब्राह्मणाय च । लक्ष्मीनारायणं दद्यात्सुवर्णपलसम्मितम् ॥ १० ॥
पश्चाल्लेख्यं पवित्रं वा पुत्रसन्ततिवर्धनम् । य एवं कुरुते सूत तस्य रिष्टं न जायते ॥ ११ ॥
प्रायश्चित्ते कृते त्वत्र चायुः सप्ततिवत्सरम् ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरसप्तशताधिकसहस्रतमः ॥ १७५६ ॥

अरुण उवाच ।

भूमिदेवकुलोत्पन्नो वाताधिकशरीरवान् । क्षामाङ्गः शितिवर्णश्च स्वल्पवृत्त्या च जीवति ॥ १ ॥
देवब्राह्मणभक्तश्च किञ्चिद्वादपरायणः । करे पादे कुशस्त्रेण दंष्ट्राशृङ्गविघातः ॥ २ ॥
व्रणो वै जायते दीर्घो नेत्रतोदो शिरःश्रमता । परोक्षमपवादं च ब्रुवते तस्य वै सदा ॥ ३ ॥
प्रिया तस्य शुभाचारा पतिभक्तिपरायणा । अनृतं वक्ति वै किञ्चित्किञ्चित्क्रोधस्य कारिणी ॥ ४ ॥
अपत्यानि म्रियन्ते च एकं द्वे त्रीणि तस्य वै । वर्षत्रयमिता बाला म्रियन्ते माससम्मिताः ॥ ५ ॥
केन कर्मविपाकेन मृतापत्यत्वमेव हि । एकोदरे स्थितो गर्भो न प्रसूतिर्न पातनम् ॥ ६ ॥
पृथगेवं कुभ्रातॄणां मृतापत्यत्वमेव च । गते बहुतरे काले कस्येदं कर्मणः फलम् ॥ ७ ॥

श्रीसूर्य उवाच ।

अतः पूर्वं वैनतेय तृतीयेऽत्रैव जन्मनि । क्षात्रे कुले समुत्पन्नः कश्चिद्भूमिपतिस्तथा ॥ ८ ॥
दानवृत्तिर्दयायुक्तः प्रियाप्रीतिः परस्परम् । तस्याप्यपरमातुस्तु पुत्रः परमसुन्दरः ॥ ९ ॥
एको वै पादचारस्तु तृतीयश्च स्तनन्धयः । गर्भयुक्तश्चतुर्थस्तु पिता मृत्युवशं गतः ॥ १० ॥
तस्यौर्ध्वदेहिकं कर्म कृतं पुत्रैः स्वशक्तितः । मासैके तु व्यतिक्रान्ते पुत्रेणैव दुरात्मना ॥ ११ ॥

निहता भ्रातरः सर्वे भाविनोऽर्थस्य वै बलात्। खिन्नया पुत्रदुःखेन मात्रा वै ताडितं त्वुरः॥१२॥
अवघाताच्छिलाभूता गर्भयुक्ता दिवं गता। अचिरादेव कालेन ज्येष्ठश्चोरेण घातितः॥ १३॥
इदं द्वितीयं वै जन्म मृतापत्यं प्रजायते। पुराकृतानि कर्माणि भुज्यन्ते चेह मानवैः॥ १४॥

अरुण उवाच।

प्रायश्चित्तं वद स्वामिन्येन पापक्षयो भवेत्। गर्भस्थानां मृतानाञ्च लघूनां बृहतां तथा॥ १५॥
तस्य पापस्य शुद्ध्यर्थं निष्कृतिं वद मे प्रभो॥ १६॥

श्रीसूर्य उवाच।

सौम्यायने तु सम्प्राप्ते सानुकूल्यदेऽहनि। सपत्नीकः शुचिः स्नातः पञ्चगव्येन चाञ्जसा॥१७॥
उपोषणं दिवारात्रौ प्रातश्चानुदिते रवौ। सुरमेवं सगर्भायाः गोमयेनोपलेपयेत्॥ १८॥
सुशुभे भूप्रदेशे तु कुंकुमाद्युपचर्चिते। कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम्॥ १९॥
तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत्। सौवर्णे राजते पद्मे सायुधं च चतुर्भुजम्॥ २०॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः। जनन्या सह संभूतं प्रद्युम्नाद्यांस्तथार्चयेत्॥ २१॥
चारुदेहं सुवेषं च चारुगुप्तं यशोऽन्वितम्। इभवाहुं चारुवाहुं सुचारुं पूजयेत्क्रमात्॥ २२॥
पूजनं विष्णुसूक्तेन तथा श्रीरसकोविदैः। पुष्पस्रग्धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः॥ २३॥
तद्विप्रास्तोथ तद्विष्णोरतो देवाभिपूजयेत्। शतमष्टोत्तरं हुत्वा चरुणा पायसेन वै॥ २४॥
होमान्ते विप्रभोज्यांते मन्त्रमेतमुदीरयेत्॥ २५॥

मन्त्रः।

"यन्मया पापकृत्कर्म कृतं वै पूर्वजन्मनि। सपत्न्याश्चैव बालस्तु निहतः क्रूरचेष्टया॥ २६॥
स्वकुल्यहननं चापि भूमिद्रव्याभिलिप्सया। लघवोऽलघवश्चापि हता वै पूर्वजन्मनि॥ २७॥
ततोऽयं वै मया प्राप्तं दुःखं नानाविधं त्विदम्। तत्तदेनोविनाशाय दानं सम्प्रददे त्विदम्" ॥२८॥
स्वस्त्यस्तु चेति तत्रोक्त्वा कोऽदादिति विसर्जयेत्। सांपश्यात्मानमालोक्य भुञ्जीत स्वेष्टबन्धुभिः॥२९
ऐहिकं लक्ष्म विज्ञेयं पूर्वकर्माभिशंसनम्। काष्ठलोष्टादिशस्त्राद्यैर्घातः स्याद्बालक्रीडनात्॥ ३०॥
*जलादग्न्यादिना बाधा व्रणो वा तस्य जायते। नार्यङ्गे विकृतव्याधी मुखे तिलकलादिकम्॥ ३१॥*
पितृष्वसृमातुलान्योर्नैत्रतोदो विरश्मिता। स्वसुर्मातृष्वसुश्चापि बाल्ये वैधव्यताऽथवा॥ ३२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरसप्तशताधिकसहस्रतमः॥ १७९७॥

---

श्रीसूर्य उवाच।

या नारी प्राग्भवे मोहात्परनिन्दां च कारयेत्। वागिन्द्रियवियुक्ता सा चेह जन्मनि जायते॥१॥
धेनुं दद्यान्महाभाग विधियुक्तां सकम्बलाम्। तस्माद्रोगाद्विमुच्येत नात्र कार्या विचारणा॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरसप्तशताधिकसहस्रतमः॥ १७९८॥

श्रीसूर्य उवाच।

अभक्ष्यं भक्षयेद्यस्तु पूर्वजन्मनि मानवः। गण्डमालाख्यरोगेण संयुक्तो जायते त्विह॥ १॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु। गृहीत्वा कम्बलं शुद्धं विधिवद्देवदिने॥ २॥
कुटुम्बिने दरिद्राय दद्याद्दोषापनुत्तये। गण्डमालाहरस्त्वेतद्दानमुक्तं मया त्विह॥ ३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरसप्तशताधिकसहस्रतमः॥ १७९९॥

---

श्रीसूर्य उवाच ।

कुलघ्नीयं महादुष्टा पूर्वमासीत्खगाधिप । अत्र पूर्वकृतात्पापान्मानुषी सङ्करा स्मृता ॥ १ ॥
धनपुत्रविहीना सा चेह जन्मनि जायते । निष्कृतिं ता प्रवक्ष्यामि प्रयागे मरणं सुत ॥ २ ॥
तस्यास्तत्पापं क्षयं याति पूर्वजन्मकृतं दृढम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षष्ट्युत्तरसप्तशताधिकसहस्रतम ॥ १७६० ॥

श्रीसूर्य उवाच ।

अभक्ष्यं भक्षयेत्पूर्वं या नारी द्विजवल्लभा । गण्डमालाक्षयरोगेण संयुक्तो बाहुजोऽधुना ॥ १ ॥
पुण्यदेशे महाभाग संक्रान्त्यादिषु पर्वसु । पूर्वपापहरं पुण्यं दद्यात्तत्र च कम्बलम् ॥ २ ॥
नवं शुद्धं कुलीनाय तस्मात्पापात्प्रमुच्यते । द्विजानामिच्छया दद्याद्भोजनं पापनाशनम् ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरसप्तशताधिकसहस्रतम ॥ १७६१ ॥

श्रीसूर्य उवाच ।

जघान बालकं कश्चिद्ब्राह्मणस्य खगाधिप । वङ्गदेशे वसन्पूर्वं चात्र जन्मनि गौडजः ॥ १ ॥
धीरः सर्वकलाभिज्ञो नानाशास्त्रविशारदः । धनधान्ययुतश्चात्र बहुस्त्रीसुखभोगभाक् ॥ २ ॥
विद्यादानात्कृतात्पूर्वाच्छृणु पापफलं तथा । क्षयरोगाकुलः क्षीणः पुत्रसन्ततिवर्जितः ॥ ३ ॥
बालघातनजात्पापाद्ब्राह्मणस्य विहङ्गम । महाक्रोधपरो लोभी नानादुःखैस्तथाकुलः ॥ ४ ॥
वक्ष्यामि निष्कृतिं तस्य ब्रह्मघातविमोचनीम् । प्रयागे वा कुरुक्षेत्रे पुष्करे च महास्थले ॥ ५ ॥
नैमिषारण्यके क्षेत्रे पूजयेद्विधिवच्छिवान् । गन्धपुष्पैस्तथा धूपैर्लक्षसंख्यान्विधानतः ॥ ६ ॥
ब्रह्मचर्यरतो नित्यं तदन्ते होमयेत्तथा । षडस्रे चतुरस्रे वा कुण्डे चाज्यतिलान्शुभान् ॥ ७ ॥
शक्त्या च भोजयेद्विप्रान्शैवान्कासारलड्डुकान् । नानाभक्ष्यफलैश्चैव वस्त्रैर्माल्यैस्तथार्चयेत् ॥८॥
विविधा दक्षिणा दद्याद्द्रुमीतिकरीं तथा । यश्चानेन विधानेन प्रायश्चित्तं समाचरेत् ॥ ९ ॥
स बालघातजात्पापान्मुच्यतेऽत्र ममाज्ञया । चतुर्दश्यामथाष्टम्या नक्तं कुर्याद्विधानतः ॥ १० ॥
मम ध्यानपरः सूत नित्यं भूत्वा ममाग्रतः । पूजयेदर्घपाद्याद्यैर्नैवेद्यैर्विविधैस्तथा ॥ ११ ॥
तन्तु तत्सर्वपापेभ्यो विमोक्ष्यामि खगेश्वर । आयुस्तस्य शतं चाब्दं पञ्चहीनं च पुत्रक ॥ १२॥
प्रायश्चित्त कृतं येन पञ्चम्या चन्द्रवासरे । प्रायश्चित्तेऽकृते सूत चत्वारिंशन्मिताब्दके ॥ १३ ॥
रिष्टं स्यात्क्षयरोगेण बालघाताच्च निश्चितम् । ब्रह्मघातान्महापापात्पूर्वजन्मकृताद्दृढात् ॥ १४ ॥
न मुच्यते महादानैः सप्तजन्मकृतैरपि । बाध्यते क्षयरोगेण पूर्वजन्मनि निश्चयात् ॥ १५ ॥
ब्रह्महा क्षयरोगी स्यादिति वेदविदो विदुः । नहीदृशं महापुण्यं क्षयरोगविनाशनम् ॥ १६ ॥
पुत्रवृद्धिकरस्त्वात्र यथा प्रोक्त शिवार्चनम् ॥ १७ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तरसप्तशताधिकसहस्रतम ॥ १७६२ ॥

श्रीसूर्य उवाच ।

विनापराधं या नारी परपक्षं च कारयेत् । पक्षाघातेन रोगेण पीडितात्रैव जायते ॥ १ ॥
तया निष्कमितं स्वर्णं देयं पापविशुद्धये । मुच्यतेऽत्र महारोगात्पक्षाघाताच्च संशयः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तरसप्तशताधिकसहस्रतम ॥ १७६३ ॥

श्रीसूर्य उवाच।

यो द्विजः प्राग्भवे मोहात्सुरां वै त्रिविधां पिबेत्। मूत्रकृच्छ्रेण रोगेण पीडितः सोऽत्र जायते ॥ १॥
गृहवित्तानुसारेण पलेनार्धपलेन वा। कुर्याद्धिरण्मयं पद्मं चाष्टपत्रसमन्वितम् ॥ २ ॥
आवाह्य तत्र ब्रह्माणं प्रभुं सर्वोपचारकैः। पूजयित्वा तु गन्धाद्यैर्दद्याद्विप्राय यत्नतः ॥ ३ ॥
दानेनानेन सततं मूत्रकृच्छ्रं न पश्यति ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१४ ॥

श्रीसूर्य उवाच।

वैकुण्ठादागतस्तत्र मथुरायां खगाधिप। जातोऽयं पुण्डरीकाक्षः सर्वभूताभयप्रदः ॥ १ ॥
घोरे कलियुगे प्राप्ते पापाक्रान्ते महीतले। भारावतारणार्थाय क्षत्रियाणां क्षयाय च ॥ २ ॥
कृत्वा तु दुष्करं कर्म पुनर्यास्यति वै दिवि ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१५ ॥

श्रीसूर्य उवाच।

स्वर्णापहारी सततं पुरुषः प्राग्भवेऽण्डज। कुनखी जायते चात्र महापापेन लाञ्छितः ॥ १ ॥
सुवर्णशतकं दद्यात्स तद्दोषविनाशनम्। चान्द्रायणव्रतं कुर्यात्तत्तद्दोषोपशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१६ ॥

श्रीसूर्य उवाच।

राजघातकरी प्रोक्ता या पूर्वं घातयेन्नृपम्। राजयक्ष्मान्विता सात्र तस्मिन्वयसि भामिनी ॥१॥
प्रायश्चित्तं परं तस्याः शृणु चात्र खगेश्वर। यत्कृते विधिना सर्वं पूर्वजन्माघनाशनम् ॥ २ ॥
स्वर्णगोभूमिमिष्टान्नं घृतधेनुतिलानि च। देयानि श्रद्धया सूत क्षयरोगापनुत्तये ॥ ३ ॥
रिष्टं त्रिंशन्मितेऽब्दे तु प्रायश्चित्तेऽकृते त्विह ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१७ ॥

श्रीसूर्य उवाच।

विनापराधं यः कश्चिद्वैश्यं हन्यात्खगेश्वर। प्राग्जन्मन्यथ युक्तः स्याद्रक्तार्बुदरुजा भृशम् ॥१॥
भविष्यति न सन्देहस्तस्य मृत्युः खगाधिप। तस्य दानशतैर्वापि दत्तैरत्रैव जन्मनि ॥ २ ॥
त्रिंशवर्षे महारिष्टं रक्ताधिक्यान्महाबलात् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१८ ॥

श्रीसूर्य उवाच।

मेरोः समागता येयं शक्तिर्माथुरमण्डले। सर्वभूतोपकाराय दुष्टनाशकराय च ॥ १ ॥
प्राप्ते कलियुगेऽत्रैव सर्वपापविवर्जितम्। कृत्वा चाद्भुतकर्माणि पुनस्तत्रैव यास्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७१९ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेद्वेश्यं पूर्वजन्मनि मानवः । सोऽत्र जन्मनि विज्ञेयो रक्तार्बुदसमन्वितः ॥ १ ॥
प्राजापत्यचतुष्केण व्रतेन नियमेन च । सप्तधान्यप्रदानेन पूर्वजन्माघनाशनम् ॥ २ ॥
पापक्षये महाभाग क्षयः पातकजो भवेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तयुत्तरसप्तशताधिकसहस्रतम ॥ १७७० ॥

श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिवेत् । सात्र जन्मनि मूत्रस्य कृच्छ्रेणातिप्रपीडयते ॥ १ ॥
प्रायश्चित्तं परं तस्या घोरपापहरं सुत । सुवर्णपत्रदानञ्च सपद्म ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय विधिज्ञाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तरसप्तशताधिकसहस्रतम ॥ १७७१ ॥

---

अरुण उवाच ।

कश्चिद्द्विमोत्तमो जातः किञ्चिद्वित्तसमन्वितः । कासश्वासादिना बाधा ह्युदरार्तिः प्रजायते ॥ १ ॥
क्रयविक्रयकर्ता च कृषिवाणिज्यसंयुतः । प्रिया प्रीतिपरा तस्या व्रतानामनुकाङ्क्षिणी ॥ २ ॥
किञ्चित्क्रोधान्विता सा वै कुवाक्यानां च भाषिणी । उदरे वातजा रोगाः शिरोर्तिर्नेत्रतोदकृत् ॥३॥
अपत्यानि म्रियन्ते च एकोऽपि द्वित्रयोऽपि च । रजोदोषात्प्रपीडयेव वेदना विविधाःकृताः ॥४॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ५ ॥

श्रीसूर्य उवाच ।

भर्तृकर्मकृतं नैव स्त्रीकृतं नात्र संशयः । पूर्वजन्मनि शूद्री सा द्विजभक्तिपरायणा ॥ ६ ॥
कृतानि विविधान्येव दानानि भुवि मानद । स्वगृहे धान्यराशिं सा प्रसारितवती खग ॥ ७ ॥
सवत्सा गौर्ब्राह्मणस्य धान्यराशिमभक्षयत् । तया गृहीत्वा लकुटिं भृशं कुक्षौ प्रताडिता ॥ ८ ॥
सगर्भा सुरभिर्वत्स गर्भः कुक्ष्युपघातनात् । मृतोऽसौ तेन पापेन ब्राह्मणी दूषिता भृशम् ॥ ९ ॥
शिशुदुःखेन सुरभिर्भृशमाक्रन्दती मृता । तेन कर्मविपाकेन नरकं प्राप्य दारुणम् ॥ १० ॥
पश्चान्मानुष्यमापन्ना व्रतदानप्रभावतः । इदं चतुर्थकं जन्म मृतापत्यं खगेश्वर ॥ ११ ॥
सप्तजन्मसु जायेत गोस्त्रीब्रह्मप्रघातकः । नानाकर्मवशादेव नानापत्यार्थदुःखभुक् ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं वद स्वामिन्येनापत्यं प्रजीवति । अनुग्राह्योस्म्यहं देव लोकानां हितकाम्यया ॥ १३ ॥

श्रीसूर्य उवाच ।

मासे नभसि सम्प्राप्ते सानुकूल्यदिदेऽर्हनि । सपत्नीकः शुचिः स्नातस्त्रौषधैः स्नानमन्त्रतः ॥१४॥
उपोषणं दिवारात्रौ त्रयोदश्यामतन्द्रितः । पूर्णमासीदिनं प्राप्य तस्यां चानुदिते रवौ ॥ १५ ॥
सुरभ्यास्तु सगर्भाया गोमयेनोपलेपयेत् । तत्रोपरि गवां स्थानं चोदङ्मुखपराश्रितम् ॥ १६ ॥
अर्हणाद्युपचारैश्च कुङ्कुमाद्युपचर्चयेत् । कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् ॥ १७ ॥
तत्रोपरि न्यसेद्देवं माधवं कलशेऽर्चयेत् । सौवर्णे राजते पद्मे माधवं सुचतुर्भुजम् ॥ १८ ॥
उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः । ब्रह्मसूक्तेन सूक्तेन श्रियः सूक्तेन पूजनम् ॥ १९ ॥
पुष्पैश्च धूपगन्धाद्यैरर्चयेद्विविधैर्गुणैः । रुद्रकादशनीमिश्च जपेद्रुद्रविधानतः ॥ २० ॥

पूजालक्षमितैः पुष्पैरर्चयेद्गन्धवारिभिः । शतमष्टोत्तरं हुत्वा चरुणा पायसेन वा ॥ २१ ॥
रुद्रस्यायुतहोमश्च समिदाज्यसमाहुतिः । एवं पृथग्विधानेन विष्णुरुद्रादिपूजनम् ॥ २२ ॥
होमान्ते विप्रभोज्यान्ते मन्त्रमेतमुदीरयेत् ॥ २३ ॥

मन्त्रः ।

"यन्मया कर्मवशतः प्राग्जन्मनि दुरात्मना । सगर्भा गौर्हतिता च लकुट्या कुक्षिताडनात् ॥ २४ ॥
तेन वै कर्मणा प्राप्तं मृतगर्भादिकं भृशम् । मृतसन्ततिदुःखानि प्राप्यन्ते च तदेनसः ॥ २५ ॥
तत्तदेनोविनाशार्थं दानं सम्प्रददे त्विदम्" ॥ २६ ॥
स्वस्त्यस्तु चोति तत्रोक्त्वा कोऽदादिति विसर्जयेत् । सर्पिष्यात्मानमालोक्य ह्यन्यान्वै तोषयेद्द्विजान् ॥ २७ ॥
भूमिद्रविणवासांसि दानं दत्त्वा विधानतः । व्रतान्ते सुरभिं दद्याद्धेमद्रव्यादि शक्तितः ॥ २८ ॥
अहःशेषं ततः सर्वं भोजयेदिष्टबन्धुभिः । ऐहिकं लक्षणं तस्य शरीरेऽप्युपजायते ॥ २९ ॥
काष्ठलोष्टादिशस्त्राद्यैर्घातः स्यादुपलेखनात् । शृङ्गाणां चोपघातश्च जायन्ते व्रणजातयः ॥ ३० ॥
जलाकुलत्वं स्पर्शोऽग्नेस्तादृशं तत्र जायते । नार्यङ्गे विकृतिर्व्याधी मुखे तिलव्रणादिकम् ॥ ३१ ॥
पितृष्वसुर्मातुलान्या विधवादिः स्नुषादिषु ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७२ ॥

---

## श्रीसूर्य उवाच ।

या काचिद्ब्राह्मणी पूर्वभवे मोहात्सुरां पिबेत् । प्रदरेणातिदुःखेन सात्र जन्मनि पीड्यते ॥ १ ॥
प्रायश्चित्तं परं तस्याः प्रदरस्य विनाशनम् । दद्याद्रुक्ममयं पद्मं सपत्रं ब्रह्मदैवतम् ॥ २ ॥
ब्राह्मणाय सुशीलाय पूजिताय निवेदयेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७३ ॥

---

## श्रीसूर्य उवाच ।

पूर्वजन्मनि यो विप्रो त्रिविधां वै सुरां पिबेत् । मूत्रावरोधरोगेण सोऽत्र मृत्युवशं व्रजेत् ॥ १ ॥
चिह्नेन श्यावदन्तेन जानीयात्तस्य लक्षणम् । सप्तजन्मसु रोगेण मूत्रकृच्छ्रेण नश्यति ॥ २ ॥
दुष्टाप्राक्पापजात्सूत प्रायश्चित्तं न विद्यते । पापक्षयावशेषे च कृच्छ्रं सांतपनं चरेत् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः चतुःसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७४ ॥

## श्रीसूर्य उवाच ।

अकामतश्च या नारी वैश्यघातनतत्परा । बभूव प्राक्च पक्षीन्द्र सात्र जन्मनि निश्चयात् ॥ १ ॥
रक्तार्बुदसमाक्रान्ता दुष्टपापप्रयोजिता । महारिष्टेन सा याति यमलोकं खगेश्वर ॥ २ ॥
चत्वारिंशन्मिते वर्षे सत्यंसत्यं वदाम्यहम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७५ ॥

---

## श्रीसूर्य उवाच ।

काचित्पूर्वभवे पुण्या मुखजात्र च बाहुजा । देशे सारस्वते प्राप्ता सर्वधर्मान्विता सती ॥ १ ॥
क्षयरोगयुता चात्र युवभावे खगाधिप । प्राक्पापाद्दुस्तरात्सूत कण्ठपादादिसम्भवात् ॥ २ ॥
निष्क्रांतिं कदलीं दद्यात्सुवर्णत्रयसंयुताम् । भोजयेद्ब्राह्मणान्पश्चाच्छिवपूजनतत्परान् ॥

या स्त्वेवं कुरुते भक्त्या-कदलीदानमुत्तमम् । नश्येच्च क्षयरुक्तस्यास्तथा पापप्रणाशनम् ॥ ४ ॥
आयुर्वर्पाणि संभुंक्ते ह्यत्र सप्ततिकानि वै ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७६ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे सूत परस्वर्णापहारिणी । सात्र जन्मनि रोगेण कुनखत्वेन बाध्यते ॥ १ ॥
दद्यात्सुवर्णशतकं विप्राय विनतात्मज । सुवर्णस्तेयपापेन मुच्यतेऽत्रैव जन्मनि ॥ २ ॥
चान्द्रायणत्रयं चैव कुर्यान्मासे तु कार्तिके ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७७ ॥

श्रीसूर्य उवाच ।

वैश्यहन्त्री च या पूर्वभवे नारी पतिव्रता । रक्तार्बुदेन रोगेण बाध्यते चात्र जन्मनि ॥ १ ॥
व्रतं चरेन्महाभाग प्राजापत्यचतुष्टयम् । सप्तधान्यस्य दानेन रक्तार्बुदविनाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७८ ॥

श्रीसूर्य उवाच ।

रौप्यहारी च पुरुषश्चित्रकुष्ठी प्रजायते । स तत्पापविशुद्ध्यर्थं ब्राह्मणाय प्रदापयेत् ॥ १ ॥
स्वर्णं पलत्रयं शुद्धं कुरुक्षेत्रे खगेश्वर । प्राजापत्यव्रतं सूत चरेत्पापप्रणाशनम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७७९ ॥

श्रीसूर्य उवाच ।

कश्चिन्म्लेच्छकुलोत्पन्नो बहुद्रव्यान्वितः सुधीः । स्वधर्मनिरतश्चापि दयालुः सत्यसंयुतः ॥ १ ॥
त्यागी शूरो महोत्साही देशे केरलके सुत । स्वामिधर्मपरो नित्यं सपत्नीकः सपुत्रकः ॥ २ ॥
प्रजाः पालयतस्तस्य शूरस्यापि महात्मनः । दुष्टाः प्रजाः क्रोधयुक्ता बभूवुर्विमुखास्तदा ॥ ३ ॥
तस्मिन्काले ह्यभूद्युद्धं घोरं तस्मिन्पुरे सुत । संग्रामभूमौ स मृतो यवनश्च सपुत्रकः ॥ ४ ॥
तस्य पत्नी महाभाग साध्वी पतिपरायणा । तस्मिन्मृते मृता सा तु भर्तुः प्राणावलम्बिनी ॥५॥
घातयित्वा तु शस्त्रेण स्वशरीरं पतिव्रता । मृते पत्यौ न जीवामीत्युक्त्वा मृतवती तदा ॥ ६ ॥
तद्गुणा सान्तकालेऽपि दिवं प्राप्ता सभर्तृका । भुक्त्वा तत्र महाभोगानपूर्वान्स्वामिधर्मतः ॥ ७ ॥
नानाप्रजाघातनजात्पापात्पूर्वसमुद्भवात् । क्षीणात्पुण्यात्तथा सूत म्लेच्छदेशे समुद्भवौ ॥ ८ ॥
सिन्धोः पश्चिमभागे तु शतयोजनसम्मिते । गौरः सुरूपो दीर्घश्च बहुविद्याविशारदः ॥ ९ ॥
नानाभोगसुसंयुक्तो गजयूथैः समावृतः । पत्यश्वरथसंकीर्णस्तथा भैरवशासनः ॥ १० ॥
महोग्रः पुत्रपौत्राढ्यश्चाथान्त्यसुखसंयुतः । देशेदेशेऽधिकाराढ्यः स म्लेच्छः पृथिवीपतिः ॥ ११ ॥
स्त्रीसहायान्महाभाग तथा पुत्रसहायतः । सुखैश्वर्ययुता सापि यवनी तद्वशादिह ॥ १२ ॥
सपुत्रः प्राप्तसहायाच्च सोऽप्यत्रैव महाप्रभुः । एवं जन्मफलं भोक्तं ससहायं खगेश्वर ॥ १३ ॥
स्वामिधर्मकृतात्पुण्यात्तदर्थमरणात्तथा । भविष्यति गतिस्तेषां पूर्वपुण्यात्खगाधिप ॥ १४ ॥
पञ्चाशीत्यब्दमायुःस्यात्र च रिष्टेन तन्मृतिः । रिष्टं पञ्चाशदब्दे तु स्वदेहान्तसमं सुत ॥ १५ ॥
शस्त्रप्रहारैर्विविधैः प्राप्ते त्वत्र रणाङ्गणे । प्रजापीडनजात्पापात्तद्वर्षे नात्र संशयः ॥ १६ ॥
दद्यात्कालनरं तत्र ब्राह्मणाय कुटुम्बिने । देयं हिरण्मयं तद्वत्पञ्चाशत्पलसम्मितम् ॥ १७ ॥

कुरुक्षेत्रादितीर्थेषु संक्रान्त्यादिषु पर्वसु । सर्वोपस्करसंयुक्तं देयमेतच्च पुत्रक ॥ १८ ॥
महारिष्टहरं प्रोक्तं प्रायश्चित्तं परं खग । नातः परतरं प्रोक्तं दानात्कालनराधिकाचित् ॥ १९ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८० ॥

श्रीसूर्य उवाच ।

यां काचिद्यौवने नारी रमते स्वेच्छया परम् । बलात्कारेण सततं सोन्मादेन प्रपीड्यते ॥ १ ॥
तत्पापनाशनं सर्वमुपायं शृणु यत्नतः । कृत्वा स्वर्णमयं वायुं मृगं हैमञ्च वाहनम् ॥ २ ॥
सर्वोपस्करसंयुक्तं दद्याद्विप्राय धीमते । न प्राप्नोति तदोन्मत्तभावं दानप्रभावतः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८१ ॥

श्रीसूर्य उवाच ।

त्रपुहारी च यः पूर्वं जन्मन्यत्र, हि जन्मनि । श्लेष्मरोगेण सततं बाध्यते विनतासुत ॥ १ ॥
दद्यात्तत्पापनाशाय त्रपु विप्राय धीमते । पलानां त्रिशतं शुद्धं तस्माद्रोगाद्विमुच्यते ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८२ ॥

श्रीसूर्य उवाच ।

पत्यौ हि विद्यमाने तु जारादगर्भो धृतो यया । सा चात्र पादजा दुष्टा न च गर्भं दधाति वै ॥ १ ॥
काश्यां वासान्महाभाग श्रद्धया रुद्रपूजनात् । कन्याविवाहात्सततं दरिद्रद्विजपालनात् ॥ २ ॥
धारयिष्यति सा गर्भं प्रायश्चित्ताद्यथोदितात् । प्रायश्चित्तेऽकृते रिष्टं चत्वारिंशन्मितेऽब्दके ॥ ३ ॥
प्रायश्चित्ते कृते सूत षडशीत्यब्दजीवनम् ॥ ४ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८३ ॥

श्रीसूर्य उवाच ।

आखेटकं विना यस्तु हस्तिनं घातयेत्पुरा । सोऽत्र जन्मनि जायेत सर्वकार्येष्वसिद्धिकृत् ॥ १ ॥
तस्मिन्नेव हि काले च तस्य रिष्टं प्रकीर्तितम् । विंशत्यब्दे च पक्षीन्द्र कालशस्त्रान्मृतिर्भवेत् ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८४ ॥

श्रीसूर्य उवाच ।

यः कश्चिद्ब्राह्मणीं सूत बलात्कर्मेण मन्दधीः । रमयेत्प्राग्भवे सोऽत्र महोन्मादी प्रजायते ॥ १ ॥
अस्युग्रपापात्तस्यात्र रोगमुक्तिर्न जायते । म्रियते रिष्टयोगेन सोन्मादश्चैव जन्मनि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चाशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८५ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी लोभान्मोहाद्धरेत्त्रपु । सात्र जन्मनि पक्षीन्द्र श्लेष्मरुक्संयुता भवेत् ॥ १ ॥
शतत्रयपलं दद्यात्त्रपु तत्पापशुद्धये । तत्पापस्य क्षये सूत श्लेष्मरोगस्य नाशनम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडशीत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७८६ ॥

श्रीसूर्य उवाच ।

विप्रवंशे समुत्पन्नः शक्तिमान्वेदपारगः । धनधान्यसमायुक्तश्चेर्ष्यालुश्चार्जवान्वितः ॥ १ ॥

सुव्रतः शक्तिमान्धीरः किञ्चिद्व्याधिसमन्वितः। इन्द्रियाणां बलं हत्वा मेहस्तस्य व्यजायत॥२॥
उदरार्तिरसृग्वातः किञ्चिद्देहे प्रवर्तते। तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ ३ ॥
सत्यवाक्सत्यजा लोके व्रतानामनुकांक्षिणी। बहुपुत्र्यः प्रसूताश्च नैव पुत्रः प्रजायते ॥ ४ ॥
अथवा मृतपुत्रा च पुत्रीषु जीवितास्वपि। केन कर्मविपाकेन सत्यं वद दिवस्पते ॥ ५ ॥
पूर्वजन्मनि विप्रस्तु सञ्जातः पश्चिमे पुरा। तस्य गेहे सुनयना कन्या प्रौढिमुपागता ॥ ६ ॥
भूरिद्रविणलोभेन वृद्धविप्राय सार्पिता। तत्पित्रा वै हृतं वित्तं जामातुस्तद्दशादपि ॥ ७ ॥
सुदती सा ह्यतिप्रौढा परार्ध्यगुणशालिनी। पतिभक्तिपरा नित्यं सञ्जाता सा सुतार्थिनी ॥ ८ ॥
किञ्चित्काले व्यतिक्रान्ते वृद्धविप्रो मृतश्च वै। सा बाला विधवा जाता पुत्रपत्यर्थदुःखिनी ॥ ९ ॥
व्रततीर्थरता नित्यं सत्यानामनुकाङ्क्षिणी। बहुवर्षैस्तया वत्स नियमैः शोषितं वपुः ॥ १० ॥
पित्रा धनं गृहे भूरि तस्या वै स्थापितं भृशम्। किञ्चित्काले ह्यतिक्रान्ते मृता सा ब्राह्मणी वरा ११
सा पुत्री ह्युदरे मृत्वा ह्यगमज्जन्मजन्मनि। कन्या बहुविधास्तस्य निराधारा मृताश्च वै ॥ १२ ॥
तेन कर्मप्रभावेण पूर्वं कन्या मृता बहु। तस्य भार्यांश्च गर्भे सा ह्यायाति मृतिमिच्छति ॥ १३ ॥
पुनर्जन्म पुनर्मृत्युस्तत्कर्मनिष्कृतिं विना। कन्याविक्रयकर्ता च रौरवे नरके गतः ॥ १४ ॥
यातना बहुधा भुक्त्वा वर्षाणां च सहस्रकम्। पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ १५ ॥
इदं चतुर्थकं जन्म पुनीबाहुल्यमत्रवै। मृतः पुत्रो मृतो गर्भस्तेन वै कर्मणा खग ॥ १६ ॥
भार्या तस्यापि विप्रस्य पूर्वजन्मनि मानद। भर्तृविद्वेषिणी नित्यं न वै पत्यनुगामिनी ॥ १७ ॥
तेन कर्मविपाकेन कन्या भूरि मृताः सुत ॥ १८ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापं प्रशाम्यति। निष्कृतिं वद विश्वात्मन्पृथक्त्वेन प्रकाशय ॥ १९ ॥

श्रीसूर्य उवाच।

कन्यका यस्य जीवन्ति पुत्राणां नाशनं भवेत्। कर्मभेदेन येनेह तस्य शान्तिं समाचरेत् ॥२०॥
स्वकन्यां वरयोग्यां स चिन्तयित्वा शुभं दिनम्। अष्टवर्षवयस्कां वै यथाभावं यथामति ॥ २१ ॥
कन्यां रूपवतीं शान्तां समस्तगुणशालिनीम्। ब्राह्मेण विधिना सूत दद्याच्च बहुदक्षिणाम् ॥२२॥
महापापोपशमनं कन्यादानमतन्द्रितः। कन्याविवाहसमये महाशान्तिविधिं चरेत् ॥ २३ ॥
एवं कृतविधेः सूत कन्याकृत्यविधानतः। शान्तिकर्मणि सर्वत्र विस्तरेद्दत्विगादिकान् ॥ २४ ॥
भूमिद्रविणवासांसि कन्यावासांसि दापयेत्। गृहदानं ततो दद्याद्यथोपस्करसंयुतम् ॥ २५ ॥
वर्षेवर्षे तु संपूर्णे ह्यन्नवस्त्रादि दापयेत्। एवं कृतविधेः सूत बहुपुत्रा यशस्विनः ॥ २६ ॥
पापं पुत्रविनाशाख्यं कन्यापत्याह्वयं च यत्। तत्पापस्य प्रणाशार्थं कन्यादानादि निश्चितम् ॥२७॥
नाशयेत्तन्महत्पापं द्विजानां विधिपूजनात्। यजन्यज्ञविधानेन ब्राह्मणान्स्वस्ति वाचयेत् ॥२८॥
विनायकाम्बिकामूर्ती हेमनिष्कप्रमाणतः। आचार्याय ददेच्चे च नानापापविनाशिके ॥ २९ ॥
ऐहिकं लक्षणं तस्य शरीरे चोपजायते। जिह्वारदमतालव्योष्ठव्रणो वातादिदोषकृत् ॥ ३० ॥
नृपचौराग्निहानिश्च वित्तानां च यतस्ततः। दह्यमानेन मनसा भृशमाधिः प्रजायते ॥ ३१ ॥
सर्पिष्यात्मानमालोक्य प्रायश्चित्तं समापयेत् ॥ ३२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये सप्ताशीत्युत्तरसप्तशताधिकसहस्रतम ॥ १७८७ ॥

श्रीसूर्य उवाच।

या ताम्रहारिणी नारी लोभात्पूर्वभवे सुत। औदुम्बरेण रोगेण पीड्यते बहुपीडया॥ १॥
पापं विचार्य यत्नेन ताम्रं दद्याच्च शक्तितः। तस्माद्दानान्महाभाग पापं नश्यति नश्यति॥ २॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तरसप्तशताधिकसहस्रतमः॥ १७८८॥

श्रीसूर्य उवाच।

गर्भहत्या यया मुक्ता पूर्वजन्मनि मानद। गर्भासक्ता ह्यजा बद्धा विधिना गर्भधारिणा॥ १॥
तेन कर्मविपाकेन वाहुजा सात्र कीर्तिता। पूर्वजन्मन्यसौ विप्रा न च गर्भं दधार वै॥ २॥
प्रायश्चित्तं तस्य चात्र यच्चिम सर्वाघमोचनम्। कृत्वाजां गर्भसंयुक्तां राजतीं पद्मलारिमकाम्॥ ३॥
वैश्वानरस्तथा कार्यः पञ्चमाषैर्हिरण्मयः। पूजयित्वा ततो दद्याद्द्विजाय विधिनाण्डज॥ ४॥
एवं कुर्याद्विधानेन सर्वपापापनोदनम्। तस्याः पुत्रविवृद्धिः स्यादिह जन्मनि वै ध्रुवम्॥ ५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तरसप्तशताधिकसहस्रतमः॥ १७८९॥

श्रीसूर्य उवाच।

मूर्धाभिषिक्तः प्राक्सूत बभूव पुरुषोत्तमः। स्वज्ञातिषु महाभागो दृढधर्मक्रियापरः॥ १॥
वैराटदेशे निवसन्राजकार्यरतः सदा। कुलवान्गोमहं तत्र शत्रूणां भयदायकः॥ २॥
बालवत्सा मृता गौर्वै पुरे तस्मिन्खगोत्तम। पापमाचरितं तेन नृपाज्ञाकारिणा दृढम्॥ ३॥
ततो यमपुरं प्राप्तो भुक्त्वा भोगांस्तदुक्तवत्। विष्णुपूजनजात्पुण्यात्प्राप्तोऽत्र यमुनातटे॥ ४॥
चारणो धर्मनिरतो बहुद्रव्यसमन्वितः। नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः॥ ५॥
बन्धुभृत्याधिकाराढ्यो वस्त्रभूषणभूषितः। सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु॥ ६॥
धूर्तो मिथ्यापवादी च बहुलोभसमन्वितः। जातसन्ततिदुःखार्तो बालवत्सवधादिह॥ ७॥
नेत्ररोगान्वितो नित्यं शृणु पुत्र खगाधिप। चत्वारिंशन्मितेवर्षे सर्वसन्ततिनाशनम्॥ ८॥
ग्रहमाहात्म्यान्महाभाग वृष्टिरिष्टसमुद्भवात्। पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः॥ ९॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्बालवत्सावनाशिनीम्। यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते॥ १०॥

श्रीसूर्य उवाच।

प्रायश्चित्तं शृणु खग तद्वर्षानन्तरं सुत। तस्मिन्वर्षे महारिष्टं प्रायश्चित्तं न विद्यते॥ ११॥
दृढकर्मार्जितात्पापात्प्रोक्तं पापशोधनम्। शृणुयाद्धरिवंशं च वैशाखे विधिनाण्डज॥ १२॥
माघे वा कार्तिके वापि दशावृत्त्या विधानतः। ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः॥ १३॥
कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा। धेनूनां दशकं दद्यात्सवत्साभरणान्वितम्॥ १४॥
दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम्। प्रायश्चित्तमिदं पुत्र यः कुर्याद्विधिपूर्वकम्॥ १५॥
तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत। मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः॥ १६॥
प्रायश्चित्ते कृते तत्र नवत्यब्दमितं तथा। द्विगुणमायुः कथितं तीर्थे पुण्याश्रयेण्डज॥ १७॥
जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे। त्रयोदश्यां दिवा भूमावृक्षे मृगशिरोभिधे॥ १८॥
निर्याणं कथितं तस्य विष्णुपूजाप्रभावतः। भविष्यति गतिस्तस्य पुनर्विष्णुं प्रपूजयेत्॥ १९॥
तथा तृतीये जनुषि मरणं गोप्रहात्सुत। सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात्॥ २०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तरसप्तशताधिकसहस्रतमः॥ १७९०॥

श्रीसूर्य उवाच।

पिङ्गलाक्षो भवेद्‌ नः पूर्वं रीत्यपहारकः । तेन तत्पापशुद्ध्यर्थं देयं रीतिपलं शतम् ॥ १ ॥
गायत्र्या होमयेत्पश्चात्तिलान्विप्रांश्च भोजयेत् । मुच्यतेऽत्र महाभाग तद्रोगात्पापजाद्ध्रुवम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९१ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग खररोमा प्रजायते । पूर्वजन्मनि यो हन्यात्खरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः । निष्कत्रयं हिरण्यं च दद्याद्दोषोपशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गवेदिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९२ ॥

श्रीसूर्य उवाच।

प्राग्भुक्तं गर्भपुष्ट्यर्थं कुक्कुटाण्डं खगेश्वर । अत्र जन्मनि सा जाता संकरा लोभसंयुता ॥ १ ॥
धनधान्यसमायुक्ता पूर्वपुण्यादिहाण्डज । न च गर्भं धारयति प्राक्पापादण्डभक्षणात् ॥ २ ॥
कृत्वाण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम् । तदर्धमितकं वापि निजवित्तानुमानतः ॥ ३ ॥
दत्त्वा द्विजाय विधिना ह्याचरेच्छङ्करव्रतम् । पूजादानादिकं कृत्वा सा भवेत्पुत्रिणी खग ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिणवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९३ ॥

श्रीसूर्य उवाच।

अवन्त्यां राजसम्मानी देवद्विजपरायणः । वैश्यजातौ समुत्पन्नः कश्चिद्दासीविलासवान् ॥ १ ॥
कृषिवाणिज्यतस्तेन धनानां सञ्चयः कृतः । प्रतिवेशे स्थिता तस्य हरिणाक्षी हि शूद्रजा ॥ २ ॥
बलात्सा धर्षिता तेन हृतान्याभरणानि च । कामलोभाच्चलाक्षी स्त्रीस्वभावाच्च तद्वशा ॥ ३ ॥
लोकलज्जाभयात्तेन गर्भस्तस्याः प्रपातितः । तदुग्रपापादधमो राजयक्ष्मप्रपीडितः ॥ ४ ॥
अन्त्यजीवासकृच्चापि भ्रूणहा स नराधमः । देशान्तरे मृतिं प्राप प्राप्तस्तु यमशासनम् ॥ ५ ॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनान् । फलानि भुक्त्वा पुण्यानां चान्ते पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभरतस्सदा । नानाचौर्यकलायुक्तो लोभवञ्चनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि । सुखैश्वर्यधनैर्युक्तो कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः । वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गं सुशोभनम् । पूजयेत्त्रिनयनोक्तं मन्त्रैस्तल्लिङ्गजैस्तथा ॥१०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः । सम्पूज्य विधिवद्देवं तदन्ते भोजयेद्द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्पूजयेद्दक्षिणादिभिः । नानाहिरण्यैर्विविधैस्तथा चाभरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः । ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम् । सम्प्राप्य तत्र निर्वाणं शिवलोकं हि गच्छति ॥ १४ ॥
कर्तव्यं ब्राह्मणद्वारा सर्वमेतद्धि काश्यपे । नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तप्ता शलाका देया वै शूद्रकर्णेऽतिदारुणा । श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥

आयुरब्दशतं तस्य कृतनिष्कृतिमानवः। प्रायश्चित्तेऽकृते रिष्टं जायते षष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्णवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९४ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे हन्यात्स्वगर्भमत्र जन्मनि। खररोमसमान्यस्या रोमाण्यत्र भवन्ति च ॥ १ ॥
ब्राह्मणाय तथा दद्यात्स्वर्णनिष्कत्रयं सुत। जायते सूक्ष्मरोमा सा विनतानन्दवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९५ ॥

श्रीसूर्य उवाच।

या नारी च हरेद्रीतिं भुवं सा च खगेश्वर। पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम्। गायत्र्या जुहुयाच्छक्त्या तिलान्रोगविनाशनम् ॥२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षण्णवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९६ ॥

श्रीसूर्य उवाच।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी। सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानं विप्रेभ्यो दीनेभ्योऽथ खगेश्वर। भिक्षुभ्यश्च तथा दानाङ्गदानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः। प्रायश्चित्तेऽकृतेऽप्येवं म्रियते शूलपीडया ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९७ ॥

श्रीसूर्य उवाच।

उष्ट्रघाती भवेत्पूर्वजन्मन्यथ खगाधिप। सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि। कर्पूरं त्रिपलं दद्याद्विप्रेभ्यो शक्तितोऽण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९८ ॥

श्रीसूर्य उवाच।

वंध्येयं या महाभाग पृच्छति स्वं प्रयोजनम्। गर्भपातरता पूर्वे जनुष्यत्र फलं त्विदम् ॥ १ ॥
मृतजा प्राग्भवे ह्यत्र तत्पापापघ्नी हि सा। निष्कृतिं तां प्रवक्ष्यामि गङ्गायां हि खगेश्वर॥२॥
पूजयेल्लक्षरुद्रांश्च तदर्द्धं वा तदर्धकम्। शक्त्याथ भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना या च प्रायश्चित्तं समाचरेत्। जायते सन्ततिस्तस्या इह जन्मनि वै ध्रुवम् ॥४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तरसप्तशताधिकसहस्रतमः ॥ १७९९ ॥

श्रीसूर्य उवाच।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत। धर्मकर्मात्मको भक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योहि शक्तितः। पर्वस्वपि च पात्रेभ्यो गोभूम्यश्वादिकानि च ॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात्। स्ववंशजस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरभावेन रात्रौ भार्यासहायतः। तस्मिन्दाहे महाबाहो निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाश्चाल्पजीवाश्च घातिताः क्रूरकर्मणा। ततो बहुतिथे काले गतः स यमसादनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा पापादुष्टं शुभात्तया। शुभं चपुण्यात्प्राचि देशे स जातो वाडुजायरः॥६॥

मध्यस्वरूपो मतिमान्कुलेष्टः पुरुषो दृढः । रक्तो नोचो नातिनीचो बहुकन्यः पृथुर्विभुः ॥ ७ ॥
यौवनस्थः सुखैश्वर्यधनैस्थानैर्युतायुतः । मितदो भोगभाग्याढ्यः कृती मानी जनप्रियः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्तातुरोक्षधूर्तश्च दुःखार्तो मानवर्जितः ॥ ९ ॥
गोघातादग्निदाहाच्च जातपुत्रविनाशकः । सहायलक्षणं सर्वं कथयामि खगेश्वर ॥ १० ॥
या स्त्री पूर्वं सहायासीद्दाहकर्मणि चाण्डज । सा ज्येष्ठा मृतवास्ति मृतपुत्रात्र जन्मनि ॥ ११ ॥
लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्गे वृषभे शनिः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कारयित्वा शिवं साङ्गं पलैर्वेदमितैः शुभैः । हिरण्मयं महाभाग पत्रे लेख्यं शिवान्वितम् ॥ १३ ॥
तदर्धमितकं वापि निजवित्तानुसारतः । पूजयित्वा तु गन्धाद्यैः षोडशोरूपचारकैः ॥ १४
संस्थाप्य पशुपं पश्चाद्गोरथे सुमनोहरे । सर्वोपस्करसंयुक्ते वितानाम्बरभूषिते ॥ १५ ॥
दद्याद्वेदविदे विप्राय मन्त्रमेतमुदीरयेत् ॥ १६ ॥

मन्त्रः ।

" मोहात्पूर्वं महापापमग्निदाहायदर्जितम् । तन्नाशाय ददेऽहं तु शिवं गोरथसंयुतम् " ॥ १७ ॥
गोधिकाद्यास्तथा जीवाः पत्रे लेख्यास्तु राजते । शिवपत्रमिदं दद्याद्ये चान्ये घातिताः पुरा ॥ १८ ॥
पञ्चमाषमितो वह्निर्देयो हेममयोऽधुना । गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम् ॥ १९ ॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान् । य एवं कुरुते सूत प्रायश्चित्तं विधानतः ॥ २० ॥
न तस्य पुत्रमरणं तद्भे जायते क्वचित् । जायन्ते सुलभाः पुत्राश्चाधिव्याधिविवर्जिताः ॥ २१ ॥
नैवं करोति मोहाद्यः स तु पुत्रविवर्जितः । चत्वारिंशन्मितैकोने वर्षे रिष्टं प्रकीर्तितम् ॥ २२ ॥
पञ्चाशन्मितके चैव रिष्टं चाकृतनिष्कृतेः । प्रायश्चित्ते कृते ह्यायुश्चतुरष्टमिताब्दकम् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टशताधिकसहस्रतमः ॥ १८०० ॥

## श्रीसूर्य उवाच ।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायते त्विह ॥ १ ॥
दानात्पलशतादस्य सीसकस्याण्डजोत्तम । विप्राय वेदविदुषे दरिद्राय कुटुम्बिने ॥ २ ॥
नीरोगः स्यात्तथा यस्तु न कुर्यात्पापशोधनम् । न तस्य पापशमनं मया प्रोक्तं खगाधिप ॥
तस्मिन् वयसि तद्रिष्टं भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तराष्टशताधिकसहस्रतमः ॥ १८०१ ॥

## श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । सात्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तराष्टशताधिकसहस्रतमः ॥ १८०२ ॥

## श्रीसूर्य उवाच ।

या नारी त्ववधीत्पूर्वं मोहाद्दुष्टं खगाधिप । सात्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णीं राजतीं तथा । दद्याद्वेदविदे विप्राय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्युत्तराष्टशताधिकसहस्रतमः ॥ १८०३ ॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदपारगे । मुच्यते नेत्ररोगाच्च जन्मन्यत्र खगाधिप ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तराष्टशताधिकसहस्रतमः ॥ १८०४ ॥

श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग अहिणीरुग्युतात्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चोत्तराष्टशताधिकसहस्रतमः ॥ १८०५ ॥

श्रीसूर्य उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्तास्रदर्शनः । उदरे वाजतान्रोगान्किञ्चिच्छस्त्रोपघातकान् ॥ १ ॥
किञ्चित्क्रोधी च लोभी च किञ्चिद्विद्यासमन्वितः । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा॥२॥
एकापत्यं भवेत्तस्य स जातो मृतपुत्रकः । आदिपुत्रो मृतस्तस्य ह्यपत्यं नैव जायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

पूर्वे भवे महाबाहो शूद्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन चाकरोत् ॥ ५ ॥
व्यवहारादिकं कृत्वा ब्रह्मस्वेन ह्यवर्धयत् । कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् ॥ ६ ॥
ब्राह्मणायार्पितं नैव ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणाच्चैव वर्षाणाञ्च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे पच्यते चेह कर्मणा । व्रतदानप्रभावेण जातोत्तमकुले च वै ॥ ९ ॥
इदं तृतीयं वै जन्म ब्रह्मवंशसमुद्भवम् । निक्षेपहरणाच्चापि मृतपुत्रः प्रजायते ॥ १० ॥
ब्राह्मणस्य विशेषात्तु ब्रह्मस्वं विषमेव हि । ऋणं प्रसह्य वै प्रोक्तमसह्यं तत्र जायते ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां न भवेन्मृत्युर्निष्कृतिं सौख्यहेतवे ॥ १२ ॥

श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकार्यकरः प्रभुः । पूजनीयो महारुद्रः सन्ततिश्रेय इच्छता ॥ १३ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रजैः । पूजयित्वा विमुच्येत पापादाकल्पसम्भवात् ॥ १४ ॥
रुद्रैकादशनीमिश्च रुद्रकादशकेन वा । जपेन तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १५ ॥
तद्दशांशेन होतव्यं रुद्रं श्रद्धासमन्वितम् । विधिवज्जुहुयाद्वह्नौ तिलैस्त्रिमधुराप्लुतैः ॥ १६ ॥
हरितालीपलाशोत्थसमिधोऽत्र हविर्हुताः । प्रतिरुद्रं प्रदातव्यं गोयुगं रशनान्वितम् ॥ १७ ॥
केयूरकुण्डलाकल्पास्तत्र पुस्तकमण्डलुम् । प्रतिरुद्रं शतं विप्रान्भोजयेत्सुसमाहितः ॥ १८ ॥
निष्कं दद्यात्सुवर्णस्य दद्याच्च गुरुदक्षिणाम् । एवं रुद्रविधिं कृत्वा त्रिविधं नाशयेदघम् ॥१९॥
इतिहासपुराणोक्तीः सूक्तानि विविधानि च । शृणुयाद्विधिवच्चार्घ्यं सभार्यः प्रीतितोऽन्वहम्॥२०॥
देवर्षिपितृमर्त्यानामृषीणाञ्च महीक्षिताम् । देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २१ ॥

पूर्वसंजीवजातीनामुत्पत्तिं शृणुयादपि । ऋषीणामृषिपत्नीनां वंशान्सर्वानुदीरितान् ॥ २२ ॥
कृष्णगुल्मोत्थितां पीडां नरश्चात्र न पश्यति ॥ २३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडुत्तराष्टशताधिकसहस्रतमः ॥ १८०६ ॥

श्रीसूर्य उवाच ।

प्राग्भवे या भवेत्काचित्स्वर्णकारी खगेश्वर । स्वधर्मनिरता सा च दानधर्मपरायणा ॥ १ ॥
तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः । ताडिता कुक्षिभागे तु लकुटेन भृशं सुत ॥ २ ॥
तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः । मृता च तेन दुःखेन गर्भजातसमन्विता ॥ ३ ॥
तेन वै कर्मणा युक्ता सम्प्राप्योचितशासनम् । पुनः शूद्रीसमाजाता गौरवर्णा शुभानना ॥ ४ ॥
धनभृत्याश्वभोगाद्यैर्नानाविभवसंयुता । पुत्रसन्ततिहीना सा प्राग्गोघातावसम्भवात् ॥ ५ ॥
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविनाशकम् । कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा ॥ ६ ॥
मार्गे हि धर्मतो यत्नात्प्रतिष्ठा कारयेत्ततः । संस्थाप्य च शिवं तत्र विधिना विनतासुत ॥ ७ ॥
होमयेच्च ततस्तत्र तिलान्नाज्ययुतानिह । भोजयेद्ब्राह्मणाञ्छ्रद्धया शिवपूजनतत्परान् ॥ ८ ॥
दद्याच्चैका कपिलां सर्वपापप्रणाशिनीम् । प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् ॥ ९ ॥
नैवं या कुरुते श्रुत्वा तस्याः सन्ततिजं भयम् ॥ १० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तोत्तराष्टशताधिकसहस्रतम ॥ १८०७ ॥

श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले तेन पापेन बहुमूत्रः प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना तत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तराष्टशताधिकसहस्रतम ॥ १८०८ ॥

श्रीसूर्य उवाच ।

दुग्धं हरति या नारी कस्यचित्पापमोहिता । पूर्वजन्मनि सैवात्र बहुमूत्ररुजाकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गपारगे । विधिना काश्यपे चात्र न पश्येद्बहुमूत्रताम् ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तराष्टशताधिकसहस्रतम ॥ १८०९ ॥

श्रीसूर्य उवाच ।

यो मोहाद्घातयेत्सूत महिषीं नवयौवनाम् । प्राग्भवे नियतं सोऽपि कृष्णगुल्मेन बाध्यते ॥ १ ॥
स नानाव्रतदानेन विधिना गरुडाग्रज । नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्विप्राय विधिनाण्डज । महिषीघातजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तराष्टशताधिकसहस्रतम ॥ १८१० ॥

श्रीसूर्य उवाच ।

यः कुर्यात्पापलोभेन पूर्वं मुष्कातिकुट्टनम् । ब्रह्मपुत्रस्य पण्ढः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृतस्यास्य निष्कृतिर्नात्र विद्यते । ब्रह्माण्डान्महापापात्पण्ढः स्याद्बहु जन्मसु ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तराष्टशताधिकसहस्रतम ॥ १८११ ॥

श्रीसूर्य उवाच ।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत । अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज ॥ १ ॥
अत्र पुत्रविहीना सा फलहृत्पापजाद्दृढात् । फलानां बहुदानाच्च चातुर्मास्येऽत्र नित्यशः ॥ २ ॥
भोजनन्तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् । प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम् ॥ ३ ॥
अमायां नारिकेलानि देयानि खलु शक्तितः । तत्कृते सुतवृद्धिः स्याज्जीवनं चाब्दसप्ततिम् ॥४॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तराष्टशताधिकसहस्रतमः ॥ १८१२ ॥

श्रीसूर्य उवाच ।

दधिहारी पुमान्पूर्वं जन्मन्यत्र खगेश्वर । जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः । तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तराष्टशताधिकसहस्रतमः ॥ १८१३ ॥

श्रीसूर्य उवाच ।

महिषीं घातयेद्यस्तु प्राग्भवे विनतासुत । अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदैवताम् । युगकम्बलसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत । तस्मिन्दाने कृते तत्र कृष्णगुल्मं न पश्यति ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तराष्टशताधिकसहस्रतमः ॥ १८१४ ॥

श्रीसूर्य उवाच ।

वेधात्प्राग्वृषभानाञ्च नासाग्रस्य खगेश्वर । नासाछेदोऽत्र तस्यास्ति यूनि भवे विनिश्चयात् ॥१॥
नास्ति तन्निष्कृतिः क्वापि दत्तैर्दानशतैरपि ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशोत्तराष्टशताधिकसहस्रतमः ॥ १८१५ ॥

श्रीसूर्य उवाच ।

कश्चिदासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महाबाहो कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परघातकृते सूत स्वशरीरमथात्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महारौरवेण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यादात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां जनितः स्वयम् । सिन्धोः पश्चिमभागे च शतयोजनसम्मिते॥६ ॥
देशे कर्कटगे जीवे लग्नस्थे चन्द्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
सुखैश्वर्यसमाक्रान्तो धनवाहनभोगभाक् । शूरः सुवेषोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापालोभरतः क्रोधी नानाभैरवशासनः । रिष्टं षष्टिमिते वर्षे पञ्चहीने खगेश्वर ॥ ९ ॥
महाकालनरादानात्सुवर्णस्य खगाधिप । सर्ववित्तषडंशेन महारिष्टहरं परम् ॥ १० ॥
पश्चाशीतिमितायुः स्याद्दत्ते कालनरेऽण्डज । प्रायश्चित्तेऽकृते त्वत्र रिष्टं स्यात्प्रोक्तवत्सरे ॥११॥
कालरूपेण शस्त्रेण तत्क्षणं मरणं स्मृतम् । महाघोराहवे सूत चात्मघातादिदं फलम् ॥ १२ ॥
चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् । दक्षिणं लशुनं पुत्र षडंगुलिमितं शुभम् ॥ १३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षोडशोत्तराष्टशताधिकसहस्रतमः ॥ १८१६ ॥

श्रीसूर्य उवाच ।

दधिप्रहरणान्नारी प्राग्भवे तत्र जन्मनि । मेदसा पीडचतेऽवश्य विनतानन्दवर्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने । मुच्यतेऽत्र महारोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तदशोत्तराष्टशताधिकसहस्रतम ॥ १८१७ ॥

श्रीसूर्य उवाच ।

तरक्षौ निहते पूर्वं भवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्यत्यक्षिज रोगं कातरोत्थं हि काश्यपे ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टदशोत्तराष्टशताधिकसहस्रतम ॥ १८१८ ॥

श्रीसूर्य उवाच ।

प्राग्भवे सुमुखी काचिद्धृता देवालयेऽण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा शूद्रा वै महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महादानात्प्राक्कृताद्विनतात्मज ॥ २ ॥
तेन कर्मफलेनात्र चक्षुःपीडातिदारुणा । त्रिदोषैर्दूषिता चात्र युवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपकृतपापशोधनम् । दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥
सुवर्णविहिता भव्याः सम्पूज्याथ महेश्वरम् । गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तराष्टशताधिकसहस्रतम ॥ १८१९ ॥

श्रीसूर्य उवाच ।

दुष्टगन्धयुतः सूत जायते सोऽत्र जन्मनि । मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु ॥ १ ॥
मधुधेनुप्रदानाद्वै ब्राह्मणाय खगेश्वर । दुष्टगन्धयुताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तराष्टशताधिकसहस्रतम ॥ १८२० ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कर्बुराक्षी प्रजायेत चक्षूरोगा खगाधिप ॥ १ ॥
धेनुं रत्नमयीं दद्यात्सुवर्णां विधानतः । न पश्यत्यक्षिरोगं सा तद्दत्तेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तराष्टशताधिकसहस्रतम ॥ १८२१ ॥

श्रीसूर्य उवाच ।

यः प्राग्जन्मन्यभूत्कश्चिन्नरो दानक्रियान्वितः । दण्डाधिकारवाञ्छूरो दृढो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र भोगाढ्योऽपि विशेषतः । व्यभिचाररतस्त्वेकब्राह्मणस्य खगेश्वर ॥ २ ॥
लोभाच्चकारासौ तत्र खण्डच्छेदं च तत्क्षणात् । स तेन कर्मणा युक्तो मुक्तातियमशासनम् ॥ ३ ॥
देशे पञ्चनद स्थान जातः शूद्रोऽतिचाधमः । स चास्त्यत्र विवर्णस्तु षण्ढः पापमतिः सुखी ॥ ४ ॥
सर्वैश्वर्यसम्पन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मस्वसौ षण्ढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तराष्टशताधिकसहस्रतम ॥ १८२२ ॥

अरुण उवाच।

क्षात्रे कुले समुत्पन्नः शौर्योदार्ययशोधनी। राजमान्यविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किञ्चिद्वातादिना पीडा जायते चोदरे भृशम्। वातरक्तादि शिरसि जायते पक्षसंख्यया ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी। प्रियभक्तिपरा नित्यं दानदाक्षिण्यवर्तिनी ॥ ३ ॥
एकपुत्रप्रसूता चाप्यन्यपुत्रमुपागता। पश्चात्पुष्पं रतं शान्तमपत्यं नैव जायते ॥ ४ ॥
येन कर्मविपाकेन पापं शाम्यति तत्क्रियाः। विधानं च हितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच।

पूर्वे वर्णान्तरे जातो धातुकांस्यादिकारकः। ब्राह्मणो मित्रतां यातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्येण वर्धितः। कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
वञ्चितं तद्धनं सर्वं न तु किञ्चित्प्रदापितम्। ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासन्ततिनाशनम्। यो वै तस्य मृतः पुत्रः संजातो ब्राह्मणश्च सः ॥ ९ ॥
इदं चतुर्थं वै जन्म ब्रह्मवंशसमुद्भवम्। भार्या दुःखकरी ह्येवं पुत्रहीना खगेश्वर ॥ १० ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत्। निष्कृतिं ब्रूहि देवेश सन्ततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच।

ब्रह्मस्वं विषतुल्यं हि पुत्रपौत्रादिनाशनम्। विषेणैको हि म्रियते ब्रह्मस्वात्सुतसन्ततिः ॥ १२ ॥
तस्य सन्तत्यनाशाय कारयेन्निष्कृतिं शुभाम्। सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः। तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवम्। नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति। सप्रधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम्। सुवर्णस्य विशुद्धां च दापयेद्देववादिने ॥ १७ ॥
प्रतिष्ठापूजनं कृत्वा ततो गां वै सवत्सकाम्। सम्पूज्य दद्याद्विप्राय द्रोणान्सप्तैव निर्मितान्॥१८॥
जातीपुष्पसमुद्भूतां लक्षपूजां शिवोपरि। संकटान्मोचयेद्धेनुं दम्पती परिधापयेत् ॥ १९ ॥
एवं कृतविधेः सूत निश्चला सन्ततिर्भवेत् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायत्रयोविंशत्युत्तराष्टशताधिकसहस्रतमः ॥ १८२३ ॥

---

श्रीसूर्य उवाच।

षण्ढोऽस्ति राजसन्मानी ह्यत्र जन्मनि चाण्डज। महादुष्टक्रियायुक्तो वधबंधनतत्परः ॥ १ ॥
प्राक्कृतात्तु महादानात्सुखैश्वर्यधनान्वितः। महामानी महाधूर्तः षण्ढो दास्यतिसेवनात् ॥ २ ॥
नात्र जन्मनि भोः सूत प्रायश्चित्तं मयोदितम्। अगम्यागमनं पापं प्रायश्चित्तविवर्जितम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायचतुर्विंशत्युत्तराष्टशताधिकसहस्रतमः ॥ १८२४ ॥

---

श्रीसूर्य उवाच।

ब्रह्मघ्नी सा मया प्रोक्ता या पूर्वं घातयेद्द्विजम्। सर्वं विचेष्टितं यस्माच्छृणु चात्र खगेश्वर ॥ १ ॥
अनया द्रव्यलोभेन सपत्न्या घातितः सुतः। प्राग्भवे विषदानेन कुमारो दोषवर्जितः ॥ २ ॥

तस्मादियं महादुष्टा बाल्ये कुष्ठान्विता सुत । अतिबाधायुता पूर्वे पितृगेहे स्थिताण्डज ॥ ३ ॥
महादोषवती पापादिह सम्प्राप्य यातनाः । चतुर्विंशमिते वर्षे मरणं कीर्तितं ध्रुवम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचविंशयुत्तराष्टशताधिकसहस्रतमः ॥ १८२५ ॥

## श्रीसूर्य उवाच ।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दन्तुरः सोऽपि काले तत्पापचिह्नितः ॥ १ ॥
घृतकुम्भान्यथाशक्ति दद्याद्विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तराष्टशताधिकसहस्रतमः ॥ १८२६ ॥

## श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः । गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तराष्टशताधिकसहस्रतमः ॥ १८२७ ॥

## श्रीसूर्य उवाच ।

अथ काचित्सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिना प्रेरिता पूर्वे शत्रोर्दग्धं तया गृहम् ॥१॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । ब्राह्मणस्यैकबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधात्सा वै किञ्चित्कालेऽथ वै मृता । भुक्त्वा फलानि सर्वाणि पुण्यपापोद्भवानि ह ॥३ ॥
सा शूद्री यमुनातीरे जातात्र पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशिनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तराष्टशताधिकसहस्रतमः ॥ १८२८ ॥

## श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले घातसम्भवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८२९ ॥

## श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्भवेल्लोभात्पुरा भवे । कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
तद्दोषशमनायैव ब्राह्मणाय खगेश्वर । कण्डूरोगप्रशमनं दानात्तैलघटद्वयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३० ॥

## श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्तात्र विधिना महारोषवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम् । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मसु भविता पापान्मुक्तिः खगाधिप ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३१ ॥

श्रीसूर्य उवाच।

स्वभक्ष्यार्थं महाभाग यो हन्याद्वायुवाहनम्। अत्र जन्मनि खंजोऽपि नात्र कार्या विचारणा॥१॥
न तस्य निष्कृतिः प्रोक्ता चेह जन्मनि चाण्डज। स्वशरीरविशुद्ध्यर्थं येन मुक्तो मृगः पुरा॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तराष्टशताधिकसहस्रतमः॥ १८३२ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे चौर्याद्गुडं हरति कस्यचित्। गुल्मोदरेण रोगेण पीड्यते सात्र जन्मनि॥१॥
गङ्गायां हि महाभाग गुडधेनुप्रदानतः। तत्र स्नानान्महापुण्यात्तस्माद्रोगाद्विमुच्यते॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तराष्टशताधिकसहस्रतमः॥ १८३३ ॥

श्रीसूर्य उवाच।

कश्चिद्वैश्योऽभवत्सूत देशे नेपालविश्रुते। बहुमित्रसुखैराढ्यो हठी व्यसनसंयुतः॥१॥
आराधनं च कृतवान्वेश्या यः पूर्वजन्मनि। स्वस्त्रियं तु सुरूपां च परित्यज्य शुभाननाम्॥२॥
अन्यस्त्रियं समगमद्व्यभिचारपरो दृढः। स तेन कर्मणा युक्तो गतो धर्मपुरं प्रति॥३॥
फलानि शुभपापानि भुक्त्वा जातोऽत्र पर्वते। गौरो मत्यो महाज्ञानी महाविभवसंयुतः॥४॥
देशे देशेऽतिविख्यातो घृणी स्वल्पो महायशाः। स्वस्त्रीत्यागान्महापापाद्भविता स्त्रीविवर्जितः॥५॥

अरुण उवाच।

निष्कृतिं वद मे स्वामिन्स्त्रीप्राप्तिसुखकारिणीम्॥६॥

श्रीसूर्य उवाच।

पार्वतीप्रतिमां कृत्वा हैमिकीं कार्यकारिणीम्। पलपञ्चमितां लेख्यांगंधैर्माल्यैरलंकृताम्॥७॥
दद्याद्वेदविदिज्ञाय सुकुलीनाय चार्थिने। प्रजापतिं तथा दद्याद्राजतं त्रिपलात्मकम्॥८॥
ब्रह्मदैवतमन्त्रेण गृह्णीयात्स महाद्विजः। पश्चादष्टाक्षरं मन्त्रं सहस्रं पापशोधनम्॥९॥
जपेदष्टसहस्रं तु सूर्यमन्त्रं महाबलम्। होमयेत्तद्दशांशेन तद्दशांशेन तर्पयेत्॥१०॥
य एवं कुरुते सूत सर्वपापविनाशनम्। प्रायश्चित्तं परं त्वत्र तस्मात्पापात्प्रमुच्यते॥११॥
नैवं करोति यो मोहाज्जडवद्दैवचालितः। स्त्रीसुखं नेह लभते दिव्यं तत्त्वाब्दके ध्रुवम्॥१२॥
प्रायश्चित्ते कृते सूत जीवनं पञ्चसप्ततिम्॥१३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तराष्टशताधिकसहस्रतमः॥ १८३४ ॥

श्रीसूर्य उवाच।

नृपं विना प्राग्यो हन्यान्मृगं हि विनतासुत। खञ्जः स्यादन्यजनुषि तत्काले मृगघातजे॥१॥
पापनाशकरीं तस्य निष्कृतिं वच्म्यहं सुत। दद्यादश्वं नवं तत्र स्वर्णनिष्कयुतं शुभम्॥२॥
सहासनं सालङ्कारं पूजयित्वा विधानतः। विविज्ञाय महाबाहो नानाशास्त्रविधानतः॥३॥
न पश्यति च खञ्जत्वं दानस्यास्य प्रभावतः॥४॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चत्रिंशदुत्तराष्टशताधिकसहस्रतमः॥ १८३५ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे सूत परतैलापहारिणी। सात्र जन्मनि पक्षीन्द्र कण्डूरोगप्रपीडिता॥१॥

सा मुच्यते महाभाग दानात्तिलघटद्वयात् । सप्तवर्णाद्यथाशक्ति तत्दानाद्विशेषतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३६ ॥

श्रीसूर्य उवाच ।

राजप्रचारी वै कश्चिच्चारणः पूर्वजन्मनि । भव्यमूर्तिर्दृढो धीरो शिवपूजनतत्परः ॥ १ ॥
राजपत्न्यां महाबाहो दधारासाववर्मनः । गर्भं च कामलोभेन भाविनोऽर्थस्य वै बलात् ॥ २ ॥
पापात्पापफलं भुक्त्वा यमलोके खगाधिप । शिवपूजनजात्पुण्यात्सोऽत्र जातो हि पाण्डुजः ॥ ३ ॥
देशे जाङ्गलके षण्डः सर्वधर्मबहिष्कृतः । शिवपूजारतश्चैव प्रागत्र धनभोगभाक् ॥ ४ ॥
स्त्रीपुत्रसुखहीनोऽत्र प्रायश्चित्तं न विद्यते ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३७ ॥

श्रीसूर्य उवाच ।

गर्भाढ्या पाजवीरपूर्वे मृगं हि विनताण्डज । स्वगर्भपालने दक्षा जन्मन्यत्र गतिं शृणु ॥ १ ॥
तद्घातकाले खञ्जा सा भविष्यति शुभानना । गर्भपातनदुःखार्ता तथैव हि तदेनसः ॥ २ ॥
तत्पापनाशनं सूत शृणु वक्ष्यामि तत्त्वतः । दद्याद्विप्राय तुरगं युवानं भूषणान्वितम् ॥ ३ ॥
स्वर्णनिष्कयुतं चात्र पूर्वपापात्प्रमुच्यते । न पश्यति च गर्भोत्थां पीडामत्रैव जन्मनि ॥ ४ ॥
दानप्रभावात्पक्षीन्द्र खञ्जत्वं नाप्नुयादिह ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३८

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो दानदाक्षिण्यतत्परः । मेहादिपीडितो नित्यं कृशाङ्गः पाण्डुरद्युतिः ॥ १ ॥
ऊर्ध्ववातादिना पीडा बाल्ये स्याद्ग्रहणीगदः तस्य भार्या शुभाचारा सुस्नेहा भर्तृभक्तितः ॥ २ ॥
रक्तस्रावादिना पीडा जायते चोदरानिलः । गर्भस्तस्या रक्षितोपि पातं कुर्याच्च दूषितः ॥ ३ ॥
द्वित्रैश्च पञ्चभिर्मासैश्चतुर्भिः सप्तभिस्तथा । केन कर्मविपाकेन गर्भो न स्थिरतां व्रजेत् ॥ ४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम् । व्यभिचारभयाच्चापि तया गर्भश्च पातितः ॥ ५ ॥
अतिकष्टाद्वैनतेय गर्भपातकृतागसः । अपरं च कृतं कर्म व्यभिचार इतस्ततः ॥ ६ ॥
नानाद्रव्यापहर्त्री च कुलटावाक्यलंघनात् । भर्तुस्तस्याश्चौरवृत्तिर्दुष्टसङ्गस्य दोषतः ॥ ७ ॥
तेन दुष्टेन पद्द्रव्यं चूततस्करबुद्धिना । धनं भुक्तं च ताभ्यां वै ब्रह्मस्वं तत्र जन्मनि ॥ ८ ॥
कालेन तद्धनं भुक्त्वा पीडितो दारुणैर्ग्रहैः । यातना बहुधा प्राप्ताः पश्चान्मानुष्यमाप्य वै ॥ ९ ॥
किञ्चित्पुण्यप्रभावेण क्षात्रोऽयं साम्प्रतं भुवि । इदं चतुर्थकं जन्म गर्भपातोऽभिजायते ॥ १० ॥
उभाभ्यां च कृतं कर्म भुज्यते जन्मजन्मनि ॥ ११ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि विश्वेश येन गर्भः स्थिरो भवेत् ॥१२॥

श्रीसूर्य उवाच ।

पूर्वजन्मनि या नारी नानागर्भान्निनाशित वै । तस्याः शुद्ध्यै निष्कृतिस्तु श्रूयतां कश्यपात्मज १३
सा नारी यतवाग्देहमना वै व्रतकांक्षिणी । सौम्यायने समापूर्यमाणे पक्षे शुभेऽहनि ॥ १४ ॥

तस्य पापस्य शान्त्यर्थं नानाव्रतमुपाचरेत् । पयः स्रवन्तीं शान्तां च सुरभिं शुभलक्षणाम् ॥१५॥
गृहमानीय विधिवत्पूजयेत्तां समाहितः । इष्टैस्तु यवसैः पानैर्भक्ष्यैः कण्डूयनैरपि ॥ १६ ॥
रुचिरैस्तु सुगोष्ठान्तैः सा तां परिचरेत्सदा । बलिपुष्पादिभी रात्रौ दीपैः स्रक्चन्दनादिभिः॥१७॥
सुगीतमङ्गलध्वानैः स्यादधःशायिनी भुवि । प्राणयात्रां प्रकुर्वीत तस्यास्तु पयसा हविः ॥१८॥
तस्यास्तु पञ्चगव्यानि यथान्यायमथाश्नती । एवं व्रतपरा नारी मासमासे तु संयता ॥ १९ ॥
तस्या धेनोः सवत्साया इष्टं सम्यक्काङ्क्षिणी । व्रतान्ते द्विजमाकार्यं समस्तगुणशालिनम् ॥२०॥
अभ्यर्च्य पूजयेद्भक्त्या वस्त्रस्रक्दामभूषणैः । सम्यगभ्यर्च्य तां धेनुं मानयन्ती स्तनंधयम्॥२१॥
कृत्वा च विधिवत्तस्मै तां दद्याद्विभाषिणी । सुवर्णं शुद्धमात्रेयं माषषोडशसंमितम् ॥ २२ ॥
दद्यात गां सवत्सां च पूर्वपापापनुत्तये ॥ २३ ॥

मन्त्रः।

"यन्मया कुलदावृत्त्या नानागर्भा विघातिताः । नानाभेदैः पातिताश्च गर्भा वै बहवो भुवि॥२४॥
तत्कर्मणार्जितं पापं गर्भपातादिदूषणम् । एनसस्तस्य नाशाय सवत्सां गामिमां ददे ॥ २५ ॥
इह जन्मनि वन्ध्यात्वं नाशय त्वं शुभानने । दानेनानेन सुरभेरनघा ससुता तथा ॥ २६ ॥
भवेयं त्वत्प्रसादेन सगर्भा सुभगा ममो ।" एवमस्त्विति तां धेनुं समादाय सदक्षिणाम् ॥२७॥
हिरण्यं रजतं ताम्रं गृहीयाद्वै फलानि च । एवंकृतविधेः सूत नारी स्याद्दुःखनाशिनी ॥ २८ ॥
वन्ध्यात्वान्मुच्यते सूत पुत्रप्राप्तिर्यशस्विनी ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८३९ ॥

## श्रीसूर्य उवाच।

पूर्वजन्मनि यः कश्चित्तुरगं घातयेन्नरः । वक्रकण्ठेन रोगेण पीडितोऽत्र प्रजायते ॥ १ ॥
स्वर्णाश्वदानाद्विधिवत्सर्वोपस्करसंयुतात् । वक्रकण्ठसमुद्भूतां पीडां नाप्नोति मानवः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४० ॥

## श्रीसूर्य उवाच।

शृगालघाती पुरुषः प्राग्जनुष्यत्र जन्मनि । पादहीनो भवेत्सूत भृशं वा कृतनिष्कृतेः ॥ १ ॥
दद्यादश्वं सुवर्णाढ्यं सर्वोपस्करसंयुतम् । ब्राह्मणाय प्रयत्नेन पूर्वपापापनुत्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४१ ॥

## श्रीसूर्य उवाच।

सङ्करः प्राग्भवे सूत बभूव धनसंयुतः । तीर्थवासी विरक्तश्च लोभी धर्मक्रियान्वितः ॥ १ ॥
क्रूरकर्म कृतं तेन दुष्टसङ्गेन चाण्डज । चौर्येण गां पुरा नीत्वा क्षुधितैर्भक्षिता पुरा ॥ २ ॥
मृतास्ते तेन पापेन नानायोनिमुपागताः । स तीर्थमृत्युवशतो गङ्गातीरेऽत्र पादजः ॥ ३ ॥
नानाविभवसम्पन्नो धनपुत्रसमन्वितः । युवभावेऽण्डजश्रेष्ठ चक्षुर्हीनोऽत्र जायते ॥ ४ ॥
प्रायश्चित्तं प्रवक्ष्यामि दशस्वर्णैस्तु सम्मिता । लिखित्वा गौर्विधानेन पूजयित्वा विधानतः ॥५॥
सा देया वेदविदुषे पूर्वपापविशुद्धये । गायत्रीं च जपेत्तत्र नियुतं चायुतद्वयम् ॥ ६ ॥
होमयेच्च यथाशक्ति भोजयेच्च ततो द्विजान् । यः कुर्याद्विधिना चेदं स तद्दोषात्प्रमुच्यते ॥ ७ ॥
स दिव्यचक्षुषा युक्तो जायतेऽत्रैव जन्मनि ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४२ ॥

श्रीसूर्य उवाच ।

या काचिद्घातयेन्नारी शृगालं पूर्वजन्मनि । सा तत्र पुरुषं वापि घातार्थमुपदेशयेत् ॥ १ ॥
अत्र जन्मनि वै चोर्ध्वात्स्थानाच्च बहु वैकृतम् । पादभङ्गो भवेत्तस्मात्पापाच्चैव खगाधिप ॥ २ ॥
करोति तस्य पापस्य निष्कृतिं विधिनात्र चेत् । तस्मात्पापात्प्रमुच्येत गत्वोर्ध्वात्पतनं तथा ॥३॥
अर्घं दद्यात्स्वर्णयुग्मनिर्मितं पापशोधनम् ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये त्रिचत्वारिंशदुत्तराष्टशताधिकसहस्रतम. ॥ १८४३ ॥

श्रीसूर्य उवाच ।

या नारी घातयेदश्वं प्राग्भवे सात्र जन्मनि । महापर्वसु गङ्गादिपुण्यतीर्थेषु दापयेत् ॥ १ ॥
सर्वोपस्करसंयुक्तं स्वर्णाढ्यं विधिसंयुतम् । सा मुच्यते वक्त्रकण्ठपीडनादिनतामुत ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तराष्टशताधिकसहस्रतम ॥ १८४४ ॥

श्रीसूर्य उवाच ।

आसीत्क्षत्री महाभाग पाञ्चाले देशके शुभे । नानाधर्मसमायुक्तः प्राग्भवे विश्रुतो महान् ॥ १ ॥
दुष्कृताचरितं चक्रे भाविनोऽर्थस्य वै बलात् । शूद्रायां च धृतो गर्भः कामलोभेन निश्चयात् ॥२॥
कृतः प्रयत्नो हि महान्गर्भस्य पातनम् । तया हालाहलं पीतं लोकलज्जातुरा मृता ॥ ३ ॥
गर्भे पीडा महत्युग्रा बालकोऽपि मृतस्ततः । सहायपञ्चयुक्तेन कृतं कर्मातिदारुणम् ॥ ४ ॥
कर्मणां संग्रहश्चायं गर्भनाशसमुद्भवः । ततो वै मरणम्प्राप्तो बाहुजोऽथ सहाययुक् ॥ ५ ॥
सूर्यलोकं तदा गत्वा भुक्त्वा भोगांश्च शाश्वतान् । अशुभान्नरकान्भुक्त्वा स्वकृताद्दृढकर्मणः ॥ ६ ॥
सोपप्लवे महादानात्पूर्वजन्मनि मानद । स जातो यमुनातीरे बाहुजश्चेह जन्मनि ॥ ७ ॥
गौरः कृशाङ्गो लग्नश्च धनसौख्यसमन्वितः । पितृभ्रातृविहीनश्च मितदो लोभमोहकृत् ॥ ८ ॥
नैकस्त्रीसंयुतः कामी नानाविभवसंयुतः । अत्यन्तमुखरश्चैव बुद्धिमान्देशविश्रुतः ॥ ९ ॥
धर्मादिदं तथा पापाच्चैतः पापतः शठः । सकम्पो हृदि रुग्णश्च मनोदुःखसमन्वितः ॥ १० ॥
शूद्रायां वीर्यदानात्प्राक्तद्वधादनपत्यकः । ऐहिकं लक्षणं तस्य शरीरे चोपजायते ॥ ११ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्सर्वपापापनोदिनीम् । पुत्रवृद्धिकरी धन्या लोकानां हितकाम्यया॥१२॥

श्रीसूर्य उवाच ।

वक्ष्यामि निष्कृतिं तस्य शृणु सूत प्रयत्नतः । पूर्वपापविशुद्ध्यर्थं गर्भधारणकारिणीम् ॥ १३ ॥
शूद्रायाः प्रतिमा कार्या पलैः पञ्चभिरन्विता । हिरण्मयी सगर्भा च पत्रे लेख्या विधानतः॥१४॥
तदर्धेनायसा कार्या निजवित्तानुमानतः । गन्धपुष्पैरलङ्कृत्य सा देया पापनाशिनी ॥ १५ ॥
पञ्चमाषैः कृतो विष्णुः सर्वपापप्रणाशनः । प्रजापतिं तथा दद्यात्सौवर्णं दशमाषकम् ॥ १६ ॥
राजतं च तथा दद्यात्सोमं सार्धपलात्मकम् । गायत्रीदशसाहस्रं जपेच्च विधिपूर्वकम् ॥ १७ ॥
होमयेत्तण्डुलैः साज्यैः सर्षपैः सतिलैस्तथा । ब्राह्मणान्भोजयेत्पश्चात्पूर्वपापात्प्रमुच्यते ॥ १८ ॥
एवंकृतविधेः सूत सर्वपापविनाशनम् । तस्य पुत्रविवृद्धिः स्यादिह जन्मनि निश्चितम् ॥ १९ ॥
अकृते तु यथाशक्ति प्रायश्चित्ते यथोदिते । रिष्टं षष्टिमिते वर्षे दारुणं शस्त्रवैकृतम् ॥ २० ॥
प्रायश्चित्ते कृते सूत जीवनं चाब्दसप्ततिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये पञ्चचत्वारिंशदुत्तराष्टशताधिकसहस्रतम ॥ १८४५ ॥

श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यतिकोविदः। ग्रामवासी सदा सौम्यः शतद्रुनिकटेऽण्डज ॥ १ ॥
शूद्रकन्या च तेनैव हृता षोडशवार्षिकी। मुक्ताऽतिकामलोभेन बलात्कारेण दूषिता ॥ २ ॥
स चातिधर्मपुत्रस्य भुक्त्वा रौरवयातनाः। पूजनाच्छिवलिङ्गानां प्रागत्रापि च सङ्करः ॥ ३ ॥
षण्ढस्तेन विपाकेन प्राप्तसर्वमनोरथः। राज्यप्रचारको धीमान्गजाश्वपतिपालकः ॥ ४ ॥
महाधनो महोत्साहो महाविभवविस्तरः। मुक्तिं प्राप्स्यति गङ्गायां पुण्याच्च शिवपूजनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चास्य सद्गतिः ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्चत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४६ ॥

श्रीसूर्य उवाच।

पादरोगयुतः सूत जायते सोऽत्र जन्मनि। यो मार्गहा पुरा लोके परलुण्ठनतत्परः ॥ १ ॥
सोऽश्वदानाद्विधानेन ब्राह्मणाय खगाधिप। न पश्यति महापीडां पापजां पादसम्भवाम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तचत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४७ ॥

श्रीसूर्य उवाच।

अभवत्प्राग्भवे विप्रो ग्रामवासी वनाश्रितः। चोराधिपो महोग्रश्च तत्संसर्गी खगाधिप ॥ १ ॥
दत्तानि तेन ग्रहणे दानानि विनतासुत। गोभूम्यश्ववृषादीनि ब्राह्मणेभ्योऽतिशक्तितः ॥ २ ॥
स भुक्त्वा नरकान्घोरान् पापात्पुण्याच्च शाश्वतान्। स्वर्गात्पर्वतभागे तु सञ्जातो बाहुजोऽधुना ३॥
बुद्धिमान्राजसम्मानी महोग्रो मन्त्रपारगः। पुत्रहीनस्त्वसौ सूत परवित्तस्य लुण्ठनात् ॥ ४ ॥
भवन्त्यत्र च य पुत्रा म्रियन्ते नात्र संशयः। प्रायश्चित्तं प्रवक्ष्यामि येन पापं प्रशाम्यति ॥ ५ ॥
कृत्वा वेदघटान्सूत सौवर्णान्घृतपूरितान्। तदभावे राजतांश्च विप्रेभ्यः प्रतिपादयेत् ॥ ६ ॥
हरिवंशं विधानेन शृणुयाद्भक्तितोऽण्डज। रौद्रं व्रतं चरेत्पश्चात्पूर्वपापविशुद्धये ॥ ७ ॥
नैतत्प्रकुर्याद्यः श्रुत्वा स नरः पुत्रवर्जितः। जायतेऽत्रैव पक्षीन्द्र कुर्याच्च पुत्रवर्धनम् ॥ ८ ॥
अष्टाशीत्यब्दमायुः स्यात्सन्ततिःकृतनिष्कृतेः ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४८ ॥

अरुण उवाच।

क्षात्रवंशे समुद्भूतो वातदेहरुजाकरः। गुल्माद्या ह्युदरे बाधा शिरोऽर्तिर्जायते तदा ॥ १ ॥
व्यापारो निष्फलस्तस्य किञ्चित्सेवादिना भवेत्। तस्य भार्याद्वयं चास्ति किंचिद्भक्तिपरायणम् ॥ २॥
अन्योन्यद्वेष्यभावाच्च किञ्चित्प्रीतिकरं परम्। मृतवत्सा कथं जाता सत्यं कथय भास्कर ॥ ३ ॥
उदरस्थ स्थिरीभूतो न प्रसूतिर्न पावनम्। केन पापप्रभावेण कथय त्वं दिवाकर ॥ ४ ॥

श्रीसूर्य उवाच।

पूर्वजन्मनि विप्रस्तु क्रयविक्रयकारकः। दानधर्मपरो नित्यं वेददेवपरायणः ॥ ५ ॥
अन्योन्यद्वेष्यभावाच्च वर्तते च विधिः सुत। कश्चिद्विप्रो धर्मपरो वेदशास्त्रार्थसाधकः ॥ ६ ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात्। तद्वित्तं ग्राहयामास शूद्रो म्लेच्छजनैः सह ॥ ७ ॥
लंघनाय मतिं चक्रे ब्राह्मणो भार्यया सह। भर्त्सनैस्तर्जनाद्यैस्तु न शूद्रेणार्पितं धनम् ॥ ८ ॥
दिनैः कतिपयैरेव शूद्रो हि यवनैः सह। ब्राह्मणं भर्त्सयामास ब्राह्मणः क्रोधसंकुलः ॥ ९ ॥

तदर्थमपि मातश्च स्वात्मघातं चकार ह । गर्भयुक्ता तु भार्या वै भर्तारं पृष्ठतोऽन्वगात् ॥ १० ॥
द्रव्यं तस्यापि सर्वस्वं म्लेच्छराजेन तत्तदा । किञ्चित्काले गते कैश्चिच्छूद्रो म्लेच्छैर्हि घातितः ॥११॥
ततो वै निरये वत्स वर्षायुतसहस्रकम् । पपाच नरके घोरे शूद्रो देहेन वै तदा ॥ १२ ॥
पश्चान्मानुष्यमापन्नो दानधर्मप्रभावतः । तत्र यत्नशतेनापि ह्यपत्यं नैव जायते ॥ १३ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं स्वामिन्येन पापक्षयो भवेत् । निष्कृतिं सकलां ब्रूहि नारीणां हितकाम्यया॥१४॥

श्रीसूर्य उवाच ।

तीर्थे संवत्सरं सेवा ह्येकचित्तेन दम्पती । श्रवणं हरिवंशस्य विप्रस्योद्वाहनं तथा ॥ १५ ॥
तावन्निष्कृतयो भूयः क्रमेणानेन यास्तदा । सुशुभे भूप्रदेशे तु गोमयाद्युपचर्चिते ॥ १६ ॥
कुर्यादष्टदलं पद्मं चित्रवर्णं सुशोभनम् । तन्मध्ये रुक्मिणीयुक्तं माधवं कलशेऽर्चयेत् ॥ १७ ॥
सौवर्णं राजतं पद्मं सायुधं सचतुर्भुजम् । उपचारैः शुभैर्गन्धैर्धूपैश्च कुसुमादिभिः ॥ १८ ॥
जनन्यालाहितं भूयः प्रद्युम्नाद्यांस्तथार्चयेत् । चारुदेहं चारुबाहुं चारुगुप्तं यशस्विनम् ॥ १९ ॥
श्रीवत्साङ्कं पीतवस्त्रं सुचारुं पूजयेत्क्रमात् । पूजनं विष्णुसूक्तेन तथा श्रीरसकोविदैः ॥ २० ॥
पुष्पैः सगन्धधूपैश्च ह्यर्चयेद्विष्णुधारणैः । तद्विप्रासोऽयं तद्विष्णोरनेद्यादिभिस्तथा ॥ २१ ॥
शतमष्टोत्तरं हुत्वा चरुं द्रव्यसमन्वितम् । नानासुखैश्वर्ययुतो गजाश्वरथवाहनैः ॥ २२ ॥
बन्धुभृत्याधिकाराढ्यो वस्त्रभूषणभूषितः । सर्वं विष्णुप्रसादाच्च सुखं पापफलं शृणु ॥ २३ ॥
धूर्तो मिथ्याप्रवादी च बहुलोभसमन्वितः । जातसन्ततिदुःखार्तो बालवत्सवधादिह ॥ २४ ॥
नेत्ररोगान्वितो नित्यं शृणु चिह्नं खगेश्वर । चत्वारिंशन्मिते, वर्षे सर्वसन्ततिनाशनम् ॥ २५ ॥
गृहपापान्महाभाग वृष्टिरिष्टसमुद्भवात् । पूर्वपापफलस्यात्र भोगादेव क्षयः स्मृतः ॥ २६ ॥

अरुण उवाच ।

निष्कृतिं वद मे स्वामिन्बालवत्सात्रनाशिनीम् । यां कृत्वा विधिवज्जन्तुः पूर्वपापात्प्रमुच्यते॥२७॥

श्रीसूर्य उवाच ।

प्रायश्चित्तं सुत शृणु तद्वर्षानन्तरं सुत । तस्मिन्वर्षे महाभाग प्रायश्चित्तं न विद्यते ॥ २८ ॥
इदकर्मार्जितात्पापाच्च चोक्तं पापशोधनम् । श्रवणाद्धरिवंशस्य वैशाखे विधिनाण्डज ॥ २९ ॥
माघे वा कार्तिके वापि दद्यावृत्त्या विधानतः । ततस्तु भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ ३०॥
कोटिलक्षायुतं सूत रुद्राध्यायं जपेत्तथा । धेनूनां दशकं दद्यात्सवत्साभरणान्वितम् ॥ ३१ ॥
दद्याच्च कपिलामेकां स्वर्णशृङ्गीं पयस्विनीम् । प्रायश्चित्तमिदं पुत्र यः कुर्याद्विधिपूर्वकम् ॥३२॥
तस्य पुत्रविवृद्धिः स्याद्विवाहादपरात्सुत । मृत्युः पञ्चाशदब्दे तु खग चाकृतनिष्कृतेः ॥ ३३ ॥
प्रायश्चित्ते कृते त्वत्र नवत्यब्दमितं तथा । द्वियुक्तमायुः कथितं तीर्थपुण्याश्रयेण्डज ॥ ३४ ॥
जीवे कर्कटगे तत्र चन्द्रे मकरराशिगे । त्रयोदश्यां दिवाभूमौ ऋक्षे मृगशिरोऽभिधे ॥ ३५ ॥
निर्याणं कथितं तस्य विष्णुपूजनजात्फलात् । भविष्यति गतिस्तस्य शुभा विष्णुप्रपूजनात्॥३६॥
वधा तृतीये जनुषि मरणं गोग्रहात्सुत । सर्वपापविशुद्धः स्यात्पुनर्मोक्षमवाप्नुयात् ॥ ३७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदुत्तराष्टशताधिकसहस्रतमः ॥ १८४९ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग खररोमा प्रजायते। पूर्वजन्मनि यो हन्यात्स्वरं पापविमोहितः ॥ १ ॥
प्रायश्चित्तं परं तस्य पापस्य शृणु तत्त्वतः। निष्कत्रयं हिरण्यं च दद्याद्दोषप्रशान्तये ॥ २ ॥
ब्राह्मणाय दरिद्राय वेदवेदाङ्गवेदिने ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचाशदुत्तराष्टशताधिकसहस्रतमः ॥ १८९० ॥

श्रीसूर्य उवाच।

प्राग्भुक्तं गर्भपुष्टयर्थं कुक्कुटाण्डं खगेश्वर। न गर्भं धारयत्येषा प्राक्पापादण्डभक्षणात् ॥ १ ॥
कृत्वाण्डं विधिना तद्वद्धैरण्यं द्विपलात्मकम्। तदर्धमितकं वापि निजवित्तानुमानतः ॥ २ ॥
दत्त्वा द्विजाय विधिना आचरेच्छाङ्करं व्रतम्। फाल्गुनादौ चतुर्दश्यां कृष्णायां मासिमासि तु ३
पूजयेच्छकरं रात्रौ तथा जागरणेन च। भवन्ति सुलभाः पुत्राः सततं कृतनिष्कृतेः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपंचाशदुत्तराष्टशताधिकसहस्रतमः ॥ १८९१ ॥

श्रीसूर्य उवाच।

शृणु सूत महाभाग यत्कर्म कृतवान्पुरा। जीवोऽयं तत्फलं चात्र प्रवक्ष्यामि समासतः ॥ १ ॥
अभवत्प्राग्भवे विप्रो धर्मशास्त्रार्थकोविदः। राज्यप्रचारी बलवाञ्शूरो मन्त्री महायशाः ॥ २ ॥
संधिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः। गत्वा त्वरिपुरं तेन घातिताः शत्रवः पुरा ॥ ३ ॥
विश्वासाद्राजकार्येषु कृतं कर्मातिदुष्कृतम्। लुण्ठितं तत्पुरं तेन लोभोपहतचेतसा ॥ ४ ॥
पीडिता बहवो लोका द्रव्यलोभाकुलेन वै। स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम् ॥ ५ ॥
भुक्त्वातिदारुणान्सूत नरकान्घोरदर्शनान्। तथा पुण्यफलं पुण्यात्प्राप्य पुण्यावशेषतः ॥ ६ ॥
स्वर्णकारकुले जातो धूर्तो लोभपरः सदा। नानाचौर्यक्रियायुक्तो लोभवञ्चनतत्परः ॥ ७ ॥
महाभिमाननिरतः प्रियो राजजनेष्वपि। सुखैश्वर्यधनैर्युक्तो कुटुम्बभरणे दृढः ॥ ८ ॥
नानास्त्रीसुखसंयुक्तस्तथा पुत्रविवर्जितः। वक्ष्यामि निष्कृतिं सूत सर्वपापनिकृन्तनीम् ॥ ९ ॥
प्रयागे त्वथवा काश्यां स्थाप्य लिङ्गन्तु शोभनम्। पूजयेत्तु त्रिवर्षान्तं मन्त्रैस्तल्लिङ्गजैस्तथा १०॥
गन्धपुष्पोपचारैश्च नैवेद्यैर्बहुदीपकैः। सम्पूज्य विधिवद्देवं तदन्ते भोजयेद्द्विजान् ॥ ११ ॥
शिवभक्तांस्तथा शान्तान्पूजयेद्दक्षिणांशुकैः। नानाहिरण्यैर्विविधैस्तथा चाभरणैः शुभैः ॥ १२ ॥
अथवा शृणुयात्तत्र यजुर्वेदं विधानतः। ब्रह्मचर्येण सततं प्रायश्चित्तमिदं परम् ॥ १३ ॥
य एवं कुरुते भक्त्या पूर्वपापौघनाशनम्। सम्प्राप्य तत्र निर्याणं शिवलोकं हि गच्छति ॥ १४ ॥
कर्तव्यं ब्राह्मणद्वारा पूर्वमेतद्धि काश्यपे। नाधिकारोऽत्र शूद्रस्य वेदस्य श्रवणे क्वचित् ॥ १५ ॥
तप्ता शलाका देया वै शूद्रकर्णेऽतिदारुणा। श्रुतं पारायणं येन पापेनाक्रान्तचेतसा ॥ १६ ॥
आयुरब्दशतं तस्य कृतनिष्कृतिकस्य हि। प्रायश्चित्ते कृते सिद्धे जायते षष्टिवत्सरे ॥ १७ ॥
एतज्जन्मफलं प्रोक्तं सविधानं समासतः ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तराष्टशताधिकसहस्रतमः ॥ १८९२ ॥

श्रीसूर्य उवाच।

या नारी प्राग्भवे हन्यात्खरमत्रैव जन्मनि। खररोमसमान्यस्या रोमाणीह भवन्ति च ॥ १ ॥
ब्राह्मणाय तदा दद्यात्स्वर्णनिष्कत्रयं सुत। जायते सूक्ष्मरोमा सा विनतानन्दवर्धन ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपंचाशदुत्तराष्टशताधिकसहस्रतमः ॥ १८९३ ॥

श्रीसूर्य उवाच ।

या पुरा हारयेद्रीतिं नारी सा च खगाधिप । पिङ्गाक्षी जायते चात्र प्रायश्चित्तं परं शृणु ॥ १ ॥
रीतिं दद्यात्पलशतं तथा ब्राह्मणभोजनम् । गायत्र्या जुहुयाच्छक्त्या तिलान्रोगविनाशनम् ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतु पञ्चाशदुत्तराष्टशताधिकसहस्रतम ॥ १८५४ ॥

श्रीसूर्य उवाच ।

प्राग्भवे वनिता या च परसिद्धान्नहारिणी । सात्र जन्मनि शूलेन रोगेणैव च बाध्यते ॥ १ ॥
सिद्धान्नदानाद्विप्रेभ्यो दीनेभ्योऽथ खगेश्वर । भिक्षुभ्यश्च तथा दानाद्रसदानाच्च शक्तितः ॥ २ ॥
न जायते शूलपीडा तस्याश्च कृतनिष्कृतेः । प्रायश्चित्तेऽकृतेऽत्रैव म्रियते शूलपीडया ॥ ३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चपञ्चाशदुत्तराष्टशताधिकसहस्रतम ॥ १८५५ ॥

श्रीसूर्य उवाच ।

उष्ट्रघाती भवेत्पूर्वे जन्मन्यथ पतत्रिण । सोऽत्र जन्मनि जायेत नरश्च विकृतस्वरः ॥ १ ॥
वक्ष्यामि तस्य पापस्य नाशनं चात्र जन्मनि । कर्पूरं त्रिपलं दद्याद्विप्रेभ्यः शक्तितोऽण्डज ॥२॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षट्पञ्चाशदुत्तराष्टशताधिकसहस्रतम ॥ १८५६ ॥

श्रीसूर्य उवाच ।

वंध्येयं या महाभाग पृच्छति स्वं प्रयोजनम् । गर्भपातरता पूर्वं जनुष्यत्र फलं त्विदम् ॥ १ ॥
मुखजा प्राग्भवे त्वत्र तत्पापाद्यवनी हि सा । तन्निष्कृतिं प्रवक्ष्यामि गह्वाया हि खगाधिप ॥२॥
पूजयेल्लक्षरुद्रांस्तु तदर्द्धं वा तदर्धकम् । शतत्रयं भोजयेद्विप्रान्होमयेच्च स्वशक्तितः ॥ ३ ॥
अनेन विधिना या च प्रायश्चित्तं समाचरेत् । जायते सन्ततिस्तस्या इह जन्मनि वै ध्रुवम् ॥४॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तराष्टशताधिकसहस्रतम ॥ १८५७ ॥

श्रीसूर्य उवाच ।

कांस्यहारी [redacted] पुरुषो प्राग्भवे विनतासुत । शीर्षरोगेण सततं पीडितो जायतेऽधुना ॥ १ ॥
दानात्पलशतादत्र सीसकादण्डजोत्तम । विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तराष्टशताधिकसहस्रतम ॥ १८५८ ॥

श्रीसूर्य उवाच ।

बभूव बाहुजः कश्चिद्देशे कीराभिधे मुने । धर्मकर्मा साधुभक्तः पितृपुत्रधनान्वितः ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्यो हि शक्तितः । सर्वाण्यपि च पात्रेभ्यो गोभूम्यश्वादिकानि च ॥२॥
पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् । स्ववंशीयस्य कस्यापि गृहं शत्रोर्मनोहरम् ॥ ३ ॥
निर्दग्धं वैरिणाचासु रात्रौ भार्यासहायतः । तस्मिन्दग्धे महाबाहो निर्दग्धं वृषभद्वयम् ॥ ४ ॥
गृहस्थाः स्वल्पजीवाश्च घातिताः क्रूरकर्मणा । ततो बहुतिथे काले गतः स यमशासनम् ॥ ५ ॥
सस्त्रीकः स्वफलं भुक्त्वा पापादुष्टं शुभाच्छुभम् । ततः पञ्चनदे देशे स जातो बाहुजाधरः ॥ ६ ॥
मध्यमस्वरूपो मतिमान्कुलेष्टः पुरुषो दृढः । गौररक्तो नातिनीचो बहुकन्यः पृथुप्रभुः ॥ ७ ॥
यौवने तु सुखैश्वर्यधनैः स्थानैर्युतायुतः । मितदो भोगनाम्याढ्यः कृती मानी जनप्रियः ॥८॥

पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। चिन्तातुरश्च पूर्वश्च दुःखार्तो मानवर्जितः ॥ ९ ॥
गोघातादग्निदाहाच्च जातपुत्रविनाशकः। सद्दायलक्षणं सर्वं कथयामि खगेश्वर ॥ १० ॥
या स्त्री पूर्वं सहायासीद्दाहकर्मणि चाण्डज। सा ज्येष्ठा मद्गृहेऽत्र मृतपुत्रात्र जन्मनि ॥ ११ ॥
लक्ष्मैतदण्डजश्रेष्ठ जन्माङ्काद्वृषभे शनिः। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
कारयित्वा शिवं साङ्गं पलैर्दशमितैः शुभैः। हिरण्मयं महाभाग पत्रे लेख्यं शिवान्वितम् ॥१३॥
तदर्धमितकं वापि निज वित्तानुमानतः। पूजयित्वा तु गन्धाद्यैः षोडशोपचारकैः ॥ १४ ॥
संस्थाप्य विश्रुतं पश्चाद्दोरथे सुमनोरमे। सर्वोपस्करसंयुक्ते वितानाम्बरभूषिते ॥ १५ ॥
दद्याद्वेदविदिविप्राय मन्त्रमेतमुदीरयन् ॥ १६ ॥

मंत्रः।

"मोहात्पूर्वं महापापमग्निदाहाचदर्जितम्। तन्नाशाय ददेऽहं तु शिवं गोरथसंस्थितम्" ॥ १७ ॥
गोधिकाद्यास्तथा जीवाः पत्रे लेख्यास्तु राजते। शिवपत्रमिदं दद्याच्चे चान्ये घातिताः पुरा॥१८॥
पञ्चमाषमितो वह्निर्देयो हेममयः शुभः। गायत्र्यष्टसहस्रं तु रौद्रं जप्त्वा सहस्रकम् ॥ १९ ॥
अष्टाक्षरं द्विसाहस्रं होमयेद्भोजयेद्द्विजान्। य एवं कुरुते सूत प्रायश्चित्तं विधानतः ॥ २० ॥
न तस्य पुत्रमरणं तद्ग्रे जायते क्वचित्। जायन्ते सुलभाः पुत्रा आधिव्याधिविवर्जिताः॥ २१ ॥
चत्वारिंशन्मितकोने वर्षे रिष्टं मकीर्तितम्। पञ्चाशन्मितकेऽब्दे वा रिष्टं चाकृतनिष्कृतेः ॥ २२ ॥
प्रायश्चित्ते कृते त्वायुश्चतुःसप्तमिताब्दकम् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९९ ॥

श्रीसूर्य उवाच।

कांस्यहारी तु पुरुषः प्राग्भवे विनतासुत। शीर्षरोगेण सततं पीडितो जायते त्विह ॥ १ ॥
दानात्पलशतादत्र सीसकस्याण्डजोत्तम। विप्राय वेदविदुषे शीर्षरोगं न पश्यति ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६० ॥

श्रीसूर्य उवाच।

वन्ध्यायाश्च महाभाग प्रायश्चित्तमतः शृणु। शूलोद्भिन्नतनुं चौरं मृतं प्राप्य रवेर्दिने ॥ १ ॥
तत्तले तु तदा कुर्याद्वन्ध्या स्नानं शतौषधैः। पञ्चवृक्षोद्भवैः सूत तथा मृद्भिश्च सप्तभिः ॥ २ ॥
तीर्थोदकैः समन्वैश्च तं पूज्य प्रथमं सुत। विधिनानेन या कुर्याद्वन्ध्या पुत्रं लभेद्ध्रुवम् ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६१ ॥

श्रीसूर्य उवाच।

सतीं स्वभार्यां परमां साध्वीं सन्त्यज्य दुर्मतिः। प्रमादात्प्राग्भवे गच्छेदन्यां स्त्रीं काममोहितः १
सोऽत्र जन्मनि भोः सूत ग्रहणीरोगसंयुतः। जायते म्रियतेऽवश्यं ब्राह्मणीगमनादिह ॥ २ ॥
न तस्य पापशमनं मया प्रोक्तं खगाधिप। तस्मिन्वयसि वै रोगी भविष्यति न संशयः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६२ ॥

श्रीसूर्य उवाच।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी। सात्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥

दद्यात्पलशतं सीसं ब्राह्मणाय कुटुम्बिने । तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६३ ॥

## श्रीसूर्य उवाच ।

या नारी ह्यनधीत्पूर्वं मोहाद्दुष्टं खगाधिप । सात्र जन्मनि पक्षीन्द्र जायते विकृतस्वरा ॥ १ ॥
सरस्वत्याश्च प्रतिमां सौवर्णीं राजतीं तथा । दद्याद्द्विविधिज्ञाय तदा स्यात्सुस्वराण्डज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६४ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि यः कश्चिन्मोहात्परघृतं हरेत् । नेत्ररोगयुतः सोऽपि जायतेऽत्रैव जन्मनि ॥ १ ॥
घृतधेनुप्रदानाच्च विधिना वेदवेदिने । मुच्यते नेत्ररोगाच्च जन्मनीह खगेश्वर ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चषष्ट्युत्तराष्टशताधिकसहस्रतमः॥ १८६५ ॥

## श्रीसूर्य उवाच ।

स्वकं पतिं परित्यज्य या गच्छेत्पूर्वजन्मनि । परपुंसि महाभाग ग्रहणीरुग्युतात्र सा ॥ १ ॥
प्रायश्चित्तं परं तस्या व्रतं चान्द्रायणं त्विह । वैशाखे माघमासे वा तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६६ ॥

## अरुण उवाच ।

विप्रवर्णकुलोत्पन्नो वातरक्ताक्षदर्शनः । उदरे वातजा रोगाः किञ्चिच्छस्त्रोपघातवान् ॥ १ ॥
किञ्चित्क्रोधश्च लोभश्च किञ्चिद्दित्तसमन्वितः । तस्य प्रिया शुभाचारा पतिभक्तिपरायणा ॥ २ ॥
एकापत्यं भवेत्तस्य तच्च वै मृतपुत्रकः । आदिपुत्रो मृतस्तस्यापत्यं नान्यत्प्रजायते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

## श्रीसूर्य उवाच ।

पूर्वजन्मनि सद्बुद्धे शूद्रवंशसमुद्भवः । व्यापारकृषिवाणिज्यं ब्रह्मवित्तेन चाकरोत् ॥ ५ ॥
व्यवहारादिना सर्वं ब्रह्मवित्ताद्व्यवर्धयत् । कालेनैव मृतो विप्रो धनं शूद्रेण वञ्चितम् ॥ ६ ॥
नार्पितं ब्रह्मपुत्राय ब्रह्मस्वं च गृहे स्थितम् । ब्रह्मस्वं भक्षितं तेन बहुकालं खगेश्वर ॥ ७ ॥
पश्चान्मृत्युवशं प्राप्तो नरके रौरवे गतः । ब्रह्मस्वभक्षणाच्चैव वर्षाणाश्च सहस्रकम् ॥ ८ ॥
पतितो नरके घोरे पक्वस्तत्र स्वकर्मणा । पश्चान्मानुष्यमापन्नो व्रतदानप्रभावतः ॥ ९ ॥
इदं तृतीयं वै जन्म ब्रह्मवंशसमुद्भवम् । निक्षेपहरणाद्धापि मृतपुत्रः प्रजायते ॥ १० ॥
ब्राह्मणस्य विशेषेण ब्रह्मस्वं विषमेव हि । ऋणं प्रसह्य वै प्रोक्तमपि कल्पशताधिकम् ॥ ११ ॥
तस्माद्विप्रर्णदोषाद्धि ह्यपत्यं नैव जायते ॥ १२ ॥

## अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पुत्रः प्रजायते । नारीणां च नराणाञ्च निष्कृतिं श्रेयसे वद ॥ १३ ॥

## श्रीसूर्य उवाच ।

महापापहरो देवः सर्वकामप्रदः प्रभुः । पूजनीयो महारुद्रः सन्ततिश्रेय इच्छता ॥ १४ ॥
यजुर्वेदमयं देवं यजुर्भिः शतरुद्रियैः । यजमानः प्रमुच्येत पापादाकल्पसम्भवात् ॥ १५ ॥
रुद्रैकादशिनीभिश्च रुद्रैकादशकेन वा । यत्नतस्तोषयेद्देवं रुद्रमेकादशात्मकम् ॥ १६ ॥

तद्दशांशेन होतव्यं द्रव्यं श्रद्धासमन्वितम्। विधिवज्जुहुयाद्दर्भो तिलैस्त्रिमधुराप्लुतैः ॥ १७ ॥
हरितालीपलाशोत्थाः समिधोऽत्र हुनेत्सुधीः। प्रतिरुद्रं प्रदातव्यं गोयुगं रशनान्वितम् ॥ १८ ॥
केयूरकुण्डलाकल्पमन्त्रपुष्पकमण्डलु । प्रतिरुद्रं शतं विप्रान्भोजयेत्सुसमाहितः ॥ १९ ॥
निष्कं दद्यात्सुवर्णस्य दद्याद्वा मुख्यदक्षिणाम्। एवं रुद्रविधिं कृत्वा त्रिविधं नाशयेदघम् ॥२०॥
इतिहासपुराणोक्तीः सूक्तानि विविधानि च। शृणुयाद्विधिवत्कर्ता सभार्यः प्रीतितोऽन्वहम् २१ ॥
देवर्षिपितृमर्त्यानामृषीणाञ्च महीक्षिताम् । देवदानवगन्धर्वपिशाचोरगरक्षसाम् ॥ २२ ॥
सर्वासां जीवजातीनामुत्पत्तिं शृणुयादपि। ऋषीणामृषिपत्नीनां वंशान्सर्वाननुदीरितान् ॥ २३ ॥
एवं वै त्रिविधात्पापान्मुच्यतेऽपत्यदुःखदात्। गुरून्देवाद्विजान्सम्यक् श्रद्धया समुपाचरेत्॥२४॥
एवंकृतविधिः सूत हरिवंशश्रुतार्थकः । वाचकोपरि सन्तुष्टो भूमिद्रविणवस्त्रकैः ॥ २५ ॥
मुद्राकर्णकतुरगं गां दत्त्वा तु पयस्विनीम् । भूमिद्रविणदानाद्यैस्तोषयेद्विजपुङ्गवान् ॥ २६ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६७ ॥

श्रीसूर्य उवाच।

ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् । तेन कर्मविपाकेन नानासन्ततिनाशनम् ॥ १ ॥
यो वै तस्य मृतः पुत्रः सञ्जातो ब्राह्मणः स च। इदं चतुर्थं वै जन्म ब्रह्मवंशसमुद्भवम् ॥ २ ॥
भार्या दुःखकरी नित्यं पुत्रहीना खगाधिप ॥ ३ ॥

अरुण उवाच।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि देवेश सन्ततेः सौख्यहेतवे ॥ ४ ॥

श्रीसूर्य उवाच।

ब्रह्मस्वं विषतुल्यं हि पुत्रपौत्रादिनाशनम् । विषेणैको हि म्रियते ब्रह्मस्वात्सुतसन्ततिः ॥ ५ ॥
तस्य सन्ततिरक्षार्थं कारयेन्निष्कृतिं शुभाम् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ ६ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः । तन्मध्ये स्थापयेत्ताम्रमयं वै कुम्भमव्रणम् ॥ ७ ॥
सुशीतसलिलापूर्णं सर्वौषधिपल्लवम् । नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ ८ ॥
तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यफलोपेतं वरवस्त्रचन्दनान्वितम् ॥ ९ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम्। सुवर्णस्य विशुद्धां च दद्यात्तां वेदवादिने ॥१० ॥
प्रतिष्ठापूजने कृत्वा ततो गां वै सवत्सकाम्। शतमष्टोत्तरं हुत्वा द्रोणाः सप्तैव निर्मिताः ॥११ ॥
जातीलक्षप्रसूनैस्तु कुर्यात्पूजां शिवोपरि। संकटान्मोचयेद्धेनुं दम्पती परिधापयेत् ॥ १२ ॥
एवं कृतविधेः सूत निश्चला सन्ततिर्भवेत् ॥ १३ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्युत्तराष्टशताधिकसहस्रतमः ॥ १८६८ ॥

श्रीसूर्य उवाच।

या काचिद्वनिता मोहात्प्राग्भवे माक्षिकं हरेत्। सात्र जन्मनि पक्षीन्द्र दुर्गन्धाढ्या प्रजायते ॥१॥
मधुधेनुप्रदानाच्च व्यतीपातादिपर्वसु । दुर्गन्धरोगात्सततं मुच्यते सा खगेश्वर ॥ २ ॥
पण्डश्च राजसम्मानी चेह जन्मनि जायते । महादुष्टक्रियायुक्तो वधबंधनतत्परः ॥ ३ ॥
स कृतात्तु महादानात्सुखैश्वर्यधनान्वितः। महामानी महाधूर्तः पण्डोऽगम्यातिसेवनात् ॥ ४ ॥
नेह जन्मनि भोः सूत प्रायश्चित्तं मयोदितम्। अगम्यागमनं पापं प्रायश्चित्तविवर्जितम् ॥ ५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तराष्टशताधिकसहस्रतमः ॥ १८६९ ॥

श्रीसूर्य उवाच ।

ब्रह्मघ्नी सा समाख्याता या पूर्वं घातयेद्द्विजम् । सर्वं विचेष्टितं तस्याः शृणु चेह खगाधिप॥१॥
जनया द्रव्यलोभेन सपत्न्या घातितः सुतः । प्राग्भवे विषदानेन सर्वदोषविवर्जितः ॥ २ ॥
तस्मादियं महादुष्टा बाल्ये कुष्ठान्विता सुत । अविवाह्या यतः सर्वैः पितृगेहे स्थिताण्डज ॥३॥
महादोषवती पापाज्जातात्र यवनी सुत । भविष्यति महारिष्टमग्निदाहेन चाण्डज ॥ ४ ॥
चतुर्विंशे तथा वर्षे मरणं कीर्तितं ध्रुवम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तत्युत्तराष्टशताधिकसहस्रतम ॥ १८७० ॥

श्रीसूर्य उवाच ।

वराहं यो नरो हन्यात्प्राग्भवे विनतासुत । जायते दन्तुरः सोऽपि काले तत्पापचिह्नितः ॥ १ ॥
घृतकुम्भं स वै दद्याच्छक्त्या विप्राय धीमते । सुवर्णसहितं तेन तस्मात्पापात्प्रमुच्यते ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकसप्तत्युत्तराष्टशताधिकसहस्रतम ॥ १८७१ ॥

श्रीसूर्य उवाच ।

यो हरेत्प्राग्भवे सूत गुडं मोहान्नराधमः । गुल्मोदरेण रोगेण सोऽत्र जन्मनि पीड्यते ॥ १ ॥
गुडधेनुप्रदानाच्च विधिना ब्राह्मणाय च । गुल्मोदरसमुद्भूता पीडा नश्यति तत्क्षणात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तराष्टशताधिकसहस्रतम ॥ १८७२ ॥

श्रीसूर्य उवाच ।

अथ काचित्सती नारी धर्मिष्ठा प्रियवादिनी । स्वामिप्रेरितया शत्रोः पूर्वं दग्धं तया गृहम् ॥१ ॥
तद्दाहाच्च महाभाग दग्धं सर्वं पुरं तदा । ब्राह्मणस्यैकबाला च निर्दग्धा दोषवर्जिता ॥ २ ॥
ततो ब्रह्मवधात्तत्र किञ्चित्कालेऽपि सा मृता । भुक्त्वा फलानि सर्वाणि पुण्यपापभवानि वै ॥ ३ ॥
सा शूद्री यमुनातीरे जातेह पतिसेवया । कुष्ठरोगयुता बाल्ये निष्कृतिं पापनाशिनीम् ॥ ४ ॥
वक्ष्यामि वृषभं दद्यात्सर्वोपस्करसंयुतम् । कुष्ठरोगात्प्रमुच्येत नात्र कार्या विचारणा ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिसप्तत्युत्तराष्टशताधिकसहस्रतम ॥ १८७३ ॥

श्रीसूर्य उवाच ।

प्रागासीद्ब्राह्मणः कश्चि कृषिकर्मरतस्तदा । पूजकश्चातिथीनां च भिक्षुकाणां च यत्नतः ॥ १ ॥
तद्गृहे वृषभो मत्तो तीक्ष्णशृङ्गो भयानकः । तेन तद्वृषभस्यापि प्राग्भवे विनतासुत ॥ २ ॥
छित्त्वा नासाग्रमुष्कौ तु कृतं कर्मातिदारुणम् । तत्र तज्जनितं भुक्त्वा फलं पापसमुद्भवम् ॥ ३ ॥
जातोऽत्र यवनः सिन्धुमण्डले पर्वताश्रिते । षण्ढस्तु तेन पापेन स चास्त्यत्र खगेश्वर ॥ ४ ॥
धर्मात्पूर्वकृतात्सोऽपि सुखैश्वर्यधनान्वितः । दृढार्जितस्य पापस्य प्रायश्चित्तं न विद्यते ॥ ५ ॥
पूजनादतिथीनांश्च भविष्यति च सद्गतिः । तीर्थाश्रयेऽत्र जन्तुर्हि मृत्युस्तस्य प्रकीर्तितः ॥ ६ ॥
आयुर्द्व्यष्टिमितान्द्रान्तं रिष्टं पञ्चशरद्रके ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय चतुःसप्तत्युत्तराष्टशताधिकसहस्रतम. ॥ १८७४ ॥

श्रीसूर्य उवाच ।

घातयेद्या पुरा नारी वराहं गरुडाग्रज । दन्तुरा सा भवेदत्र तत्काले वातसम्भवे ॥ १ ॥
ताम्रकुम्भं सुवर्णाढ्यं घृतपूर्णं सदक्षिणम् । तद्दोषशमनायैव दद्याच्छक्त्या विधानतः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तराष्टशताधिकसहस्रतमः ॥ १८७५ ॥

श्रीसूर्य उवाच ।

तैलहारी तु यः कश्चिद्वेल्लोभात्पुराभवे । कण्डूरोगेण सततं पीड्यते चात्र जन्मनि ॥ १ ॥
शक्त्या तैलप्रदानाच्च ब्राह्मणाय खगेश्वर । कण्डूरोगप्रशमनं दानात्तैलघटद्वयात् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तराष्टशताधिकसहस्रतमः ॥ १८७६ ॥

श्रीसूर्य उवाच ।

काचिच्छुभानना पूर्वभवे चारणवल्लभा । भर्तृत्यक्ताविविन्ना सा महारोपवती ह्यभूत् ॥ १ ॥
तया महौषधैर्दिव्यैः पत्युः पुंस्त्वं विनाशितम् । तेन पापप्रभावेण जातोऽत्रायं नपुंसकः ॥ २ ॥
धूर्तः पापरतो दुष्टः सर्वधर्मविवर्जितः । वर्णबाह्योऽतिदुःखार्तो न शुभां लभते गतिम् ॥ ३ ॥
बहुजन्मस्वसौ पापान्मुक्तो भवति चाण्डज ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तराष्टशताधिकसहस्रतमः ॥ १८७७ ॥

श्रीसूर्य उवाच ।

स्वभक्ष्यार्थं महाभाग यो हन्याद्वायुवाहनम् । अत्र जन्मनि खञ्जोऽपि नात्र कार्या विचारणा ॥१॥
न तस्य निष्कृतिः प्रोक्ता जन्मनीह खगाधिप । स्वशरीरविवृद्ध्यर्थं येन भुक्तो मृगः पुरा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तराष्टशताधिकसहस्रतमः ॥ १८७८ ॥

श्रीसूर्य उवाच ।

या नारी प्राग्भवे मोहाद्गुडं हरति कस्यचित् । गुल्मोदरेण रोगेण पीड्यते सात्र जन्मनि ॥ १ ॥
गङ्गायां हि महाभाग गुडधेनुप्रदानतः । निष्कृतिं सा चरेत्सूत सर्पिष्यात्मानमीक्षयेत् ॥ २ ॥
ऐहिकं लक्षणं तस्याः शरीरे चोपजायते । जन्मक्रमेण जायन्ते दुःखान्यकृतनिष्कृतेः ॥ ३ ॥
कुष्ठरुक्चानपत्यत्वं प्रमेहार्तिर्धनक्षतिः । कुनखी दुर्बलः पाण्डुरोगी जन्मक्रमाद्भवेत् ॥ ४ ॥
भीतिरग्नेश्चोरतश्च राज्ञो वित्तव्ययादिकम् । लकुटग्रावशस्त्राद्यैर्जायन्ते व्रणजार्तयः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तराष्टशताधिकसहस्रतमः ॥ १८७९ ॥

श्रीसूर्य उवाच ।

अथ सूर्यदिने सूत प्राप्य भूमिं श्मशानजाम् । मृतप्रेतं समालोक्य रात्रौ गच्छेदतन्द्रितः ॥ १ ॥
पूजयित्वा चितां तस्य बलिमष्टविधं सृजेत् । स्नानं कृत्वा मृदालम्भैः पत्रैर्वृक्षोद्भवैस्तथा ॥ २ ॥
शतच्छिद्रघटस्थैस्तु नानातीर्थोद्भवैर्जलैः । दीपमालादिने वापि प्रयोगं विधिना चरेत् ॥ ३ ॥
हरिवंशं ततः पश्चाच्छृणुयाद्विधिपूर्वकम् । दत्त्वा द्विजेभ्यो विधिना नानाभक्ष्यफलानि च ॥ ४ ॥
स्वेच्छया भोजनं तेभ्यो दद्याद्दोषापनुत्तये । नारी प्रयोगेणानेन वंध्या याति सपुत्रताम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तराष्टशताधिकसहस्रतमः ॥ १८८० ॥

### श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ वैश्यश्चात्र जन्मनि वातुजः । देवद्रव्यापहरणात्पापगात्राक्षिनपीडितः ॥ १ ॥
विंशे वर्षे व्यतीते च नेत्रभंगो जनिष्यते । तद्रक्षार्थमहं वक्ष्ये दानं पापहरं परम् ॥ २ ॥
कृत्वा देवगृहं रम्यं प्रतिष्ठाप्य सुराधिपम् । गन्धपुष्पैः समभ्यर्च्य दीपा देयाः सुवर्णजाः ॥३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८१ ॥

### श्रीसूर्य उवाच ।

पूर्वजन्मन्यसौ विप्रश्चक्रे मुष्कनिकृन्तनम् । वृषभस्य महाभाग स्वार्थसाधनतत्परः ॥ १ ॥
तेन वै कर्मणा सोऽत्र षण्ढश्चैवापवर्णजः । गवां पालनजात्पुण्यादत्रासौ सुखसंयुतः ॥ २ ॥
गोपीडनान्महापापात्तस्य नैवात्र निष्कृतिः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८२ ॥

### श्रीसूर्य उवाच ।

या काचिल्ललना पूर्वं मोहात्परघृतं हरेत् । सात्र जन्मनि रोगेण नेत्रोत्थेन प्रपीड्यते ॥ १ ॥
कुरुक्षेत्रादितीर्थेषु घृतधेनुप्रदानतः । मुच्यते सा महारोगान्नेत्रजान्नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८३ ॥

### श्रीसूर्य उवाच ।

महिषीमवधीत्पूर्वभवे यो वै नराधमः । सोऽत्र जन्मनि पक्षीन्द्र कृष्णगुल्मयुतो भवेत् ॥ १ ॥
स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषिताम् । सूक्ष्मकम्बलयुक्तां च दद्याद्वेदविदे सुत ॥ २ ॥
कृष्णगुल्मोत्थितां पीडां नरश्चात्र न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८४ ॥

### श्रीसूर्य उवाच ।

प्राग्भवे या भवेत्काचित्स्वर्णकारी खगेश्वर । तद्गृहे धान्यराशिं तु चरन्ती गौः स्वभावतः ॥ १ ॥
ताडिता कुक्षिभागे तु लकुटेन भृशं सुत । तत्ताडनान्महादुःखं प्राप्ता गर्भातिभारतः ॥ २ ॥
मृता च तेन दुःखेन गर्भजातसमन्विता । तेन वै कर्मणा युक्ता सप्तमासोचिताऽसनम् ॥ ३ ॥
पुनः शूद्री हि सञ्जज्ञे गौरवर्णा शुभानना । धनभृत्यैश्च भोगाद्यैविभवैः संयुता हि सा ॥ ४ ॥
पुत्रसन्ततिहीना वै प्राग्गोघातावसम्भवात् । प्रायश्चित्तं प्रवक्ष्यामि सर्वपापविनाशनम् ॥ ५ ॥
कुर्याद्वापीमरण्ये तु देशे लोकाकुले तथा । मार्गे हि धर्मतो यत्नात्प्रतिमां कारयेत्ततः ॥ ६ ॥
संस्थाप्य च शिवं तत्र विधिना विनतासुत । होमयेच्च चरूंस्तत्र तिलाज्यान्नयुतानिह ॥ ७ ॥
भोजयेद्ब्राह्मणान्भक्त्या शिवपूजनतत्परान् । दद्यात्तथैका कपिलां सर्वपापप्रणाशिनीम् ॥ ८ ॥
प्रायश्चित्तमिदं सूत पूर्वजन्माघनाशनम् । नैवं या कुरुते श्रुत्वा तस्याः सन्ततिजं भयम् ॥ ९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचाशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८५ ॥

### श्रीसूर्य उवाच ।

यः कश्चित्प्राग्भवे सूत दुग्धं हरति मानवः । तत्काले पापवानत्र बहुमूत्री प्रजायते ॥ १ ॥
दुग्धधेनुप्रदानाच्च विधिना त्वत्र जन्मनि । बहुमूत्रान्महारोगान्मुच्यते गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडशीत्युत्तराष्टशताधिकसहस्रतम ॥ १८८६ ॥

श्रीसूर्य उवाच।

दुग्धं हरति या नारी कस्यचित्पापमोहिता। पूर्वजन्मनि सात्रैव बहुमूत्ररुजाकुला ॥ १ ॥
दुग्धधेनुप्रदानाच्च वेदवेदाङ्गवेदिने। विधिना काश्यपे चात्र न पश्येद्बहुमूत्रकम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्ताशीत्युत्तराष्टशताधिकसहस्रतमः ॥ १८८७ ॥

श्रीसूर्य उवाच।

यो मोहाद्घातयेत्सूत महिषीं नवयौवनाम्। प्राग्भवे नियतं सूत कृष्णगुल्मात्प्रबाध्यते ॥ १ ॥
स नरो रत्नदानेन विधिना गरुडाग्रज। नाशयेत्कृष्णगुल्मोत्थां पीडामत्रैव जन्मनि ॥ २ ॥
अथवा महिषीदानाद्विमाय विधिनाण्डज। महिषीपापजाद्रोगात्सुखी भवति मानवः ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाशीत्युत्तराष्टशताधिकसहस्रतमः ॥ १८८८ ॥

श्रीसूर्य उवाच।

यः कुर्यात्पापलोभेन पूर्वं मुष्कनिकृन्तनम्। ब्रह्मपुत्रस्य षण्डः स्यादत्र जन्मनि निश्चयात् ॥ १ ॥
ज्ञानाज्ञानकृतं वापि निष्कृतिर्नात्र विद्यते। ब्रह्मघातान्महापापात्षण्डः स्याद्बहुजन्मसु ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोननवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८८९ ॥

श्रीसूर्य उवाच।

बभूव फलहृत्काचित्प्रमादाद्विनतासुत। पूर्वजन्मनि पुण्यापि बहुदानरता सती ॥ १ ॥
अत्र सा क्षत्रिया जाता प्रागपि क्षत्रियाण्डज। अत्र पुत्रविहीना सा फलहृत्पापतो ध्रुवम् ॥ २ ॥
फलानां बहुदानाच्च चातुर्मास्येऽत्र नित्यशः। भोजनं तु तदा पश्चात्कारयेत्स्वेच्छया द्विजान् ॥ ३ ॥
प्रायश्चित्तं परं तस्मात्फलहृत्पापनाशनम्। अमायां नारिकेलानि देयानि खलु शक्तितः ॥ ४ ॥
तत्कृते सुतवृद्धिः स्याज्जीवनं चाब्दसप्ततिम् ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९० ॥

श्रीसूर्य उवाच।

दधिहारी पुमान्पूर्वं जन्मन्यत्र खगेश्वर। जायते मेदसा युक्तस्तद्दुःखेन प्रपीडितः ॥ १ ॥
कार्त्तिक्यामथ वैशाख्यां दधिधेनुप्रदानतः। तस्माद्रोगाद्विमुच्येत तत्काले गरुडाग्रज ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९१ ॥

श्रीसूर्य उवाच।

महिषीघातनाकारी प्राग्भवे विनतासुत। अत्र जन्मनि पक्षीन्द्र कृष्णगुल्मेन पीड्यते ॥ १ ॥
दद्यात्साभरणां सूत महिषीं यमदैवताम्। युतकम्बलसंछन्नां विधिना नवयौवनाम् ॥ २ ॥
सा मुच्यते महापापान्महिषीवधजात्सुत। तस्मिन्नेव कृते दाने कृष्णगुल्मं न पश्यति ॥ ३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९२ ॥

श्रीसूर्य उवाच।

विद्धे प्राग्भूपमाणाश्च नासाग्रे गरुडाग्रज। नासाछेदोऽत्र तस्यास्ति यूनि भावे विनिश्चयात् ॥ १ ॥
नास्ति तन्निष्क्रिया कापि दत्तैर्दानशतैरपि ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९३ ॥

श्रीसूर्य उवाच।

कश्चिदासीन्महाभाग चारणोऽतिप्रियंवदः । कवित्वशक्तिनिरतो बहुचारणसंयुतः ॥ १ ॥
प्रेरितो दैवयोगेन गतो राजाश्रयं प्रति । तत्सेवानिरतो नित्यं चिरकालमुपस्थितः ॥ २ ॥
अथ तत्र महावादे कवीनां हि खगेश्वर । महाघोरमभूद्युद्धं राजद्वारे भयप्रदम् ॥ ३ ॥
स चारणो महाक्रोधात्कृतवानात्मघातनम् । परघातकृते सूत स्वशरीरमथात्यजत् ॥ ४ ॥
तेन कर्मविपाकेन महाचौर्येण चाण्डज । भुक्त्वा स्वर्गफलं पुण्यमात्मघातात्परिच्युतः ॥ ५ ॥
महाभूमिभुजां वंशे म्लेच्छानां जनितः स्वयम् । सिन्धोः पश्चिमभागे तु शतयोजनसम्मिते ६ ॥
देशे कर्कटगे जीवे लग्नस्थे चंद्रसंयुते । गौराङ्गः पृथुलो धूर्तः सर्वविद्याविशारदः ॥ ७ ॥
सुखैश्वर्यसमाक्रान्तो घनवाहनभोगभाक् । शूरः सुवेषोऽतिक्रूरो बहुपालनतत्परः ॥ ८ ॥
पापाल्लोभरतः क्रोधी नानाभैरवशासनः । रिष्टं षष्टिमिते वर्षे पञ्चहीने खगेश्वर ॥ ९ ॥
सर्ववित्तषडंशेन प्रायश्चित्तं समाचरेत् । पञ्चाशीतिमितायुः स्यादन्ते कालनरेण्डज ॥ १० ॥
प्रायश्चित्ते कृते ह्यत्र रिष्टं स्यात्प्रोक्तवत्सरे । कालरूपेण शस्त्रेण तत्क्षणे मरणं स्मृतम् ॥ ११ ॥
महाघोराहवे सूत चात्मघातादिदं फलम् । चिह्नं तस्य प्रवक्ष्यामि ह्यात्मघातसमुद्भवम् ॥ १२ ॥
हृदिस्थं लशुनं पुत्र षडंगुलमितं शुभम् ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्णवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९४ ॥

---

श्रीसूर्य उवाच।

दधिप्रहरणे नारी प्राग्भवे स्वत्र जन्मनि । मेदसा पीड्यते सूत विनतानन्दवर्धन ॥ १ ॥
दधिधेनुप्रदानाच्च ब्राह्मणाय कुटुम्बिने । मुच्यते तन्महारोगान्नात्र कार्या विचारणा ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९५ ॥

श्रीसूर्य उवाच।

तरक्षौ निहते पूर्वभवे च गरुडाग्रज । अत्र जन्मनि नेत्रेषु कातरत्वं प्रजायते ॥ १ ॥
रत्नधेनुमहादानाद्विधिना ब्राह्मणाय च । न पश्यत्याक्षिजं रोगं कातरोत्थं हि काश्यपे ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षण्णवत्युत्तराष्टशताधिकसहस्रतम ॥ १८९६ ॥

---

श्रीसूर्य उवाच।

प्राग्भवे सुमुखी काचिद्गता देवालयेण्डज । दीपा धातुमयास्तत्र चान्यदत्ता हृतास्तया ॥ १ ॥
सा शूद्रात्र महाभाग धनपुत्रसमन्विता । चन्द्रग्रहे महादानात्प्राक्कृतात्तु खगेश्वर ॥ २ ॥
तेन कर्मफलेनैव चक्षुःपीडातिदारुणा । त्रिदोषैर्दूषिता चात्र सुवभावे खगेश्वर ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपहृत्पापशोधनम् । दीपा देया घृतेनात्र पूरयित्वा सुवर्णजाः ॥ ४ ॥
सुवर्णनिर्मिता भव्याः सम्पूज्याथ महेश्वरम् । गन्धपुष्पैस्तथा दीपैर्भक्ष्यैर्भोज्यैः प्रयत्नतः ॥ ५ ॥
दद्याद्द्विजेभ्यो बहुशस्तस्मात्पापात्प्रमुच्यते ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९७ ॥

---

श्रीसूर्य उवाच।

दुष्टगन्धयुतः सूत जायते सोऽत्र जन्मनि । मधुहारी च यः पूर्वं प्रायश्चित्तं परं शृणु ॥ १ ॥

मधुधेनुप्रदानाद्धि ब्राह्मणाय खगेश्वर । दुष्टगन्धिकृताद्दोषान्मुच्यते नात्र संशयः ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९८ ॥

श्रीसूर्य उवाच ।

तरक्षुं घातयेत्पूर्वं या नारी गरुडाग्रज । कातराक्षी प्रजायेत चक्षूरोगस्खगेश्वर ॥ १ ॥
धेनुं रत्नमयीं दद्यात्ससुवर्णां विधानतः । नश्येद्धि चक्षुषो रोगस्तद्दानेन महाद्भुतम् ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवनवत्युत्तराष्टशताधिकसहस्रतमः ॥ १८९९ ॥

श्रीसूर्य उवाच ।

प्राग्जन्मन्यभूत्कश्चिन्नरो राजकृपान्वितः । दण्डाधिकारवाञ्छूरो हठो ब्राह्मणपूजकः ॥ १ ॥
नानादानरतस्तत्र लोभाढ्योऽपि विशेषतः । व्यभिचाररतस्त्वेकब्राह्मणस्य खगेश्वर ॥ २ ॥
लोभाच्चकारासौ तत्र ह्यण्डच्छेदं च तत्क्षणात् । स तेन कर्मणा युक्तो भुक्त्वा तु यमशासनम् ॥ ३ ॥
देशे पञ्चनदे ह्यत्र जातः शूद्रोऽति चाधमः । स चास्त्यत्र विवर्णस्तु पण्ढः पापमतिः सुखी ॥ ४ ॥
सकलैश्वर्यसम्पन्नो नानाधनसमन्वितः । नानावाहनभोगाढ्यो दानात्सर्वमिदं सुत ॥ ५ ॥
सप्तजन्मस्वसौ पण्ढो भविष्यति खगेश्वर ॥ ६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोनवशताधिकसहस्रतमः ॥ १९०० ॥

अरुण उवाच ।

क्षात्रे कुले समुत्पन्नो शौर्यौदार्ययशोधनी । राजमार्गविरोधी च नानासौख्यरतः सदा ॥ १ ॥
किञ्चिद्वातादिना पीडा जायते चोदरे भृशम् । बालरक्तेन शिरसि महापीडा प्रजायते ॥ २ ॥
तस्य भार्या शुभाचारा सुरूपा गुणशालिनी । विप्रभक्तिरता नित्यं दानदाक्षिण्यवर्तिनी ॥ ३ ॥
एकपुत्रं प्रसूयाथ नान्यपुत्रमुपागमत् । पश्चात्पुष्पांतरं शान्तमपत्यं नैव जायते ॥ ४ ॥
केन कर्मविपाकेन पापं शाम्यति तत्स्त्रियाः । विधिना च हितार्थाय सत्यं ब्रूहि दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच ।

पूर्वं वर्णोत्तरे जातो धातुकांस्यादिकारकः । ब्रह्मास्य मित्रतां जातो बहुद्रव्यसमाकुलः ॥ ६ ॥
क्रयविक्रयकर्ता च विप्रद्रव्यैरवर्धत । कालेन महता वत्स स विप्रो निधनं गतः ॥ ७ ॥
वञ्चितं तद्धनं सर्वं न तु किञ्चित्प्रदत्तवान् । ब्रह्मस्वं भक्षितं तेन वंशवृद्धिविनाशनम् ॥ ८ ॥
तेन कर्मविपाकेन नानासन्ततिनाशनम् । यौवनेऽमृतत्पुत्रः स वै ब्राह्मण उच्यते ॥ ९ ॥
इदं जन्म चतुर्थं च ब्रह्मवंशसमुद्भवम् । भार्या दुःखकरी ह्येवं पुत्रहीना खगाधिप ॥ १० ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन पापक्षयो भवेत् । निष्कृतिं ब्रूहि मां वैश्यसन्ततेः सौख्यहेतवे ॥ ११ ॥

श्रीसूर्य उवाच ।

ब्रह्मस्वं विषसन्तुल्यं पुत्रपौत्रविनाशनम् । विप्रेणैकोऽपि म्रियते ब्रह्मस्वैः सुतसन्ततिः ॥ १२ ॥
तस्य सन्तत्यभाशाय कारयेन्निष्कृतिं शुभाम् । सुशुभे भूप्रदेशे तु गोमयेनोपलेपयेत् ॥ १३ ॥
कुर्यादष्टदलं पद्मं राजतं शुक्लतण्डुलैः । तन्मध्ये स्थापयेत्कुम्भमव्रणं शुभलक्षणम् ॥ १४ ॥
सुशीतसलिलैः पूर्णं सरत्नौषधिपल्लवम् । नानाफलाक्षतोपेतं पूर्णपात्रोपशोभितम् ॥ १५ ॥

तस्योपरि न्यसेत्पात्रं वैणवं वर्तुलाकृति । सप्तधान्यफलोपेतं वस्त्रस्रक्चन्दनान्वितम् ॥ १६ ॥
तन्मध्ये स्थापयेन्मूर्तिं निष्कद्वयविनिर्मिताम् । सुवर्णस्य विशुद्धां च प्रदद्याद्देवादिने ॥ १७ ॥
प्रतिष्ठा पूजनं कृत्वा ततो गा वै सवत्सिकाः । विप्रेभ्योऽष्टोत्तरशतं शातकौम्भविनिर्मिताः॥१८॥
जातीपुष्पैः प्रकुर्याच्च लक्षैः पूजा महेशितुः । संकटान्मोचयेद्देवं दम्पती परिवापयेत् ॥ १९ ॥
एवं कृतविधेः सूत निश्चरा सन्ततिर्भवेत् ॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोत्तरनवशताधिकसहस्रतम ॥ १९०१ ॥

---

अरुण उवाच ।

यथायथा च दोषाणां मोक्षः प्राणभृतां भवेत् । दानं व्रतं तथा कर्म येन सौख्यं जनो व्रजेत्॥१॥
सर्वलक्षणसम्पूर्णो दृश्यते भुवि मानवः । तथापि कर्मणा केन ह्यभिज्ञानं तु कारयेत् ॥ २ ॥

श्रीसूर्य उवाच ।

पुरा जन्मनि येनैव कृतं शशकयातनम् । तेनैव कर्मदोषेण कुब्जः काणो भवेन्नरः ॥ ३ ॥
ऐहिकान्यपि लक्ष्माणि शरीरे सम्भवन्ति च । परापवादनिरतो लम्बो वञ्चनतत्परः ॥ ४ ॥
गात्रपीडा च महती बाल्ये वयसि सम्भवेत् । न बन्धुः पृष्ठतस्तस्य न च बन्धुसुखं सुत ॥५॥
अग्रतो नापि नश्यन्ति बालकाः खगघातनात् । राजदण्डो ज्ञानदण्डो मानभङ्गो भवेदिति॥६ ॥
प्रेर्यते येन कर्मार्थे स वै व्यङ्गो भवेदिति । गुह्यतो वदने चैव मशकानाञ्च पादयोः ॥ ७ ॥
शाखाग्निपीडनं कुक्षौ प्लीहतो हि प्रजायते । एवं स बहुशस्त्वीयैर्लक्षणैरिति लक्ष्यते ॥ ८ ॥
कर्मणस्तस्य निर्हारं प्रायश्चित्तं समाचरेत् । तस्य दोषस्य शान्त्यर्थमाचरेत्तु हरेर्व्रतम् ॥ ९ ॥
शय्यां दद्याच्च विप्राय सोपधानां सतूलिकाम् । हरिमान्दोलयेत्तत्र चैत्रे चैव विधानतः ॥ १० ॥
लक्ष्मीनारायणौ कार्यौ हेमनिष्कप्रमाणतः । महत्या पूजयेल्लक्ष्म्या महोत्सवसमन्वितम् ॥ ११ ॥
द्वादश ब्राह्मणांश्चापि भोजयेद्भक्ष्यभोज्यकैः । व्रतस्य च विधिं सूत कथयामि समासतः ॥१२॥
दमनारोपणं चैव रोगमुक्तिहिताय वै । चैत्रे मासि शुभे पक्षे शुभवारे तथा तिथौ ॥ १३ ॥
दशम्यामधिवासं तु कुर्याद्दमनकाय वै । संवत्सरकृता पूजा येन पूर्णा भवेत्खग ॥ १४ ॥
तपसो भङ्गमकरोज्जीवस्यास्याभवत्तदा । भस्मीभूते तदा पत्यौ रतिः प्रीतिश्च दुःखिते ॥ १५ ॥
तन्नेत्रवारिसम्भूता दमनस्य लता भवेत् । सौरभ्यं च सुसौभाग्यं मदनासीत्सुशोभनम् ॥ १६ ॥
तेन सन्तुष्टहृदयो स भवेयः शिवः स्वयम् । रत्यै प्रीत्यै च तत्सोऽयं दमनः प्रवरीकृतः ॥ १७ ॥
दमनेन च यो मन्त्री वर्षमध्ये न पूजयेत् । तस्य सांवत्सरी पूजा दमनाय भविष्यति ॥ १८ ॥
नरैर्न दत्तो वरो धात्रा त्वत्पूजादौ भविष्यति । तस्माद्दमनपूजादौ कर्तव्या लोकवन्दिता ॥ १९॥
अन्येषां पूजनं पश्चादिह लोके च जायते । समूलं दमनं सूत स्थापयेत्पनके वटे ॥ २० ॥
दमनं नवधा कृत्वा पूजयेत्तदनन्तरम् । वामेदेश्वरीबीजेन ततोभिन्नेन सुन्दरि ॥ २१ ॥
आनन्देश्वरीबीजेन नवधा बिन्दुना सह । नवप्रकारभिन्नं तु दमनं पूजयेत्क्रमात् ॥ २२ ॥
अघोरविद्यया पश्चादभिषिञ्चेत्ततो जनम् । पूर्वोक्तया दक्षिणस्यां दिशि संस्थापयेद्व्रती ॥ २३ ॥
अस्त्रेण रक्षणं कुर्यात्कवचेन ततः परम् । बद्ध्वा मूलमुद्रां तु भ्रामयेद्दमनोपरि ॥ २४ ॥
चैत्रे सितत्रयोदश्यान्तु दमनारोपणं भवेत् । उद्धरेद्ब्रह्ममन्त्रेण हृदयेन च लेपयेत् ॥ २५ ॥
श्रीखण्डघनसारैस्तु ह्यधिवासं च कारयेत् । प्रथमे दिवसे कुर्यादधिवासनमुत्तमम् ॥ २६ ॥

सद्योऽधिवासनं वापि वर्णपूजाप्रसिद्धये। नवकोणं च विख्यातं सिन्दूरेण समप्रभम् ॥ २७ ॥
कलशांस्तत्र संस्थाप्य हेमपात्रादिपूरितान्। एकं वा कलशं रम्यं स्थापयेद्देशिकोत्तमः ॥ २८ ॥
दक्षिणे मण्डलं कुर्यात्कुङ्कुमाद्यैर्विचित्रितम्। अशोकतरुमालिख्य त्रिकोणं मण्डलं लिखेत्२९
तन्मध्ये स्थापयेत्कामं पञ्चबाणं धनुर्धरम्। वसन्तसहितं तं वै पूजयेत्सिद्धिहेतवे ॥ ३० ॥
वाग्बीजेर्भुवनेशानीं श्रीकामायुक्तबीजकैः। कामाय नम आलिख्य विधेयं रुद्रवर्णकम् ॥ ३१ ॥
कामबीजत्रयं प्रोक्तं पूर्वमेव समुच्चरेत्। रत्यै नमश्चाष्टवर्णास्तदन्ते च समुद्धरेत् ॥ ३२ ॥
प्रीतिबीजं रतिस्थाने प्रीतिस्थानेऽष्टवर्णकान्। गौरीं श्यामां रतिप्रीती क्रमेण परिपूजयेत् ॥ ३३ ॥
पद्मताम्बूलहस्तेन रक्तवस्त्रविराजितैः। दिव्यैराभरणैः सूत रतिप्रीती प्रपूजयेत् ॥ ३४ ॥
वामदक्षिणयोर्ध्यात्वा कामस्य तदनन्तरम्। सुवसं पुष्पसमये साङ्गं कामं प्रपूजयेत् ॥ ३५ ॥
धूपदीपादिनैवेद्यैर्दमनाद्यैश्च पूजयेत्। सर्वकार्यसुसिद्ध्यर्थं पूजयेन्मधुसूदनम् ॥ ३६ ॥
क्रमेण पूजयेत्सर्वं वैष्णवान्भोजयेद्बहून्। सुवासिनीश्च सम्पूज्य योगिमण्डलमर्चयेत् ॥ ३७ ॥
श्रद्धया परिपूज्याथ नानादेशीयमानवान्। पूजयेच्च शुभं पश्चाद्गुरुं रत्नादिभूषणैः ॥ ३८ ॥
स्वर्णभारसहस्रैस्तु दिव्यवस्त्रैर्मनोहरैः। पूजयित्वा ततो विप्रान्पूर्णाहुतिमथाचरेत् ॥ ३९ ॥
अनेन विधिना देवं दमनारोपणे यजेत्। तस्य कर्मकृता बाधा शरीरे नैव जायते ॥ ४० ॥
पूर्णा मनोरथास्तस्य जायन्ते नात्र संशयः। शुद्धवर्णसुवर्णेन कृत्वा मन्मूर्तिमुत्तमाम् ॥ ४१ ॥
अर्चितां गन्धपुष्पाद्यैर्द्विजाय निवेदयेत्। तस्यैहिकमिदं चिह्नं भवेद्वनितापीडनम् ॥ ४२ ॥
जानुजंघे तथा कुब्जे पीडनं तृदरे भवेत्। यजमानविरोधं च बुद्धिहीनोऽनुविन्दति ॥ ४३ ॥
तेषुतेषु कृता बाधा स्वेस्वे चैव प्रजायते। कौलीन्यकुलटादिभ्यो यौवने सा विगर्हिता ॥ ४४ ॥
कुलाकुलत्वं भूम्यादिघातः स्यादुपलेखनात्। दंष्ट्रिशृङ्गिकृता बाधा मातुर्जनिकृताः पुनः ॥ ४५ ॥
हसन्त्यश्चैव नार्यश्च गृहनो गुरुरोगकाः। इत्यादिवेदनास्तस्य शरीरे सम्भवन्ति वै ॥ ४६ ॥
सर्वतोऽग्निप्रचित्तत्वाद्वेदना सौम्य जायते ॥ ४७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्युत्तरनवशताधिकसहस्रतमः ॥ १९०२ ॥

अरुण उवाच।

कश्चिद्द्विजो समुत्पन्नः कश्चित्पुरुषसत्तमः। संयुतो वायुपित्ताभ्यां गौरवर्णः प्रतापवान् ॥ १ ॥
कृषिकर्म प्रकुर्वाणो धर्मिष्ठो धर्मवत्सलः। धनधान्यसमायुक्तः किंचिद्व्यापारवान्भुवि ॥ २ ॥
भार्याद्वयं तु तस्यासीदेका वै मृत्युमागता। अपरा रोगसंयुक्ता किंचित्क्लेशस्य कारिणी ॥ ३ ॥
प्रदरार्तिश्च हृच्छूलं निद्रालस्याग्निमन्दताः। हृदये क्रमहल्लासो श्वयथुः करपादयोः ॥ ४ ॥
इत्येतैर्लक्षणैः स्वामिन्भार्या वै ज्वरपीडिता। तयोर्मिथो महाप्रीतिर्भवेन्नापत्यजं सुखम् ॥ ५ ॥
मृतभार्यः पुमान्सोऽपि यथा च्युतगृहाश्रमः। सर्वकर्मणामाधारभूतः स्यात्स्वगृहाश्रमः ॥ ६ ॥
मृतभार्यस्य तन्नाशो ह्यग्निहोत्रादिहानिकृत्। तस्मात्तु कर्मणा येन भार्या भर्तुर्भवेन्नृणाम् ॥ ७ ॥
अतिदुःखकरी घोरा तस्य कर्माणि मे वद ॥ ८ ॥

श्रीसूर्य उवाच।

सापत्यस्यानपत्यस्य धनिनो निर्धनस्य वा। यूनो वा स्थविरस्येति यो योगः कर्मणा भवेत् ॥ ९ ॥
हन्तुश्च परस्त्रीणां मृतभार्यस्य लक्षणम्। विशेषेण परांश्चापि कीर्त्यमानाञ्छृणुष्व भोः ॥ १० ॥

यथायथा स लोकानां सौख्यानि विविधानि च । पुण्यकर्मभिराप्तोऽपि विविधैः श्रद्धया कृतैः ११
अपत्यस्त्रीधनयशोविद्याभिः सम्भृतो भवेत् । स्वं जहाराऽसहिष्णुत्वादाभिजात्यादयेर्ष्यया १२॥
शून्यादपवादैश्च नानामिथ्याभिशंसनैः । तया यूनोऽस्य धनिनः सापत्याश्च स्त्रियो मृताः १३॥
मिथ्यापमृत्युकैर्वान न सौख्यमिह जायते । तदादिभिर्महादुःखैर्युज्यते योऽन्यसौख्यहृत् ॥१४॥
रुदत्सु शिशुषु प्रायो प्रीतिमान्हृदि जायते । तदादि च महद्दुःखैर्युज्यते सौख्यबन्धुषु ॥ १५ ॥
भार्याकार्येषु च तथा विनश्यत्सु दिनेदिने । दुःखाब्धौ मज्जमानोऽसौ मत्यहं मृत्युमिच्छति १६
अहं ममेति सौख्यार्थी मिथ्यावादैः स दुर्मतिः । स्त्रीणां च मृत्युकौलीन्यात्स्वहानिः स्यादितस्ततः
पुनर्भवति तस्य स्त्रीप्राप्तिः कष्टाद्धनव्ययात् । अपत्नेः स्त्रीभवा प्रीतिर्नास्य तस्य प्रजायते ॥१८॥
निर्धनस्य च यूनश्च पश्चधापत्यदुःखिनः । रोगग्रस्ता चिरं भार्या कष्टान्मरणमिच्छति ॥ १९॥
स चापि सुचिरं काले नानारोगैः प्रपीड्यते । जीवत्यपि तया सार्धं जातिप्रीतिपरो भवेत् २० ॥
न गार्हस्थ्यभवं किञ्चित्सुखमाप्नोति दुर्मतिः । कलहश्च स्त्रिया वर्गे निर्निमित्तं क्वचिद्भवेत् ॥२१॥
नातिप्रीतिर्भवेत्तस्य भार्ययाऽस्य तया सह । अल्पापत्यानपत्या वा कदपत्याथ सा भवेत् ॥२२ ॥
आधिश्चापत्यचिन्तोत्थो नित्यं तं वै प्रबाधते । लक्षणैरिति निश्चित्य कर्मनिष्कृतिमाचरेत् २३ ॥
फाल्गुने मासि सम्प्राप्ते शुक्लपक्षे चतुर्दशी । तिथौ प्रातः समुत्थाय सुस्नातः शुचिवस्त्रधृक् २४॥
शिवस्यालयमासाद्य देवज्ञेन समन्वितः । स्नापयेत्तु शिवं सम्यक्पञ्चामृतपुरःसरम् ॥ २५ ॥
अर्चयेच्च ततः पुष्पमाल्यगन्धानुलेपनैः । धूपैर्दीपैश्च नैवेद्यैर्विना विधिकोविदः ॥ २६ ॥
चतुरस्रं चतुःपादं कुम्भस्योद्धरणक्षमम् । षट्त्रिंशदङ्गुलोच्छ्रायं लिङ्गस्योपरि धारयेत् ॥ २७ ॥
तस्योपरि न्यसेत्कुम्भं सुगन्धशिशिराम्भसा । पूर्णं मध्ये कृतच्छिद्रं तस्मोता वस्त्रवर्तिका ॥२८ ॥
तदग्रे विगलत्तोयं कराग्रं लिङ्गमूर्धनि । विदध्याद्विधिमेनं तु देवज्ञादेशतत्परः ॥ २९ ॥
त्रिकालं प्रणमेदेवं दण्डवन्नियतव्रतः । कुम्भं जलेन ह्यसकृत्सुगन्धिशिशिराम्भसा ॥ ३० ॥
पूरयेन्नियतं प्रातःस्नायी विधिमिमं चरेत् । पठेन्मन्त्रं शिवस्याग्रे देवज्ञेन समीरितः ॥ ३१ ॥

मन्त्रः ।

"यन्मया पूर्वसौख्यानि निघ्नता दुष्टबुद्धिना । जन्तूनामप्यजन्तूनां नानामिथ्योक्तियुक्तिभिः॥३२॥
मृतभार्याख्यमेतन्मे पापं तत्कर्मसंभवम् । अतिदुःसहदुःखाढ्यं यत्पापमितरत्सुखैः ॥ ३३ ॥
ज्वालाभिर्दह्यमानोऽहं स्त्रीवियोगानलस्य वै । सुशीतलाम्भसः सेकैस्तपसा सौख्यकारिभिः ॥
अभिषिञ्चे महादेवं महापापहरो भव " ॥ ३४ ॥

उच्चरन्निति तं देवं प्रणम्य च मुहुर्मुहुः । गृहमागत्य भुञ्जीत पतिताद्यपवर्जितः ॥ ३५ ॥
एवं हि चतुरो मासांस्त्रिकालं विदधद्विभुः । भवेदतः परो यावच्छुचिशुक्लचतुर्दशी ॥ ३६ ॥
तत्र मध्याह्नसमये कृत्वा नित्यविधिक्रमम् । शिवयोः प्रीतये दद्याद्गोयुगं शुभलक्षणम् ॥ ३७ ॥
ब्राह्मणाय सुव्रताय मन्त्रं पूर्वोक्तमुच्चरेत् । शुद्धवर्णसुवर्णस्य माषषोडशसम्मितम् ॥ ३८ ॥
ताम्रपात्रेऽर्चितं कृत्वा देवज्ञाय निवेदयेत् । ततस्तु भोजयेद्विप्रान्छतार्द्धं शतमेव वा ॥ ३९ ॥
तोषयेच्च द्विजानन्यान्दक्षिणाभिः स्वशक्तितः । विधिमेनमकुर्वाणो मृतभार्यः सुसौख्यहा ॥४०॥
भूयः स मृतभार्योऽपि न सुखं विन्दति क्वचित् । प्रयोजकानुमन्त्राद्यं प्रतिवेशादिकं च यत् ॥४१॥
प्रश्नयाद्दवगंतव्यं गतेष्याद्विचारतः । लक्ष्मैहिकमिदं वाच्यं देवज्ञेन सुमेधसा ॥ ४२ ॥
विवाहसमये किञ्चित्कलहादिभ्रमोऽभवत् । वाग्दानमत्र चान्यत्र विवाहोऽन्येन वै भवेत् ॥ ४३ ॥

तस्यामुद्गमात्रायां विविधा दुःखसन्ततिः। एवं कृतविधिः सम्यग्भुञ्जीत सह बन्धुभिः ॥४४॥
भुंक्ते भोगान्स्वपत्न्या वै लक्षसंख्यान्खगेश्वर ॥ ४५ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रनवशताधिकसहस्रतमः ॥ १९०३ ॥

---

अरुण उवाच।

कश्चिच्छूद्रकुले जातो गौरवर्णः प्रतापवान्। पुत्रीपुत्रसमाकीर्णः किञ्चिद्वित्तसमन्वितः ॥ १ ॥
प्रिया तस्यापि सौम्या च पतिभक्तिपरायणा। प्रमादी दैववादी च किञ्चिद्व्यापारवान्भुवि ॥२॥
श्वासयुक्तः सभार्यस्तु हेमन्तप्रावृषोस्तथा। श्रमयुक्तं शरीरं तु शिरोर्तिर्जायते क्वचित् ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर। ममोपरि कृपां कृत्वा प्राणिनां सौख्यहेतवे ॥ ४ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्यापि चेष्टितम्। पूर्वजन्मनि शूद्रस्तु बहुचिन्ताकुलोऽभवत् ॥ ५ ॥
स राजकुलमान्यश्च बहुव्यापारवांस्तथा। कारागृहे गृहीतस्तु मोहात्कश्चिद्द्विजोत्तमः ॥ ६ ॥
ताडितस्तेन बहुधा यदा च क्रन्दति द्विजः। तदा तस्य द्विजस्यैव श्वासरोधं चकार ह ॥ ७ ॥
घटीद्वित्रिचतुर्भिस्तु द्विजः श्वासं मुमोच वै। दिनैः कतिपयैरेव एवं कर्म चकार ह ॥ ८ ॥
पश्चाद्व्याजेन निर्मुक्तो ब्राह्मणस्तेन वित्तमः। तेन कर्मविपाकेन ह्यसौ श्वासेन पीड्यते ॥ ९ ॥
पुराकृतानि कर्माणि शुभानि ह्यशुभानि च। इह जन्मनि भुज्यंते प्राणा नित्यं विशंकिताः॥१०॥

अरुण उवाच।

जीवितं कष्टसहितं न तु जीवेन मुच्यते। ममोपरि कृपां कृत्वा येन कष्टाद्विमुच्यते ॥ ११ ॥
विशेषं कथय स्वामिन्प्राणिनां हितकाम्यया। कर्मणस्तस्य लक्ष्माणि विस्तरेण वद प्रभो॥१२॥

श्रीसूर्य उवाच।

द्विजस्य मर्मच्छेदान्मदस्तस्याशु रुद्ध्यते। यथा स खिन्नकण्ठोभूत्तथा कण्ठोस्य शुष्यति ॥१३॥
विनिद्रो विमुखो दीनो न शेते शयने नरः। तदवस्थस्तथैवास्य शयने न सुखं भवेत् ॥ १४ ॥
खिद्यते गह्वरे रुद्धस्तापार्तिभृशदुःखितः। ताप्यते तापनैर्दुःखैर्निर्वाऽत्ते सोपि रोदिति ॥ १५ ॥
स च तत्र निरुद्धस्तु ज्वरादिव्याधिसम्भवे। ज्वरादिरपि सोद्वेगं विशेषात्तं समर्दयेत् ॥ १६ ॥
नष्टसंज्ञश्चोर्ध्वमुख ऊर्ध्वमुद्गितरोमकः। भिन्नवाग्दीनवदनो क्षीणशब्दो गतद्युतिः ॥ १७ ॥
रतिं न लभते शुष्कवक्त्रो विकुरुते भृशम्। मुहुर्मोहमुपैत्येवं महायत्नेन शाम्यति ॥ १८ ॥
एवं दैवविनिर्धारं कृत्वा वै प्रयतः पुमान्। आचरेच्छिष्कृतिं सोऽस्य व्याधीनां क्षयकारिणीम् १९॥
शुभे मासेऽसिते पक्षे सानुकूलग्रहे दिने। आहूय विधिवद्विप्रान्दैवज्ञान्वेदवादिनः ॥ २० ॥
घृतं तेभ्यः प्रदातव्यं सहस्रपलसम्मितम्। वित्तशाठ्यं न कर्तव्यं यथाशक्ति चरेद्विधिम् ॥२१॥
लक्षसंख्यैस्तु संपूज्यो रुद्रो रुद्रगणावृतः। शिवपूजाविधानं च कर्तव्यं शुभमिच्छता ॥ २२ ॥
ब्राह्मणान्भोजयेत्पश्चात्प्राजापत्यचतुष्टयम्। तेभ्योऽपि दक्षिणां दद्यात्सर्वपापविनाशिनीम् ॥२३॥
एका गौरपि दातव्या किञ्चित्स्वर्णसमन्विता। एवं कृते वैनतेय सर्वपापैः प्रमुच्यते ॥ २४ ॥
मद्बिम्बं शुद्धसावर्णं सुवर्णत्रयनिर्मितम्। स्वर्चितं गन्धपुष्पाद्यैस्ताम्रपात्रे स्थितं तथा ॥ २५ ॥
तण्डुलोपरि न्यस्तं च दैवज्ञाय निवेदयेत् ॥ २६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरुत्तरनवशताधिकसहस्रतमः ॥ १९०४ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु वस्य विचेष्टितम् । बभूव यामुने देशे चाम्बष्ठः पूर्वजन्मनि ॥ १ ॥
राजमान्यः सुखैश्वर्यधनवाहनभोगभाक् । दत्तानि तेन दानानि ब्राह्मणेभ्यो विजानता ॥ २ ॥
विविधत्कपिलादानं ब्राह्मणाय कुटुम्बिने । कार्तिक्यां स्वर्णदानं तु मथुरायां खगेश्वर ॥ ३ ॥
कालिन्द्या श्रद्धया युक्तो दीपाश्च घृतयोजितान् । दत्तवान्स्वर्णरत्नानि गोभूम्यश्वादिकानि च॥४॥
पर्वस्वपि च भक्त्या वै विनतानन्दवर्धन । अथो पापं भृशं चक्रे भाविनोऽर्थस्य वै बलात् ॥ ५ ॥
ब्राह्मणी धर्षिता तेन तत्पतिश्चापि घातितः । ब्रह्मस्वं लुण्ठितं भुक्तं कामलोभेन मोहितः ॥ ६ ॥
अन्नसत्राधिकारे तु द्विसहायुतेन च । वहन्नं चोरितं तेन राजकीयं खगेश्वर ॥ ७ ॥
ब्राह्मण्या धारितो गर्भो बहुपापैश्च पातनम् । गर्भस्य विकृतं तेन छेदनैरौपधैरपि ॥ ८ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गं च शाश्वतम् ॥९॥
पूर्वपुण्यावशेषेण स जातोऽत्र हिमालये । स रक्तगौरो मतिमान्धनवाहनभोगभाक् ॥ १० ॥
वातपित्तयुतः सौम्यो राजकार्येषु तत्परः । जन्माङ्गात्पञ्चमो भावो धर्मः क्रूरावलोकितः ॥ ११ ॥
पादजातो महाधीरोऽपत्यैश्वर्यसमन्वितः । अमात्यकल्पविभवो बहुग्रामाधिपत्ययुक् ॥ १२ ॥
बहूद्यमयुतो भोगी प्रजानामनुपालकः । नात्युच्चो नातिह्रस्वश्च न स्थूलो न कृशो महान् ॥१३॥
वातपित्तसुखैर्युक्तः किशोरे तत्सुखोज्झितः । यूनैश्वर्यसुखैर्युक्तः सर्वलोकप्रियङ्करः ॥ १४ ॥
धनधान्ययशोयुक्तो बहुग्रामाधिपो महान् । देशेदेशेऽधिकाराढ्यः सन्धिविग्रहसंयुतः ॥ १५ ॥
पुण्यादिदं महापापाल्लोभी पापरतः क्वचित् । चिन्ताक्लेशभयैर्युक्तो धृतिमानपि दुःखभाक् ॥१६॥
अकारणोद्वेगयुतः कालहानिकरः सदा । कर्णामयी वातरोगी पित्तवाती सुखोज्झितः ॥ १७ ॥
सदा शत्रुभयाविष्टः क्षणोद्विग्नः क्षणं सुखी । ब्राह्मणीधर्षणात्पापात्तथा तद्गर्भपातनात् ॥ १८ ॥
पुत्रान्तरसुखं नैव जातुचिल्लभते नरः । विप्रकुम्भस्य चादानात्सजातः कुम्भलग्नके ॥ १९ ॥
भौमयुक्ते शनिक्रान्ते चापे जीवेक्षिते सुते । सितेश्वरे जीवयुक्ते स्थिरांगे चन्द्रवीक्षिते ॥ २० ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलद्वयमिता कार्या ब्राह्मणी तु हिरण्मयी ॥ २१ ॥
गन्धपुष्पैः समभ्यर्च्य देया वेदविदे खग । सोमस्य प्रतिमा कार्या पलमात्रा हिरण्मयी॥ २२ ॥
लक्ष्मीनारायणस्यापि तथा कार्या विधानतः । सूर्यस्य प्रतिमा कार्या पलद्वयमिता शुभा॥२३॥
षोडशोपचारैश्च पूजयित्वा विधानतः । देया प्रयत्नाद्विप्रेभ्यो गायत्रीमयुतं जपेत् ॥ २४ ॥
त्र्यम्बकं तु तथा जप्त्वा तन्मन्त्रांश्च तथा जपेत् । होमयेत्तद्दशांशेन शतं विप्रांश्च भोजयेत्॥२५॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । पुत्रपौत्राभिवृद्धिश्च जायते सम्पदोऽनिशम् ॥ २६ ॥
पलत्रयसुवर्णेन शूलं कुर्यात्प्रयत्नतः । शुभवस्त्रेण संवेष्ट्य तिलानामुपरि न्यसेत् ॥ २७ ॥
तिलानां परिमाणं तु द्रोणं चापि तदर्धकम् । तदर्धं वा यथाशक्ति पूजयेद्ब्राह्मणः शुचिः ॥२८॥
शैवं पञ्चाक्षरं मन्त्रमथवा त्र्यम्बकं जपेत् । अयुतं तद्दशांशं तु तिलैर्हवनमाचरेत् ॥ २९ ॥
ततो हुतवते शूलं पूजयित्वा स्वशक्तितः । दद्यात्तु दक्षिणां तान्तु प्राङ्मुखायाप्युदङ्मुखः ॥३०॥

मन्त्रः ।

त्वं शूल ब्रह्मणा सृष्टं त्रिपुराणां विनाशनम् । दैत्यानां दानवानाञ्च शंकरस्यायुधं तथा ॥ ३१ ॥
कुक्षिस्थमथ पार्श्वस्थमथ वा पृष्ठसङ्गतम् । श्वासकासकृतान्कष्टान्मोचय त्वं महायुध " ॥३२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये पञ्चोत्तरनवशताधिकसहस्रतम ॥ १९०५ ॥

श्रीसूर्य उवाच।

ब्राह्मणं योषितं धेनुं हुतमग्निं तपस्विनम्। क्रुद्धो नृशंसो दौरात्म्याद्धन्यात्पदेन यः पुरा ॥ १ ॥
पादौ च मर्दयन्वातव्याधिस्तु चरणे भवेत्। पादस्योर्ध्वे गुल्फपार्श्वान्स्थूलैः शोफः प्रसर्पति ॥२॥
समुत्पन्नेऽखिले शोफे पादः कूर्मोदरायते। मृदुलोऽतीव पीडाकृद्गमनेऽर्तिकरो भृशम् ॥ ३ ॥
द्विन्यादिपर्वपर्यन्तैर्मांसैरर्द्धदैर्घ्यरोऽस्थिगः। अन्नारुची रसेनेह पक्वान्नादिषु च स्पृहा ॥ ४ ॥
देहस्याभ्यन्तरे देशे पादे शोफसमुद्भवः। शरा इव प्रसर्पन्ति तत्र तत्राङ्गमोटनम् ॥ ५ ॥
स्कन्धग्रीवादिपुरतो व्रणा अल्पफलोपमाः। लक्ष्मैहिकमिदं तस्य विज्ञेयं कर्मसूचकम् ॥ ६ ॥
पादेन निहते विप्रे कलहानिर्धनक्षयः। योषिति भाग्यतायान्तु न कौलीनफलात्क्वचित् ॥ ७ ॥
धेनौ तद्धत्तयाऽऽघातो नृपाच्छ्रद्धावहेलनम्। हुताग्नावग्नितो बाधा जठराग्निकरादिषु ॥ ८ ॥
तपस्विनि मर्महार्तिर्गुह्यपीडा व्रणार्तयः। अपत्यजमहद्दुःखं धान्यवाणिज्यतोऽव्ययः ॥ ९ ॥
एवं ज्ञात्वा निजं दैवं तन्निष्कृतिमाचरेत्। तज्जन्मनि शुभाकारा सुवर्णत्रयनिर्मिता ॥ १० ॥
कृताग्न्युत्तारसंस्काराः स्वर्चिताः सुप्रतिष्ठिताः। विप्राय वेदविदुषे देयाश्च बहुदक्षिणाः ॥ ११ ॥
उमामहेश्वरयुगं धेनुद्वयमनन्तरम्। आमान्नविंशतिं दद्यात्तं च कर्मणि शान्तये ॥ १२ ॥
चतुःसौवर्णिकीं कृत्वा मन्मूर्तिं शुभलक्षणाम्। रथे रौप्ये प्रतिष्ठाप्य चतुःपलविनिर्मिते ॥ १३ ॥
सौवर्णारुणसूत्रेण सहितां देववेदिने। भूरिद्रविणसंयुक्तां दद्यान्मन्त्रं समुच्चरन् ॥ १४ ॥

मंत्रः।

"भगवन्देवदेवेश कर्मसाक्षिञ्जगत्प्रभो। सौवर्णिस्ते कृता मूर्ती रथसूतसमन्विता ॥ १५ ॥
सदक्षिणा मया दत्ता देवज्ञाय सुमेधसे। दानेनानेन मे शोफः क्षिप्रं नश्यतु पादजः ॥ १६ ॥
विप्रादिमूर्तयः पञ्च सुवर्णत्रयनिर्मिताः। तत्ताडनादिघातोत्थपादशोफस्य शान्तये ॥ १७ ॥
भूदेवा वो मया दत्ता दानाद्रोगः प्रशाम्यतु" ॥ १८ ॥
जन्मजाप्यादिकं सर्वं पूर्ववत्समयाचरेत् ॥ १९ ॥

इति श्रीहरसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षडुत्तरनवशताधिकसहस्रतमः ॥ १९०६ ॥

---

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु तस्य विचेष्टितम्। बभूव यामुने देशे पूर्वजन्मनि बाहुजः ॥ १ ॥
राजमान्यः सुखैश्वर्यधनवाहनभोगभाक्। दत्तानि तेन दानानि ब्राह्मणेभ्यो विजानता ॥ २ ॥
सुवर्णरत्नमहिषीगोभूम्यश्वादिकानि च। पर्वस्वपि च भक्त्या वै विनतानन्दवर्धन ॥ ३ ॥
अथो पापं भृशं चक्रे भाविनोऽर्थस्य गौरवात्। ब्राह्मणी धर्षिता तेन तत्पतिश्चापि घातितः ॥४॥
ब्रह्मस्वं लुण्ठितं भुक्तं कामलोभेन मोहतः। ब्राह्मण्यां धारितो गर्भो बहूपायैश्च पातनम् ॥ ५ ॥
गर्भस्य च कृतं तेन छेदनैरौषधैरपि। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
भुक्त्वा पापफलं पापात्पुण्यात्स्वर्गांश्च शाश्वतान्। पूर्वपुण्यावशेषेण स जातोऽत्र हिमालये ॥ ७ ॥
गौरवर्णो धनैश्वर्यसुखवाहनभोगभाक्। जन्माङ्गात्पञ्चमे भावे धर्मे क्रूरावलोकितः ॥ ८ ॥
अमात्यवंशजो धीरो बाल्ये भ्रातृसुखोज्झितः। पूर्णैश्वर्यसुखैर्युक्तः सर्वरोगभयंकरः ॥ ९ ॥
धनधान्ययशोयुक्तो बहुग्रामाधिपो महान्। देशेदेशेऽधिकाराढ्यः सर्वविग्रहसंयुतः ॥ १० ॥
पुण्यादिदं तथा पापाल्लोभी पापतः क्वचित्। चित्तक्लेशमनोयुक्तो धनवानपि दुःखभाक् ॥ ११ ॥
सहोदरसुतैर्भृत्यैः कलत्रैर्मित्रबान्धवैः। अकारणोद्वेगयुतः कलहाविष्कृतः सदा ॥ १२ ॥

कर्णामयी वातरोगी पित्तवाती सुखोज्झितः । सदा शत्रुभयाविष्टः क्षणोद्विग्नः क्षणं सुखी ॥१३॥
ब्राह्मणीधर्षणात्पापात्तथा तद्गर्भपातनात् । पुत्रान्तरसुखं नैव लभते न कदाचन ॥ १४ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलत्रयमिता कार्या ब्राह्मणी तु हिरण्मयी ॥ १५ ॥
तदर्धामितिका वापि निजवित्तानुसारतः । गन्धपुष्पैः समभ्यर्च्य देया वेदविदे खग ॥ १६ ॥
सोमस्य प्रतिमा कार्या पलमात्रा हिरण्मयी । लक्ष्मीनारायणस्यापि तथा कार्या विधानतः॥१७॥
सूर्यस्य प्रतिमा कार्या पलद्वयमिता शुभा । षोडशोरूपचारैस्तु पूजयित्वा विधानतः ॥ १८ ॥
देया प्रयत्नाद्विप्रेभ्यो गायत्रीमयुतं जपेत् । त्र्यम्बकं तु तश जप्त्वा तन्मन्त्रांस्तु तदा जपेत् १९॥
होमयेत्तद्दशांशेन शतं विप्रांश्च भोजयेत् । नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥ २० ॥
पुत्रपौत्राभिवृद्धिश्च जायन्ते सम्पदोऽनिशम् । शत्रवो न भयं तस्य नरस्य कृतनिष्कृतेः ॥ २१ ॥
कुलसन्ततिमितायुः स्यात्प्रायश्चित्ते कृते खग । चतुर्विधमहारिष्टं पञ्चाशन्मितवत्सरे ॥ २२ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तोत्तरनवशताधिकसहस्रतमः ॥ १९०७ ॥

---

## श्रीसूर्य उवाच ।

यः पुरा मद्गर्वाभ्यां परद्रोहाभितापवान् । कणरत्नादिना वापि चाहार्यवसनादिभिः ॥ १ ॥
तन्तुकर्मोपभोगार्थं पीडयेद्दुर्धरज्वरः । तस्य पापस्य शान्त्यर्थं निष्कृतिं शृणु सारथे ॥ २ ॥
चिरज्वरामयाशोफतन्द्रालस्यादिविग्रहैः । अन्नारुचिपिपासाद्यैः प्रस्वेदग्लानिभिस्तथा ॥ ३ ॥
अस्युयेण दवथुना कम्पनाच्चोदृतस्तथा । क्वचित्तापः क्वचिच्छीतं पर्वभेदैस्तु सन्धिषु ॥ ४ ॥
न सर्सं लभते क्वापि महौषधिशतैरपि । अपाकश्चिरपाको वा दुश्चिकित्स्यो भिषग्वरैः ॥ ५ ॥
हीनसाम्यादिकाद्यैश्च लक्षणानि विभावयेत् । दैवज्ञो विद्यते व्याधिर्ज्वरार्तिः परमा तदा ॥ ६ ॥
ज्वरयति च सर्वेषां दुस्यदोषेण पाप्मनाम् । मासात्पक्षादिकं चापि दुर्ज्वरो विषमो भवेत् ॥ ७ ॥
निष्कृतिस्तस्य वक्तव्या यथाश्रुति मयोदिता । शुशुभे भूमदेशे तु गोमयाद्युपलिप्तके ॥ ८ ॥
तत्रोपर्यावितं स्थाप्य स्थापयेत्तु तिलाचलम् । तत्रोपरि न्यसेदीशं गौर्या सह विनायकम् ॥ ९ ॥
हेम्नं हेमविधासंख्यायथाव्याधिप्रपञ्चकम् । कृत्वा प्रतिष्ठितप्राणं यजेद्रुद्रं विधानतः ॥ १० ॥
पूजामर्चादिकं कृत्वा तर्पयेच्छतरुद्रियम् । तर्पणस्यावसाने तु वसनं द्रव्यपूर्वकम् ॥ ११ ॥
प्रत्येकं गोयुतं दद्यात्कर्मणामपनुत्तये । जुहुयाद्यजमानेन चरुणा पायसेन च ॥ १२ ॥
होमान्ते भोज्यसंख्या तु रुद्रसंख्यानुसारतः । एकद्वित्रिचतुर्भेदा यथाव्याधिवलेक्षणम् ॥ १३ ॥
एवं विधिं समासाद्य मोचयेज्ज्वरदारुणात् । मूर्त्यादिकं च तत्सर्वं दापयेद्ब्राह्मणाय वै ॥ १४ ॥

मंत्रः ।

"यन्मया लोभबुद्ध्या वै हृतं परधनं छलात् । लक्षकौटिल्यबुद्ध्या वा कणरत्नादिनाथ वा॥१५॥
तत्तत्पापार्जिता लोके प्राप्तो वै दुःसहज्वरः । एतदेनोविनाशाय मूर्ति ते शुभलक्षणाम् ॥ १६ ॥
ददे मोच्या महापापाद् सहाद्विजसत्तम । दानहोमादिना तेन कर्मणा वः प्रसादतः" ॥ १७ ॥
एवमुक्त्वा ततस्तान्स प्रणमेद्वसुधासुरान् । स्तुतिभिर्नत्वा समभ्यर्च्य विधिवद्विहिताञ्जलिः ॥ १८ ॥
विसर्पविधिना पूर्वं विप्राणां भोजनार्चनम् । वर्जयेद्दम्भमात्सर्यं सर्वेभ्यो हितमाचरेत् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टोत्तरनवशताधिकसहस्रतमः ॥ १९०८ ॥

श्रीसूर्य उवाच।

यः पुरा मदमात्सर्यैः सत्कर्मोपरि घातकृत्। विषमज्वरभेदेन म्रियते भेद्यदारुणैः ॥ १ ॥
लक्षणं तस्य वक्ष्येऽहं यथाज्वरसूचकम्। अन्नारुचिः पिपासार्तिः पार्श्वांसे करपादयोः ॥ २ ॥
दह्यते कम्पते गात्रं क्वचिच्छोफोदरादिषु। श्वासयन्मूर्धगो भूत्वा तदन्तर्ज्वरतोदकृत् ॥ ३ ॥
कामला पाण्डुहृत्पीडा पुष्कावदरणं वसा। अपाकश्चिरपाको वा दुश्चिकित्स्यो भिषग्वरैः ॥ ४ ॥
न शाम्यति न शाम्यति महौषधिशतैरपि। न सुखं लभते क्वापि न दिवा निशि यत्किंचित् ॥ ५ ॥

अरुण उवाच।

का तस्य निष्कृतिः स्वामिन्येन पापक्षयो भवेत् ॥ ६ ॥

श्रीसूर्य उवाच।

शुभे त्ववसरे प्राप्ते सानुकूले महर्क्षके ॥

यत्रास्ते शुभतीर्थं वै सङ्गमोत्तमसत्सरित्। तत्र गत्वा च स्नात्वा च पीत्वा च परमौषधम् ॥ ७ ॥
षडब्दमाचरेच्छुद्धिं शुद्धः शुद्धाभिसन्धिकः। श्रुतिस्मृतिसदाचारो वाङ्मनःकायशुद्धधीः ॥ ८ ॥
एवमाहूय सद्विप्रान्यजेद्रुद्रविधानतः। पाद्यार्घ्याचमसंशीतो रुद्रं जप्त्वा यथाविधि ॥ ९ ॥
लक्षमेकादशं ज्ञेयं यज्ञे रोगार्तिदुःखहृत्। तद्दशांशेन होतव्यं मधुरत्रयसंयुतैः ॥ १० ॥
भोजयेत्परमं भक्त्या प्रतिरुद्रं शतावधि। तत्त्र्यम्बमाचरेदत्र ह्यश्वत्थतिलतर्पणम् ॥ ११ ॥
कलशैः शतसाहस्रैः रुद्रसूक्तं परं जपन्। भोज्यान्ते ह्युच्चरेन्मन्त्रं प्राचीनं यच्छुभाशुभम् ॥ १२ ॥

मन्त्रः।

"यन्मया द्रोहबुद्ध्या वा लोभार्तिभयदेन हि। वञ्चितः प्रत्यहं लोका मात्सर्यमपि यत्कृतम् ॥१३॥
एनसा तेन हृत्पीडा ज्वरार्तिः परमा मम। यास्या प्राप्ता तया चाहं मोच्यो हीह स्वकर्मणा" ॥१४॥
एतद्रुद्रविधानेन बाध्यते न नरः क्वचित्। यजेदत्र ज्वरार्तिस्थो सोऽनिर्दिष्टैस्तु नामभिः ॥ १५ ॥
तर्पणान्ते च निर्दिष्टे सोमो धेन्वेति मन्त्रतः। आशिषं परमं गृह्य ऋत्विजोक्तां शुभां हविः ॥१६॥
एतत्कर्मविशुद्ध्यर्थं यतीनां भोजनं हितम्। दानहोमादिना तेन कर्मणा वः प्रसादतः ॥ १७ ॥
एवमुक्त्वा ततस्तान्स प्रणमेद्वसुधासुरान्। एवं स्तुतिं त्रिरुच्चार्य कोऽदादिति विसर्जयेत् ॥ १८ ॥
पूर्ववद्विसृजेत्तान्वै सर्वेषां स्तुतिमाचरेत्। सर्पिष्यात्मानमालोक्य ततः शुद्धो ज्वरार्तिमान् ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो नवोत्तरनवशताधिकसहस्रतमः ॥ १९०९ ॥

---

अरुण उवाच।

यस्यास्थिसन्धिशीर्षेषु रुग्भवेत्परमदारुणा। कण्ठोष्ठतालुके वक्त्रे शोषस्तन्द्रा तमो भ्रमः ॥ १ ॥
नेत्रे रक्तेऽथ कलुषे आभुग्नेऽस्रवतोऽपि च। कासश्वासौ गले शूकं दाहः शीतं क्षणेक्षणे ॥ २ ॥
वचोविपर्ययः स्याद्वै गीतहास्यादि वैकृतम्। कुरुते हानिशं निद्रा व्यत्ययो हृदये व्यथा ॥ ३ ॥
ष्ठीवनं चापि रक्तस्य शिरोलोठं मुहुर्मुहुः। एवमादीनि चिह्नानि जायन्ते यस्य रोगिणः ॥ ४ ॥
उपायैर्भिषजां वापि ज्वरो यस्य न शाम्यति। तस्य कर्मप्रकाशं मे कथयस्व दिवाकर ॥ ५ ॥

श्रीसूर्य उवाच।

क्रूरकर्माऽभवत्सत स पापः पूर्वजन्मनि। प्राणिनामतुदच्छीर्षे सन्धिपार्श्वेषु तोदनैः ॥ ६ ॥
शीतेनाप्यर्दयच्छीत्ये तापेनापि तपत्यपि। प्राणानां नोद्यमानानां यथा कण्ठोष्ठशोषणम् ॥ ७ ॥

निःश्वासशून्यता व्यर्थवचो हास्यादि रोदनम् । यद्यद्विरचितं तेषां तत्तदस्यापि दुर्मतम् ॥ ८ ॥
पैशुन्यं विवदन् मिथ्याव्यवहारवचांसि यत् । वचो वैयर्थ्यमस्त्यस्य भ्रममोहादिकं तथा ॥ ९ ॥
अन्नारुचिर्बुभुक्षाणां पिपासानां निरोधनम् । तेनारुचिश्च तृष्णा च बाध्येते ते पुनःपुनः ॥ १० ॥
प्रत्यक्षमपि तस्यैतच्चिह्नमैहिकमिष्यते । स तस्करनृपादिभ्यस्तद्वचोदनमाप्नुयात् ॥ ११ ॥
देहस्यावश्यपोष्यस्य तेषुतेषु महाव्यथा । जायते तृणकाष्ठाश्मविषशस्त्रव्रणादिजा ॥ १२ ॥
जन्मजात्यादिकं सर्वं पूर्ववत्प्रश्नयाद्वदेत् ॥ १३ ॥

अरुण उवाच ।

का तस्य निष्कृतिस्तात कर्मणः सततोदिता । यथा स मुच्यते दुष्टात्कर्मणोऽस्मात्सुखी भवेत्१४

श्रीसूर्य उवाच ।

तां सर्वदुर्गतरणीं सर्वपापनिबर्हिणीम् । स जातवेदसं सम्यक्शतमष्टोत्तराग्रतम् ॥ १५ ॥
जपेच्च तद्दशांशेन जुहुयाज्जातवेदसम् । सहस्रकलशैर्देवं स्नापयेद्भोजयेद्द्विजान् ॥ १६ ॥
वित्तव्याधिबलं वीक्ष्य कुर्यात्कल्पोत्तरायराम् ॥ १७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो दशोत्तरनवशताधिकसहस्रतमः ॥ १९१० ॥

---

अरुण उवाच ।

ज्वरिणो यस्य तावन्त्यः प्रागुक्ताः सन्ति वेदनाः । ज्वरेणातिप्रतप्ताङ्गो रतिं न लभते क्षणम् ॥१॥
दिवा वा यदि वा रात्रौ प्रत्यहं हीयते बलात् । तापतृष्णादितोऽत्यन्तमौषधैर्न च तच्छमः ॥२॥
ज्वरिणो यस्य लक्ष्मैतत्तस्य किं कर्म कीर्तय ॥ ३ ॥

श्रीसूर्य उवाच ।

आततायी स पूर्वेऽभूज्जन्मन्यसहनः परान् । सदामर्षतयान्यस्य ददाह सदनं पुरा ॥ ४ ॥
तेनैव स नरः शर्म न च किञ्चित्प्रविन्दति । ऐहिकं लक्ष्म तस्यापि गृहदाहादिकं भवेत् ॥ ५ ॥
यवव्रीहितिलक्षौद्रपयस्तैलघृतादिनाम् । दहनान्तकवस्तूनां तेषां हानिमवाप्नुयात् ॥ ६ ॥
निष्कृतिं शृणु तस्यापि कर्मणः क्षतिकारिणीम् । तैलक्षौद्रपयः सर्पिः पूर्णकुम्भाहुडेन च ॥ ७॥
जुहुयाच्च यथाशक्ति वह्नौ विप्रांश्च भोजयेत् । धान्यान्यपि च मापादीन्यस्मिन्दद्याद्विजन्मने ॥८॥
सितवस्त्रयुगं दद्यात्सितपुष्पैस्तथार्चयेत् । अथवा स्वर्णजां मूर्तिं विष्णोः कृत्वा विधानतः ॥९॥
शङ्खचक्रगदापद्महस्तां वै शुभलक्षणाम् । पलेन वा तदर्धेन निर्मितां गरुडाग्रज ॥ १० ॥
कृतप्राणप्रतिष्ठां च पूजितां विविधार्हणैः ॥ १० ॥
वस्त्रयुग्मेन संछन्नां ताम्रपात्रोपरिस्थिताम् । दद्याद्दक्षिणया युक्तां दक्षिणां स्वर्णसंयुताम् ॥ ११ ॥
उदङ्मुखोपविष्टाय प्राङ्मुखः प्रयतः शुचिः ॥ १२ ॥

मन्त्रः ।

"देवदेव जगन्नाथ शंखचक्रगदाधर । तव मूर्तिप्रदानेन ज्वरं नाशय मे विभो" ॥ १३ ॥
एवं दत्त्वा विसृज्याथ मुच्यते महतो ज्वरात् । ब्राह्मणान्भोजयेच्चापि वित्तव्याधिबलेच्छया ॥१४॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकादशोत्तरनवशताधिकसहस्रतमः ॥ १९११ ॥

---

अरुण उवाच।

यस्तु ज्वरभराक्रान्तो बहिरन्तश्च शीतभाक्। सङ्कोचयतिगात्राणि वेपते च मुहुर्मुहुः॥ १॥
चेतना दह्यते चाम्भो न रतिं कुरुते मनाक्। यत्कर्मतो ज्वरस्तस्य सत्यं वद दिवाकर॥ २॥

श्रीसूर्य उवाच।

पूर्वं स पितृदेवानामर्चने सति वै घने। अकरोत्स च संकोचं वित्तव्ययभयार्दितः॥ ३॥
सुगन्धिजलसम्पूर्णैः सहस्रकलशैर्विभुम्। स्थाप्य सम्पूजयेद्विष्णुं कमलैस्तुलसीदलैः॥ ४॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वादशोत्तरनवशताधिकसहस्रतमः॥ १९१२॥

---

अरुण उवाच।

दिनमेकमतिक्रम्य ज्वरोऽन्यदिवसे पुनः। प्रत्येकं वा चतुर्थेऽह्नि पक्षे मासेऽपि वा पुनः॥ १॥
अहनी द्वे अतिक्रम्य द्वेऽहनि प्रतिबाध्यते। दिनमेकमथो हित्वा परेऽहनि च बाध्यते॥ २॥
लक्षणं रोगिणोऽप्येवं शीर्षसन्ध्यस्थिवेदना। पिपासाग्लानिरङ्गानां शीतमन्तर्महोल्बणम्॥ ३॥
संकोच्य सर्वगात्राणि दन्तवाणी विधाय वै। अतिमारभराक्रान्तो रतिं न प्रतिपद्यते॥ ४॥
माकरीं कुरुते चेष्टामल्पे पयसि दुःस्थिताम्। पुनः शान्तिं प्रयात्येव विना पथ्यैर्विनौषधैः॥ ५॥
प्राप्ते काले पुनर्दत्ते स्वरूपमतिभीषणम्। अनुवेलं समाक्रामत्यनुवेलं निवर्तते॥ ६॥
वेलेव च समुद्रस्य पुनरायाति याति च। यद्दिने कर्मगाः सर्वे तद्दिने दोषसम्भवः॥ ७॥
तत्तदेवाह्निकं तेषां कर्मदोषपरिक्षयः। दुःखभोगाद्यादि स्याद्वा वक्तव्यः पुनरुद्भवः॥ ८॥

श्रीसूर्य उवाच।

य एतेऽत्र समाख्याता ज्वराः परमदारुणाः। विषमज्वरसंज्ञास्ते प्राणिनां भयदायकाः॥ ९॥
तेन प्रोक्तजनाः कृत्स्ना न च तद्दोषसम्भवः। तेषामिह समुत्पत्तिरैहिकैरेव कर्मभिः॥ १०॥
येषां सुता न च भ्राता गोत्रिणो दुःखदा नराः। येषां विनापि सत्कर्म भवेन्नियममोचनम्॥ ११
चिरकालात्प्रमुच्यन्ते निरयान्ते शिवाज्ञया। भूतप्रेतपिशाचत्वं गताः स्युस्ते प्रमा ग्रहाः॥ १२॥
तेषामाधिपतिः शम्भुर्भूतनाथः स्वयं प्रभुः। शिवालये जले तीर्थे पुण्यवृक्षे चतुष्पथे॥ १३॥
अश्वत्थे च नदीतीरे न्यग्रोधे पितृकानने। सुरालयेषु सर्वेषु येषां वासः शिवोदितः॥ १४॥
भूताष्टम्योर्निवस्यां च चतुर्थ्यां निशि सन्ध्ययोः। मध्याह्ने च निशीथे च ग्रहकाले सर्वपर्वसु॥ १५॥
स्थानेषु चैव मुख्येषु प्रसर्पन्तीह ये नराः। असङ्गता अशुचयो भीरवो विगतायुधाः॥ १६॥
अस्मरन्तो हरिं रुद्रं दुर्गां दुर्गौघतारिणीम्। विसृजन्ति मलं मूत्रं नृत्यन्ति च हसन्ति च १७॥
रमन्ते नांश्च भजन्ति ष्ठीवन्ति च रुदन्ति च। तेभ्यस्तत्र भूतास्ते च प्रकुप्यन्ति शिवाज्ञया १८
ते क्रुद्धास्तान्प्रगृह्णंति विशंति च तांस्तदा। ज्वररूपं समास्थाय पीडयन्ति महाग्रहाः॥१९॥
तेषामोजो बलं वीर्यं सत्त्वमादाय सर्वशः। विरमन्ति यदा तेभ्यस्तदा तेस्युर्गतज्वराः॥ २०॥
पुनः काले प्रवर्तंते पुनश्च विरमन्ति च। एवं ते कथितास्तात दारुणा विषमज्वराः॥ २१॥
तेषामप्रार्थनीयत्वात्र पुनश्च्युतिरीरिता। अदोषसम्भवत्वाच सिद्ध्यो न भिषक्क्रियाः॥२२॥
ऐहिकैरेव तैरेतैः कर्मभिस्ततसपुङ्गवः॥ २३॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोदशोत्तरनवशताधिकसहस्रतमः॥ १९११॥

---

अरुण उवाच ।

प्रायश्चित्तेन भिषजामुपयोगेन तच्छमः । कथं तेषां भवेत्तात शान्तिर्दुःखौघनाशिनी ॥ १ ॥

श्रीसूर्य उवाच ।

तेषां च शान्तये सम्यग्भूतनाथान्प्रपूजयेत् । तेभ्योऽपि विविधा देया बलयो मद्यमांसलाः ॥ २ ॥
यजुर्वेदे: जपेत्सूक्तं शतरुद्रीयमीश्वरः । मधुपूर्णैर्गन्धतोयानां सहस्रकलशैः शिवम् ॥ ३ ॥
सम्पूजयेत्तत्र लक्षपुष्पैः सुमनसं प्रभुम् । गुग्गुलं सर्षपैराज्यं जुहुयाच्च तिलान्हविः ॥ ४ ॥
रविवारे ज्वरस्यैव दिने च भूतशासितुः । होमान्ते स ज्वरी गत्वा ह्यश्वत्थं देवरूपिणम् ॥ ५ ॥
शुचिः शुक्लाम्बरधरः प्रदक्षिणक्रमात्क्रमेत् । अष्टाधिकशतं कृत्वा कुर्यात्तत्रापि तर्पणम् ॥ ६ ॥
तावन्तश्च परीरंभाः कार्या विष्णुधिया दृढम् । सुगन्धिसलिलं सम्यक्सर्वौषधिसमन्वितम् ॥ ७ ॥
तन्मूले च प्रदातव्यमेकविंशतिकुम्भकैः । होमं त्र्यम्बकमन्त्रेण तर्पणाद्यं पुराणजैः ॥ ८ ॥
मन्त्रैरेभिः प्रकुर्वीत श्रद्धाभक्तिसमन्वितः । ॐनमो बोधिरूपाय विष्णुरूपाय ते नमः ॥ ९ ॥
ज्वरं हर महाभाग तृतीयं मम बाधकम् । महाज्वर महाभाग महाबलपराक्रम ॥ १० ॥
त्यज्यतां भूतभव्येश पिप्पलेऽस्मिन्स्थिरो भव । तन्मूलेऽप्यसितं कुम्भं सुगन्धाम्भःप्रपूरितम्॥११॥
रक्तस्रग्धूपवसनधूपैर्विविधैरर्चितम् । रक्तपुष्पैः कदम्बेन समं भूतशरावकम् ॥ १२ ॥
दद्यादनेन मन्त्रेण ज्वरी श्रद्धासमन्वितः ॥ १३ ॥

मंत्रः ।

"प्रतिगृह्य बलिं चैव तृतीयकमहाज्वर । आतुरस्य सुखं सिद्धिं प्रयच्छस्व महाबल" ॥ १४ ॥
ततो विप्रांश्च सन्तर्प्य विविधैर्भूरिभोजनैः । कापालिकांश्च भिक्षूंश्च दीनान्धकृपणानपि ॥ १५ ॥
कृतमन्नं च तैलेन स्थापयेत्करवीरके । सम्पूज्य विविधैस्तोत्रैः स्तुत्वा गृहमथो व्रजेत् ॥ १६ ॥
ध्यायन्कपिपतिं शम्भुं न पृष्ठमवलोकयेत् । अथवा बलिमुर्वीशे कृसरौदनपूर्वकम् ॥ १७ ॥
माषान्नमद्यतैलादिप्लुतं सकरवीरकम् । दीपमालाकुलं रात्रौ दद्यात्तेभ्यश्च तुष्टये ॥ १८ ॥
अथवा यद्यदिच्छेच्च भोजनं ज्वरितो नरः । पुष्पचन्दनताम्बूलं तत्तदस्मै प्रदापयेत् ॥ १९ ॥
दत्त्वा सतण्डुलं कांस्यपात्रं ससलिलं घटम् । कृसरापायसापूपमत्स्यमांससुरासवैः ॥ २० ॥
वैणवे सह हेम्ना ताम्रपात्रे न्यस्य घटोपरि । घटं दीपावलीयुक्तं मूर्ध्नि कृत्वा महाज्वरी ॥ २१ ॥
श्मशानं प्रापयेद्विप्रैस्ततः स लभते सुखम् । ज्वरात्प्रलापकाख्यातः शीतातैश्च महाज्वरात्॥२२॥
मुच्यते बलिदानेन विधिना विहितेन तु । शीतोष्णाधिकयोगाच्च बलिं विष्णुशिवालये ॥२३ ॥
महज्जेषु ज्वरेष्वेवं रुद्रपूजा विशिष्यते । जपेद्रौद्रं यथाशक्ति जपं ज्वरविनाशनम् ॥ २४ ॥
तद्दशांशेन जुहुयात्तिलगुग्गुलुसर्षपान् । दातव्यं कनकं लोहं भोक्तव्याः साधवो द्विजाः ॥ २५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्दशोत्तरनवशताधिकसहस्रतमः ॥ १९१४ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे प्राग्भवे पादजः प्रभुः ॥ १ ॥
धर्मकर्मसमायुक्तो देवद्विजपरायणः । दत्तानि तेन दानानि पर्वस्वपि च भक्तितः ॥ २ ॥
सत्पात्रेभ्यः सुवर्णं च गोभूवस्त्रान्नकानि च । अथो पापं भृशं चक्रे भाविनोऽर्थस्य वै बलात्॥३॥
वाणिज्यादिप्रसङ्गेन कृतवान्वैश्यमारणम् । विनापराधं दर्पेण विनतानन्दवर्धन ॥ ४ ॥

ततो बहुतिथे काले प्राप्तस्तु यमशासनम्। पूर्वं पुण्यफलं भुक्त्वा पश्चात्पापफलं तथा ॥ ५ ॥
पूर्वपुण्यप्रभावेण स जातो बाहुजोऽधुना। गङ्गायाः पूर्वभागे च पुण्यदेशे हिमालये ॥ ६ ॥
नात्युच्चो नातिह्रस्वश्च गौरवर्णः प्रतापवान्। राज्ञां वंशे समुत्पन्नः सर्वलोकप्रियङ्करः ॥ ७ ॥
सर्वैश्वर्ययुतो धीरो धनवाहनभोगभाक्। प्राग्भवे यूनिभावे च सत्कर्मकृतवांस्स्वयम् ॥ ८ ॥
तथैव यूनि भावे च सोऽपि राजा भविष्यति। महोग्रदण्डनपरस्तथा भैरवशासनः ॥ ९ ॥
विद्यावांश्चतुरः शूरोऽखिलशत्रुनिबर्हणः। ब्रह्मण्यो धर्मवित्प्राज्ञो नीतिशास्त्रविशारदः ॥ १० ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। प्राग्भवे वैश्यहननाल्लग्नात्षष्ठस्थितो बुधः ॥ ११ ॥
तुलया कृतवान्घातं तुलास्थो शौयुतस्तथा। लग्ने शशी तथा पुत्रे रविः पापनिरीक्षितः ॥ १२ ॥
अल्पपुत्रः सुखी रोगी पित्तवातामयी सदा। उदरे वातपीडायुग्वठी मानी च चञ्चलः ॥ १३ ॥
चतुर्विंशन्मिताब्दान्तं जातपुत्रविनाशकः। शुक्रचेष्टो महाक्रूरस्तथा विश्वासघातकः ॥ १४ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तमथो शृणु। पलैः पञ्चमितैः कार्यो वैश्यः स्वर्णमयः शुभः ॥१५॥
षोडशोरुपचारैस्तु पूजयित्वा विधानतः। विधिज्ञाय प्रदातव्यो ब्राह्मणाय कुटुम्बिने ॥ १६ ॥
लक्ष्मीनारायणो देवस्तथा पशुपती रविः। पलैस्त्रिस्त्रिमिताः कार्या देयाः प्राग्वद्विधानतः ॥१७॥
तल्लिङ्गमन्त्रान्गायत्रीं द्विविधं त्र्यम्बकं जपेत्। तिलैस्त्रिमधुरोपेतैर्ब्राह्मणानपि भोजयेत् ॥ १८ ॥
मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः। एवं कृतविधेः सूत पूर्वजन्माघनाशनम् ॥ १९ ॥
भवन्ति व्याधयस्तस्य न च शत्रुभयं भवेत्। न पुत्रमरणं किञ्चिन्न वारिष्टभयं क्वचित् ॥ २० ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। रिष्टं वसुमितेऽब्दे तु स प्राप्नोति यमोपमम् ॥२१॥
अथवा द्वादशाब्दे तु षोडशे वा विनश्यति। प्रायश्चित्ते कृते ह्यायुः खभूतमितवत्सरान् ॥२२॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्। यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचदशोत्तरनवशताधिकसहस्रतमः ॥ १९१५ ॥

## श्रीसूर्य उवाच।

बभूव प्राग्भवे सूत कश्चिद्वैश्यसुतः कृती। करहाटाभिधे देशे धर्मकर्मात्मकः सदा ॥ १ ॥
वाणिज्यनिपुणो दक्षो किञ्चिद्वित्तसमन्वितः। कृतवानन्नदानं हि विप्रेभ्यः पूर्णपीठके ॥ २ ॥
अथो पापं भृशं चक्रे भाविनोऽर्थस्य वै बलात्। दर्पेण वचनैर्दुष्टैः सद्भक्तानप्यतापयत् ॥ ३ ॥
परमर्माणि वा सम्यक्पीड्यंते स्वजना अपि। वचोभिः परमर्माणां भेदकोऽभूत्खगाधिप ॥ ४ ॥
जनानां नाशनं तेन कृतवान्कृतिनां सताम्। ततो बहुतिथे काले प्राप्तवान्यमशासनम् ॥ ५ ॥
पापात्पापफलं भुक्त्वा पुण्यात्स्वर्गांश्च शाश्वतान्। पूर्वपुण्यप्रभावेण स जातः पादजोऽधुना ॥ ६॥
हिमालये पुण्यदेशे गङ्गायाः पूर्वभागतः। स तु मन्त्रविदां श्रेष्ठो जीवे कर्के च संस्थिते ॥ ७ ॥
लग्ने कर्कगते मंदे नात्युच्चो न लघुर्घृणी। सुरूपो मतिमान्दक्षो धनवाहनभोगभाक् ॥ ८ ॥
नैकस्त्रीसंयुतः कामी कृषिवाणिज्यतत्परः। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ९ ॥
अस्थिभेदार्तिदेनैव ज्वरेण महताकुलः। तस्य यत्करणैरन्यैर्महौषधशतैरपि ॥ १० ॥
न शाम्यति महाव्याधिर्निष्कृतेः कारणं विना। लिङ्गं स्रवति तत्रादौ दह्यते कंपते बलात् ॥११॥
तदस्थिपूर्वभेदोयं शुष्कमेहनशूलयुक्। अन्तस्तु कूजितं वातादिपथुः श्वासदोषतः ॥ १२ ॥
छिन्नाशिनस्त्वङ्मूत्रस्वेदा गात्रं च दह्यते। एतत्पूर्वार्जिताद्दोषाद्दुश्चिकित्स्यो भिषग्वरैः ॥ १३ ॥
तेषां कल्पादिना भेदैर्बाध्यते जन्मजन्मनि ॥ १४ ॥

अरुण उवाच ।

का तस्य निष्कृतिः स्वामिन्येनार्तिज्वरनाशनम् । वद विस्तरतः स्वामिन्रोगिणां हितकाम्यया १५

श्रीसूर्य उवाच ।

सुदिष्टे समनुप्राप्ते शुभे सौम्यायने तथा । प्रारभेद्दानसद्वृत्तिमन्तःशुद्धिकृतात्मना ॥ १६ ॥
हैमं शक्त्यनुकूलं तु मकरं श्रद्धया युतम् । सा बालालंकृताऽऽभीरी दुकूलैः परिवेष्टयेत् ॥ १७ ॥
कांस्यपात्रोपरि क्षिप्य घृतं पूर्णशतं पलम् । रत्नलाङ्गूलनेत्रं च यथाशक्त्युदितौषधि ॥
दापयेत्परया भक्त्या ब्राह्मणाय कुटुम्बिने ॥ १८ ॥

मंत्रः ।

" यन्मया वचसा तुल्यं पीडिता बहवो जनाः ॥ १९ ॥
छिद्रैश्च शतसाहस्रैर्नानाकर्मप्रकाशनैः । तदर्जनेन सम्प्राप्तं दारुणं पातकं महत् ॥ २० ॥
ज्वरो ह्यमोलिसागरमा चापदस्तु ततो मया । एतत्पापविशुद्ध्यर्थं दानं सम्प्रददे त्विदम् ॥ २१ ॥
तत्तदेनोविनाशाय मकरं पलसम्मितम् । तत्तदेनोविनाशाय मत्स्यरूपं ददाम्यहम्" ॥ २२ ॥
तस्मान्मोच्यो महापापाद्वःसहाद्विजसत्तम । होमयेद्वरुणा रुद्रं घृताक्तमधुना युतैः ॥ २३ ॥
होमान्ते विप्रभोज्यान्ते सर्पिष्याननकं स्पृशेत् । वर्जयेदहिताश्चाथ सर्वेभ्यो हितमाचरेत् ॥२४॥
रथं सोपस्करं दद्याद्यथाविधि पुराणतः । सर्पी रत्नानि पानीयं देयं निर्जलके स्थले ॥ २५ ॥
एवं कृतविधेः सूत पूर्वजन्माघनाशनम् । ज्वराद्विमुक्तो जायेत प्रायश्चित्तेऽकृते त्विह ॥ २६ ॥
ज्वरेणैव विनाशः स्यात्पुनि भावे खगाधिप ॥ २७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षोडशोत्तरनवशताधिकसहस्रतम ॥ १९१६ ॥

---

अरुण उवाच ।

ब्रह्मक्षत्रियविट्शूद्राः कथं वर्णान्तरं खग । प्राप्नुवन्ति दिवानाथ कर्मणा केन तद्वद ॥ १ ॥
अग्निष्टोमरतो नित्यं सदाचारो जितेन्द्रियः । बाल्ये च वार्द्धके विप्रो यौवने सर्वधर्मवित् ॥ २ ॥
अकस्मान्म्लेच्छतां याति तन्मे वद दिवाकर ॥ ३ ॥

श्रीसूर्य उवाच ।

पुरा जनुषि यः सूत यज्ञकर्मणि पावने । आमिषास्वादने सोमपाने निंदा कृता भवेत् ॥ ४ ॥
धिगुच्छिष्टं द्विजातीनां यत्सोमं यज्ञकर्मणि । तस्मात्कर्मवशादत्र म्लेच्छत्वं प्राप्यते नरैः ॥ ५ ॥

अरुण उवाच ।

यस्मिन्देशे कृतं कर्म कस्य मुखं कुत्र कुतः । प्रयोजकानुमन्ता च वयोरक्ष्यादिभिः कृतः ॥६॥
विस्तरेण पृथक्त्वेन कथयस्व दिवाकर ॥ ७ ॥

श्रीसूर्य उवाच ।

दाक्षिणात्ये जनपदे तीर्थे चापि महत्तमे । कावेर्याः पश्चिमे तीरे ह्यग्निष्टोमे द्विजोत्तम ॥ ८ ॥
सोमपियस्य कृता निन्दा तेनास्य जन्म निन्दितम् । म्लेच्छत्वं च द्वितीयेऽपि तृतीयेऽथ चतुर्थके९॥
त्रिषु कुष्ठाश्रयत्वं च पञ्चमे भाक्तद्विजः । षष्ठे ततः सप्तमके महानद्यास्तु दक्षिणं ॥ १० ॥
देशाग्निर्तांम्मतेऽर्थेति म्लेच्छत्व स्याच्च सारथे । कलिजोऽप्युरगा सर्वेऽप्यकथानपरायणाः॥११॥
लक्षणानि खगश्रेष्ठ शृणु तस्य विभागतः । मस्तके वामपादेऽस्यादधः पादे व्रणो भवेत् ॥ १२ ॥

भार्याश्चतस्रस्तासां स्यादेका चाग्निपराङ्मुखा । पूर्वं पुत्रस्तथा पुत्री पुनरेव ततस्ततः ॥ १३ ॥
वर्णान्तरं भवेत्काले प्रहारा मृत्युदायकाः । भवन्ति बुद्धिरुत्पत्तिर्जायतेऽङ्गः कथं कृतम् ॥ १४ ॥
शिरसो गौरवं ग्लानिः किञ्चिन्नयनवैकृतिः । प्राग्भवे युवतिस्तस्य ग्रामीणान्या यशस्विनी ॥१५॥
भ्रातरः स्युस्त्रयस्तेषु मृतसन्तानपीडिताः । भयदुःखसमाक्रान्तास्तस्य भार्या सहायिनी ॥ १६ ॥
विषशस्त्राग्निघातः स्यादालस्यं चाग्निमांद्यता । जलघातो भवेत्तस्य पितुर्भ्रातृत्रयं वदेत् ॥ १७ ॥
गेहेतिमहती हानिः स्वर्णभूषणजा खग । तिस्रो भगिन्यः सततं भागिनेयो रुजार्दितः ॥ १८ ॥
गूढश्च कफजो व्याधिर्विश्वासो नैव जायते । दंष्ट्रिशृङ्गिविषाणिभ्यो व्रणः स्याद्विग्रहे खग ॥ १९ ॥
स्तनोपदेशे मशको लाञ्छनं सांक्षिकेऽस्य वा । ऋतौ पट्पञ्चदिवसे न्यूनेऽस्रकस्रुतिरद्भुता ॥ २० ॥
दिनेषु तेषु चालस्यमदमेहभ्रमादयः । पादयोर्गतिरंगुल्या व्रजन्त्या नावनिं स्पृशेत् ॥ २१ ॥
भवन्ति मारुतास्तस्य चत्वारोऽत्र सहायिनः । पितृतीर्थे भवेन्मृत्युस्तस्य मीनगते रवौ ॥ २२ ॥
पुनर्जगति जातो वै जन्म तस्य च लक्ष्मवत् । दण्डांकुशौ महच्चक्रं चापादि च भवेत्करे ॥२३॥
स्त्रियो वा तावदेकापि भगिन्यौ द्वे खगोत्तम । सुरगुरुर्लग्नात्तृतीयो तस्य जन्मनि वै भवेत् ॥ २४ ॥
व्याधियुक्तो भवेन्नित्यं तस्मात्पञ्चमके विधौ । इत्येवमादिभिर्ज्ञेयं लक्ष्मभिः कर्म सारथे ॥ २५ ॥
स तत्पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् । शुभे मासे सिते पक्षे सानुकूलग्रहे दिने ॥ २६ ॥
नद्यास्तीरे शुभे देशे वेदिकां कारयेत्खग । कलशं विन्यसेत्तत्र भूरसीत्यादिभिस्ततः ॥ २७ ॥
तत्र रुक्ममयं पद्मं नवमाषमितं शुभम् । पलद्वयेन वार्द्धेन तदर्धेनाथवा पुनः ॥ २८ ॥
स्वर्णनाप्ये विशुद्धेन कारयेन्मूर्तिमुत्तमाम् । पूजयेत्परया भक्त्या नानापुष्पैः सुशोभितैः ॥ २९ ॥
तदग्रे हवनं कार्यं तिलैरष्टोत्तरं शतम् । ब्राह्मणं सर्वतत्त्वज्ञं सर्वशास्त्रविशारदम् ॥ ३० ॥
समाहूय गृहे पुष्पैर्नानावर्णविचित्रकैः । शालतालतमालैश्च जातीयकुलपाटलैः ॥ ३१ ॥
पूजयेत्पापहं विष्णुं बालगोपालसंज्ञकम् । साङ्गमन्त्रमिमं प्रोच्य दद्याद्वेदविदे खग ॥ ३२ ॥

मन्त्रः ।

"यन्मया पूर्वजनुषि यज्ञकर्माणि चाद्भुतम् । सोमानिन्दात्मकं कर्म कृतं तेनेह जन्मनि ॥
वर्णान्तरं गतः पापात्पुनातु जगदीश्वरः" ॥ ३३ ॥

मन्त्रमेतं समुच्चार्य प्रतिमां हरिरूपिणीम् । तां मूर्तिं च करे गृह्य देवज्ञाय निवेदयेत् ॥ ३४ ॥
नानापुष्पैः सुगन्धैश्च पूजयेच्छशिशेखरम् । रुद्रमेकादशं कुर्याद्भोजयेच्च शतं द्विजान् ॥ ३५ ॥
सर्पिःपूर्णं शुल्बपात्रं वीक्ष्य दद्याद्द्विजन्मने ॥ ३६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तदशोत्तरनवशताधिकसहस्रतमः ॥ १९१७ ॥

---

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । विन्ध्याद्रिदक्षिणे भागे चन्द्रदेशे खगोत्तम ॥ १ ॥
कश्चिद्वैश्यः शुभाचारो राजमान्यः प्रतापवान् । क्रयविक्रयकर्ता च बहुद्रव्यसमन्वितः ॥ २ ॥
वित्तेन च समायुक्तो ज्ञातिव्यापारवान्भुवि । बहु पुत्र्योऽस्य जाताश्च द्वौ पुत्रौ च खगेश्वर ॥ ३ ॥
तस्य भार्या शुभाचारा पतिभक्तिपरायणा । गौरवर्णा च सुश्रोणी व्रतानामनुकांक्षिणी ॥ ४ ॥
तस्य गृहसमीपे तु ब्राह्मणी चावसत्पुरा । धनहीना पुत्रयुक्ता बहुद्रव्यैश्च संयुता ॥ ५ ॥
तेन वैश्येन विश्वास्य हृतं तस्यास्तु तद्धनम् । साहाय्यात्प्रतिवेशिन्या ब्राह्मण्याः पतगेश्वर ॥ ६ ॥
बहुकालं समासाद्य लंघनायोद्यताभवत् । कृतं तया महत्कष्टं नार्पितं तेन तद्धनम् ॥ ७ ॥

सा विषं भक्षयित्वा तु चात्मघातं चकार वै । तस्यास्तु पुत्राश्च चिरं बहुदुःखेन पीडिताः ॥ ८ ॥
वर्षैः कतिपयैरेव सर्वे पञ्चत्वमागताः । वैश्यस्तु निरयं प्राप्तो विप्रत्पातहतश्चिरात् ॥ ९ ॥
यातना बहुधा भुक्त्वा पश्चान्मानुष्यमाप्नुयात् । दाक्षिणात्ये जनपदे गोदावर्यास्तटे शुभे ॥ १० ॥
पुण्ये गोदावरीयाम्ये रवियोजनसम्मिते । इदं च पञ्चमं जन्म ब्रह्मवंशसमुद्भवम् ॥ ११ ॥
मध्यजन्मत्रयं यच्च तिर्यग्योनिभवं च तत् । निरयान्ते च तद्भुक्तं पुत्रपापमशेषतः ॥ १२ ॥
पूर्वपुण्यावशेषेण मानुष्ये ब्रह्मवंशजः । स मध्यरूपो मतिमान्कृशाङ्गः श्यामलच्छविः ॥ १३ ॥
विद्यावान्धर्मनिरतो धीरो मन्त्री महायशाः । धनवाहनभोगाढ्यो राजमान्यः प्रतापवान् ॥ १४ ॥
प्राग्भवे कपिलादानं प्रददौ सूर्यपूजनात् । तद्धर्माचरणात्पुण्यादन्नदानात्खगोत्तम ॥ १५ ॥
बहुविद्याधनैश्वर्यदासीदासजनान्वितः । देवब्राह्मणभक्तश्च विद्याभ्यासरतः सुखी ॥ १६ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । कैशोरे क्लेशभाक्चैव मनोदुःख्यतिरोगभाक् ॥ १७ ॥
चपलो दुष्टचित्तश्च तथाप्राप्तमनोरथः । ब्रह्मस्वहरणात्पापाद्ब्राह्मणीमरणादपि ॥ १८ ॥
खवेदमितवर्षान्तं जातपुत्रविनाशकः । जन्मलग्नात्सुते द्यूने क्रूरग्रहविलोकिते ॥ १९ ॥
ततः पञ्चमनाथे च कीटस्थे च बृहस्पतौ । वृषे शनैश्चरात्सप्तमस्थानस्थे खगा विधौ ॥ २० ॥
तुलास्थे प्रथमे लग्ने जातोऽयं ब्राह्मणोऽधुना । ब्राह्मण्याः पुत्रपुत्र्यश्च ब्राह्मणीमरणात्सुत ॥ २१ ॥
इतस्ततो विनाशं वै गताश्च विनतात्मज । पितृमातृकलत्राद्यैर्विमुक्तो वै किशोरके ॥ २२ ॥
युवभवेऽन्यदेशीयं युवत्र्यासुखभोगभाक् । किलासदद्रुकण्ड्वादिरोगयुक्तोऽरिभीतियुक् ॥ २३ ॥
मिथ्याभिशंसनैर्वादैरपवादैश्च संयुतः । लघुचित्तो महच्चित्तो विरक्तो रक्त एव च ॥ २४ ॥
क्षणवित्तेनाल्पयुक्तः पूर्वपापात्खगेश्वर । सहायलक्षणं तस्य शृणु वक्ष्यामि सारथे ॥ २५ ॥
पूर्वे ब्रह्मस्वहरणे सहाया द्विजाङ्गना । सा ज्येष्ठा प्रहेरवात्र परित्यक्ता सुखोज्झिता ॥ २६ ॥
या तस्य धर्मपत्न्यासीत्प्राग्भवे कश्यपात्मज । सोऽत्र जन्मनि पक्षीन्द्र कनिष्ठसुतशोकभाक् ॥ २७ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलमात्रा च कर्तव्या ब्राह्मणी पुत्रसंयुता ॥ २८ ॥
हिरण्मयी तदर्धेन तदर्धेनाथवा पुनः । यथावित्तानुसारेण षोडशोरूपचारकैः ॥ २९ ॥
सम्पूज्य देया विप्राय विधिज्ञाय खगोत्तम । रविर्माषमितः सोमः सुवर्णमितको रविः ॥ ३० ॥
देयं च कपिलादानं ब्राह्मणेभ्योऽतिभक्तितः । घृतपूर्णं शतपलैर्मितं ताम्रस्य भाजनम् ॥ ३१ ॥
सुवर्णद्वयसंयुक्तं दद्याद्विप्राय मानद । गायत्रीमष्टसाहस्रं त्र्यम्बकं तु तथा जपेत् ॥ ३२ ॥
ब्रह्मविष्णुमहेशानां मन्त्रांस्तत्संख्यया जपेत् । रविसोमात्मकौ तद्वज्जाप्यौ वै तद्दशांशतः ॥ ३३ ॥
होमयेत्तर्पयेद्विप्रान्भोजयेद्दक्षिणां दिशेत् । लक्षं पार्थिवलिङ्गानां पूजयेत्सुसमाहितः ॥ ३४ ॥
तदर्धं वायुतं वापि भक्तिश्रद्धासमन्वितः । अथवा शृणुयाद्भक्त्या हरिवंशं विशुद्धधीः ॥ ३५ ॥
पुत्रपौत्राभिवृद्ध्या च होमन्ते संपदोऽन्वहम् । नाधयो व्याधयस्तस्य न शत्रुभयमावहेत् ॥ ३६ ॥
सनागाब्दमितायुः स्यान्मुनिवेदमितेऽब्दके । रिष्टं नाप्नोति स प्राणी सुखी जीवति निश्चयात् ॥ ३७ ॥
प्रायश्चित्तद्वयेऽप्येकं नाचरेल्लोभमोहतः । इह लोके महादुःखी परत्र निरयं व्रजेत् ॥ ३८ ॥
प्रायश्चित्ते कृते तस्य तीर्थमृत्युर्न संशयः । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ३९ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्रादिलोकयेत् ॥ ४० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टादशोत्तर शताधिकसहस्रतमः ॥ १११८ ॥

श्रीसूर्य उवाच।

नारिकेलफलस्यापि हर्तुः स्यान्मस्तकव्रणः। शुक्लपक्षे चतुर्दश्यां विशेषेण विधानतः॥ १॥
शङ्करस्यालयं गत्वा व्रणी विधिमिमं चरेत्। शंकरं स्नानविधिना पूजयित्वा विधानतः॥ २॥
परितो लिङ्गमीशस्य नारिकेलफलैर्बलिम्। कल्पयित्वार्चयेद्वीरीं यथावत्पूर्वमर्चिताम्॥ ३॥
विप्रेभ्यो दक्षिणां दद्यात्सुवर्णरचितां बहु। ततः कृताञ्जलिर्भूत्वा व्रणी मन्त्रमिमं पठेत्॥ ४॥

मन्त्रः।

"यन्मया नारिकेलानि हृत्वा पापमुपार्जितम्। अर्चितो भगवान्रुद्रो भवान्या भयभञ्जनः॥ ५॥
यथाशक्ति च दानार्यैर्भवन्तोपि च पूजिताः। कर्मणानेन मे नाशमुपैतु शिरसो व्रणः" ॥ ६॥
एवमादीनि तेरुक्तः शंकरं सह भार्यया। प्रणम्य विप्रान्भूयः स श्रद्धया गृहमाव्रजेत्॥ ७॥
ब्राह्मणान्भोजयेत्तत्र दद्याच्छक्त्या च दक्षिणाम्॥ ८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनविंशत्युत्तरनवशताधिकसहस्रतमः॥ १९१९॥

---

श्रीसूर्य उवाच।

सर्वसाधारणान्म्लेच्छान्पुरा जन्मनि योऽगमत्। विलसीति च शूकोत्थो व्रणः स्यात्तस्य शेफसि॥ १॥
स तद्दोषविनाशार्थमाचरेदिति निष्कृतिम्। द्वादश्यां शुक्लपक्षे तु समुद्दिश्य जलाधिपम्॥ २॥
दद्याद्धेनुं सुविप्राय ब्राह्मणाय यजुर्विदे। पूर्वोक्तेन विधानेन देवज्ञादेशतत्परः॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो विंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२०॥

---

श्रीसूर्य उवाच।

अदत्त्वा वेतनं वेश्यां यः पुरा निरवासयत्। तस्य स्यात्सार्षपी सूत व्रणो घोरोऽत्र शेफसि॥१॥
वापीकूपतडागादिनिपानान्यजने पथि। निर्मीयमाणानि परैः शक्तितो विसृजेद्वसु॥ २॥
दत्ते व्रणोत्पत्तिर्नस्याज्जातस्य च विनाशनम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकविंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२१॥

---

श्रीसूर्य उवाच।

भिल्लकैवर्तवरटचर्मकृत्तन्तुवायिनाम्। अन्येषामपि कारूणां सङ्गम्य च स्त्रियो बलात्॥ १॥
भावशूकव्रणो लिङ्गे जायते तस्य निष्कृतिः। नरस्तद्दोषनाशाय दद्याद्धेनुं द्विजन्मने॥ २॥
सुवृत्ताय सुशीलाय सुशान्ताय पयस्विनीम्॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वाविंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२२॥

---

श्रीसूर्य उवाच।

विवाहेऽपि च यज्ञादौ पुण्यकर्मणि चाखिले। विघ्नकर्तुर्वदेचिह्नं मन्त्रवृद्धमतः खग॥ १॥
निष्कद्वयसुवर्णेन उमामाहेश्वरस्य च। प्रतिमां कारयित्वा तु सम्पूज्य विधिवच्छुभाम्॥२॥
तन्निमित्तेन सुवर्णेन दद्याद्विप्राय वै खग। अंत्रवृद्धिकरो रोगस्तत्क्षणादेव नश्यति॥ ३॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयोविंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२३॥

---

श्रीसूर्य उवाच।

यो नरः कामवशाद्गो ह्यनिच्छन्तीं पतिव्रताम्। कामाकुलितया दृष्ट्या पुराऽपश्यत्परस्त्रियम्॥१॥

तस्य नेत्रामयोऽत्र स्याद्व्याधिर्वातविपर्ययात् । उपोष्य च त्रिरात्रं स नियतो विष्णुतत्परो ॥२॥
भूमिशायी त्रिस्वणस्नायी देव स्मरन्हरिम् । चतुर्थे दिवसे प्राप्ते भोजयेद्द्विजपुङ्गवान् ॥ ३ ॥
ततः स प्रणिपत्यामूनिदं वचनमीरयेत् ॥ ४ ॥

मंत्रः ।

" यन्मया मूढभावेन दृग्विक्षेपं परस्त्रियाम् । कुर्वता भ्रूविलासाद्यमकामाया वितन्वता ॥ ५ ॥
नेत्रामयो महाघोरः प्राप्तो वातविपर्ययः । प्रसादाद्वै च विप्राणां स मे नश्यतु दुर्ग्रहः " ॥ ६ ॥
इति विज्ञाप्य तान्नत्वा विसृजेद्विनयान्वितः । अग्ने नयेति मन्त्रेण स्वर्चितात्कुसुमादिभिः ॥ ७ ॥
ततः स्वबन्धुभिः सर्वं कुर्याद्वै पारणाविधिम् ॥ ८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुर्विंशत्युत्तरनवशताधिकसहस्रतमः ॥ १९२४ ॥

श्रीसूर्य उवाच ।

यः पुरा हरते तैलं लोभोपहतचेतसा । सोऽत्र जन्मनि पक्षीन्द्र पापरूपपीडितोऽधुना ॥ १ ॥
आयसस्य घटं तैलं पूर्णं दद्याद्द्विजन्मने ॥ २ ॥

मन्त्रः ।

यन्मया हरितं तैलमङ्गवकृतमुत्तमम् । प्राप्तं पापाभिधं तस्मान्मुच्येयं दर्शनाच्च व. ॥ ३ ॥
एवमस्त्विति तैरुक्तः स्वयं भुञ्जीत वाग्यतः ॥ ४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चविंशत्युत्तरनवशताधिकसहस्रतमः ॥ १९२५ ॥

अरुण उवाच ।

कश्चिद्वर्णोत्तरे जातो धर्मिष्ठो धर्मवत्सलः । कृषिकर्म प्रकुर्वाणो वातरक्तादिदर्शनम् ॥ १ ॥
हस्तयोर्वामपार्श्वे तु कुक्षिभागे व्रणाकुलः । भार्या प्रीतिकरी नित्यशुभे वा तिस्र एव च ॥ २ ॥
परस्परं महाप्रीतिर्न्तानामपि काङ्क्षिणी । प्रदरातिवशात्तस्या गर्भो याति विलीयते ॥ ३ ॥
केन कर्मविपाकेन सत्यं कथय भास्कर ॥ ४ ॥

श्रीसूर्य उवाच ।

स्वीकृत कर्मणा हेतुः पुस्कृतं नैव सारथे । पूर्वं वर्णोत्तरे जातो बहुवित्तसमाकुलः ॥ ५ ॥
कामुकः कृपणश्चैव परदाररतः सदा । कदाचित्कालयोगेन भाविनोर्थस्य वै बलात् ॥ ६ ॥
एका स्त्री ब्राह्मणी पूर्वं बाल्ये वैधव्यता गता । चपला रूपसम्पन्ना नारीणामपि मोहिनी ॥ ७ ॥
सा चकार महाप्रीतिमनेन कामुकेन च । चिरकालं काश्यपे वै बहुगर्भनिकृन्तनम् ॥ ८ ॥
लोकापवादभीत्या च औषधीभिः कृतं पुरा । मासत्रये ह्यतिक्रान्ते गर्भपातनतत्परः ॥ ९ ॥
बहुकालं काश्यपे साक्रान्तु यथेप्सितम् । पश्चान्मृतिं समापन्नो दुष्टविप्रुवयोगतः ॥ १० ॥
पतितो नरके घोरे वर्षायुतसहस्रशः । इदं च पञ्चमं जन्म वर्णोत्तरसमुद्भवम् ॥ ११ ॥
पूर्वपुण्योपभोगेन मानुषत्वं हि जन्मनि । तेन कर्मविपाकेन गर्भो याति विलीयते ॥ १२ ॥

अरुण उवाच ।

प्रायश्चित्तं कथं देव येन गर्भः स्थिरो भवेत् । जन्तूनां कृपणादीनां रूपं कृत्वा दिनेश्वर ॥ १३ ॥

श्रीसूर्य उवाच ।

वीर्यस्यावहनं कृत्वा सम्वत्सरप्रमाणतः । पश्चाद्देहे समागम्य प्रायश्चित्तं समाचरेत् ॥ १४ ॥

विप्रस्योद्वाहनं कृत्वा गृहदानं समापयेत्। कुर्याद्देनायकीं शान्तिं विप्राणां भोजयेच्छतम्॥ १५॥
एवं कृतविधेः सूत मोचयेद्वो यथोदिताम्। सर्पिष्यात्मानमालोक्य पलषोडशसंख्यया॥ १६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षड्विंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२६॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्यापि चेष्टितम्। बभूव यामुने देशे ब्राह्मणी लोकवन्दिता॥ १॥
पतिव्रता सदाचारा पतिभक्तिपरायणा। तया दत्तानि दानानि ब्राह्मणेभ्योऽतिभक्तितः॥ २॥
नानाफलानि दिव्यानि सुगन्धीनि च पर्वसु। खेटयज्ञादिके यानि ऋषिभ्यः कथितानि च॥ ३॥
अन्नभूषणवस्त्राश्वभूषाशय्यासनानि च। अथो भाविवशात्सूत कृतं यत्कर्म दारुणम्॥ ४॥
विषं दत्त्वा जघानासौ सपत्नीवशगं पतिम्। ततो बहुतिथे काले सा गत्वा यमशासनम्॥ ५॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकांस्तथा। पूर्वपुण्यप्रभावेण सा जातात्र हिमालये॥ ६॥
गङ्गायाः पूर्वभागे च राजवंशे महाद्भुते। नातिह्रस्वा नातिदीर्घा गौरवर्णा कृशोदरी॥ ७॥
पितृमातृसुखैर्युक्ता बाल्ये भ्रातृसुखान्विता। पितृमातृसुखैर्हीना किशोरे क्लेशसंयुता॥ ८॥
यूनि भ्रातृसुखैर्हीना दानशीला प्रियम्वदा। देवद्विजानां पूजायां श्रद्धाभक्तिसमन्विता॥ ९॥
गतागतधनैर्युक्ता प्रतानामनुकांक्षिणी। भ्रातृगे राशि सततं श्रेयसामनुकांक्षिणी॥ १०॥
पुण्यादिदं तथा पापाल्लोभयुक्ताल्पपापकृत्। किं कृतं विधिना मह्यमिति चिन्तासमन्विता॥ ११॥
जन्मलग्नात्सुते सूने क्रूरग्रहविलोकिते। कीटस्थेऽथ शनौ जाता मनोदुःखैः समन्विता॥ १२॥
पूर्वे पत्युश्च हननात्सपत्नीवैरभावतः। पापादिह महाभाग घोरादस्याः खगेश्वर॥ १३॥
सहस्रोपायकेऽथापि पतिर्न घटते खग। यूनि भावेऽण्डजश्रेष्ठ प्राक्कृतात्पापतस्त्विह॥ १४॥
यूनि सा पतिदुःखार्ता मम जन्म निरर्थकम्। जल्पन्तीति च दुःखार्ता सत्कृते निजवंशजा॥ १५॥
लक्षणैरेभिराढ्यायाः प्रायश्चित्तं शृणुष्व च। पलत्रयेण कर्तव्यो ब्राह्मणस्तु हिरण्मयः॥ १६॥
षोडशोरुपचारैश्च पूजयित्वा विधानतः। विधिज्ञाय प्रदातव्यो गां स्वर्णाभरणैर्युताम्॥ १७॥
तथा तन्मितिकः सोमः सुवर्णमितिको रविः। रविर्माषमितः शम्भुर्देयो भक्त्या विधानतः॥ १८॥
गायत्रीं दशसाहस्रं त्र्यम्बकन्तु तथा जपेत्। जपेत्सोमादिमन्त्रांश्च पञ्चपञ्चसहस्रकम्॥ १९॥
लक्षं पार्थिवलिङ्गानां पूजयेत्सुसमाहिता। कुर्यादयुतसंख्या वै पिप्पलस्य प्रदक्षिणाः॥ २०॥
प्रदिने तु व्रतं कुर्वान्मम भक्तिपरायणा। होमयेत्तद्दशांशेन तिलैः क्षौद्रघृतप्लुतैः॥ २१॥
ब्राह्मणान्भोजयेच्छतधा सर्पिष्यात्मानमीक्षयेत्। प्रायश्चित्तमिदं प्रोक्तं पूर्वजन्माघनाशनम्॥ २२॥
नाधयो व्याधयस्तस्या न दारिद्र्यभयं क्वचित्। प्रायश्चित्ते कृते ह्यायुरशीतिश्चतुरुत्तरम्॥ २३॥
पतिपुत्रवती चासाविहैव भवति ध्रुवम्। रिष्टं नाप्नोति नियतं चत्वारिंशन्मितेऽब्दके॥ २४॥
प्रायश्चित्तेऽकृते तस्या रिष्टेनैव विनाशनम्। अन्ते च निरयं प्रोक्तमपतिर्जन्मजन्मनि॥ २५॥
तीर्थे मृत्युमवाप्नोति कृते प्रावपापशोधने। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्॥ २६॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत्॥ २७॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तविंशत्युत्तरनवशताधिकसहस्रतमः॥ १९२७॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। आसीत्सिंहलके देशे द्विजपुत्री वरानना॥ १॥
सैरन्ध्रीकर्मकुशला वसन्ती राजवेश्मनि। राजराज्ञीप्रियकरी चारुभूषणभूषिता॥ २॥

वदान्या च सुशीला च पितृमातृसुखान्विता । पूर्वपापात्पतित्यक्ता कुशला राजकर्मणि ॥ ३ ॥
तया दत्तानि दानानि सुवर्णाभरणानि च । पर्वस्वपि च विप्रेभ्यो वस्त्रशय्यासनानि च ॥ ४ ॥
अथो भाविबलात्सूत कृतं यत्कर्म दारुणम् । विवाहयज्ञकर्मादौ विघ्न आचरितस्तया ॥ ५ ॥
गते बहुतिथे काले गत्वा तु यमशासनम् । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ६ ॥
वर्णोत्तरे कुले जाता देशे पुण्यजनाश्रिते । हिमालये महाभाग नात्युच्चा न लघुस्तथा ॥ ७ ॥
सुशीलाकृष्टगौराङ्गी दानशीला प्रियम्वदा । सन्धिविग्रहकर्त्री च राजवेश्माश्रया सदा ॥ ८ ॥
पितृमातृसुखैर्युक्ता कैशोरे तत्सुखोज्झिता । धनवाहनभोगाढ्या देवद्विजपरायणा ॥ ९ ॥
पुण्यादिदं तथा पापाल्लोभयुक्तातिपापकृत् । विवाहविघ्नजातपापान्नेत्रसंज्ञाकृतात्सुत ॥ १० ॥
केकराक्षी ह्यपतिका मनोदुःखैः समन्विता । जन्मलग्नात्सप्तमके दुष्टखेटैः समन्वितः ॥ ११ ॥
जाता जन्मस्थिते मन्दे किशोरे चलशसंयुता । रोगयुक्ता तथा सूनि क्लेशभाग्धनवत्यपि ॥१२॥
लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदामि ते । पलमात्रेण कर्तव्या रविमूर्तिर्हिरण्मयी ॥ १३ ॥
प्रतिष्ठापूजनं कृत्वा दद्याद्विधिविदे सुत । स्वर्णालंकरणैर्युक्ता दद्याद्गां च पयस्विनीम् ॥ १४ ॥
पिप्पलस्यायुतं सूत परिक्रमणमाचरेत् । ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् ॥ १५ ॥
प्रायश्चित्तमिदं सूत पूर्वपापविनाशनम् । एवं कृते महाभाग नारी सन्ततिमाप्नुयात् ॥ १६ ॥
रिष्टं नाप्नोति खाम्भोधिमिते वर्षे महाद्भुतम् । कुलसन्ततिमितायुः स्यात्क्लेशान्सैव न पश्यति १७॥
प्रायश्चित्तेऽकृते तस्या रिष्टेन मरणं ध्रुवम् । सन्ततिं नैव साप्नोति जन्मजन्मनि निश्चयात् ॥ १८॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टाविंशत्युत्तरनवशताधिकसहस्रतम ॥ १९२८ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्या विचेष्टितम् । प्रागासीत्क्षत्रिया काचिद्देशे यामुनसंज्ञके ॥ १ ॥
भर्तुः प्रियरता नित्यं दानधर्मरता सती । गुरूणां देवतानां च विप्राणां पूजने रता ॥ २ ॥
तदा दैवात्सा सुभगा द्रव्यलोभरता सदा । सपत्नीपुत्रमददाद्विषं चैतद्दशानुगम् ॥ ३ ॥
मृतस्तद्विषयोगेन गृहीतं तद्धनं तया । तद्दुःखेन पतिस्तस्या मृतः पुत्रशुचान्वितः ॥ ४ ॥
पापमाचरितं चोग्रं स्वपुत्रपतिघातजम् । प्राप्ता यमपुरं भुक्त्वा पुण्यात्शुभफलानि सा ॥ ५ ॥
तद्वत्पापफलानीह नरकान्घोरसंज्ञकान् । पूर्वपुण्यप्रभावेण सा जाता पर्वतेऽधुना ॥ ६ ॥
क्षात्रे कुले महापुण्ये राज्यत्रास्ति खगाधिप । सा रक्तगौरा मर्मज्ञा सदा पुण्यपरा खग ॥ ७ ॥
मध्यस्वरूपा सिद्धार्था सुशीला गौरवान्विता । नातिव्ययपुता पुण्यात्स्वकुलेषु प्रियम्वदा ॥ ८ ॥
पतिप्रियरता बाल्ये सुखैश्वर्यधनान्विता । पुण्यादिदं तथा पापाल्लोभाढ्या स्वल्पपुत्रका ॥ ९ ॥
स्वल्पपापरता बाल्ये चाधिव्याध्याधिसमन्विता । किशोरे भर्तृसंत्यक्ता सन्तानसुखवर्जिता॥१०॥
यौवने क्लेशयुक्ता च मनोदुःखैः समन्विता । बन्धनात्पितुरप्येवं यतस्तत्सुखवर्जिता ॥ ११ ॥
मिथ्याभिसंशंनघोरैरपवादैश्च संयुता । जन्मलग्नात्सप्तमके क्रूरग्रहविलोकिते ॥ १२ ॥
जातेयं पतगश्रेष्ठ सपत्नीपुत्रमारणात् । पूर्वपापान्महाभाग किशोरे मातृवर्जिता ॥ १३ ॥
लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् । विष्णुः कार्यः शतैर्माषैः सौवर्णो विश्वयोनिभृत्१४
तद्वन्महेश्वरं कुर्याद्गन्धैः पुष्पैरलंकृतम् । देया विप्रेषु पात्रेषु विधिज्ञेषु खगोत्तम ॥ १५ ॥
जपेद्द्वादशाक्षरं मन्त्रमयुतं होमयेत्ततः । गायत्रीं च जपेत्तद्वद्द्याद्गावस्तया सुत ॥ १६ ॥
ज्येष्ठच्छक्तितो विप्रांस्तेभ्यो दद्याच्च दक्षिणाम् । एवं कुर्यात्प्रयत्नेन पूर्वपापविशोधनम् ॥ १७॥

न तस्याः पुत्रमरणं तदग्रे जायते क्वचित् । कुसप्तत्यब्दमायुः स्यात्खवेदामितवत्सरे ॥ १८ ॥
रिष्टं नाप्नोति सन्तानसुखं पतिसुखं लभेत् । नैवं या कुरुते नारी प्रायश्चित्तं विधानतः ॥ १९ ॥
स्वपुत्रमारणोत्पन्नात्पापात्पुत्रसुखं न हि । विप्राणां पूजनाद्दानात्तस्याः सन्ततिवर्द्धनम् ॥ २० ॥
अकृते तु यथाशक्ति प्रायश्चित्ते मयोदिते । रिष्टेनैव विनाशः स्यात्तस्याश्च विनतासुत ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनत्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९२९ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम् । बभूव यामुने देशे क्षत्रिया पतिवल्लभा ॥ १ ॥
धनपुत्रवती चारुशीला चारुविभूषणा । पितृमातृसुखैर्युक्ता देवद्विजपरायणा ॥ २ ॥
तया दत्तानि दानानि पर्वस्वपि च भक्तितः । विप्रेभ्यः कपिलादानमन्नदानन्तु शक्तितः ॥ ३ ॥
कार्त्तिके च तथा स्वर्णं शय्याभूपासनानि च । दीपांश्च मथुरायां वै घृतेनापूर्य बोधितान् ॥४॥
यमुनायां जले चैव दीपा दत्ता विशेषतः । सहायाद्भर्त्तुरनिशं तया वै कश्यपात्मज ॥ ५ ॥
अथो पापं भृशं चक्रे भाविनोऽर्थस्य वै बलात् । भर्तुराज्ञां समुल्लंघ्य व्रतोपोषणकानि च ॥ ६ ॥
पुराणश्रवणं चैव तीर्थयात्रादि शक्तितः । भर्तृसेवां परित्यज्य विरक्ता साऽभवत्खग ॥ ७ ॥
यूनो भर्तुः समुल्लंघ्य शासनां युवतिस्त्वसौ । निजधर्मपरित्यागं चक्रे वैराग्यसुलक्षणम् ॥ ८ ॥
ततो बहुतिथे काले तद्दुःखेन मृतः पतिः । सा चक्रे चानुगमनं भर्तुर्वै विनतात्मज ॥ ९ ॥
पुत्रेण च गयां गत्वा श्राद्धं दत्तं विधानतः । ततस्ते सूर्यलोके तु भुक्त्वा भोगांश्च शाश्वतान् ॥
वर्षाणामयुतं सूत स जातो राजनन्दनः । आसीत्सा धर्मपत्न्यस्य स पुत्रः पुत्रतां गतः ॥११॥
हिमालये पुण्यदेशे सर्वदेवनमस्कृते । यत्र गङ्गा प्रवहति रम्ये हरिहराश्रमे ॥ १२ ॥
सा मध्यरूपा तन्वङ्गी गौरवर्णा शुभानना । चतुरा दानशीला च व्रतानामनुकांक्षिणी ॥ १३ ॥
पतिभक्तिपरा नित्यं देवद्विजपरायणा । पितृमातृसुखैर्युक्ता बाल्ये सर्वप्रियम्वदा ॥ १४ ॥
सत्पुत्रपौत्रसंयुक्ता धनवाहनभोगभाक् । देशेदेशेऽधिकाराढ्या पुत्रयुक्ता कृशोदरी ॥ १५ ॥
भृत्यदासीधनैर्धान्यैः संयुक्ता चारुलक्षणा । राज्ञां हितकरी शीला सन्धिविग्रहसंयुता ॥ १६ ॥
पुण्यादिदं तथा पापादल्पपापाल्पलोभयुक् । मनोदुःखेन संयुक्ता चिन्तायुक्तारिभीतियुक् १७ ॥
भर्तृसेवापरित्यागात्तद्दुःखात्तन्मृतेः खग । दुरितात्प्राक्कृतादत्र भर्तृत्यक्ता किशोरके ॥ १८ ॥
यामवस्थां तु सम्प्राप्य प्राग्भवे सा पतिप्रिया । विरक्तासीदिहैवास्याः पतिर्वैराग्यमाप्नुयात्॥१९॥
विरक्तो भवन्तं तं सा दृष्ट्वा क्लेशवती ह्यभूत् । धनपुत्रवती चापि भर्तृदुःखेन दुःखिता ॥ २० ॥
प्राग्भवे यूनि भावे च यतस्तद्दुःखतो मृतः । पतिस्तथेह यून्येव जाता सा विधवाङ्गना ॥ २१ ॥
जन्मसप्तमभावे च क्रूरग्रहविलोकिते । युग्मकीटकसान्निध्ये देवाहं कश्यपात्मज ॥ २२ ॥
युग्मसंस्थे चन्द्रमसि दुष्टखेटैर्विलोकिते । कुंभराशौ शनौ जाता वातरोगप्रपीडिता ॥ २३ ॥
श्लेष्मलोदररुग्युक्ता प्राग्जाताद्दुरितात्खग । लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥ २४ ॥
पलत्रयेण कर्तव्यो रविः स्वर्णमयः शुभः । भौमोऽपि च तथा कार्यो निष्केण च हिरण्मयः॥२५॥
सुवर्णमितकः शम्भुर्मकरस्तु तथा खग । षोडशोपचारैस्तु पूजयित्वा विधानतः ॥ २६ ॥
ब्राह्मणेभ्यस्तथा देया दश गावस्तिलास्तथा । गायत्रीमष्टसाहस्रं त्र्यम्बकन्तु तथा जपेत् ॥२७॥
रविभौमशिवानां च वरुणस्य तथैव च । मन्त्रांस्तत्संख्यया जप्याद्धोमयेत्तद्दशांशतः ॥ २८ ॥
लक्षार्धं पार्थिवानां च रुद्राणां पूजनं चरेत् । ब्राह्मणान्भोजयेत्पश्चात्सर्पिष्यात्मानमीक्षयेत्॥२९॥

मद्दिने तु व्रतं कुर्यान्मद्भक्ता मत्परायणा । प्रायश्चित्तमिदं प्रोक्तं पूर्वपापप्रणाशनम् ॥ ३० ॥
एवं निष्कृतिमासाद्य सद्गतिं लभतेऽङ्गना । शत्रुभीतिं न चाप्नोति दुःखं नाप्नोति रोगजम् ॥३१॥
पुत्रपौत्राभिवृद्ध्या च युध्यते सम्पदन्वहम् । तस्यारिष्टभयं नास्ति मुनिभूतमिताब्दके ॥ ३२ ॥
व्यशीतिमितवर्षाणि जीवनं समुदाहृतम् । अन्ते सद्गतिमाप्नोति यत्र देवः सनातनः ॥ ३३ ॥
नैवं करोति या मोहाल्लोभाद्वा पापशोधनम् । रिष्टेनैव विनाशः स्यादन्ते च निरयं व्रजेत् ॥३४॥
मर्त्यप्रयुक्तदुःखं सा जन्मजन्मनि चाप्नुयात् । चतुर्विधं महारिष्टं मुनिभूतमिताब्दके ॥ ३५ ॥
प्राप्नुयाद्दुरितादत्र प्राप्नुयाद्विनतात्मज । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ३६ ॥
यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३७ ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३० ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव वङ्गदेशे तु ब्राह्मणो वित्तसंयुतः ॥ १ ॥
राजमान्यो धनैश्वर्यदासदासीजनान्वितः । दत्तानि तेन दानानि तीर्थे स्नानानि पर्वसु ॥ २ ॥
कृतानि स्वर्णमन्नं च विप्रेभ्यः श्रद्धयान्वितः । अथो भाविवशात्सूत कृतं यत्कर्म दारुणम्॥३॥
कुसीदत्वेन यद्दत्तं द्रव्यं तद्याचयन्मुहुः । लंघनानि ततश्चक्रे पञ्चपञ्चसप्तकानि च ॥ ४ ॥
वृद्धि प्राप्तं तु दास्यामि द्रव्यं दत्तं दिनान्तरे । इदानीं न च दास्यामीत्युत्तरं निष्ठुरं वचः ॥ ५ ॥
ऋणिना चैव यद्दत्तं तेन क्रोधेन स द्विजः । कृतवान्स्वशिरःस्फोटं ततः पञ्चत्वमाप वै ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्तं पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातो ब्राह्मणोऽधुना ॥ ७ ॥
देशे कोंकणसंज्ञे तु कीटस्थेऽस्य बृहस्पतौ । नात्युच्चो नातिदीर्घश्च गौरवर्णः प्रतापवान् ॥ ८ ॥
बाल्ये पितृसुखैर्युक्तो गुरुबन्धुजनैर्युतः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ९ ॥
प्राग्भवे स्वात्मघाताच्च स्वजनान्भ्रातृबान्धवान् । सन्त्यज्य सञ्चरन्देशेदेशेऽप्राप्तमनोरथः ॥ १० ॥
दुःखी मानी सुखैर्युक्तः कैशोरे क्लेशभाक्तनु । न लेभे स्त्रीसुखं क्वापि कदाचिद्रोगभाक्परः ॥ ११ ॥
नैकविधो नैकवासो विरक्तो रक्त एव च । स्त्रियान्तु विद्यमानायामपि तत्सुखवर्जितः ॥ १२ ॥
मुनि भावे खगश्रेष्ठ विदेशगमने रतः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १३ ॥
शुभे मासे शुभे पक्षे शुभे सौम्यायने खग । मद्दिने तु समारभ्य पिप्पलस्य प्रदक्षिणाम् ॥१४॥
अष्टोत्तरशतावृत्त्या कुर्याच्छतदिनावधि । ब्राह्मणान्भोजयेच्छक्त्या दशांशेन विधानतः ॥ १५ ॥
अथवा श्रद्धया युक्तः प्रयागे मृगगे रवौ । स्नात्वा जपेच्च गायत्रीं लक्षार्धं च विधानतः ॥ १६ ॥
मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः । एवं कृतविधेः सूत पूर्वजन्माघनाशनम् ॥ १७ ॥
न दारिद्र्यभयं तस्य न वियोगोऽपि बन्धुभिः । नारिष्टभयमाप्नोति पञ्चाशन्मितवत्सरे ॥ १८ ॥
पुत्रपौत्राभिवृद्धिः स्याद्धनधान्यैः सुखं भवेत् । अब्धिनागमितायुः स्यादन्ते सद्गतिमाप्नुयात्॥१९॥
प्रायश्चित्तद्वयेऽप्येकं नाचरेल्लोभमोहतः । प्रोक्तं सुखं न लभते दुःखं स्याज्जन्मजन्मनि ॥ २० ॥

इति श्रीबृहत्सूर्यारुणसंवादे कर्मविपाकेऽध्याय एकत्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३१ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । दाक्षिणात्ये जनपदे मलयाचलसंश्रिते ॥ १ ॥
बभूव ब्राह्मणो विद्वान्धर्मशास्त्रार्थकोविदः । राजमान्यो धनैर्धान्यैः संयुतो जनवल्लभः ॥ २ ॥

दत्तानि तेन दानानि पर्वस्वपि च भक्तितः । वस्त्रभूषणशय्यान्नधनानि च विशेषतः ॥ ३ ॥
सत्पात्रेषु विधानेन ब्राह्मणेषु च शक्तितः । अथो भाविबलात्सूत कृतं यत्कर्म दारुणम् ॥ ४ ॥
यज्ञविघ्नाभिधं घोरं पापमाचरितं खग । ततो बहुतिथे काले प्राप्तस्तु यमशासनम् ॥ ५ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातोऽत्रापि कोकणे ॥ ६ ॥
कर्के जीवेऽथ लग्नस्थे लग्नात्पञ्चमगे त्वगौ । वृषे क्रूरग्रहैः सर्वैर्नात्युच्चैर्न लघुर्घृणी ॥ ७ ॥
स तु मध्यमरूपाढ्यो गौरवर्णः प्रतापवान् । विद्यावाक्शौर्यगाम्भीर्यधैर्यादिगुणसंयुतः ॥ ८ ॥
धनवाहनभोगाढ्यो बन्धुस्त्रीजनसंयुतः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ९ ॥
अग्नेर्मूर्तिश्च कर्तव्या पलद्वयमिता शुभा । हिरण्मयी प्रतिष्ठाप्य देया विप्राय धीमते ॥ १० ॥
पार्थिवानां शिवानां च लक्षं सम्पूजयेत्ततः । गायत्रीमष्टसाहस्रं त्र्यम्बकं तु तथा जपेत् ॥ ११ ॥
होमयेत्तद्दशांशेन ब्राह्मणान्भोजयेत्ततः । सर्पिष्यात्मानमालोक्य भुंजीत सह बन्धुभिः ॥ १२ ॥
एवंकृतविधेः सूत पूर्वजन्माघनाशनम् । न पुत्रमरणं तस्य न रोगभयमेव च ॥ १३ ॥
सम्पदस्तस्य जायन्ते धनपुत्रयुतो भवेत् । खभूतमितवर्षे तु रिष्टं नाप्नोति निश्चयात् ॥ १४ ॥
अशीतिमितवर्षाणां जीवितं समुदाहृतम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ १५ ॥
रिष्टेनैव विनाशः स्यात्तस्य चाकृतनिष्कृतेः ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्वात्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३२ ॥

श्रीसूर्य उवाच ।

वनतेय महाभाग शृणु तस्य विचेष्टितम् । आसीत्क्षत्री महाभागः प्रयागे देशके शुभे ॥ १ ॥
धनधान्यसमायुक्तो राजमान्यः प्रतापवान् । क्रयविक्रयकर्ता च कृषिवाणिज्यतत्परः ॥ २ ॥
दत्तानि तेन दानानि पर्वस्वपि च भक्तितः । प्रयागे मृगगे भानौ गोशय्यावसनानि च ॥ ३ ॥
अन्नदानं च विप्रेभ्यः श्रद्धाभक्तिसमन्वितम् । पापमाचरितं तेन भाविनोऽर्थस्य वै बलात् ॥४॥
अरुन्तुदो महानासीत्सतां वै नियतो भृशम् । मिथ्याभिशंसनैर्वादैः पैशुन्येन नृणां सताम्॥५॥
वृत्तिच्छेदस्ततश्चक्रे क्षत्रियेण दुरात्मना । गते बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
*पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातोऽत्रापि मानवः ॥ ७ ॥*
वाराणस्यां महाक्षेत्रे पुण्ये शम्भुसमाश्रिते । स मध्यरूपी मतिमान्वेदविच्च प्रतापवान् ॥ ८ ॥
पितृभ्रातृसुखैर्युक्तो बाल्ये सर्वजनप्रियः । सहायान्मातुलस्यायं कैशोर्ये धनवान्सुखी ॥ ९ ॥
वाणिज्यनिरतो धीरो वैदिकैः पण्डितैर्युतः । सर्वधर्मप्रवेत्ता च गतागतधनैर्युतः ॥ १० ॥
यौवनान्ते कलत्रेण संयुतोऽभून्महायशाः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥११॥
मर्मच्छेदनजात्पापात्माक्सतां विनतासुत । मर्मच्छेदकृता चैव रोगेण महताकुलः ॥ १२ ॥
प्रमेहज्वरकण्ड्वादिज्वरव्रणयुतः क्वचित् । विषमज्वरसंयुक्तो मनोभयसमन्वितः ॥ १३ ॥
पित्तवाताश्रितो नित्यं पुत्रहीनः खगाधिप । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १४ ॥
पलमात्रेण कर्तव्या ज्वरमूर्तिर्हिरण्मयी । षोडशोपचारैश्च पूजयित्वा विधानतः ॥ १५ ॥
सा देया वै विविज्ञाय पिप्पलस्य प्रदक्षिणाम् । अष्टोत्तरशतावृत्त्या कुर्यात्त्रिंशद्दिनावधि ॥ १६ ॥
प्रागुक्तशर्कराकुम्भं दद्याद्विप्राय धीमते । ब्राह्मणान्भोजयेच्छक्त्या सर्पिष्यात्मानमीक्षयेत् १७ ॥
गायत्रीदशसाहस्रं त्र्यम्बकन्तु तथा जपेत् । होमयेत्तद्दशांशेन तद्दशांशेन भोजयेत् ॥ १८ ॥
एवं कृतविधेः सूत पूर्वजन्माघनाशनम् । नाश्यो व्याधयस्तस्य न च ज्वरभयं भवेत् ॥ १९

पुत्रपौत्राभिवृद्ध्या च ह्येधन्ते सम्पदोऽन्वहम् । सप्तपञ्चाशदब्दे तु रिष्टं नाप्नोति मानवः ॥ २० ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । व्याधिग्रस्तो भवेन्नित्यं सुखं नाप्नोत्यहर्निशम् २१॥
रिष्टेनैव विनाशः स्यात्सत्यं सत्यं न संशयः । खनागमितवर्षान्तमायुः स्यात्कृतनिष्कृतेः ॥२२॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २३॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रयस्त्रिंशदुत्तरनवशताधिकसहस्रतम ॥ १९३३ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीद्द्विजो महाभागो ह्यन्ध्रदेशे खगोत्तम ॥ १ ॥
क्रयविक्रयकर्ता च राजमान्यः प्रतापवान् । धनवाहनभोगाढ्यो यशस्वी सर्वधर्मवित् ॥ २ ॥
कृतवान्पुण्यतीर्थेषु स्नानं दानं च शक्तितः । अथो भाविबलात्सूत कृतवानुग्रपातकम् ॥ ३ ॥
विवाहादिषु यज्ञेषु दानेषु च्छलभावतः । विघ्नं तु कृतवान्सूत घोरं पापमुपार्जितम् ॥ ४ ॥
ततो बहुतिथे काले प्राप्तस्तु यमशासनम् । पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकांस्तथा ॥ ५ ॥
भुक्त्वा पुण्यावशेषेण स जातो ब्राह्मणोऽधुना । पुण्ये गोदावरीतीरे सर्वदेवनमस्कृते ॥ ६ ॥
मध्यस्वरूपो मतिमान्कृष्णवर्णः प्रतापवान् । नात्युच्चो न लघुः स्थूलो दक्षः सर्वक्रियासु च॥७॥
जनप्रियो बन्धुमित्रसंयुतोऽतिप्रियम्वदः । पुण्यार्जिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ८ ॥
विवाहविघ्नजातपापात्मोक्तकृतात्पुत्रवर्जितः । तस्य भार्या सुतन्वङ्गी पतिभक्तिपरायणा ॥ ९ ॥
तयापि प्राग्भवे सूत कृतं यद्गर्भपातनम् । तस्मात्पापान्महाभाग स्थिरगर्भवशात्त्विह ॥ १० ॥
बहुकाले व्यतीते तु न प्रसूतिर्न पातनम् । लग्नात्पञ्चमके सूने क्रूरग्रहविलोकिते ॥ ११ ॥
स जातो ब्राह्मणः सूत चिन्ताक्लेशसमन्वितः । बाल्ये कौमारके चैव सुखी यूनि खगाधिप॥१२॥
क्लेशाभागभ्रातृदुःखेन युक्तोऽप्राप्तमनोरथः । देशेदेशे रटञ्जन्तुर्न सुखं लभते क्वचित् ॥ १३ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । रुद्रैकादशनीभिश्च रुद्रमेकादशात्मकम् ॥ १४ ॥
पूजयेच्च महारुद्रं सर्वान्कामानिहाप्नुयात् । अथवा शृणुयाद्भक्त्या हरिवंशं विधानतः ॥ १५ ॥
गायत्रीमष्टसाहस्रं त्र्यम्बकं द्विविधं जपेत् । मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः ॥ १६ ॥
ब्राह्मणान्भोजयेत्पश्चात्सर्पिष्यात्मानमीक्षयेत् । एवं कृते महाभाग विधिवत्पापशोधने ॥ १७ ॥
पुत्रवान्धनवांश्चैव जायतेऽसौ सुनिश्चयात् । पञ्चषष्टिमिते वर्षे रिष्टं नाप्नोति मानवः ॥ १८ ॥
आयुस्तस्य तु वर्षाणामशीतिश्चतुरुत्तरम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ १९ ॥
अपुत्रः क्लेशभावस्स्याद्दरिद्रो जन्मजन्मनि ॥ २० ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुस्त्रिंशदुत्तरनवशताधिकसहस्रतम ॥ १९३४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम् । बभूव चार्बुदे देशे पादजो धर्मकर्मवित् ॥ १ ॥
कृषिवाणिज्यकर्ता च किञ्चिद्वित्तसमन्वितः । राजसेवापरो धीरो मन्त्री शूरो महायशाः ॥ २ ॥
सन्धिविग्रहकर्ता च दाता भोक्ता प्रियम्वदः । दत्तानि तेन दानानि प्रयागे गरुडाग्रज ॥ ३ ॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च । प्रयागे मृगये मानी सत्पात्रेषु विधानतः ॥ ४ ॥
अथो भाविबलात्सूत कृतं यत्कर्मदारुणम् । ब्राह्मणी घर्षिता तेन कामाद्वै कश्यपात्मज ॥ ५ ॥
तत्पतिं घातयामास विषदानेन यत्नतः । तद्द्रव्यं लुण्ठयामास कामलोभेन पाप्मना ॥ ६ ॥

ततो बहुतिथे काले प्राप्तस्तु यममन्दिरम्। भुक्त्वा पुण्यफलं पुण्यात्पापात्पापफलं तथा ॥ ७ ॥
भुक्त्वा पुण्यावशेषेण स जातोऽत्र हिमालये। कृष्णो गौरो मध्यरूपो वर्णोत्तरकुले नरः ॥ ८ ॥
जन्मलग्नारस्थुते शुक्रे पित्रस्थे भास्करे तथा। देवाहोऽस्तगतः पुत्रे दुष्टग्रहविलोकिते ॥ ९ ॥
राजसेवापरो मन्त्री शूरो गाम्भीर्यसंयुतः। नात्युच्चो न लघुर्धीरो कृशाङ्गः स्निग्धलोचनः ॥१०॥
सेनापतिर्धनधान्यैर्भृत्यैश्चापि सुसंयुतः। बहुग्रामाधिपो राजप्रियो वाहनसंयुतः ॥ ११ ॥
नैकस्त्रीसंयुतः कामी खड्गजीवनतत्परः। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १२ ॥
चिन्ताक्लेशसमायुक्तस्तथाऽप्राप्तमनोरथः। बाल्ये पित्रोः सुखैर्युक्तः कैशोर्ये तत्सुखोज्झितः १३
गतागतधनैर्युक्तस्तथाब्दमितवत्सरात्। सुखदुःखसमाक्रान्तो रिपुभीत्यावशङ्कितः ॥ १४ ॥
प्राग्भवे ब्राह्मणीसङ्गात्तथा तत्पतिघातनात्। स्ववंशच्छेदको नूनं जातपुत्रविनाशकः ॥ १५ ॥
अहो दैवमहो दैवमिति चिन्तापरोऽनिशम्। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं शृणुष्व च ॥ १६ ॥
पलमात्रेण कर्तव्यो ब्राह्मणस्तु हिरण्मयः। ब्राह्मणी च तथा सोमस्तथा नारायणस्तथा ॥ १७ ॥
षोडशोपचारैस्तु पूजयित्वा विधानतः। ब्राह्मणेभ्यः प्रदेया वै पञ्च गावस्तथा द्विजेत् ॥ १८ ॥
गायत्रीमष्टसाहस्रं त्र्यम्बकन्तु तथा जपेत्। सोममन्त्रं तथा जप्त्वा तद्दशांशेन होमयेत्॥ १९ ॥
पार्थिवानां तथा लक्षं शिवानां पूजनं चरेत्। ब्राह्मणान्भोजयेत्पश्चात्सर्पिष्यात्मानमीक्षयेत्॥२०॥
एवंकृतविधेः सूत पूर्वजन्माघनाशनम्। न पुत्रमरणं तस्य न रोगभयमेव च ॥ २१ ॥
पुत्रपौत्राभिवृद्ध्या च क्षेमन्ते सम्पदोऽस्य तु। सप्तविंशे तथा वर्षे रिष्टं नैव प्रपद्यते ॥ २२ ॥
आयुस्तस्य त्रिसप्तार्द्धं तथाऽकृतनिष्कृतेः। रिष्टेनैव विनाशः स्यात्सत्यं सत्यं न संशयः ॥२३॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्। यद्यदन्तर्गतं सूत तत्प्रच्छाद्य विलोकयेत् ॥ २४ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चत्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३५ ॥

श्रीसूर्य उवाच।

सांयात्रिकाणां यो वित्तभागादभ्यधिकं धनम्। पुरा जग्राह दन्तोत्थकीलितोद्विजते सुत ॥१॥
नीतिशास्त्रोपनिर्णीतव्यवहारपरिच्युतः। दन्तपुप्पाटको नाम तं बाधेत मुखामयः ॥ २ ॥
स गच्छेदुदधेः कूलं सोमपर्वणि च द्विजः। तत्र स्नात्वा च विधिवत्सन्तर्प्य पितृदेवताः ॥ ३ ॥
अभ्यर्च्य विधिना विप्रांस्तेभ्यो दद्याद्विधानतः। फलान्युच्चावचान्यन्तः स्मरन् विष्णुं शिवं च माम् ४
प्रत्येकं शतशो वापि वित्तव्याधिबलेच्छया। क्रमुकाक्षोटखर्जूरनारिकेलादिकानि च ॥ ५ ॥
एलामरिचमुख्यानि उदधेर्यानि यानि च। तथान्यद्धनधान्यादि श्रद्धया परयान्वितः ॥ ६ ॥
शिवस्यायतने विष्णोर्मम वापि गृहेऽपि वा। कुर्याच्च विधिना सम्यक्जपपापानुत्तये ॥ ७ ॥
एवं कृतविधिः सूत मुच्यते मुखरोगतः ॥ ८ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्त्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३६ ॥

श्रीसूर्य उवाच।

छिद्राणामप्रकाश्यानां मर्मणां यः प्रकाशकः। विद्वेषणाच्च पैशुन्यात्साधूनामकृतागमम् ॥ १ ॥
सोऽपरस्तं प्रबाधेत वदनव्याधिरुल्बणः। माघमासे चतुर्दश्यां शुक्लायां नियतः शुचिः ॥ २ ॥
शिवस्यायतने कुर्याज्जपहोमादिसत्क्रियाम्। ते गामिति च मन्त्रेण मर्माणीति च मन्त्रतः॥ ३ ॥
गव्येन सर्पिषा हुत्वा शतमष्टोत्तरं ततः। निवेद्य देवताभ्यान्तां जपहोमादिसत्क्रियाम् ॥
मुखामयी पुरः स्थित्वा तथा च विहिताञ्जलिः ॥ ९ ॥

मन्त्रः ।

"यन्मया शोषिरो व्याधिः सम्प्राप्तो मुखदूषणः । स मे नश्यतु विश्वेशौ युवयोश्च प्रसादतः" ॥६॥
एवमुक्त्वा तयोरग्रे दण्डवत्प्रणमेद्भुवि । ब्राह्मणान्भोजयेत्पश्चात्सर्पिष्यात्मानमीक्षयेत् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३७ ॥

श्रीसूर्य उवाच ।

परैःकृतदोषाणां महतां यः प्रकाशकः । दन्तरक्तं सवेत्तस्य मुखदौर्गन्ध्यकारकम् ॥ १ ॥
कुर्यात्प्रतिकृतिं सम्यगादिष्टो दैववेदिना । भोजयेच्च शतं विप्रान्सर्वोपस्करकेण च ॥ २ ॥
अभ्यर्च्य विधिवत्तांस्तु पुरः स्थित्वेति कीर्तयेत् ॥ ३ ॥

मन्त्रः ।

"यन्मया मूढभावेन दौरात्म्यादसतां स्तुतेः । सतां गुणवतां दोषाः संसत्स्वपि पुरस्कृताः ॥४॥
मया प्राप्तो महारोगो मुखदन्तक्षताभिधः । स नश्यतु युष्माकं प्रसादाद्वो नमाम्यहम्" ॥५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टत्रिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३८ ॥

श्रीसूर्य उवाच ।

भेषजस्यापहर्ता यः शिरोरोगी भवेत्तु सः । पलमात्रेण कर्तव्यं सूर्यबिम्बं हिरण्मयम् ॥ १ ॥
सम्पूज्य विधिवद्भक्त्या दैवज्ञाय निवेदयेत् ॥ २ ॥

मन्त्रः ।

"यन्मया भेषजं ब्रह्मन्हरता पूर्वजन्मनि । सूर्यापराधजं पापं सूर्यावर्तगदाह्वयम् ॥ ३ ॥
तद्विनाशाय तद्बिम्बं सौवर्णं प्रददेऽत्र ते । सूर्यापराधतो व्याधिर्दानेनानेन नश्यतु" ॥ ४ ॥
एवमुक्त्वा ततो दद्याद्ब्राह्मणान्भोजयेत्ततः । सर्पिष्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः ॥ ५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९३९ ॥

श्रीसूर्य उवाच ।

अनिच्छया प्रमादेन प्राणिनेत्रोपघातजः । गम्भीरो जायते व्याधिरव्ययो नेत्रनाशकः ॥ १ ॥
सुवर्णद्वयमात्रेण विष्णुमूर्तिं च निर्मिताम् । दद्याद्देवविदे ज्ञाय नेत्ररोगप्रशान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४० ॥

श्रीसूर्य उवाच ।

हंसहन्तुश्च पक्षीन्द्र श्वेतकुष्ठं प्रसर्पति । तेन यत्नेन कर्तव्यो राजतो हंस उत्तमः ॥ १ ॥
त्रिंशत्पलमितः सम्यक्पूजितो ब्रह्मदैवतः । दद्याच्च विधिज्ञाय श्वेतकुष्ठस्य शान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४१ ॥

श्रीसूर्य उवाच ।

श्वेतवस्त्रापहर्ता च श्वेतमण्डलवान्भवेत् । राजतं च रथं दद्यात्पलषोडशसम्मितम् ॥ १ ॥
श्वेतमण्डलनाशाय दैवज्ञाय कुटुम्बिने ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४२ ॥

श्रीसूर्य उवाच ।

प्राग्भवे कांस्यहारी यः पुरुषोऽप्यत्र जन्मनि । पुण्डरीकाख्यकुष्ठेन पीड्यते बहुपीडया ॥ १ ॥
स हि दद्याद्विधानेन स्थूलं वै कांस्यभाजनम् । द्विपञ्चाशत्पलमितं पुण्डरीकस्य शान्तये ॥ २ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४३ ॥

श्रीसूर्य उवाच ।

ताम्बूलानि बहून्येव वैष्णवेभ्यः प्रदापयेत् । विष्णुप्रीत्यै खगश्रेष्ठ श्वेतकुष्ठस्य शान्तये ॥ १ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुश्चत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४४ ॥

अरुण उवाच ।

आधिव्याधिर्महादुःखं येन येन च कर्मणा । तत्सर्वं विस्तराद्ब्रूहि देवानामग्रणीर्मम ॥ १ ॥

श्रीसूर्य उवाच ।

साधुसङ्गसमायुक्तो देवब्राह्मणपूजकः । मन्यते सर्वदा सम्यग्मैः केरादेशकारिभिः ॥ २ ॥
तदान्यो गीतकीर्तिश्च सततं राजपूजितः । यत्किञ्चिद्दृश्यते वह्निर्यत्प्रोक्तमिव जायते ॥ ३ ॥
नानादुःखसमायुक्ता दृश्यन्ते विविधा रुजः । क्षात्रवंशसमुद्भूतः स्वग्रामाद्यधिपो भवेत् ॥ ४ ॥
न लभ्यते कचिद्दासं क्षत्रियो धर्मसाधनैः । ग्रामः प्रज्वलितस्तस्य ज्वलिता बालगोसुताः ॥५॥
तस्यापि ज्वलनोद्धोरान्नरकं प्राप्य दारुणम् । किंचित्कालक्रमेणैव भुवि स प्राप्स्यति क्रमात्॥६॥
मुक्तशेषावसाने तु भुवि जातो विहङ्गमः । त्रिषु जन्मस्वनपत्यः कुष्ठभाग्व्रणवान्सदा ॥ ७ ॥
चतुर्थे काकवन्ध्याया मृतापत्यं भविष्यति । पञ्चमे जनुषि प्राप्ते जायते विकृतिः प्रजा ॥ ८ ॥
ज्वलिताग्नेरिदं चिह्नं मन्दाग्निस्तस्य जायते । शोथमन्दाग्निशूलादि कुष्ठं गोवधतो भवेत् ॥ ९ ॥
वातोऽग्निना च जायेत नानावायुविधायकः । शिशूनां तस्य जायंते ह्यतीसारादिका गदाः॥१०॥
जायते यौवने पुत्रः परं पुत्रो न दृश्यते । मातुलान्याः स्वगोत्राणां पतितावरवर्त्तनम् ॥ ११ ॥

अरुण उवाच ।

एवं च कर्मणां हेषां निष्कृतिं साञ्जसा प्रभो । समस्तपापशान्त्यर्थं ब्रूहि विस्तरतो मम ॥१२॥

श्रीसूर्य उवाच ।

साधु पृष्टं महाबाहो प्रश्नो लोके हि दुर्लभः । तेनतेन स्वियं कार्या निष्कृतिर्याधुनोच्यते ॥ १३॥
हैरण्यां प्रदद्देद्धेनुं वत्सं तं च तुरीयकम् । श्रवणं हरिवंशस्य पुस्तकं वा द्विजन्मने ॥ १४ ॥
पूर्वकर्मविनाशाय पूजयेच्च यथाविधि । भोजयेच्च शतं विप्रान्नानान्नरसपायसैः ॥ १५ ॥
एवं यः कुरुते वत्स धर्मं कर्म प्रसिद्ध्यति । न करोति यदा मोहान्न सिद्ध्यन्ति तदाशयाः १६

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायःपञ्चचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४५ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । देशे प्रयागसंज्ञे तु ब्राह्मणो धर्मवित्तमः ॥ १ ॥
दत्तानि तेन दानानि गोभूम्यश्वासनानि च । प्रयागे मृगगे भानौ ब्राह्मणेभ्यः स्वशक्तितः ॥२॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम् । अर्थलुब्धेन मनसा मारितः स्वसहोदरः ॥ ३ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ४ ॥
काश्यां जातो द्विजश्रेष्ठो मेषे लग्ने खगाधिप । लग्नात्पञ्चमभावस्थे दुष्टखेटैर्विलोकिते ॥ ५ ॥

स मध्यरूपो मतिमान्किञ्चिद्व्यापारसंयुतः । नात्युच्चो नातिदीर्घश्च गौरवर्णः प्रतापवान् ॥ ६ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । प्राग्भवे मातृहननात्तथा तद्द्रव्यहरणात् ॥ ७ ॥
तेन कर्मविपाकेन मृतवत्सोऽत्र जन्मनि । स स्वकर्मविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत् ॥ ८ ॥
पलेन तु सुवर्णेन धेनुं कुर्याद्धिरण्मयीम् । गन्धपुष्पैः समभ्यर्च्य विविप्राय प्रदापयेत् ॥ ९ ॥
भूमिदानं ततः कुर्याद्वेदवेदांगपारगे । वर्त्रकविधिना स्नायाद्गृहं दत्त्वा द्विजातये ॥ १० ॥
शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम् । एवं यः कुरुते पक्षिन्स्तस्य पापं व्यपोहति ॥११॥
जीवत्पुत्रः सुदीर्घायुः पितृभक्तिपरायणः । कुसप्ततिमितायुः स्यात्प्रायश्चित्ते कृते त्विह ॥ १२ ॥
प्रायश्चित्तेऽकृते सूत मुनिभूतमितेऽब्दके । रिष्टेनैव विनाशः स्याद्ध्रुवं चाकृतनिष्कृतेः ॥ १३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चचत्वारिंशदुत्तरनवशताधिकसहस्रतम. ॥ १९४६ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीत्क्षत्री महाभाग प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तो राजमान्यः प्रतापवान् । दत्तानि तेन दानानि प्रयागे मृगगे रवौ ॥ २ ॥
सुवर्णाभरणानाश्च गोशय्यावसनानि च । अयो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
अमात्यवामदेवेन राजानेनापमानितः । पुत्रैः सार्धं मतं कृत्वा स राजा विनिपातितः ॥ ४ ॥
विशेषेण प्रपञ्चेन घोरं पापमुपार्जितम् । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ५ ॥
पुण्यपापफलं भुक्त्वा स जातोऽत्रापि बाहुजः । नृपे लग्ने सुतस्थाने क्रूरग्रहविलोकिते ॥ ६ ॥
क्रूरयुक्ते च पक्षीन्द्र वाराणस्यां प्रतापवान् । स तु मध्यमरूपाढ्यो धनवान्भ्रातृसंयुतः ॥ ७ ॥
नात्युच्चो न लघुः स्थूलो गौरवर्णोऽतिबुद्धिमान् । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्॥८॥
चिन्ताक्लेशसमायुक्तस्तथाऽप्राप्तमनोरथः । मात्रजघातजात्पापात्सन्तानसुखवर्जितः ॥ ९ ॥
क्षयरोगान्वितो दुःखी धीरोऽपि धनवानपि । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥१०॥
निष्कत्रयं सुवर्णस्य दशनिष्कं च राजतम् । देयं यत्नाद्द्विजातिभ्यस्तस्य पापं विनश्यति ॥ ११ ॥
वर्त्रकविधिना स्नायान्महारुद्रजपादिकम् । कारयेद्धोमयेद्दत्त्वा शतं विप्रांश्च भोजयेत् ॥ १२ ॥
प्रदद्याद्दक्षिणां तेभ्यो गा दद्यात्स पयस्विनीम् । य एवं कुरुते तार्क्ष्य सर्वपापैः प्रमुच्यते ॥१३॥
सुतं च लभते तत्र गुणयुक्तं चिरायुषम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ १४ ॥
अपुत्रो रोगमाप्नोत्यं पञ्चाशन्मितवत्सरे । रिष्टेन वै विनाशः स्याद्दुःखीस्याज्जन्मजन्मनि ॥ १५ ॥
प्रायश्चित्ते कृते ह्यायुस्त्रिसप्तत्यब्दसम्मितम् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय सप्तचत्वारिंशदुत्तरनवशताधिकसहस्रतम. ॥ १९४७ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम् । बभूव वैश्यो धनवान्प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तः कृषिवाणिज्यतत्परः । प्रयागे मृगगे भानौ स्नानं दानं च शक्तितः ॥ २ ॥
कृतवान्स व्यतीते तु किञ्चित्काले खगोत्तम । कृतवान्दारुणं कर्म जघान द्विजबालकम् ॥ ३ ॥
वयोवर्षाणि चत्वारि सप्त मासा दिनत्रयम् । लोभमोहवशात्तस्या कृता जग्राह भूषणम् ॥ ४ ॥
ततो बहुतिथे काले स गतो यमशासनम् । पुण्यापुण्यफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ५ ॥
जातो वाराणसीक्षेत्रे वैश्यो धनसमन्वितः । स तु मध्यमरूपाढ्यो गौरवर्णः प्रतापवान् ॥ ६ ॥

श्लेष्मलोऽप्यनिलव्याधिसंयुतो बुद्धिमान्खग । जातोऽत्र मिथुने लग्ने लग्नात्पञ्चमसप्तमे ॥ ७ ॥
कर्मस्थाने क्रूरखेटैर्दृष्टे वाथ सुसंयुते । पितृमातृसुखैर्युक्तो भ्रातृबन्धुसुहृद्युतः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । विप्रपुत्रवधात्पापात्प्राग्भवे कश्यपात्मज ॥ ९ ॥
तद्द्रव्यहरणात्सूत मृतवत्सोऽत्र जन्मनि । चिन्ताक्लेशसमायुक्तस्तथाऽप्राप्तमनोरथः ॥ १० ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । महारुद्रजपं कुर्याद्गायत्रीं त्र्यम्बकं तथा ॥ ११ ॥
श्रवणं हरिवंशस्य कुर्यात्पुष्करिणीं ततः । प्रतिष्ठाप्य विधानेन होमयेत्तद्दशांशतः ॥ १२ ॥
हेमनिष्कचतुष्कं तु दद्याद्वेदविदे खग । शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम् ॥ १३ ॥
एवं कृत्वा खगाधीश स्वस्य पापं व्यपोहति । लभते च सुतांस्तार्क्ष्य सुखं प्राप्नोति वाञ्छितम् ॥ १४
खनागमितवर्षान्तमायुस्तस्य प्रकीर्तितम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ १५ ॥
खभूमितवर्षे तु रिष्टेनैव विनश्यति ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टचत्वारिंशदुत्तरनवशताधिकसहस्रतमः ॥ १९४८ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव पादजः सूत प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तो गवां पालनतत्परः । कृषिवाणिज्यकर्ता च किंचिद्वित्तसमन्वितः ॥ २ ॥
प्रयागे मृगगे भानौ स्नानं दानं च शक्तितः । कृतवान्भाविनोऽर्थस्य वैभवात्कर्म दारुणम् ॥ ३ ॥
कृतवान् पक्षिराजेन्द्र गवां घातकरो भवेत् । सन्ध्याकाले तु सम्प्राप्ते स्वागतं गोधनं गृहे ॥ ४ ॥
स्ताश्च गा आश्रमं प्राप्ता एकां कण्ठे बबन्ध ह । खुराग्रेश्चूर्णिते पादे स्वपादेनाहनत्तदा ॥ ५ ॥
रोषयुक्तेन मनसा भृशमापीडिता खग । मुसलेन तु पक्षीन्द्र पुनरेवापि सा हता ॥ ६ ॥
तत्काले सा मृता गौश्च पापमुग्रमुपार्जितम् । ततो बहुतिथे काले प्राप्य धर्मपुरं नरः ॥ ७ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलं तथा । भुक्त्वा पुण्यावशेषेण स जातोऽत्रापि पादजः ॥८॥
वाराणस्यां महाक्षेत्रे पुण्ये शम्भुसमाश्रिते । कर्कलग्ने सुतस्थाने दुष्टखेटावलोकिते ॥ ९ ॥
स मध्यरूपो मतिमान्पितृमातृसुखान्वितः । गौरो धनसमायुक्तो भृत्यवाहनसंयुतः ॥ १० ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । पूर्वं गोघातजात्पापान्मृतापत्योऽत्र जन्मनि ॥११॥
चिन्ताक्लेशसमायुक्तस्तथाऽप्राप्तमनोरथः । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १२ ॥
चतुर्निष्कसुवर्णेन धेनुं वै कारयेद्दृढाम् । तुर्यांशवत्ससंयुक्तां वस्त्रालंकारभूषिताम् ॥ १३ ॥
दद्याद्वेदविदे शाय दरिद्राय कुटुम्बिने । वक्ष्यकविधिना स्नायाद्वेदोक्तविधिकाम्यया ॥ १४ ॥
शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम् । य एवं कुरुते वत्स तस्य पापं व्यपोहति ॥ १५॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९४९ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । ब्राह्मणोऽभूत्खगश्रेष्ठ प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तो देवद्विजपरायणः । प्रयागे मृगगे भानौ स्नानं दानं च शक्तितः ॥ २ ॥
कृतवान्भाविनोऽर्थस्य वै बलात्कर्म दारुणम् । कृतवान्पक्षिशार्दूल तापसो गृहमागतः ॥ ३ ॥
जितेन्द्रियोऽपि सधनो धनं तस्मै समर्पितम् । तीर्थावगाहनान्ते च ह्यागतः पुनराश्रमम् ॥ ४ ॥
धनं च प्रार्थितं तेन न च तत्संप्रदापितम् । चौरेण तद्धृतं सर्वं तस्याग्रे भाषितं तदा ॥ ५ ॥

विश्वामित्रो गतो योगी शापं दत्त्वा सुदुःसहम्। वंशोच्छेदो भवेच्छीघ्रं न पुनर्जीवते शिशुः ॥६॥
दिनान्तरे च संप्राप्तो मम पुत्रगृहं प्रति । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ७ ॥
काश्यां जातो महाभागो ब्राह्मणो धर्मकर्मवित्। सिंहलग्ने सुतस्थाने दुष्टखेटैः समन्विते ॥ ८ ॥
स तु मध्यमरूपाढ्यो गौरवर्णः प्रतापवान्। धनवाहनभोगाढ्यो दासीदासजनान्वितः ॥ ९ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । प्राग्भवे तापसधनहरणोद्भवपापतः ॥ १० ॥
तच्छापात्पतगश्रेष्ठ मृतपुत्रोऽत्र जन्मनि। लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ११ ॥
निष्कद्वयं सुवर्णं च दत्त्वा वेदांगपारगे । ताम्रं शतपलं दद्यात्कमण्डलुनिमित्तकम् ॥ १२ ॥
वस्त्रैकविंशतिना स्नायाद्रुद्रैकादशकं जपेत् । धेनुं दद्याद्विधिज्ञाय सवत्सां च पयस्विनीम् ॥ १३ ॥
शतं च भोजयेद्विप्रान्छक्तया पञ्चाशदेव वा। एवं कृत्वा खगश्रेष्ठ सन्तानं लभते ध्रुवम् ॥ १४ ॥
जीवत्पुत्रः सुदीर्घायुः पितृभक्तं गुणान्वितम्। त्रिसप्ततिमिताब्दायुः स्यादेव विनतात्मज ॥ १५ ॥
रिष्टेन पष्टिवर्षे तु नश्यत्यकृतनिष्कृतिः ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९५० ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीद्बाहुजवंशीयः प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तः कृषिवाणिज्यतत्परः । दत्तानि तेन दानानि प्रयागे मृगगे रवौ ॥ २ ॥
गोभूशय्यासनाद्यन्नवसनाभरणानि च । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
भगिनीपतिघाताख्यं चकारासौ सुदुष्करम् । दन्तोच्छिष्टेन दोषेण पाषाणेनाहनत्पुरा ॥ ४ ॥
ज्ञात्वा मृत्युवशं प्राप्तमात्मघातं चकार ह । स गत्वा धर्मसदनं भुक्त्वा पुण्यफलं तदा ॥ ५ ॥
पापात्पापफलं भुक्त्वा पूर्वपुण्यावशेषतः । काश्यां जातो महाभागो बाहुजोऽतिप्रतापवान् ॥ ६ ॥
कन्यालग्ने सुतस्थाने दुष्टखेटसमन्विते । स तु मध्यमरूपाढ्यो धनवाहनभोगयुक् ॥ ७ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् मनोदुःखैः समायुक्तस्तथाऽप्राप्तमनोरथः ॥ ८ ॥
प्राग्भवे चात्मघाताच्च भगिनीपतिघातजात् पापादत्र खगश्रेष्ठ मृतवत्सोऽपि दुर्मनाः ॥ ९ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। गर्भो न वर्धते तस्य जीवन्वा म्रियते पुनः ॥ १० ॥
तस्य पापविशुद्ध्यर्थं प्राजापत्यानि वै दश । श्रवणं हरिवंशस्य महारुद्रजपादिकम् ॥ ११ ॥
ब्राह्मणोद्वाहनं कुर्यात्कन्यादानेन शुद्ध्यति। शतं च भोजयेद्विप्रान्दद्याद्गां सुपयस्विनीम् ॥ १२ ॥
एवं कृत्वा खगाधीश पुत्रं प्राप्नोति वाञ्छितम्। पितृभक्तं गुणाढ्यञ्च जीवंतञ्छतवत्सरान्॥१३॥
अकृत्वा तु खगश्रेष्ठ विधिना पापशोधनम्। रिष्टेनैव विनाशः स्यात्पञ्चाशन्मितवत्सरे ॥ १४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९५१ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम्।
बभूव पतगश्रेष्ठ प्रयागे शुभदेशके । वैश्यो धनसमृद्धस्तु भृत्यवाहनसंयुतः ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः। प्रयागे मृगगे भानौ गोभूशय्यासनानि च ॥ २ ॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम्। चौरैः सह मिलित्वा तु द्विजगोहरणं कृतम् ॥ ३ ॥
नवप्रसूतिकालाच्च वासरे चोनविंशके । वनमध्यगता गाव आहारार्थं च काश्यपे ॥ ४ ॥

निर्गतो धनमध्ये च स च गोहरणं चरेत् । स्तनपानवियोगेन तस्या वत्सो मृतस्तदा ॥ ५ ॥
गवां वत्सवियोगेन महत्पापमुपार्जितम् । ततो वहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः । काश्यां जातो वणिक्श्रेष्ठस्तुलालग्ने सुते खगौ ॥ ७ ॥
स तु मध्यमरूपाढ्यो गौरवर्णः प्रतापवान् । पितृमातृसुतैर्युक्तो भ्रातृबन्धुसमन्वितः ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभयुक्तोऽल्पधर्मकृत् । गवां वत्सवियोगाख्यपापात्प्राग्भवजात्सुत ॥ ९ ॥
मृतवत्सो रोगयुक्तः क्लेशभाग्धनवानपि । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ १० ॥
पलेन तु सुवर्णेन धेनुं कुर्याद्धिरण्मयीम् । चतुर्थांशेन वत्सां वै कृत्वालङ्कारभूषणैः ॥ ११ ॥
ब्राह्मणोद्वाहनं कुर्याद्रुद्रैकादशकं जपेत् । पयस्विनीं च गां दद्यात्पश्चाद्द्विजभोजनम् ॥ १२ ॥
वस्त्रैकविधिना स्नानं यथोक्तविधिना चरेत् । एवं कृत्वा खगश्रेष्ठ सन्तानं लभते ध्रुवम् ॥ १३ ॥
जीवत्पुत्रः स दीर्घायुः सुखसन्तानवान्भवेत् । खवेदमितके वर्षे रिष्टं नाप्नोति तस्य तु ॥ १४ ॥
त्रिसप्ततिमितायुः स्यादकृते पापशोधने । रिष्टेनैव विनाशः स्यादकृते पापशोधने ॥ १५ ॥
रिष्टेनैव विनाशः स्याद्दुःखी स्याज्जन्मजन्मनि ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपंचाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९२ ॥

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम् । आसीत्प्रयागदेशे तु पाद्जो धर्मकर्मवित् ॥ १ ॥
दत्तानि तेन दानानि प्रयागे मृगगे रवौ । वस्त्रभूषणशय्यान्नसुवर्णाभरणानि च ॥ २ ॥
अथो भाविबलात्सूत पत्नीं हत्वा स गर्भिणीम् । स्त्रीहत्यया महापापं घोरमाप विमूढधीः ॥ ३ ॥
भ्रूणहत्याभिधं पापं कृतं कर्मातिदारुणम् । आर्याद्वयं पूर्वभवे ह्यभवत्साम्यवर्जितम् ॥ ४ ॥
तयोर्विरोधादेकां तु सोऽवधीद्धि सुगर्भिणीम् । अकृपा च कनिष्ठायां ज्येष्ठा च कृपयान्विता ॥५॥
कृपावत्या कृतं कूटं कनिष्ठा चैव घातिता । गर्भयुक्ता च सा नारी सहसा मरणं गता ॥ ६ ॥
ततो वहुतिथे काले स गत्वा यमशासनम् । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ७ ॥
काश्यां जातो महाभाग पाद्जो धर्मकर्मवित् । लग्ने वृश्चिकसंज्ञे तु सुतभावे खगौ विधौ ॥ ८ ॥
स तु मध्यमरूपाढ्यो पितृमातृसुखोज्झितः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ९ ॥
चिन्ताक्लेशसमायुक्तो बाल्ये पित्रोः सुखोज्झितः । प्राग्भवे गर्भिणीघातपातकान्नास्ति तत्सुतः॥१०
मृतवत्सोऽत्र जनुषि दुःखभाग्धनवानपि । लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् ॥ ११ ॥
वस्त्रैकविधिना स्नानं महारुद्रजपादिकम् । श्रवणं हरिवंशस्य कुर्याद्वेनुं हिरण्मयीम् ॥ १२ ॥
पलमात्रं प्रदद्याच्च विधिज्ञाय खगाधिप । शतं च भोजयेद्विप्रान्गां दद्याच्च पयस्विनीम् ॥ १३ ॥
एवं कृत्वा पक्षिराज पुत्रं च लभते ध्रुवम् । जीवत्पुत्रः स दीर्घायुः पितृभक्तो गुणान्वितः ॥ १४॥
कुसप्ततिमितायुः स्यात्सुखी भवति मानवः । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥१५॥
खभूतमितवर्षे तु रिष्टेनैव विनश्यति । प्रायश्चित्ते कृते सूत रिष्टं नाप्नोति निश्चितम् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९३ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव ब्राह्मणो विद्वान्प्रयागे देशके शुभे ॥ १ ॥
धनधान्यसमायुक्तो ज्ञानवान्धर्मकर्मवित् । दत्तानि तेन दानानि प्रयागे मृगगे रवौ ॥ २ ॥

पर्वस्नापे च विप्रेभ्यः स्वर्णान्नवसनानि च। अथो भाविवलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
ब्राह्मणी विधवाप्येका वसन्ती प्रतिवेशके । वृद्धा तस्यास्तु गौरिका हृता तेन तु मानद ॥ ४ ॥
अप्रसूता च पुष्टाङ्गी एका सा द्वितीया न हि। तस्या धेनोर्वियोगेन मृता शोकप्रपीडिता ॥ ५ ॥
ततो बहुतिथे काले प्राप्तस्तु यमशासनम् । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ६ ॥
वाराणसीमहाक्षेत्रे धनुर्लग्ने सुते त्वगौ । ब्राह्मणो मध्यरूपाढ्यो नात्युच्चो न लघुर्घृणी ॥ ७ ॥
धनवाहनभोगाढ्यो गौरवर्णः प्रतापवान्। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ८ ॥
चिन्ताक्लेशसमायुक्तो हरणात्तत्र गोरिह । मृतवत्सोऽग्निमान्द्याख्यरुग्युक्तोऽभूत्खगेश्वर ॥ ९ ॥
जातमात्रास्तु नश्यन्ति द्वित्रिमासगतास्तथा ॥ १० ॥

अरुण उवाच ।

वृथा गृहं धनं धान्यं पुत्रजन्म विनाखिलम्। प्रायश्चित्तं कथन्देव येन पुत्रः प्रजायते ॥ ११ ॥

श्रीसूर्य उवाच ।

तस्य कर्मविशुद्ध्यर्थं प्राजापत्यानि वै दश । वस्त्रैकविधिना स्नायाद्रुद्रैकादशकं जपेत् ॥ १२ ॥
सद्दुग्धां चैव गां दद्यात्पश्चाच्छतद्विजभोजनम्। एवं कृते तु पक्षीन्द्र पुत्रवान्धनवान्भवेत् ॥ १३ ॥
जीवत्पुत्रः सुदीर्घायुरशीतिमितवत्सरम् । अकृते तु यथाशक्ति प्रायश्चित्ते यथोदिते ॥ १४ ॥
रिष्टेन निधनं याति पञ्चाशन्मितवत्सरे ।

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुःपंचाशदुत्तरनवशताधिकसहस्रतमः ॥ १९५४ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम्। आसीत्क्षत्री महाबाहो प्रयागे देशके शुभे ॥ १ ॥
धर्मकर्मसमायुक्तः कृषिवाणिज्यतत्परः। प्रयागे मृगगे मानी गोशय्यावसनानि च ॥ २ ॥
दत्तवान्ब्राह्मणेभ्यश्च ह्यन्नदानं स्वशक्तितः। ततो भाविवलात्सूत मृगीं हत्वा तु गर्भिणीम् ॥ ३ ॥
कान्तया प्रेरितस्तेन ह्यामिषार्थं च काश्यपे। स्त्रिया च प्रेर्यमाणेन ह्यामिषार्थं धृता सती ॥ ४ ॥
सगर्भा च सुपुष्टाङ्गी द्वौ गर्भावुदरे स्थितौ। शरं मुमोच रोषेण वाणो लग्नश्च तत्क्षणात् ॥ ५ ॥
शरीरे भिद्यमाने च सहसा मरणं गता। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः। काश्यां जातो महाक्षेत्रे मृगलग्ने च बाहुजः ॥ ७ ॥
लग्नात्पञ्चमभावे च सप्तमे क्रूरखेटकैः। बिलोकिते गौरकृष्णो मध्यरूपः प्रतापवान् ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। प्राग्भवे गर्भिणीघातात्तस्या मांसस्य भक्षणात् ॥ ९ ॥
तद्रसभक्षणात्पापात्स जातो गर्भनाशयुक्। तस्य भार्यायाश्च बहु गर्भनाशस्ततोऽण्डज ॥ १० ॥
तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत्। निष्कत्रयसुवर्णेन वत्सं कृत्वा तु दापयेत् ॥ ११ ॥
विधिज्ञाय सुवर्णेन पलमात्रेण काश्यपे। गीं कृत्वा शिशुयुतां दद्याद्वेदाङ्गपारगे ॥ १२ ॥
वस्त्रैकविधिना स्नायाद्रुद्रैकादशकं जपेत् । श्रवणं हरिवंशस्य विप्रेष्टाद्दं च कारयेत् ॥ १३ ॥
शतं च भोजयेद्विप्रान्प्रामगां दद्यात्पयस्विनीम्। य एवं कुरुते कर्म तस्य पापं व्यपोहति ॥ १४ ॥
लभते ॥ सुतांस्तार्क्ष्य निरामयसुरूपिणः। त्रिसप्ततिमिताब्दायुः प्रायश्चित्ते कृतेऽधुना ॥ १५ ॥
मुनिवेदमिताब्दे तु रिष्टेन निधनं व्रजेत् ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय.पंचपंचाशदुत्तरनवशताधिकसहस्रतमः ॥ १९५५ ॥

---

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। प्रयागे देशके पुण्ये वैश्यो धनसमन्वितः॥ १॥
बभूव कृषिवाणिज्यवद्गोपालने रतः। दत्तवान्मृगगे भानौ प्रयागे गरुडाग्रज॥ २॥
अन्नदानं हि विप्रेभ्यो गोशय्यावसनानि च। अथो भाविवलात्सूत कृतं कर्मातिदुष्करम्॥ ३॥
रोषयुक्तेन मनसा वृषभस्तेन मारितः। गावश्चापि सगर्भाश्च पालितो वृषभस्तदा॥ ४॥
पाषाणेन हतस्तत्र वृषभो निधनं गतः। स तेन कर्मणा युक्तः प्राप्तो धर्मपुरं प्रति॥ ५॥
पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः। काश्यां जातो वणिक्पुत्रः कुम्भलग्ने सुते ग्रहैः॥ ६॥
दुष्टैर्विलोकिते भृत्यधनवाहनसंयुतः। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्॥ ७॥
प्राग्भवे वृषघाताच्च सन्तानं नैव पश्यति। तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत्॥ ८॥
वापीकूपतडागादि कुर्यात्पुष्करिणीं तथा। निष्कत्रयं सुवर्णस्य दत्त्वा वेदाङ्गपारगे॥ ९॥
यत्रोक्तविधिना स्नायाद्रुद्रैकादशकं जपेत्। वृषभं दापयेत्तत्र सर्वोपस्करसंयुतम्॥ १०॥
शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम्। य एवं कुरुते सूत सन्तानं लभते ध्रुवम्॥ ११॥
जीवत्पुत्रः स दीर्घायुः सुखसौभाग्यवान्भवेत्। अशीत्यब्दायुरुरगाच्चौराच्च मृतिरन्यथा॥ १२॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरनवशताधिकसहस्रतमः॥ १९९६॥

---

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव क्षत्रियो धीरो प्रयागे देशके शुभे॥ १॥
धनवाहनभोगाढ्यो राजमान्यः प्रतापवान्। दत्तानि तेन दानानि प्रयागे मृगगे रवौ॥ २॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च। अथो भाविवलात्सूत कृतं कर्मातिदारुणम्॥ ३॥
तद्गृहस्य समीपे तु ब्राह्मणी विधवाऽवसत्। स च कामवशात्तस्यामकरोद्व्यभिचारकम्॥ ४॥
पश्चाद्दैववशात्तस्या गर्भो जातः खगाधिप। पञ्चमासात्मको गर्भो लोके प्राकट्यमाप वै॥ ५॥
औषधस्य प्रपञ्चेन गर्भपातं चकार ह। स्वभार्यायाः प्रपञ्चेन तेन गर्भस्तु पातितः॥ ६॥
स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम्। पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः॥ ७॥
काश्यां जातो मुखोद्भूतो मीनलग्ने खगाधिप। लग्नात्पञ्चमगे क्रूरे सप्तमे क्रूरभावतः॥ ८॥
स तु मध्यमरूपाढ्यो विद्वान्सर्वप्रियम्वदः। धनी मानी महाप्राज्ञो गौरवर्णः प्रतापवान्॥ ९॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। प्राग्भवे विधवायां तु व्यभिचारात्तु मानद॥ १०॥
तद्गर्भपातजात्पापात्स गर्भं नैव पश्यति। म्रियन्ते बालकाः सर्वे वंशच्छेदः प्रजायते॥ ११॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत्। श्रवणं हरिवंशस्य महारुद्रजपादिकम्॥ १२॥
ब्राह्मणोद्वाहनं चैव कुर्यात्पुष्करिणीं तथा। पलेन तु सुवर्णेन धेनुं कुर्यात्सवत्सकाम्॥ १३॥
दद्याद्वेदविधिज्ञाय दरिद्राय कुटुम्बिने। शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम्॥ १४॥
य एवं कुरुते तार्क्ष्य जीवत्पुत्रः प्रजायते। लभते स सुतान्सर्वान्सुखसौभाग्यदायकान्॥ १५॥
द्व्यशीतिमितवर्षाणि चायुस्तस्य प्रकीर्तितम्। खभूते वत्सरे रिष्टैर्मृतिश्चाकृतनिष्कृतेः॥ १६॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तरनवशताधिकसहस्रतमः॥ १९९७॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। देशे सिंहलसंज्ञे तु वैश्यो वाणिज्यतत्परः॥ १॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। प्रयागे देशके पुण्ये वैश्यो धनसमन्वितः ॥ १ ॥
बभूव कृषिवाणिज्यबहुगोपालने रतः। दत्तवान्मृगगे भानौ प्रयागे गरुडाग्रज ॥ २ ॥
अन्नदानं हि विप्रेभ्यो गोशय्यावसनानि च। अथो भाविबलात्सूत कृतं कर्मातिदुष्करम् ॥ ३ ॥
रोषयुक्तेन मनसा वृषभस्तेन मारितः। गावश्चापि सगर्भाश्च पालितो वृषभस्तदा ॥ ४ ॥
पापाणेन हतस्तत्र वृषभो निधनं गतः। स तेन कर्मणा युक्तः प्राप्तो धर्मपुरं प्रति ॥ ५ ॥
पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः। काश्यां जातो वणिक्पुत्रः कुम्भलग्ने सुते ग्रहैः ॥ ६ ॥
दुष्टैर्विलोकिते भृत्यधनवाहनसंयुतः। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ७ ॥
प्राग्भवे वृषघाताच्च सन्तानं नैव पश्यति। तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत् ॥ ८ ॥
वापीकूपतडागादि कुर्यात्पुष्करिणीं तथा। निष्कत्रयं सुवर्णस्य दत्त्वा वेदाङ्गपारगे ॥ ९ ॥
वल्लीकविधिना स्नायाद्रुद्रैकादशकं जपेत्। वृषभं दापयेत्तत्र सर्वोपस्करसंयुतम् ॥ १० ॥
शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम्। य एवं कुरुते सूत सन्तानं लभते ध्रुवम् ॥ ११ ॥
जीवत्पुत्रः स दीर्घायुः सुखसौभाग्यवान्भवेत्। अशीत्यब्दायुरुरगाच्चौराच्च मृतिरन्यथा ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्पञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९६ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव क्षत्रियो धीरो प्रयागे देशके शुभे ॥ १ ॥
धनवाहनभोगाढ्यो राजमान्यः प्रतापवान्। दत्तानि तेन दानानि प्रयागे मृगगे रवौ ॥ २ ॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च। अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
तद्गृहस्य समीपे तु ब्राह्मणी विधवाऽवसत्। स च कामवशात्तस्यामकरोद्व्यभिचारकम् ॥ ४ ॥
पश्चाद्दैववशात्तस्या गर्भो जातः खगाधिप। पञ्चमासात्मको गर्भो लोके प्राकट्यमाप वै ॥ ५ ॥
औषधस्य प्रपञ्चेन गर्भपातं चकार ह। स्वभार्यायाः प्रपञ्चेन तेन गर्भस्तु पातितः ॥ ६ ॥
स तेन कर्मणा युक्तः प्राप्तस्तु यमशासनम्। पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ७ ॥
काश्यां जातो मुखोद्भूतो मीनलग्ने खगाधिप। लग्नात्पञ्चमगे क्रूरे सप्तमे क्रूरभावतः ॥ ८ ॥
स तु मध्यमरूपाढ्यो विद्वान्सर्वप्रियम्वदः। धनी मानी महाप्राज्ञो गौरवर्णः प्रतापवान् ॥ ९ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। प्राग्भवे विधवायां तु व्यभिचारात्तु मानद ॥ १० ॥
तद्गर्भपातजातपापात्सं गर्भं नैव पश्यति। म्रियन्ते बालकाः सर्वे वंशच्छेदः प्रजायते ॥ ११ ॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत्। श्रवणं हरिवंशस्य महारुद्रजपादिकम् ॥ १२ ॥
ब्राह्मणोद्वाहनं चैव कुर्यात्पुष्करिणीं तथा। पलेन तु सुवर्णेन धेनुं कुर्यात्सवत्सकाम् ॥ १३ ॥
दद्याद्वेदविधिज्ञाय दरिद्राय कुटुम्बिने। शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम् ॥ १४ ॥
य एवं कुरुते तार्क्ष्य जीवत्पुत्रः प्रजायते। लभते स सुतान्सर्वान्सुखसौभाग्यदायकान् ॥ १५ ॥
द्व्यशीतिमितवर्षाणि चायुस्तस्य प्रकीर्तितम्। स्वभूते वत्सरे रिष्टैर्मृतिश्चाकृतनिष्कृतेः ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९७ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। देशे सिंहलसंज्ञे तु वैश्यो वाणिज्यतत्परः ॥ १ ॥

धनवान्राजमान्यश्च मतिमान्कृषितत्परः । कृतानि तेन दानानि सर्वाण्यपि च भक्तितः ॥ २ ॥
सुवर्णगोमहीवस्त्रशय्यान्नवसनानि च । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
ब्राह्मणो वेदपाठज्ञः सुशीलः पापवर्जितः । तस्य वृत्तिहरश्चैव द्वेषभावेन निर्दयः ॥ ४ ॥
व्यापारी च मदान्धश्च पत्नीवचनसाधकः । स्त्रिया वाक्येन तस्यापि वृत्तिलोपं चकार ह ॥ ५ ॥
स्त्रीणाञ्चैव पितुः स्थाने द्वेषितो द्विज उत्तमः । ततो विप्रेण तस्यापि लोपितं वचनं तदा ॥ ६ ॥
तेन द्वेषेण नारीणां भर्ता न प्रेषितस्तदा । रोषदुष्टेन मनसा ब्राह्मणश्चापमानितः ॥ ७ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । पुण्यपापफलं भुक्त्वा स जातोऽत्र हिमालये ॥ ८ ॥
खगप्रान्ते, महाभाग गौरकृष्णः प्रतापवान् । लग्ने सप्तमके भूवेः खेटैर्दुष्टैर्विलोकिते ॥ ९ ॥
स तु मध्यमरूपाढ्यो नात्युच्चो न लघुर्घृणी । भ्रातृपुत्रकलत्राद्यैर्युक्तः पित्तानिली क्वचित् ॥ १० ॥
धनैश्वर्यसुखैर्युक्तो देवद्विजपरायणः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ११ ॥
रोगयुक्तो भ्रान्तमतिर्गतागतपथैर्युतः । स्ववंशवणिजां मध्ये श्रेष्ठोऽपि कलहाकुलः ॥ १२ ॥
खभूतमितवर्षान्तमल्पस्त्रीसुखभोगभाक् । लग्नात्सप्तमके खेटैर्दुष्टैश्चापि विलोकिते ॥ १३ ॥
द्विधाविलोकिते चापि द्विधा स्त्रीपुत्रनाशनम् । त्रिभिर्विलोकिते चापि त्रिधा स्त्रीपुत्रनाशनम् ॥ १४ ॥
स्वल्पसन्तानसुखभावस्वल्पस्त्रीसुखभागपि । विपद्यन्ते स्त्रिया पुत्रास्तस्य सूत मुहुर्मुहुः ॥ १५ ॥
भार्या तस्य शुभाचारा पतिभक्तिपरायणा । रोगयुक्ता सदा तेन दुःखभाग्धनवानपि ॥ १६ ॥
व्यापारस्तस्य फलति कदाचिन्न फलत्यपि । शत्रुतो भयमाप्नोति तद्भयेनापि शङ्कितः ॥ १७ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । निष्कमेकं सुवर्णस्य चतुर्निष्कं तु राजतम् ॥ १८ ॥
उमामहेश्वरं कृत्वा विधिज्ञाय प्रदापयेत् । दम्पती पूजयित्वा तु वस्त्रैश्च परिधापयेत् ॥ १९ ॥
वस्त्रैकविधिना स्नायात्पश्चाच्छद्विजभोजनम् । पयस्विनीं च गां दद्याद्ब्राह्मणाय कुटुम्बिने ॥ २० ॥
एवं कृत्वा खगश्रेष्ठ जीवत्पुत्रकलत्रभाक् । शत्रुभीतिं न चाप्नोति पुत्रशोकं कदापि न ॥ २१ ॥
व्यापारे फलमाप्नोति द्विगुणं त्रिगुणं सदा । त्रिसप्तत्यब्दमायुः स्यादाधिव्याधिविवर्जितम् ॥ २२ ॥
न करोति यदा मोहाल्लोभात्पापविशोधनम् । कलत्रपुत्रशोकन्तु प्राप्नुयाज्जन्मजन्मनि ॥ २३ ॥
त्रिपञ्चाशन्मिताब्दे तु रिष्टेनैव विनश्यति ॥ २४ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९५८ ॥

---

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीत्क्रीडाभिधे देशे बाहुजो धर्मकर्मवित् ॥ १ ॥
कृषिवाणिज्यकर्ता च राजमान्यः प्रतापवान् । दत्तानि तेन दानानि पर्वस्वपि च भक्तितः ॥ २ ॥
वस्त्रभूषणशय्यान्नदासीदासफलानि च । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
केनचित्स्थापितं द्रव्यं ब्राह्मणेन तपस्विना । दिनान्तरे समागत्य याचितं तेन तद्वसु ॥ ४ ॥
तेन द्रव्यं गृहीत्वा तु ब्राह्मणश्चापलापितः । लंघनानि ततश्चक्रे द्विस्त्रिपञ्चाथ सप्त च ॥ ५ ॥
ततः प्राणान्मुमोचायं शापं दत्त्वा सुदारुणम् । ततो बहुतिथे काले प्राप्तस्तु यमशासनम् ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलं तथा । पूर्वपुण्यप्रभावेण स जातोऽत्र हिमालये ॥ ७ ॥
केदारमण्डले दिव्ये स तु मध्यमरूपकः । कृष्णगौरो महात्यागी नात्युच्चो न लघुर्घृणी ॥ ८ ॥
वणिजामन्वये श्रेष्ठः पितृभ्रातृसुखैर्युतः । धनवाहनभोगाढ्यो राजमान्यः प्रतापवान् ॥ ९ ॥

सन्धिविग्रहकर्ता च बहुमित्रसमाकुलः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १० ॥
जन्मलग्नात्सुते द्यूने क्रूरखेटसमन्वितः । कौमारे जननीसौख्ययुग्यूनि तत्सुखोज्झितः ॥ ११ ॥
प्राग्भवे ब्राह्मणद्रव्यहरणाद्धातजातसुत । पापादिह महाभाग सन्तानसुखवर्जितः ॥ १२ ॥
शत्रुभीतियुतः सर्वलोकेषु प्रियवागपि । श्लेष्मलो वातरुग्युक्तः कदाचित्पित्तकोपनः ॥ १३ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । पलमात्रेण कर्तव्यो ब्राह्मणस्तु हिरण्मयः ॥ १४ ॥
गन्धपुष्पैः समभ्यर्च्य विधिज्ञाय प्रदापयेत् । पलैः शतमितैः शुल्वघटं घृतसुपूरितम् ॥ १५ ॥
सुवर्णपलसंयुक्तं दद्याद्वेदविदे सुत । सोमस्य प्रतिमा कार्या सुवर्णद्वयसम्मिता ॥ १६ ॥
यथा रविश्च कर्तव्यो ब्राह्मणेभ्यो निवेदयेत् । गायत्रीमष्टसाहस्रं त्र्यम्बकं तु तथा जपेत् ॥१७॥
आप्यायस्वेतिमन्त्रं च सूर्यमन्त्रं तथैव च । होमयेत्तद्दशांशेन शक्त्या विप्रांश्च भोजयेत् ॥ १८ ॥
द्विजोद्वाहं ततः कुर्यात्सर्वोपस्करसंयुतम् । श्रवणं हरिवंशस्य कुर्याद्वै विनतात्मज ॥ १९ ॥
एवं निष्कृतिमापन्नः पुत्रपौत्रसुखं लभेत् । नाधयो व्याधयस्तस्य न च शत्रुभयं लभेत् ॥ २० ॥
कुसप्तत्यब्दकं चायुर्मुनिवेदमितेऽब्दके । रिष्टं नाप्नोति नैवं च कुर्याद्यो लोभमोहितः ॥ २१ ॥
जन्मजन्मनि दुःखी स्याद्रिष्टेनैव विनश्यति ॥ २२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनशताधिकसहस्रतमः ॥ १९९९ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे बाहुजो धर्मकर्मवित् ॥ १ ॥
कृषिवाणिज्यकर्ता च सन्धिविग्रहसंयुतः । दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
ब्राह्मण्यां धारितो गर्भस्तत्पतिश्चैव घातितः । विषेण तु प्रपञ्चेन ततो लोकापवादतः ॥ ४ ॥
औषधैश्छेदनैश्चापि मर्दनैश्च प्रयत्नकैः । गर्भश्च पातितस्तस्याः सापि मृत्युवशं गता ॥ ५ ॥
तद्दुःखेनाण्डजश्रेष्ठ ततस्स तु दिनान्तरे । कष्टान्मृत्युवशं प्राप्तो भुक्त्वा तु यमशासनम् ॥ ६ ॥
पापात्पुण्याच्च स्वर्गांश्च भुक्त्वा पुण्यावशेषतः । हिमालये पुण्यदेशे स जातोऽत्र वणिक्सुतः ॥ ७ ॥
धनवाहनभोगाढ्यो वंशश्रेष्ठोऽतिधर्मवित् । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ८ ॥
चिंताक्लेशसमायुक्तो यत्किंचिद्धनवानपि । जन्मलग्नात्सुते द्यूने क्रूरग्रहविलोकिते ॥ ९ ॥
मन्दसन्धिगते कन्यातुलयोर्जन्म तस्य तु । प्राग्भवे ब्राह्मणी या सा धर्षिता तेन काश्यपे ॥१०॥
सैवेह जाता ह्यस्यैव ज्येष्ठपत्नी मृतिं गता । तस्याश्चोपायकैः सूत यो गर्भो विनिपातितः ॥११॥
सा कन्याभूत्खगश्रेष्ठ गता निर्वेशतामिह । शत्रुभीतियुतो दुःखी गतागतधनैर्युतः ॥ १२ ॥
व्यापारोऽस्य फलत्येव कदाचिन्न फलत्यपि । कनिष्ठास्य महाभाग जाया या प्राग्भवे ह्यभूत् १३॥
ब्राह्मणी गर्भपाते तु याकरोन्महदुद्यमम् । तेन पापेन सापीह रोगयुक्ता खगाधिप ॥ १४ ॥
तद्दुःखेन महादुःखी सन्तानसुखवर्जितः । खेगवर्णमिन्द्रान्तं जातसन्तानवर्जितः ॥ १५ ॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम् । सुवर्णद्वयकेनैव ब्राह्मणीं कारयेच्छुभाम् ॥ १६ ॥
तथा वै ब्राह्मणः कार्यो गन्धपुष्पैः समर्च्य च । विधिज्ञाय प्रदद्याद्वै सुवर्णमितिको रविः ॥ १७॥
निष्कद्वयेन सोमः स्याद्राजतो ब्राह्मणाय वै । देयो रुद्रजपं कुर्याद्गां दद्यात्स पयस्विनीम् ॥ १८ ॥
शतं वै भोजयेद्विप्रान्सर्पिष्पात्मानमीक्षयेत् । एवंकृतविधेः सूत पूर्वजन्माघनाशनम् ॥ १९ ॥
न पुत्रमरणं तस्य न जायामरणं भवेत् । जीवत्पुत्रः स दीर्घायुरशीतिमितवत्सरान् ॥ २० ॥

नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्। पुत्रपौत्राभिवृद्ध्या च ह्येधन्ते सम्पदोऽस्य तु ॥२१॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। जन्मजन्मनि दुःखी स्यादन्ते च नरकं व्रजेत्॥२२॥
खवेदसम्मिते वर्षे रिष्टेनैव विनश्यति ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षष्ट्युत्तरनवशताधिकसहस्रतमः ॥ १९६० ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीत्सिंहलके देशे वैश्यः परमधार्मिकः ॥ १ ॥
कृषिव्यापारसंयुक्तो राजमान्यः प्रतापवान्। तस्य भार्या सुतन्वङ्गी पापबुद्धिवशं गता ॥ २ ॥
अथो भाविबलात्सूत तथा पापमुपार्जितम् । पूर्वजन्मनि पक्षीन्द्रावधीद्वत्ससंयुता शुनीम् ॥ ३ ॥
गृहस्य पश्चिमे भागे प्रसूता शुनकी च सा। भस्मोदरं सुतीक्षणं वा अग्निमस्यां च साऽक्षिपत् ४॥
सा शुनी च स्वभावेन घुर्घुरी चावतिष्ठते । सा भीता गृहनारी तु पापबुद्धिवशं गता ॥ ५ ॥
दुष्टेन मनसा तत्र तस्या उपरि निःक्षिपेत्। सापि मृत्युवशं प्राप्ता शुनकी सह बालकैः॥ ६ ॥
प्रीत्या तस्यै पुनर्नोक्तं भर्त्रा चैव खगाधिप। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ७ ॥
पुण्यपापफलं भुक्त्वा स जातोऽत्र हिमालये । खशमान्ते तु मुखजः सा जाया तस्य वै खग ॥ ८॥
गौरो मध्यमरूपाढ्यो राजमान्यः प्रतापवान् । नातिस्थूलो नातिह्रस्वो धनवाहनभोगभाक् ॥९॥
बाल्ये पितृसुखैर्युक्तः कौमारे तत्सुखोज्झितः। प्राग्भवे शुनकीघातात्तद्वत्सानां च घातनात् १०॥
अत्र जन्मनि तस्यैव म्रियन्ते बालकास्तथा। चिन्ताक्लेशसमायुक्तो रिपुभीत्या च संयुतः ॥११॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। पलेन तु सुवर्णेन धेनुं कुर्यात्सवत्सकाम् ॥ १२ ॥
प्रदद्यात्तां विधिज्ञाय वैष्णवं भोजयेत्तथा। वस्त्रैकविधिना स्नायान्महारुद्रजपादिकम् ॥ १३ ॥
ब्राह्मणोद्वाहनं कुर्यादक्षीणा व्रतमाचरेत्। शतं च भोजयेद्विप्रान्गा दद्यात्स पयस्विनीम् ॥ १४ ॥
एवं कुर्यात्खगश्रेष्ठ पुत्रमाप्नोति वाञ्छितम्। जीवत्पुनः स दीर्घायुः पितृभक्तो गुणोत्तमः॥१५॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्। त्रिसप्तत्यब्दमायुः स्यात्पञ्चाशन्मितवत्सरे ॥ १६ ॥
रिष्टं नाप्नोति स प्राणी यथोक्ते पापशोधने। न करोति यदा मोहाल्लोभाद्वा जन्मजन्मनि ॥१७॥
दुःखी स्यान्निधनं तस्य रिष्टेनैव खगेश्वर। लग्ने राहुशनिभ्यां च संयुते सप्तमे सुते ॥ १८ ॥
दृष्टे जातः पुमानत्र विनतानन्दवर्धन ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरनवशताधिकसहस्रतम ॥ १९६१ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे ब्राह्मणो धर्मकर्मवित् ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः। गोशय्यावसनान्नानि श्रद्धाभक्तिसमन्वितम् ॥ २ ॥
बाल्ये तेन कृतं कर्म पापमुग्रमुपार्जितम् । वक्ष्यामि शृणु तत्कर्म सत्यमेव खगाधिप ॥ ३ ॥
तस्मिन्या चैव पक्षीन्द्र कुमारी नववत्सरा । वर्षैकादशकोऽयं हि कुमारो बालयौवनः ॥ ४ ॥
बालबुद्धी च तौ द्वौ तु पापं पुण्यमजानतौ । चटकाबालकं दृष्ट्वा प्रसूतां च विहङ्गमाम् ॥ ५ ॥
क्रीडार्थं च ततो भग्नो ह्याश्रमोऽस्य खगस्य तु। शिशवोऽपि निवृत्तास्तु पतिता भूमिमण्डले ॥ ६॥
अग्निमध्ये तु चुल्ल्यां वै न्यक्षिपञ्जीव्य बालकान्। पश्चात्कालान्तरेणैव तेनोद्वाहः कृतस्तदा ॥ ७ ॥
तेन कर्मविपाकेन सोऽभूच्च मृतवत्सकः । म्रियन्ते जातमात्रेण वर्षद्वयत्रिवत्सराः ॥ ८ ॥

ततो बहुतिथे काले स गत्वा यमशासनम्। पुण्यात्पुण्यफलं भुक्त्वा स जातोऽत्र हिमालये ॥९॥
लग्नस्थाने शनिश्चैव चतुर्थे च विलोकिते। जातोऽयं गौरवर्णस्तु बाल्ये पितृसुखैर्युतः ॥ १० ॥
नातिस्थूलो नातिह्रस्वो मतिमान्गुणप्रतापवान्। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥११॥
प्राग्भवे मृतवत्सोऽभूत्तथात्र मृतवत्सकः॥ १२ ॥

अरुण उवाच।

कर्मसाक्षिञ्जगन्नाथ कृपां कृत्वा ममोपरि। तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं कथं चरेत् ॥ १३ ॥

श्रीसूर्य उवाच।

प्रायश्चित्तं प्रवक्ष्यामि शृणु तस्य द्विजस्य च। निष्कद्वयस्य हेम्नस्तु कुर्याद्धेनुं दृढां शुभाम्॥१४॥
गन्धपुष्पैः समभ्यर्च्य दैवज्ञाय प्रदापयेत्। वस्त्रैकविधिना स्नायाद्वां दद्यात्स पयस्विनीम् ॥१५॥
लोहेन तु तदा द्रोणलवणं दापयेच्छुभम्। ब्राह्मणान्भोजयेत्पश्चाद्यथावित्तानुसारतः ॥ १६ ॥
य एवं कुरुते पक्षिन्पुत्रानाप्नोति निश्चितम्। जीवत्पुत्रः स दीर्घायुरशीतिमितवत्सरान् ॥ १७ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। रिष्टेन मृतिमाप्नोति खवेदमितवत्सरे ॥ १८ ॥
जन्मजन्मनि पक्षीन्द्र दुःखी स्यान्नात्र संशयः ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९२ ॥

---

अरुण उवाच।

लग्नस्थाने शनिश्चैव चतुर्थे वा विलोकितः। तस्य कर्मविचारं तु सत्यं कथय मे प्रभो ॥ १ ॥
मृतवत्सा च या नारी कुतो जीवेत्कुतो मृतिः। किं कृतं तु तया पापं सत्यं वद दिवाकर ॥ २ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम्। बभूव यामुने देशे वैश्यपुत्री शुभानना ॥ ३ ॥
पतिभक्तिपरा नित्यं पितृमातृसुखान्विता। तया दत्तानि दानानि पर्वस्वपि च शक्तितः ॥ ४ ॥
वस्त्रभूषणशय्यान्नान्येवं पतिसहायतः। तया भाविबलात्सुत कृतं कर्मातिदारुणम् ॥ ५ ॥
बिडालीघातिनी साभूद्या पृष्टा विनतात्मज। मार्जारी गर्भसंयुक्ता क्षुधार्ता चाश्रमं गता ॥ ६ ॥
त्रींस्तु बालान्प्रसूता सा चतुर्थश्चोदरे स्थितः। तया दृष्टं गृहं शून्यं तत्र भाण्डं च दूषितम् ॥७॥
तत्रागता गृहान्नारी ह्यासनेनापि घातिता। सा मृता गर्भसंयुक्ता मृतं बालत्रयं पुनः ॥ ८ ॥
ततो बहुतिथे काले सा गत्वा यमशासनम्। पुण्यपापफलं भुक्त्वा सा जातेह हिमालये ॥ ९ ॥
गौरीमध्यमरूपा सा पतिभक्तिपरायणा। देवद्विजपरा नित्यं व्रतानामनुकांक्षिणी ॥ १० ॥
पितृमातृसुखैर्युक्ता सुखजा भ्रातृसंयुता। धनवाहनभोगाढ्या सर्वलोकप्रियम्वदा ॥ ११ ॥
पुण्यादिदं तथा पापाल्लोभयुक्तात्पापकृत्। मार्जारीघातजात्पापात्तद्बालकवधादपि ॥ १२ ॥
सात्र जन्मनि पक्षीन्द्र मृतवत्सातिदुःखभाक्। लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥१३॥
कृष्णवर्णां सद्गुग्वां च तरुणीं रूपसंयुताम्। दद्यात्तां विदुषे धेनुं वस्त्रालंकारसंयुताम् ॥ १४ ॥
निष्कद्वयं सुवर्णस्य दत्त्वा वेदाङ्गपारगे। वस्त्रैकविधिना स्नायाद्रुद्रैकादशकं जपेत् ॥ १५ ॥
महादानाष्टकं दत्त्वा पश्चाच्छद्विजभोजनम्। एवं कृत्वा खगश्रेष्ठ तस्याः पापं व्यपोहति ॥ १६ ॥
जीवत्पुत्रा तु सततं सुखसौभाग्यमाप्नुयात्। त्रिसप्तत्यब्दमायुः स्यात्प्रायश्चित्ते कृतेऽधुना ॥१७॥
सप्तत्रिंशन्मिताब्दे तु रिष्टेनैव विनश्यति ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिपञ्चाशदुत्तरनवशताधिकसहस्रतमः ॥ १९९३ ॥

---

नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्। पुत्रपौत्राभिवृद्ध्या च होधन्ते सम्पदोऽस्य तु ॥२१॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। जन्मजन्मनि दुःखी स्यादन्ते च नरकं व्रजेत्॥२२॥
खवेदसम्मिते वर्षे रिष्टेनैव विनश्यति ॥ २३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षष्ट्युत्तरनवशताधिकसहस्रतमः ॥ १९६० ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । आसीत्सिंहलके देशे वैश्यः परमधार्मिकः ॥ १ ॥
कृषिव्यापारसंयुक्तो राजमान्यः प्रतापवान्। तस्य भार्या सुतन्वङ्गी पापबुद्धिवशं गता ॥ २ ॥
अथो भाविवशात्सूत तया पापमुपार्जितम् । पूर्वजन्मनि पक्षीन्द्रावधीद्वत्सयुतां शुनीम् ॥ ३ ॥
गृहस्य पश्चिमे भागे प्रसूता शुनकी च सा। भस्मोदरं सुतीक्ष्णं वा अग्निमस्यां च साऽक्षिपत् ४॥
सा शुनी च स्वभावेन घुर्घुरी चावतिष्ठते । सा भीता गृहनारी तु पापबुद्धिवशं गता ॥ ५ ॥
दुष्टेन मनसा तत्र तस्या उपरि निःक्षिपेत्। सापि मृत्युवशं प्राप्ता शुनकी सह बालकैः॥ ६ ॥
प्रीत्या तस्यै पुनर्नोक्तं भर्त्रा चैव खगाधिप। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ७ ॥
पुण्यपापफलं भुक्त्वा स जातोऽत्र हिमालये। स्वशमान्ते तु सुखजः सा जाया तस्य वै खग ॥ ८॥
गौरो मध्यमरूपाढ्यो राजमान्यः प्रतापवान्। नातिस्थूलो नातिह्रस्वो धनवाहनभोगभाक् ॥९॥
बाल्ये पितृसुखैर्युक्तः कौमारे तत्सुखोज्झितः। प्राग्भवे शुनकीघाताद्वत्सानां च घातनात् १०॥
अत्र जन्मनि तस्यैव म्रियन्ते बालकास्तथा। चिन्ताक्लेशसमायुक्तो रिपुभीत्या च संयुतः ॥११॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। पलेन तु सुवर्णेन धेनुं कुर्यात्सवत्सकाम् ॥ १२ ॥
प्रदद्यात्तां विधिज्ञाय वैष्णवं भोजयेत्तथा। वस्त्रैकविधिना स्नायान्महारुद्रजपादिकम् ॥ १३ ॥
ब्राह्मणोद्वाहनं कुर्याद्दम्पीणां व्रतमाचरेत्। शतं च भोजयेद्विप्रान्गां दद्यात्त पयस्विनीम् ॥ १४ ॥
एवं कुर्यात्खगश्रेष्ठ पुत्रमाप्नोति वाञ्छितम्। जीवत्पुत्रः स दीर्घायुः पितृभक्तो गुणोत्तमः॥१५॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्। त्रिसप्तत्यब्दमायुः स्यात्पश्चाशन्मितवत्सरे ॥ १६ ॥
रिष्टं नाप्नोति स प्राणी यथोक्ते पापशोधने। न करोति यदा मोहाल्लोभाद्वा जन्मजन्मनि ॥१७॥
दुःखी स्यान्निधनं तस्य रिष्टेनैव खगेश्वर। लग्ने राहुशनिभ्यां च संयुते सप्तमे सुते ॥ १८ ॥
हष्टे जातः पुमानत्र विनतानन्दवर्धन ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकषष्ट्युत्तरनवशताधिकसहस्रतमः ॥ १९६१ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे ब्राह्मणो धर्मकर्मवित् ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः। गोशय्यावसनान्नानि श्रद्धाभक्तिसमन्वितम् ॥ २ ॥
बाल्ये तेन कृतं कर्म पापमुग्रमुपार्जितम् । वक्ष्यामि शृणु तत्कर्म सत्यमेव खगाधिप ॥ ३ ॥
तत्प्रिया चैव पक्षीन्द्र कुमारी नववत्सरा । वर्षैकादशकोऽयं हि कुमारो बालयौवनः ॥ ४ ॥
बालबुद्धी च तौ द्वौ तु पापं पुण्यमजानतौ। चटकाबालकं दृष्ट्वा प्रसूतां च विहङ्गमाम् ॥ ५ ॥
क्रीडार्थं च ततो भग्नो ह्याश्रमोस्य खगस्य तु। शिशवोऽपि निकृत्तास्तु पतिता भूमिमण्डले ॥ ६॥
अग्निमध्ये तु चुल्ह्यां वै न्यक्षिपत्तांश्च बालकान्। पश्चात्कालान्तरेणैव तेनोद्वाहः कृतस्तदा ॥ ७ ॥
तेन कर्मविपाकेन सोऽभूच्च मृतवत्सकः । म्रियन्ते जातमात्रेण वर्षद्वयत्रिवत्सराः ॥ ८ ॥

ततो बहुतिथे काले स गत्वा यमशासनम्। पुण्यात्पुण्यफलं भुक्त्वा स जातोऽत्र हिमालये ॥९॥
लग्नस्थाने शनिश्चैव चतुर्थे च विलोकिते। जातोऽयं गौरवर्णस्तु बाल्ये पितृसुखैर्युतः ॥ १० ॥
नातिस्थूलो नातिह्रस्वो मतिमान्सुप्रतापवान्। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥११॥
प्राग्भवे मृतवत्सोऽभूत्तथात्र मृतवत्सकः॥ १२ ॥

अरुण उवाच।

कर्मसाक्षिञ्जगन्नाथ कृपां कृत्वा ममोपरि। तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं कथं चरेत् ॥ १३ ॥

श्रीसूर्य उवाच।

प्रायश्चित्तं प्रवक्ष्यामि शृणु तस्य द्विजस्य च। निष्कद्वयस्य हेम्नस्तु कुर्याद्धेनुं द्वढां शुभाम्॥१४॥
गन्धपुष्पैः समभ्यर्च्य द्विजाय प्रदापयेत्। वस्त्रैकविधिना स्नायात्तां दद्यात्स पयस्विनीम् ॥१५॥
लोहेन तु तदा द्रोणलवणं दापयेच्छुभम्। ब्राह्मणान्भोजयेत्पश्चाद्यथावित्तानुसारतः ॥ १६ ॥
य एवं कुरुते पक्षिन्पुत्रानाप्नोति निश्चितम्। जीवत्पुत्रः स दीर्घायुरशीतिमितवत्सरान् ॥ १७ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्। रिष्टेन मृतिमाप्नोति खवेदमितवत्सरे ॥ १८ ॥
जन्मजन्मनि पक्षीन्द्र दुःखी स्यान्नात्र संशयः ॥ १९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विनवत्युत्तरनवशताधिकसहस्रतमः ॥ १९९२ ॥

---

अरुण उवाच।

लग्नस्थाने शनिश्चैव चतुर्थे वा विलोकितः। तस्य कर्मविचारं तु सत्यं कथय मे प्रभो ॥ १ ॥
मृतवत्सा च या नारी कुतो जीवेत्कुतो मृतिः। किं कृतं तु तया पापं सत्यं वद दिवाकर ॥ २ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम्। बभूव यामुने देशे वैश्यपुत्री शुभानना ॥ ३ ॥
पतिभक्तिपरा नित्यं पितृमातृसुखान्विता। तया दत्तानि दानानि पर्वस्वपि च शक्तितः ॥ ४ ॥
वस्त्रभूषणशय्यान्नान्येवं पतिसहायतः। तया भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ५ ॥
बिडालीघातिनी साभूद्या पृष्ठ विनतात्मज। मार्जारी गर्भसंयुक्ता क्षुधार्ता चाश्रमं गता ॥ ६ ॥
श्रीस्त बालान्प्रसूता सा चतुर्थश्चोदरे स्थितः। तया दृष्टं गृहं शून्यं तत्र भाण्डं च दूषितम् ॥७॥
तत्रागता गृहान्नारी ह्यासनेनापि घातिता। सा मृता गर्भसंयुक्ता मृतं बालत्रयं पुनः ॥ ८ ॥
ततो बहुतिथे काले सा गत्वा यमशासनम्। पुण्यपापफलं भुक्त्वा सा जातेह हिमालये ॥ ९ ॥
गौरीमध्यमरूपा सा पतिभक्तिपरायणा। देवद्विजपरा नित्यं प्रतानामनुकांक्षिणी ॥ १० ॥
पितृमातृसुखैर्युक्ता सुखजा भ्रातृसंयुता। धनवाहनभोगाढ्या सर्वलोकप्रियंवदा ॥ ११ ॥
पुण्यादिदं तथा पापाल्लोभयुक्तास्पपापकृत्। मार्जारीघातजात्पापाच्छ्रद्वालकवधादपि ॥ १२ ॥
सात्र जन्मनि पक्षीन्द्र मृतवत्सातिदुःखभाक्। लक्षणैरेभिराढ्यायाः प्रायश्चित्तं वदाम्यहम् ॥१३॥
कृष्णवर्णां सदुग्धां च तरुणीं रूपसंयुताम्। दद्यात्तां विदुषे धेनुं वस्त्रालंकारसंयुताम् ॥ १४ ॥
निष्कद्वयं सुवर्णस्य दत्त्वा वेदाङ्गपारगे। वस्त्रैकविधिना स्नायाद्रुद्रैकादशकं जपेत् ॥ १५ ॥
महादानाष्टकं दत्त्वा पञ्चाशद्विजभोजनम्। एवं कृत्वा खगश्रेष्ठ तस्याः पापं व्यपोहति ॥ १६ ॥
जीवत्पुत्रा तु सततं सुखसौभाग्यमाप्नुयात्। त्रिसप्तत्यब्दमायुः स्यात्प्रायश्चित्ते कृतेऽधुना ॥१७॥
सप्तत्रिंशन्मिताब्दे तु रिष्टेनैव विनश्यति ॥ १८ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्रिनवत्युत्तरनवशताधिकसहस्रतमः ॥ १९९३ ॥

अरुण उवाच।
लग्ने चन्द्रो बुधश्चैव सप्तमे वा विलोकितः । तस्य कर्मविचारस्तु कथ्यतां मे दिवाकर ॥ १ ॥
श्रीसूर्य उवाच।
वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे ब्राह्मणो धर्मकर्मवित् ॥ २ ॥
कृषिवाणिज्यकर्ता च किञ्चिद्वित्तसमन्वितः। अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
दुष्करं तु खगश्रेष्ठ ब्राह्मणो गृहमाश्रितः । समीपे तु गृहं कृत्वा कुटुम्बं परिपालयेत् ॥ ४ ॥
वर्षाकालसमायोगे रोपयित्वा लता बहु । कूष्माण्डी पालिता तत्र सुपुष्टरुत्तमैः फलैः ॥ ५ ॥
दुष्टबुद्धिमना नारी फलं विप्रस्य साहरत् । प्रभातसमये तार्क्ष्य शाकार्थं सुन्दरी गता ॥ ६ ॥
कूष्माण्डं हारितं दृष्ट्वा तया तस्मै निवेदितम्। घुर्घुरेण च वाक्येन ब्राह्मणी च विशेषतः ॥७ ॥
पश्चाद्रात्रिसमायोगे सर्वा उत्थापिता लताः। परया पत्नीमतं कृत्वा विप्रः सन्ताडितो बहु ॥ ८ ॥
तस्य विप्रो गृहं त्यक्त्वा ह्यन्यस्थाने गतस्तदा। तदा बहुतिथे काले स गत्वा यमशासनम् ॥९॥
पुण्यपापफलं भुक्त्वा स जातोऽत्र हिमालये। ब्राह्मणो मतिमाञ्श्रेष्ठो राजमान्यः प्रतापवान् १०॥
गौरो मध्यमरूपाढ्यो धनी मानी महायशाः। पुण्यादिदं तथा पापाल्लोभी पापरतः कचित् ११॥
धूर्तो दुष्टजनैर्युक्तः पितृमातृसुखोज्झितः । कदाचिद्रोगयुक्तश्च कदाचि कलहप्रियः ॥ १२ ॥
कूष्माण्डहरणात्पापात्तथा ब्राह्मणताडनात्। म्रियन्ते बालकास्तस्य पुत्रशोकातुरस्य च ॥१३॥
तस्य कर्मविशुद्ध्यर्थं प्राजापत्यं च कारयेत् । गृहदानं ततः कुर्यात्सर्वोपस्करसंयुतम् ॥ १४ ॥
ब्राह्मणाय ततो दद्याद्दम्पती परिधापयेत्। निष्कद्वयं सुवर्णस्य चतुर्निष्कं तु राजतम् ॥ १५ ॥
गोलिका मृन्मयाश्चैव नारिकेलेन संयुताः। कूष्माण्डानि सद्रव्याणि दत्त्वा चैवं त्रयोदश ॥१६॥
शतं च भोजयेद्विप्रान् गां दद्यात्स पयस्विनीम्। य एवं कुरुते तार्क्ष्य पुत्रपौत्रैश्च वर्धते ॥ १७ ॥
अशीत्यब्दमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना । सप्तपञ्चाशदब्दे तु रिष्टेनैव विनश्यति ॥ १८ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतु पञ्चषष्ट्युत्तरनवशताधिकसहस्रतम. ॥ १९६४ ॥

---

अरुण उवाच।
लग्नस्थाने दिवानाथे चतुर्थे वा विलोकिते । तस्यैव कीदृशं कर्म कथयस्व दिवाकर ॥ १ ॥
श्रीसूर्य उवाच।
वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । करहाटाभिधे देशे ब्राह्मणो राजपूजितः ॥ २ ॥
दत्तानि तेन दानानि पर्वस्वपि च भक्तितः । गोमय्यागृहवस्त्रान्नभूषणानि प्रयत्नतः ॥ ३ ॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम् । चौराधिपस्य सङ्गं तु कृतवान्बुधभावतः ॥ ४ ॥
एकस्मिन्दिवसे सूत विप्रं हत्वा स्त्रिया सह । अरण्ये निर्जले देशे चोररूपेण शब्दितः ॥ ५ ॥
तेन मार्गेण विप्रः स सपत्नीकः समागतः । तेन चौरेण तस्याश्च गृहीतं बहुभूषणम् ॥ ६ ॥
पत्नीपुत्रेण संयुक्ता कोलाहलनिपीडिता। अचेतना च सा नारी कद्रस्तात्पतितः शिशुः ॥ ७ ॥
चतुर्मासस्ततो बालः सहसा मरणं गतः। सा स्त्री पुत्रस्य शोकेन सद्यः प्राणान्समत्यजत् ॥ ८॥
जाया पुत्रं मृतं दृष्ट्वा प्राणाश्चाघातयद्द्विजः। ततो बहुतिथे काले स गत्वा धर्ममन्दिरम् ॥ ९ ॥
पुण्यपापफलं भुक्त्वा स जातोऽत्र हिमालये। सुखजो मध्यरूपाढ्यो गौरवर्णः प्रतापवान् ॥१० ॥
नातिस्थूलो नातिह्रस्वो राजमान्यो धनी महान्। पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ११
उदरे वातरोगी च गतागतधनैर्युतः। प्राग्भवे चौरवृत्त्या च ब्रह्मस्वस्य च लुण्ठनात् ॥ १२ ॥

तया तद्धनजातस्य पुत्रपत्न्योश्च मारणात्। पापादिह महाभाग मृतवत्सः प्रजायते ॥ १३ ॥
तस्य कर्मविशुद्ध्यर्थं प्रायश्चित्तं च कारयेत्। पलेन तु सुवर्णेन धेनुं कुर्यात्सुशोभनाम् ॥ १४ ॥
चतुर्थांशेन वत्सं च कृत्वालंकारभूषणैः। विधिज्ञाय ततो दद्याद्भूमिदानं प्रयत्नतः ॥ १५ ॥
वेदोक्तविधिना स्नायान्महारुद्रजपादिकम्। द्रोणसंख्यानि धान्यानि सप्तापि परिदापयेत् ॥ १६॥
उमामाहेश्वरं दानं पलस्वर्णेन दापयेत्। दम्पती परिवाप्याथ शतं विप्रांश्च भोजयेत् ॥ १७ ॥
सर्वोपस्करसंयुक्तां गां दद्यात्तु पयस्विनीम्। य एवं कुरुते तार्क्ष्य तस्य पापं व्यपोहति ॥ १८ ॥
जीवत्पुत्रश्च दीर्घायुः सुखसौभाग्यवान्भवेत्। अशीत्यब्दमितायुः स्यात्प्रायश्चित्ते कृतेऽधुना॥ १९॥
जन्मजन्मनि दुःखी स्यान्मुनिवेदमितेऽब्दके। रिष्टेनैव विनाशः स्यात्सत्यंसत्यं न संशयः॥ २० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पंचषष्ट्युत्तरनवशताधिकसहस्रतमः॥ १९६५ ॥

---

अरुण उवाच।

मृतगर्भा च या नारी कर्मणा केन बाध्यते। एष मे संशयो देव कथयस्व दिवाकर ॥ १ ॥

श्रीसूर्य उवाच।

वैनतेय महाभाग शृणु तस्या विचेष्टितम्। बभूव यामुने देशे ब्राह्मणी च पतिप्रिया ॥ २ ॥
धर्मकर्मसमायुक्ता पतिपुत्रवती च सा। तया दत्तानि दानानि पर्वस्वपि विशेषतः ॥ ३ ॥
अन्नगोमहिषीवस्त्राण्येव पत्युः सहायतः। अथो मालवलास्यत्र तया पापं महत्कृतम् ॥ ४ ॥
ब्राह्मणो वेदपाठज्ञः सुशीलः पापवर्जितः। तेन द्रव्यं तथा हेम तस्या हस्ते समर्पितम् ॥ ५ ॥
पठनार्थं गतो विप्रो नागतः पुनराश्रमम्। तयोपजीवितं द्रव्यं पत्या पुत्रेण वै सह ॥ ६ ॥
तद्द्रव्यं ब्राह्मणेभ्यश्च न दत्तं लोभमोहतः। ततो बहुतिथे काले सा गत्वा यमशासनम् ॥ ७ ॥
पुण्यपापफलं भुक्त्वा सा जातात्र हिमालये। गौरवर्णा सुभूपाढ्या पतिभक्तिपरायणा ॥ ८ ॥
धनवाहनभोगाढ्या पितृमातृसुखैर्युता। पुण्यादिदं तथा पापाल्लभियुक्ताल्पपापकृत् ॥ ९ ॥
प्राग्भवे न्यासहरणाद्गर्भं नैव प्रमुञ्चति। न्यासापहारिणी नारी मृतगर्भा प्रजायते ॥ १० ॥
बहुक्लेशयुता सा स्यादिति वेदविदो विदुः। लग्नस्थाने यदा राहुश्चतुर्थे वावलोकिते ॥ ११ ॥
जातेयं ब्राह्मणी सूत प्राक्पापात्तस्य निष्कृतिः। पञ्चनिष्काणि सुवर्णस्य दश निष्कं तु राजतम्१२
विधिज्ञाय प्रदद्यांद्वै दरिद्राय कुटुम्बिने। ब्राह्मणोद्वाहनं कुर्याद्रुद्रैकादशकं जपेत् ॥ १३ ॥
श्रवणं हरिवंशस्य कुर्यात्पुष्करिणीं तथा। शतं च भोजयेद्विप्रान्गां दद्यात्स पयस्विनीम् ॥ १४ ॥
या ह्येवं कुरुते तार्क्ष्य मृतगर्भं विमोचयेत्। ध्रुवं च जनयेत्पुत्रं चिरायुःपितृभक्तकम् ॥ १५ ॥
त्रिरामसप्ताब्दमायुः स्यात्प्रायश्चित्ते कृतेऽधुना। मुनिवेदमिताब्दे तु रिष्टेनैव विनश्यति ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्षष्ट्युत्तरनवशताधिकसहस्रतमः ॥ १९६६ ॥

---

अरुण उवाच।

आद्ये स्मरे खगे वेदे नैव पश्यन्ति खेचराः। तस्य कर्म कथं देव ब्रूहि सत्यं दिवाकर ॥ १ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम्। पूर्वजन्मनि सा वत्स नीचकर्मसमाश्रिता ॥ २ ॥
ब्राह्मणी भर्तृसंयुक्ता करहाटाख्यदेशके। तीर्थयात्राप्रसङ्गेन प्रायेण भर्तृसंयुता ॥ ३ ॥
बहुभिर्मिलितैश्चोरैस्तस्या जग्राह भूषणम्। तेन कोलाहलो जातः सानार्यबलचेतना ॥ ४ ॥

कृष्टापि कदिवस्त्र च लज्जिता सा न मुञ्चति । वर्णक्षेपोदरे हत्वा पतिता सा महीतले ॥ ५ ॥
तस्या उदरसंस्थस्तु गर्भश्च पञ्चमासिकः । दिनत्रये महत्कष्टं तथा प्राप्तं च दुःखदम् ॥ ६ ॥
ततो बहुतिथे काले सा गत्वा यममन्दिरम् । पुण्यपापफलं भुक्त्वा सा जाताऽत्र महीधरे ॥ ७ ॥
ब्राह्मणी गौरकृष्णा च पतिभक्तिपरायणा । धनवाहनभोगाढ्या पितृमातृसुखान्विता ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभाढ्यात्यल्पपापकृत् । प्राग्भवे गर्भपाताच्च स्वगर्भस्य विनाशनम् ॥ ९ ॥
पूर्वजन्मकृतं पापं भुज्यते चेह मानवैः ॥ १० ॥

अरुण उवाच ।

वृथा तस्या गृहं धान्यं धन तस्याश्च निष्फलम् । अपुत्राया वद स्वामिन्निष्कृतिं पुत्रसौख्यदाम्११

श्रीसूर्य उवाच ।

पलेन तु सुवर्णेन धेनुं कृत्वा सवत्सकाम् । प्रदद्याद्विविधिज्ञाय सर्वालङ्कारभूषिताम् ॥ १२ ॥
श्रवणं हरिवंशस्य चैकचित्तेन मानद । वस्त्रैकविधिना स्नायाद्रुद्रैकादशकं जपेत् ॥ १३ ॥
पञ्चरत्नसमायुक्तं घृतं कुम्भं च दापयेत् । शतं च भोजयेद्विप्रान्गां दद्यात्सा पयस्विनीम् ॥ १४॥
या त्वेवं कुरुते तार्क्ष्य सन्तानं लभते ध्रुवम् । जीवत्पुत्रा च दीर्घायुस्त्रिसप्ततिमिताब्दकम् ॥१५॥
नैवं करोति या मोहाल्लोभाढ्या पापशोधनम् । सप्तविंशन्मिताब्दे तु रिक्तैव विनश्यति ॥ १६ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याये सप्तषष्ट्युत्तरनवशताधिकसहस्रतम ॥ १९६७ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे बाहुजो धर्मकर्मवित् ॥ १ ॥
पितृमातृसुखैर्युक्तो देवद्विजपरायणः । दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिभक्तितः ॥ २ ॥
कार्तिके मधुराक्षेत्रे दीपदानानि भक्तितः । गोभूशय्यासनान्यश्ववसनाभरणानि च ॥ ३ ॥
मातृवैराग्यदुःखेन मृतस्य पितुरादरात् । सहानुगाया मातुश्च गयाश्राद्धानि भक्तितः ॥ ४ ॥
कृतवान्पितृभक्त्यर्थं पितृभक्तिपरायणः । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ५ ॥
द्विजस्य यज्ञविघ्नं हि कृतवान्दर्पमोहितः । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा । भुक्तपुण्यावशेषेण स जातोऽत्र हिमालये ॥ ७ ॥
यमुनायाः पूर्वभागे पुण्यदेशेऽतिविश्रुते । राज्ञा वंशे खगश्रेष्ठ गौरवर्णः प्रतापवान् ॥ ८ ॥
नात्युच्चो नातिह्रस्वश्च नातिस्थूलो न सूक्ष्मकः । देवद्विजगुरूणां च भक्तः पित्रनुगस्तथा ॥ ९ ॥
बहुभृत्यधनैश्वर्यैर्बहुवाहनसंयुतः । देशेदेशेऽधिकाराढ्यः श्रीमान् भोक्ता प्रियम्वदः ॥ १० ॥
सन्धिविग्रहसंयुक्तो बहुविद्यासमाश्रयः । राजप्रियो नीतिविच्च राजकार्येषु तत्परः ॥ ११ ॥
राज्ञा हितकरो नित्यं देवद्विजपरायणः । राजार्थेऽर्थानसून्स्वस्य गणयन्तृणवत्कृती ॥ १२ ॥
गुरुभक्तो यशस्वी च दम्भलाभविवर्जितः । पुत्रमित्रकलत्राद्यैर्युक्तः सर्वजनप्रियः ॥ १३ ॥
नैकस्त्रीसंयुतः कामी मातुराज्ञाप्रवर्तकः । जन्मान्नाग्नात्पञ्चमे द्यूने शुभक्रूरविलोकिते ॥ १४ ॥
संयुते वा पितृस्थाने मेषसंस्थे कलाधरे । क्रूरावलोकिते सूत स जातो मानवोऽत्र च ॥ १५ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । यज्ञविघ्नकृतात्पापाद्बाल्ये पितृसुखोज्झितः ॥ १६ ॥
मातृवैराग्यजातपापात्प्राकृताद्रुडाग्रज । विक्षिप्तोऽभूत्पिता तस्य युवभावे मृतेऽपि च ॥ १७ ॥
परापवादसंयुक्तः सदा चिन्तासमन्वितः । शत्रुभीशंकया युक्तो गूढचेष्टोऽतिकोपनः ॥ १८ ॥

मानापमानसाम्येन चित्तक्लेशसमन्वितः । चित्तास्थिरत्वरहितो गतागतयनैर्युतः ॥ १९ ॥
वातरुक्संयुतो नित्यं कदाचिच्छूलरोगभाक् । लक्षणैरेभिराढ्यश्चेत्प्रायश्चित्तं वदाम्यहम् ॥ २० ॥
पलैस्त्रिस्त्रिमिताः कार्या ब्रह्मविष्णुमहेश्वराः । तदर्धमितिकां वाथ निजवित्तानुमानतः ॥ २१ ॥
हिरण्मया यथाकाराः पत्रेषु लिखिताः क्रमात् । यजेत्तल्लिङ्गकैर्मन्त्रैस्तान्गन्धाद्युपचारतः ॥२२॥
विधिना च विधिज्ञाय भक्तिश्रद्धासमन्वितः । प्रदद्याद्विनतापुत्र पूर्वपापैः प्रमुच्यते ॥ २३ ॥
रविर्माषमितो वह्निस्तथा सूर्यो हिरण्मयः । विघ्नराजश्च कर्तव्यः पलेन च हिरण्मयः ॥ २४ ॥
वेदविद्भ्यः प्रदेया वै कुटुम्बिभ्यो विधानतः । गायत्रीं दशसाहस्रं त्र्यम्बकं द्विविधं तथा ॥२५॥
ब्रह्मविष्णुमहेशानां तथाग्नेर्भास्करस्य च । गणेशस्य च मन्त्रान्वै प्रजपेत्तद्विधानतः ॥ २६ ॥
अब्जजज्ञानमन्त्रं च विधिवत्संख्यया जपेत् । होमयेत्तद्दशांशेन दश विप्रांश्च भोजयेत् ॥ २७ ॥
गां च दद्याद्विधिज्ञाय स्वर्णालङ्कारसंयुताम् । सवत्सां स्वर्णसंयुक्तां युवतीं च पयस्विनीम् ॥२८॥
सर्पिष्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः । एवं निष्कृतिमापन्नः पूर्वपापापनोदिनीम् ॥ २९ ॥
आधिं व्याधिं रिपूणां च भयं नाप्नोति मानवः । सर्वे मनोरथाः पूर्णा भविष्यन्तीह तस्य तु ३०
चतुर्विंशन्मिते वर्षे रिष्टं तस्य न जायते । पञ्चवेदमितेऽब्दे वा भविष्यत्यस्य निश्चयात् ॥ ३१ ॥
उदरे वातशूलेन मृतिस्तस्य भवेद्ध्रुवम् । प्रायश्चित्ते कृते त्वत्र नाधयो व्याधयोऽपि च ॥३२॥
न चारिष्टभयं तस्य न च रोगभयं तथा । शत्रवो विलयं यान्ति सूर्येणेव तमो यथा ॥ ३३ ॥
मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः । ग्रहदोषैर्न लिप्येत सत्यं सत्यं न संशयः ॥ ३४ ॥
मदुक्तां निष्कृतिं सूत कृत्वा सम्यग्विधानतः । अश्वत्थसेवनं कुर्यादमतिदोषशान्तये ॥ ३५ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥३६॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टषष्ट्युत्तरनवशताधिकसहस्रतमः ॥ १९६८ ॥

श्रीसूर्य उवाच ।

या काचिद्वनिता सूत प्राग्भवे कांस्यहारिणी । सात्र जन्मनि पक्षीन्द्र शीर्षरोगप्रपीडिता ॥ १ ॥
दद्यात्पलशतं सीसं ब्राह्मणाय कुटुम्बिने । तत्काले शीर्षजाद्रोगान्मुच्यते नात्र संशयः ॥ २ ॥
इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९६९ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम् । करहाटाभिध देशेऽम्बष्ठवंशे खगोत्तम ॥ १ ॥
बभूवेयमतिप्राज्ञा चतुरा गुणशालिनी । धर्मकर्मसमायुक्ता भर्तुरादरणैर्युता ॥ २ ॥
धनवाहनभूपाढ्या दासीदाससमन्विता । प्राग्गर्भपातजाद्रोगाद्वन्ध्यैवापुत्रिणी च सा ॥ ३ ॥
स्वाश्रितानां द्विजानां च पालनं तत्पदार्चनम् । अकरोत्पथिकानां च प्रपादानमनुत्तमम् ॥ ४ ॥
तदर्चनं च रुद्राणां पूजनं वै तया कृतम् । दत्तं द्विजेभ्यो पान्थेभ्यो वासांसि च धनादिकम् ॥५॥
ददौ सा रुद्रपूजायै सोपस्करमतन्द्रिता । अथो भाविबलात्सूत तया पापं सुदारुणम् ॥ ६ ॥
कृतं शूद्रो महाभाग पथिको दुष्टकर्मकृत् । कश्चिदागत्य तद्द्वारि स्थितो दैवनियन्त्रितः ॥ ७ ॥
मिलित्वा तेन सार्कं सा स्वदास्या प्रेरिता सती । विषं दत्त्वा पतिं सूत जघानाज्ञानतो जले ॥८॥
युवभावे कृतवती पापं जाराश्रिता सती । पतिघ्नीयं महादुष्टेत्येवं लोकैस्तु निन्दिता ॥ ९ ॥
तया रुद्रालये सूत दीपनिर्वापणं तथा । कृतं जारोक्तितः पश्चाद्व्यतीते समये तदा ॥ १० ॥

निधनं प्राप्य सा सूत क्रिमियुक्तव्रणेन च । पुण्यात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा ॥ ११ ॥
पूर्वपुण्यावशेषेण सा जातात्र हिमालये । पर्णविक्रयिणा वंशे पादजाता खगेश्वर ॥ १२ ॥
तुलालग्ने तमोदेवगुरुभ्यां संयुते सुत । द्वितीये शनिसोमाभ्यां संयुक्ते संस्थिते मयि ॥ १३ ॥
तृतीये संस्थिते चन्द्रे कवौ सप्तमभावगे । मद्गृहात्सप्तमे भावे चाश्रिते भूमिनन्दने ॥ १४ ॥
तमसा संवृते दैत्यपूज्ये खगकुलोत्तम । गौराङ्गी सुस्मितमुखी नात्युच्चा समकायभाक् ॥ १५ ॥
नातिह्रस्वा प्रलम्बोष्ठी व्रतानामनुकाङ्क्षिणी । गतप्रियोत्सवरता स्नानदानपरा सदा ॥ १६ ॥
पुण्यादिदं तथा पापाल्लोभपापरता क्वचित् । विषं दत्त्वा पतिं सूत यतः प्राग्जारसंश्रिता ॥ १७ ॥
निजघान महादुष्टा यून्यत्र विधवा सुत । सत्यासत्यपरिज्ञानरहिता चञ्चला सदा ॥ १८ ॥
स्थैर्यमानपरित्यक्ता दुष्टबुद्ध्युपपादिनी । गार्हस्थ्यशीलरहिता नानाक्लेशनिवासिनी ॥ १९ ॥
यतः प्रारुद्धभवने जारोत्तया दीपनाशकृत् । एकाक्षी दुःखसंप्राप्ता दरिद्रा दुर्मनास्ततः ॥ २० ॥
लोकापवादनिन्द्याद्यैरन्विता पिशुना तथा । संयुता वातपित्ताभ्यां कश्चिद्गुणाय पापकृत् ॥ २१ ॥
हा पते हा पतिरिति चिन्तयन्ती मुहुर्मुहुः । क यामि क मरिष्यामि क तिष्ठामीति वै सुत ॥ २२ ॥
लक्षणैरेभिराढ्या चेत्प्रायश्चित्तं वदामि ते । विष्णोराराधनादत्र व्रतकृच्छ्रोपसेवनात् ॥ २३ ॥
धर्मादत्र महाभाग गङ्गाया उपसेवनात् । प्रयागादिषु तीर्थेषु वासात्प्राप्नोति सद्गतिम् ॥ २४ ॥
प्रयागे श्रद्धया युक्ता त्रिवर्षं निवसेद्यदि । गतिं शुभां सा प्राप्नोति परत्र च शुभां मतिम् ॥ २५ ॥
एवं या कुरुते सूत प्रायश्चित्तमतन्द्रिता । चतुर्विंशतिवर्षान्तं सुखयुक्तात्र जीवति ॥ २६ ॥
गतिं शुभां सा नाप्नोति यत्र देवो महेश्वरः । प्रायश्चित्तमकृत्वा तु भ्रमते यदि कीटवत् ॥ २७ ॥
पञ्चोनपञ्चाशद्वर्षे स्थितैव विनश्यति । गतिं शुभां सा नाप्नोति विधवा सप्तजन्मसु ॥ २८ ॥
जन्मादिमरणान्तं वै मया किंचित्प्रकाशितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७० ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु चास्य विचेष्टितम् । बभूव यामुने देशे शूरसेनाभिधे सुत ॥ १ ॥
धर्मकर्मसमायुक्ता शुभा सा क्षत्रियाङ्गना । विप्रगोपालनेयुक्ता पशुधान्यधनैर्युता ॥ २ ॥
पुत्रभ्रातृसुहृद्युक्ता दासीदाससमन्विता । प्रयागे च महातीर्थे राहुग्रस्ते निशाकरे ॥ ३ ॥
ब्राह्मणेभ्यो ददौ भूरि वासोधान्यधनादिकम् । तत आगत्य पत्या च कृतं कर्मातिदारुणम् ॥ ४ ॥
सहायेनैकरेनाथ वृत्तं शृणु खगेश्वर । सपत्नीवैरभावेन विषेण पतिरेव च ॥ ५ ॥
मारितो वै प्रयत्नेन घोरं पापं कृतं तथा । अथ काले व्यतीते तु निधनं प्राप्य साऽसती ॥ ६ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकानपि । पूर्वपुण्यावशेषेण सञ्जाताऽत्र हिमालये ॥ ७ ॥
ब्राह्मणानां कुले सा तु धर्मकर्मसमन्विता । गौराङ्गी कृष्णगात्री च नात्युच्चा गुणशालिनी ॥ ८ ॥
देवपूजारता नित्यं व्रतानामनुकाङ्क्षिणी । पुण्यादिदं तथा पापाल्लोभपापरता क्वचित् ॥ ९ ॥
विषं दत्त्वा तु भर्तारं जघान प्राग्यतस्ततः । पतिघ्नीयं महादुष्टा बाल्येऽत्र विधवा सुत ॥ १० ॥
विष्णोराराधनादत्र गङ्गायाउपसेवनात् । गतिं शुभां सा प्राप्नोति व्रतकृच्छ्रोपसेवनात् ॥ ११ ॥
धर्मादत्र महाभाग परत्र च शुभा गतिः ॥ १२ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः एकसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७१ ॥

श्रीसूर्य उवाच।

व्यभिचाररता या मातसात्रापि व्यभिचारिणी। एतस्या निष्कृतिं सूत नैवात्राहं वदामि ते॥१॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्विसप्तत्युत्तरनवशताधिकसहस्रतमः॥ १९७२॥

---

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव यामुने देशे वाडुजो धर्मकर्मवित्॥ १॥
राजमान्यः सदाचारः शूरो मन्त्री महायशाः। धनवाहनभोगाढ्यो ब्राह्मणातिथिपूजकः॥ २॥
सन्धिविग्रहसंयुक्तः स्त्रीपुत्रसुखसंयुतः। दत्तानि तेन दानानि मथुरायां महास्थले॥ ३॥
कार्तिके शुक्लपक्षे च व्रतिना नियतात्मना। विधिवत्कपिलादानं ब्राह्मणेभ्योऽतिभक्तितः॥ ४॥
सुवर्णानि खगश्रेष्ठ एकोत्तरविधानतः। प्रतिपद्दिनतो यावत्पूर्णिमा गरुडाग्रज॥ ५॥
पूर्णिमायां विधानेन गोघृतेन प्रबोधिताः। समर्पिताः प्रदीपा वै यमुनायां विशेषतः॥ ६॥
स्वस्थानं प्राप्य वै सूत ततः सा क्षत्रियोत्तमा। कृतवान्दारुणं कर्म भाविनोऽर्थस्य वै बलात्॥ ७
ब्राह्मणी विधवा वन्ध्या चासीत्तत्प्रतिवेशिनी। युवती वाडुजस्यास्य मन्दिरे चागतागतम्॥ ८॥
कुर्वन्ती तद्गृहे चैकब्राह्मणेन तपस्विना। एकदा दैवयोगेन राजोपद्रवभीतितः॥ ९॥
घटस्थं स्थापितं द्रव्यं ततः सा ब्राह्मणी खग। वाडुजं बोधयित्वा तु विपयोगप्रपञ्चतः॥ १०॥
ब्राह्मणं घातयामास द्रव्यलोभेन मानद। ततस्तेन क्षत्रियेण ब्राह्मण्या सह कामतः॥ ११॥
भुक्तं तद्द्रव्यमखिलं घोरं पापमुपार्जितम्। ततो बहुतिथे काले स गत्वा यमशासनम्॥ १२॥
पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलं तथा। भुक्तपुण्यावशेषेण स जातोऽत्र हिमालये॥ १३॥
गङ्गायाः पूर्वभागे च पुण्ये च वणिजां कुले। स रक्तकृष्णो मतिमान्राजमान्यः प्रतापवान्॥१४॥
नातिह्रस्वो नातिदीर्घो न स्थूलो न कृशः सुखी। सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियंवदः॥१५
धनवाहनभोगाढ्यो वाग्मी निजकुलाग्रणीः। पितृभ्रातृसुखैर्युक्तो बन्धुमित्रसुसंयुतः॥ १६॥
देवब्राह्मणभक्तश्च यशस्वी धर्मनीतिमान्। प्रतिष्ठाकामुकः श्रीमान्राजकार्येषु तत्परः॥ १७॥
परोपकारनिरतो ब्राह्मणातिथिपूजकः। प्राग्भवे कपिलादानात्स्वर्णदानात्तथाण्डज॥ १८॥
दीपदानान्मत्सुतायामत्र जन्मनि वै खग। राज्ञीप्रधानवर्गेषु मुख्योऽसौ पार्थिवप्रियः॥ १९॥
पुण्यादिदं तथा पापाच्छ्रोमी पापरतः क्वचित्। मनःक्लेशसमायुक्तो मतागतधनैर्वृतः॥ २०॥
सदा रिपुभयोद्विग्नचित्तोऽप्राप्तमनोरथः। प्रतिष्ठाभङ्गसन्दिग्धो मानी कापट्यसंयुतः॥ २१॥
कदाचिद्गृहिणीरक्तो विरक्तश्च कदापि च। कौमारे सुखयुक्तोऽपि कैशोरे क्लेशसंयुतः॥ २२॥
यूनि मातृसुखैर्हीनः परमर्मनिकायभित्। प्रियंवदोऽपि बहुभिः शत्रुभिश्चातिदुःखितः॥ २३॥
प्राग्भवे सुखजायाश्च विधवायाश्च सङ्गतः। सर्वाङ्गव्यथया युक्तस्तथा ब्राह्मणघातनात्॥ २४॥
पापात्कफरुजा युक्तः कदाचिज्ज्वरवानपि। ब्रह्मस्वहरणात्पापात्पुमपत्यविवर्जितः॥ २५॥
वातपित्तकफैर्युक्तश्चोपायैश्च भिषक्कृतैः। कदाचिद्रुक्शमं याति पुनरुत्पद्यते शनैः॥ २६॥
कदाचित्पित्तवांश्चैव कदाचिद्वातरोगयुक्। सर्वदा श्लेष्मलः सोऽपि श्लेष्मवृद्धियुगण्डज॥ २७॥
सन्दिग्धचित्तो लोकेषु नृपसभ्यसमाकुले। यशस्वित्वाभिवृद्ध्यर्थं निजसम्पत्तिनाशकः॥ २८॥
स्वजातिमध्ये श्रेष्ठोऽपि स्वजातीयविरोधभाक्। पितृभ्रातृसुखैर्युक्तोऽप्यमीभिः कलहाकुलः॥२९॥
पूर्वं या स्त्री सहायासीद्ब्रह्मस्वहरणे वधे। सात्र जन्मनि पक्षीन्द्र ज्येष्ठा मृत्युवशं गता॥ ३०॥

या स्त्री प्रागस्य भार्यासीत्सा कनिष्ठात्र जन्मनि । साध्वी पतिप्रिया नित्यं देवब्राह्मणपूजने॥३१॥
रता सुशीला सततं पतिशुश्रूषणे रता । ब्रह्मस्वभक्षणात्सा तु मनोदुःखसमन्विता ॥ ३२ ॥
कदाचिच्चिरपीडायुगुदरव्यथया युता । पुमपत्याशयाक्रान्ता परापत्यान्विलोक्य च ॥ ३३ ॥
प्राग्भवे द्वे भगिन्यौ तु धर्मकार्ये सहायिके । जाते तेऽत्र भवे सूत पुत्रौ जातेऽस्य वै खग ॥३४॥
प्राग्भवे सदसत्कर्म युवभावे यदर्जितम् । तदत्र तेन वै सूत युवभावेऽनुभूयते ॥ ३५ ॥
जन्माङ्गात्पञ्चमे यूने क्रूरग्रहविलोकिते । क्रूरखेटैर्युते वापि मत्सुतस्थानगे विधौ ॥ ३६ ॥
लक्षणैरेभिराढ्यश्चेत्प्रायश्चित्तं वदाम्यहम् । पलद्वयेन कर्तव्यो ब्राह्मणस्तु हिरण्मयः ॥ ३७ ॥
षोडशोरूपचारैश्च पूजयित्वा विधानतः । समर्प्यो वै विधिज्ञाय ब्राह्मणाय महात्मने ॥ ३८ ॥
पलमात्रमितः सोमस्तथा सूर्यो गणेशिता । लक्ष्मीनारायणश्चैव पलार्धेन प्रजापतिः ॥ ३९ ॥
ब्राह्मणेभ्यः प्रदेया वै पूर्वपापापनुत्तये । तदर्धमितिका वापि निजवित्तानुमानतः ॥ ४० ॥
गायत्रीं दशसाहस्रं त्र्यम्बकं द्विविधं तथा । सोमसूर्यगणेशानां मन्त्रानष्टाक्षरं जपेत् ॥ ४१ ॥
ब्रह्मजज्ञानमिति च मन्त्रं तत्संख्यया जपेत् । जुहुयाच्च दशांशेन तिलैस्त्रिमधुराप्लुतैः ॥ ४२ ॥
ब्राह्मणान्भोजयेत्पश्चाच्छतं सार्धशतं तु वा । नियुतं पार्थिवानां च शिवानां पूजनं चरेत् ॥४३॥
मद्दिने तु व्रतं कुर्यान्मद्भक्तो मत्परायणः । घटं ताम्रमयं कृत्वा पलैः शतमितैः शुभम् ॥४४॥
गोघृतेन प्रपूर्याथ पलस्वर्णेन संयुतम् । वस्त्रेणाच्छाद्य संपूज्य ब्राह्मणाय कुटुम्बिने ॥ ४५ ॥
दद्यात्तं च विधानेन भक्तिश्रद्धासमन्वितः । ब्रह्मस्वहरणात्पापान्मुच्यते नात्र संशयः ॥ ४६ ॥
एवं कृते तथा सूत प्रायश्चित्ते मयोदिते । नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥ ४७ ॥
पुत्रपौत्राभिवृद्ध्या च ह्येधन्ते सम्पदोऽन्वहम् । षट्चत्वारिंशदब्दे तु रिष्टं चापि न जायते ॥४८॥
रसनागमितायुः स्यादन्ते सद्गतिमाप्नुयात् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥४९॥
षट्चत्वारिंशदब्दे तु रिष्टेनैव विनश्यति । व्याधिग्रस्तो भवेन्नित्यं लभते नैव सन्ततिम् ॥ ५० ॥
जन्मजन्मनि दुःखी स्यात्प्रायश्चित्ते कृतेऽधुना । व्याधयस्तस्य नश्यन्ति सूर्येणेव तमो यथा ५१
पुत्रद्वयं स लभते दीर्घायुश्चिरजीवितः । धर्मकर्मसमायुक्तं पितृभक्तं गुणाधिकम् ॥ ५२ ॥
अथ वा शृणुयाद्भक्त्या हरिवंशं विधानतः । दशावृत्त्या खगश्रेष्ठ पूर्वपापं प्रणश्यति ॥ ५३ ॥
प्रायश्चित्तं द्वयोऽप्येकं कुर्यात्पापापनुत्तये । प्रायश्चित्तं विधायाथ गां दोग्ध्रीं समलङ्कृताम् ॥५४॥
सवत्सां युवतिं सूर्यमापस्वर्णेस्तु संयुताम् । प्रदद्यात्तां विधानेन ब्राह्मणाय कुटुम्बिने ॥ ५५ ॥
रुद्रपूजां ततः कृत्वा सर्पिष्यात्मानमीक्षयेत् । ततः शुद्धो भवेन्मर्त्यो नात्र कार्या विचारणा॥५६॥
मदुक्तां निष्कृतिं सूत यो न कुर्याच्च मानवः । तं विद्धि घोरदुरितैराक्रान्तं दैवघातितम् ॥५७॥
जन्मजन्मनि दुःखौघैराक्रान्तं निरयातिथिम् । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम्॥५८॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ५९ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायीत्रिसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७३ ॥

---

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव गौडदेशे तु ब्राह्मणो धर्मकर्मवित् ॥ १ ॥
दत्तानि तेन दानानि ब्राह्मणेभ्योऽतिभक्तितः । सुवर्णगोमहीधान्यवस्त्राभरणानि च ॥ २ ॥
अयो भाविबलात्सूत कृतं कर्मातिदारुणम् । एकदा पक्षिशार्दूल तापसो गृहमागतः ॥ ३ ॥

जितेन्द्रियोऽपि सधनो धनं तस्मै समर्पितम्। तीर्थावगाहनान्ते च ह्यागतः पुनराश्रमम् ॥ ४ ॥
धनं च प्रार्थितं तेन न च तस्मै स दत्तवान्। चौरेण तद्धृतं सर्वं तस्याग्रे भाषितं तदा ॥ ५ ॥
विश्वासतो गतो योगी शापं दत्त्वा सुदुःसहम्। वंशच्छेदो भवेच्छीघ्रं न पुनर्जीवते शिशुः ॥ ६ ॥
जन्मजन्मनि ते विप्र वंशच्छेदो भविष्यति। इति तेन खगश्रेष्ठ शापो दत्तः सुदारुणः ॥ ७ ॥
तेन विप्रेण तत्सर्वं ब्रह्मस्वं भुक्तमण्डज। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ८ ॥
पुण्यात्पुण्यफलं भुक्त्वा पापाच्च नरकं तथा। भुक्तपुण्यावशेषेण स जातोऽत्र हिमालये ॥ ९ ॥
ब्राह्मणो धनधान्यादियुक्तो ज्ञानी प्रतापवान्। नात्युच्चो नातिह्रस्वश्च गौरवर्णः प्रियम्वदः॥१०॥
राजमान्यो यशस्वी च देवब्राह्मणपूजकः। ज्ञातानामनुकांक्षी च भ्रातृमित्रसुसंयुतः ॥ ११ ॥
धनवाहनभोगाढ्योऽखिललोकवशंकरः। धर्मादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ १२ ॥
सिंहलग्ने स्थिते सोमे सुते पापसमन्विते। द्यूने पापग्रहैर्दृष्टे प्राग्भवे घटगं धनम् ॥ १३ ॥
भुक्तं तत्पापतः सूत जायास्थाने घटोऽभवत्। सुते क्रूरयुते सूत जातोऽयं ब्राह्मणोऽधुना ॥१४॥
प्राग्भवे तापसद्रव्यहरणोद्भवपापतः। तच्छापात्पतगश्रेष्ठ सन्तानसुखवर्जितः ॥ १५ ॥
कैशोरे भ्रातृजनकसुखयुक्तोऽथ यौवने। एकभ्रातृसुखैर्हीनो जनकस्य सुखैस्तथा ॥ १६ ॥
रहितोऽथान्यसहजसन्तानसुखवर्जितः। सन्दिग्धः शत्रुभीत्या च चिन्ताक्लेशसमन्वितः ॥ १७ ॥
वातरोगेण संयुक्तः सदोदररुजान्वितः। कदाचिज्ज्वरयुक्तोऽपि गतागतधनैर्युतः ॥ १८ ॥
तस्य भ्रातापि रुग्युक्तो जायासुखविवर्जितः। भ्रातृपुत्रोऽपि रुग्युक्तो वंशस्य क्षतिरीदृशी ॥१९॥
लक्षणैरेभिराढ्यस्य प्रायश्चित्तं वदाम्यहम्। निष्कद्वयं सुवर्णस्य ताम्रं शतपलं तथा ॥ २० ॥
घृतं तथा शतपलं संपूज्य विधिवत्ततः। प्रदद्याद्वै विधिज्ञे हि ब्राह्मणे गरुडाग्रज ॥ २१ ॥
वत्रैकविधिना स्नायाद्रुद्रैकादशिनीं जपेत्। धेनुं दद्याद्विधिज्ञाय सवत्सां च पयस्विनीम् ॥ २२ ॥
शतं च भोजयेद्विप्रान्शतं पञ्चाशदेव वा। एवं कृत्वा खगश्रेष्ठ सन्तानं लभते ध्रुवम् ॥ २३ ॥
जीवत्पुत्रः स दीर्घायुः पितृभक्तं गुणान्वितम्। त्रिसप्ततिमिताब्दायुः स्यादेवं विनतात्मज ॥२४॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत्। पुत्रपौत्राभिवृद्ध्यस्य ह्यवन्ते सम्पदोऽन्वहम्॥२५॥
नैवं करोति यो मोहाल्लोभाद्वा पापसंशोधनम्। सन्तानं न लभेत्क्वापि जन्मजन्मनि दुःखभाक् २६
विपद्गगमितेऽब्दे तु रिष्टेनैव विनश्यति। प्रायश्चित्ते कृते सूत पुत्रपौत्रसमन्वितः ॥ २७ ॥
तदग्रे निधनं याति त्रिसप्ततिमिताब्दके। सौम्यायने सिते पक्षे गङ्गायां नात्र संशयः ॥ २८ ॥
सद्गतिं समवाप्नोति यत्र देवो महेश्वरः। जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ २९ ॥
यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः चतुःसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७४ ॥

---

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव याम्युने देशे बाडवो धर्मकर्मवित् ॥ १ ॥
कृषिवाणिज्ययुक्प्राज्ञो ब्राह्मणातिथिपूजकः। दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च। अथो भाविवलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
भगिनीपतिघाताख्यं तेन चातिसुदुःसहम्। दन्तोच्छिष्टेन दोषेण पाषाणेनाहनत्पुरा ॥ ४ ॥
ज्ञात्वा मृत्युवशं प्राप्तमात्मघातं चकार ह। ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ५ ॥

पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः । जातो हि हिमवच्छैले पुण्यकेदारमण्डले ॥ ६ ॥
ब्राह्मणो धर्मकर्माढ्यो भृत्यदासीसुखान्वितः । स्त्रीपुत्रसुखसंयुक्तो दाताभोक्ता प्रियम्वदः ॥ ७ ॥
वहुव्यापारवाञ्श्रेष्ठः सन्धिविग्रहसंयुतः । देशेदेशेऽधिकाराढ्यो वहुग्रामाधिपो धनी ॥ ८ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । जन्मलग्नात्सुते द्यूने क्रूरग्रहविलोकिते ॥ ९ ॥
जातोऽयमधिकाराच्च वहुदेवसमन्वितः । वातरुग्युड्मनोदुःखैर्युतोप्राप्तमनोरथः ॥ १० ॥
वाल्ये पितृसुखैर्युक्तः कौमारे सुखवर्जितः । अधिकारप्रसङ्गेन निजद्रव्यविनाशकः ॥ ११ ॥
प्राग्योऽधर्मे सहायोऽस्य सोऽत्र ज्येष्ठसुतः खग । प्राग्भवे चात्मघाताच्च गतागतधनैर्युतः ॥१२॥
अधिकाराच्च्युतोऽपि स्यात्कदाचित्तत्समन्वितः । अस्थिरामात्यतायुक्तो बुद्धिमान्गूढभाववान् ॥१३॥
पूर्वं यो घातितोऽनेन भगिनीपतिरत्र च । कनिष्ठोऽस्य सुतो भूत्वा पञ्चत्वं प्राप्तवान्खग ॥१४॥
लक्षणैरेभिराढ्यश्रेष्ठप्रायश्चित्तं वदाम्यहम् । पलद्वयेन कर्तव्यो वाहुजस्तु हिरण्मयः ॥ १५ ॥
गन्धपुष्पैः समभ्यर्च्य विधिज्ञाय प्रदापयेत् । तथा सूर्यः प्रकर्तव्यः सुवर्णपलमात्रतः ॥ १६ ॥
दद्याद्वेदविदे तच्च ब्राह्मणाय कुटुम्बिने । गायत्रीं दशसाहस्रं त्र्यम्बकन्तु तथा जपेत् ॥ १७ ॥
होमयेत्तद्दशांशेन तिलैराज्यपरिप्लुतैः । सुवर्णाभरणैर्युक्तां गां च दद्यात्पयस्विनीम् ॥ १८ ॥
शतं वै भोजयेद्विप्रान्सर्पिष्याहमानमीक्षयेत् । एवं कृते खगश्रेष्ठ विधिना पापशोधने ॥ १९ ॥
रिष्टेनैव विनाशः स्याद्दुःखी स्याज्जन्मजन्मनि । प्रायश्चित्ते कृते ह्यायुः शतागमितवत्सरम् ॥२०॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः पञ्चसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७५ ॥

---

श्रीसूर्य उवाच ।

वैनतेय महाभाग शृणु तस्य विचेष्टितम् । सौराष्ट्रे देशके पुण्ये वाहुजो धर्मकर्मवित् ॥ १ ॥
धनवाहनभोगाढ्यो राजमान्यः प्रतापवान् । दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
गोभूशय्यासनान्नाश्ववस्त्राभरणानि च । विधिवत्कपिलादानं ब्राह्मणाय कुटुम्बिने ॥ ३ ॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम् । कुलीनां युवतीं त्यक्त्वा वेश्यासक्तो बभूव सः ॥४॥
स्वधर्मबोधकान्भ्रातृपितृवृद्धान्गुरूनपि । वञ्चयित्वा तु मोहेन पतिताचारवान्स्वयम् ॥ ५ ॥
निन्दयामास दुष्टात्मा सङ्गत्या गरुडाग्रज । ततो वहुतिथे काले स गत्वा यमशासनम् ॥ ६ ॥
पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः । जातोऽत्र केरले देशे ब्राह्मणो धर्मकर्मवित् ॥ ७ ॥
दाता भोक्ता दृढांगश्च नातिदीर्घो न लघुर्घृणी । श्यामवर्णो विशालाक्षो देवब्राह्मणपूजकः ॥ ८ ॥
मातृभ्रातृसुखैर्युक्तो धनवाहनभोगभाक् । प्राग्भवे कपिलादानाद्भूम्यन्नप्रदानतः ॥ ९ ॥
पुण्यात्तु पूजको जातो नरनारायणाश्रमे । सकलैश्वर्यसंयुक्तो दासदासीजनान्वितः ॥ १० ॥
राजकल्पो धनाध्यक्षो वहुग्रामाधिपः सुखी । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥११॥
स्वस्त्रीं पतिव्रतां त्यक्त्वा प्राग्वेश्यासङ्गजेन सः । अत्र स्त्रीपुत्रजनकसुखैर्हीनः खगाधिप ॥ १२ ॥
वाल्ये पितृसुखैर्हीने दुःखभाक्स्यात्किशोरके । यूनि स्वदेशमन्त्यागी देशेदेशे रटन्नपि ॥ १३ ॥
प्राग्भवे गुरुवृद्धांश्च मातृभ्रातृस्वगोत्रजान् । उल्लंघ्य पतिताचारचरणोद्भवपापतः ॥ १४ ॥
तीर्थहीनोऽत्र जनुषि विप्रोऽपि क्षत्रधर्मभाक् । नकस्त्रीसंयुतः कामी सत्यवाग्रहितः सदा ॥ १५ ॥
मनोभयैर्मदाक्लेशैः कर्पटः क्रूरकर्मभिः । शत्रुभीत्या च संयुक्तो विश्वासी स्वजनेष्वपि ॥ १६ ॥

सदा शत्रुभयाक्रान्तः कदाचिद्रोगवानपि । वातरुक्संयुतो वृनि क्लेशभाङ्मध्यमे धनी ॥ १७ ॥
वार्धके वयसि प्राप्ते पुनः क्लेशैश्च संयुतः । बिभेति निजभृत्येभ्यश्च पैशुन्यगुणसंयुतः ॥ १८ ॥
स्वभृत्यभेदकर्ता च क्रोधयुग्भयसंयुतः । मेषे लग्नेऽधिगे सोमे द्यूने मन्देऽस्य जन्म तु ॥ १९ ॥
लक्षणैरेभिराढ्यश्चेन्निष्कृतिं कथयाम्यहम् । पलत्रयेण कर्तव्या ब्राह्मणी च हिरण्मयी ॥ २० ॥
षोडशोपचारैश्च पूजयित्वा विधानतः । देया सा च विधिज्ञाय पूर्वपापापनुत्तये ॥ २१ ॥
पलैकेन तथा सोमस्तथा सूर्यो गणेशिता । तथा ब्रह्ममहेशश्च, लक्ष्मीनारायणस्तथा ॥ २२ ॥
देयाः सम्पूज्य विप्रेभ्यो गाश्च दद्यात्पयस्विनीः । गायत्रीमष्टसाहस्रं त्र्यम्बकं तु तथा जपेत् २०
सोमसूर्यगणेशानां ब्रह्मेश्वरमुरद्विषाम् । मन्त्रांश्चाक्षरसहस्राणि प्रत्येकं प्रजपेत्सदा ॥ २४ ॥
होमयेत्तद्दशांशेन तिलैराज्यपरिप्लुतैः । ब्राह्मणान्भोजयेत्पश्चाच्छतं साग्रं विधानतः ॥ २५ ॥
सपिण्ड्यात्मानमालोक्य भोजयेदिष्टबन्धुभिः । एवंकृतविधेः सूत पूर्वजन्माघनाशनम् ॥ २६ ॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । त्रिषष्टिमितके वर्षे रिष्टं प्राप्नोति तस्य तु ॥ २७ ॥
गजनागमिताब्दान्तमायुस्तस्य प्रकीर्तितम् । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥२८॥
न तस्य गतिरुक्तात्र स्वाधिकारच्युतिर्भवेत् । शत्रुभीत्या समायुक्तो जन्मजन्मनि दुःखभाक् २९
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् । यद्यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत् ॥ ३० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः षट्सप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७६ ॥

---

## श्रीसूर्य उवाच।

शूद्रोऽभवन्महाभाग प्राग्जन्मन्यतिकोविदः । ग्रामवासी सदा सौम्यः शतद्रुनिकटेऽण्डज ॥ १ ॥
शूद्रकन्या त्वनेनैव दृष्टा षोडशवार्षिकी । भुक्तातिकामलोभेन बलात्कारेण दूषिता ॥ २ ॥
स चात्र धर्मपुत्रस्य भुक्त्वा भैरवशासनाः । पूजनाच्छिवलिङ्गानां मागत्रापि च सङ्करः ॥ ३ ॥
मथुरामण्डले दिव्ये जातोऽसौ धर्मकर्मवित् । षण्डस्तेन विपाकेन प्राप्तसर्वमनोरथः ॥ ४ ॥
महोत्साहो महामानी महाविभवविस्तरः । मृत्युश्चास्यात्र गङ्गायां पुण्यादस्य शिवार्चनात् ॥ ५ ॥
भविष्यति महाभाग पापान्ते चास्य सद्गतिः । खनागमितवर्षान्तमायुस्तस्य प्रकीर्तितम् ॥ ६ ॥
जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायः सप्तसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७७ ॥

---

## श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्या विचेष्टितम् । बभूव वामने देशे बाहुजा पतिवल्लभा ॥ १ ॥
तया दत्तानि दानानि ब्राह्मणेभ्योऽतिभक्तितः । कार्तिक्यां पौर्णमास्यां वै शशांकग्रहणेऽपि च२॥
भक्ष्यभोज्यानि वस्तूनि मथुरायां खगाधिप । दीपा दत्ता महाभाग घृतेन परिपूरिताः ॥ ३ ॥
मत्पुत्राः श्रद्धया सूत होकोत्तरशतं खग । अथो पापं भृशं चक्रे भाविनोऽर्थस्य वैभवात् ॥ ४ ॥
देवद्रव्यं द्विजद्रव्यं हृत्वैकादशभिः सह । पूजकस्य स्त्रियौ द्वे च तत्कुमारौ सहोदरौ ॥ ५ ॥
स्वभ्रातरौ पतिश्चैव ह्यन्यौ द्वौ प्रतिवेशिनौ । सर्वैर्मिलित्वा तद्भुक्तं देवद्रव्यं खगाधिप ॥ ६ ॥
घटसंस्थं परद्रव्यं भुक्तं तत्केवलं तया । स्वामिद्रोहात्मकं पापं दारुणं समुपार्जितम् ॥ ७ ॥
ततो बहुतिथे काले गत्वा तु यमशासनम् । पुण्यात्स्वर्गफलं भुक्त्वा पापाच्च नरकांस्तथा ॥ ८ ॥
भुक्त्वा पुण्यावशेषेण सा जातात्र हिमालये । गौराङ्गी पतिभक्ता च राजकार्येषु तत्परा ॥ ९ ॥
नातिस्थूला नातिकृशा नातिह्रस्वा प्रियम्वदा । राज्ञां हितकरी नित्यं व्रतानामनुकांक्षिणी ॥१०॥
प्राग्भवे मथुरायां तु कार्तिक्यां पूर्णिमातिथौ । दीपदानात्खगश्रेष्ठ राजमान्ययुता त्विह ॥ ११ ॥

धनवाहनभोगाढ्या भृत्यदासीमहीयुता । चारुजा स्वर्णभूयाढ्या बहुग्रामाधिपा तथा ॥ १२ ॥
प्राग्भवे यः पतिश्चास्याः सोऽत्रापि पतिरीरितः । सुतबन्धुसमायुक्ता राजपत्नी कृपान्विता॥१३॥
पुण्यादिदं तथा पापाल्लोभाढ्या स्वल्पपापकृत् । चिन्तोद्वेगसमायुक्ता गतागतधनैर्युता ॥ १४ ॥
प्राग्देवद्रव्यहरणात्क्षुद्रकार्ये नियोजिता । तथा नृपनियुक्तोऽस्ति तत्पापादेव तत्प्रियः ॥ १५ ॥
प्राग्भवे या सहायासीद्देवद्रव्यापहारणे । सास्या ज्येष्ठा मृतिं प्राप्ता विनतानन्दवर्धन ॥ १६ ॥
तथैव ये सहायाः स्युः पुरुषाः पापकर्मणि । ते पुत्रा निधनं प्राप्ता ये च धर्मे सहायकाः ॥१७॥
ते पुत्रा अत्र जीवन्ति तत्पत्युः पतगेश्वर । वातपित्तात्मिका नित्यं त्रिकपीडा सुसंयुता ॥ १८ ॥
कदाचिद्रोगयुक्ता च कदाचित्कलहाकुला । कापट्येन समायुक्ता शत्रुभीत्या च दुःखिता ॥१९॥
मानापमानसाम्येन दुःखिता प्रसुवेश्मनि । घटस्थं परपरद्रव्यं भुक्तं प्रागनया सुत ॥ २० ॥
घटलग्ने स्थितं जाता तत्पापात्पुत्र दुःखिता । पञ्चमाधिपतिस्तस्या यतोऽस्तं गतवानिह ॥ २१ ॥
बाल्ये सुखसमायुक्ता कैशोर्ये क्लेशभागिह । युवभावे सुखैश्वर्ययुक्तापि पतगेश्वर ॥ २२ ॥
पुत्रशोकैः समायुक्ता स्वात्मानमपि नेच्छति । लग्नात्पञ्चमके शून्ये शुभैः क्रूरैर्विलोकिते ॥ २३ ॥
जातेयं पतगश्रेष्ठ पूर्वपापैस्तु दुःखिता । शंकालुः सर्वकार्येषु स्वकीयेषु विशेषतः ॥ २४ ॥
लक्षणैरेभिराढ्या चेत्प्रायश्चित्तं वदाम्यहम् । पलैः शतमितैः कार्यो घटस्ताम्रमयः शुभः ॥२५॥
गोघृतेन समापूर्यो वस्त्रद्वयविभूषितः । सुवर्णद्विमिता कार्या महेशप्रतिमा शुभा ॥ २६ ॥
घटोपरि सुसंस्थाप्य पूज्या सर्वोपचारकैः । विधिज्ञाय प्रदेया सा सवटा पूजिताय वै ॥ २७ ॥
देवस्वहरणात्पापान्मुच्यते नात्र संशयः । अग्नेस्तु प्रतिमा कार्या सुवर्णमितिका शुभा ॥ २८ ॥
देया वेदविदे सूत पूजिताय महात्मने । दुष्टसद्गतिजातपापाद्विमुक्ता स्यात्खगाधिप ॥ २९ ॥
रवेस्तु प्रतिमा तद्वत्सुवर्णमितिका शुभा । पञ्चाशत्पलमानेन कुर्यात्ताम्रमयं घटम् ॥ ३० ॥
घृतपूर्णं तत्र सूर्यप्रतिमां स्थाप्य यत्नतः । पूजयित्वा सवस्त्रां तु दद्याद्वेदविदे सुत ॥ ३१ ॥
परस्वहरणात्पापान्मुच्यते नात्र संशयः । महारुद्रविधानेन महारुद्रं प्रपूजयेत् ॥ ३२ ॥
शतं च भोजयेद्विप्रान्गां च दद्यात्पयस्विनीम् । एवं निष्कृतिमापन्ना जीवेत्सप्ततिवर्षकम् ॥ ३३ ॥
न तस्याः पुत्रमरणं नाधयो व्याधयो न च । न शत्रुतो भयं तस्या नापमानभयं क्वचित्॥३४॥
पुत्रपौत्राभिवृद्ध्या च ह्येधन्ते सम्पदोऽप्यहम् । कुवेदमितवर्षे तु रिष्टं तस्या न जायते ॥ ३५ ॥
पुत्रत्रयं चिरंजीवेदिहैव पतगेश्वर । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ ३६ ॥
रिष्टेनैव विनाशः स्याच्चातुर्विध्येन वै सुत । प्रायश्चित्ते कृते सूत महत्सौख्यवती भवेत् ॥ ३७ ॥
अन्ते सद्गतिमाप्नोति यत्र देवी महेश्वरी । अकृते तु यथाशक्ति प्रायश्चित्ते मयोदिते ॥ ३८ ॥
जन्मजन्मनि दुःखी स्यादन्ते च निरयं व्रजेत्। मदुक्तां निष्कृतिं सूत कृत्वा भक्त्या समन्विता३९
सर्पिष्यात्मानमालोक्य भोजयेदिद्विजन्मभिः । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥४०॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽष्टसप्तत्युत्तरनवशताधिकसहस्रतमः ॥ १९७८ ॥

श्रीसूर्य उवाच ।

ब्राह्मणं विद्यया युक्तं स्वाचारं संयतेन्द्रियम् । सर्वशास्त्रप्रवक्तारं प्रतिग्रहपराङ्मुखम् ॥ १ ॥
दान्तं कुलीनं धर्मज्ञमनुद्वेगकरं नृणाम् । अंघोलोमविहीनं च सर्वशास्त्रार्थकोविदम् ॥ २ ॥
गृहमाहूय भक्त्या तं यथाविधि समर्चयेत् । केयूरैः कटकैर्वस्त्रैर्माल्यैश्चैवाङ्गुलीयकैः ॥ ३ ॥

दानप्रकारमाह ।

उदङ्मुखोपविष्टाय विष्णो रुद्रस्य सन्निधौ । प्राङ्मुखो बोधितो दद्यान्मन्त्रेणानेन धर्मतः ॥४॥

मन्त्रहीनं न दातव्यं विधिलोपो यतो भवेत् । अतो मन्त्रं प्रवक्ष्यामि पुण्यदं पापहानिदम् ॥ ५ ॥
गोत्रार्थशर्मनामान्तान्पितृन्स्वस्य द्विजस्य च । असावहं समुच्चार्य वदेद्दानगुणांस्ततः ॥ ६ ॥
अभिलापसमृद्ध्यर्थममुकस्मै द्विजाय ते । इष्टदेवस्वरूपाय तुभ्यं सम्प्रददे वदेत् ॥ ७ ॥
मा मे भवन्तु रोगाश्च ह्याधयो मा भवन्तु मे । नान्तः पीडा च मे काचिन्मानहीनं नमेद्द्विजम् ८
गृह्णीष्व दानमेतद्धि मम रोगः प्रणश्यतु । इत्युक्त्वा द्विजवर्याय पूजयित्वा विधानतः ॥ ९ ॥
सर्वदानेष्विमं मन्त्रं वदेद्दानविधानवित् । इति संश्राव्य तं विप्रं मत्स्वरूपं विचिन्तयेत् ॥ १० ॥
कुशपुष्पाक्षतोपेतं तज्जलं तत्करे क्षिपेत् । इदमों प्रतिगृह्णामि स्वस्ति तेऽस्त्विति कीर्तयेत् ॥११॥
अनेन विधिना सूत दद्याद्दानं द्विजातये । ततो दानं गृहीत्वा तु द्विजो दत्त्वाशिषं व्रजेत् ॥ १२ ॥
विमुक्तोऽहमसार्नाति निरेनास्मीति तं वदेत् । एवमस्तु त्रिरुच्चार्य दत्ताशीः प्रतिगृह्य च ॥ १३ ॥
तस्येष्टमभिसन्ध्यायन्व्रजेद्विप्रः स्वमाश्रयम् । तं व्रजन्तं पुनस्तुत्य रोगी मां हृदये स्मरन् ॥१४॥
अग्रे नयेति मन्त्रान्ते पुनर्नत्वनरं स्पृशेत् । ततो मामीक्ष्य विधिवत्सर्पिः स्पृश्य यथाविधि१५॥
मम मूर्तिप्रदानं च शृणु तार्क्ष्य समाहितः । अष्टदेनावृते देशे विदध्याद्दीप्युतं कृती ॥ १६ ॥
वर्तुलं पृथुलं गौर्य्या गोमयेन शुभाकृति । तत्रोदयगिरिं कुर्याद्रक्तशालीयतण्डुलैः ॥ १७ ॥
द्रोणेनास्तीर्यवसनं रक्तं श्यामोत्तरायणम् । गिरेस्तु पूर्वदिग्भागे रथं रजतनिर्मितम् ॥ १८ ॥
पलेन वा तदर्धेन तदर्धेनाथवा कृतम् । एकचक्रं सप्तचक्रं सप्तघैकेन योजितम् ॥ १९ ॥
निष्कमानसुवर्णेन तदर्धेनाथ वा खग । माषैः षोडशभिः कार्या मम मूर्तिः सुशोभना ॥ २० ॥
अग्न्युत्तारेण मन्त्रेण विधिना सम्प्रतिष्ठिता । कर्तव्या द्विभुजा तार्क्ष्य पंकजद्वयधारिणी ॥ २१॥
रक्तक्षौमावृते तस्मिन्रथे स्थाप्य समर्चिता । ततो रथे च संस्थाप्य वर्तुले ताम्रभाजने ॥ २२ ॥
पलेन वा तदर्धेन तदर्धेनाथवा कृते । तण्डुलद्रोणे संस्थाप्य ताम्रपात्रोपरि स्थिता ॥ २३ ॥
मत्यङ्मुखाचले स्थाप्या रक्तचन्दनचर्चिता । मामभिपूज्य संवीक्ष्य प्रणम्येदमुदीरयेत् ॥ २४ ॥
नमो विवस्वते तुभ्यं सूर्यायामिततेजसे । प्रणमस्य च दारिद्र्यव्याधिदुःखविनाशिने ॥ २५ ॥
पुराकृतानां सर्वेषां कर्मणामिह साक्षिणे । ताम्रमूर्तिप्रदानेन विपाटगुणशालिने ॥ २६ ॥
उल्लाघश्च सुरूपश्च कृतकृत्यो भवाम्यहम् । अलंकृताय विप्राय दद्यान्मन्त्रमुदीरयेत् ॥ २७ ॥

मन्त्रः ।

"ये मां रोगाः प्रबाधन्ते देहस्थाः सततं द्विज । भगः पूषा च सप्ताश्वो द्वादशात्मा त्रयीतनुः ॥
स्वर्णमूर्तिप्रदानेन प्रीतस्तरणिरस्तु मे" । इत्युक्त्वा विधिवत्तार्क्ष्य देवज्ञाय निवेदयेत् ॥ २९ ॥
बाढमित्येव तां मूर्तिं गृह्णीयाद्देववित्तमः । इति संश्राव्य तं विप्रं मत्स्वरूपं विचिन्तयन् ॥ ३० ॥
कुशपुष्पाक्षतोपेतं तज्जलं तत्करे क्षिपेत् । इदमों प्रतिगृह्णामि स्वस्ति तेऽस्त्विति कीर्तयेत् ३१ ॥
सद्यस्तु रोगी दानाच्च दीर्घायुश्च प्रपद्यते । पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ॥ ३२ ॥
स विशुद्धे ततः कांस्यपात्रे सर्पिःप्रपूरिते । सहिरण्ये मुखं पश्येद्धस्ते कृत्वा सुयत्नतः ॥ ३३॥
मन्त्रमेनं वदन्रोगी स्ववपुः प्रविलोकयेत् ॥ ३४ ॥

मंत्रः ।

"आज्य त्वमसि तेजोऽसि देवानां प्रियमप्यसि । वीर्यमोजोऽसि सर्वेषां त्वमेवामृतमप्यसि॥३५॥
यदेतदेनः सुमहन्मयासं पूर्वजन्मनि । एनसो व्याधिरूपं यत्ततो मुच्ये सुरप्रिय ॥ ३६ ॥
सद्यस्त्वस्य संस्पर्शान्नश्यन्तु दुरितानि मे" ॥ ३७ ॥

इति सम्प्रार्थ्य तत्पात्रं दैवज्ञाय निवेदयेत् । ततो मामीक्ष्य सुरभिं दैवज्ञज्ञानवेदिनः ॥ ३८ ॥
ब्राह्मणान्प्रणिपत्याथ शक्त्या दानं समाचरेत् । भूमिद्रविणवासांसि धेनुं च समलङ्कृताम् ॥ ३९ ॥
सुरभिं च ततो दद्याद्ब्राह्मणानां विशेषतः । कृताभिषेकः स्वगृहं गत्वा भुञ्जीत बन्धुभिः ॥ ४० ॥
तस्मिन्दिने स मधुरं गव्येनाज्येन संप्लुतम् । हविः शुद्धं समश्नीयात्कट्वम्ललवणोज्झितम् ॥ ४१ ॥
पुत्रो वा यदि वा भ्राता पिता वा गुरुरेव च । कर्मकर्तुमशक्यस्य कुर्यात्तन्नाम कीर्तयेत् ॥ ४२ ॥
इत्येतत्कथितं सूत किमन्यत्परिपृच्छसि ॥ ४३ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकोनाशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९७९ ॥

श्रीसूर्य उवाच ।

सम्भवन्ति निमित्तानि भाविनः कर्मणः पुरा । सुखदुःखमयान्येव दैवस्येह वशादिह ॥ १ ॥
निमित्तशकुनस्वप्नशरीरेणाहृतानि च । सुरभी सौरभी नारी वडवादिप्रसूतयः ॥ २ ॥
विकृते दुष्टदिष्टे वा जायन्ते दुःखसूचकाः । ग्रहाणां प्रातिकूल्यं च मनोबुद्धिविपर्ययः ॥ ३ ॥
विवियोऽतिबलीयोऽपि विवादोचितकर्मणः । आरम्भोऽपि च कार्याणां कर्मणामयथाविधि ॥ ४ ॥
सशिल्पे सदने चासौ दुष्टादिष्टाद्यशाकुनैः । कारूत्यमपि दैवज्ञमिति विभ्रमदूषिते ॥ ५ ॥
अभिचारप्रयोगाद्यं तस्योपरि च तेन वा । सुप्रसुप्तं विपर्येति कृत्या करणमेव च ॥ ६ ॥
इत्याद्यैरितरैश्चापि निमित्तैर्दैवनोदितैः । विविधैश्च महोत्पातैः स्वस्वकाले फलप्रदैः ॥ ७ ॥
अचेतना स पूर्वं तच्चिरकालानुबन्ध्यति । कर्म कर्तारमन्वेति वार्यतेऽत्र न केनचित् ॥ ८ ॥
तान्त्रिका ये न मन्यन्ते कर्म शाश्वतमीश्वरम् । कालाख्यस्येश्वरस्यैते मायाविभ्रममोहिताः ॥ ९ ॥
कर्मैव कारणं सूत सर्वेषां सुखदुःखयोः । अपवर्गस्य स्वर्गस्य नात्र कार्या विचारणा ॥ १० ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायोऽशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९८० ॥

अरुण उवाच ।

शल्यं विधिं किमुक्तं तद्गृहस्थं गृहमेधिनः । कथमर्दयति ज्ञातुं शक्यं तत्केन तद्वद ॥ १ ॥

श्रीसूर्य उवाच ।

शल्यमष्टविधं सूत गृहमध्यगतं नृणाम् । नानाविधानि दुःखानि प्रापयेद्गृहमेधिनः ॥ २ ॥
यथा तत्ते प्रवक्ष्यामि सद्यः प्रत्ययकारकम् । तुषपांससमङ्गारं तथा भसितसम्भवम् ॥ ३ ॥
कपालं दारवं चास्थिशकलं चाश्मलोष्ठकम् । शल्यानि दैवसंयोगाद्गृहाभ्यन्तर्गतान्यपि ॥ ४ ॥
दैवेनोत्पत्स्यमानानां दुःखानामार्तिकारणम् । भवन्ति सर्वदा सूत भोगकाल उपस्थिते ॥ ५ ॥
फलान्यपि च ते तेषां प्रवदामि पृथक्पृथक् । धनधान्यसमृद्धीनां नाशकृत्तुषसम्भवम् ॥ ६ ॥
शल्यं वेश्मगतं सूत तदङ्गे त्वचि दोषकृत् । कुर्यात्तदङ्गे वैकल्यमग्निशस्त्रव्रणादिभिः ॥ ७ ॥
आयसं कलहं घोरं स्वजनान्यजनैः सह । अङ्गारदावो वाधिर्यं दुष्टग्रहगदादिभिः ॥ ८ ॥
तदङ्गे कुरुते पीडां भयं वह्नेर्मुहुर्मुहुः । भस्मव्रजाङ्गदोषादि वैवर्ण्यं दारुणभयम् ॥ ९ ॥
कुरुते सततं सर्वरसानामपि शोषणम् । कपालश्च तदङ्गस्य नानारोगकरं परम् ॥ १० ॥
कुरुते विविधां पीडां मृतिर्गृहपतेरिति । दारवं चार्थनाशायं भवेच्च पशुनाशनम् ॥ ११ ॥
तदङ्गतोदवेदाद्यं काष्ठघातनिमित्ततः । अस्थिजं विविधान्रोगान्करोति प्रतिहायनम् ॥ १२ ॥
शिशूनां च महापीडां कुर्यान्मृतिमपि ध्रुवम् । अश्मलोष्ठकजं शल्यं वृत्तमुन्नतमायतम् ॥ १३ ॥
उदरे कुरुते मन्दं प्लीहगुल्मभ्रमावहम् । अन्तर्गतानि चैतानि गृहभूमेर्गृहेशितुः ॥ १४ ॥

कुर्वन्ति विविधान्दोषान्वित्तसौख्यविनाशकान्। मत्यक्षं भूर्वहिर्भागे नानाव्याधिप्रसूचकम् १५॥
शल्यं भवति तच्चेह कथयाम्यतिदुःखदम्। गृहमर्मसु सर्वेषु आस्थितं दुःखदोषकृत् ॥ १६ ॥
कुसूलोलूखलभ्राष्ट्रलोहं लवणभाजनम्। ईषद्भग्नाशुचिस्निग्धभाण्डं च भ्रमकृच्च यत् ॥ १७ ॥
बीभत्सं चातिदुर्गन्धं वस्तुमर्मणि दुःखदम्। विद्धमन्तर्बहिर्भागं कालस्तम्भभ्रमादिभिः ॥ १८॥
विविधान्यतिदुःखानि स्त्रीणां यच्छति तद्गृहम्। अदृष्टान्यपि चैतानि दैवज्ञः शास्त्रकोविदः॥१९॥
गृहस्थस्याङ्गपीडादिदर्शनेनैव पश्यति। उद्धृत्य तानि विधिवच्चछान्तिषु च तत्परः ॥ २० ॥
प्रश्नभारोपितमतिर्दैवज्ञो विन्दते यशः ॥ २१ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय एकाशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९८१ ॥

श्रीसूर्य उवाच।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम्। बभूव यामुने देशे बाहुजो धर्मकर्मवित् ॥ १ ॥
परोपकारनिरतो राजमान्यः प्रतापवान्। दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
गोभूशय्यासनान्नाश्ववसनाभरणानि च। मथुरायां महाभाग कार्त्तिके मासि सव्रतः ॥ ३ ॥
पौर्णमास्यां विशेषेण दीपाश्च घृतपूरिताः। समर्पिताः खगश्रेष्ठ यमुनायां च भक्तितः ॥ ४ ॥
अथो भाविवशात्सूत पापमप्यमुपार्जितम्। यानि भावे खगश्रेष्ठ सहायैः पञ्चभिर्युतः ॥ ५ ॥
पुरुषः स्त्रीसहायेन देवद्रव्यापहारणम्। परस्वहरणं चैव कृतं तच्छृणु साम्प्रतम् ॥ ६ ॥
भार्यात्रयं पूजकस्य तत्र द्वाभ्यां समायुतः। देवद्रव्यमशेषं च गृहीतं भुक्तमप्यथ ॥ ७ ॥
तिसृणां भ्रातृभिः सार्धं त्रिभिस्तेन दुरात्मना। परद्रव्यं गृहीतं वै लोभमोहसमाकुलम् ॥ ८ ॥
ततो बहुतिथे काले गत्वा तु यमशासनम्। पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलं तथा ॥ ९ ॥
पूर्वपुण्यावशेषेण स जातोऽत्र हिमालये। गौरो मध्यमरूपाढ्यो नात्युच्चो न लघुर्घृणी ॥ १० ॥
राजमान्यः प्रतापी च शूरो भव्योऽत्र बाहुजः। सन्धिविग्रहसंयुक्तो दाता भोक्ता प्रियम्वदः॥११॥
धनवाहनभोगाढ्यो राजकार्येषु तत्परः। भ्रातृपुत्रसुखैर्युक्तो राज्ञां हीनकरः सदा ॥ १२ ॥
प्राग्भवे दीपदानाच्च यमुनायां तु भक्तितः। अत्र राजकृपायुक्तो बहुस्त्रीसुखभोगभाक् ॥ १३ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित्। तथा कापट्यसंयुक्तो वातपित्ताश्रयः सदा ॥१४॥
गतागतधनैर्युक्तः क्वचिद्बन्धुवियोगवान्। देवस्वहरणात्पापात्क्षुद्रकर्मनियोजितः ॥ १५ ॥
शङ्कालुः सर्वकार्येषु स्वस्त्रीषु च विशेषतः। प्राग्भवे ये स्त्रियौ तस्य देवस्वहरणे खग ॥ १६ ॥
जाते सहाये ते त्वत्र द्वे भार्ये निधनं गते। सहायाः पुरुषा आसन् येऽस्य प्राग्जन्मनि ध्रुवम् १७
परद्रव्यापहरणे तेऽत्र पुत्रा मृतिं गताः। प्राग्भवे धर्मकार्ये तु येऽस्य साहाय्यमादरात् ॥ १८ ॥
कृतवन्तोऽत्र ते सूत पुत्रा जीवन्ति तस्य तु। चिन्ताक्लेशसमायुक्तो रोगार्तः क्वचिदेव हि ॥१९॥
जन्माङ्गात्पञ्चमे शून्ये शुभैः क्रूरैर्विलोकिते। सप्तमे भावके क्रूरे द्विरिष्टे खगाधिप ॥ २० ॥
युते वा स्त्रीद्वयं नष्टं शुभेनैकेन संयुते। दृष्टेनैवात्र जनुषि जीवत्येव न संशयः ॥ २१ ॥
पुत्रभावे शुभैरेव दृष्टे पञ्चभिरादरात्। जीवेयुः पञ्च पुत्रास्तु यावद्भिः क्रूरखेचरैः ॥ २२ ॥
तावन्तो निधनं याता विनतानन्दवर्धन। लक्षणैरेभिराढ्यश्चेत्प्रायश्चित्तं वदाम्यहम् ॥ २३ ॥
पलैः शतमितैः कार्यो घटस्ताम्रमयः शुभः। गोघृतेन समापूर्णो वस्त्रद्वयविभूषितः ॥ २४ ॥
सुवर्णार्द्धमिता कार्या महेशप्रतिमा शुभा। घटोपरि सुसंस्थाप्य पूज्या सर्वोपचारकैः ॥ २५ ॥
विप्रिज्ञाय प्रदेया सा सघटा पूजिताय वै। देवस्वहरणात्पापान्मुच्यते नात्र संशयः ॥ २६ ॥
धर्मस्य प्रतिमा कार्या सुवर्णमितिका शुभा। देया वेदविदे सूत पूजिताय महात्मने ॥ २७ ॥

दुष्टसङ्गतिजात्पापाद्विमुक्तः स्यात्खगाधिप । रवेस्तु प्रतिमा तद्वत्सुवर्णमितिका शुभा ॥ २८ ॥
देया वेदविदे सुत पूजिताय महात्मने । दुष्टसङ्गतिजात्पापाद्विमुक्तः स्यात्खगाधिप ॥ २९ ॥
पञ्चाशत्पलमानेन कुर्यात्ताम्रमयं घटम् । घृतपूर्णं तत्र सूर्यप्रतिमां स्थाप्य यत्नतः ॥ ३० ॥
पूजयित्वा सवस्त्रं तु दद्याद्वेदविदे सुत । परस्वहरणात्पापान्मुच्यते नात्र संशयः ॥ ३१ ॥
महारुद्रविधानेन महादेवं प्रपूजयेत् । शतं च भोजयेद्विप्रान्गां च दद्यात्पयस्विनीम् ॥ ३२ ॥
एवं निष्कृतिमापन्नो जीवेच्चाशीतिवर्षकम् । न तस्य पुत्रमरणं न स्त्रीमरणमेव च ॥ ३३ ॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । पुत्रपौत्राभिवृद्ध्या च लभन्ते सम्पदोऽन्वहम् ३४॥
त्रिषष्टिमितिके वर्षे रिष्टं तस्य न जायते । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् ॥ ३५ ॥
रिष्टेनैव विनाशः स्याच्चातुर्विध्येन वै सुत । जन्मादिमरणान्तं हि स्वल्पमेवात्र सूचितम् ॥ ३६ ॥
यद्यदन्तर्गतं सुत तन्मच्छास्त्राद्विलोकयेत् ॥ ३७ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायो द्व्यशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९८२ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव बर्बरे देशे पादजो धर्मकर्मवित् ॥ १ ॥
कृषिवाणिज्यनिरतो ब्राह्मणातिथिपूजकः । दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
युवभावे खगश्रेष्ठ ब्राह्मणानां सहायतः । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
वनन्तु ज्वालितं तेन क्षेत्रीकरणहेतवे । वनजीवास्तथा दग्धाः पापमुग्रमुपार्जितम् ॥ ४ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । पुण्यात्पुण्यफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ५ ॥
जातो गोदावरीदेशे ह्यष्टयोजनसम्मिते । स तु मध्यमरूपाढ्यः श्यामवर्णः प्रतापवान् ॥ ६ ॥
नात्युच्चो नातिदीर्घश्च पितृमातृसुखैर्युतः । मिथ्यावाग्बहुमित्रश्च ब्राह्मणातिथिपूजकः ॥ ७ ॥
प्रतानामनुकांक्षी च तीर्थयात्रापरो नरः । पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् ॥ ८ ॥
निर्धनो बन्धुहीनश्च स्त्रीपुत्रसुखवर्जितः । देशेदेशे स्टन्भ्रान्तः पूर्वपापात्खगाधिप ॥ ९ ॥
लक्षणैरेभिराढ्यश्चेत्प्रायश्चित्तं वदाम्यहम् । वनदेवी तथा कार्या सुवर्णमितिका शुभा ॥ १० ॥
तदर्धमितिका वापि निजवित्तानुसारतः । सम्पूज्य भक्तियुक्तेन मनसाप्युपचारकैः ॥ ११ ॥
विधिज्ञाय प्रदेया सा पूर्वपापप्रनुत्तये । गोदावर्यां ततः स्नायान्मृगगेर्धस्मिं भक्तितः ॥ १२ ॥
एवं कृते भवेत्सूत पूर्वपापप्रणाशनम् । धनधान्यसुखैर्युक्तः पुत्रवानिह जायते ॥ १३ ॥
नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम् । चतुस्त्रिंशन्मिते वर्षे रिष्टेनैव विनश्यति ॥ १४ ॥
प्रायश्चित्ते कृते ह्यायुरशीतिमितवत्सरम् । कर्के राहावयं जातो मीनस्थे निधनं भवेत् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्यायस्त्र्यशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९८३ ॥

## श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव यामुने देशे ब्राह्मणो धर्मकर्मवित् ॥ १ ॥
राजमान्यः प्रतापी च धनपुत्रसुखैर्युतः । दत्तानि तेन दानानि पर्वस्वपि च शक्तितः ॥ २ ॥
गोभूशय्यासनान्नानि मथुराया विशेषतः । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ ३ ॥
ब्राह्मणी धर्षिता तेन कामलोभेन मोहिता । पतिव्रता स्वभार्या वै त्यक्ता पापधिया खग ॥४॥
ततो बहुतिथे काले स गत्वा यमशासनम् । पुण्यपापफलं भुक्त्वा पूर्वपुण्यावशेषतः ॥ ५ ॥
हिमालये पुण्यदेशे जातोऽयं मुरजोऽधुना । नात्युच्चो नातिदीर्घश्च गौरवर्णः प्रतापवान् ॥ ६ ॥

देवब्राह्मणभक्तश्च विद्याभ्यासरतः सुखी । राजमान्यः सुवाक्सत्यमतिः सर्वप्रियम्वदः ॥ ७ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । चिन्ताक्लेशसमायुक्तो स्वल्पवित्तेन संयुतः ॥ ८ ॥
बाल्ये पितुः सुखैर्हीनो दुःखभाक्स किशोरके । प्राग्भवे स्वस्त्रियास्त्यागादत्र स्त्रीपुत्रवर्जितः ॥९ ॥
ब्राह्मणी धर्षणात्पूर्वं वातामयसुपीडितः ॥ १० ॥

अरुण उवाच ।

लक्षणं वद विश्वात्मन्ब्राह्मणस्त्रीनिषेविणः । सर्वाङ्गवेदनार्तस्य जन्तोरनुजिघृक्षया ॥ ११ ॥

श्रीसूर्य उवाच ।

शृणु सूत प्रवक्ष्यामि द्विजस्त्रीमभिजग्मुषः । लक्षणं निष्कृतिं चापि यथावद्विधिनोदिताम् ॥१२॥
यथायथा स वै कामान्कुमतिर्द्विजयोषितम् । अकामयत्तदस्य स्यादिह बुद्धिविपर्ययः ॥ १३ ॥
विविधो लिङ्गजो व्याधिर्मेदमूत्रार्तिपूर्वकः । आलिङ्गयेद्यथा बुद्धया बाहुभ्यां तद्भुजान्तरम्॥१४॥
तदस्य बाहुहृत्क्रोडस्तस्त्वयुक्तीव्रवेदना । जानुजंघाङ्घ्रिगुल्फेषु विविधा वातजा रुजः ॥ १५ ॥
मिथ्यापवादनाच्छंका नानात्रेष्वरुचिर्भवेत् । धनस्योपचितस्यापि भवेदथ व्ययो मृषा ॥ १६ ॥
अङ्गेष्वर्सपृश्यता दुःखात्तोदभेदादिकार्तयः । अज्ञानाप्रसारित्वं ग्रीवापृष्ठत्रिकग्रहः ॥ १७ ॥
दवथुश्च शिरस्तापः शूलः शोकः क्वचित्क्वचित् ।अङ्गशोषोऽथ वैनिद्र्यं कुक्षितोदोऽस्रुक्च्युतिः १८
यातान्मूत्रविड्रुत्सर्गो वैषम्यमतिकोपिता । लक्षणैरेभिरादद्यश्चेत्प्रायश्चित्तं वदाम्यहम् ॥ १९ ॥
सर्वाङ्गवेदनार्तश्च दैवज्ञोक्तविधिं चरेत् । सुदिष्टे समनुप्राप्ते विष्टिपाताद्यदूषिते ॥ २० ॥
निष्केण शुद्धवर्णस्य सुवर्णस्याथकल्पयेत् । तदर्धमितकेनापि निजवित्तानुसारतः ॥ २१ ॥
स्त्रियाः प्रतिकृतिं रम्यां सुरूपां गुणशालिनीम् । अलंकृतां स्वर्णमयैर्भूषणैर्मणिमौक्तिकैः ॥२२॥
दुकूलवासिनी पुष्पस्रग्भिः सम्भूषितां शुभाम् । तिलद्रोणाचले शुक्लशयने स्वासने न्यसेत्॥२३॥
ततः प्रतिष्ठितप्राणां तस्मै तां प्रतिपादयेत् । तदग्रेंजलिमाधाय तिष्ठन्मन्त्रमिमं वदेत् ॥ २४ ॥

मन्त्रः ।

" यन्मया गच्छतो बालां प्रबलेनाङ्गपीडया । श्रद्धया ज्ञानतः सम्यङ्महापापमनुष्ठितम् ॥२५॥
तेन पापेन गात्रेषु वातपीडा सुदुस्तरा । जाता तत्पापनाशाय सौवर्णी योषिदाकृतिम् ॥ २६ ॥
प्रयच्छामि च तां तुभ्यं मम पापं व्यपोहतु " ॥ २७ ॥

त्रिर्वदेच्च ततो विप्रस्तथैवास्त्विति त्रिर्वदेत् । प्रणिपत्य पुनर्भक्त्या प्रादक्षिण्यं परीत्य च ॥ २८ ॥
व्रजेनयेति मन्त्रेण विसर्जयेत्खगाधिप । ततोऽन्यानपि विप्रान्स भूरिद्रविणदानतः ॥ २९ ॥
सन्तोष्य विविधैर्दानैर्भोजयेत्सुसमाहितः । एवं निष्कृतिमापन्नः पूर्वपापात्प्रमुच्यते ॥ ३० ॥
न तस्य वातजा पीडा नाधयो व्याधयो नच । न शत्रुतो भयं तस्य न दारिद्र्यभयं क्वचित् ३१॥
चतुस्त्रिंशन्मिते वर्षे रिष्टं तस्य न जायते । स्त्रीपुत्रसुखयुक्तः संश्चिरं जीयात्खगाधिप ॥ ३२ ॥
प्रशस्तयन्दमायुः स्यात्प्रायश्चित्ते कृतेऽधुना । नैवं करोति यो मोहाल्लोभाद्वा पापशोधनम्॥३३॥
रिष्टेनैव विनाशः स्याज्जन्मजन्मनि दुःखभाक् ॥ ३४ ॥

इति श्रीरुद्रसूर्यारुणसंवादे कर्मविपाकेऽध्यायश्चतुरशीत्युत्तरनवशताधिकसहस्रतमः ॥ १९८४ ॥

श्रीसूर्य उवाच ।

वैनतेय महाबाहो शृणु तस्य विचेष्टितम् । बभूव गौडदेशे तु ब्राह्मणो धर्मकर्मवित् ॥ १ ॥
दत्तानि तेन दानानि पर्वस्वपि च शक्तितः । अथो भाविबलात्सूत कृतं कर्मातिदारुणम् ॥ २ ॥
क्षेत्रीकरणहेत्वर्थं ज्वालितं वनमद्भुतम् । वनजीवास्तया दग्धा भूयांसोऽपि विहङ्गमाः ॥ ३ ॥

पञ्चभिर्मिलितस्तद्वत्पापमुग्रमुपार्जितम् । ततो बहुतिथे काले स गत्वा यमशासनम् ॥ ८ ॥
पुण्यात्स्वर्गफलं भुक्त्वा पापाच्च नरकं तथा । पूर्वपुण्यप्रभावेण स जातोऽत्र हिमालये ॥ ५ ॥
गौरो भव्यो महाज्ञानी नात्युच्चो न लघुर्वृणी । सन्धिविग्रहसंयुक्तो सर्वलोकप्रियङ्करः ॥ ६ ॥
देवब्राह्मणभक्तश्च राजकार्येषु तत्परः । स्त्रीपुत्रसुखसंयुक्तो बुद्धिमान्प्रियदर्शनः ॥ ७ ॥
पुण्यादिदं तथा पापाल्लोभी पापरतः क्वचित् । मिथ्याभिशंसनैर्युक्तो बाल्ये पितृसुखोज्झितः॥८॥
कापट्येन सुसंयुक्तो निर्धनो नीतिमानपि । प्राग्भवे वनदाहे तु ये स्युस्तस्य सहायकाः ॥ ९ ॥
तेऽत्र जन्मनि भोः सूत पुत्राश्च निधनं गताः । कदाचिद्रोगसंयुक्तो वातपित्तात्मकः सदा ॥१०॥
कीटलग्ने तु सञ्जातो लग्नात्पञ्चमगो झषः । तस्य प्रिया सदाचारा पतिभक्तिपरायणा ॥ ११ ॥
विनीता सत्त्वसम्पन्ना देवद्विजपराऽभवत् । परं सन्तानदुःखार्ता न रतिं हि लभेत वै ॥ १२ ॥
कदाचिद्दैवयोगेन मतिस्तस्याः शुभाऽभवत् । जगत्कारणमीशानं पुत्रकामा ह्यपूजयत् ॥ १३ ॥
अनन्यभावेन जपं गिरिजायाश्चकार वै । कालेनाल्पेन सा सुभ्रूः पुत्रयुक्ता बभूव हि ॥ १४ ॥
ईश्वरस्मरणं सर्वसिद्धिदं परिकीर्तितम् ॥ १५ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय पंचाशीत्युत्तरनवशताधिकसहस्रतम ॥ १९८५ ॥

---

श्रीसूर्य उवाच ।

बभूव यामुने देशे क्षत्रियोऽतिविचक्षणः । धनाढ्यः सुन्दरः सौम्यः पुत्रपौत्रादिसंयुतः ॥ १ ॥
जलधेनुप्रदानं हि कृतवान्भक्तितत्परः । शिवस्य देवदेवस्य पूजाकर्मणि तत्परः ॥ २ ॥
अथो भाविबलात्सूत कृतं कर्मातिदारुणम् । परस्त्रीसुरतं चक्रे परनिन्दा च दुःखदाम् ॥ ३ ॥
ततो बहुतिथे काले स गत्वा यमशासनम् । पुण्यात्पुण्यफलं भुक्त्वा पापात्पापफलं तथा ॥ ४ ॥
शिवपूजनजात्पुण्यात्स जातोऽत्र हिमालये । पुण्यदेशे च गङ्गाया पादजो धनवान्सुखी ॥ ५ ॥
नात्युच्चो नातिह्रस्वश्च लोभी पापरतः क्वचित् । स रक्तगौरो मतिमान्बान्धवैः संयुतस्तथा॥ ६ ॥
व्यभिचाररतश्चैव निन्दकः पापबुद्धिमान् । बहुपुत्रैश्च संयुक्तो कुण्डजातिस्त्वसौ खग ॥ ७ ॥
कदाचिद्वातरोगेण जठरेण च पीडितः । लक्षणैरभिराढ्यश्चेत्प्रायश्चित्तं वदामि ते ॥ ८ ॥
द्रोणद्वयप्रमाणं हि लवणं विदुषे ददेत् । सालङ्कारां सवत्सां च गां च दद्यात्पयस्विनीम् ॥ ९ ॥
यः करोति नरो मोहात्प्रायश्चित्तं खगेश्वर । चत्वारिंशन्मिते वर्षे प्राप्नोति निधनं ध्रुवम् ॥ १० ॥
जन्मादिमरणान्तं च स्वल्पमेवात्र सूचितम् । यदन्तर्गतं सूत तन्मच्छास्त्राद्विलोकयेत ॥ ११ ॥

इति श्रीवृद्धसूर्यारुणसंवादे कर्मविपाकेऽध्याय षडशीत्युत्तरनवशताधिकसहस्रतम ॥ १९८६ ॥